श्रीवाण्यै नमः ।

# श्रीमदेका आञ्जनेयप्रशंसानवरत्नमाला।

श्लो॥ श्रीमद्वर्तमहापुरीसुजनताऽलङ्कारचूडामणिस्त्वेकावंशपयोधिकौस्तुभमणिर्विद्वत्प्रियस्सद्गुणी ।
श्रीराजेश्वररायनामकसुधीर्वाणीरमावल्लभो दाता यस्य पितामहस्सुविदितः कीर्त्याऽऽन्ध्रमाभासयत् ॥

तातं यस्य पिताऽजयच्छुभगुणैश्श्रीपुण्डरीकाक्ष इत्यन्वर्थामभिधां सदा भजनतश्श्रीपुण्डरीकाक्षगात् ।
नेत्राभ्यामपि रूपतोऽपि विभुताशक्त्याऽर्थनिर्वाहणे लक्ष्मीवल्लभतार्जनेन च बुधान्सन्तोषणेनाप्यगात् ॥

सोऽन्वर्थाभिध आञ्जनेयपदभाक्सत्कार्यसंसाधने विज्ञो रामपदारविन्दभजनायत्तात्मचित्तम्सदा ।
श्रीवाणीधरणीसुकीर्तिरमणीस्स्वामादिलक्ष्मीं तथा जायाः पञ्च समास्सदावति मिथोवैषम्यहीना अहो! ॥

धर्म्यन्याय्यपथानुगार्जनदिशा पुष्णाति लक्ष्मीं सदा सत्कार्येषु कलाभिवर्धनविधास्वर्थार्पणाद्भारतीम् ।
पृथ्वीमुत्तमदोहदैर्वरगुणैः कीर्तिं प्रियामीप्सिताशेषार्थप्रकरोपसङ्घटनतस्तामादिलक्ष्मीं प्रियाम् ॥४॥

रामारायबुधावतंससुकविप्रष्ठं यथाऽजीजनत्कालेयाखिलदुर्मतालिभिदुरानद्वैतसंस्थापकान् ।
ग्रन्थान्ग्रन्थितुमाञ्जनेयमपि तद्ग्रन्थप्रकाशीकृतौ धाताऽत्राऽसृजदित्यवेक्ष्य मनुयात्को न प्रबन्धं त्विमम्॥

भोगेनानुदिनं धनस्य न पुनस्त्वभ्यागमो भुक्तवन्निक्षिप्तस्य सुपात्रके स जगति प्रत्यक्षमालोकयते ।
सत्पात्रेषु च सत्सुकार्यनिवहेष्वत्यादरौदार्यतो यद्वित्तं विनियुज्यते तदिह चामुत्रापि भोगावहम् ॥६॥

एवं साधु समीक्ष्य स स्वहृदये स्वैकत्वमादर्शयन् दाने भूरिसहस्रसम्मितवसुत्यागेन तूदारधीः ।
रामारायकृतातिविस्तृतलसद्भाष्यत्रयीसद्विमर्शाभिख्यं प्रकटीचकार महितं मुद्रापयित्वाऽमलम् ॥७॥

सन्तानः कृतिरूप एष विमलस्त्वाचन्द्रतारं स्थिरः यावत्कीर्तिरिहास्ति तावदमरैस्स्वर्गे स भुंक्ते सुखम् ।
विश्वस्यार्षगिरोऽत्युदारधिषणस्त्वेकाञ्जनेयाभिधो विद्यारक्षणदीक्षयौपनिषदं सद्ग्रन्थमादीपयत् ॥८॥

धन्योऽस्येकाञ्जनेय! त्वमिह तव धनं धन्यमेतन्निधाना-
दक्षय्यान् भुंक्ष्व भोगानिह जगति परत्राप्यभीष्टान्कुलीनैः ।
साकं स्वैः कीर्तिकान्ता नटतु दशदिशारङ्गदेशेष्वजस्रं
यावद्भूभानुचन्द्रं प्रथय बुधमुदेऽन्यच्च तद्ग्रन्थजालम् ॥९॥

श्रीनन्दनसंवत्सराश्वयुज
शुक्लदशमीभानुवासरः ।

'विद्वत्कविसार्वभौम'
पुल्य उमामहेश्वरशास्त्री ।

# उपोद्घातः ।

**अयि भो विद्वदग्रेसराः !**

आसीत्कश्चिदान्ध्रदेशान्तर्गतगर्तपुरीमण्डले गीर्वाणवाणीकविताचातुरीधुरीणस्सन्ततसमाराधितसकलकलाकलापस्सकलजनानन्दनीयगुणग्रामणीष्षड्दर्शनसारसर्वज्ञस्सकलास्तिकजनवर्यधुर्यः, निरन्तरान्तेवासिजनपोषकः, निरहंममाभिमानः, निगर्वशिखामणिः, निराडम्बरजीवनः, नितान्तहयग्रीवाराधनासक्तचित्तः नाम्ना 'रामराय' इति निखिलबुधजनविधेयस्सुधीमणिः ।

इयं हि तानधिकृत्य अस्माभिरुपलब्धा किंवदन्ती—एते हि 'बेल्लंकोण्डोपाह्वयरामराय सुधीमणयः' निवासेन 'नरसरावुपेट' समीपवर्तिपमिडिपाडुनामकमग्रहारं, कुलेन आन्ध्रनियोगिब्राह्मणान्, गोत्रेण भरद्वाजं, सूत्रेणाश्वलायनमध्ययनेन ऋक्शाखां, तनुजनुषा हनुमाम्बामोहनरायौ च धन्यतमानकार्षुरिति ।

इमे विद्वदग्रेसराः (१७९७) सप्तनवत्युत्तरसप्तदशशततमे शालिवाहनशके युवसंवत्सरमार्गशीर्षामायामिन्दुवासरे, अर्धरात्रे, कटकलग्ने प्रादुर्भूय तदनु क्रमशः तत्तच्छास्त्रेषु निमित्तमात्रेण तत्तद्देशिकवरैः कृतपरिचयाः उपदेशमात्रेणैव निरवशेषं वैदुष्यमवाप्य, तत्तद्देशिकवरगुरुस्थानमध्यतिष्ठन्निति, अत्यल्प एव वयसि हयग्रीवानुग्रहसम्पादनाय कृष्णानदीतीरगतवेदाद्रिनामकपुण्यक्षेत्रे तपश्चर्यया सङ्कल्पसिद्धिं सम्पाद्य, तदनुग्रहावाप्तसकलकलावैदुषीका अपि विशिष्यात्मविद्यायामनितरसाधारणशेमुषीप्रकर्षं समधिकतराभिमानं चावापुरिति च, किंचिदैतिह्यमत्र विलेखितुमुत्सुका वयमिति निवेदयामः ।

एवमनितरसाधारणया पाण्डित्यप्रतिभया अत्यल्पेऽष्टात्रिंशद्वर्षात्मके जीवितकाले प्रायशश्शताधिकान् नाटककाव्यचम्पूस्तोत्राष्टकनामावलीशतकादीन् बहुलतरशास्त्रनिबन्धरूपान् व्याख्यानरूपांश्च विविधान्ग्रन्थान्विरचय्य, प्रारब्धकर्मक्षयात्तावतैव कालेन गतायुषः आनन्दनामसंवत्सरकार्तिकशुक्लनवम्यां भूतलं विहाय गता एते महाभागा मोक्षसाम्राज्यमध्यतिष्ठन् ।

स्मृत्यारूढं किञ्चिदत्रोपक्षिपामः—यथा हि शङ्करभगवत्पादाः पञ्चमे वयसि मातुरनुज्ञया कृतसन्न्यासपरिग्रहा अधीत्य सकलानि शास्त्राणि श्रीगोविन्दभगवत्पादेभ्य यावद्देहवियोगमद्वैतमतव्यवस्थापनार्थमेव सर्वमायुर्विन्ययुञ्जत, यथा च मधुसूदनसरस्वतीयतयः बाल्य एव कृतपारिव्राज्यपरिग्रहा अभ्यस्य सर्वाणि शास्त्राणि श्रीविश्वेश्वरसरस्वतीपादेभ्य आमृतेः कालमद्वैतमतव्यवस्थापनार्थमेव स्वीयमायुरुपायुक्षत, एवमिमे रामरायसुधीमणयोऽपि विना पारिव्राज्यपरिग्रहं अत्यल्पमप्यात्मीयमायुःकालमद्वैतमतव्यवस्थापनार्थमेवापयापयन्नित्येतत्तदीयग्रन्थपरिशीलनेन न कस्यापि मनसि समारूढं न भवतीति विनिश्चिनुमः ।

यथा द्वैतमिथ्यात्वप्रमाणप्रदर्शनेन द्वैतसत्यत्वसाधकप्रमाणाभावनिरूपणेन च श्रवणरूपं सूत्रभाष्यादिकं भगवता शङ्करेण विरचितं, यथा च श्रुतिसिद्धे अद्वैते तर्काभासाऽभासीकरणेन सत्तर्का-

वष्टम्भेन च मननरूपा अद्वैतसिद्धिः 'मधुसूदनसरस्वती'यतिभिर्विरचिता, एवमेतैस्सुधीमणिभिः प्रतिप्रकरणं प्रतिविषयं च ब्रह्माकारवृत्त्याधायकतया श्रुतिस्मृतिपुराणेतिहासधर्मशास्त्रादिष्वद्वैतप्रतिपादकत्वान्निदिध्यासनात्मकः 'शङ्कराशङ्करभाष्यविमर्शा'ख्यो ग्रन्थो व्यरचि ।

'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रुतेः श्रवणमनने इव निदिध्यासनमप्यवश्यकर्तव्यमेवेति पाठकानामयं ग्रन्थ आदर्तव्य एव भवति ।

तदत्र किमद्वैतं श्रुतिसिद्धमाहोस्विद्विशिष्टाद्वैतमिति सप्रमाणं सयुक्तिकं सोदाहरणं च विममृशुरस्मिन् ग्रन्थे ग्रन्थकर्तारः । तदेतद्विभ्रमलमत्र पीठिकायामुदाहरामः—

## श्रीमत्परदेवतायै नमः ।

इह खलु सुविदितमेवेदं नस्समेषां विदुषां- यदनेकजन्मोपार्जितसुकृतदुष्कृतवशात्पिपीलिकादिब्रह्मान्तेषु योनिषु सम्भूय उच्चावचं फलमनुभवतां, सन्तापमयसंसारजीर्णकान्तारनिरन्तरगतागतभ्रमणश्रमजुषां जीवकोटीनामश्रान्तविश्रान्तिनिदानमखिलानर्थतूलवातूलमद्वितीयस्वप्रकाशपरमानन्दरूपं परंधाम सर्वोपनिषत्प्रतिपाद्यमस्तीति ।

तच्च श्रवणमनननिदिध्यासनपरिपाकाधीनात्मसाक्षात्कारायत्तं, न कर्मोपासनासाध्यं- यदुद्दिश्य सकलार्तिहारिणा करुणासम्पादितमानवतनुना हरिणा निखिलं गीताशास्त्रमुपक्षिप्तम् । यच्चेममुपनिषदर्णवमनुकम्पासम्पादितनृतनुना भगवता शङ्करेण भाष्याभिधानमन्थनदण्डेनोन्मथ्य अमृतमयमन्तिमपुरुषार्थरूपमन्यानपेक्षस्वप्रकाशात्मकं सजातीयविजातीयस्वगतभेदशून्यमद्वितीयमात्मतत्त्वमाविष्कृतं च ।

परं तु तदेतत्सगुणं निर्गुणं वेत्यस्ति महती विप्रतिपत्तिराचार्यपादानां सम्प्रदाये ।

तत्र सगुणं ब्रह्मेति रामानुजः । अयमाशयः— 'बृहन्तोऽस्य धर्माः', 'अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयः', 'एष सर्वेश्वरः', 'एष भूताधिपतिः', 'मनोमयः प्राणशरीरः भारूपस्सत्यसङ्कल्पस्सर्वकर्मा सर्वकामः सर्वगन्धस्सर्वरसः', 'सत्यकामस्सत्यसङ्कल्पः', 'एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीया'नित्यादिश्रुतिभिः; 'ज्ञानं नित्यं क्रिया नित्या बलं नित्यं परात्मनः । ब्रह्मेशानादिभिर्देवैस्समेतैर्यद्गुणांशकः ॥ नावसाययितुं शक्यः व्याचक्षाणैश्च सर्वदा ।' इत्यादिस्मृतिभिश्च ब्रह्मणस्सगुणत्वबोधनान्न निर्गुणं ब्रह्मेति । तदेतदापातपेशलम्—न तावच्छ्रुत्या स्मृत्या वा ब्रह्मणस्सगुणत्वसिद्धिः- सगुणब्रह्मप्रकरणगतानीमानि वाक्यानि उपासनाविधिगोचरविशेषणसमर्पकाणि भवितुमर्हन्ति, न तु ब्रह्मणः गुणवैशिष्ट्यबोधनपराणि । नच सत्यकामत्वादीनां मानान्तराप्राप्तत्वादबाधितत्वाच्च तत्परत्वमेवास्त्विति वाच्यं, न ह्यपूर्वत्वेपि सत्यकामादिवाक्यानि सगुणब्रह्मपराणि । यथा- 'जर्तिलयवाग्वा जुहुयात्, गवीधुगयवाग्वा जुहुयात्, न ग्राम्यान्पशून्हिनस्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुगाश्च पयसाग्निहोत्रं जुहोती'त्यग्निहोत्रप्रकरणगते वाक्ये जर्तिलयवागूगवीधुगयवागूविधेः, 'अनाहुतिर्वै' इति तन्निन्दायाश्च पयोहोमविधिशेषतया तत्परत्वं नास्तीति निर्णीतं, तद्वत्प्रकृतेप्युपासनाविधिशेषतया सत्यकामादिवाक्यं सत्यकामत्वादिगुणब्रह्मोपासनापरमेव, न तु ब्रह्मणि गुणवैशिष्ट्यबोधनपरम् ।

'य आत्मा अपहतपाप्मा', 'सत्यकामस्सत्यसङ्कल्पः', 'सोन्वेष्टव्यस्स विजिज्ञासितव्यः' इत्यादिश्रुतिगतानि निर्गुणब्रह्मप्रकरणवाक्यानि तु अद्वितीयब्रह्मज्ञानानुकूलनिषेधापेक्षितप्रतियोगिसमर्पकतयाऽन्यथासिद्धानीति न तान्यपि ब्रह्मणि गुणवैशिष्ट्यपराणि ।

यत्तु 'एष नित्यो महिमा ब्राह्मणस्ये'त्यादिश्रुत्या ब्रह्मणस्सगुणत्वसिद्धिरिति, तत्रोच्यते— 'एतद्ध स्म वै पूर्वे विद्वांसः प्रजां न कामयन्ते', 'किं प्रजया करिष्यामो येषां नोयमात्माऽयं लोकः', 'ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती'तिश्रुत्या आत्माभिव्यक्तिमतः पुरुषस्य एषणात्रयत्यागोऽभिहितः । तदनु च- 'स एष नेतिनेत्यात्मा अगृह्यो न हि गृह्यते अशीर्यो न हि शीर्यते'त्यादिना निषिद्धसर्वोपाधिकत्वरूपः आत्मस्वरूपमहिमाऽभिहितः । तनश्च 'तदेतदृचाभ्युक्तं एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्' इत्यभिहितम् । अत्र उपक्रमोपसंहारपर्यालोचने एषणात्रयत्यागवतः पुरुषस्यैवायं प्रतिषिद्धसर्वोपाधिकत्वरूपः (सर्वोपाधिप्रतिषेधत्वरूपः) आत्मस्वरूपमहिमा श्रुत्या प्रत्यपादि, नतु ब्रह्मणि नित्यमहिमारूपो गुण इति स्पष्टमवगम्यते ।

नचैतन्मन्त्रारम्भे 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' इत्यादिना ब्रह्मणः प्रकृतत्वेन ब्रह्मगतगुणपरमेवैतदिति वाच्यं, तत्रैव 'स वा एष महानज आत्मा, योऽयं विज्ञानमयः प्राणेषु, य एषोन्तर्हृदय आकाशः, तस्मिन्शेते' इत्यादिवाक्योक्तजीवस्वरूपमनूद्य ब्रह्मस्वरूपप्रतिपादनेन अस्य वाक्यस्य ब्रह्मगतगुणपरत्वाभावात् । 'एष नित्यो महिमा ब्राह्मणस्ये'त्यत्र ब्राह्मणपदमपि 'तद्वेद तदधीते' इति सूत्रविहिताणन्तत्वात् ब्रह्मविन्मात्रपरमेव, नतु ब्रह्मपरम् । ततो नानया श्रुत्या ब्रह्मणस्सगुणत्वसिद्धिः ।

नापि- 'ज्ञानं नित्यं क्रिया नित्या बलं नित्यं परात्मनः' इत्यादिस्मृत्यापि ब्रह्मणस्सगुणत्वं शङ्कनीयं, अत्र यानि ज्ञानादीनि स्वरूपभूतानि न तानि गुणरूपाणि, यानि च स्वरूपातिरिक्तानि क्रियाबलादीनि न तानि वास्तविकनित्यत्वानि, किं तु चरमसाक्षात्कारपर्यन्तावस्थायित्वेन उपचरितनित्यत्वानि । यथा—'अपामसोमममृता अभूम' इत्यादौ आभूतसम्प्लवस्थायित्वरूपममृतत्वमुपचर्यते तद्वत् । एवं सर्वत्र सगुणवाक्यानां औपाधिकगुणविषयत्वेन न स्वाभाविकनिर्धर्मकश्रुतीनां विरोधः । नचैवं सोपाधिकत्वे 'स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुतिविरोधश्शङ्क्यः, अत्र पारमेश्वरं ज्ञानबलक्रियादिकमस्मदादाविव न भौतिकोपाधिकं, नापि योगिष्विव योगशक्त्यार्जितं वा इत्येतावन्मात्रस्वाभाविकत्वोपपादनेनाविरोधात् ।

नाप्यनुमानेन ब्रह्मणस्सगुणत्वसिद्धिः—तद्धि- ब्रह्म धर्मिसत्तासमसत्ताकधर्मवत्, धर्मिसमसत्ताकभावरूपधर्मवद्वा, यावत्स्वरूपमनुवर्तमानधर्मवद्वा, स्वज्ञानाबाध्यधर्मवद्वा, भावरूपधर्मैर्हीनं नावतिष्ठते वा, पदार्थत्वात् भावत्वाद्वा घटवत् इति स्यात् । अत्र धर्मिपदस्वपदयोः यत्किञ्चिद्धर्मियत्किञ्चित्सम्बन्धिपरत्वे यत्किञ्चिद्धटादिसमसत्ताककल्पितधर्मवत्तायाः ब्रह्मणि प्रागेव सिद्धत्वात्सिद्धसाधनं दोषः । धर्मिपदस्वपदयोर्ब्रह्मपरत्वे ब्रह्मसमानसत्तायाः क्वाप्यप्रसिद्धेः साध्याप्रसिद्धिः ।

एवं ईश्वरस्सदावाप्तसमस्तकल्याणगुणः- सदाप्रेप्सुत्वे सति तत्र शक्तत्वात्—यथा चैत्रः ।

ईश्वर.- सदा त्यक्तसमस्तदोषः- सदा तज्जिहासुत्वे सति तत्त्यागे शक्तत्वात्- यथा चैत्रः इत्यत्रापि शुद्धस्य ब्रह्मणः पक्षीकरणे निरुक्तहेतोरभावाद्धेत्वसिद्धिः । उपहितस्य पक्षीकरणे अर्थान्तरं च । अत्र अवाप्तेस्तादात्म्यरूपतया स्वाभिन्नावाप्तसमस्तकल्याणगुणत्वेन सधर्मकत्वायोगात् । आनन्दादीनां कल्याण-गुणानां नित्यत्वेन तत्प्रेप्सायाः, तत्र सामर्थ्यस्य च वक्तुमशक्यत्वाच्च । तस्मान्नानुमानं ब्रह्मसमसत्ताक-धर्मे प्रमाणम् ।

यत्तु 'सत्यस्सोस्य महिमा' इत्यादिश्रुतौ ब्रह्ममहिम्नस्सत्यत्वाभिधानाद्ब्रह्म सगुणमिति, तदत्र प्रति-वक्तव्यम्-- अयमत्र ऋचामनुक्रमः—

**'येनासमुद्रमसृजो महीरपः तदिन्द्र वृष्णि ते शवः सत्यस्सोस्य महिमा सन्नशेयं क्षोणीरनुचक्रदे' ॥१॥**

हे इन्द्र; तत् = प्रसिद्धं; ते=तव; शवः = बलं; वृष्णि = वर्षकं, अभीष्टफलदं; येन= बलेन; महीः=महतीः; अपः=जलानि; आसमुद्रं=समुद्रपूरणयोग्यं; असृजः=सृष्टवानसि; सः=बलरूपः अस्य समुद्रादेर्जनकः महिमा; सत्य इति । इदं हि ऐन्द्रं सूक्तम् । अत्र च इन्द्रस्य महिमा सत्यत्वेनाभिधीयते, न तु ब्रह्मणः । अथापि अनन्तरासु—

**'तत्त्वा यामि सुवीर्यं तद्ब्रह्म पूर्वचित्तये येनायतिभ्यो भृगवे धने हिते येन प्रस्कण्व-माविथ' ॥२॥**

सुवीर्य=तत्प्रसिद्धं ब्रह्मरूपं; त्वा; पूर्वचित्तये=पूर्वेषां ब्रह्मविदां चित्तये ज्ञानाय; यामि=आश्र-यामि; येन=सुवीर्येण; यतिभ्यः=उपरतेभ्यः, यष्टृभ्यस्सकाशादाहृत्य; भृगवे=भृगुनाम्ने ऋषये; धने= हिते दत्तेसति; येन=वीर्येण; प्रस्कण्वनामानं ऋषिं; आविथ=रक्षितवानसि; इत्यस्यां ऋचि ब्रह्म-लिङ्गावगमात् ।

**'इन्द्रो मन्हा रोदसी पप्रथच्छव इन्द्रस्सूर्यमरोचयत् । इन्द्रो ह विश्वा भुवनानि येमिरे इन्द्रे सुवानास इन्दव' ॥३॥**

इन्द्रः; शवः=शवसः, स्वीयबलस्य; मन्हा=महिम्ना; रोदसी=द्यावापृथिव्यौ; पप्रथत्=विस्ता-रितवान्; इन्द्रः=सूर्यमरोचयत्, स्वर्भान्वावृतं सूर्यं स्वर्भानुवधेन; अरोचयत्; इन्द्रो ह=इन्द्र एव; सर्वाणि भुवनानि; सुवनासः=सूयमानाः; इन्दवः=सोमाश्च; येमिरे=इन्द्रेण नियम्या इत्यर्थः । अस्यां ऋचि सूर्यचन्द्रादीनां नियामकत्वस्य अभिधानाच्च, एतासां ऋचां ज्योतिरधिकरणन्यायेन ब्रह्मपरत्वं ब्रह्मगतमहिम्नस्सत्यत्वं च समामनन्ति परे । तदेतन्न युज्यते, नात्र ज्योतिरधिकरणन्या-यावकाशः ।

'अथ यदतः परो दिवो ज्योतिर्दीप्यत' इत्येतद्वाक्ये 'पादोऽस्य विश्वाभूतानी'ति वाक्योक्त-चतुष्पाद्ब्रह्मपरामर्शियच्छब्दानुसारेण, भौतिकज्यौतिषः दिवि वर्तमानताऽसम्भवेन च ज्योतिशब्दस्य रूढ्यर्थं परित्यज्य ब्रह्मपरत्वमवधृतम् । प्रकृते तु सूर्यप्रकाशकत्वादीनां वज्रिण्यपि सम्भवात्, भुवन-नियन्तृत्वादेरारोपेण स्तुतिसम्भवाच्च । अत्रेन्द्रपदस्य रूढ्यर्थपरित्यागो न युज्यते- अन्यथा सम्पूर्ण-

सूक्तस्थानामनेकेन्द्रपदानां रूढिपरित्यागो वाच्यः स्यात् । अपिच 'इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम । पावकवर्णाश्शुचयः विपश्चितः अभिस्तोमैरनूषत' इत्युत्तरऋगर्थोपि न सङ्गच्छते । अत्र बहिष्पवमानादिभिस्तोत्रैः इन्द्रस्स्तूयते । स्तोत्रशस्त्रादिभिस्तूयमानत्वमिन्द्रस्यैव सङ्गतं भवति- देवतात्वात् । न परमेश्वरस्य ।

यत्तु सत्यकामत्वादीनां ज्ञेयब्रह्मप्रकरणेपि श्रवणात् ब्रह्म सगुणमिति, तन्न—दर्शपूर्णमासप्रकरणपठितस्य पूषादिमन्त्रस्य दर्शादौ पूषादिदेवताविरहेण यथा पूषादिदेवताककर्मणि अङ्गेन विनियोगः, तथा ज्ञेयब्रह्मप्रकरणगतानां सत्यकामत्वादीनां ज्ञानान्वयासम्भवेन सगुणोपासनायामेव अन्वयसम्भवात् निर्गुणब्रह्मस्तावकत्वाद्वा, 'यस्सर्वज्ञस्स सर्ववित्' इत्यादीनां उपासनाप्रकरणस्थत्वाभावेऽपि तटस्थलक्षणद्वारा ब्रह्मप्रतिपादने तात्पर्येण ब्रह्मणि गुणप्रतिपादनेऽतात्पर्याच्च ।

नच श्रुत्या विहितस्य श्रुत्या निषेधे विकल्प इति वाच्यं, 'तत्परातत्परयोस्तत्परं प्रबल'मिति न्यायेन उपासनापराणां सगुणवाक्यानां दुर्बलत्वात् ब्रह्मस्वरूपबोधनपराणां निर्गुणवाक्यानां प्रबलत्वाच्च विकल्पाप्रसक्तेः ।

अतः 'साक्षी चेता केवलो निर्गुणश्च', 'स एष नेति नेति', 'नेह नानास्ति किञ्चन', 'शिवमद्वैतं', 'एकमेवाद्वितीयं ब्रह्म' इत्यादि श्रुत्या, 'परमार्थतस्तु भूपाल संक्षेपात् श्रूयतां मम । एको व्यापी समश्शुद्धः निर्गुणः प्रकृतेः परः । जन्मवृद्ध्यादिरहितः आत्मा सर्वगतोऽव्ययः ॥ परज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभुः । न योगवान् न युक्तोऽभूत् नैव पार्थिव योक्ष्यति ॥' इत्यादि स्मृत्या च ब्रह्मणः निर्गुणत्वावगमात् न अतत्पराभिरुपासनाश्रुतिभिर्ब्रह्मणस्सगुणत्वसिद्धिः ।

एतेन ब्रह्मणो निराकारत्वमपि सिद्धं भवति । नच ननु ब्रह्म साकारं- स्रष्टृत्वात्, पालयितृत्वात्, उपदेष्टृत्वाद्वा इत्याद्यनुमानैर्ब्रह्मणस्साकारत्वे कथं ब्रह्मणो निराकारता इति शङ्क्यं- तत्रैवं प्रष्टव्यास्साकारवादिनः- पराभिमतः परमेश्वरस्य विग्रहः किं भौतिकः ? उताऽभौतिकः ? अभौतिकोऽप्ययं किं मायिकः ? उतामायिकः ? भौतिकमायिकावपि स्वकर्मार्जितौ ? उत परकर्मार्जितौ ? यद्ययं परमेश्वरः स्वकर्मार्जितभौतिकमायिकविग्रहवान् तदायं संसारी स्यात्, यदि परकर्मार्जितभौतिकमायिकविग्रहवान् तदा इष्टापत्तिः- शुद्धचिन्मात्रस्यापि परकर्मार्जितदेहादिसम्बन्धाभ्युपगमात् । अमायिकस्यापि देहस्य ब्रह्मभेदाङ्गीकारे सिद्धान्तहानिः । रामानुजाभ्युपगतविग्रहस्य- ब्रह्मभेदानङ्गीकारात् । ब्रह्मभिन्नस्य शरीरस्य सत्यत्वरूपामायिकत्वाङ्गीकारे 'नेतिनेती'ति श्रुतिविरोधः- तया ब्रह्मभिन्नस्य सत्यत्वनिषेधात् । 'अपाणिपादो जवनो ग्रहीता' इत्यादिश्रुतिविरोधश्च । अथ अभौतिकामायिकब्रह्मभिन्नदेहाङ्गीकारे जीवतद्देहयोरप्यभेदापत्त्या देहात्मवादे पर्यवसानात् चार्वाकमतप्रवेशापत्तिः- शरीरस्याभौतिकत्वे प्रमाणाभावः । 'अपाणिपाद' इत्यादिश्रुतिविरोधश्च ।

नच 'आदित्यवर्णं तमसः परस्तात्', 'यदापश्यः पश्यते रुक्मवर्णं', 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं', 'विश्वतश्चक्षुरुत विश्वतो मुखः', 'सहस्रशीर्षा पुरुषः', 'पश्य मे पार्थ रूपाणि', 'सर्वतः पाणिपादं

तम्' इत्यादिश्रुतिस्मृतिभ्यः ब्रह्मणश्शरीरसिद्धिरिति वाच्यं, तेषां वाक्यानां जडविलक्षणस्वप्रकाशपरमात्म-स्वरूपप्रतिपादनपरतया उपासनापरतया चोपपत्तेर्युक्तत्वात् ।

निर्गुणब्रह्मज्ञानं च निर्विकल्पात्मकं 'तत्त्वमसी'त्यादिवेदान्तवाक्यादेवोत्पद्यते । नच लौकिक-वाक्यानां सविकल्पकज्ञानजनकत्वस्यैव दृष्टत्वात् तत्सामान्याद्वेदान्तवाक्यानामपि सविकल्पकज्ञानजनकत्वमेव स्यादिति वाच्यं, सोऽयं देवदत्त इत्यादिलौकिकवाक्यानामपि निर्विकल्पकज्ञानजनकत्वस्य लोकदृष्टत्वा-दित्यन्यदेतत् ।

सत्यप्येवं श्रुतिसिद्धे अद्वैते श्रीमच्छ्रिराचार्यशङ्करपादैस्सूपपादिते च तदनुपदं तत्त्वनिर्णयार्थं प्रवृत्ताः श्रीरामानुजाचार्याः बोधायनाचार्यप्रणीतं ब्रह्मसूत्रवृत्तिग्रन्थं प्रमाणीकृत्य व्याससूत्राणि व्याकुर्वाणाः प्रत्यंशमद्वैतेन विरुध्यन्ते—

तद्यथा—

| अद्वैतवादे | विशिष्टाद्वैतवादे । |
|---|---|
| प्रपञ्चः मिथ्या । | प्रपञ्चस्सत्यः । |
| परमात्मा निर्गुणः निर्विशेषश्च । | परमात्मा सगुणस्सविशेषश्च । |
| सच सजातीयविजातीयस्वगतभेदरहितः । | सच भेदत्रयसहितः । |
| अद्वितीयं ब्रह्मतत्त्वम् । | चिज्जडेश्वरात्मकं पदार्थत्रयमपि तत्त्वम् । |
| परमेश्वरः अशरीरी । | प्रपञ्चशरीरः परमात्मा । |
| असङ्गः परमेश्वरः । | ससङ्गः । |
| अज्ञानं भावरूपम् । | अभावरूपमज्ञानम् । |
| विवर्तवादः । | परिणामवादः । |
| सर्वेषां वेदान्तवाक्यानां निर्विशेषविषयत्वम् । | सर्वेषां वेदान्तवाक्यानां सविशेषविषयत्वम् । |
| वेदान्तवाक्यानां निर्विकल्पकज्ञानजनकत्वम् । | तेषां सविकल्पकज्ञानजनकत्वम् । |
| निर्गुणवाक्यानि स्वार्थपराणि । | प्राकृतहेयगुणनिषेधपरतया अर्थवादरूपाणि । |
| सगुणवाक्यान्यन्यार्थानि | सगुणवाक्यानि स्वार्थपराणि । |
| जीवपरयोरभेदः । | जीवात्मपरमात्मनोर्भेदः । |
| ज्ञानमात्रं मुक्तिसाधनम् । | कर्मसमुच्चितोपासनाभक्तिप्रपत्त्यादीनि मोक्षसाधनानि । |
| कर्मोपासनयोर्ज्ञानाङ्गत्वम् । | कर्म, ज्ञान, अष्टाङ्गयोगादीनां भक्तियोगाङ्गत्वम् । |
| मुक्तौ जीवब्रह्मणोरभेदः । | मुक्तावपि जीवब्रह्मणोर्भेदः । |
| जीवानां स्वस्वरूपता मुक्तिः । | वैकुण्ठलोकप्राप्तिः, ईश्वरकैङ्कर्यं च मोक्षः । |

तदत्र किमद्वैतं श्रुतिसिद्धमाहोस्विद्विशिष्टाद्वैतमित्येतदस्मिन् ग्रन्थे सप्रमाणं सयुक्तिकं सोदा-हरणं च विममृशुः ग्रन्थकर्तारः ।

तत्र यत्प्रत्यर्थिभिस्समीहितसाधनत्वेन प्रमाणमूर्धन्यतया प्रदर्शितं विष्णुपुराणभागवतादिकं, तत्रापि षड्विधैस्तात्पर्यनिर्णायकप्रमाणैर्यदद्वितीयब्रह्मपरत्वोपपादनं ग्रन्थकर्तृकृतं तदेतत्प्रतिवादिनां शिरसि वज्रप्रहारायते ।

तद्यथा विष्णुपुराणे—

श्लो॥ 'परः पराणां परमः परमात्माऽऽत्मसंस्थितः ।
रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥' (विष्णुपुराणम् १, २, १०)

अत्र द्रव्यगुणक्रियाजातिसंज्ञानामाख्यैः कल्पनाहेतुभिः विशेषणैर्विवर्जितः परमात्मा इति तदीयविष्णुचित्तीयव्याख्या । अनेनात्र निर्विशेषं ब्रह्म उपक्रान्तमिति स्पष्टम् ।

'अहं ममेत्यविद्येयं व्यवहारस्तथानयोः ।
परमार्थस्त्वसंलाप्यः गोचरो वचसां न यः ॥' (६, ७, १०)

इत्यन्ते षष्ठांशे उपसंहृतम् । अत्र च अहं ममेतिव्यवहारस्य अविद्याकलितत्वं परमार्थस्य परमात्मनस्तु वाचामगोचरत्वं च प्रतिपादितम् । यस्तु वाचामगोचरः तत्तु निर्विशेषं ब्रह्मैव भवति । सविशेषस्य वागगोचरत्वायोगात् ।

तथा—'न स्थूलं न च सूक्ष्मं यत्र विशेषणगोचरम् ।
तत्पदं परमं विष्णोः प्रणमाम सदाऽमलम् ॥' (१, ७, ५२)
'आद्यो यज्यः पुमानिज्यः यः पूर्वेषां च पूर्वजः ।
तं नतास्म जगत्स्रष्टुः स्रष्टारमविशेषणम् ॥' (१, ७, ६१)

अत्र मायया ब्रह्म जगत्स्रष्टृत्वादिविशेषणयुक्तमिति, वस्तुतः तादृशविशेषणरहितमिति च अभिधीयते ।

एवम्— 'नमो नमो विशेषस्त्वं त्वं ब्रह्मा त्वं पिनाकधृत् ।
इन्द्रस्त्वमग्निः पवनः बरुणस्सविता यमः ॥' (१, ७, ६७)

इत्यस्मिन् श्लोके परमेश्वरस्य मायया ब्रह्मादिरूपत्वमभिधाय,

'शुद्धस्संलक्ष्यते भ्रान्त्या गुणवानिव योऽगुणः ।
तमात्मरूपिणं देवं नतास्म पुरुषोत्तमम् ॥' (१, १४, ३७)
'अविकारमजं शुद्धं निर्गुणं यन्निरञ्जनम् ।
नतास्म तत्पदं ब्रह्म विष्णोर्यत्परमं पदम् ॥' (१,१४, ३८)
'अदीर्घह्रस्वमस्थूलमनण्वश्यामलोहितम् ।
अस्नेहच्छायमतनुमसक्तिमशरीरिणम् ॥' (१, १४, ३९)
'अनाकाशमसंस्पर्शमगन्धमरसं च यत् ।
अचक्षुश्श्रोत्रमचलमवाक्पाणिममानसम् ॥' (१, १४, ४०)
'अनामगोत्रमसुखमतेजस्कमहेतुकम् ।
अभयं भ्रान्तिरहितं अनिद्रमजरामरम् ॥' (१, १४, ४१)
'अरजो शब्दममृतमप्लुवं यदसंवृतम् ।
पूर्वापरे न वै यस्मिन् तद्विष्णोः परमं पदम् ॥' (१, १४, ४२)

इत्यादिभिश्श्लोकैरपास्तसमस्तविशेषरहितं ब्रह्म अभिहितम् ।

तथा— 'नित्यानित्यप्रपञ्चात्मन्निष्प्रपञ्चामलाश्रित ।
एकानेक नमस्तुभ्यं वासुदेवादिकारणम् ॥' (१, २०, १२)

अत्र ब्रह्मणः मायया प्रपञ्चात्मत्वं, वस्तुतः प्रपञ्चसङ्गराहित्यं च अभिहितम् ।

एवम्— 'एवंप्रकारममलं नित्यव्यापकमक्षयम् ।
समस्तभेदरहितं विष्ण्वाख्यं परमं पदम् ॥' (१, २०, ५३)

अत्र सजातीयादिभेदत्रयरहितं अद्वितीयं ब्रह्म निरूपितम् ।

तथा—'एवं न परमार्थोऽस्ति जगत्यत्र न चाथिप ॥' (२, १४, २८)
'एको व्यापी समश्शुद्धः निर्गुणः प्रकृतेः परः ।
जन्मवृद्ध्यादिरहितः आत्मा सर्वगतोऽव्ययः ॥' (२, १४, २९)
'तस्यात्मपरदेहेषु सतोप्येकमयं हि यत् ।
विज्ञानं परमार्थो वा द्वैतिनोऽतथ्यदर्शिनः ॥' (२, १४, ३१)
'वेणुरन्ध्रविभेदेन भेदष्षड्जादिसंज्ञितः ।
अभेदव्यापिनो वायोः तथा तस्य महात्मनः ॥' (२, १४, ३२)
'एकत्वं रूपभेदस्तु बाह्यकर्मप्रवृत्तिजः ।
देवादिभेदेऽपध्वस्ते नास्त्येवावरणे हि सः ॥' (२, १४, ३३)

अत्र ब्रह्म एकमेव परमार्थ अन्यत्सर्वं जगदपरमार्थ एव । तच्च ब्रह्म ज्ञानात्मकमेकं नामजात्यादिभेदरहितं च, एवं स्थिते ये द्वैतं पश्यन्ति ते तत्त्वदृष्टयः न भवन्तीति प्रतिपादितम् । एवं विष्णुपुराणस्य अद्वितीयब्रह्मपरत्वं स्पष्टमवगम्यते । तथा भागवतमपि निर्विशेषब्रह्मपरं भवति- तद्यथा—

'अत्रैव मायाधमनावतारे ह्यस्य प्रपञ्चस्य बहिस्स्फुटस्य ।
कृत्स्नस्य चान्तर्जठरे जनन्या माया त्वमेव प्रकटीकृतं ते ॥' (१०, १४, १६)
'यस्य कुक्षाविदं सर्वं सात्मं भाति यथातथा ।
तत्त्वय्यपीह तत्सर्वं किमिदं मायया विना ॥' (१०, १४, १७)
'अद्यैव त्वदृतेऽस्य किं मम न ते मायात्वमादर्शितम् ।
एकोसि प्रथमं ततो व्रजसुहृद्वत्सास्समस्ता अपि ॥
तावन्तोसि चतुर्भुजास्तदमि तैस्साकं मयोपासिताः ।
तावन्त्येव जगन्त्यभूस्तदमितं ब्रह्माद्वयं शिष्यते ॥' (१०, १४, १८)

एभिश्श्लोकैः प्रपञ्चस्य मिथ्यात्वं, ब्रह्मणः अद्वितीयत्वं चाभिहितम् ।

तथा— तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ।
त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत्सदिवावभाति ॥' (१०, १४, २२)

अत्रापि प्रपञ्चस्य मायाकल्पितत्वेन मिथ्यात्वं, ब्रह्मणो नित्यज्ञानानन्दरूपत्वं चाभिहितम् ।

तथा—एकस्त्वमात्मा पुरुषः पुराणस्सत्यस्स्वयंज्योतिरनन्त आद्यः ।
नित्योक्षरोऽजस्रसुखो निरञ्जनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः ॥ (१०, १४, २३)

अत्र ब्रह्मणः अद्वितीयत्वं परमार्थसत्यत्वं निर्विकारत्वमुपाधिरहितत्वं चाभिहितम् ।

एवंविधं त्वां सकलात्मनामपि स्वात्मानमात्मात्मतया विचक्षते ।
गुर्वर्कलब्धोपनिषत्सु चक्षुःप्राये तरन्तीव भवानृताम्बुधिम् ॥' (१०, १४, २४)
'आत्मानमेवात्मतया विजानतां तेनैव जातं निखिलं प्रपञ्चितम् ॥'
ज्ञानेन भूयोपि च तत्प्रतीयते रज्वामहेर्भोगभवाभवौ यथा ॥' (१०, १४, २)
'अज्ञानसंज्ञौ भवबन्धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् ।
अजस्रचित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी ॥' (१०, १४, २६)

एभिश्श्लोकैः संसारस्याज्ञानकल्पितत्वेनानृतत्वं, तस्य च अभिन्नात्मज्ञानेन मोक्षः, वस्तुतः अद्वितीयचिन्मात्रे ब्रह्मणि बन्धमोक्षाभावश्च निरूपितः ।

'प्रपञ्चं निष्प्रपञ्चोपि विडम्बयसि भूतले ।
प्रपन्नजनतानन्दसंदोहं प्रथितुं प्रभो ॥' (१०, १४, ३७)
'ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ।' (१०, ८७, १)

अत्र वस्तुतः ब्रह्म निर्गुणमिति, निष्प्रपञ्चमिति च सुस्पष्टमाम्नातम् । एवं पुराणान्तराणामप्यद्वितीयब्रह्मपरत्वं ग्रन्थकर्त्रा स्पष्टं प्रतिपादितमस्ति ।

अपि च- ग्रन्थेऽस्मिन् तत्रतत्र प्रकरणवशात् बौद्धतार्किकसाङ्ख्यमैमांसिकादिमतानि सयुक्तिकं निराकृत्य निष्कलङ्कमद्वैतमतिष्ठिपन् ।

किंबहुना--ग्रन्थेऽस्मिन्नभीभणन्व्यासाशयानुगुणं श्रुत्यर्थजातं, अचखण्डन् दुर्वादिमतजल्पितानि, स्पष्टतरमुपापीपदन् श्रुत्यनुग्राहकस्मृतियुक्तिपुराणेतिहासादिकं, प्रातिष्ठिपंश्च निष्कलङ्कमद्वैतं, अन्वगृह्णंश्च अज्ञानिजीवलोकं, अलमकुर्वंश्च भारतावनिमिति मोमुद्यामहे वयम् । महाशयाः! केवलस्वार्थपरतासङ्कलितेऽस्मिन् कलिकाले नास्तिकजनबहुले च जीवलोके विनाऽऽत्मोपयोगं अतिगम्भीरमधिकतरप्रयाससाध्यप्रकाशमिमं ग्रन्थं प्रकटयितुं कृतदीक्षा श्रीकविता वेङ्कटसुब्रह्मण्यशास्त्रिणः ग्रन्थमिममक्षरदोषान् परिशोधयितुं, विलेखितुं च विषयसूचीं मह्यं अप्रेषयन् । अहमपि तदीयवाचोविधेयया ग्रन्थकर्तरि विद्यमानभक्त्या यथामति परिशोध्य, विलिख्य च विषयसूचीं प्राहिणवम् । तदत्र पुंबुद्धिसुलभैः प्रमादादिभिस्सम्भावितानां दोषाणाममर्षणीया वयमिति, ते च दोषाश्शुद्धाशुद्धपत्रसङ्कलनार्थं ज्ञापनीया इति च विनतिपुरस्सरं प्रार्थयामः ।

एवमेतद्ग्रन्थकर्तृविरचितानेकान् ग्रन्थान् मुद्रापयितुमुद्युक्तानां श्रीकवितावेङ्कटसुब्रह्मण्यशास्त्रिणां एतद्ग्रन्थमुद्रापणे द्रव्यसाहाय्येन बहूपकुर्वतां श्रीमतां '**एका आञ्जनेय**'महाशयानां च सन्ततमायुरारोग्यैश्वर्यादिकं वितरतादिति सर्वेश्वरं रमारमणमुमारमणं चानिशं प्रार्थयामः ।

'वेदान्तशिरोमणिः'
**मञ्चवल्लि वेङ्कटसुब्बरायशास्त्री ।**

# विषयसूचिका।


पृष्ठसङ्ख्या।

ॐतत्सदिति मङ्गलाचरणम्। १

मध्वरामानुजयोः कलिराजामात्यकामक्रोधांशत्वनिरूणम्। २

पूर्वोत्तरमीमांसयोर्भेदाभेदविचारः। ४

अथाऽतो ब्रह्मजिज्ञासेत्यत्राथशब्दविचारः। ८

अनुबन्धचतुष्टयनिरूपणम्। १२

अतश्शब्दविचारः। १४

ब्रह्मजिज्ञासापदार्थविचारः। १५

स्वध्यायविधिविचारः। १६

ज्ञानस्य मोक्षसाधनतानिरूपणं, ध्यानस्य तदसाधनतानिरूपणं च। १८

यज्ञादीनां विविदिषाङ्गत्वनिरूपणम्। २१

साधनचतुष्टयसम्पत्तेर्ब्रह्ममीमांसाप्राक्कालीनत्वम् २३

आत्मनस्सुखरूपत्वनिरूपणम्। २४

आत्मनो नित्यत्वनिरूपणम्। २५

ब्रह्ममीमांसायाः कर्ममीमांसाध्ययनानन्तर्यनियमनिराकरणम्। ''

निर्विशेषात्मनिरूपणम्। २८

रामानुजाभ्युपगतसविशेषत्वनिराकरणम्। ''

निर्विशेषे ब्रह्मणि प्रमाणविचारः, तत्र निर्विशेषे वस्तुनि सौषुप्तिकप्रत्यक्षप्रमाणविचारः ३१

निर्विशेषे वस्तुनि अनुमानप्रमाणविचारः। ३२

सविकल्पकनिर्विकल्पकज्ञानविचारः। ३३

निर्विकल्पकज्ञाने प्रत्यक्षादिप्रमाणानां करणत्वाक्षेपः। ''

निर्विकल्पकज्ञानस्यान्तःकरणवृत्तिजन्यत्वोपपत्तिः ३४

निर्विकल्पकज्ञाने शब्दस्य प्रमाणत्वोपपत्तिः ''

वेदान्तवाक्यानां निर्विकल्पकब्रह्मपरत्वोपपत्तिः ३६

सुषुप्तावपि निर्विकल्पकब्रह्माकारवृत्तिसत्त्वोपपत्तिः। ३७

श्रुतप्रकाशिकोक्तदूषणनिराकरणपूर्वकं निर्विकल्पकस्वरूपनिरूपणम्। ३८

पृष्ठसङ्ख्या।

प्रत्यक्षस्य भेदविषयत्वनिराकरणम्। ४२

रामानुजमतखण्डनपूर्वकं भेदस्य दुर्निरूपत्वोपपादनम्। ४५

ब्रह्मणो व्यावृत्तिरूपत्वखण्डनम्। ५०

ब्रह्मणो ज्ञानानन्दरूपत्वोपपादनम्। ''

घटपटादिप्रपञ्चस्य मिथ्यात्वोपपादनम्। ५१

मिथ्यात्वसाधकदृश्यत्वहेतोर्ब्रह्मणि व्यभिचारशङ्कानिरासः। ५५

ब्रह्मण्यदृश्यत्वोपपत्तिः। ५६

ब्रह्मण्यद्वितीयत्वोपपत्तिः। ५८

द्वैतमिथ्यात्वोपपत्तिः। ५९

ब्रह्मसत्यत्वोपपत्तिः। ६२

ब्रह्मणश्चिद्रूपत्वोपपत्तिः। ६५

चैतन्यस्य स्वयम्प्रकाशत्वोपपत्तिः, तत्र रामानुजमतखण्डनं च। ६६

अनुभूतेर्नित्यत्वोपपत्तिः। ७१

अनुभूतेर्दृश्यत्वानुपपत्तिः। ८०

आत्मनो ज्ञप्तिरूपत्वे श्रुत्याद्युपपत्तिः। ८८

संविद आत्मत्वोपपत्तिः। ९२

अहङ्कारस्य चिदभिव्यञ्जकत्वोपपत्तिः। १०५

अहङ्कारस्याज्ञानाश्रयत्वं, संविदोऽज्ञानविषयत्वं च। ''

अहङ्कारस्य स्वात्मस्थानुभूत्यभिव्यञ्जकत्वप्रतिपादनम्। १०८

अहमर्थविचारः। ११०

सुषुप्तावपि अहमर्थस्याहङ्कारस्यानुवृत्तिरस्तीत्येतद्रामानुजमतनिराकरणम्। ११४

अहमोऽहङ्कारार्थत्वोपपत्तिः; मुक्तावहङ्कारस्याननुवृत्तित्वोपपत्तिः। ११५

प्रत्यक्षस्यागमबाध्यत्वोपपत्तिः। १२२

प्रत्यक्षस्य ज्येष्ठत्वं बाध्यत्वे हेतुः। १२४

परत्वादागमस्य बाधकत्वोपपत्तिः। ''

पृष्ठसङ्ख्या ।

आगमस्य प्रमाणत्वोपपत्तिः १२५
दर्पणादौ मुखादिप्रतिभासस्य व्यावहारिकसत्यत्वनिरूपणम् । १३२
प्रकारांतरेण ज्ञानस्य सत्यत्वाऽऽशङ्का, तन्निरासश्च । १३३
ब्रह्मणो मिथ्यात्वाशङ्कानिरासः । १३८
वेदान्तशास्त्रं न निर्विशेषब्रह्मप्रतिपादकमिति रामानुजमतं - तन्निराकरणम् । १४०
प्रकारान्तरेण ब्रह्मणस्सविशेषत्वाक्षेपः, तत्साधनं च । १४५
सदेवेति वाक्यं असद्वादनिरासपरमेव, नतु विजातीयभेदनिरासपरमिति सुदर्शनमतं - तन्निराकरणम् । १४८
सदेवेति वाक्यस्थस्य सच्छब्दस्य सुदर्शनाऽभ्युपगतप्रकृतिपुरुषकालशरीरकपरमात्मार्थकत्वनिराकरणम् । १४९
एकमेवाद्वितीयं ब्रह्मेतिश्रुतौ एकपदस्य सुदर्शनाभ्युपगतकारणावस्थात्मकब्रह्मबोधकतानिराकरणम् । १५०
अव्यक्तस्य जगत्कारणत्वे साङ्ख्यवादापत्तिरित्याक्षेपः, स्वतन्त्रस्य तस्य जगत्कारणत्वाभावात् तद्वैलक्षण्यमिति साधनं च १५१
अद्वितीयमिति पदं निमित्तकारणान्तराभावं बोधयति, नतु द्वैतसामान्याभावमिति सुदर्शनमतनिराकरणम् । १५२
कारणवाक्यस्य तत्स्वरूपशोधकवाक्यस्य रामानुजाभ्युपगतार्थनिराकरणम् । १५३
सत्यं ज्ञानमितिश्रुतेर्निर्विशेषब्रह्मपरत्वोपपत्तिः १५७
विज्ञानमानन्दमिति श्रुतेर्निर्विशेषब्रह्मपरत्वोपपत्तिः १५८
ब्रह्मविदाप्नोति, सोऽश्नुते सर्वान्कामान्ब्रह्मणा विपश्चितेतिश्रुतेर्निर्विशेषब्रह्मपरत्वोपपत्तिः १६०
ब्रह्मण आनन्दरूपत्वोपपत्तिः । १६२

पृष्ठसङ्ख्या ।

निर्गुणस्य ब्रह्मण उपास्यत्वोपपत्तिः । १६४
ब्रह्मणो विदिताविदिताभ्यामन्यत्वोपपत्तिः ”
शङ्करमनस्याचलमतसाङ्कर्यशङ्कानिरासः १६८
दृष्टेर्द्रष्टारमित्यत्र रामानुजाभिमतार्थनिराकरणं १६९
आनन्दशब्दस्य रामानुजाभिमतार्थनिराकरणं ६९
ब्रह्मण आनन्दरूपत्वोपपत्तिः, ब्रह्मण आनन्दगुणकत्वनिराकरणं च । १७२
ब्रह्मणो निर्विशेषत्वप्रतिपादनम् । १७९
‘नेह नाना’ इत्यत्र रामानुजाभिमतार्थनिराकरणम् । १८१
अद्वैतसिद्धान्ते सुदर्शनाचार्यमतनिराकरणम् १८६
द्वैतज्ञानस्य मोक्षफलकत्वाभावेन तच्छास्त्रस्याप्रमाणत्वोपपत्तिः । १९०
ऐक्यश्रुतेरुपासनापरत्वनिराकरणम् । १९३
‘एकमेवेति’ श्रुतेः रामानुजाभिमतार्थनिराकरणम् । १९६
‘नेह नानाऽस्ति किंचने’ति श्रुत्यर्थविचारः । ”
यत्र हि द्वैतमिव भवतीति श्रुत्यर्थविचारः । १९९
तैत्तिरीयश्रुत्यन्तर्गत ‘अदृश्ये’ इति पदार्थविचारः । २०३
अनिरुक्तपदार्थविचारः । २०३
‘अभयं प्रतिष्ठां विन्दते’ इत्यादिश्रुत्यर्थविचारः । २०४
गीतास्मृतेर्निर्विशेषब्रह्मपरत्वोपपत्तिः । २०७
पुरुषवचनानां निर्विशेषब्रह्मपरत्वोपपत्तिः । २११
‘सत्यं ज्ञान’मितिश्रुतावनन्तपदस्यार्थविचारः २१४
‘एकदेशस्थितस्याग्नेः’ इति श्लोकार्थविचारः । ”
‘यथा क्षेत्रज्ञशक्ति’रिति श्लोकार्थविचारः २१६
‘तया तिरोहितत्वा’दित्यादिश्लोकार्थविचारः २१७
अथ ‘प्रथान’मित्यादिश्लोकार्थविचारः । ”
‘तदेतदक्षय’मित्यादिश्लोकार्थविचारः । ”

पृष्ठसङ्ख्या ।

रामानुजाभिमतक्षेत्रज्ञस्वरूपनिर्वचननिराकरणम् । २१८
आत्मनस्स्वसंवेद्यतानिराकरणम् । २१९
'प्रत्यस्तमितभेद'मिति पुराणवचनस्य प्रपञ्चनिषेधपरत्वप्रतिपादनम् । २२०
मूर्तामूर्तपदार्थविचारः । २२०
योगस्य सगुणब्रह्मैकविषयत्वेन तत्प्रकरणस्थश्लोकानां न निर्विशेषपरत्वमिति रामानुजशङ्का--तन्निरासश्च । २२१
'ज्ञानस्वरूपमखिलं' इत्यादिश्लोकस्यापि प्रपञ्चमिथ्यात्वपरत्वप्रतिपादनम् । २२४
'सोह'मित्यादिविष्णुपुराणवचनानां जगन्मिथ्यात्वपरत्वोपपत्तिः । २२४
'अविकाराय शुद्धाय' इत्यादिश्लोकस्यापि निर्विशेषब्रह्मपरत्वोपपत्तिः । २२९
ब्रह्मरुद्रविष्णुपदानामर्थविचारः । २३२
शास्त्रस्य निर्विशेषब्रह्मपरत्वे 'निर्गुणस्याप्रमेय'स्येत्यादिश्लोकोक्तप्रश्नप्रतिवचनानुपपत्तिशङ्का--तन्निरासश्च । २३३
मायाया ब्रह्मशक्तित्वोपपत्तिः । २३४
'परमार्थस्त्वमेवैक' इत्यनेनापि जगतः अपारमार्थ्यत्वोपपत्तिः । २३६
'तवैष महिमा' इत्यादिविष्णुपुराणान्तर्गत श्लोकानां जगन्मिथ्यात्वपरत्ववर्णनम् । २३७
विशिष्टाद्वैतापेक्षया अद्वैतस्य दुष्टत्वशङ्का--तन्निरासश्च । २४०
विष्णुपुराणस्य षड्विधतात्पर्यलिङ्गैर्निर्विशेषब्रह्मपरत्वप्रतिपादनम् । ''
श्रीभाष्ये अद्वैतमतविरुद्धांशखण्डनम् । २४७
जीवब्रह्मभेदपरत्वेन रामानुजाभिमतानां श्रुतीनामर्थविचारः । २५३
सूतसंहिताया निर्विशेषब्रह्मपरत्वप्रतिपादनं । २६४
भागवतस्याप्यद्वैतपरत्वप्रतिपादनम् । २७३

पृष्ठसङ्ख्या ।

अविद्याया निर्विशेषब्रह्माश्रयत्वे रामानुजाक्षेपः- तत्परिहारश्च । २७६
ज्ञानस्वरूपं ब्रह्मस्वरूपातिरेकेण संकोचविकासात्मकावस्थाद्वयशालीति सुदर्शनमतं--तन्निराकरणं च । २८१
निर्विषया निराश्रया च अनुभूतिस्स्वाश्रयदोषादनन्ताश्रया अनन्तविषया भवतीति रामानुजमतम्--तत्खण्डनं च । २८१
प्रपञ्चस्याविद्याकल्पितत्वपक्षे सुदर्शनोद्घाटितदोषः--तन्निराकरणं, तस्य तत्कल्पितत्वनिरूपणं च । २८२
प्रपञ्चस्य सत्यत्वाक्षेपपूर्वकं--तन्निराकरणम् । २८५
अविद्यायास्सदसद्विलक्षणत्वेन अनिर्वचनीयत्वोपपत्तिः । २८६
ब्रह्मणि जगत्कल्पनाया अन्यथाख्यातित्वशङ्का--तन्निरासश्च । २९०
अख्यातिमतनिराकरणम् । २९०
असत्ख्याति आत्मख्यातिमतयोः निराकरणं २९१
अज्ञानस्य भावरूपत्वप्रतिपादनम् । २९२
स्वप्रकाशचैतन्यस्वरूपस्य ब्रह्मणोऽज्ञानानुभवाभावनिरूपणं, ईश्वरस्य तु तत्प्रतिभासरूपतत्साक्षित्वनिरूपणं च, जीवस्याज्ञानानुभवत्वनिरूपणं च । ३००
ब्रह्मणोऽज्ञानसाक्षित्वाक्षेपः- तत्परिहारश्च । ३०४
अज्ञानस्य ज्ञाननिवर्त्यत्वोपपत्तिः । ३०७
अज्ञाननिवृत्तिरेव मुक्तिः, नतु वैकुण्ठलोकप्राप्तिरित्युपपादनम् । ३०९
चिद्रूपस्य ब्रह्मणोऽज्ञानेन स्वरूपतिरस्कृत्यभावनिरूपणम् । ३१०
अविद्यारूपदोषस्यापरमार्थत्वे तादृशदोषमूलभ्रमाधिष्ठानस्य ब्रह्मणोप्यपारमार्थ्यप्रसक्त्या शून्यवादप्रसक्तिरित्याक्षेपः---तन्निराकरणं च । ३११

पृष्ठसङ्ख्या ।

'नकिञ्चिदवेदिष'मिति सुप्तोत्थितपरामर्शादपि भावरूपाऽज्ञानसिद्धिरिति निरूपणम् । ३१२

भावरूपाऽज्ञानेऽनुमानस्यापि प्रमाणत्वोपपादनम् । ३१५

अज्ञानं न चिद्रूपब्रह्माश्रयमपि तु ज्ञात्राश्रयमित्यादिरामानुजाभ्युपगतप्रतिप्रयोगदूषणं ३१६

उपादानोपादेययोरसालक्षण्येपि भावरूपाऽज्ञानसिद्धिः । ३२१

रामानुजाभिमतयथार्थख्यातिसिद्धान्तखण्डनं ३२७

पीतश्शङ्खः तिक्तो गुड इत्यादीनामपि अयथार्थज्ञानत्वोपपादनम् । ३३२

पृष्ठसङ्ख्या ।

निर्दुष्टप्रमाणभूतागमगम्यत्वेन ब्रह्मणा सृष्टाः भोग्यपदार्थास्सर्वेपि सत्या इति रामानुजसिद्धान्तः - तत्खण्डनम् । ३३६

महावाक्योपदिष्टजीवब्रह्माऽभेदान्यथानुपपत्यापि मिथ्याभूताज्ञानसिद्धिरित्युपपादनं ३४०

अनिर्वचनीयभावरूपाज्ञानसिद्धौ विष्णुपुराणान्तरसंवादत्वोपपत्तिः । ३४४

अनिर्वचनीयभावरूपाज्ञानसिद्धौ स्कान्दादिपुराणान्तरसंवादप्रदर्शनम् । ३५१

श्रुतीनामविद्यानिवर्तकनिर्विशेषब्रह्मज्ञानपरत्वोपपत्तिः । ”

श्रीमहावागीश्वर्यै नमः ।

श्रीमहायशश्शरीर सार्धशतमहाप्रबन्धकर्तृ-

# वेङ्कटकोण्ड रामरायकवीन्द्रजीवितोदन्तः ।

श्रीविद्वत्कविसार्वभौम पुल्योमामहेश्वरशास्त्रिसंग्रथितः ।

श्लो॥ सरसुजनहृत्पेटी भूषायिताव्ययशःपटी सकलसुकलाकोटी वेषाकृतिप्रमदार्भटी ।
सरसरचनाधाटी जोषावहत्पदसम्पुटी मम तु रसनावाटीभूषा नटेत्कवितानटी ॥
वयं वितनुमोऽञ्जलिं विविधतन्त्रविद्याव्रजप्रबन्धविधिदक्षिणप्रतिभया त्वनन्यादृशा ।
लसत्सरससाहितीरसविसारिसत्काव्यसद्विनिर्मितिधुरीणताऽञ्चितमहाकविभ्योऽनिशम् ॥१॥
हयाननमहामनूर्जितजपार्चनोपासनाबलात्तसकलागमाष्टदशसंविदाविष्कृताः ।
लसन्त्यखिलदर्शनाप्रतिभटप्रबन्धा यतो गुडाद्रिकुलदीपकं तमिह रामरायं नुमः ॥२॥
तदीयजननादिसच्चरितवर्णनं पावनं स्वलिप्सितसमस्तसत्फलततिं सुरोपासना ।
इहापि च महाकलौ दिशति भक्तिमद्भ्यो ध्रुवं त्वितीरयितुमत्र नस्सरति वाङ्मयं सज्जनाः ! ॥३॥
अयं विबुधराजराट् पमिडिपाङ्कुनाम्नाऽञ्चिते नृसिंहनगरोपमण्डलगतेऽग्रहारेऽमले ।
सुगर्तपुरमण्डले विबुधचन्द्रिरोत्पत्तिभूगुडाद्रिकुलसिन्धुजोऽखिलकलानिधिर्नृद्वयौ ॥४॥
कलानिह तु शालिवाहनशकेऽद्रिनिध्यद्रिभूमिताव्ययुववत्सरे तपसि दर्शतिथ्यां निशि ।
द्विजाधिपतिवासरे कटकलग्नके मोहनाद्बुधात्सुहनुमाम्बिकाजठरतोऽजनीशो यथा ॥५॥
स्वसूत्रकृदिहाश्वलायनऋषिर्भरद्वाजकोऽन्वयेः कुलकरोस्य सत्कविवरस्य शाखार्चिकी ।
पितामह उदीरितः कविकुलेन्दुरात्वारिति स्थिरापि सुखजीविकां दिशति पञ्चशत्या मिता ॥६॥
क्रमात्स ववृधे कलानिधिरिवाखिलान्नन्दयन्नपूर्वललितैर्मतिप्रतिभयाञ्चितैश्शैशवे ।
पिता विधिवदक्षरग्रहमचीकरत्पञ्चमे शुभेऽहनि तु वत्सरे शुभमुहूर्तके मोदतः ॥७॥
ततो गुरुमुखात्कलालयत आन्ध्रभाषामयं पपाठ गुरुतां वहन्नितरबालकानां मुदा ।
शितात्ममतितोऽधिकं स समुपाददे वाङ्मयं पिता तु गतवान्दिवं वयसि षष्ठवर्षे बत! ॥८॥
पितृव्य इह केशवो धरणिवित्तरक्षाधुरं वहन्नतितरां स्वसौहृदभरेण तं पाठयन् ।
व्यधात्स उपनायनं विधिवदष्टमे वत्सरे त्रिसन्ध्यमथ भक्तितोऽन्वहमुपास्त सन्ध्यामसौ ॥९॥
पिपाटयिषुरुद्यतस्स विभुहूणभाषाकलां न्यवीविशदिमं ततो महति गर्तपुर्यालये ।
पठत्यनुदिनं क्रमान्मतिमतीह बाले कलां शरीरमभवद्रुजा परिनिपीडितं भूयशः ॥१०॥
निरन्तररुजार्दितं पुरि तृतीयकक्ष्यागतं चतुर्दशशरद्यमुं पुरत आनिनायार्भकम् ।
न्यवारयदरक्तितो विभुकलालये पाठनं पितृव्य इह संस्कृतां पठ गिरन्त्विति प्रोचिवान् ॥११॥

स्थितस्स्वसदने सुखं स रघुवंशमारभ्य सत्कवीट्कृतिचतुष्टयं प्रतिकृति द्विसर्गात्मना ।
पपाठ सविधे ततः कुलगुरोस्तु रामाख्यया प्रथां गतवतः कलानिधिवरस्य सीतायुजा ॥१२॥
पठन् स्वसहपाठिभिः प्रतिदिनं स्वपरन्पुनर्गुरूक्तविषयाधिकं समवबोधयंस्तत्र तान् ।
प्रमोदयति नित्यशो निजपुरोधसस्सन्निधौ पठत्युपनिषन्मुखं निगममन्त्रजालं च सः ॥१३॥
त्रिसन्ध्यमवधानतो निगममातरं सम्भजन् पितामहमुखागतं कुलधनं स्वयं पूजयन् ।
हयाननमिह स्थितं महितसालभद्राश्मगं विशिष्टविधया भजन् स्वहृदये सदा चिन्तयन् ॥१४॥
सुचोलविभुना पुरा जनपदे निजे स्थापितं मनोहरमहालये स्वनुभजत्रमावल्लभम् ।
विधाय तुलसीवनं स्वयमिहोर्ध्वपुण्ड्रांकितो जलेन परिवर्धयन्पठति देवभाषां मुदा ॥१५॥
कदापि हरिवासरादिषु हयाननं भक्तितो नयन् स्वतुलसीवने विमलपीठमध्यस्थितम् ।
विधाय तुलसीदलैर्बहुविधोपचारैरयं समार्चिचदलं स्तुवन्नपि च संस्मरन् श्रद्धया ॥१६॥
तथा कतिपयेष्वहस्स्विह गतेषु चैवं मुदा कदाचन हयाननो द्विजवपुर्निशि स्वप्नके ।
स्वमन्त्रमुपदिष्टवानथ जगाद दम्मालपाड्विस्व्यजनधाम्नि सन्वसति रत्नमाचार्यकः ॥१७॥
स ते दिशति गच्छ तं मम मनोरुपास्तौ क्रमं तदङ्गकवचादिकं सकरुणङ्क वैखानसः ।
इति प्रणिगदन् द्विजप्रवर एष चान्तर्दधे प्रबुद्ध इदमद्भुतं स्वहृदये स चाचिन्तयत् ॥१८॥
जपन्नुपगतं मनुं भवति सत्यमेतन्न वेत्त्यसौ व्यवसितुं ययौ जनपदं परेद्युस्स तम् ।
सरलगुरुरादरादखिलमन्त्रजालं ददाववाप्य तु यथा निधिं मुदितहृद्गृहं चाययौ ॥१९॥
ततस्त्वनुदिनं महामनुमिमं पुरश्चर्यया जपन्विधिवदर्चयन्नपि च मूर्तिमत्यादरात् ।
उपास्त स हयाननं हरिमशेषविद्याप्रदं प्रसादमगमद्विभोरपठितं विदन्नात्मना ॥२०॥
अधीतकृतियुग्मको भगवतो महानुग्रहात् रसाढ्यकविताधुनीप्रवहणै रमावल्लभम् ।
स्तुवन् शतमितादिभिर्हृदयहारिपद्यैरसौ कथञ्चन कृतिद्वयं गुरुमुखादथाधीतवान् ॥२१॥
ततस्स तु समापिपद्गुरुमुखादधीतिं बुधः पितृव्यसविधे गुरोश्श्रमद एव पाठो मम ।
अशेषमपि काव्यगं मम यथा वदन्वेति भोः पितर्विमृश कुत्र वाप्यपठितेष्विति प्रोचवान् ॥२२॥
अपृच्छदथ कुत्रचित्त्वपठिते पुराणं यथा रयेण स जगाद तं विषयमेष पृष्टाधिकम् ।
उदास्त स तु पाठने प्रमुदितः पितृव्यो हृदि स्वयं तु सुसमन्विते नहि गुरोरपेक्षा भवेत् ॥२३॥
ततस्सरससाहितीकृतिवरानशेषान् स्वयं समीक्ष्य कृतिसारवित्सपदि षोडशाब्दात्मकः ।
व्यथादथ स रुक्मिणीपरिणयादिकाव्यव्रजं त्रिभागकमदृष्टदर्शकमवैच्च स ज्यौतिषम् ॥२४॥
स्वयंवृतवती ततो जगति कीर्तिकान्ता हृता धरा तु वितता प्रसूजठर एव तं चाग्रहीत् ।
अशेषसुकलामयी विबुधभारती शैशवे बहुप्रियमशिश्रियज्झडिति यौवनश्रीरपि ॥२५॥
कलाकलितकुल्यतां बहुकलामहाकल्यतां विशालवसुधेशतां विस्मरार्यकीर्तीशताम् ।
विशिष्टगुणसम्पदं श्रुतवपुर्वयस्सम्पदं समृद्धसकलार्थसम्पदमखण्डधीसम्पदम् ॥२६॥

समीक्ष्य वरसम्पदं प्रथितसिङ्गराड्वंशजस्स वेङ्कटपदादिमो रमणनामकश्श्रीविभुः ।
द्वितीयतनयां निजां श्रियमिवादिलक्ष्म्याह्वयां प्रदातुमनसद्विजौ परिणयाय नेल्लूर्पुरात् ॥२७॥
विचिन्त्य कुलशीलसौभगमुखाढ्यकन्यागुणान् निजस्य समगौरवद्रविणवैदुषीसम्पदम् ।
प्रसूगतसुशीलतासुचितगुण्यतां बन्धुताऽन्वमंस्त सदृशं समागममथोपयामे कवेः ॥२८॥
मुहूर्तमथ भद्रदं ग्रहबलेन निश्चित्य सद्बुधैर्निगदितं पुनस्स बुधयुग्मतः प्राहिणोत् ।
स्वबन्धुपरिवारसद्बुधशतैः पितृव्यो वरं कुमारमिव भूपतेरथ निनाय नेल्लूर्पुरीम् ॥२९॥
समङ्गलघटस्रगक्षतसुगन्धमुख्योल्लसत्सुभाजनकराङ्गनामणिभिरासबन्धुव्रजैः ।
द्विजैरपि सतूर्यनिस्स्वनगणं समभ्येत्य तान् न्यवीविशदलंकृते शुभगृहेऽथ कन्यापिता ॥३०॥
ततः परिणयोत्सवोऽजनि तयोर्महावैभवैः विदेहतनयारघुप्रवरयोरिवात्यद्भुतैः ।
ददौ स परितुष्टधीर्विविधगारिवर्हं महत् समं स्वसुतया धनी विबुधवर्गमप्यार्चिचत् ॥३१॥
स पञ्चसु दिनेषु भूसुरमुखानतार्प्सीद्द्विनैर्दुकूलमुखमण्डनैर्मधुरभक्ष्यरस्यौदनैः ।
कतीति निगदेत्तु कः कथमिहार्हयामास तद्वरासबुधबन्धुसंहतिमिति क्षमो वर्णयेत् ॥३२॥
तथैव वरपक्षतस्सदसि वस्त्रभूषादिभिर्बुधाः कनकमुद्रिकादिभिरशेषविद्याविदः ।
बुधाः कति समर्चिता विविधगाननृत्यादिसत्कलाविद इहादृता इति कथं नु वक्तुं क्षमाः ॥३३॥
समाप्य विधिमौपयामिकमशेषमत्युत्सवैस्सकेशवसुधीमणिस्सकलबन्धुमित्रादिभिः ।
स्नुषां स्वभवनं नवां विधिवदानिनायादरात् प्रवेशयितुमुत्सुकश्श्रियमिवादिलक्ष्मीं पराम् ॥३४॥
प्रवेश्य दिवसत्रये स्वकुलसम्प्रदायानुगो व्रतैस्स्वकुलदेवतार्चनमुखैस्समाराधयन् ।
सुरान्जनपदस्थितानपि जनान् सुमृष्टाशनैर्यथार्हममलांशुकादिभिरपि स्वबन्धुव्रजम् ॥३५॥
अहं स विविधैर्महैरपि तथा निनीयोत्सुकश्चतुर्थदिवसे पुनर्नववधूं स्नुषां प्रैषिपत् ।
पितुर्भवनमादराद्वसनभूषणैर्भूषयन् स्वबन्धुसहितां निजामपि च बन्धुतां प्राहिणोत् ॥३६॥
रामारायकविर्विधाय विधिवत्पाणिग्रहं वैभवैर्ब्राह्मेऽनेहसि सम्प्रबुध्य स हरिं स्तुत्वा स्तवैर्नित्यशः ।
ध्यायन्दन्तविशोधनादिविधितः पश्चान्निजग्रामगे शेषाम्भस्यवमज्ज्य वेदजननीमन्त्रं सहस्रं जपन् ॥३७॥
सूर्योपस्थिततः परं तटगतश्रीतिन्त्रिणीमूलगो जप्त्वा याति गृहं हयाननमनुं साङ्गं स्मरन्नात्मनि ।
तत्पश्चायतनं गृहे सुमहयन्दिव्योपचारैस्ततो भुंक्ते शिष्यगणं प्रपाठयति चासायं ततस्सान्ध्यकम् ॥
रात्रौ ग्रन्थविशोधनं हृदि कलातत्त्वानुचिन्ता नवग्रन्थानां रचनाऽथ सुप्तिरिति तन्नित्यक्रियाः प्रत्यहम् ।
सन्देहा न कलान्तरेषु सुकवेरासन्कचाप्यन्तरा शब्दन्यायपटिष्ठतन्त्रयुगलं गुर्वास्यवेद्यं हि तत् ॥३९॥
जिज्ञासाऽभवदाढ्यदेशिकमुखात्तत्तन्त्रतत्त्वे दृढा स्वग्रामान्तिकगो न कोऽपि च गुरुर्लभ्योऽस्ति तत्तन्त्रवित् ।
हित्वात्मीयगृहं परत्र पठितुं नास्त्यौचिती यद्गतो नित्याम्भीयतपोव्रतस्य गृहगव्यापारदीक्षाविधेः ॥४०॥
एवं चिन्तयतस्तु तस्य बहुधा यातोऽल्पकालो गृहे श्रीनामालपुरीशवार्षिकसभाकालस्ततोऽभ्यागतः ।
तद्भूपालकदीयमाननिजसत्काराऽऽदाये गच्छन्स ग्रामस्थ सुखेन पण्डितवरान्दृष्ट्वा तुतोषात्मनि ॥

प्राप्तो मे समयो निजार्थघटनोद्योगाय मद्वार्षिकस्वीकृत्यै बहवोऽभ्युपेयुरिह ते गेहं बुधास्तार्किकाः ।
ते वैयाकरणाश्च तन्त्रकुशलाः पृच्छामि तान्पाठने दैवानुग्रहतोऽत्र सिद्धलषितं के वा विदध्युर्बुधाः ॥
इत्यालोचयितुः कवेरुपगता द्वित्रेष्वहस्सु क्रमाद्विद्वांसस्सदनं कविस्स्वलषितं तेभ्योऽथ सोऽवेदयत् ।
केचिद्धीरुहृदोऽस्य पाठनविधौ नानाकलावेदिनोऽनन्यादृक्प्रतिभासमञ्चितधियो नैवावकाशं ददुः ॥४३॥
सोदर्यौ पुरिघल्लवंशवनधिप्रालेयभानू उभौ सुब्रह्मण्य इति स्म राम इति च व्युत्पन्नमेधाविनौ ।
तर्के व्याकरणे च पाटवजुषावाभाष्यमध्यापकौ तौ दृष्ट्वा विनयी न्यवेदयदयं कामं द्वयोः पाठने ॥
तौ सन्तुष्टहृदौ भवादृशमहामेधाविनेऽध्यापनं शास्त्राधीतिफलं भवेद्धि विदुषामावां तु कुर्वस्तथा ।
गद्वालात्पुनरागताविति समाकर्ण्य प्रबन्धावलिं बद्धां तेन विलक्षणप्रतिभयाऽनन्यादृशैः कल्पनैः ॥४५॥
रामो भागवतोपनामहरिशास्त्र्याख्यातिविख्यातिगाधीतव्याकृतितन्त्रपारगतिमान् ज्येष्ठोऽनुजोऽयं मम ।
विद्वद्वौत्तमगुम्मलूरुपपदश्रीसङ्गमेशाभिधाख्याताधीतकणादतन्त्रकुशलस्त्वां पाठयावोभयोः ॥४६॥
इत्याभाष्य बहूक्कतौ तु बहुधा दातुं परीक्षामुभौ श्रीगद्वालमहापुरीपरिषदं यातौ परीक्षाविधौ ।
उत्तीर्णौ निजतन्त्रयोर्बुधनुतौ तौ भ्रातरावुत्तमश्रेण्यां तत्र सुसत्कृतौ पुनरुपायातौ कवेस्सन्निधिम् ॥४७॥
पश्चाद्रामबुधस्समारभत तं सिद्धान्तकौमुद्यभिख्यातं व्याकृतितन्त्रगं प्रथमतः पाठ्यं प्रबन्धं मुदा ।
तद्व्याख्याननिबन्धगाढ्यविषयश्रेणीविशेषैस्समं पूर्वार्धं स समापिपत्प्रतिभया मासैस्त्रिभिस्त्वद्भुतम् ॥
सुब्रह्मण्यमनीष्यपीपठदिमं प्रारभ्य तं संग्रहं तर्काणां विवृतिप्रबन्धगविशिष्टांशैस्सहोद्बोधयन् ।
व्याकृत्यंशविचारगौरवकृतात्कालाधिकत्वात्त्रिभिर्मासैस्संग्रह एव पूर्तिमगमत्काणादतन्त्रे कवेः ॥४९॥
पित्राज्ञामनुसृत्य रामविबुधस्स्वग्रामगोऽभूत्तदाऽहोरात्रं स तु तर्कतन्त्रमपठत्तत्क्रोडचर्चान्वितम् ।
यावद्रामबुधागमं पुनरुपक्रम्योत्तरार्थं पठन्कौमुद्यां सविशेषचर्चमगमन्मासैस्त्रिभिः पूर्णताम् ॥५०॥
आहूतौ जनकेन तौ जनपदं स्वं पण्डितौ भ्रातरौ व्याख्याग्रन्थततिं निधाय कविराडभ्यन्तिके जग्मतुः ।
तान्ग्रन्थान्परिशील्य शेखरमुखान्व्याख्यां शरद्राड्यभिख्यातां शाब्दिककौमुदीसुविवृतिं चक्रे नवैः कल्पनैः ॥
कालेऽस्मिन्श्वशुरो द्वितीयदुहिता मे पुष्पिणी ते स्नुषा सञ्जातेति विलिख्य विप्रमुखतो लेखां शुभां प्राहिणोत्
दृष्ट्वा तां स तु केशवो द्विजवरावभ्यर्च्य तौ मङ्गलद्रव्याण्यात्मजनैस्स्नुषार्थमुचितान्यानन्दतः प्रैषिषत् ॥
गर्भाधानकृते मुहूर्तममलं निर्णाय्य मौहूर्तिकैराहूयार्यगुरुद्वयं स्वजनतामादाय नेल्लूर्पुरीम् ।
गत्वा केशवराय आत्तकुतुकस्तस्मिन्मुहूर्ते शुभं तत्कार्यं प्रणिनाय वैभवयुतं विद्वत्समर्चादिभिः ॥५३॥
पश्चाद्बन्धुसुहृद्वृतो गुरुयुतस्तामादिलक्ष्मीं स्नुषामादायापि स केशवो निजगृहं त्वभ्याययौ मोदतः ।
रामारायबुधोऽथ रामविदुषे प्रादर्शयत्तां शरद्रात्रिं दीक्षितकौमुदीविलसनाविष्कारितामात्मना ॥५४॥
दृष्ट्वाऽत्यद्भुतकल्पनालिकलितां भावप्रकर्षोज्ज्वलां भाष्यार्थप्रमितां विचित्रविपरामर्शादिविद्योतिनीम् ।
आचार्योऽतिविसिष्मिये हृदि हयग्रीवोऽस्य वक्त्रादिमां लोकानुग्रहकृद्व्यभासयदनन्यादृग्विधानामिति ॥५५॥
सुब्रह्मण्यमनीष्यपि स्फुटतरं श्रुत्वा तुतोषाधिकं तौ सान्दीपनिवन्निमित्तगुरुतामाप्तौ कवीशान ते ।
कृष्णस्येव समस्ततन्त्रविदुषः पुम्भूतभाषात्मनः पुण्येनाध्ययनं कृतार्थमयि नौ जन्मापि चेत्यूचतुः ॥५६॥

प्राप्तो मे समयो निजार्थघटनोद्योगाय मद्वार्षिकस्वीकृत्यै बहवोऽभ्युपेयुरिह ते गेहं बुधास्तार्किकाः ।
ते वैयाकरणाश्च तन्त्रकुशलाः पृच्छामि तान्पाठने दैवानुग्रहतोऽत्र सिद्धलषितं के वा विदध्युर्बुधाः ॥
इत्यालोचयितुः कवेरुपगता द्वित्रेष्वहस्सु क्रमाद्विद्वांसस्सदनं कविस्स्वलषितं तेभ्योऽथ सोऽवेदयत् ।
केचिद्धीरुहृदोऽस्य पाठनविधौ नानाकलावेदिनोऽनन्यादृक्प्रतिभासमञ्चितधियो नैवावकाशं ददुः ॥४३॥
सोदर्यौ पुरिघल्लवंशवनधिप्रालेयभानू उभौ सुब्रह्मण्य इति स्म राम इति च व्युत्पन्नमेधाविनौ ।
तर्के व्याकरणे च पाटवजुषावाभाष्यमध्यापकौ तौ दृष्ट्वा विनयी न्यवेदयदयं कामं द्वयोः पाठने ॥
तौ सन्तुष्टहृदौ भवादृशमहामेधाविनेऽध्यापनं शास्त्राधीतिफलं भवेद्धि विदुषामावां तु कुर्वस्तथा ।
गद्वालात्पुनरागताविति समाकर्ण्य प्रबन्धावलिं बद्धां तेन विलक्षणप्रतिभयाऽनन्यादृशैः कल्पनैः ॥४५॥
रामो भागवतोपनामहरिशास्त्र्याख्यातिविख्यातिगाधीतव्याकृतितन्त्रपारगतिमान् ज्येष्ठोऽनुजोऽयं मम ।
विद्वद्वौतमगुम्मलूरुपपदश्रीसङ्गमेशाभिधाख्याताधीतकणादतन्त्रकुशलस्त्वां पाठयावोभयोः ॥४६॥
इत्याभाष्य बहूक्ततौ तु बहुधा दातुं परीक्षामुभौ श्रीगद्वालमहापुरीपरिषदं यातौ परीक्षाविधौ ।
उत्तीर्णौ निजतन्त्रयोर्बुधनुतौ तौ भ्रातरावुत्तमश्रेण्यां तत्र सुसत्कृतौ पुनरुपायातौ कवेस्सन्निधिम् ॥४७॥
पश्चाद्रामबुधस्समारभत तं सिद्धान्तकौमुद्यभिख्यातं व्याकृतितन्त्रगं प्रथमतः पाठ्यं प्रबन्धं मुदा ।
तद्व्याख्याननिबन्धगाढ्यविषयश्रेणीविशेषैस्समं पूर्वार्धं स समापिपत्प्रतिभया मासैस्त्रिभिस्त्वद्भुतम् ॥
सुब्रह्मण्यमनीष्यपीपठदिमं प्रारभ्य तं संग्रहं तर्काणां विवृतिप्रबन्धगविशिष्टांशैस्सहोद्बोधयन् ।
व्याकृत्यंशविचारगौरवकृतात्कालाधिकत्वात्त्रिभिर्मासैस्संग्रह एव पूर्तिमगमत्काणादतन्त्रे कवेः ॥४९॥
पित्राज्ञामनुसृत्य रामविबुधस्स्वग्रामगोऽभूत्तदाऽहोरात्रं स तु तर्कतन्त्रमपठत्तत्क्रोडचर्चान्वितम् ।
यावद्रामबुधागमं पुनरुपक्रम्योत्तरार्धं पठन्कौमुद्यां सविशेषचर्चमगमन्मासैस्त्रिभिः पूर्णताम् ॥५०॥
आहूतौ जनकेन तौ जनपदं स्वं पण्डितौ भ्रातरौ व्याख्याग्रन्थततिं निधाय कविराडभ्यन्तिके जग्मतुः ।
तान्ग्रन्थान्परिशील्य शेखरमुखान्व्याख्यां शरद्राड्भिख्यातां शाब्दिककौमुदीसुविवृतिं चक्रे नवैः कल्पनैः ॥
कालेऽस्मिन्श्वशुरो द्वितीयदुहिता मे पुष्पिणी ते स्नुषा सञ्जातेति विलिख्य विप्रमुखतो लेखां शुभां प्राहिणोत्
दृष्ट्वा तां स तु केशवो द्विजवरावभ्यर्च्य तौ मङ्गलद्रव्याण्यात्मजनैस्स्नुषार्थमुचितान्यानन्दतः प्रैषिषत् ॥
गर्भाधानकृते मुहूर्तममलं निर्णाय्य मौहूर्तिकैराहूयार्यगुरुद्वयं स्वजनतामादाय नेल्लूर्पुरीम् ।
गत्वा केशवराय आत्तकुतुकस्तस्मिन्मुहूर्ते शुभं तत्कार्यं प्रणिनाय वैभवयुतं विद्वत्समर्चादिभिः ॥५३॥
पश्चाद्बन्धुसुहृद्वृतो गुरुयुतस्तामादिलक्ष्मीं स्नुषामादायापि स केशवो निजगृहं त्वभ्याययौ मोदतः ।
रामारायबुधोऽथ रामविदुषे प्रादर्शयत्तां शरद्रात्रिं दीक्षितकौमुदीविलसनाविष्कारितामात्मना ॥५४॥
दृष्ट्वाऽत्यद्भुतकल्पनालिकलितां भावप्रकर्षोज्ज्वलां भाष्यार्थप्रमितां विचित्रविपरामर्शादिविद्योतिनीम् ।
आचार्योऽतिविसिष्मिये हृदि हयग्रीवोऽस्य वक्त्रादिमां लोकानुग्रहकृद्व्यभासयदनन्यादृग्विधानामिति ॥५५॥
सुब्रह्मण्यमनीष्यपि स्फुटतरं श्रुत्वा तुतोषाधिकं तौ सान्दीपनिवन्निमित्तगुरुतामाप्तौ कवीशान ते ।
कृष्णस्येव समस्ततन्त्रविदुषः पुम्भूतभाषात्मनः पुण्येनाध्ययनं कृतार्थमयि नौ जन्मापि चेत्यूचतुः ॥५६॥

भूयोऽद्वैतनिबन्धनैः पटुतरैरद्वैतसिद्ध्यादिभिस्साकं सम्परिशील्य शाङ्करमतं श्रुत्यर्थसंवादतः ।
गीताभाष्यरविप्रकाशकमहाव्याख्यां सुसङ्ख्यावतां चित्ताकर्षपटुं व्यधाच्छ्रुतिसुयुक्त्युद्भासितार्थाञ्चिताम् ॥
सेयं पण्डितमण्डलादरणसद्योग्या भवेद्वा न वेत्यंशं हस्तयमवैतुमत्र विदितं सत्तर्कवेदान्तयोः ।
श्रीमद्राजमहेन्द्रपत्तनगतख्यातादिभट्टान्वयोदीतेन्दुं किल राममूर्तिविबुधं व्याख्यायुतोऽगात्कविः ॥७३॥
नत्वाऽस्मै विनयेन देशिकवरायाश्राव्य'नासतो भावो विद्यत' आदिवद्वविवृतिष्वत्यन्तमासक्तितः ।
द्वैताद्यन्यमतार्थखण्डनविधिष्वद्वैतसंस्थापने तुष्टोऽतीव नवोसि शङ्करगुरुर्व्यासोऽपि वेत्यूचिवान् ॥७४॥
व्याख्येयं श्रुतियुक्तिभिर्विलसिताद्वैताद्यसद्ध्वान्तविध्वंसिन्यन्यमतासदर्थतमसां ग्रीष्मार्कभासासमा ।
ब्राह्मं धाम वयश्च बाल्यमहहाऽखण्डा च ते पाण्डिती शुश्रूषां च विना गुरोस्सुपटुना विद्यासु मुद्रापय॥७५॥
एवं तद्विबुधेन्द्रशंसनगिरश्श्रुत्वा परस्तात्कविस्तूर्णं स ग्रथयाञ्चकार विमलां वेदान्तमुक्तावलीम् ।
अद्वैते प्रचुरां प्रबन्धविततिं श्रीशङ्कराशङ्करश्रीमद्भाष्यविमर्शमुख्यमहितामन्याः कृतीश्चाकरोत् ॥७६॥
वैशिष्ट्येन शताधिकास्तु सुकृतीस्सर्वेषु तन्त्रेष्वयं रामारायमहाकविर्व्यरचयद्विद्वन्मनोरञ्जनीः ।
प्रौढा तन्त्रसरस्वती सुमधुरा वाणी च काव्यावलौ रम्या यस्य महाकवेरसदृशी बाभात्यहो! विभ्रमैः॥७७॥
पश्चाद्योगनिबन्धनानि विमृशन्पातञ्जलादीनि सत्पातूर्यन्वयजावकुभट्टविबुधाभ्यासे समभ्यस्तवान् ।
तत्तद्रेचकपूरकादिघटितैर्योगैर्धरोर्ध्वं वसन् चित्तं साधु निरुध्य चात्महृदये दध्यौ हयास्यं विभुम् ॥७८॥
श्रीवेदाद्रिनृसिंहपुण्यधरणिं गत्वा सुसिद्धां कविर्दारैरच्छावकराहचण्डिनरसिंहेनापि साकं बुधा ।
योगेनात्मनि संस्मरन् हयमुखं मन्त्रं जजापान्वहं दीक्षान्ते हवनादितः प्रमदयन् सिद्धोऽथ गेहं ययौ ॥
स्वस्थे तिष्ठति शिष्यपाठनपटुग्रन्थालिनिर्माणकैस्स्वीये वेश्मनि सत्कलौ नरसराट्पुर्यां वधाने शतैः ।
श्रीमत्तिर्पतिवेङ्कटेश्वरमहाकव्योर्विधेये बुधाः केचित्प्राप्य कविं त्विमं समलषन्क्लिष्टां समस्यां मुहुः ॥
न क्लिष्टा त्ववधानकाल इह भो! दातुं समस्योचिता तौ विद्वत्कविकुञ्जराविति न तत्क्लेशप्रदो गच्छत
एवं श्रीकविनोदिते पुनरिमे देया समस्या वराऽवश्यन्त्वित्यथ सत्कविं बलवदाकांक्षन्त यामस्तु न ॥
प्रत्याख्यानमनर्हमित्यथ स तामालोच्य रामो बुधः 'पश्यापश्ययुगं न पश्यति' समस्येयं प्रदेयेत्यदात् ।
नैतां साधुमवोचतुस्सदसि तौ विद्वत्कवी पश्यशब्दादेशो नहि केवलस्य तु दृशेरूचे सुधीर्वामनः ॥८२।
प्रत्यूचेऽथ स रामरायसुकविस्सूत्रेऽनुवृत्तिं पुनः कौमुद्यां नतु दीक्षितोऽनुमनुते तस्यानुवृत्तिं त्विह ।
श्रीहर्षादिधयाद्युदाहरणतो व्यक्तं तु वक्ति प्रमासिद्धं चेति ततो ममाऽभवदियं साध्वी समस्या बुधाः ॥
प्राचीनं मतमत्र साध्विति बुधाः केचिन्नवीनं मतं साध्वित्यन्यबुधा मतद्वयभिदा भिन्नं तु पक्षद्वयम् ।
साध्वेवेति विशो विवादपदगं साक्ष्यं यथा पण्डिताश्श्रीहर्षादिकविप्रयोगविततिः पुष्णाति नव्यं मतम् ॥
पश्यापश्यसमस्यया तदुभयोर्वादोऽथ वृद्धो मिथो ग्रन्थैरन्यनिरुक्तखण्डनपरैस्स्वस्वाग्रहादर्शकैः ।
गुञ्जागर्वविभञ्जनादिकृतिभिः प्रत्युक्तवान्दीक्षितोक्तार्थाध्वानुगतोऽत्र रामकविराट्प्राच्यं मतं खण्डयन् ॥
पश्चात्कश्चन कामराजकुलजः कोटीशशर्माऽऽगतो दैवाद्वैतमतप्रतिष्ठितिकृतावेशो नियोगिव्रजम् ।
उद्धर्तुं स्वमतेन सन्ततसमुद्योगी चरन्वैदिकान्निन्दन्नासुरभावगांश्च कथयन्नभ्यन्तिकं सत्कवेः ॥८६॥

दैवाद्वैतमतं नियोगिजनतोद्धृत्यै समास्थाप्य यश्शास्त्रार्थान् सुविरच्य वैदिकबुधाञ्जित्वाऽऽन्ध्रदेशेऽखिले ।
पाण्डित्यप्रतिभाञ्चितस्स्वयशसा शिष्टः कवे नन्दिराट्शैलेन्द्रैरिह दीक्षितस्य विजयं काव्यं कुरु त्वं क्षमः ॥
एवं तस्य गिरो निशम्य कविराडद्वैतभेदः कथं श्रुत्यन्तैर्न निरुच्यते बुध तदद्वैतं किलैकं त्वया ।
दैवं चासुरमुच्यते द्विविधमित्यत्र प्रमाणं वद त्वं चेच्छक्त इदं त्वनार्षमसदप्यस्थानवैराश्रयम् ॥८८॥
साध्वी ते सरणिर्न वैदिकगणद्वेषानुसन्धायिनी सर्वे ते च वयं च वैदिकमहामार्गानुगा वैदिकाः ।
प्राचीनास्तु नियोगिनो नृपपदेष्वास्थाय मन्त्र्यादयस्स्वीयं याजनमुख्यकर्म विजहुर्वृत्त्या तया तेऽलसाः ॥
भ्रातॄणां तु मिथोऽनुषक्तसुहृदां वैरं यथोत्पादयेत्कश्चित्कश्चलहस्त्वमर्थमनुसन्धायात्र कं चापि वा ।
वक्रं मार्गमुपाश्रयन्नुपनिषन्मार्गेऽमले त्वं पुनर्वैरोत्पादयसि वैदिकेषु सकलेष्वेतन्न मन्ये तु सत् ॥९०॥
श्रीमच्छङ्करदेशिकेन्द्रमुखवर्तिकं वापि नामानुषं कर्मादर्शयदत्र दीक्षितबुधो नैव श्रुतं क्वापि वा ।
तस्मादार्य न दीक्षितस्य विजयं ग्रथ्नामि काव्यात्मना किंतु त्वद्भुलसाष्टकमिह ग्रथ्नामि तत्स्वीकुरु ॥९१॥
नैतत्साधु नियोगिवैदिकविरोधोत्पादनं तत्कृते दैवाद्वैतमतप्रचारणमपि श्रौतावधमित्थं तव ।
इत्युक्त्वाष्टकमालमेव स दिशन्प्रास्थापयत्तं कविस्स्वग्रामाय कदापि सात्त्विकबुधा नासाधुमार्गानुगाः ॥
पश्चात् ज्ञातिकुटुम्बगाब्दिकविधेर्दत्तेन निर्वाहणे प्राप्ते धर्मविवाद एष सुकविः काशीबुधां निर्णयम् ।
सत्स्वीकारविधिप्रबन्धमुखतस्तं खण्डयन्धर्मविन्द् धर्मं शास्त्रगतं व्यतिष्ठिपदहो! सर्वत्र सत्पाण्डिती ॥९३॥
अद्वैतामृतदीपिकादिबहुलग्रन्थावलीनिर्मितौ कालं यापयतीह कश्चन बुधः प्रोवाच विद्वद्वरम् ।
नैते मुद्रणमन्तराऽत्र जगति प्राकाश्यमीयुः कवे तन्मुद्रापय वित्ततो निजनिबन्धानाचरार्थान्वितान् ॥९४॥
प्रत्यूचेऽथ कविर्न पूर्वकवयश्श्रीकालिदासादयो मुद्रायन्त्रमुपेत्य ते स्म विदधुर्ग्रन्थाननुपाकर्षकान् ।
ग्रन्था जीवयुताः प्रकाशपदवीं गच्छेयुरार्याद्दताः निर्जीवा यदि ते प्रकाशरहिता नश्येयुरेषा स्थितिः ॥
विक्रीयावनिमङ्ग मुद्रणदशामेषां न संसाधये यावज्जीवमिह प्रबन्धरचनां वेदान्तचिन्तावहाम् ।
नैवोत्सृज्य चरामि मुद्रणगतं धर्मं परेभ्यो दिशाम्यग्रे स्युर्धनिधार्मिकोत्तमबुधास्ते दीपयेयुस्त्विमान् ॥
इत्याभाष्य ततः कति स्ववसुना मुद्रापयामास चाद्वैतब्रह्मविचारतो गमयति स्वानेहसं संततम् ।
तद्देहं मधुमेहनामकरुजाऽजीर्णामयो नित्यशो बाधेते क्रमशस्स शुष्कतनुमानासीच्च रामः कविः ॥९७॥
वैद्या मानसिकं विचारमनिशं सन्त्यज्य विश्रान्तिमान् वर्तेथा यदि रोगमौषधवरैर्विध्वंसयामो वयम् ।
नोचेच्छक्नुम नैव रोगशमने विद्धीति प्रोचिरे नाहं ब्रह्मविचारवारणपटुः स्थूलं रुजा बाधताम् ॥९८॥
पश्चात्पादतलेऽल्पकाल उदितो राजव्रणस्सत्कवेरानन्दाब्दगतोर्जशुक्लनवमीतिथ्यां गतो ब्रह्मताम् ।
अष्टत्रिंशमिताब्दके तु वयसि श्रीशङ्कराचार्यतष्षड्वर्षाभ्यधिके नवोऽयमगमद्ब्रह्मात्मतां शङ्करः ॥९९॥
रामारायमहाकविर्हयमुखप्राप्ताखिलोद्यन्महाविद्यस्सार्धशतप्रबन्धवरनिर्माताऽतिपूतक्रियः ।
आसूर्येन्दुवनिस्थिरं स्वकृतिसन्तानं व्यवस्थाप्य सब्रह्मत्वं गतवानितोऽस्ति पुरुषः को नाम? धन्यात्मवान् ॥
दत्तस्वीकारकृत्ये पतिमृतिसमये शासनं प्राप्य जाया जग्राह ज्ञातिपुत्रं विधिवदथ सुतत्वेन नारायणाख्यम् ।
चक्रे तस्योपनायप्रभृतिविधिगणं पालयन्त्यार्षमार्गं ब्रह्मीभूतस्य भर्तुः कृतिविततिमहासन्ततिं चाप्यवन्ती ॥

पश्चात्कोटीशशर्मा स पुनरुपययौ तत्कृतिव्रातरक्षादीक्षां मुद्रापणाद्यैर्दधदिव तु नटंस्तत्प्रबन्धानशेषान् ।
वाग्भिस्साध्वीभिरार्यां सुकविवरवधूं तां समाधाय निन्ये स्वं धामासौ कृतीनां न किमपि विदधे रक्षणं संग्रहार्थी॥
विद्वान्वैद्यावतंसः प्रथितसुकविताव्रंशपाथोनिधीन्दुश्श्रीसुब्रह्मण्यशास्त्री निखिलबुधकलारक्षणात्तात्मदीक्षः ।
भैषज्यायै कदाचित्सुकविजनपदं प्राप्य पत्नीमपृच्छद्ग्रन्थप्रख्यापनार्थं निजरतिमतुलां साधु मुद्रापणेन ॥
भूरिद्रव्यव्ययार्ज्या भवति कृतिरियं श्रीमतां धार्मिकाणामौदार्येणेह साध्या घनयतनवतां स्याद्भवादृग्बुधानाम् ।
निन्ये कोटीशशर्मा कृतिविततिमितो नाकरोत्किञ्चनापिप्राज्ञा यूयं यतध्वंमम सुकविपतेः कीर्तिमुद्द्योतयध्वम्॥
श्रुत्वा वाक्यानि तस्या अहमिह न धनी वाग्धनं मे वितीर्य श्रीमत्सहातृवर्गे कुलसति सुयते जीवितं यावदास्ते ।
अद्यावध्यान्ध्रदेशे घनतरमतयस्सन्त्युदारा धनाढ्याः वन्ध्यो देशोपि नायं विबुधकृतिरतैस्साधयामीह कार्यम्॥
इत्युक्त्वा बद्धदीक्षः कृतिविततिसमुद्दीपने धाम गत्वा स्वं सुब्रह्मण्यशास्त्री पुरगतमवदत्साधुनारायणार्यम् ।
दाता धर्मी धनाढ्यस्स विपुलधनतोऽचीचकासत्कृती द्वे एकावंश्याञ्जनेयप्रभृतिरसविदो भूरिवित्तेन काश्चित्॥
एवं तद्रामरायाभिधविबुधकविप्रष्ठसद्ग्रन्थजालं श्रीसुब्रह्मण्यशास्त्री प्रथयति विबुधानन्दधन्यधन्यजीवी ।
अश्रान्तश्रान्तयत्नः कृतिविततिसमर्ज्यादिमुद्रापणादौ धन्या मुद्रापकास्ते स्वधनवितरणैस्सर्वसद्भोगभाजः ॥
बौद्धाद्याक्रान्तकर्मावनिभरतधरामण्डले केरले यः प्रादुर्भूतः पुरा दुर्मततिमिररविश्शङ्करस्स्वीयधाम्ना ।
सोऽयं स्वेनाधुना तत्समधिककुमतच्छित्तये वैष्णवेनाप्याविर्भूतोऽतिधाम्ना वयमिह मनुमो रामरायाख्ययेति॥
जीयाच्छ्रीरामरायो निजकृतिसुयशश्चन्द्रिकाभ्राजिताशो धन्यो यज्जन्मनान्ध्रस्तदुरुकृतिसमुद्दीपनेनापिभूयात्।
कीर्तिज्योत्स्नां तदीयां महितकृतिसुमुद्रापणेनात्मवित्तत्यागैराक्रामयेयुस्सकलशुभफलाधायिभिस्ते च धन्याः॥
धन्यास्मत्काव्यकन्या भवति सुमहिताखण्डपाण्डित्यशौण्डश्रीरामारायविद्वत्कविहयवदनोदन्तसद्वर्णनेन ।
धन्योऽन्वर्थोपनामा तदुरुकृतिसमुद्दीपनोपात्तदीक्षश्श्रीसुब्रह्मण्यशास्त्री सकलकृतिततिं भासयत्वान्ध्रदेशात् ॥
इति पुल्यकल्यकुल्यो विद्वत्कविसार्वभौमपदभाग्यः । अभिनवपण्डितराजो विद्यावाचस्पतिश्च विबुधकविरत्नम्॥
शाब्दिककेसर्युदितो धर्मोपन्यासकेसरीति बुधैः । कुलपतिधर्मस्थापककविरत्नमुखैः पदैश्च संसत्सु ॥२॥
स उमामहेश्वरसुधीश्श्रीरामारायविबुधकविराजः । अष्टोत्तरशतपद्यैरवर्णयज्जीवितोदन्तम् ॥३॥

श्रीहयग्रीवार्पितोस्तु ।

---

इति श्रीमदान्ध्रधरणीमणिभूषणायमान श्रीकोनसीममण्डलमण्डनमुङ्गण्डमहाग्रहारवास्तव्य
अत्रिगोत्रपवित्र पुल्योपनामकोमामहेश्वरशास्त्रिकृतिषु बेल्लङ्कोण्ड रामराय
महाकविजीवितोदन्तवर्णकं खण्डकाव्यं सम्पूर्णम् ।
श्रीनन्दनवर्षाश्वयुज शुक्लदशमीभानुवासरः ।
**पुल्य उमामहेश्वरशास्त्री ।**

---

॥ श्री गुरुभ्यो नमः हरिः ओम् ॥

॥ श्री हयग्रीवाय नमः ॥

## ॥ बन्धगर्भस्थश्लोकाः ॥

श्लो ॥ श्रीयोगीन्द्रा अनिशं तन्वत आय स्तवैर्नमो मृष्टम् ।
यस्मै न ययुः काष्ठां तां यस्यैते परिब्रढिमकीर्त्योः ॥ १

बन्धनिबन्धितश्लोकार्थोऽत्र लिख्यते:—

श्रीयोगीन्द्राः श्रीभगवज्ज्ञानसम्पत्तिर्वा ॥ 'प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः । प्राप्त्युपायः फलं प्राप्तेस्तथा प्राप्तेः विरोधि च ॥ वदन्ति सकला वेदास्सेतिहासपुराणकाः । मुनयश्च महात्मानो वेदवेदान्तपारगाः' ॥ इत्युक्तार्थपञ्चकज्ञानसम्पत्तिर्वा एषामिति श्रीमन्तो योगीन्द्राः योगिश्रेष्ठाः श्रीयोगीन्द्राः अनिशं सर्वदा । यस्मै आय अकारवाच्याय स्तवैः स्तोत्रैः सह नमः । नम इति वचनं मृष्टं यथा तथा तन्वते आचरन्ति । यद्यप्यत्र 'अकारो ब्रह्मविष्णवीशे'त्यादि रत्नमालोक्तरीत्या नानादेववाचकत्वमकारस्य विद्यते । तथापि 'अकारोवै सर्वा वा'गिति समस्तशब्दमूलत्वात् । अकारस्य स्वभावत इति च सर्ववाचकमूलभूतेनाकारेण ॥ 'यतो वा इमानि भूतानि जायन्ते । नारायणाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायते' । इत्यादि सर्ववाच्यकारणभूत नारायण एव 'समस्तवाच्यमूलत्वात् ब्रह्मणोऽपि स्वभावतः । वाच्यवाचकसम्बन्धात् तयोरर्थात्प्रतीयते' इत्यादिना प्रतिपाद्यते । 'अकारार्थो विष्णुः अकारो विष्णुवाचकः अक्षराणामकारोऽस्मि' इति च 'भगवतो नारायणस्य प्रथमाभिधानं' इत्याद्युक्तरीत्या च अकारस्य नारायणपरत्वमेव मुख्यमिति । तदितरवाचकत्वं गौणमिति सर्वैः सात्त्विकशास्त्रज्ञैः अभ्युपगम्यते । अत्रच 'अव-रक्षणे' इत्यस्माद्धातोः 'अन्येभ्योऽपि दृश्यत' इति क्विप्प्रत्यये 'लोपो व्योर्वली'ति धातुवकारलोपे कृते 'वेरपृक्तस्ये'ति प्रत्ययवकारे च लुप्ते अ इति व्यवतिष्ठते । तस्मादकारप्रतिपादित सर्वनिरुपाधिकरक्षकत्वं विष्णोरेवेति नात्र शङ्कातङ्कावकाशः । कृदन्तत्वादस्य । 'कृत्तद्धितसमासाश्चे'ति प्रातिपदिक संज्ञायां सम्प्रदानार्थक चतुर्थ्येकवचने कृते आयेति सिध्यति । एते योगीन्द्राः यस्य परब्रह्मणः श्रीनिवासस्य परिब्रढिमकीर्त्योः परिब्रढिमा परिबृढत्वं प्राभवः । कीर्तिः यशः । एतयोः काष्ठामवधिं न ययुः न प्राप्तवन्तः 'यतोवाचो निवर्तन्त' इत्यादिना तस्य महामहिम्नः निरवधिकत्वात् वाचामगोचरत्वं मनसोऽप्यगोचरत्वं इति भावः ॥ १

श्लो ॥ यो अब्जस्थो नागो ब्रह्मगमूर्तिं त्वजिह्मगति वृण्वन् ।

यं च प्राप ब्रह्मा प्राणो ध्रुवतां धृता ब्जम् ॥ २

यो अब्जस्थः यः नारायणः अब्जः सूर्यः तस्मिन् तिष्ठतीति अब्जस्थः 'ध्येयस्सदा सवितृमण्डलमध्यवर्ती नारायण' इति 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत' इति च उपासकानुग्रहार्थं सूर्यमण्डलमध्यवर्तिस्वरूप महामहिमविशिष्टत्वेन पूर्वोक्तनिरुपाधिकसर्वरक्षक एव उपास्य इति च प्रतिपन्नम् प्रज्ञा प्राणः प्रज्ञा ज्ञानमेव प्राणो बलः यस्य स तथोक्तः 'देहान्तरानिले प्राणो जीवात्मपरमात्मनोः । आयुरिन्द्रिय सत्वे' ष्विति रत्नमाला । नागः श्रीगजेन्द्रः ब्रह्मगमूर्तिं ब्रह्म वेदं गच्छतीति ब्रह्मगा मूर्तिः यस्य तं । 'परमात्मा तपो वेदो ब्रह्म ब्रह्माब्जजे द्विजे' इत्युक्तत्वात् ब्रह्मशब्दस्यात्र वेदपरत्वं । तथाच 'वेदैश्च सर्वैरहमेव वेद्य' इत्याद्युक्तसकलवेदवेदान्तप्रतिपाद्यस्वरूप इति भावः । तं तथा धृताब्जं अप्सु भवं रत्नमब्जं श्रीकौस्तुभमाणिक्यमित्यर्थः । धृतमब्जं श्रीकौस्तुभमाणिक्यं येन तमिति विग्रहः । तथाच वक्षःपीठपरिष्करणकौस्तुभमहामणिप्रभारिंछोली विराजमानमिति भावः । एतादृशं यं भगवन्तं श्रियः पतिं अजिह्मगति अकुटिलमनोवृत्ति यथा तथा वृण्वन् शरणवरणं कुर्वन् ध्रुवतां स्थिरत्वं प्राप अलभत ॥ २

श्लो ॥ कञ्जातस्थो वेद्यं विपुलं ब्रह्मा यतोऽदराद्वेद ।

स हरीन्दुलोचनोऽसौ दुःखहरो भास्समाजसीमाभूः ॥ ३

कञ्जात इत्यादि ॥ कञ्जातस्थः स्वोत्पत्तिहेतुभूतभगवन्नारायणनाभिकमलमध्यवर्तीसन् . ब्रह्मा चतुर्मुखः अदरात् भयप्रतिभटात्-यतः भगवतः श्रीनिवासात् विपुलं विस्तृतं वेद्यं वेदितव्यं सकलमप्यर्थजातं वेद ज्ञातवान् । अनेन चतुर्मुखाय सकलवेदार्थप्रदायक इति भगवतः प्रथमाचार्यत्वं सर्वमतसम्मतम् । स इति ॥ सः पूर्वोक्तविशेषणविशिष्टः अपिच हरीन्दुलोचनः हरिस्सूर्यः इन्दुश्चन्द्रः लोचने अक्षिणी यस्य सः 'अग्निर्मूर्धाचक्षुषीचन्द्रसूर्ये' इति श्रुत्युक्तसोमसूर्यनयन इति भावः । दुःखहरः सकलसंसारदुःखोन्मूलकः भास्समाज सीमाभूः भासां तेजसां समाजस्समूहः तस्य सीमा भूः अवधिरित्यर्थः ॥ 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इत्युक्तसमस्तवस्तुभाननिदानतेजोराजिरिति भावः ॥ ३

श्लो ॥ श्रीमानतुलविजयकृतिरानतसद्वारदेवभूमिस्त्वाम् ।

परमाकृतिरयमुत्तमनित्यप्राप्यो नितान्तशुचिरव्यात् ॥ ४

श्रीमान्- श्रीर्लक्ष्मीराश्रितघटकत्वधर्मविशिष्टा अस्यास्तीति श्रीमान् 'नित्ययोगे मतुबि'ति सर्वदेशसर्वकाल सर्वावस्थास्वपि अनपायिनीभूतलक्ष्मीविशिष्ट इति भावः ।' राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' इत्यादि प्रतिपादितत्वात् । एतेन आश्रितकार्यापादकत्वस्य शैघ्र्यं निश्चयत्वं च स्फुटीक्रियते ।

अतुलविजयकृतिः—अतुला विजयकृतिः यस्येति विग्रहः निस्समानविजयविधावेत्यर्थः। सर्वोत्तमविजयप्रदानशील इति भावः—

आनतेत्यादि, आसमन्तान्नता नम्रा ये सन्तः ये सज्जना भागवताः तेषां वारस्य समूहस्य देवभूमिः कल्पवृक्ष इत्यर्थः। आश्रितसकलफलप्रदानदीक्षाबद्धकङ्कण इति भावः। 'एकैकफललाभाय सर्वलाभाय केशवः' इति सर्वार्थप्रदत्वस्य सम्प्रतिपन्नत्वात्।

परमेति। परमा उत्कृष्टा आकृतिः दिव्यमङ्गळविग्रहः यस्य सः। 'न तस्य प्राकृता मूर्तिः इच्छागृहीताभिमतोरुदेहः'। इत्यादिना प्रतिपालितानन्यसाधारणदिव्यभूषणदिव्यायुधादिविशिष्ट-विग्रहोपेत इति भावः। उत्तमनित्यप्राप्यः—उत्तमाः—अनन्यार्हभगवदेकभोग्याः 'ब्रह्माणं शितिकण्ठञ्च याश्चान्याः देवताः स्मृताः। प्रतिबुद्धा न सेवन्त' इत्यादिना देवतान्तरपरित्यागपूर्वक भगवद्भजनशीला ये पुण्या भागवतास्तेषां नित्यं निरन्तरं प्राप्यः—प्राप्तुं योग्यः। 'पिता च रक्षकश्शेषी भर्ता ज्ञेयो रमापतिः। माता पिता भ्राता सुहृद्गतिर्नारायण' इत्याद्युक्तनिरुपाधिकसकलविधबन्धुत्वेन प्राप्तुं योग्यो शक्यश्चेति भावः।

नितान्तशुचिः—नितान्तमत्यन्तं शुचिः हेयप्रतिभटत्वकल्याणगुणत्वरूपोभयलिङ्ग-विशिष्टः अयं एतादृग्विधः भगवान् नारायणः त्वां अव्यात् पायादित्यन्वयः॥ ४

श्री श्री श्री श्री श्री

हयग्रीवो जीयात्॥

---

Printed at the 'Vavilla' Press, Madras.—1952

# श्रीवेल्लंकोण्ड रामरायविद्वत्कविः ।

श्लो॥ आदिलक्ष्मीहृदम्भोजभृङ्गस्सङ्गविवर्जितः ।
रामो जयतु वेदान्तदुग्धसागरचन्द्रमाः ॥१॥

योगिध्येयसुधामयोक्तिकलनादात्मानुसम्भावना-
दौदार्यादघहारिकेशवपदध्यानादमेयौजसः ।
मोहत्रायतनूभवो नुतगुणग्रामस्स रामो भृशं
स्वोपज्ञप्रथितस्सुरेन्द्रविभवः कीर्त्याऽनिशं राजते ॥२॥

विद्यार्थिकल्पतरुरेष सुधीन्द्रमौलिः काव्यामृतैकरसिकोऽखिलशास्त्रवेत्ता ।
वेदान्तदुग्धजलधेस्तरणोरुपोतः ख्यातो गुणैर्गुरुतमैः कविताभिरामः ॥३॥

कालिदासकविताचमत्कृतिं माघमंजुलपदार्थगुम्भनम् ।
बाणभट्टरचनाविदग्धतां रामरायकवितासु पश्यत ॥४॥

शाब्दे शेषनिभस्सुतर्कनिवहे काणाद एव स्वयं
मीमांसापरजैमिनिश्श्रुतिशिरश्शास्त्रे गुरुश्शङ्करः ।
साङ्ख्ये कापिल एव काव्यफणितौ मामल्लदेवीसुत-
श्श्रीरामाख्यकविर्बृहस्पतिनिभो जेजीयतां कीर्तिभिः ॥५॥

सान्द्रानन्दपयोधिमग्नहृदयस्सद्ब्रह्मविद्याकर-
स्सर्वं ब्रह्मधिया विभावितजगत्तत्त्वार्थविद्देशिकः ।
श्रीनाथस्थिरभक्तिवर्धितमहाविद्यार्थविद्योतक-
श्श्रीरामाख्यकविश्चकास्ति सुगुणग्रामैरमेयैर्भृशम् ॥६॥

सीतारामबुधेन्द्रदत्तविमलज्ञानेन काव्याम्बुधिं
तीर्त्वाध्यैष्ट पतञ्जलीयमखिलं रामाद्गुरोरञ्जसा ।
सुब्रह्मण्यसुधीन्द्रतोऽधिगतवान्काणादशास्त्रं मुदा
नो जानामि हयाननात्परगुरुं वेदान्तविद्याप्तये ॥७॥

कल्पप्रसूनमकरन्दरसोल्लसत्सत्काव्यामृतैर्विबुधसङ्घमतोषयद्यः ।
आनन्दतुन्दिलमनास्सततं सुधीन्द्रं तं रामरायकविमात्मविदं नमामि ॥८॥

हयग्रीवकृपाम्बोधितरङ्गा इव राजिताः ।
चतुर्दशकला यस्मिन् तस्मै कुर्मो नमश्शतम् ॥९॥

श्रीशङ्कराशङ्करभाष्ययोर्यत् व्यासस्य सिद्धान्तसुसम्मतं तत् ।
प्रदर्शितं ग्रन्थकृतात्र सम्यग्विमृष्टमन्यद्विदुषां हितार्थम् ॥१०॥

नरसराट्पुरी ।

इत्थं ग्रन्थसम्पादकः
॥ वेङ्कटसुब्रह्मण्यशास्त्री ।



श्री हयग्रीवाय नमः।

श्रीवल्लभासमेत श्रीमहागणाधिपतये नमः।

# श्रीशङ्कराशङ्करभाष्यविमर्शः॥



ॐ तत्सद्ब्रह्मणे नमः।

**'अथातो ब्रह्मजिज्ञा'** सेत्यादिशारीरकमीमांसाशास्त्रस्य बुभुत्सुभिर्मुमुक्षुभिः किं शङ्करभाष्यमुपादेयम्, उत रामानुजभाष्यं, यद्वा तदुभयमथवा नोभयम्? तत्र 'शङ्करश्शङ्करस्साक्षा'दिति वचनाच्छङ्करावतारशङ्करभाष्यमेवोपादेयमित्य**द्वैतिनः**। 'स जीयाच्छ्रीरामानुजमुनिवरात्मा फणिपति'रिति वचनाच्छेषावताररामानुजभाष्यमेवोपादेयमिति **विशिष्टाद्वैतिनः**। एकत्राऽविद्यमानानां विशेषाणामन्यत्र सत्त्वात्तदुभयमप्युपादेयमेवेति **मध्यस्थाः**। परस्परविरोधान्नोभयमप्युपादेयमिति **नवनागरिकाश्च वदन्ति**। **अत्र ब्रूमः**—'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति ब्रह्मात्मसाक्षात्काराय श्रवणादीनि विहितानि श्रुत्यैव। तत्र श्रवणं नाम वेदान्तानामद्वितीये ब्रह्मणि तात्पर्यनिर्णयानुकूलो व्यापारः, न तु श्रवणमात्रम्। अन्यथा 'स्वाध्यायोध्येतव्य' इत्यनेनैव वेदान्तश्रवणपठनयोर्विहितत्वेन पुनर्विधिवैयर्थ्यात्, नच सद्वितीयमेव ब्रह्मेति वाच्यं, 'एकमेवाद्वितीयं ब्रह्मे'ति श्रुत्या कण्ठत एवोक्तत्वात्। तत्र निर्णीतेऽर्थे असम्भावनाविपरीतभावनयोर्निवृत्तये मनननिदिध्यासनयोर्विधानम्। स च तात्पर्यनिर्णयः प्रकृतमीमांसाशास्त्रवशादेव भवितव्यः। उपनिषत्कुसुमग्रथनार्थत्वात्सूत्राणाम्—तस्य च शास्त्रस्यार्थो भाष्यं विना दुर्ज्ञेय इति तावदुपादेयमेव भाष्ययोरन्यतरत्। नच द्वयमप्युपादेयमिति वाच्यम्। परस्परविरोधेन प्रामाणिकस्यैकस्यैवोपादेयत्वात्। नचोभयं प्रामाणिकमेवेति वाच्यम्। वस्तुनि विकल्पानुपपत्तेरेकतरस्य प्रामाणिकत्वे सत्यन्यतरस्यावश्यमप्रामाणिकत्वेन भाव्यत्वात्— तर्हि कतरत्प्रामाणिकमितिचेत्— **रामानुजभाष्यमेव प्रामाणिकम्**, वृत्तिकारमतानुयायित्वाद्वृत्तिकारस्य च प्राचीनत्वादिति—**पूर्वपक्षः**। **मैवम्**—यदि वृत्तिकारमतं प्रामाणिकं स्यात्तर्हि तदनुयायि रामानुजभाष्यं प्रामाणिकं भवेन्नहि तदेव सिद्धम्। न हि प्राचीनत्वं प्रामाणिकत्वप्रयोजकम्। प्राचीनमपि वृत्ति-

कारमतं नवीनेन महाभाष्यकारपतञ्जलिमतेन किं नाप्रामाणिकं कृतम्? प्राचीनमपि कापिलं साङ्ख्यमतं किं नवीनव्यासमतेन न बाधितम्? किं मेघसन्देशादिकाव्यानां प्राचीनान्यपि नाथव्याख्यानादीनि नवीनैरपि मल्लिनाथव्याख्यानादिभिर्न पराकृतानि? किं प्राचीनमपि पूर्वपक्षं नवीन उत्तरपक्षो न वारयति? किञ्च 'तदादित्वे नूतनं सर्वमायत्यां च पुरातन'मिति न्यायेन वृत्तिकारोपि स्वकाले नवीन एव—शङ्करोपीदानीं प्राचीन एव तस्माद्भ्रमप्रमादादिदूषितपुंविशेषत्वाद्वृत्तिकारोऽनुपादेयवाक्य एव। नच शङ्करोपि तादृश एवेति वाच्यम्, शङ्करस्य कृष्णस्येव परमेश्वरत्वेन ग्राह्यवाक्यत्वात्। नच रामानुजोपि परमेश्वर एवेति वाच्यम्, तस्य शेषांशत्वेन जीवत्वात्। शेषो हि जीवत्वेन सम्प्रतिपन्नः। नच शङ्करो यस्यांश इति त्वयोच्यते स एव जीव इति स्थिते किं पुनश्शङ्कर इति वाच्यम्। ब्रह्मविष्णुरुद्राणां त्रयाणामेकेश्वरत्वश्रवणात्— 'अहं ब्रह्माच शर्वश्च जगतः कारणं पर'मिति स्मरणाच्च, एकस्यैव मायिन ईश्वरस्य स्वोपाधिमायानिष्ठसत्त्वादिगुणत्रयभेदेन विष्ण्वादिनामधारित्वप्रसिद्धेश्च ॥

**नन्वेवं** जीववाक्यानामग्राह्यत्वे स्मृतयो प्रमाणं न स्युरिति चेन्**मैवम्**—स्मृतिकर्तॄणां जीवत्वेपि स्मृतीनां वेदमूलत्वेन प्रामाण्यात्। न हि स्वतः प्रमाणं स्मृतयः। वेदस्तु अपौरुषेयतया भ्रमप्रमादादिपुंदोषाऽग्रस्तत्वेन स्वतः प्रमाणम्। एवं भगवतश्श्रीकृष्णादेरपि वाक्यजातम्। **यद्वा**—वेद एक एवानादिःस्वतःप्रमाणम्; भगवद्गीतादिकं सर्वं तु वेदमूलकतयैव—**प्रमाणम्**। अत एव भगवद्गीतादीनां स्मृतित्वेन व्यवहारः। **एवं**—स्मृतिप्रामाण्यस्य श्रुतिमूलकत्वादेव प्रत्यक्षश्रुतिविरोधे स्मृतिर्न प्रमाणमिति विरोधाधिकरणे समर्थितं **जैमिनिना**। **एतेन**—मूलभूतायाश्श्रुतेरनुपलम्भेपि प्रतिकूलायाश्श्रुतेरनुपलम्भमात्रादेव स्मृतेः प्रामाण्यम्। कासांचिच्छ्रुतीनामुत्सन्नत्वादिति—**सिद्धम्**। **तथाच**—वृत्तिकारमतस्योपनिषद्विरुद्धार्थप्रतिपादकत्वेनाप्रमाणत्वात्तदनुयायि रामानुजभाष्यमप्यप्रमाणत्वेना**नुपादेयमेव**—शङ्करभाष्यस्य वेदान्तार्थप्रतिपादकत्वेन सप्रमाणत्वादुपादेयत्वमेवेति—**सिद्धान्तः**। मया चात्र येषु येषु स्थलेषु रामानुजभाष्यस्य वेदान्तविरोधः, शङ्करभाष्यस्य च तदविरोधः तदुभयं सम्यग्विविच्य **प्रदर्श्यते**—

## —ः मध्वरामानुजयोः कलिराजामात्यकामक्रोधांशत्वनिरूपणम् ः—

**न च** वेदविरुद्धमपि रामानुजभाष्यं पाञ्चरात्रागमाविरुद्धत्वाद्ग्राह्यमिति—**वाच्यम्**। तस्यापि वेदविरुद्धत्वेनाप्रमाणत्वात्। **नच** शेषस्य भागवतसम्प्रदायकर्तृत्वेन भगवत्तत्त्वविदग्रेसरत्वात्तदंशरामानुजभाष्यं तत्त्वबुभुत्सुभिः कुतो न ग्राह्यमिति वाच्यम्। यदि रामानुजश्शेषांशस्यात्तर्हि वेदान्ताविरुद्धमेव सूत्रार्थं ब्रूयात्, नतु शेषांशः, परन्तु कलिराजामात्यक्रोधांश एव। **तथाहि**—स्कान्दे- केदारखण्डे- एकषष्टितमाध्याये- युगधर्मप्रस्तावे गरुडं प्रति भगवता कलिधर्मो निरूपितः॥

श्लो॥ "कलौ युगे प्रवृत्ते तु कलिः पापाधिनायकः। स्वशक्त्या सकलं धर्मं निर्मूलयितुमुद्यतः॥
नानारूपैः प्रयत्नैश्च यदा धर्मो न नाशितः। तदा कलिर्भृशं क्रुद्धस्समाहूय स्वमन्त्रिणः॥
कामं क्रोधं मदं चैव लोभं मोहं च मत्सरम्। षडेतान्स्वामिकार्यार्थान्कुपितः कलिरब्रवीत्॥

भवन्तश्शक्तिसम्पन्ना धर्मनाशैकहेतवः । उपेक्षध्वे कथं धर्ममनिर्मूल्य वृथायुधाः ॥
एवं च कलिनादिष्टाः प्रत्यूचुः कलिपूरुषम् ।

**कामः**—शृणु स्वामिन् प्रवक्ष्यामि त्वया दिष्टः पुराह्यहम् । अक्षोभयं त्रिभुवनं सदेवऋषिमानवम् ॥
यदा पलायितो धर्मो मद्भीत्या भुवि सत्वरम् । तदा चोपनिषद्विद्या साङ्गवेदचतुष्टयी ॥
तत्र वृत्ता ब्रह्मविद्या ब्रह्माद्वैतपरायणा । सा हि सर्वप्रपञ्चस्य मृषात्वं भाषते सदा ॥
ब्रह्मैव सत्यरूपं तत्प्रपञ्चस्तु मृषात्मकः । तस्माद्यतेत मतिमान् ब्रह्मैक्यावाप्तये सदा ॥
तत्फलं ज्ञानसाध्यं स्याज्ज्ञानं धर्मैकसाधनम् । धर्मसंग्रहयुक्तानां मुक्तिः करगता नृणाम् ॥
इति साङ्गा त्रयीविद्या बोधयत्यनिशं नृणाम् । ततोस्माभिर्महायत्नो धर्मनाशकृते कृतः ॥
व्यर्थो भवति विप्रेषु वेदैः प्रतिहतो भृशम् । वेदमार्गविनाशाय यत्नं कुरु महामते ॥

**क्रोधादयः**—सम्यगाह महाराज! कामोयं कलिनायक । यावद्वेदोदितो धर्मो यावद्वेदः प्रवर्तते ॥
यावच्चोपनिषद्विद्या यावदद्वैतभाषणम् । तावत्काममदादीनामस्माकं का कथा भुवि ॥
तस्माद्वेदाध्वविध्वंसे यत्नं कुरु महामते! ।

**कलिः**—आकर्णयध्वमखिलाः प्रतिज्ञां मम मन्त्रिणः । निर्मूलयामि सहसा वेदानस्मद्विरोधिनः ॥
उत्पाद्य मोहशास्त्राणि नानारूपाणि भूतले । वेषैर्भाषाप्रभेदैश्च पुण्ड्रैर्मुद्राभिरेव च ॥
मनोहरैर्मृषाधर्मैर्वञ्चयिष्यामि भूसुरान् । नानाभाषाप्रभेदैश्च ध्वंसयिष्यामि वै श्रुतीः ॥
इत्थं कलिःप्रतिज्ञाय चकार विविधागमान् । प्रथमं विष्णुपाषण्डं शिवपाषण्डकं ततः ॥
जैनशास्त्रं ततः कृत्वा तौरुष्कमकरोत्ततः । शाक्तं च पञ्चमं कृत्वा कामादीनादिदेश ह ।
पञ्चानामागमानां च यूयं भूमौ प्रवर्तकाः । निवर्तयध्वं वेदेभ्यस्स्वशक्त्या सर्वभूसुरान् ॥
विनाशयत धर्मान्वै श्रुतिस्मृत्युदितान्भुवि । कामक्रोधौ युवां शास्त्रं विष्णुपाषण्डनामकम् ॥
द्विधा व्याकुरुतं भूमौ भाषाद्वयपरिग्रहात् । द्विजयोनौ जनिं प्राप्य शङ्खचक्रादिलांछनैः ॥
हरिद्राचूर्णरेखाभिः पीतश्वेतमृदादिभिः । पुण्ड्रैर्बहुविधैश्चापि प्रतार्य निखिलं जगत् ॥
ब्राह्मणान् क्षत्रियान्वैश्यान् शूद्रांस्तदितरानपि । मन्त्रौषधप्रयोगैश्च भ्रंशयित्वा स्वशक्तितः ॥
विनष्टं कुरुतं धर्मं श्रुतिस्मृत्युदितं युवाम् । एवं सन्दिश्य कलिराट् कामक्रोधौ स्वमन्त्रिणौ ॥
लोभं नियोजयामास पाषण्डे शैवनामके । तौरुष्के मदमादिश्य शाक्ते तं मत्सरं तथा ॥
जैनशास्त्रे तथा लोभं मेने स्वं च कृतार्थवत् । कामक्रोधादयस्सर्वे गृहीत्वा तस्य शासनम् ॥
अधीत्य तानि शास्त्राणि त्यक्ष्यन्ति च जनाश्श्रुतीः ।

**श्रीभगवान्**—कामस्तु द्राविडे देशे वर्धमानो महाद्युतिः । कलिपूरुषसन्देशाद्विष्णुपाषण्डनामकम् ॥
व्याख्यास्यति दुरात्मासौ मोहयित्वा जनान्भृशम् । भंक्त्वा सूत्राणि सर्वाणि ब्रह्माद्वैतपराणि च ॥
श्रुतिस्मृतीस्तथा भंक्त्वा द्वैते संस्थापयिष्यति । कारयिष्यति पुण्ड्राणि द्विजाद्यैश्श्वेतमृत्स्नया ॥
तप्तलोहैर्द्विजातीनां दहिष्यति कलेवरान् । त्याजयिष्यति कर्माणि वैदिकानि दुरात्मवान् ।

भाषाकृतप्रबन्धानि पाठयिष्यति सर्वश. । अभेदवादिनस्साधून् दूषयिष्यति दुर्मतिः ॥
क्रोधः कर्णाटदेशीयः कामशास्त्रं समीक्ष्य च । स्वयं व्याख्यास्यते पुत्र तद्विरुद्धमते स्थितः ॥
तत्त्ववादसमाख्यां च कृत्वा तस्मिन्निजागमे । श्रुतिस्मृतिपुराणानि भञ्जयिष्यति सर्वशः ॥
स्वयं करिष्यते धीरः पुराणानि श्रुतिस्मृतीः । अष्टादशपुराणेषु स्मृतिष्वष्टादशस्वपि ॥
अद्वैतनिरतं सर्वं वाक्यमुत्पाटयिष्यति । कारयिष्यति पुण्ड्राणि वेणुपत्राकृतीनि च ॥
स्वकल्पितपुराणानि ख्यापयिष्यति भूतले । तत्त्ववादमते स्थित्वा केचिद्ब्राह्मणबान्धवाः ॥
दाहयिष्यन्ति गात्राणि तप्तलोहैर्द्विजाधमान् । दग्धदेहाश्च ते सर्वे त्यक्तवैदिकसत्क्रियाः ॥
ब्राह्मणानेव निन्दन्तश्श्राद्धयज्ञान्महारुषः । दुरात्मानो दुराचाराः क्रिमिकूपे भयङ्करे ॥
पतिष्यन्ति न सन्देहो भोक्ष्यन्तेपि च यातनाः" । इति ॥

**एतेन** कलिराजामात्यकामावतारमध्वाचार्यकृतं द्वैतभाष्यमप्यनुपादेयम्—**इति सिद्धम्** ॥

## —ः पूर्वोत्तरमीमांसयोर्भेदाभेदविचारः ः—

**अथेदं** वेदान्तशास्त्रं किं धर्मशास्त्रात्पृथक्शास्त्रं, यद्वा उभयमपि मिलित्वैकं शास्त्रमिति—**संशयः**। पूर्वोत्तरमीमांसाभेदभिन्नं काण्डद्वयात्मकवेदगोचरमेकमेव मीमांसाशास्त्रम् ॥ श्लो॥ "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्याह्येताश्चतुर्दश॥" इति स्मरणादिति—**रामानुजः**। **मैवम्**—अधिकारिविषयप्रयोजनभेदेन शास्त्रभेदस्यावश्यम्भावात् । तथाहि—'अथातो धर्मजिज्ञा'सेत्यारब्धस्य जैमिनीयस्य पूर्वमीमांसाख्यस्य धर्मशास्त्रस्य यज्ञादिकर्मचिकीर्षुस्स्वर्गादिफलकामी अधिकारी, ज्योतिष्टोमादिः कार्यभूतो धर्मो विषयः, कर्तव्यताज्ञानम् कर्मकरणद्वारा स्वर्गादिर्वा फलम् , 'अथातो ब्रह्मजिज्ञासे'त्यारब्धस्य वैयासिकस्योत्तरमीमांसाख्यस्य वेदान्तशास्त्रस्य शमादिसाधनचतुष्टयसम्पन्नः मोक्षकामित्वेन निष्कामोधिकारी । अकार्यं सिद्धं ब्रह्म विषयः, ब्रह्मज्ञानं मोक्षो वा फलमिति कृत्वा साध्यधर्मप्रतिपादकात्साध्यक्षयिष्णुफलकात्सकामगृहस्थाधिकारिकाच्च पूर्वमीमांसाशास्त्रात्सिद्धब्रह्मप्रतिपादकं सिद्धनित्यमोक्षफलकं निष्कामसन्यास्यधिकारिकं चोत्तरमीमांसाशास्त्रं—**पृथग्भूतमेव**। **यदि तु** मीमांसात्वेनैकमेव शास्त्रमित्युच्यते तर्हि—अङ्गत्वेन षण्णामप्यङ्गानामेकशास्त्रत्वमेव स्यात् । **किं बहुना**-- संस्कृतभाषात्मकत्वेनाष्टादशविद्यानामप्येकविद्यात्वमेव स्यात् । नचैवं भिन्नयोरेनयोः कथं पूर्वोत्तरत्वमिति वाच्यम्—जैमिनिना पूर्वं धर्मशास्त्रस्य कृतत्वाद्व्यासेन पश्चाच्छारीरकमीमांसायाः कृतत्वाच्चेति । यद्वा-- वेदपूर्वभागमीमांसाया धर्मशास्त्रे कृतत्वात्तस्य पूर्वमीमांसात्वेन व्यवहारः । वेदोत्तरभागमीमांसाया वेदान्तशास्त्रे कृतत्वात्तस्योत्तरमीमांसात्वेन व्यवहारः । नचैवम्—स्वमीमांस्ययोर्वेदभागयोरेकवेदत्वेन मीमांसयोरप्येकत्वमिति—वाच्यम् । तथात्वे शिक्षाव्याकरणादीनामपि स्वविषयवेदैक्येनैकत्वमेव स्यादिति । तस्माद्वैदिकाच्छब्दानुशासनादिव वैदिकात्कर्मविचाराद्वैदिकोयं ब्रह्मविचारः—**पृथग्भूत एव** । मीमांसा हि विचारः । विचार्यश्च विचार्यभेदाद्भिद्यत इति सम्प्रतिपन्नं यथारूपविचाराद्रसविचारः—**इति** ।

**ननु** 'सर्वे वेदा यत्पदमामनन्'तीति श्रुतेः, 'वेदैश्च सर्वैरहमेव वेद्य' इति स्मृतेश्च वेदपूर्वोत्तरभागाभ्यामेकमेव ब्रह्म प्रतिपाद्यत इति प्रतिपाद्यभेदाभावाद्भागद्वयात्मको वेदस्तावदेकमेव शास्त्रम् । तथाच—नियतपौर्वापर्यभागद्वयात्मकवेदाख्यैकप्रबन्धव्याख्यानभूतयोः पूर्वोत्तरमीमांसयोरप्येकशास्त्रत्वमुचितमेवेति**चेन्नैवम्**—'यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः । वेदवादरताः पार्थ! नान्यदस्तीति वादिनः ॥ त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन । वेदान्तविज्ञानसुनिश्चितार्थाः, तं त्वौपनिषदं पुरुषं पृच्छामी'त्यादिशास्त्रवशादस्यैव वेदवेदान्तयोः प्रतिपाद्यभेदाच्छास्त्रभेदः । कर्मदेवतास्वरूपस्वर्गादिकं हि वेदेन प्रतिपाद्यते । वेदान्तेन तु सच्चिदानन्दं ब्रह्म । नापि पुरुषार्थैक्याद्वेदवेदान्तैक्यमिति वाच्यम् । वेदगम्यपुरुषार्थस्य स्वर्गादिरूपत्वेनानित्यत्वाद्वेदान्तगम्यपुरुषार्थस्य परब्रह्मरूपत्वेन नित्यत्वाच्च नित्यानित्यपुरुषार्थप्रतिपादकयोस्तयोर्भेद उचित एव । यथा धर्मशास्त्रार्थशास्त्रयोर्भेदस्तद्वत् । यदि तु पुरुषार्थत्वमुभयत्र सममित्युच्यते—तर्हि वेदवेदान्तधर्मार्थशास्त्रादीनां सर्वेषामप्यभेद एव स्यात् । सर्वशास्त्रप्रतिपादितेष्वपि पुरुषार्थेषु परस्परं भिन्नेषु पुरुषार्थत्वस्याभिन्नस्य सत्त्वात् । तस्माद्व्याख्येययोः पूर्ववेदोत्तरवेदयोरेकप्रबन्धत्वाभावाद्व्याख्यानयोरपि पूर्वमीमांसोत्तरममीांसयोर्नैकशास्त्रत्वमिति—सर्वेषां वेदानां ब्रह्मपरत्वं तु श्रुतिस्मृतिसिद्धं सर्वेषां शब्दानां ब्रह्मपरत्वमिव—**सङ्गच्छते** । कथमितिचे**दुच्यते**—सर्वेषामप्यनात्मवस्तूनामात्मनि मायया रज्ज्वामिव सर्पदण्डधारादीनां कल्पितत्वेन कल्पितस्याधिष्ठानानतिरेकात्तत्तदध्यस्तघटादिपादार्थवाचिनामप्यधिष्ठान**ब्रह्मपरत्वमेवेति** । **यद्वा**—सर्वेऽप्यर्थास्सद्रूपतयैव प्रमाणविषया भवन्ति, नासद्रूपतयेति कृत्वा घटाद्यध्यस्तपदार्थानुस्यूतं सद्रूपं ब्रह्मैव—**घटादिशब्दवाच्यमिति** । **अथवा**—विषयावच्छिन्नमज्ञातं ब्रह्मैव प्रमाणप्रमेयं भवति । न तु केवलं घटादिकमिति—एवं यद्यपि सर्वे वेदास्सर्वाणि शास्त्राणि सर्वाणि चक्षुरादिप्रमाणानि लौकिकानि च वस्तुगत्या ब्रह्मैव प्रतिपादयन्ति । 'सर्वं खल्विदं ब्रह्मे'ति श्रुतेर्ब्रह्मण एव सर्वात्मकत्वेन सर्ववाचित्वस्यैव ब्रह्मवाचित्वरूपत्वात्तथापि यावद्व्यवहारं तत्तत्प्रमाणप्रमेयादिभेदस्य सत्त्वाद्वेदान्ता एव ब्रह्म प्रतिपादयन्ति । वेदास्तु कर्मादीनि प्रतिपादयन्ति । व्याकरणन्तु शब्दसाधुत्वं प्रतिपादयतीत्यादिव्यवस्था आस्थेया । यथा चक्षू रूपं प्रतिपादयति श्रोत्रं तु शब्दमित्यादि तद्वत्—तस्माद्विषयाधिकारिप्रयोजनभेदस्य शास्त्रभेदप्रयोजकस्य सत्त्वात्पूर्वभागाद्वेदस्योत्तरभागः पृथग्भूत एव । तद्व्याख्यानयोरपि पूर्वोत्तरमीमांसयोश्शास्त्रयोर्भेद—**उचित एव** । अत एव उत्तरभागस्य सिद्धब्रह्मप्रतिपादकस्य प्रामाण्यमसहमानस्सन्नाह जैमिनिः—'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना'मिति सूत्रम् । **न च**— व्यासशिष्यत्वाज्जैमिनिर्न वेदान्तप्रतिक्षेपक इति—वाच्यम् । जैमिनिर्भवतु नाम वेदान्तार्थावलम्बी । तदुक्तं शास्त्रं तु वेदान्तार्थप्रतिक्षेपकमेव- वेदोक्तेषु कर्मसु लोकस्य श्रद्धातिशयजननार्थं जैमिनिना तथा शास्त्रस्य कृतत्वात्—न हि वेदान्तार्थं श्रुतवान् कोपि मेधावी कर्मसु प्रवर्तते, तस्माद्वेदान्तेषु सूक्ष्मार्थप्रतिपादकेषु पुरुषस्य मतिरादावेव न प्रवर्तेत इत्यालोच्य कर्मसु प्रवर्तनद्वारा तस्य चित्तशुद्धिं जनयितुं कर्मशास्त्रं विहितमिति न तयोरेकशास्त्रत्वम् । यद्यप्येवं कर्मशास्त्रमपि परम्परया ब्रह्मशास्त्रोपयोगि, तथापि न साक्षादिति कृत्वा अथशब्दस्य कर्मशास्त्राध्ययनानन्तर्यमर्थ इति **नोक्तं** शङ्कराचार्यैः ।

**किंतु** ब्रह्मविचारंप्रति साक्षात्साधनभूतसाधनचतुष्टयसम्पत्त्यानन्तर्यमेवार्थ इत्युक्तम् । यदुक्तं श्रुतप्रकाशिकायां 'पूर्वोत्तरमीमांसयोर्नास्त्यर्थविरोध' इति तदयुक्तं, सत्त्वादर्थविरोधस्य । **तथाहि**—कर्मैव फलप्रदम्, स्वर्ग एव परमपुरुषार्थः, मोक्षो नास्ति, ईश्वरो नास्ति, धर्म एव जगतः प्रतिष्ठा, क्रियापर एव वेदस्सर्व इत्यादि प्रतिपाद्यते पूर्वमीमांसायाम् । ईश्वर एव फलप्रदः कर्मसापेक्षः, मोक्ष एव परमपुरुषार्थः, स्वर्गः क्षयिष्णुत्वात्सातिशयत्वाच्च तुच्छसुखमेव, ईश्वर एव जगतः प्रतिष्ठा, वेदस्य पूर्वभाग एव क्रियापरः, उत्तरभागस्तु परब्रह्मपर एव इत्यादिप्रतिपाद्यते उत्तरमीमांसायामिति कथमुभयोरर्थविरोधाभावः । **एतेनार्थै**कत्वादेकं वाक्यमिति न्यायस्य नात्रास्ति प्रवृत्तिरिति—**सिद्धम्** । **यदि तु**—कर्मणां चित्तशुद्धिजननद्वारा ज्ञानप्राप्तिहेतुत्वात्कर्मप्रतिपादकमपि मीमांसाशास्त्रं ब्रह्मज्ञानहेतुरेवेति पूर्वोत्तरमीमांसयोरुभयोरपि ब्रह्मज्ञानहेतुत्वेनैकशास्त्र्यमित्**युच्यते**—**तर्हि**—तर्कादिशास्त्रान्तराण्यप्याकाशादिपदार्थावगतिद्वारा आत्मज्ञानोपयोगीन्येवेति तेषामप्युत्तरमीमांसया भवेदेवैक**शास्त्र्यम्**—जैमिनिवत्कणादगौतमादयोपि हि न वेदान्तविरुद्धाभिप्रायाः—**यदुक्त**मध्यायभेदवशात्पूर्वोत्तरमीमांसयोर्भेद इति रामानुजेन **तदयुक्तम्**—तर्कादिशास्त्रान्तराणामपि तथैव भेद इत्यतिप्रसङ्गापत्तेः । **न च**—प्रधानप्रतिपाद्यभेदे सत्यवान्तरभेदप्रतिपादकत्वमध्यायभेदप्रयोजकं तत्पूर्वोत्तरमीमांसयोरेवास्ति, न तु शास्त्रान्तरेष्विति वाच्यम्, प्रधानप्रतिपाद्यभेदस्य पूर्वोत्तरमीमांसयोरपि सत्त्वात् । पूर्वमीमांसायां हि धर्मः प्रधानप्रतिपाद्यः, उत्तरमीमांसायां तु ब्रह्म प्रधानप्रतिपाद्यमिति भेदात् । तच्च स्फुटम्—'अथातो धर्मजिज्ञासा', 'अथातो ब्रह्मजिज्ञा'सेति शास्त्रद्वयारम्भकसूत्रद्वयादेव । न च धर्मशब्दः कर्मब्रह्मोभयवाचीति वाच्यम्, तथासति अथातो धर्मजिज्ञासेति पृथगारम्भायोगात् । **एतेन**—पूर्वोत्तरमीमांसयोश्शास्त्रभेदे आरम्भकसूत्रभेदोपि प्रमाणमिति **स्थितम्**—'अथ योगानुशासनम्', 'अथ शब्दानुशासनम्' इत्यारम्भकसूत्रभेद इव योगव्याकरणशास्त्रभेदकः । **किञ्च यदि**—मीमांसाद्वयमेकमेव शास्त्रं तर्हि पूर्वमीमांसां कृतवान् जैमिनिरेवोत्तरमीमांसामप्यकरिष्यत् । **यद्वा** मया मीमांसाशास्त्रं कृत्स्नं कर्तुमारब्धं तत्रादृष्टादिवैगुण्यादर्धमेव कृतमवशिष्टमर्धं मद्गुरुः व्यासः करिष्यतीत्यवदिष्यत् । तथा व्यासश्च मच्छिष्येण शास्त्रस्यार्धमेव कृतमवशिष्टमर्धं मया क्रियत इत्यवदिष्यत् ।

**ननु** यदि मीमांसयोर्नैकशास्त्र्यम्—तर्हि 'मीमांसा न्यायविस्तर' इति कथं मीमांसाया ऐकशास्त्र्यं स्मर्यत इति **चेदुच्यते**—तत्र मीमांसाशब्देन ब्रह्ममीमांसैवोच्यते, धर्मशास्त्रमित्यनेन पूर्वमीमांसाया उक्तत्वादथातो धर्मजिज्ञासेत्यारब्धं हि धर्मशास्त्रम् । मन्वादिप्रणीतधर्मशास्त्राणामप्यत्रैवान्तर्भावः । **यद्वा** पुराणेष्विति न कश्चिद्दोषः- तस्मात्—स्वप्रतिपाद्यकर्मब्रह्मभेदात्, स्वारम्भकजिज्ञासासूत्रभेदात्, स्वकर्तृजैमिनिबादरायणभेदात्, स्वाधिकारिरागिविरागिभेदात्, स्वप्रयोजनस्वर्गमोक्षभेदात्, स्वमूलप्रमाणवेदवेदान्तभेदात्, स्वमतानुवर्तिमीमांसकवेदान्तिभेदाच्च पूर्वोत्तरमीमांसयोर्नैकशास्त्रत्वमिति—**घण्टाघोषः** । **न च**—वेदवेदान्तयोरैकशास्त्र्यमेवेति वाच्यम्, विरुद्धार्थप्रतिपादकत्वेन द्वयोर्भिन्नशास्त्रत्वात् । तथाहि—'अक्षय्यगँ ह वै चातुर्मास्ययाजिनस्सुकृतं भवति', 'अपामसोमममृता अभूम', 'यावज्जीवमग्निहोत्रं जुहुयात्', 'वीरहा वा एष देवानां योऽग्नीनुद्वासयति', 'वसन्ते वसन्ते ज्योतिषा यजेत', 'ऋतौ भार्या-

मुपेयात्', 'स्वाध्यायोध्येतव्यः' इत्यादिवेदेन—**प्रतिपाद्यते** । 'नास्त्यकृतः कृतेन', 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्', आत्मेत्येवोपासीत', आत्मा वाऽरे द्रष्टव्यः', 'नानुध्यायाद्बहून् शब्दान्', 'शान्तो दान्त उपरतस्तितिक्षुस्समाहितश्श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्ये'दित्यादिवेदान्तैः — **प्रतिपाद्यते** । **अत एव**—'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जु'नेति गीतम् । एवं वेदवेदान्तयोः परस्परविरुद्धार्थप्रतिपादकत्वेन अन्यतरस्याप्रामाण्ये सञ्जाते सत्येव आस्तिकानां तदन्यतराप्रामाण्यस्यानिष्टत्वेन अधिकारिभेदादिना कथंचित्तद्विरोधः परिहृतः । असंन्यासिन एवाग्निहोत्रादित्यागे दोषः, न तु संन्यासिनः, चातुर्मास्ययाजिसुकृतस्याक्षय्यत्वं च सुकृतान्तरापेक्षयाधिक्यमात्रमित्यादिव्यवस्थानुसारात् । एवं वेदान्तविरोधे सति वेदस्यैवान्यथानेयत्वाच्छ्रुतिविरोधे सत्यन्यथानेयायास्स्मृतेरपेक्षया यथा श्रुतिर्बलीयसी तथा वेदान्त एव बलवानिति—**सिद्धम्** । एवं वेदवेदान्तयोर्दौर्बल्यप्राबल्याभ्यां च भेद**स्सिद्धः** । **अपि च**—अनधिगताबाधितार्थज्ञानं प्रमा—तत्करणं तु प्रमाणमिति स्थिते-- अनधिगतस्यापि स्वर्गाद्यर्थस्य बाधितत्वेन तद्ज्ञानस्य प्रमात्वाभावान्न वेदः प्रमाणम् । ब्रह्मणस्तु अनधिगताबाधितार्थत्वेन तद्ज्ञानस्य प्रमात्वात्तत्करणं वेदान्तः प्रमाणमित्येवं प्रमाणत्वाप्रमाणत्वाभ्यां च वेदवेदान्तयोर्भेदः । नच स्वर्गादिरप्यबाधित एवेति वाच्यं, तस्य क्षयिष्णुत्वेन कालत्रयवर्तित्वाभावात् । कालत्रयवर्तित्वं हि कालत्रयाबाधितत्वम् । नच स्वर्गादेर्बाधितत्वेपि धर्मोऽबाधित इति वाच्यम् । धर्मस्यापि जन्यत्वेन फलदानानन्तरं नश्यत्वेन च बाधितत्वात् । नच वेदोऽप्रमाणमिति वदन्भवान्नास्तिक एवेति वाच्यं, नास्तिकवदस्माभिर्वेदान्तोऽप्रमाणमित्यनुच्यमानत्वात् । वस्तुतोऽप्रमाणत्वेप्यविद्यादशायां प्रमाणत्वं वेदस्याप्यस्माभिरिष्यमाणत्वाच्च । घटादिज्ञानमपि यावद्व्यवहारं प्रमाहि । तस्माद्वेदवेदान्तयोरैकशास्त्र्याभावात्तद्व्याख्यानयोर्मीमांसयोरपि **नैकशास्त्र्यमिति शिवम्**—

**ननु नैतच्छिवम्** । 'अथातो धर्मजिज्ञासे'त्यारभ्य 'अनावृत्तिश्शब्दा'दित्यन्तं सङ्गतिविशेषविशिष्टक्रमं मीमांसाशास्त्रम् । तत्र च क्वचिद्भागे यजेतेत्यादिवेदबोधितयज्ञादिक्रिया विचारिताः - कुत्रचिद्भागे तु उपासीतेत्यादिवेदबोधितोपासनादिक्रिया विचारिताः । तथाच- कृत्स्नं शास्त्रं क्रियापरमेव । एवं प्रधानप्रतिपाद्याभेदात्सत्यप्यवान्तरभेदे नास्ति **शास्त्रभेद इति—मैवम्** । यद्येवमुपासनमपि मनोव्यापाररूपत्वात्क्रियेत्युच्यते तर्हि ज्ञानमपि क्रियैव स्यात्- ज्ञाधात्वर्थो हि ज्ञानं धातुश्च क्रियावाची । न चेष्टापत्तिः, केवलकर्मणो न मोक्षः ज्ञानसहितात्कर्मणस्तु मोक्ष इति तव सिद्धान्तभङ्गप्रसङ्गात् । कर्म हि क्रिया ज्ञानं च क्रियैवेति कथं क्रिययैव क्रियायास्समुच्चयः । नच ज्ञानं फलमेव न क्रियेति वाच्यम् , तथा सति आज्यपुरोडाशादिपदार्थज्ञानसहितमेव सर्वं कर्मापीति कृत्वा कथं केवलकर्मसिद्धिः । नच ब्रह्मज्ञानरहितं कर्म केवलकर्मेति विवक्ष्यतामिति वाच्यम्, ब्रह्मज्ञानसहितकर्मण एवाभावेन विशेषणानर्थक्यात् । नच ब्रह्मज्ञानिना कृतं कर्म ब्रह्मज्ञानसहितकर्म, ब्रह्मज्ञानरहितेन कृतं कर्म केवलकर्मेति वाच्यं, ब्रह्मज्ञानिना कर्मण एवाक्रियमाणत्वात्कर्मकर्तरि ब्रह्मज्ञानित्वासम्प्रतिपत्तेः । उपरतस्यैव ब्रह्मज्ञानित्वश्रवणात्, न चोपरतिर्न कर्मसंन्यासः, किन्तु चित्तविक्षेपाभाव इति वाच्यम्, देहादिक्रियायाश्चित्तव्यापारपूर्वकत्वेन चित्तस्यैवाविक्षिप्तत्वे

कथं क्रियासद्भावः । तस्मात्पूर्वमीमांसायां प्रधानप्रतिपाद्यं कर्मैव, आम्नायस्य क्रियार्थत्वादिति जैमिनिना कण्ठोक्तत्वात् । वज्रहस्तः पुरन्दरइत्यादिवाक्यानि तु क्रियाशेषभूतदेवतादिस्वरूपप्रतिपादकत्वेन सार्थकानि, तच्च स्फुटमर्थवादाधिकरणे । उत्तरमीमांसायां तु प्रधानप्रतिपाद्यं ब्रह्म- शास्त्रयोनित्वादिति कण्ठोक्तेः । उपासनानि तु सगुणस्य निर्गुणस्य च ब्रह्मणस्सम्बन्धीनि ब्रह्मज्ञानोपयोगितया विहितानीति प्रधानप्रतिपाद्यभेदान्न शास्त्रैक्यमिति संक्षेपः।

## —: ॐ 'अथातो ब्रह्मजिज्ञासे' त्यत्राऽथशब्दविचारः :—

अत्र अथशब्दस्यानन्तर्यमर्थ इति सम्प्रतिपन्नम् । परं तु शमादिसाधनचतुष्टयसम्पत्त्यानन्तर्यमिति— **शङ्करः**, धर्मशास्त्राध्ययनानन्तर्यमिति— **रामानुजः** । तत्रान्यतरस्य समीचीनत्वनिर्णयाय मयाऽयं विचारो विधीयते । तथाहि—कर्मज्ञानं विना ब्रह्मणो ज्ञातुमशक्यत्वाद्ब्रह्मजिज्ञासुना तावत्कर्मज्ञानाय पूर्व- मीमांसाध्ययनं कर्तव्यमिति किं रामानुजस्याशयः? किं वा अज्ञातकर्मणः पुरुषस्य ब्रह्मजिज्ञासोरपि ब्रह्मज्ञाने नास्त्यधिकार इति ब्रह्मज्ञानाधिकारसिद्ध्यर्थं कर्मज्ञानाय पूर्वमीमांसाध्ययनं कर्तव्यमिति?- यद्वा पूर्वमीमांसा- न्यायानामेवोत्तरमीमांसायां दर्शनात्तदवगमाय पूर्वमीमांसाध्ययनं कर्तव्यमुत्तरमीमांसाध्ययनं चिकीर्षुणेति?- अथवा कर्मभिश्शुद्धचित्तस्यैव ब्रह्ममीमांसायामधिकार इति कृत्वा कर्मकरणार्थं कर्मज्ञानाय पूर्वमीमांसाध्ययनं कर्तव्यं ब्रह्ममीमांसुनेति? **नाद्यः**- कर्मज्ञानब्रह्मज्ञानयोरुपजीव्योपजीवकभावाभावात् । नहि अइउणित्यादि- माहेश्वरसूत्रज्ञानं विना अणित्यादिप्रत्याहारज्ञानाभाववत्कर्मज्ञानं विना ब्रह्मज्ञानाभाव इति वक्तुं शक्यते, ज्यो- तिष्टोमपौण्डरीकवाजपेयादिकर्मज्ञानविधुराणामपि ब्रह्मज्ञानसत्त्वात् । **न द्वितीयः**—ब्रह्मज्ञानकर्मज्ञानयोरधि- कार्याधिकारकभावाभावात्, कर्मज्ञानविधुराणामपि बहूनां ब्रह्मज्ञानेधिकृतानां सत्त्वादुपनीतस्यैव द्विजस्य विवाहे- धिकार इतिवत्कर्मज्ञानिन एव ब्रह्मज्ञानाधिकार इति क्वाप्यदर्शनात् । **न तृतीयः**—तथात्वेऽन्वयव्यतिरेकानुमा- नादिपदार्थानां तर्कशास्त्रे दृष्टानामेव वेदान्तशास्त्रेपि दर्शनेन तद्ज्ञानार्थं तर्कशास्त्रस्याप्यध्येयत्वेनाथशब्दस्य तर्क शास्त्राध्ययनानन्तर्यमर्थइत्यपि वक्तव्यत्वात्। नचेष्टापत्तिः, विनापि तर्कादिशास्त्रांतराध्ययनं बहूनां वेदांतशास्त्राध्य यनाल्लब्धब्रह्मज्ञानानां सत्त्वात्; प्रबलतरतर्कादिशास्त्रान्तरवासनापिशाचीग्रासवशाद्बहुवारं श्रुतवेदान्तशास्त्राणाम- प्यलब्धब्रह्मज्ञानानां च बहूनां सत्त्वात् । वेदवेदाङ्गाध्ययनादेवार्थावबोधसहितादापातप्रतिपन्नब्रह्मज्ञानस्य वेदा- न्तशास्त्राध्ययनं सुकरमिति कृत्वा ब्रह्मजिज्ञासोर्वेदवेदाङ्गाध्ययनस्यार्थसहितस्यावश्यकत्वस्योभयसम्प्रतिपन्न- त्वात् । **न चतुर्थः**- कर्मभिश्शुद्धचित्त एव ब्रह्म जिज्ञासति- 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशके'नेति श्रुतेर्न ब्रह्मजिज्ञासुना पूर्वमीमांसाध्ययनं कर्तव्यं, पूर्वमीमांसाध्ययनात्पूर्व- मेव तस्य ब्रह्मजिज्ञासाया जातत्वात्, नच पूर्वमीमांसाध्ययनं विना न कर्मज्ञानं, कर्मज्ञानं विना न कर्माचरणं, कर्माचरणं विना न चित्तशुद्धिः, चित्तशुद्धिं विना न ब्रह्मजिज्ञासेति ब्रह्मजिज्ञासायाः कथमुदयः पूर्वमी- मांसाध्ययनरहितस्येति वाच्यं, अधीतस्वाध्यायेन मीमांसाशास्त्रवासनाशून्येनापि परोपदिष्टविधया कृतनिष्काम- कर्मणा चित्तशुद्धेर्लभ्यमानत्वात्, नह्यनधीतवेदस्येवानधीतमीमांसाशास्त्रस्य ज्योतिष्टोमादौ नास्त्यधिकार इति वक्तुं शक्यते । भवतु वा पूर्वमीमांसाशास्त्राध्ययनशून्यस्य कर्मस्वनधिकारः । न तावतास्माकं कापि क्षतिः,

थेन केनाप्यदृष्टादिना हेतुना जातायां ब्रह्मजिज्ञासायां पुरुषेण वेदान्तशास्त्राध्ययनमेव कर्तव्यं, नतु मीमांसाध्ययनं, तस्य दर्शितविधया जिज्ञासांप्रत्येव हेतुत्वात् । न हि नीरे लब्धे सति नीरलाभाय कूपः खननीयः- तस्मात्कर्मजिज्ञासुनैव मीमांसाशास्त्रमध्येतव्यं, ब्रह्मजिज्ञासुना तु वेदान्तशास्त्रमध्येतव्यम्- यथा शब्दसाधुत्वजिज्ञासुना शब्दानुशासनं, पदार्थजिज्ञासुना तर्कशास्त्रं तद्वदिति ।

**ननु** ब्रह्मजिज्ञासुना कर्मशास्त्राध्ययनानन्तरं कर्मज्ञाने सति ब्रह्ममीमांसा कर्तव्येति न वयं ब्रूमः, किं तर्हि- कर्मजिज्ञासुना कर्मशास्त्राध्ययनं कर्तव्यं, ततः कर्मज्ञाने लब्धे सति तस्य ब्रह्मजिज्ञासा जायते, तेन चोत्पन्नब्रह्मजिज्ञासेन ब्रह्ममीमांसा कर्तव्येति ब्रूमः, अतो न दोष इति **चेन्मैवम्**— न हि कर्मज्ञानलाभादेव ब्रह्मजिज्ञासा जायते पुरुषस्य, किंतु निष्कामकर्मानुष्ठानद्वारा चित्तशुद्धिलाभादेव । न हि कर्माणि ज्ञातमात्राण्येव चित्तशुद्धिं जनयन्ति, तथा सति सर्वस्यापि विधिशास्त्रस्य 'वसन्ते वसन्ते ज्योतिषा यजे'तेत्यादेरानर्थक्यप्रसङ्गात् , अर्थावबोधसहितात्स्वाध्यायाध्ययनादेव कर्माणि ज्ञातानीति कृत्वा कर्मशास्त्रस्याप्यानर्थक्यप्रसङ्गात् । न हि कर्मज्ञानाय जैमिनिना शास्त्रं कृतं, किंतु- तदनुष्ठानविधिप्रदर्शनायेति । **एवंच** द्विजस्य तावदुपनीतस्यार्थज्ञानपूर्वकं साङ्गवेदाध्ययनं, ततो मीमांसाध्ययनं, पश्चात्कर्मानुष्ठानं, तदुपरि चित्तशुद्धौ सत्यां ब्रह्मजिज्ञासोदयेन वेदान्तशास्त्राध्ययनमिति क्रमः । अत एव 'अथातो धर्मजिज्ञा'सेत्यत्राथशब्दस्य वेदाध्ययनानन्तर्यमर्थ इत्युक्तं- इति ॥

**ननु** भवतु रामानुजोक्तार्थो दुष्टः, कथं पुनश्शङ्करोक्तार्थो भवेदष्ट इति चे **दुच्यते**— शमादिसम्पत्तेरेव चित्तशुद्धिशब्दवाच्यत्वादिति । नच ब्रह्मजिज्ञासोदयानन्तर्यमथशब्दार्थ इति वक्तव्यमिति वाच्यं, ब्रह्मजिज्ञासुरेव ब्रह्ममीमांसायां प्रवर्तते, न त्वन्य इति तस्यावचनादपि सिद्धत्वेन तद्वचनस्यानर्थकत्वात् । अत एव 'अथातो धर्मजिज्ञा'सेत्यत्राप्यथशब्दस्य कर्मजिज्ञासानन्तर्यमर्थ इति नोक्तं । नापि कर्मानुष्ठानानन्तर्यमर्थ इति वाच्यमिति वाच्यम्, कृतकर्मणामपि केषांचिच्चित्तशुद्ध्यनुदयेन कर्मानुष्ठानानन्तरं ब्रह्ममीमांसायाः कर्तव्यत्वासिद्धेः—**इति** ॥

**ननु** पुरुषेण शमादिसम्पत्तिरूपायां चित्तशुद्धौ सत्यां वेदान्तशास्त्राध्ययनं कर्तव्यमिति स्थापितम् । **तत्र संशयः**—किं चित्तशुद्धौ सत्यामेव वेदान्तशास्त्राध्ययनं कर्तव्यमिति नियमः? किं वा चित्तशुद्धौ सत्यां वेदान्तशास्त्राध्ययनमेव कर्तव्यमिति? किमुत चित्तशुद्धौ सत्यां वेदान्तशास्त्राध्ययनं कर्तव्यमेवेति? नच नायं नियमविधिः किंत्वपूर्वविधिरेवेति वाच्यं, ब्रह्मजिज्ञासोर्ब्रह्मज्ञानार्थं ब्रह्मप्रतिपादकवेदान्तशास्त्राध्ययनस्य प्राप्तत्वेनापूर्वविधित्वाभावात् । **अत्रोच्यते**—त्रिविधोप्ययं नियमः पूर्वाचार्यैरभ्युपगत एव । अत एव चित्तशुद्धिरहितानां न वेदान्तशास्त्रेऽधिकारः, कथंचित्कुतूहलितया प्रवृत्तानामपि तेषां ब्रह्मसाक्षात्कारानुदयश्च, शुद्धचित्तानामप्यनधीतवेदान्तशास्त्राणां प्रबोधचन्द्रोदयादिग्रन्थाध्येतॄणां ब्रह्मज्ञानालाभश्च—**इति** ॥

**ननु** शमादिसाधनसम्पन्न एव ब्रह्मज्ञानेऽधिकरोतीत्यत्र श्रुतिप्रमाणाभावादयुक्तश्शङ्करोक्तार्थ **इति**

चेन्मैवम्—'शान्तो दान्त उपरतस्तितिक्षुस्समाहितश्श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्ये'दिति श्रुतेस्सत्त्वात् । **एतेन** रामानुजोक्तार्थश्श्रुत्यनुग्रहाभावाद्दुष्ट इति—**सिद्धम्** । न हि श्रुतौ कर्मज्ञानी ब्रह्म पश्येदिति क्वापि श्रूयते । ननु न रामानुजेनाथशब्दस्य धर्मशास्त्राध्ययनानन्तर्यमर्थ इत्युक्तं, किंतु कर्मज्ञानानन्तर्यमिति । तथा च कर्मफलं क्षयिष्णु सातिशयं चेति ज्ञानानन्तरमिति फलतीति चेत्तर्हि नित्यानित्यवस्तुविवेकरूपं तत्कर्मज्ञानं साधनचतुष्टय एवान्तर्भवतीति कुतो दूष्यते शङ्करोक्तार्थः? न च नेदं कर्मज्ञानं नित्यानित्यवस्तुविवेकरूपं, किंतु अनित्यवस्तुज्ञानरूपमेवेति वाच्यं, तथा सति- ब्रह्मज्ञानफलं नित्यं निरतिशयं चेति ज्ञानाभावे ब्रह्ममीमांसायां प्रवृत्त्ययोगात् , आपाततो ब्रह्मज्ञानसत्त्वस्य सम्प्रतिपन्नत्वाच— **किंच** अस्याधिकारिणो जातं त्वदुक्तमिदं कर्मज्ञानं किमर्थावगतिपूर्वकाद्वेदाध्ययनादेव, यद्वा मीमांसाध्ययनात्? **नाद्यः**—वेदान्तशास्त्रमधिजिगीषुणा पूर्वं मीमांसाशास्त्रमध्येतव्यमिति त्वदभीष्टासिद्धेः, **न द्वितीयः**- कर्ममीमांसकैरक्षय्यस्यैव कर्मफलस्याभ्युपगतत्वान्नित्यब्रह्मणोऽनभ्युगतत्वाच्च । कर्मब्रह्मवादिनो हि मीमांसकाः। **एतेन** साधनचतुष्टयसम्पन्नस्यैव ब्रह्ममीमांसायामधिकार इतिवदधीतपूर्वमीमांसाशास्त्रस्यैवोत्तरमीमांसायामधिकार इति नियम इति—**परास्तम्** । पूर्वोत्तरमीमांसयोरुपजीव्योपजीवकभावाभावात्, प्रत्युत तमस्तेजसोरिव विरोधात् । साधनचतुष्टयसम्पत्तिब्रह्ममीमांसयोस्तूपजीव्योपजीवकभावो विद्यते । कामक्रोधादिविक्षिप्तचित्तस्य हि स्थूलोपि पदार्थो न बुद्धिमधिरोहति, किंपुनरणोरणीयान्निहितो गुहायां ब्रह्मात्मा । अत एव 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि'रिति श्रूयते । बुद्धेरग्र्यत्वं सूक्ष्मत्वं च शमदमादिसंस्कारवशलब्धमेकाग्रत्वं सूक्ष्मवस्तुदर्शनसामर्थ्यं हि । तस्माद्यस्साधनचतुष्टयसम्पन्नस्तस्य दृढा ब्रह्मजिज्ञासा जायते । सच जिज्ञासुः ब्रह्ममीमांसायां प्रवर्तत इति कृत्वा साधनचतुष्टयसम्पन्न एवेहाधिकारी, नतु कर्ममात्रज्ञानवान्, नापि मीमांसाशास्त्रमात्रावगतिमांश्च । नैतावतास्माभिरनधीतमीमांसाशास्त्रस्यैव ब्रह्ममीमांसायामधिकार इत्युच्यते- किं तु तर्कादिशास्त्राध्ययनतुल्यमेव मीमांसाध्यनमपीत्युच्यते । तेन अनुमानादिपदार्थपरिज्ञानाय यथा तर्कादिशास्त्रान्तरं किंचिदपेक्षितं, तथा मीमांसाशास्त्रमपि अपच्छेदोपक्रमसन्दर्शादिन्यायावगतये किंचिदपेक्ष्यतांनाम, नैतावता अधीतमीमांसस्यैव ब्रह्ममीमांसायामधिकार इति वयं—**ब्रूमः** । अन्यथा अधीततर्कादिशास्त्रान्तरस्यैव ब्रह्ममीमांसायामधिकार इति वक्तव्यत्वापत्तेः । तस्मात् दृढतरब्रह्मजिज्ञासोदयात्प्रागेव न्यायमीमांसादिशास्त्राध्ययनं, ततः पश्चात्तु ब्रह्ममीमांसैवाध्येतव्या । यथा कर्मजिज्ञासोदयात्प्रागेव तर्काध्ययनं, ततः पश्चात्तु मीमांसैवाध्येतव्या तद्वदिति ॥

**ननु** अधीतसाङ्गस्वाध्यायस्यैव नित्यानित्यवस्तुविवेकादिना ब्रह्मजिज्ञासा उदेतीति कृत्वा साङ्गस्वाध्यायानन्तर्यमथशब्दार्थ इति वक्तव्यमिति चेत्, **मैवम्**— साङ्गस्वाध्यायानन्तर्यस्य धर्ममीमांसायामतिव्याप्तत्वात्- साङ्गस्वाध्यायानन्तरमेव हि धर्ममीमांसायामधिकरोति पुरुषः । किंच साङ्गस्वाध्यायानन्तरमवश्यं शमादिसाधनसम्पत्तिर्भवतीति वक्तुं न शक्यते- बहूनामपि वेदविदामिदानीं शमादिसम्पत्तिरहितानां दृश्यमानत्वात् । दृढतरब्रह्मजिज्ञासा तु शमादिसम्पत्तिं विना नोदेतीति शमादिसम्पत्त्यानन्तर्यमेव वाच्यम् । शमदमोपरतितितिक्षाश्रद्धासमाधानानि षडेकं साधनं, नित्यानित्य-

वस्तुविवेक एकं, इहामुत्रफलभोगविराग एकं, मुमुक्षुत्वमेकं- मिलित्वा चत्वारि साधनानि । तत्र तीव्रमुमुक्षुत्वमेव साधनं, न मन्दमुमुक्षुत्वं- तस्य ब्रह्ममीमांसायामप्रवर्तकत्वात् । **यद्यपि** यस्यैतानि साधनानि न सन्ति सोपि ब्रह्म जिज्ञासतीतीदानीं प्रत्यक्षं, **तथापि** तस्य सा ब्रह्मजिज्ञासा न दृढा, किंतु मन्दैव । तस्मात्साधनचतुष्टयसम्पत्तिवशादेव ब्रह्मजिज्ञासोदेति पुरुषस्य । यथा माहेश्वरसूत्राध्ययनवशादेव प्रत्याहारज्ञानं तद्वदिति कृत्वा अथशब्दस्य साधनचतुष्टयसम्पत्त्यानन्तर्यमेवार्थः । 'तदुदितस्स हि यो यदनन्तर' इति न्यायाद्घटस्य दण्डव्यापारजन्यत्वेन दण्डव्यापारानन्तर्यदर्शनाच्च—**इति** ॥

**ननु** इच्छाया दृढत्वं नाम इष्यमाणविषयप्रवर्तकत्वं । 'काश्यां तु मरणान्मुक्ति'रित्यादिशास्त्रात्सर्वोप्यास्तिक. काशीं जिगमिषत्येव, किंतु यस्य दृढा काशीजिगमिषा स एव काशीं गच्छति, यस्य त्वदृढा स गमिष्यामीत्येव सर्वदा मन्यते- नतु गच्छतीति दर्शनात् । **तथाच**—यस्येष्यमाणविषये प्रवृत्तिस्स-दृढेच्छ इत्येवं स्वीकर्तव्यम् । **इदानीं** च बहवः पुरुषाः विनैव वेदवेदाङ्गाध्ययनं, विनैव साधनचतुष्टयसम्पत्तिं, विनैव च मीमांसादिशास्त्राध्ययनं, संस्कृतभाषापरिज्ञानमात्रादेव ब्रह्ममीमांसायां प्रवृत्ता दृश्यन्त इत्यमीषां दृढब्रह्मजिज्ञासा विद्यत एवेति वक्तव्यं, ततः कथं साधनसम्पत्तेरन्यस्य वा दृढजिज्ञासां प्रत्यन्वयव्यतिरेकव्याप्तिसिद्धं हेतुत्वमिति **चेदुच्यते—** इच्छाया दृढत्वं नाम नेष्यमाणविषयप्रवर्तकत्वं, किं तु इष्यमाणविषयप्राप्तिपर्यन्तत्वम् । इच्छा हि विषयसिद्धौ निवर्तते, तदसिद्धौ तु नैव निवर्तते । तथा च यस्य ब्रह्मजिज्ञासा ब्रह्मज्ञानप्राप्तिपर्यन्ता, ब्रह्मज्ञाने सत्येव निवर्तते, न तु तस्मिन्नसति, स एव दृढब्रह्मजिज्ञासावानित्युच्यते । अस्यैव ब्रह्मज्ञानलाभः । इयं च दृढब्रह्मजिज्ञासा साधनचतुष्टयसम्पन्नस्यैव भवतीति कृत्वा दृढब्रह्मजिज्ञासां प्रति साधनचतुष्टयसम्पत्तेरस्यैवान्वयव्यतिरेकव्याप्तिसिद्धं हेतुत्वम् । **अयमर्थः** -साधनचतुष्टयसम्पन्न एव ब्रह्मजिज्ञासया ब्रह्ममीमांसायां प्रवृत्य ब्रह्मज्ञानं लभते, न त्वन्य **इति** । अत एवानधिकारिणो बहवोऽद्य वेदान्तशास्त्रं बह्वधीत्यापि संसारिणश्शोचन्त उपलभ्यन्त इति ॥

**ननु** मास्तु साधनचतुष्टयसम्पत्तिः, पदवाक्यप्रमाणपरिज्ञाने सति पण्डित उत्तरमीमांसायां प्रवृत्य स्वतो गुरूपदेशाद्वा ब्रह्मज्ञानं प्राप्नुयादेव । सति साहित्ये शब्दश्रवणादर्थज्ञानं नोदेतीति साहसमात्रमिति **चेन्मैवम्—** साधनचतुष्टयसम्पत्तिरहित उत्तरमीमांसाध्ययनवशाद्ब्रह्मणो याथात्म्यं नैव जानीयात्, यद्वा परोक्षमेव जानीयाद्यथा 'वज्रहस्तः पुरन्दर' इत्यादिवाक्यात्पुरन्दरादीन् परोक्षमेव जानाति तद्वत् 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिवाक्यादपि ब्रह्मेति । न च साधनसम्पन्नोपि शब्दाद्ब्रह्म परोक्षमेव जानीयाच्छब्दस्य परोक्षजननस्वाभाव्यादिति वाच्यं, केवलशब्दस्य तथात्वेपि विचारसहकृतश्शब्दोऽपरोक्षज्ञानं जनयत्येव । नचैवं साधनशून्योपि विचारसहकृताच्छब्दाद्ब्रह्माऽपरोक्ष्यं प्राप्नुयादिति वाच्यं, साधनशून्यस्य विचारासम्भवात् । विचारो हि चित्तैकाग्र्यसाध्यः- न हि शमादिरहितस्य कामादिभिर्विक्षिप्तचित्तस्य विचारस्सम्भवति । अत एव ब्रह्ममीमांसायां साधनसम्पन्नस्यैवाधिकार इत्युक्तमीमांसा हि विचारः । विचारेण ह्यसम्भावनानिवृत्तिः । न च मास्तु ब्रह्मापरोक्ष्यमात्मसाक्षात्कारस्यादेव शब्दात्केवलादिति वाच्यं, ब्रह्माभिन्नत्वादात्मनः, भिन्नत्वेपि संसार्यात्मनिश्चयनिराकरणपूर्वकाऽसंसार्यात्मसाक्षात्कारस्य केवलशब्दादसम्भवात्तत्राप्यावश्यक एव विचारः ।

एवं साधनसम्पत्त्यभावेनात्मविचाराभावादेव वेदान्त्याभासानां बहूनामिदानीमसंसार्यात्मनिश्चयाभावः । एतावता साधनसम्पत्त्यानन्तर्यवाच्ययमथशब्दस्समर्पयत्यधिकारिणमपेक्षितमिति—**सिद्धम्** ॥

## अनुबन्धचतुष्टयनिरूपणम् ।

**न हि** केवलमानन्तर्यमत्रापेक्षितं, शास्त्रस्य तु विषयसम्बन्धाधिकारिफलरूपानुबन्धचतुष्टयमपेक्षितमस्य च वेदान्तशास्त्रस्य । मीमांसाशास्त्रात्पृथक्छास्त्रतयास्ति तदपेक्षा। अत एव तच्चतुष्टयमपेक्षितमिह प्रथमसूत्रेण दर्शितं, **तथाहि**—साधनचतुष्टयसम्पन्नमधिकारिणम**थ**शब्दः प्रदर्शयति । न च ब्रह्ममीमांसुमिति वाच्यं, तस्योक्तिं विनैव सिद्धत्वात्- यो हि यन्मीमांसुस्स तन्मीमांसायामधिकरोतीति लोकतस्सिद्धत्वात् । नापि ब्रह्मजिज्ञासुमिति वाच्यं, तस्यापि वचनं विनैव सिद्धत्वात्- यो हि यज्जिज्ञास्यति स तन्मीमांसायामधिकरोतीति लोकत एव सिद्धत्वात् । नापि कर्मज्ञानिनमिति वाच्यं, कर्मज्ञानिनो ब्रह्ममीमांसाऽयोगात्- महिषज्ञानिनः कर्मज्ञानायोगवत्- इति । **अत**श्शब्दः प्रयोजनं सूचयति । कर्मफलस्यानित्यत्वान्नित्यब्रह्मप्राप्तिफलाय ब्रह्म ज्ञातव्यमिति हि तदर्थः । **ब्रह्म**शब्दो विषयं बोधयति । सम्बन्धस्तु प्रतिपाद्यप्रतिपादकभावरूपस्पष्ट एव । एवमनुबन्धचतुष्टयवत्त्वादेवेदं वेदान्तशास्त्रमवश्यमधिगन्तव्यं- इति । ननु साधनचतुष्टयसम्पन्नेनेत्यनुक्त्वा किमित्युक्तमथेति व्यासेनेति चेत्समानोऽयमनुयोगस्तवापि कर्मज्ञानेनेत्यनुक्त्वा किमित्युक्तमथेतीति । अथ यदि किमत्र समाधानमित्यस्मदीयो ब्रूयात्तर्हि वदामः—'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदु'रिति वचनादल्पाक्षरपदप्रयोग एव सूत्रे कर्तव्य इति । न चासन्दिग्धं वक्तव्यमिति किमिति सन्दिग्धमुक्तमिति वाच्यं, व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति न्यायाद्व्याख्यानतोऽसन्दिग्धमेवेदमथपदम् । किंच मङ्गलार्थमप्ययमथशब्दः प्रयुक्तः-- 'ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभा'विति स्मरणात् । अपिच 'अथातो धर्मजिज्ञासा', 'अथ शब्दानुशासन'मिति ग्रन्थादावथशब्दप्रयोगश्शास्त्रकर्तृभिरङ्गीकृत इति तत्प्रयोग एवोचितः । तस्मात्साधनचतुष्टयसम्पत्त्यानन्तर्यवाची अयमथशब्दस्साधनचतुष्टयसम्पन्नमधिकारिणं समर्पयतीति सुस्थम् । **अत्र** श्रीभाष्यव्याख्यायां श्रुतप्रकाशिकायां सुदर्शनाचार्यः वेदान्तश्रवणात्पूर्वं शास्त्रान्तरश्रवणेन विना सम्पादयितुमशक्यत्वाच्छास्त्रान्तराणामनवसरग्रस्तत्वाच्च शास्त्रान्तरसापेक्षाणां नित्यानित्यवस्तुविवेकादीनां पूर्ववृत्तत्वव्युदास इति—**तत्तुच्छम्**, अधीतसाङ्गसशिरस्कवेदस्याधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनीति श्रीभाष्यादेव अधीतसाङ्गसशिरस्कवेदस्य तत एव वेदाध्ययनान्नित्यानित्यवस्तुविवेकादिसम्भवात् । वेदे हि 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयत' इति, 'न स पुनरावर्तत' इति च नित्यानित्यवस्तुविवेकस्य श्रुतत्वात्, 'शान्तो दान्त' इत्यादौ शमदमादेश्श्रुतत्वाच्च । तस्मात्साङ्गसशिरस्कवेदाध्ययनादेवार्थावबोधसहितान्नित्यानित्यवस्तुविवेकादिसिद्धिरिति युक्तं तेषां पूर्ववृत्तत्वम् । यच्च तेनोक्तं समधिगतकर्मसांसारिकफलनिर्विण्णानन्तस्थिरफलाकांक्षी शास्त्रमधिकरोतीति- तत्र समधिगतकर्मेति विशेषणमनर्थकं, ब्रह्मावगतिं प्रति कर्मावगतेरहेतुत्वस्योक्तत्वात् । द्वितीयविशेषणमिहामुत्रफलभोगविरागरूपमस्म-

दुक्तं साधनमेव । तृतीयं च मुमुक्षुत्वस्वरूपमस्मदुक्तं साधनमेवेति नापूर्वोक्तिः । अल्पास्थिरफलकर्मेति, अनन्तस्थिरफलब्रह्मेति च भाष्यवचनादेव नित्यानित्यवस्तुविवेकात्मकं साधनमप्यभ्युपेतमेव । एवं साधनत्रयमभ्युपगम्यैव अथशब्दस्य साधनचतुष्टयसम्पत्त्यानन्तर्यार्थानभ्युदगमः कुतो वा नाहं जाने- क्रोधावतारस्य रामानुजस्य शमाभावाच्छमादिसम्पत्तिस्तेन नाभ्युपेतेति मन्ये । यच्च सुदर्शनेनोक्तं कर्मविचारानन्तरं ब्रह्मविचारस्य कर्तव्यत्वे कर्मणामल्पास्थिरफलत्वनिर्णयसहितानन्तस्थिरफलापातप्रतीतिरित्ययं विशिष्टो हेतुरिति, तदप्ययुक्तम्—कर्मविचारो हि मीमांसाध्ययनं ततः प्रावपुरुषस्य कर्मफलमनन्तं स्थिरमिति ततः पश्चादस्थिरमिति च बुद्धिरस्तीत्यस्यांशस्य पूर्वमेव खण्डितत्वात् । कर्मविचारानन्तरं कर्मण एव कर्तव्यत्वेन ब्रह्मविचारस्याकर्तव्यत्वात् । यदि कर्मविचारानन्तरमव्यवधानेन ब्रह्मविचारस्यैव कर्तव्यत्वं, तर्हि कर्मविचारविधानस्य वैयर्थ्यापत्तेः । न च कर्मविचारानन्तरं ब्रह्मविचारं विधाय पश्चाद्ब्रह्मज्ञानसहितं कर्म कर्तव्यमिति वाच्यं, ब्रह्मज्ञानानन्तरं कृतकृत्यत्वेन कर्तव्यानवशेषात् । 'ब्रह्मविद्ब्रह्मैव भवति', 'तरति शोकमात्मवि'दित्यादिश्रुतिशतात्, 'एतद्बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भार'तेत्यादिस्मृतिशताच्च । यस्य तु ब्रह्मविचारानन्तरमपि कर्तव्यशेषोऽस्ति स न कृत्स्नब्रह्मवित् । किंच कर्मब्रह्मज्ञानयोस्तमस्तेजसोरिव साहित्यमपि दुरुपपादम् । यदि तु ब्रह्मविचारोऽपि कर्मविचारवत्कर्मशेषः कर्मोपयोगितया तर्हि अथातो धर्मजिज्ञासेत्यारब्धे मीमांसाशास्त्र एवास्यापि प्रतिपादनं स्यात्, न तु अथातो ब्रह्मजिज्ञासेति पृथगस्यारम्भः ॥

**ननु** स्वतोऽस्थिरफलकमपि कर्म- ब्रह्मज्ञानसहितं सदनन्तस्थिरफलकं भवतीति कृत्वा अनन्तस्थिरफलककर्म करणार्थं कर्मब्रह्मज्ञानद्वयस्यावश्यकतया तत्र कर्मज्ञानस्य पूर्वमीमांसया जातत्वाद्ब्रह्मज्ञानायोत्तरमीमांसाऽऽरभ्यते अथातो ब्रह्मजिज्ञासेति—**मैवम्**, यद्येवं कर्मविचारो ब्रह्मविचारश्चेत्युभयं कर्मकरणार्थतया कर्मशेषभूतं तर्हि कर्मविचारानन्तर्यं ब्रह्मविचारस्य न नियन्तुं शक्यते- ब्रह्मविचारानन्तर्यस्यापि कर्मविचारस्य सम्भवात् । तथाच अथातो धर्मजिज्ञासेत्यत्राथशब्दस्य ब्रह्मविचारानन्तर्यमित्येवार्थः, न त्वध्ययनानन्तर्यमिति । तत्रापि विवाद एव सम्प्राप्तः- एवं कर्मविचारानन्तरं ब्रह्मविचारः कर्तव्यः किं? यद्वा, ब्रह्मविचारानन्तरं कर्मविचारः कर्तव्य इति संशये विनिगमकाभावादुभयस्याप्यसिद्धिः । न च कर्मविचारात्प्राक् मुमुक्षाया एवानुदयान्न ब्रह्मविचारप्राप्तिरिति वाच्यं, कर्मविचारात्प्रागपि कर्मविचारात्पश्चादिव ब्रह्मज्ञानसहितात्कर्मण एव मोक्षः, न तु केवलकर्मण इति ज्ञातुं शक्यत्वात् । न हि कर्मविचारे विद्यतेयमंशः- येन कर्मविचारं विना तस्य दुर्ज्ञेयत्वमुच्येत—श्लो॥ 'तत्प्राप्तिहेतुर्विज्ञानं कर्मचोक्तं महामुने । तथा तपश्च विद्या च संयुक्तं भेषजं महत्' इत्यादिवचनानि पुराणादिषु सन्ति हि । तस्माद्ब्रह्मज्ञानसहितात्कर्मणो मोक्ष इति वादिनस्तव मते ब्रह्मविचारस्य कर्मविचारानन्तर्यं नियन्तुं न शक्यते । **एतेन** घटनिष्पत्तेः कुलालादिवद्ब्रह्मविचारस्य कर्मविचारः पूर्वभावित्वेन नियत इति श्रुतप्रकाशिका—**परास्ता** । कुलालाद्यभावे घटानिष्पत्तिवत्कर्मविचाराभावे ब्रह्मविचाराभावासिद्धेः, ब्रह्मविचारं विहितवतापि कर्मकरणार्थं कर्मविचारस्य सुकरत्वेन ब्रह्मविचारस्यापि कर्मविचारपूर्वभावित्वसिद्धेः । किंच ज्ञानं विनेव कर्मविनापि मोक्षाभावान्मुमुक्षुत्वं धर्मजिज्ञासोरप्यावश्यकमेव, ततः सञ्जातमोक्षाभिलाषो ब्रह्मविचारं विदध्यादिति वचनमप्ययुक्तमेव । **एतेन**

कर्मविचारो ब्रह्मविचारसामग्रीति श्रुतप्रकाशिका—**परास्ता** । कर्मविचारसामग्रीत्वस्य ब्रह्मविचारेपि सत्त्वात् । ब्रह्मविचारं कृतवान्हि केवलाद्ब्रह्मज्ञानात्स्वाभीष्टमोक्षासिद्ध्या तदर्थं ज्ञानसहितं कर्म चिकीर्षुः कर्मविचारं विधत्ते । न च कर्मविचारमकृतवतो मुमुक्षा न स्यादिति वाच्यं, साङ्गवेदाध्ययनेन, पुराणादिपठनेन, भय-ग्रन्थपठनेन च तस्यास्सम्भवादिति । **ननु** घटस्य दण्डचक्रसलिलादिवद्ब्रह्मविचारस्य कर्मविचारः पूर्वभावित्वेन नियतसामग्री माभून्नाम- साधनचतुष्टयसम्पत्तिरपि कथं सा स्यादिति **चेदुच्यते**— दण्डचक्राद्यभावे घटानिष्पत्तिवत्साधनसम्पत्त्यभावे ब्रह्मविचारानिष्पत्तेरिति । न च साधनसम्पन्ना अपि बहवोऽकृतब्रह्म-विचारा दृश्यन्त इति कृत्वा साधनसम्पत्तिसत्त्वे ब्रह्मविचारसत्त्वमिति नियन्तुं न शक्यत इति वाच्यम्, नास्माभिस्साधनसम्पत्तिसत्त्वे ब्रह्मविचारसत्त्वमित्यन्वयव्याप्तिरुच्यते— किं तु साधनसम्पत्त्यभावे ब्रह्मविचारा-भाव इति व्यतिरेकव्याप्तिरुच्यत इति । न हि दण्डचक्रादिसद्भावमात्रेण घटोदयः, परं तु दण्डचक्राद्यभावे घटानिष्पत्तिरित्येव तत्रापि नियमः । तस्माद् घटनिष्पत्तेः कुलालादिवद्ब्रह्मविचारस्य साधनचतुष्टयसम्पत्तिरेव सामग्री न तु कर्मविचार **इत्यनवद्यम्** ॥ इत्यथशब्दविचारः ॥

## अतश्शब्दविचारः ।

अथात्र अतश्शब्दो विचार्यते— **अतश्शब्दो** वृत्तस्य हेतुभावे इति **रामानुजः**— वृत्तं कर्म-ज्ञानं वर्तिष्यमाणस्य ब्रह्मज्ञानस्य हेतुरिति तदर्थः । **नेदं युक्तम्**— कर्मज्ञानस्य ब्रह्मज्ञानं प्रति हेतुत्वा-सिद्धेः । न हि कर्मज्ञानाद्ब्रह्मज्ञानं जन्यते- दण्डव्यापारादिव घटः, किंतु विचारिताद्वेदान्तवाक्यादेव ब्रह्म-ज्ञानं जायते । 'तं त्वौपनिषदं पुरुषं पृच्छा'मीत्यादिश्रुतेः । न च कर्मणः केवलस्यास्थिरफलकत्वज्ञाना-न्मुमुक्षुर्ब्रह्ममीमांसायां प्रवर्तत इति कृत्वा कर्मज्ञानं ब्रह्मज्ञानस्य हेतुरित्युक्तमिति वाच्यम् । तथासति-अतश्शब्दस्य कर्मणोऽस्थिरफलकत्वज्ञानादित्यर्थ इति वक्तव्यत्वात् । नच तथैव वदाम इति वाच्यम्, तथापि ब्रह्मज्ञानंप्रति कर्मणोऽस्थिरफलकत्वज्ञानस्य न हेतुत्वम्, किंतु ब्रह्मज्ञानेच्छां प्रत्येवेति नेष्टसिद्धिः । अस्थिरं कर्मफलमिति ज्ञानवान्हि कर्मसु, तत्फलेषु च वैराग्यान्नित्यफलेच्छया ब्रह्म जिज्ञासति ।

**ननु** अतश्शब्दस्य केवलकर्मणो मोक्षाभावादित्यर्थः, ब्रह्मज्ञानसहितकर्मानुष्ठानार्थं ब्रह्म ज्ञातव्य-मित्यवशिष्टवाक्यार्थः, इति चेत्— **मैवम्**, तमस्तेजसोरिव कर्मज्ञानयोर्न समुच्चय इति पूर्वमेव मया समुच्चयवादस्यास्य निराकृतत्वात् । न च युक्त्यैव त्वया निराकृतो न तु प्रमाणत इति वाच्यम्, श्रुति-प्रमाणस्य दर्शितत्वात् । अथापि यद्यसन्तुष्टिस्तर्हि ब्रवीमि शृणु— 'तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय' इत्यादिश्रुतिभ्यः, 'तमो निवृत्तौ सूर्यस्तु यथा नान्यदपेक्षते । तथाऽज्ञाननिवृत्तौ तु ज्ञानं नान्यदपेक्षते ॥ तस्मात्कर्मप्रणाड्यैव ज्ञानशेषं न चान्यथा । अत एवोक्तमार्गेण तयोस्समसमुच्चयः ॥ सुतरामेव नास्त्येव सम्यगुक्तं मया बुधाः ।' इति सूतसंहितावचनात्, 'ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते-र्जु'नेत्यादिगीतावचनाच्च । 'तत्प्राप्तिहेतुर्विज्ञानं कर्मचोक्त'मिति वाक्यस्य तु विज्ञानं साक्षात्प्राप्तिहेतुः । कर्म क्रमेण तत्प्राप्तिहेतुरित्यर्थः । 'तपश्च, विद्या'चेति वाक्यस्य तु तपश्चित्तैकाग्र्यमित्यर्थान्न समुच्चयपरत्वमिति

बोध्यम् । नन्वेवमतश्शब्दस्य यदि रामानुजोक्तार्थो भवति दुष्टस्तर्हि को निर्दुष्टार्थ इति चेन्मयास्य शतमर्था दर्शिताश्शारीरकचतुस्सूत्रीविचारनामके ग्रन्थे इति तत एव तेऽवगन्तव्याः । इत्यतश्शब्दविचारः॥

## ब्रह्मजिज्ञासापदार्थविचारः ।

अथ ब्रह्मजिज्ञासाशब्दविचारो वितन्यते— ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्मण इति कर्मणि षष्ठी । इच्छाया इष्यमाणप्रधानत्वाद्ब्रह्मज्ञानं विधेयम्, ब्रह्म च निर्दोषस्सकलकल्याणगुणस्सर्वेश्वरः पुरुषोत्तम इति **रामानुजः**, ज्ञानं तर्करूपमेव नतु फलरूपं, तस्याविधेयत्वात्, सन्प्रत्ययस्तु विचारस्य रागप्राप्तत्वज्ञापनार्थ इति **श्रुतप्रकाशिकाकारः**। **तदयुक्तम्**—किमिच्छावाची शब्द इष्यमाणमभिधया प्रतिपादयति? यद्वा लक्षणया? **नाद्यः**— इच्छावाचकशब्दस्येष्यमाणवाचकत्वायोगात्, सतीष्यमाणवाचकत्वे इच्छावाचकत्वस्यैवासिद्धेः । नहीच्छेष्यमाणयोरैक्यं- येनेच्छावाच्यपीष्यमाणवाचकस्स्यात् । **न द्वितीयः**-- इष्यमाणस्यैवेह विधेयत्वेन इच्छावाचकपदप्रयोगायोगात्, 'अथाऽतो ब्रह्मजिज्ञास'मिति सूत्रणेनैवेष्टसिद्धौ 'अथातो ब्रह्मजिज्ञा'सेति सूत्रकरणमनर्थकं, गौरवावहं चेति भावः । न च सन्प्रत्ययो विचारस्य रागप्राप्तत्वज्ञापनार्थ इति वाच्यम्, तथा सति अप्राप्त एव शास्त्रमर्थवदिति श्रुतप्रकाशिकाकारवचनादेव प्रकृतशास्त्रस्यानर्थक्यप्रसङ्गात् । न हि रागप्राप्तब्रह्मविचारप्रतिपादकं वेदान्तशास्त्रमर्थवद्भवितुमर्हति । नापि धर्मजिज्ञासेतिवदिहापि सन्प्रत्ययोपपत्तिरिति वाच्यं, तत्रापि धर्मज्ञानं विधेयमित्यर्थवर्णने उक्तदोषप्रसङ्गात् । नापि निदिध्यासितव्यः विजिज्ञासितव्य इत्यादिश्रुत्यनुसाराय जिज्ञासेति प्रयुक्तमिति वाच्यम्, तत्रापि निदिध्यासनं विधेयं, विज्ञानं विधेयमित्याद्यर्थवर्णने उक्तदोषानतिक्रमणात् । न च ब्रह्मज्ञानस्य प्रीतिरूपत्वेनेच्छाविषयत्वात्सन्प्रत्ययनिर्देशोपपत्तिरिति वाच्यम्, किं विचारात्मकं ब्रह्मज्ञानं प्रीतिरूपं? किं वा फलात्मकं? नाद्यः- विचारस्य प्रीतिरूपत्वाभावात् । न द्वितीयः- विधेयत्वायोगेन तस्येहास्वीकारात् । तस्मा'द्वर्णेनाप्येकेनानर्थकेन न भवितव्य'मिति न्यायादत्र सन्प्रत्ययस्य सार्थक्यमवश्यं वक्तव्यमिति तदवचनाद**वद्यमेव** रामानुजभाष्यम् । तथा ब्रह्मशब्दः पुरुषोत्तमवाचीति सम्प्रतिपन्नम्, परं तु पुरुषोत्तमस्य तस्य गुणवत्त्वं विप्रतिपन्नम्, निर्दोषस्य तस्य निर्गुणत्वेनैव भाव्यत्वात् । न हि सगुणं वस्तु क्वापि निर्दोषमुपलभ्यते । श्रुतौच— 'निरवद्यं, निरञ्जनं, केवलो, निर्गुण'श्चेति ब्रह्मणि गुणदोषयोरभावः श्रूयते । न च विज्ञानमानन्दं ब्रह्मेति श्रुतेर्ब्रह्मणि ज्ञानानन्दौ गुणौ स्त इति वाच्यं, तत्र विज्ञानरूपमानन्दरूपं च ब्रह्मेत्येवार्थात् । विज्ञानमस्यास्तीति विज्ञानम्- आनन्दोस्यास्तीत्यानन्दमित्यर्थकल्पनस्यायुक्तत्वात् । अर्शआदिगणे एतत्पदयोरपाठात्, अर्शआदेराकृतिगणत्वेनैतत्पदस्वीकारस्य विप्रतिपन्नत्वात् । न च विशिष्टं ज्ञानं यस्य तद्विज्ञानमिति बहुव्रीहिरिति वाच्यं, 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुत्यन्तरानुरोधात् । किंच नेह सर्वेश्वरभूतं मायाशबलं ब्रह्म ज्ञेयं, तस्य मुक्ताप्राप्यत्वेनाज्ञेयत्वात् । मुक्तप्राप्यं निर्मायं शुद्धं हि ब्रह्मेह ज्ञेयम् । नचेश्वर एव मुक्तप्राप्य इति वाच्यं, स्वप्न इव जागरेऽपि जीवाज्ञानकल्पितस्येश्वरस्य मुक्तप्राप्यत्वायोगात् । न हि मुक्तौ जीवस्याज्ञानमस्ति येन तत्रेश्वरो भवेत् । तस्मात्परिपूर्णनित्यशुद्धबुद्धप्रत्यगभिन्नब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इति शङ्करोक्त एवार्थस्साधीयान् । अस्मिन्पक्षे सन्प्रत्ययस्य विचारलक्षकत्वेन सार्थक्यं ।

ज्ञानशब्दस्य च फलभूतो मुख्य एवार्थः, न तु विचाररूपो लाक्षणिक इति गुणश्च । न च सन्प्रत्ययाद्विचार इत्यस्य सिद्धावपि कथं वेदान्तविचार इत्यस्य सिद्धिरिति वाच्यं, ब्रह्मण औपनिषदत्वेन तद्ज्ञानस्य वेदान्तैकसमधिगम्यत्वात्तत्सिद्धिरिति । अत एव वेदान्तार्थविचारात्मकन्यायनिबन्धनरूपं तु शास्त्रं ब्रह्ममीमांसेति प्रसिद्धिः । **एतेन** ब्रह्मविचारः कर्तव्य इति वाक्यार्थाद्ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इति वाक्यार्थ एव समीचीन इति **सिद्धम्**—कुत इतिचेदुच्यते— पूर्ववाक्यार्थे फलं न दर्शितं, विचारसाधनं च न दर्शितमिति तयो रवचनं दोषः । उत्तरवाक्यार्थे तु फलं ब्रह्मज्ञानरूपं दर्शितं, विचारसाधनं च वेदान्तरूपं दर्शितमित्यदोषः । न च ब्रह्मज्ञानं न फलं किंतु मोक्ष एवेति वाच्यं, ब्रह्मविचारंप्रति ब्रह्मज्ञानस्यैव फलत्वात् , ब्रह्मज्ञानातिरिक्तमोक्षाख्यफलाभावाच्च । न च ब्रह्मज्ञाना द्या ब्रह्मावाप्तिस्सैव मोक्ष इति वाच्यं, ज्ञायमानब्रह्मण एव प्राप्यमाणब्रह्मत्वात् 'यत्साक्षादपरोक्षाद्ब्र'ह्मेति श्रुतेः । न च अपरोक्षतया ज्ञायमानादपि घटाद्यथा प्राप्यमाणो घटः पृथग्भूतस्तथैवापरोक्षतया ज्ञायमानाद्ब्रह्मणोपि प्राप्यमाणं ब्रह्म भिन्नमेवेति वाच्यं, घटस्य परिच्छिन्नत्वात्तथाऽस्तु अपरिच्छिन्ने तु ब्रह्मणि नैवं कल्पयितुं शक्यमिति ।

समाप्तो ब्रह्मजिज्ञासापदविचारः ।

## अथ स्वाध्यायविधिविचारः ।

'स्वाध्यायोऽध्येतव्य' इति विधिः किमक्षरराशिग्रहणमात्रपरः ? किं वा फलवदर्थावबोधपर्यन्त इति **संशयः** । तत्र द्वितीयः पक्षोऽस्मदीयैराश्रितः, पूर्वः पक्षस्तु रामानुजेन । स चायुक्तः- तथाहि 'स्थाणुरयं भारवाहः किलाभूदधीत्य वेदं न विजानाति योऽर्थ'मिति श्रुतेरर्थावबोधरहितस्य वेदाध्ययनस्य निरर्थकत्वान्निरर्थकस्य वेदविहितत्वायोगाच्च । यजेतेत्यादिर्हि वेदः फलवत्स्वर्गाद्यर्थमेव विधत्ते, न त्वफलमन्यथा अप्रामाण्यप्रसङ्गात् । न हि लौकिकोपि निरर्थकश्शब्दः क्वापि प्रमाणं भवितु मर्हति, किंपुनर्वैदिकः । पुत्रस्ते जात इत्याद्याप्तवाक्यस्यानन्दाद्यर्थजनकत्वसम्प्रतिपत्तेः । अत एव न क्रियार्थ एव वेदः प्रमाणं, किंतु फलवदर्थावबोधक एव वेदः प्रमाणमिति निर्णीतमाचार्यैः पूर्वैः । तच्च फलवदर्थावबोधकत्वं वेदपूर्वोत्तरभागयोरविशेषेणास्ति । पूर्वभागस्य स्वर्गादिफलवद्यज्ञाद्यर्थप्रतिपादकत्वादुत्तरभागस्य च मोक्षफलवद्ब्रह्मप्रतिपादकत्वाच्च । एवं वेदस्य फलवदर्थावबोधकत्वादेव वेदाध्ययनस्य फलवदर्थावबोधपर्यन्तत्वं युक्तम् । स च वेदार्थावबोधः व्याकरणनिरुक्तादिना सम्पाद्य इति कृत्वा वेदाध्ययनविधिनैव वेदाङ्गाध्ययनमपि विहितम्। अतएव शुक्लपक्षेषु वेदान्पठेदिति वेदाङ्गानि समस्तानि कृष्णपक्षेषु सम्पठेदिति च स्मर्यते । नचैवं साङ्गाध्ययनवशादेव फलवदर्थावबोधस्य जातत्वाद्व्यर्थैयं कर्ममीमांसा ब्रह्ममीमांसा चेति वाच्यं, आपाततो जातेप्यर्थावबोधे संशयविपर्ययरहितनिष्कृष्टार्थावबोधस्याजातत्वेन तदर्थं मीमांसायाः कर्तव्यत्वात् । नचापाततोऽर्थावबोधस्तर्हि व्यर्थ इति वाच्यं, आपाततोप्यर्थावबोधाभावे अर्थनिर्णयजिज्ञासाया एवानुदयापत्तेः । तस्मात्साङ्गाध्ययनं विधाय तत्रापाततो ज्ञायमानज्योतिष्टोमब्रह्माद्यर्थनिर्णयाय कर्मब्रह्ममीमांसा कर्तव्या । तत्र च यः स्वर्गकामो ज्योतिष्टोमादिपदार्थजिज्ञासुस्स एव पूर्वमीमांसां पठेत् , यः पुमान् मोक्षकामो ब्रह्मजिज्ञासुस्स उत्तरमीमांसामेव पठेदिति न पूर्वमीमांसाध्ययनमपेक्षते उत्तरमीमांसा । न च पूर्वमीमांसाध्ययन-

नात्कर्मस्वरूपे तत्फलस्य चानित्यत्वे निश्चिते सत्येवोत्तरमीमांसायां प्रवृत्तिः पुरुषस्य जायत इति वाच्यं, साङ्गस्वाध्यायादेव कर्मफलानित्यत्वनिश्चयो ब्रह्मज्ञानफलमोक्षनिश्चयश्च भवत्येव पुरुषस्य । नचैवं मीमांसाध्ययनं व्यर्थमिति वाच्यं, कर्मण इतिकर्तव्यतादिज्ञानार्थं पूर्वमीमांसाया अध्येतव्यत्वाद्ब्रह्मात्मयाथात्म्यज्ञानार्थमुत्तरमीमांसायाश्चाध्येतव्यत्वात् । न च कर्मफलानित्यत्वनिश्चये सति किं तदितिकर्तव्यतादिज्ञानेनेति पूर्वमीमांसा न पठनीयैवेति वाच्यं, अनित्येपि कर्मफले स्वर्गादौ विषयसुख इव लौकिके कामवशात्तदितिकर्तव्यताज्ञानस्यापेक्षितत्वात् । **अयंभावः**—अधीतसाङ्गस्वाध्यायः फलवदर्थावबोधशाली पुरुषः ऐहिकमामुष्मिकं च विषयसुखं सर्वमनित्यमिति जानन्नपि चित्तशुद्ध्यभावेन ऐहिकसुखकामनया यथा स्रक्चन्दनवनितादिकं परिगृह्णाति, तथा आमुष्मिकरम्भासम्भोगादिसुखकामनया ज्योतिष्टोमादिकं चिकीर्षति, स च चिकीर्षुः स्वचिकीर्षितकर्मेतिकर्तव्यतादिज्ञानार्थं पूर्वमीमांसामभ्यस्यति, कर्माणि च कुरुते, एवं विहितकर्माणि कृतवतस्तस्य दैवाद्यदि चित्तशुद्धिस्तर्हि संन्यस्य ब्रह्मजिज्ञासयोत्तरमीमांसां स पठति- नोचेन्नैव पठति । यस्य तु पुनस्साङ्गस्वाध्यायं कृतवतो दैवादादावेव चित्तशुद्धिस्तस्य ऐहिकामुष्मिकसुखकामाभावात्स्रक्चन्दनवनिताद्यपरिग्रहः संन्यासाश्रमस्वीकारपूर्वकमुत्तरमीमांसाध्ययनं च सम्भवति । अतएव 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्', 'ब्रह्मचर्यादेव प्रव्रजेत् गृहा'द्वेत्यादि श्रूयते । एवंचाशुद्धचित्तस्य सकामस्य गृहिण एव पूर्वमीमांसायामधिकारः, शुद्धचित्तस्य निष्कामस्य संन्यासिनस्तु न पूर्वमीमांसायां-- किं तूत्तरमीमांसायामेवाधिकार इति कृत्वा कथमुत्तरमीमांसाध्ययनस्य नियतपूर्ववृत्तं स्यात्पूर्वमीमांसाध्ययनम् । न च 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव' इति गीतावचनात्स्वकर्मणा ईश्वराराधनं विना चित्तशुद्ध्ययोगाच्चित्तशुद्ध्यर्थकेश्वराराधनकर्मकरणार्थमपि पूर्वमीमांसा पठनीयेति वाच्यं, इष्टापत्तेः । न च तावता पूर्वमीमांसाध्ययनानन्तर्यमुत्तरमीमांसायास्सेत्स्यति- किं तु चित्तशुद्ध्यानन्तर्यमेव, जन्मान्तरानुष्ठितनिष्कामकर्मवशादपीहजन्मनि चित्तशुद्धिसम्भवेनेहजन्मनि पूर्वमीमांसाध्ययनायोगात् । तस्मादिहजन्मनि अधीतसाङ्गस्वाध्यायस्य पूर्वमीमांसाध्ययनाभावेपि चित्तशुद्धिसत्त्वे उत्तरमीमांसायामधिकारस्सम्भवति, पूर्वमीमांसाध्ययनसत्त्वेपि चित्तशुद्ध्यभावे उत्तरमीमांसायामधिकारो न सम्भवतीति अन्वयव्यतिरेकाभ्यामुत्तरमीमांसायाश्चित्तशुद्ध्यानन्तर्यमेव सिद्ध्यति न तु पूर्वमीमांसानन्तर्य**मित्यनवद्यम्** । **एतेन** स्वाध्यायस्यार्थावबोधपर्यन्तत्वाच्छुद्धचित्तेनापातप्रतिपन्नमोक्षफलकब्रह्मज्ञानार्थं पूर्वमीमांसां विनैवोत्तरमीमांसा पठनीया, अशुद्धचित्तेन त्वापातप्रतिपन्नकर्मज्ञानार्थं पूर्वमीमांसा पठनीयेति विवेक**स्सिद्धः**, आपातप्रतीतस्य ब्रह्मज्ञानस्य निर्णयार्थं कर्मज्ञाननिश्चयस्यान्यपेक्षितत्वादिति । ननु साङ्गस्वाध्यायाध्ययनेन कर्मफलमनित्यमित्यापातज्ञाने सत्यपि तन्निश्चयाभावात्तदर्थं पूर्वमीमांसाध्येतव्येति चेन्मैवं, पूर्वमीमांसाध्ययनेनापि तन्निश्चयानुदयात्प्रत्युत कर्मफलातिरिक्तमोक्षफलाभावनिश्चयोदयात्, उत्तरमीमांसाध्ययनादेव कर्मफलानित्यत्वनिश्चयोदयाच्च । ननु पूर्वमीमांसान्यायैरेवोत्तरमीमांसार्थो विचारयितव्य इति पूर्वमीमांसाध्ययनानन्तरमेवोत्तरमीमांसाध्येतव्येति चेन्मैवं, मन्त्रैरेव मन्त्रार्थस्स्मर्तव्य इतिवत्किं पूर्वमीमांसान्यायैरेवोत्तरमीमांसार्थो विचारयितव्य इति नियमोऽस्ति, येन तर्कशास्त्राद्युक्तन्यायैरुत्तरमीमांसार्थो न विचारयितव्यः स्यात्, किंच यद्युत्तरमीमांसार्थः पूर्वमीमांसान्यायै-

विचारयितव्यस्तर्हि पूर्वमीमांसार्थः किं न्यायैर्विचारयितव्यः? न च स्वन्यायैरेवेति वाच्यं, तथोत्तरमीमांसाया अपि स्वन्यायैरेव विचारणीयत्वात् । न्यायाश्चाधिकरणानि ते पूर्वमीमांसायामिवोत्तरमीमांसायामपि सन्त्येव । यदि तु न्याश्च इत्यस्य युक्तयइत्यर्थस्तर्हि ते पूर्वमीमांसायामिवोत्तरमीमांसायां तर्कादिशास्त्रान्तरेषु च सन्त्येव । अपि च 'तेजो वै घृतं, आयुर्वै घृतं, पवित्रं वै हिरण्यम्' इत्यादिमन्त्रैरेव मन्त्रार्थस्स्मर्तव्य इति यथा पूर्वमीमांसायां दृश्यते, तथा तत्त्वमसीत्यादिमहावाक्यगततदादिपदार्थो 'स्सत्यं ज्ञानमनन्तं ब्रह्म'त्याद्यवान्तर-वेदान्तवाक्यैरेव स्मर्तव्य इति दृश्यते । ततश्च वेदार्थं वेदा इव, वेदान्तार्थं वेदान्ता एव प्रतिपादयन्ति । तद्व्यवस्थापरं मीमांसया प्रतिपाद्यते अतो न पूर्वमीमांसया भवत्युत्तरमीमांसायाः कोप्युपयोगः । सत्यप्युप-योगे कश्मिश्चित्स तर्कादिशास्त्रान्तरसाधारण एवेत्यलम् ॥

## ज्ञानस्य मोक्षसाधनतानिरूपणं, ध्यानस्य तदसाधनत्वनिरूपणं च ।

अथ मोक्षः केन साधनेन प्राप्यत इति विचार्यते—'ज्ञानादेव तु कैवल्य'मित्यद्वैतिनः, 'वेदना-त्कैवल्य'मिति **रामानुजः** । वेदनं च ध्यानं भक्तिरित्येतत् । ध्यानं चासकृदावृत्तं ज्ञानमेव, विजातीय-प्रत्ययातिरस्कृतसजातीयप्रत्ययप्रवाहस्य ध्यानत्वादिति । अत्र ध्यानान्मुक्तिवादिना रामानुजेन न किमप्यप-राद्धं, किंतु दैवात्तस्य ज्ञानपदार्थज्ञानं नासीत्, अतएव तेन श्रीभाष्ये महान् कोलाहलोऽकारि । तथाहि-'आत्मा वाऽरे द्रष्टव्य' इत्यात्मदर्शनं **विधीयते श्रुत्या** । तच्च श्रुतिविहितमात्मनो दर्शनं किं फलभूतं, यद्वा वृत्तिरूपम्? नाद्यः- फलस्याविधेयत्वात् । न चात्र विप्रतिपत्तिः, श्रुतप्रकाशिकाकारेणैवोक्तत्वात्फलं न विधेयमिति । अतः परिशेषाद्वृत्तिरूपमेव, वृत्तिज्ञानस्यान्तःकरणक्रियात्वेन विधेयत्वात् । अतएव श्रुतप्रकाशिकाकारोपि- विचारज्ञानस्य विधेयत्वमूचे । न च विचारज्ञानमेव विधेयं' न वृत्तिज्ञानमिति वाच्यं, वृत्तिज्ञानातिरिक्तविचारज्ञानाभावात् । विचार्यविषयाकारेणान्तःकरणपरिणामो हि विचारः, वृत्तिश्च अन्तःकरणस्य परिणामः क्रियैवेति वृत्तिः क्रियैव । वृत्तौ ज्ञानशब्दप्रयोगस्तु ज्ञानावच्छेदकतया औपचारिकः, साच वृत्तिः क्षणिकेति दीर्घकालं तत्सिद्ध्यर्थमावृत्तिः कार्यैव । अन्यथा वृत्त्यन्तरोदयेसति पूर्ववृत्तेर्नाशात् । **एतेन** आत्मा द्रष्टव्य इत्यस्य अविच्छिद्धमात्माकारवृत्तिसन्तानं, भावयेदित्यर्थस्सिद्धः । अस्यच भावनस्य फलं सच्चिदानन्दब्रह्मात्मसाक्षात्कार एव वृत्त्या विषयावरकाज्ञाननाशे सति विषय-साक्षात्कारसिद्धेः । स चात्मसाक्षात्कारः फलभूतं ज्ञानं प्रत्यक्षभूतं च । अस्य चात्मसाक्षात्काररूपज्ञानस्य फलं मोक्ष इति कथं ज्ञानान्मोक्षस्यानभ्युपगमः? त्वयापि हि भक्त्या ब्रह्म प्रत्यक्षं भवतीत्युच्यते, एवं ध्यानसाध्यस्यात्मसाक्षात्काररूपज्ञानस्य कथमात्मप्राप्तिरूपमोक्षहेतुत्वं? कथंवा ज्ञानसाध्यस्य मोक्षस्य ध्यान-साध्यत्वं, येन ध्यानादेव मोक्षो न तु ज्ञानादित्युच्येत? **ननु** आत्मसाक्षात्कारान्मोक्ष इत्यविवादं, स चात्मसाक्षात्कारो न क्षणिकाद्वृत्तिज्ञानाद्भवति, किंतु आमरणं वर्तमानान्निरन्तरादेव वृत्तिज्ञानसन्तानादि-त्यस्माभिरुच्यत इति **चेन्मैवम्**—किं तत्तद्विषयाकारं वृत्तिज्ञानं तत्तद्विषयावरकमज्ञानं नाशयति, उत न?- आद्ये कथं क्षणिकादपि ब्रह्मात्माकाराद्वृत्तिज्ञानाद्ब्रह्मात्माहरकाज्ञाननाशे तत्पूर्वक ब्रह्मात्मसाक्षा-त्काराभावः?- द्वितीये वृत्तिज्ञानसन्तानादपि कथमज्ञाननाशपूर्वको विषयसाक्षात्कारः? न च सन्ततमेव

वृत्तिज्ञानमज्ञाननाशकमिति वाच्यं, घटादौ तथाऽदर्शनात्। **ननु** सकृद्दृष्टेपि घटे पुनरज्ञानावरणसम्भवेन पुनर्घटदर्शनार्थं चक्षुर्वृत्तेरपेक्ष्यमाणत्वात्सर्वदा घटदर्शनकामिना सर्वदा घटाकारवृत्तिर्जनयितव्यैव। एवं सकृदवगतेपि ब्रह्मात्मनि पुनरज्ञानावरणसम्भवेन पुनस्तन्निवृत्तये वृत्तिरावश्यक्येव। तथाच सर्वदा आत्मदर्शनकामिना सर्वदा आत्माकारान्तःकरणवृत्तिः कर्तव्यैवेति **चेन्मैवम्**— कादाचित्कापरोक्ष्यशालिनि घटे भवतु तथा, नित्यापरोक्षे ब्रह्मात्मनि कथं तथा भवेत्। नच न नित्यापरोक्षं ब्रह्मेति वाच्यं, 'यत्साक्षादपरोक्षाद्ब्रह्मे'ति श्रुतेः। नचैवं नित्यापरोक्षे ब्रह्मात्मनि वृत्तिरपि व्यर्थैवेति वाच्यं, नित्यापरोक्षेपि तस्मिन्नज्ञानकल्पितपरोक्षभ्रमव्युदासार्थं वृत्तेरावश्यकत्वात्। यद्वा मास्तु नित्यापरोक्षं ब्रह्म, तथापि नानुपपत्तिः, ज्ञानात्प्राक्परोक्षमपि पश्चात्सदाऽपरोक्षमेवेति परिपूर्णत्वाद्ब्रह्मणः स्वात्मानन्यत्वाच्च। **ननु** यद्येवं क्षणिकादेवात्माकारवृत्तिज्ञानादात्मसाक्षात्कारस्तर्हि ब्रह्मविदां कुतस्संसारोपलम्भ इति **चेदुच्यते**—यैर्ब्रह्म साक्षात्कृतं तेषां नैव संसारः, येषां संसारस्तैर्ब्रह्म नैव साक्षात्कृतमिति। नचैवं समाधिर्व्यर्थ इति वाच्यं, स्वानन्दानुभवार्थं तस्यावश्यकत्वात्। समाहिते हि चेतसि स्वानन्दः स्फुरति, तस्माद्येषां क्षणमप्यात्माकारान्तःकरणवृत्तिरासीत्ते कृतात्मसाक्षात्कारत्वान्मुच्यन्त एव प्रारब्धावसाने। येषां पुनस्सर्वदाऽऽत्माकारान्तःकरणवृत्तिरस्ति तेपि प्रारब्धावसाने विदेहमुक्तिं प्रपद्यन्ते। परंतु जीवन्मुक्तिमपि जीवद्दशायामिति विशेषः। **एतेन** जीवन्मुक्तिसुखाभिलाषिणैव निरन्तरमात्मध्यानं कर्तव्यं, विदेहमुक्तिकामिना तु आत्मसाक्षात्कार एव सम्पाद्य इति **विवेकस्सिद्धः**। तस्मादसकृदावृत्तादनावृत्ताद्वा वृत्तिज्ञानादात्मविषयादात्मसाक्षात्कारेसति जन्तुः कैवल्यं प्राप्नोतीति **सिद्धान्तः**। इदं चात्माकारं वृत्तिज्ञानं विचारितावेदान्तमहावाक्यादेव जायते। नच स्वर्गादिवाक्यादिव वेदान्तवाक्यादपि नापरोक्षज्ञानजनकवृत्त्याविर्भाव इति वाच्यं, स्वर्गादेः परोक्षत्वात्तत्र तथास्तु—ब्रह्मात्मनोऽपरोक्षत्वात्तु न तथा, किंतु दशमस्त्वमसीतिवाक्यादिव जायत एवेति बोध्यं इति। यदि त्वात्मा द्रष्टव्य इति श्रुतिगतमात्मदर्शनमात्मसाक्षात्कार इति मतं, तर्हि आत्मासाक्षात्कारायात्माकारा वृत्तिर्जनयितव्येति श्रुत्यर्थः। आत्मसाक्षात्कारो जनयितव्य इत्यर्थाश्रयणेपि न दोषः। फलभूतस्य ज्ञानस्य नित्यचैतन्यरूपत्वेनाजनयितव्यत्वेपि वृत्तिविशिष्टचैतन्यस्यादिमत्वेन जनयितव्यत्वात्। स्वाकारवृत्तिविशिष्टचैतन्याभिन्नं विषयचैतन्यं हि प्रत्यक्षज्ञानम्। अथ यदि आत्मोपासनंनाम 'अन्नं ब्रह्मेत्युपासीत', 'प्राणो ब्रह्मेत्युपासीते'त्यादिव'दात्मा ब्रह्मेत्युपासीते'ति आहार्यमात्मविषयकं ब्रह्मध्यानमिति विवक्षितं, तर्हि नास्माद्ध्यानात्कदाचिदपि ब्रह्मात्मसाक्षात्कारः। किंतु एवमनवरते ध्याने क्रियमाणेसति यदि दैवाद्ब्रह्मात्माकारान्तःकरणवृत्त्युदयस्तदानीमात्मसाक्षात्कारस्सम्पद्यते। इदं च 'अहं ब्रह्मास्मी'त्यस्याऽऽवृत्तिरूपमाहार्यं ध्यानं मन्दाधिकारिणंप्रति विहितम्। संवादिभ्रमवदिदं च फलदमेव। अपितु न सद्यःफलदं, किंतु कालविलम्बेन। अत एवेदं ध्यानमामरणादहरहः कर्तव्यमसकृदित्युच्यते। तस्माद्यदि रामानुजेन- 'निदिध्यासितव्य' इति श्रुतिविहितमात्मध्यानमहं ब्रह्मास्मीत्याहार्यरूपमित्यभ्युपगतं तर्हि न तत्साक्षान्मुक्तिसाधनं, किंतु ब्रह्मसाक्षात्कारजनकवृत्तिजननद्वारैव। यदि तु ब्रह्मात्माकारान्तःकरणवृत्तिरूपमित्यङ्गीकृतं तर्हि तदपि न साक्षान्मुक्तिसाधनं, किंतु ब्रह्मसाक्षात्कार-

जननद्वारैव । एवमुभयथापि ज्ञानादेव साक्षान्मुक्तिरिति सिद्धत्वेन कथं ज्ञानान्मुक्तिरित्यद्वैतवादस्य प्रतिक्षेपः?- कथं वा ध्यानादेव मुक्तिरिति स्ववादस्य स्थापनं च इति ॥

ननु साक्षात्काररूपाद्‌ज्ञानादेव मुक्तिः, परं तु 'याऽन्ते मतिस्सा गति' रिति न्यायादन्तकालोपलक्षितादेव तस्मान्मुक्तिः । अत एव 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति ब्रह्मविदः कैवल्यं प्रति प्रारब्धावसानसमयनिरीक्षणं श्रूयते । तच्चान्तकालिकमात्मज्ञानं जीवद्दशायामनवरतात्मभावनावशादेव जायते, ततोऽहरह आत्मसाक्षात्कारः कर्तव्यः, अन्यथा तु पटसाक्षात्कारेण घटसाक्षात्कारस्येवाऽनात्मसाक्षात्कारेणात्मसाक्षात्कारस्य नष्टत्वादन्तकाले यदि दैवादनात्मसाक्षात्कारस्सम्भवेत्तर्हि ब्रह्मविदोऽपि पुनर्जन्मावश्यंभावीति न मुक्तिरिति- नैतद्युक्तम्, ब्रह्मविदो विदेहमुक्तिं प्रति प्रारब्धावसानसमयनिरीक्षणं श्रुत्योच्यते । ब्रह्मज्ञानसमकालमेव ब्रह्मीभूतत्वेन मुक्तस्य ब्रह्मविदः परिदृश्यमानो देहः प्रारब्धावसानसमयपर्यन्तमवतिष्ठत इति तदर्थः । 'देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रतिसमीक्षत एव सासुः' इति भागवतात् । नच ब्रह्मज्ञानकाल एव यदि मुक्तिस्तर्हि ब्रह्मविदो द्वैतदर्शनं न स्यात्, न चेष्टापत्तिः- अध्यात्मविद्यासम्प्रदायोच्छेदप्रसङ्गात्, तत्त्वविदा हि योग्याय शिष्यायाध्यात्मविद्योपदेष्टव्या । तत्त्वविदुपदिष्टमेव ज्ञानमविद्यानिवर्तनक्षममिति शङ्कराचार्यैरेवोक्तत्वाद्गीताभाष्ये । स च तत्त्वविद्यदि शिष्यशास्त्रादिद्वैतदर्शी तर्हि नैव तत्त्ववित्, तत्त्वविदो मुक्तत्वान्मुक्तस्य च द्वैतदर्शनायोगात्, यदि तु द्वैतादर्शी तर्हि उपदेशासिद्धिरेवेति वाच्यम्, यथा नित्यशुद्धबुद्धमुक्तस्वभावोपीश्वरोऽज्ञानाज्जीवैर्जात इव मृत इव संसारीव दृष्टस्तद्वद्ब्रह्मविदप्यज्ञानाज्जीवैर्व्यवहरन्निव दृश्यते- न तु स्वदृष्ट्या ईश्वरस्येव ब्रह्मविदः कोपि व्यवहारः । तदुक्तमध्यात्मरामायणे विश्वामित्रेण— श्लो ॥ 'रामो न गच्छति न तिष्ठति नानुशोचत्याकांक्षते त्यजति नो न करोति किंचित् । आनन्दमूर्तिरचलः परिणामहीनो मायागुणाननुगतो हि तथा विभाति ॥' इति बीजाज्ञानवशाद्गमनादिमानिव रामो विभातीत्यर्थः । न चेश्वराज्ञानवशादित्येवार्थ इति वाच्यमीश्वरास्याज्ञानायोगात् । एतेन ज्ञानोत्पत्तावपि भेदवासनाया अनुवृत्तौ निवर्तकान्तराभावान्न तस्या निवृत्तिस्स्यादिति प्रत्युक्तम् । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥' 'ब्रह्मविद्ब्रह्मैव भव'तीत्यादिश्रुतिभ्यः- ज्ञानसमकालमेव मुक्तिश्रवणान्नास्ति तत्त्वविदो भेदस्याज्ञानस्य वा वासानाया अनुवृत्तिरिति । किंच ज्ञानात्प्रागपि नास्त्येवात्मनः कोपि बन्धः, कूटस्थत्वादात्मनः । कथं पुनः स पश्चाद्भविष्यति । नचैवं ज्ञानं व्यर्थमिति वाच्यम्, अज्ञानकल्पितबन्धनिवृत्त्यर्थं ज्ञानस्यावश्यकत्वादिति । यदप्येतेनोक्तम्— मुक्तिर्देहपातानन्तरं सुषुम्नानाडीद्वारा निष्क्रान्तस्य सूर्यरश्मिद्वारा ब्रह्मलोकमूर्ध्वंगतस्य भवतीति- तन्मन्दम् । किं मुक्तप्राप्यं ब्रह्म परिपूर्णं, यद्वा परिच्छिन्नम्? आद्ये इहैव ब्रह्मप्राप्तिर्भवेदिति किं लोकान्तरगमनेन । द्वितीये परिच्छिन्नस्य ब्रह्मणः कथं नित्यत्वादिकं सम्भवति । नहि परिच्छिन्ने घटे नित्यत्वादिकं दृश्यते, तस्माद्धिरण्यगर्भलोकप्राप्तिरूपा सगुणमुक्तिरेव देहपातानन्तरं नाडीद्वारोर्ध्वगतस्य भवति, न तु ब्रह्मप्राप्तिरूपा निर्गुणमुक्तिः । नच ब्रह्मप्राप्तिरूपा मुक्तिरेव नास्तीति वाच्यम्, 'ब्रह्मविदाप्नोति पर' मित्यादिश्रुतेः । किं च ब्रह्मविदो ब्रह्मप्राप्त्यभावे

प्रति किं ब्रह्मणः पारोक्ष्यं हेतुः, किं वा दूरस्थत्वं, किंवा सुसूक्ष्मत्वं, किंवा जवनत्वं? नाद्यः- 'यत्साक्षादपरोक्षाद्ब्र'ह्मेति श्रुतेर्ब्रह्मणोऽपरोक्षत्व।द्ब्रह्मज्ञानात्पूर्वं भ्रान्त्या तस्य परोक्षत्वेपि तदनन्तरमपरोक्षत्वात्, यः परोक्षं ब्रह्मेति वेत्ति तस्याऽब्रह्मवित्त्वाच्च । न द्वितीयः- अविदुषो दूरस्थमपि ब्रह्म विदुषोन्तिक एवास्तीति । 'दूरस्थं चान्तिके च त'दिति श्रुतेः । न तृतीयः- 'महतो महीया'निति श्रुतेः । 'अणोरणीया'निति श्रुतेर्दुर्ज्ञेयत्वपरत्वात् । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित'इति श्रुत्यन्तरानुरोधाच्च । न चतुर्थः- परिपूर्णत्वेनाचलस्य तस्य जवनत्वायोगादतएव हि 'निष्कलं निष्क्रियं शान्त'मिति श्रूयते । 'अचलोयं सनातन' इतिच स्मर्यते । न चासङ्गत्वाद्ब्रह्म न प्राप्यते- 'असङ्गोह्ययं पुरुष'इति श्रुतेरिति वाच्यं, अचित्सङ्गाभावपरत्वात्तच्छ्रुतेः । न च चितापि नास्ति ब्रह्मणस्सङ्ग इति वाच्यं, चिद्रूपस्य ब्रह्मणश्चित्सङ्गभावाभावयोर्दुर्वचत्वात् । न च चिद्रूप आत्मैव न ब्रह्मेति वाच्यं, सच्चिदानन्दं ब्रह्मेति श्रवणात्, 'तद्ब्रह्म स आत्मे'ति ब्रह्मात्मनोरभेदश्रवणाच्च । तस्मादात्मस्वरूपभूतत्वेन ब्रह्म जीवेन नित्याप्तमेवेति न ब्रह्मप्राप्त्यभावस्तत्त्वविदः । न च नित्याप्तस्य ब्रह्मणः कथं ज्ञानात्प्राप्तिः, पुनः कथं वा तत्प्राप्तेः पुरुषार्थत्वमिति वाच्यं, विस्मृतकण्ठचामीकरन्यायेन नित्याप्तेपि ब्रह्मण्यज्ञानात्कल्पितस्यानाप्तत्वभ्रमस्य निवृत्त्या ब्रह्म पुनः प्राप्तमिव भवतीति तत्प्राप्तेः पुरुषार्थत्वव्यपदेशात् । अतएव 'विमुक्तश्च विमुच्यत' इत्युक्तमभियुक्तैरिति ॥

## यज्ञादीनां विविदिषांगत्वनिरूपणम् ।

अथ यज्ञादिकर्मभिः किं विविदिषा जायते, किं वा ज्ञानमिति **विचार्यते**—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशके'नेति श्रुतेरीश्वरार्थमनुष्ठितैर्यज्ञादिनिष्कामकर्मभिरात्मतत्त्वविविदिषैव जायत **इत्यस्मदीयाः** । इच्छाया इष्यमाणस्य प्रधानत्वाद्वेदनमेव जायत इति **रामानुजः** । **तदयुक्तम्**—तथात्वे विदन्तीत्येव वक्तव्ये विविदिषन्तीति सन्प्रयोगस्य व्यर्थत्वात् । नच सन्प्रयोगे सत्यपि असिना जिघांसतीत्यत्र यथा असेर्हननसाधनत्वमेव नतु हननेच्छासाधनत्वं तद्वत् यज्ञेन विविदिषन्तीत्यत्रापि यज्ञस्य वेदनसाधनत्वमेव नतु वेदनेच्छासाधनत्वमिति वाच्यं, असेर्हननक्रियांप्रतीव यज्ञस्य वेदनक्रियांप्रति करणत्वाभावात् । ज्ञानेन्द्रियाण्येव हि ज्ञानक्रियांप्रति करणानि- चक्षुषा रूपं पश्यति, श्रोत्रेण शब्दं शृणोति, त्वचा स्पर्शं वेत्ति, रसनेन रसं विजानाति, घ्राणेन गन्धं जिघ्रति, मनसा सुखमनुभवतीति प्रसिद्धेः । न चात्मदर्शने महावाक्यं करणमिति भवदीयैरेवोक्तमिति वाच्यं, घटदर्शने दीपस्येवात्मदर्शने महावाक्यस्य सहकारिकारणत्वाभ्युपगमात् । अतएव शास्त्राचार्योपदेशशमदमादिसंस्कृतमन्तःकरणमात्मदर्शने करणमिति शङ्कराचार्यैर्गीताभाष्ये भाषितम् । नचैवं यज्ञादेरप्यस्तु वेदनकरणस्य मनसस्सहकारित्वमिति वाच्यं, यथा घटावरकतमोनिरसनरूपोपकारो दीपेन कृतश्चक्षुषो विद्यते, तथा यज्ञेन कृतो मनस उपकारो न कश्चिदप्यस्ति । तस्मान्नास्ति यज्ञादेरात्मवेदनसाधनत्वम् । यद्वा महावाक्यमात्मदर्शने करणं भवतु नाम, तथापि न केवलं महावाक्यं करणं, किंतु विचारसहकृतमेवेति तत्रापि मनस एव प्राधान्यं, महावाक्यन्तूपायभूतमेव, चक्षुषो दीपवत् । नत्वेवं यज्ञादेरस्ति आत्मवेदनोपायत्वम् । नहि सोयं देवदत्त इति वाक्याद्देवदत्तमिव यज्ञेन कोप्यात्मानं जानाति- किंतु संस्कृतेन

मनसैव । अतएव 'मनसैवानुद्रष्टव्यं', दृश्यतेत्वग्र्यया बुद्ध्ये'तिच श्रूयते । यदि तु यज्ञादिजन्यसुकृत-सचिवेन मनसा दृश्यत इति यज्ञादेर्वेदनसाधनत्वमित्युच्यते, तर्हि यज्ञादिजन्यं तत्सुकृतमीश्वरानुग्रहरूपं शमादिचित्तैकाग्र्यरूपं वा भवितुमर्हतीति तत्सुकृतस्यैव वेदनोपायित्वमस्तु । अतएव स्मर्यते- 'ईश्वरानुग्रहादेव पुंसामद्वैतवासना । महाभयपरित्राणाद्विप्राणामेव जायते' इति । एवं च यज्ञादिजन्यादृष्टवशादेव पुरुषस्यात्मतत्त्वं वेत्तुमिच्छा जायते, न त्वात्मतत्त्ववेदनम् । तत्तु वेदान्तमहावाक्यार्थविचारादेवेति युक्तमुक्तमस्मदीयैर्यज्ञादीनां विविदिषोपयोग इति । **ननु** आत्मवेदनार्थं वेदान्तविचारः कर्तव्यः, आत्म-विविदिषार्थन्तु यज्ञाद्यनुष्ठेयमिति सिद्धम् । तथाचान्योन्याश्रयः- यज्ञाद्यनुष्ठाने सति आत्मविविदिषोदयः, आत्मविविदिषायां सत्यां यज्ञाद्यनुष्ठानमिति- **मैवम्**, ईश्वरप्रीत्यर्थं यज्ञाद्यनुष्ठेयं, ततश्चेश्वरानुग्रहादात्म-विविदिषा जायते । तेन च विविदिषुणा वेदान्तविचारः कर्तव्यः, तत आत्मज्ञानं जायत इत्यदोषात् । नह्यस्माभिरात्मविविदिषार्थं यज्ञाद्यनुष्ठेयमित्युच्यते, किंतु ईश्वरप्रीत्यर्थमनुष्ठितैर्यज्ञादिभिरात्मतत्त्वविविदिषा-वन्तो भवन्तीत्युच्यत इति भावः । तस्मान्नात्मवेदनसाधनत्वं यज्ञादीनां, सर्वप्रमाणविरोधात् । **यच्च** रामानुजेनोक्तप्रायणादहरहरात्मध्यानमसकृत्कर्तव्यं- 'तत्साधनानि च यज्ञादीनि यावज्जीवमनुष्ठेयानीति **तदुन्मत्तप्रलपितमेव—** एकेनैव पुरुषेणैकस्मिन्नेव काले यज्ञाद्यनुष्ठानात्मचिन्तनयोः कर्तुमशक्यत्वात् । चक्षु-रादीन्द्रियद्वारा बहिः प्रसृतान्तःकरणसाध्यानि यज्ञादीनि, तेषां बहिर्मुखमनोविषयत्वात् । चक्षुरादीन्द्रिय-व्यापारोपरमपूर्वकं निर्व्यापारैकाग्र्यचित्तसाध्यमात्मज्ञानम् । तस्यान्तर्मुखमनोविषयत्वात् । एवं सति- यो निरन्तरमात्मानं निदिध्यासति स कथं यज्ञादिषु व्याप्रियेत? तस्मात्सर्वकर्मसंन्यासिन एवात्मज्ञानं सम्भवति, नत्वसंन्यासिन इति कृत्वा नात्मानं निदिध्यासुना यावज्जीवं कर्मानुष्ठेयम् । यदुक्तमनेन ध्यानोत्पत्तये यज्ञाद्यनुष्ठेयं यावज्जीवमिति तदप्ययुक्तं, यावज्जीवं याज्ञादेरेवानुष्ठाने जन्मान्तर एवं ध्यानमुत्पत्स्यते, न त्विहजन्मनि । नचेष्टापत्तिः, अस्मिन्नेव जन्मन्यात्मध्यानस्य कर्तव्यत्वाद्गर्भवासादिसंसारनिबर्हणार्थम् । किंच यस्मादिहजन्मन्येव ध्यानं नोदितं तस्माज्जन्मान्तरे ध्यानमुदेष्यतीति का प्रमा? यदि त्वत्रैव जन्मनि यज्ञादेर्ध्यानमुत्पद्यते तर्हि ध्यानोत्पत्त्यनन्तरं यज्ञादिकरणं व्यर्थम् । ध्यानेनैव कालस्य सर्वस्य व्याप्तत्वेन यज्ञाद्यनुष्ठानकालाभावश्च । नच तर्हि यज्ञाद्यनुष्ठानं ध्यानोत्पत्त्यनन्तरं मास्त्विति वाच्यं, यावज्जीवं यज्ञाद्यनुष्ठेयमित्युक्तत्वात् । तथा यज्ञादेस्सकाशाद्ध्यानोत्पत्तिरप्ययुक्तैव, घटस्य मृद इव ध्यानस्य यज्ञादे-रुपादानत्वाभावात् । नच घटस्य दण्डवद्ध्यानस्य यज्ञादिर्निमित्तकारणमस्त्विति वाच्यं, ईश्वरानुग्रहरूपस्य चित्तशुद्धिरूपस्य वा यज्ञापूर्वस्यैव निमित्तत्वं, न यज्ञस्येति । तस्मादीश्वरानुग्रहादिनिमित्तकारणसचिवा-दन्तःकरणादेवोपादानादात्मध्यानं जायत इति न यज्ञादेर्ध्यानोत्पादकत्वमिति । **ननु** ज्ञानोत्पत्तये पापं कर्म निरसनीयं, तन्निरसनं चानभिसंहितफलेन स्वधर्मेणानुष्ठितेन । 'धर्मेण पापमपनुद'तीति श्रुतेः । तदेवं ब्रह्म-प्राप्तिसाधनं ज्ञानं सर्वाश्रमकर्मसापेक्षमिति यज्ञादेरेवात्मध्यानमुत्पद्यत इति **चेदत्रोच्यते—**अनभिसंहितफल-यज्ञादेरात्मज्ञानसाधनत्वं परंपरयाऽस्माभिरप्यभ्युगतमेवेति । परंतु विहितकर्मानुष्ठानात्पापनिवृत्तीश्वरानु-ग्रहादिपूर्वकमात्मविविदिषायां जातायां सर्वकर्मसंन्यासपूर्वकमात्मविचार एव कर्तव्य **इत्यस्माभिरुच्यते** ।

नहि विविदिषानन्तरं कर्मभिः पुरुषस्य कश्चिदस्त्युपयोगः । नच प्राचीनस्य पापकर्मणोऽनादिकालाद्वर्तमानस्यानन्तत्वाद्यावज्जीवं कर्मानुष्ठानेन विना नात्यन्तनाश इति वाच्यं, तथासति यावज्जीवानुष्ठानेनापि नाश इति कथं निश्चेयः? एवं बहुजन्मभिरनुष्ठानादेव तस्य नाश इति वक्तुं शक्यत्वात् । नच 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रजायते' इति वचनात्पापनाशस्य ज्ञानोत्पत्तिरेव लिङ्गमिति वाच्यं, पापनाशादेव ज्ञानोत्पत्तावुत्तरमीमांसाध्ययनस्यैव व्यर्थत्वेन तच्छास्त्रस्यैव व्यर्थत्वापत्तेः । दर्शितवचने तु ज्ञानपदं जिज्ञासापरमेव । तथाच शमदमादिपूर्वकमात्मजिज्ञासाया एव पापनिवृत्तिलिङ्गत्वाद्दृष्टे च पापनिवृत्तिलिङ्गे पापनिरसनार्थं यज्ञादिकर्म नैवानुष्ठेयम् । वस्तुतस्तु विविदिषाप्रतिबन्धकपापनिवृत्तिरेव विहितानुष्ठानाद्भवति, सञ्चितसर्वपापनिवृत्तिस्तु ज्ञानादेव, 'ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इति गीतावचनात् । अतएव 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति गीतं भगवता । **एतेन** शमादिः कर्म च समुच्चित्य आत्मवेदनसाधनमिति श्रुतप्रकाशिका च—**परास्ता** । कर्मणः पापनिरसनसाधनत्वस्य रामानुजेनैवोक्तत्वात् । शमाद्यन्तर्गतोपरतेः कर्मसंन्यासरूपत्वेन शमादेः कर्मसमुच्चयाभावात् । कर्मण इव शमादेरप्यात्मवेदनं प्रति साक्षात्साधनत्वाभावाद्ब्रह्ममीमांसाया एव तथात्वाद्ब्रह्ममीमांसांप्रति तु शमादेस्साधनत्वाच्च । यदुक्तं रामानुजेन— 'भक्तिलाभः विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्य' इति तदिष्टमेव । विवेकादिपदवाच्याहारशुद्ध्यादीनां परंपरया भक्त्युपयोगित्वादिति । तस्माद्यज्ञादिकर्मणां विविदिषायामेवोपयोगः, वेदनोपयोगित्वं तु तेषां विविदिषाद्वारैवेति वक्तव्यम्—इति ॥

## साधनचतुष्टयसम्पत्तेर्ब्रह्ममीमांसाप्राक्कालीनत्वम् ।

अथ नित्यानित्यवस्तुविवेकादयः किं कर्मब्रह्ममीमांसाश्रवणमन्तरेणोत्पद्यन्ते? किं वा नोत्पद्यन्ते इत्ययमंशो विचार्यते—**नैवोत्पद्यन्ते**, अतश्शमादिसम्पत्त्यनन्तरं ब्रह्ममीमांसाऽध्येयेति न वक्तव्यं, किंतु कर्मज्ञानानन्तरमित्येव वक्तव्यमिति **रामानुजः** । **तदसत्**—अधीतात्साङ्गस्वाध्यायादेव नित्यानित्यवस्तुविवेकस्य सुलभत्वात्सतिच नित्यानित्यवस्तुविवेके इहामुत्रफलभोगविरागस्य सम्भवात्सतित्वस्मिन्मुमुक्षुत्वसिद्धेश्शमादिसिद्धेश्चेति । तथाहि 'तत्सत्यम्', 'यो वै भूमा तदमृतम्', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'अविनाशी वा अरेऽयमात्मा', 'अजो नित्यश्शाश्वतोयं पुराणः', 'नित्यो नित्यानां', 'तद्विद्वानमृत इह भवति', 'ब्रह्मविद्ब्रह्मैव भवति', 'तरति शोकमात्मवित्' इत्यादिश्रुतिभिः ब्रह्मात्मनो नित्यत्वं, सत्यत्वं, तद्ज्ञानादेव पुरुषस्य तादृशब्रह्मत्वं चाविगम्यते । एवम्—'विज्ञानमानन्दं ब्रह्म', 'आनन्दो ब्रह्मेति व्यजानात्', 'रसो वै सः', 'रसꣳ ह्येवायं लब्ध्वानन्दी भवति' इत्यादिश्रुतिभिर्ब्रह्मात्मनस्सुखरूपत्वं च बोध्यते । एवं व्युत्पन्नस्य वेदान्तश्रवणान्नित्यसत्यसुखरूपो ब्रह्मात्मेत्यादिज्ञानं जायते, शब्दस्यार्थबोधनस्वाभाव्यादिति हि रामानुजेनैवोक्तं तथा- 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन', 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः', 'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते', 'अतोऽन्यदार्तम्', 'अथ यदल्पं तन्मर्त्यम्' इत्यादिश्रुतिभिर्ब्रह्मात्मभिन्नं सर्वमनित्यमसत्यमसुखरूपं चेति ज्ञानं जायते । तथाच नित्यानित्यवस्तुविवेकसिद्धिः, नित्ये सत्ये सुखरूपे च ब्रह्मात्मनि

उपादेयताबुद्धिः, अनित्ये असत्ये असुखे च स्वर्गादौ पशुपुत्रकलत्रादौ च हेयताबुद्धिर्भवति । ततो वैराग्यादिसिद्धिरिति । नचैवं वेदान्तश्रवणादेव ब्रह्मात्मज्ञानस्य जातत्वाद्ब्रह्ममीमांसा व्यर्थेति वाच्यं, सत्यं कुशाग्रबुद्धेस्तथैव । अतएव ब्रह्ममीमांसाशास्त्रस्य करणात्प्राक्काले जनकादयो वेदान्तश्रवणादेव मुक्तिं गताः । नहि पूर्वयुगेषु ब्रह्ममीमांसा कर्ममीमांसा वा वर्तते, व्यासेन जैमिनिना च द्वापरान्ते तयोः कृतत्वात् । ये तु नातिशूक्ष्मबुद्धयस्तेषां ब्रह्ममीमांसां विना वेदान्तश्रवणमात्रेण न ब्रह्मात्मसाक्षात्कारस्सम्भवति । एते हि वेदान्तं श्रुत्वा नित्यानित्यवस्तुविवेकं प्राप्यापि- "कथं संसार्यात्मनोऽसंसारिब्रह्माभेदः? कथंवा प्रत्यक्षादिप्रमाणसिद्धस्य प्रपञ्चस्यासत्यत्वं? कथंवा कालाकाशादेरनित्यत्वं ? कथंनाम दुःखमनुभवत आत्मनस्सुखरूपत्व"मित्यादिशङ्काग्रस्तचेतस्कतया ब्रह्मात्मसाक्षात्कारमलभमानास्तं विना मोक्षासिद्धिं निश्चितवन्त एवेति तदर्थं ब्रह्ममीमांसायां प्रवर्तन्ते । ततस्सर्वसंशयविपर्ययनाशे सत्यात्मसाक्षत्कारं प्राप्य कृतकृत्या मुच्यन्ते । ये पुनर्ब्रह्ममीमांसामधीत्यापि मन्दबुद्धय आत्मसाक्षात्कारं न प्रापुस्ते योगमार्गमनुतिष्ठेयुः । साङ्ख्यं योगश्चेति हि मुक्तेर्मार्गद्वयम् । 'तत्कारणं साङ्ख्ययोगाभिपन्न'मितिश्रुतेः । तत्र साङ्ख्यंनामात्मानात्मविचारः य इह ब्रह्ममीमांसायां कृतः । योग ईश्वरप्रणिधानं, यः पतञ्जलिना 'अथ योगानुशासन' मित्यारभ्य कृते योगशास्त्रे विद्यते । अनादिकालादारभ्यात्मसमवेततयाऽनुभूयमानस्य सुखदुःखभोगात्मकस्य जन्मजरामरणादिरूपस्य च संसारस्य नहि तत्त्वमसीत्युपदेशमात्रान्निवृत्तिर्येन ब्रह्ममीमांसा योगानुशासनं वा वृथास्यात्तस्मात् नित्यसत्यसुखरूपो ब्रह्मात्मा, अनित्यासत्यासुखरूपः प्रपंच इति नित्यानित्यवस्तुविवेके सत्येव सर्वं कर्म संन्यस्य तादृशात्मसाक्षत्काराय ब्रह्ममीमांसायां प्रवर्तत इति न ब्रह्ममीमांसायाः पश्चाद्भावित्वं नित्यानित्यविवेकादीनां, किंतु पूर्वभावित्वमेव । यदुक्तं श्रुतप्रकाशिकायां- तस्मादेवंविच्छान्तोदान्त इतिश्रुतावेवंविदिति श्रवणादधीतोत्तरमीमांसस्यैव शमादिसिद्धिरिति तदयुक्तं श्रुतेरुत्तरमीमांसायाः पूर्वमेव सद्भावात् । नच कलियुगादौ जनिष्यते शास्त्रमित्यभिप्रेत्य श्रुतिश्शास्त्रजन्यं ज्ञानमेवंविच्छब्देनानुवदति स्मेति वाच्यं, कृतादियुगान्तरीयपुरुषविषयत्वाभावप्रसङ्गादेतच्छ्रुतेः । किंच कलियुगे शास्त्रजन्यज्ञानवन्तश्शमादिसम्पन्ना भूत्वा आत्मन्यात्मानं पश्येयुरित्यर्थस्य सिद्धत्वेन कथं तदानीं तेषां शमादिसम्पत्तिरात्मसाक्षात्कारो वाऽज्ञानाम् ? तस्मात्सर्वयुगसाधारणश्रुतिगतैवंविच्छब्दस्य वेदान्तश्रवणजन्यज्ञानवानित्येवार्थः । अतश्शमादीनां साधनानां नोत्तरमीमांसाध्ययनानन्तर्यं सम्भवति ॥

## आत्मनः सुखरूपत्वनिरूपणम् ।

**यच्चोक्तं** श्रुतप्रकाशिकायां सुदर्शनाचार्येण वाचस्पतिमतखण्डनावसरे नित्यस्य दुःखासम्भिन्नसुखरूपत्वादुपादेयत्वमिति न वक्तव्यं, नित्यस्य कालादेस्सुखरूपत्वादर्शनान्नित्यस्यात्मनो दुःखासम्भिन्नसुखरूपत्वादर्शनाच्चेति, **तदसत्**—'अतोन्यदार्त'मिति श्रुत्यैव ब्रह्मभिन्नस्यार्तत्वप्रतिपादनेन कालादेरनित्यत्वात् । 'असङ्गोह्ययं पुरुषः', 'आनन्दो ब्रह्मेति व्यजाना'दिति ब्रह्मणो दुःखासंसृष्टसुखरूपत्वश्रवणाच्च । नच ब्रह्म तथाभूतमस्तु, आत्मा न तथाभूत इति वाच्यं, ब्रह्मात्मनोरभेदश्रवणात् । 'तत्सत्यं स आत्मे'ति 'तत्त्वमसि', 'अयमात्मा ब्रह्मे'त्यादिश्रुतिभ्यः नच सुख्यहं दुःख्यहमिति प्रतीतित

आत्मा दुःखसम्भिन्नसुखरूप इति वाच्यं, मनुष्योहं स्थूलोहं बधिरोहमित्यादि प्रतीतिवत्सुखित्वादिप्रतीतेरात्मतादात्म्याध्यासप्रयुक्तत्वात् । नचात्मा सुखवद्द्रव्यमेव, नतु गुणभूतसुखमिति वाच्यं, निर्गुणस्यात्मनस्सुखवद्द्रव्यत्वायोगात् । नचात्मा न निर्गुण इति वच्यं, 'केवलो निर्गुण'श्चेति श्रुतेः ।

**ननु** यद्यात्मा सुखं तर्हि सुखस्य गुणत्वेन निर्गुणत्वेपि यत्किञ्चिद्द्रव्याश्रितत्वमवश्यं वक्तव्यं, ततश्च शेषएव स्यात्कस्यापीति—**मैवम्**, सर्वशेषित्वादात्मनो वृत्तिज्ञानवद्वृत्तिसुखस्यैव गुणत्वेन चैतन्याभिन्नात्मसुखस्यागुणत्वेनान्यानाश्रयत्वात्, प्रत्युत सर्वस्याप्याश्रयत्वाच्चेति । ननु लोके अनित्यस्यैव सुखस्योपादेयत्वदर्शनात्सर्वं सुखमनित्यमुपादेयं चेति व्याप्तिसिद्धेर्यदि नित्य आत्मा तर्हि न सुखरूपो नाप्युपादेय इति चेन्मैवंवादीः, सुखस्यानित्यत्वे विषयजन्यत्वोपाधेस्सत्त्वात् । यद्विषयजन्यं सुखं तदनित्यमिति व्याप्त्या ऐहिकसुखवदामुष्मिकसुखेप्यनित्यत्वनिश्चयादेव विदुष ऐहिकामुष्मिकभोगविरागस्य जातत्वात् । अस्ति किञ्चिदजन्यं नित्यमात्मभूतं सुखमिति वेदान्ततः प्रतिपत्तेरात्मसुखे उपादेयत्वबुद्धिर्भवत्येव । किंच यस्यानित्येपि सुखे उपादेयत्वबुद्धिस्तस्य नित्ये सुखे उपादेयत्वबुद्धिः किं वक्तव्या, न केवलं श्रुतिप्रामाण्यादेवात्मनस्सुखरूपत्वं नित्यत्वंच, किंतु युक्तितोपि । तथाहि- अहं कदापि माभूवमिति न, किंतु सर्वदापि भूयासमिति परमप्रेमात्मनीक्ष्यते । तच्च परमप्रेमास्पदत्वमात्मनस्सुखरूपत्वाभावे न सम्भवति । लोके हि सुख एव प्रेम दृश्यते जन्तोः । नच सुखहेतावपि दृश्यत इति वाच्यं, तस्य सुखप्रयुक्तत्वेनान्यथासिद्धत्वात् । इदं चात्मनि दृश्यमानं प्रेम नान्यार्थं, किंत्वात्मार्थमेवेति निरुपाधिक मतएवात्मा सर्वस्यापि शेषी, नतु कस्यचिदपि शेषः । **एतेनात्मनो ब्रह्मशेषत्ववादः परास्तः** । यदितु ब्रह्मात्मनोर्भेद इत्येवाग्रहस्तर्हि ब्रह्मैवात्मनश्शेषस्स्यात्, पश्वादिवद्ब्रह्मणोप्यात्मार्थमेव प्रियत्वादित्यास्तां तत् ॥

## आत्मनो नित्यत्वनिरूपणम् ।

अथ नित्यत्वमात्मनः प्रतिपाद्यते—लोके काणत्वबधिरत्वकृशत्वस्थूलत्वकुष्ठित्वक्षयित्वविकलाङ्गत्वाधिकाङ्गत्वदरिद्रत्वधनिकत्वस्वामित्वभृत्यत्वस्त्रीत्वपुरुषत्वमनुष्यत्वपशुत्वपक्षित्वादिविविधवैचित्र्यवंतः प्राणिन उपलभ्यन्ते । तच्च वैचित्र्यं जन्मान्तरादृष्टाधीनम् । तच्च जन्मान्तरं ततः प्राचीनजन्मान्तरादृष्टाधीनमित्येवं जन्मपरम्पराया अदृष्टपरम्परायाश्चानादित्वादनाद्यदृष्टाश्रयत्वस्य सादिदेहादिनिष्ठत्वायोगादनाद्यात्माश्रयत्वमेवानाद्यदृष्टस्य वक्तव्यं, एवमनादित्वादेवानन्तत्वं च । नहि जन्मरूपाद्यभावे नाशरूपान्तस्सम्भवति भावपदार्थस्य । एवमाद्यन्तयोरभावादात्मा नित्य इति । मोक्षान्वयित्वाच्चात्मा नित्यः । मोक्षो हि नित्यः सर्वैरास्तिकैरभ्युपगतमोक्षस्यानित्यत्वे स्वर्गादितुल्यत्वेन कर्मभिरेव पुरुषः कृतार्थस्स्यादिति ब्रह्मविचारस्य तद्धेतूपनिषदां च वैयर्थ्यं स्यात्तस्मादात्मा नित्यसुखरूप इत्युपादेय एव ॥

## ब्रह्ममीमांसायाः कर्ममीमांसाध्ययनानन्तर्यनियमनिराकरणम् ।

**यच्चोक्तं** नित्यानित्यविवेकानन्तरमपि शास्त्रान्तरेषु कर्मकाण्डे च नित्यफलसम्भावनायाः निवारकाभावात्तन्निवारणार्थं कर्ममीमांसा ब्रह्ममीमांसायाः पूर्वमवश्यमध्येयेति **तदप्ययुक्तम्**—कर्ममीमांसा-

ध्ययनेन तन्निवारणाऽसिद्धेः । प्रत्युत कर्मफलातिरिक्तमोक्षफलाभावनिश्चयोदयाच्च । कर्मफलस्यानित्यत्व-निश्चयस्तु 'यत्कृतकं तदनित्य'मिति व्याप्तिसहकृता'तद्यथेह कर्मचित' इति वेदवाक्यादेव सम्भवति । नचैतावता ब्रह्ममीमांसाध्ययनं व्यर्थमिति वाच्यं, अहं ब्रह्मेति निश्चयार्थं तदावश्यकमिति प्रागेव प्रतिपादि-तत्वात् । **यदप्युक्तमनेन**—नित्यानित्यविस्तुविवेके सति ब्रह्मविचारः, ब्रह्मविचारे सति नित्यानित्य-वस्तुविवेक इत्यन्योन्याश्रय इति **तदप्ययुक्तं**, साङ्गस्वाध्यायाध्ययनेसति नित्यानित्यवस्तुविवेकः, तस्मिन्सति ब्रह्मविचार इति क्रमात् । नच ब्रह्मविचारात्प्रागापातत एव नित्यानित्यविवेक इति कृत्वा नित्यानित्य-निश्चयं विना ब्रह्मविचारे प्रवृत्त्ययोगान्नित्यानित्यनिश्चयेसति ब्रह्मविचारः, ब्रह्मविचारेसति नित्यानित्य-निश्चय इत्यन्योन्याश्रय इति वाच्यं, नास्माभिर्ब्रह्मविचारात्प्रागधिगतवेदान्तस्य पुरुषस्य नित्यानित्यविवेक आपाततो भवतीत्युच्यते येनायमन्योन्याश्रयस्स्यात् । किंतर्हि मोक्षएव नित्यः पुरुषार्थः, स्वर्गस्त्वनित्य एवेति नित्यानित्यविवेकनिश्चयएव भवति । ब्रह्मात्माभेदज्ञानं तु आपाततो भवति । तन्निर्णयायैव ब्रह्मविचारः कर्तव्यः । नच वेदान्तेषु ब्रह्ममीमांसायां च ब्रह्मात्मभेदएव वर्तत इति वाच्यं, तथासति नाहं ब्रह्मेति प्रत्यक्षसिद्धस्य ब्रह्मात्मभेदस्य प्रतिपादकमिदं वेदान्तशास्त्रं व्यर्थमेव भवेत् । अनधिगतार्थ-बोधकत्वेन हि शास्त्रस्य प्रामाण्यम् । नच प्रत्यक्षविरुद्धार्थबोधकत्वेसति वेदान्तशास्त्रस्याप्रामाण्यं स्या'दादित्यो यूप' इत्यादिवाक्यवदिति वाच्यं, प्रत्यक्षविरुद्धमपि भूमण्डलादधिकप्रमाणं सूर्यमण्डलमित्यादि प्रतिपादयतो ज्योतिश्शास्त्रस्य प्रामाण्याभ्युपगमात् । नाहं ब्रह्मेत्यज्ञप्रत्यक्षविरोधेपि तत्त्वमसीत्यादिवेदान्त-वाक्यस्य ब्रह्माहमस्मीति विद्वत्प्रत्यक्षाविरोधाच्च । नच नास्ति तथा विद्वत्प्रत्यक्षमिति वाच्यं, परहृदय-स्याप्रत्यक्षत्वेन विदुषस्तथा प्रत्यक्षं नास्तीति त्वया वक्तुमशक्यत्वादविदुषस्तव तथा प्रत्यक्षाभावस्य युक्तत्वाच्च । तस्माद्ब्रह्मविचारात्प्रागपि मोक्षे नित्यत्वनिश्चयः, स्वर्गादावनित्यत्वनिश्चयश्च विदुषस्सम्भवत्येव । इति । **यच्चानेनोक्तं** स्वर्गादिफलस्यानित्यत्वं दुःखसम्भिन्नत्वं च मीमांसायाः प्राक् निश्चेतुं न शक्यत इति **तदयुक्तम्**— वेदान्तैरेव निश्चेतुं शक्यमित्युक्तत्वात् । अपिच युक्तितोपि निश्चेतुं शक्यम् । तथाहि—स्वर्गादिफलमनित्यं कर्मजन्यत्वात्सस्यादिफलवत् । स्वर्गादिफलं दुःखसम्भिन्नं कर्मजन्यत्वा-त्सुरतसुखवत् । स्वर्गादिफलं दुःखसम्भिन्नमनित्यत्वादैहिकफलवत् । नचानित्यत्वमात्रेण कथं दुःखसम्भि-न्नत्वमिति वाच्यं, अनित्यं हि सुखं स्वोदयात्प्राक् स्वनाशानन्तरं च पुरुषस्य दुःखं जनयति, स्वकाले च व्ययभयाद्दुःखं जनयतीति । शतरूपिकास्सम्पादितवान् हि पुरुषस्तत्सम्पादनकाले बहुश्रमं प्राप्तवान्, तदनुभवकाले च रूपिका व्ययं यान्तीति खिद्यते, तन्नाशानन्तरं च रूपिका नष्टा इति खिद्यते । एवं सुखे सुखसाधने च दुःखसम्भिन्नत्वमनित्यत्वं च सुज्ञेयमेवेति न तदर्थं मीमांसा पठितव्या । नचाधिगतमीमांसस्यैवैतद्युक्तिप्रसर इति वाच्यं, अनधिगतमीमांसस्याप्यधिगतवेदवेदाङ्गस्याधिगततर्कादि-शास्त्रस्य चैतद्युक्तिप्रसरसम्भवादिति संक्षेपः ॥

**यच्च** रामानुजेनोक्तं शमादीनां साधनत्वं च विनियोगावसेयं, विनियोगश्च श्रुतिलिङ्गादिभ्यः, सच तार्तीय इति **तदसत्**—पूर्वमीमांसातृतीयाध्यायाध्ययनं विनैव 'शन्तो दान्त उपरत' इत्यादिश्रुत्यध्यय-

नादेव शमादीनामात्मविचारसाधनत्वज्ञानसिद्धेः । 'अथातो ब्रह्मजिज्ञा'सेति प्रकृतसूत्रार्थविचारादेव तदवगमाच्च । किंच इषेत्वेत्यादिमन्त्राणां शाखाच्छेदादिक्रियासु विनियोग इत्येतादृशविनियोगा एव तार्तीयाः, नतु शमादीनां ब्रह्मविचारे विनियोगास्तार्तीयाः, तत्र तददर्शनात् । शमादीनामन्तःकरणगुणत्वेन मन्त्रवद्विनियोज्यत्वाभावाच्च । मन्त्राणां हि विनियोगः क्रियासु प्रतिपाद्यः- अनधिगतत्वात्तस्य । नहि 'इषेत्वोर्जेत्वे'ति मन्त्रस्य शाखाच्छादने विनियोग इति विना शास्त्रं केनचिदधिगन्तुं शक्यते । शमादीनां ब्रह्मविचारसाधनत्वं तु न विनियोगावसेयं, किंतु वस्तुस्वाभाव्यादेवाधिगन्तुं शक्यते । ब्रह्मणो दुर्विज्ञेयत्वेन तद्विचारस्य चित्तैकाग्र्यसाध्यत्वाच्चित्तैकाग्र्यं च शमादिसम्पत्तिपूर्वकमिति । ब्रह्मणो दुर्विज्ञेयत्वं च 'श्रृण्वन्तोपि बहवो यं न विद्यु'रित्यादिवेदान्तैरेव सिद्धमिति । **एतेन** कर्मविचारोक्त-कृत्स्नन्यायसापेक्षो ब्रह्मविचार इति श्रुतप्रकाशिका **प्रत्युक्ता**—ब्रह्मविचारोक्तन्यायैरेव ब्रह्मणो विचार-यितव्यत्वादिति ॥

**यच्चोक्तं** रामानुजेन ब्रह्ममीमांसागतोद्गीथाद्युपासनानां कर्मत्वेन तद्ज्ञानार्थं कर्ममीमांसा ब्रह्म-मीमांसायाः पूर्वमध्येयेति, **तदप्यसत्**—ज्योतिष्टोमेन यियक्षुर्यथा तदितिकर्तव्यताज्ञानार्थं कर्ममीमांसा-मपेक्षते, तथा उद्गीथाद्युपासनानि विधित्सुर्न कर्ममीमांसामपेक्षते, किंतु ब्रह्ममीमांसामेव । तस्यामेव तेषां विचारितत्वादिति । नच कर्ममीमांसांविना कर्मस्वरूपस्य दुरधिगमत्वादुद्गीथोपासनादीनां च कर्मत्वात्तत्स्वरूपज्ञानार्थं कर्ममीमांसाऽध्येयेति वाच्यं, कृष्यादेरपि कर्मत्वात्तत्स्वरूपज्ञानस्य च कर्ममीमांसां विना दुरधिगमत्वात्तदर्थमपि कर्ममीमांसाऽध्येयेति वक्तव्यत्वापत्तेः । नचालौकिककर्मस्वरूपं कर्ममीमांसै-काधिगम्यमिति वाच्यं, कर्मकाण्डप्रतिपादितकर्मस्वरूपमेव कर्ममीमांसैकाधिगम्यं ज्ञानकाण्डप्रतिपादित-कर्मस्वरूपं तु ब्रह्ममीमांसैकाधिगम्यमेव । अतएवोद्गीथोपासनादीनां कर्ममीमांसायामविचारितत्वमिति । तस्माद्ब्रह्ममीमांसायाः कर्ममीमांसाध्ययनानन्तर्यं न वक्तव्यं, किंतु साधनचतुष्टयसम्पत्त्यानन्तर्यमेव । नैताव-न्मात्रेणास्माभिः कर्ममीमांसा नैवाध्येयेत्युच्यते- चित्तशुद्ध्यर्थं विहितकर्मणः कर्तव्यत्वात्तदितिकर्तव्यता-ज्ञानार्थं कर्ममीमांसाया अध्येतव्यत्वाच्च । परंतु ब्रह्ममीमांसाध्ययनार्थं कर्ममीमांसा नाध्येयेत्युच्यते । एतेन ब्रह्मविचारस्य कर्मविचारोक्तन्यायसापेक्षत्वेऽभ्युपगतेपि नास्माकं कापि क्षतिः, परंतु जन्मान्तरा-नुष्ठितकर्मवशादेव येषामिह जन्मनि चित्तशुद्धिरासीत्तेषां कर्ममीमांसाध्ययनेन न किमपि फलमिति कृत्वा अन्वयव्यतिरेकन्यायान्नियतपूर्ववृत्तित्वात्साधनचतुष्टयसम्पत्त्यानन्तर्यमेवाथशब्दस्यार्थ इत्युच्यते । नच चित्तशुद्धौ सत्यामपि कथं कर्ममीमांसान्यायानपेक्षत्वमुत्तरमीमांसाया इति वाच्यं, उत्तरमीमांसान्यायै-रेवोत्तरमीमांसाविचारस्सुकरः, यथा— पूर्वमीमांसान्यायैरिव पूर्वमीमांसाविचार इति । नचैवं कस्मात्पूर्व-मीमांसान्यायसापेक्षत्वमुत्तरमीमांसाया अभ्युपगतमिति वाच्यं, पूर्वमीमांसान्यायैरप्युत्तरमीमांसार्थो विचारयितुं शक्यत इत्यभिप्रायात् । **अयं भावः**—उत्तरमीमांसोपदेष्टारो गुरवो यदि तार्किकचक्रवर्तिनस्तर्हि तर्कशास्त्रोक्तन्यायैरेव शिष्यस्य मीमांसार्थं बोधयन्ति, यदितु मीमांसकचक्रवर्तिनस्तर्हि कर्ममीमांसोक्तन्यायैः, यदितु केवलवेदान्तिनस्तर्हि उत्तरमीमांसान्यायैरेवेति । नच केवलवेदान्तित्वमसिद्धमिति वाच्यं, विना

तर्काध्ययनं विना मीमांसाध्ययनं च कृतब्रह्मविचाराणामपरोक्षीकृतब्रह्मात्मनां च बहूनामिदानीमुपलम्भादिति संक्षेपः ॥

## निर्विशेषात्मनिरूपणम् ।

'निर्विशेषं वस्तु किंचिदस्ति उत न' इत्ययमंश इह विचार्यते---**निर्विशेषं** वस्तु नास्त्येव, सर्वस्यापि वस्तुनस्सविशेषत्वाद्ब्रह्मणश्च नित्यत्वादिविशेषवत्त्वेन निर्विशेषत्वाभावादिति **रामानुजः** । **तदसत्**—किं निर्विशेषवस्तुनस्सत्त्वे निर्विशेषं वस्तु नास्तीति निषिध्यते? उतासत्त्वे? नाद्यः- सत्त्वे निषेधायोगात् । नान्त्यः- असत्त्वे शशशृङ्गादिवन्निषेधायोगात् । नच नास्माभिर्निर्विशेषं वस्तु नास्तीत्युच्यते, किंतु ब्रह्मणो निर्विशेषत्वं नास्तीत्युच्यत इति वाच्यं, तथापि किं ब्रह्मणो निर्विशेषत्वस्य सत्त्वे त्वया तन्निषेधः क्रियते? उतासत्त्वे? उभयथापि निषेधायोगएवेति । नच भ्रान्तिसिद्धं ब्रह्मणो निर्विशेषत्वं मया निषिध्यते, यथा- युष्माभिर्भ्रान्तिसिद्धस्य द्वैतस्य निषेधस्तद्वदिति वाच्यं, द्वैतस्य सत्त्वं भ्रान्तिसिद्धमिति वेदान्तैर्ज्ञायते, ब्रह्मणो निर्विशेषत्वं भ्रान्तिसिद्धमिति कथं त्वया ज्ञायते, येन तथोच्येत इति । नच सविशेषे ब्रह्मणि निर्विशेषत्वस्थितिव्याघातादेवास्माभिर्ब्रह्मणो निर्विशेषत्वं भ्रान्तिसिद्धमित्युच्यत इति वाच्यं, सविशेषे ब्रह्मणि निर्विशेषत्वस्थितेर्व्याहतत्वेपि निर्विशेषे ब्रह्मणि निर्विशेषत्वस्थितेरव्याहतत्वात् । तस्माद्ब्रह्मणस्सविशेषत्वमेव भ्रान्तिसिद्धम् ॥

## रामानुजाभ्युपगतसविशेषत्वनिराकरणम् ।

**ननु** 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिश्रुतेस्त्वदभिमते निर्विशेषे चिन्मात्रे ब्रह्मण्येव सत्यत्वानन्तत्वादिविशेषसद्भावात्कथं ब्रह्मणो निर्विशेषत्वमिति **चेदुच्यते**—किं विशेषस्सविशेषे वस्तुनि वर्तते? उत निर्विशेषे? न द्वितीयः, व्याघातात् । नाद्यः, सविशेषे विशेषो वर्तत इत्यत्र समस्तपदवर्ती विशेषः किं व्यस्तविशेषाद्भिन्नः, उताभिन्नः? नान्त्य आत्माश्रयात् । अद्ये भिन्नस्स विशेषः किं सविशेषे वर्तते, उत निर्विशेषे? नान्त्यः व्याघातात् । आद्ये सच तृतीयसमस्तपदवर्ती विशेषः किमाद्याद्व्यस्तविशेषाद्भिन्न उताभिन्नः? अन्त्ये अन्योन्याश्रयः । आद्ये सच भिन्नो विशेषः किं सविशेषे वर्तते, उत निर्विशेषे? अन्त्ये व्याघातः । आद्ये सच तृतीयसमस्तपदवर्ती विशेषः किमाद्यव्यस्तविशेषाद्भिन्न उताभिन्नः? अन्त्ये चक्रकम् । आद्ये सच भिन्नो विशेषः किं सविशेषे वर्तते, उत निर्विशेषे? अन्त्ये व्याघातः । आद्ये त्वनवस्थेति । तथाच नित्यत्वादिविशेषवति नित्यत्वादिविशेषरहिते वा ब्रह्मणि नित्यत्वादिविशेषाः सन्तीति वक्तुमशक्यत्वाद्ब्रह्मणि सविशेषत्वस्य भ्रान्तिसिद्धत्वा**न्निर्विशेषब्रह्मसिद्धिरिति** । अपि च नित्यत्वादयो विषेषाः किं सविशेषा उत निर्विशेषाः? अन्त्ये निर्विशेषवस्तुसिद्धिरपरिहार्या । आद्ये नित्यत्वादिविशेषगतविशेषाः किं सविशेषा, उत निर्विशेषाः? अन्त्ये निर्विशेषं वस्तु सिद्धमेव । आद्ये नित्यत्वादिविशेषगतविशेषाः किं सविशेषा, उत निर्विशेषाः? अन्त्ये निर्विशेषसिद्धिः । आद्ये अनवस्था । **यच्चात्रोक्तं** श्रुतप्रकाशिकायां धर्मेण धर्मी सविशेषः, धर्मिणा च धर्मस्सविशेषः, कस्य चिद्धर्मभूतं धर्मिभूतं वा यन्न भवति तत्प्रमाणशून्यमिति **तदप्यसत्**—किं धर्मो धर्मिणि वर्तमानस्सन्

स्वस्य धर्मिणो वा सविशेषत्वं सम्पादयति, उताधर्मिणि? नान्त्यः, व्याघातात् । नाद्यः- धर्मो धर्मिणि वर्तत इति वाक्ये धर्मिन्शब्दगतो धर्मः किं प्रथमान्तधर्माद्भिन्न उताभिन्नः? अन्त्ये आत्माश्रयः । आद्ये प्रागुक्तरीत्या अन्योन्याश्रयादिदोषा ऊह्याः । तथा धर्मिणो धर्म इत्यप्ययुक्तं, किं धर्मिन्शब्दगतो धर्मः प्रथमान्तधर्माद्भिन्न उताभिन्नः? आद्ये अन्योन्याश्रयादयः पूर्ववदूह्याः । द्वितीये आत्माश्रय इति । एवं धर्मस्य धर्मीत्यत्रापि बोद्धव्यम् । अपि च यस्य यो धर्म इत्युच्यते तस्य तस्माद्विवेचने कृतेसति स निर्धर्मक एवावशिष्यत इति निर्विशेषवस्तुसिद्धिः, तथाहि— शुक्लाद्घटाच्छुक्ले गुणे पृथक्कृतेसति बुद्ध्या निर्गुण एव घटश्शिष्यते । तस्माच्च घटात्कम्बुग्रीवाद्याकारे पृथक्कृतेसति निराकार एव घटोऽवशिष्यते । तस्माच्च मृद्रूपान्निराकाराद्घटान्मृदः पृथक्करणे निर्विशेषं सन्मात्रमेव वस्त्ववशिष्यत इति । तथा च घटोऽयमित्यनुभव एव निर्विशेषवस्तुसद्भावे प्रमाणमिति सिद्धम् । किंच धर्मे ज्ञाते सत्येवैतद्धर्मवानयमिति धर्मिज्ञानं जायते, धर्मिणि ज्ञातेसत्येवास्य धर्मिणोयं धर्म इति धर्मज्ञानं जायत इत्यन्योन्याश्रयान्निर्धर्मकवस्तुसिद्धिः । अपिच धर्मत्वं, धर्मित्वं वा किं भावपदार्थे वर्तते, उताभावपदार्थे? आद्ये सिद्धमेव कस्याप्यधर्मभूतमधर्मिभूतं चाभावरूपं वस्तु । द्वितीये- शशशृङ्गादावपि धर्मत्वधर्मित्वे भवेताम् । नच कस्यचिद्धर्मभूतं धर्मिभूतं वा यन्न भवति तादृशं भावरूपं वस्तु नास्तीत्यस्माभिरुच्यत इति वाच्यं, त्वं तादृशं वस्तु नास्तीत्यज्ञात्वा वदसि, उत ज्ञात्वा? आद्ये कथमज्ञस्य तव वचनं ग्राह्यम्? द्वितीये कथं तदसिद्धिः? नच तादृशवस्त्वभावं ज्ञात्वा ब्रवीम्यहमिति वाच्यं, किं तादृशवस्तुनस्सत्त्वे त्वया तदभावो ज्ञात उतासत्त्वे? आद्ये कथं तत्सत्वे तदभावः? द्वितीये अभावज्ञानस्य प्रतियोगि-पूर्वकत्वनियमात्कथं तादृशवस्तुज्ञानं विना तव तदभावज्ञानं, तादृशवस्तुन एवासत्त्वे कथं वा तादृश-वस्तुज्ञानमिति । अपि च कस्यचिदधर्मभूतमधर्मिभूतं वा वस्तु नास्तीति किं त्वं स्वयमेव ब्रूषे, उत प्रमाणमवलम्ब्य? आद्ये भ्रमप्रमादादिदोषदूषितपुंविशेषस्य तव वाक्यमग्राह्यमेव । द्वितीये किं तत्प्रमाणं ब्रूहि! न वेदान्ताः, तत्रास्यादर्शनात् । नानुमानं तस्य पुरुषबुद्ध्युपजीव्यत्वेनाप्रमाणत्वात् । न प्रत्यक्षं, किं तद्विद्वत्प्रत्यक्षमुताविद्वत्प्रत्यक्षम्? नाद्यः- तादृशवस्तुनः विद्वत्प्रत्यक्षत्वात् । नान्त्यः- अविदुषां तदप्रत्यक्षेपि तस्य निहॆतुमशक्यत्वात् । तस्मात्कस्यचिदधर्मभूतमधर्मिभूतं च निर्विशेषचिन्मात्रं वस्तु विदुषां प्रत्यक्षमेव । न च निर्विशेषे वस्तुनि प्रमाणाभावः, 'स वै ममाशेषविशेषमायानिषेध-निर्वाणसुखानुभूतिः' इति व्यासवाक्यस्यैव प्रमाणत्वात् । नेतिनेतीति निषेधवाक्यस्य वेदान्तीयस्य च सत्त्वात् । न च मायामयकतिपयविशेषाणामेव निषेध इति वाच्यं, सर्वनिषेधावधित्वाद्ब्रह्मणः- यद्यन्निषेद्धुं शक्यं तस्य तस्य सर्वस्यापि निषेधे कृते सत्येव निषेधावधित्वसिद्धेर्ब्रह्मणः । न च निषेधा-वधित्वं न ब्रह्मणः क्वापि दृश्यत इति वाच्यं, 'निषेधशेषो जयतादशेष' इति भागवते दर्शनात् । तस्माद्यदि ब्रह्म कस्यचिद्धर्मो धर्मी वा भवेत्तर्हि धर्मधर्मिभावनिषेधेन ब्रह्मणोपि निषेध एव स्यान्न तु निषेधशेषत्वमिति कृत्वा न ब्रह्म धर्मः, नापि धर्मी, किंतु निर्विशेषमेव । अत एव 'नायं गुणः, कर्म न सः, सन्नासन्'निति भागवते प्रोक्तं व्यासेन । यदि तु ब्रह्म सविशेषं तर्हि तेनैव विशेषेण ब्रह्मण-

स्मुवचत्वान्नेतिनेतीति श्रुत्या नैव प्रतिपाद्येत निषेधमुखेन ब्रह्म । अतएव 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा स'हेति मनोवागगोचरत्वं श्रूयते । इदमित्थमिति हि सविशेषं वस्तु मनसा वेत्तुं वाचा वक्तुं च शक्यत एव- निर्विशेषं तु वस्तु कथमिदमित्थमिति वक्तुं शक्येत? अतएव 'अवचनेनैव प्रोवा' चेति श्रूयते । तस्मान्मायामयसर्वविशेषनिषेधावधिभूतं ब्रह्म निर्विशेषमेव । न च मायामयविशेषाभावेऽपि स्वाभाविकविशेषास्सन्तीति वाच्यं, माययैव ब्रह्मणस्सविशेषत्वं, स्वतस्तु निर्विशेषमेव ब्रह्मेति सिद्धान्तात् ॥

**ननु** सर्वथापि सत्ये नित्ये ज्ञाने आनन्दे अनन्ते च ब्रह्मणि सत्यत्वं नित्यत्वं ज्ञानत्वमानन्दत्वमनन्तत्वं चेति विशेषाः स्वाभाविका वर्तन्त एव । सत्यत्वादीनां मायामयत्वायोगेन स्वाभाविकत्वादिति **चेन्मैवम्**— किमिमे सत्यत्वादयो व्यावर्तका विशेषाः, यद्वा धर्माः? आद्ये किं पारमार्थिकाः, उत व्यावहारिकाः? नाद्यः- परमार्थदशायां व्यावर्त्यस्यैवाभावेन कुतो व्यावर्तकसद्भावशङ्का । नच तदापि व्यावर्त्यमस्तीति वाच्यम्, 'नेह नानास्ति किंचन' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादि श्रुतेः । द्वितीयः कल्प इष्ट एव । व्यवहारदशायां मायामयैर्विशेषैः ब्रह्मणस्सविशेषत्वाभ्युपगमात्, ब्रह्मभिन्नस्य मिथ्याभूतस्य द्वैतस्य व्यावर्त्यस्य सत्त्वेन सत्यत्वादीनां व्यावर्तकानां सद्भावाच्च । सत्यत्वादयो धर्मा इति पक्षेऽपि किं धर्मा व्यवहारदशायां सन्ति, उत परमार्थदशायां? आद्ये इष्टापत्तिः, व्यवहारकाले मायायास्सत्त्वेन ब्रह्मणस्सधर्मकत्वात् । न द्वितीयः- तदानीं धर्मधर्मिभावाभावात् । न हि सुप्तिमृत्यादिषु धर्मधर्मिभावो वर्तते । न हि सुषुप्तौ कोऽप्ययमस्य धर्म इति, अयमस्य धर्मीति वा जानाति । न च सुप्तपुरुषस्य तद्ज्ञानाभावेऽपि सर्वं द्वैतमस्त्येवेति वाच्यम्, प्रातीतिकस्य द्वैतस्य रज्जुसर्पस्येव प्रतीत्यभावे सद्भावस्य दुर्वचत्वात् । नच रज्जुसर्पवद्द्वैतं न प्रातीतिकं, किंतु सर्पवद्व्यावहारिकमेवेति वाच्यम्, सर्पस्यापि पक्षत्वेन सपक्षाभावादनुमानासिद्धेः । व्यवहारस्यापि प्रतीतिरूपत्वेन व्यावहारिकस्यापि प्रातीतिकत्वाच्च । तस्माद्व्यावहारिकत्वेन मायामयास्सत्यत्वादयो न निर्विशेषे ब्रह्मणि वस्तुतस्सन्तीति न कोऽपि दोषः ।

**ननु** किं ब्रह्म परमार्थतस्सत्यं ज्ञानमनन्तमानन्दं च भवति, उत न? आद्ये कथं तत्र सत्यत्वाद्यभावः? द्वितीये ब्रह्म परमार्थतोऽसत्यमज्ञानमन्तवदनानन्दं च स्यात् । नचेष्टापत्तिः, ब्रह्मणो घटतुल्यत्वापत्तेः । घटो हि परमार्थतो सत्य इति **चेन्मैवम्**— परमार्थतो ब्रह्म निर्धर्मकपरमानन्दबोधरूपं भवति, व्यवहारतस्तु सत्यत्वानन्तत्वादिधर्मवद्भवतीति । न चैतावता ब्रह्मणि परमार्थतो सत्यत्वाद्यापत्तिः, परमार्थतो निर्धर्मकमित्युक्तत्वात्- नहि निर्धर्मकेसत्यत्वादयो धर्मा भवितुमर्हन्ति । **ननु तथापि** निर्धर्मकपरमानन्दबोधरूपे आत्मनि निर्धर्मकत्वपरमानन्दत्वबोधत्वरूपधर्मास्सन्ति वा उत न? आद्ये कथं तस्य निर्धर्मकत्वम्, द्वितीये कथं तस्य निर्धर्मकपरमान्दबोधरूपत्वसिद्धिरिति **चेदुच्यते**— निर्धर्मके वस्तुनि निर्धर्मकत्वरूपो धर्मो भवितुं नार्हति, व्याघातात् । निर्गुण इव गुणे गुणत्वरूपो धर्मः । नच दृष्टान्तासम्प्रतिपत्तिः, गुणेऽपि गुणान्तराङ्गीकारे तस्मिन्नपि गुणान्तराङ्गीकारादनवस्थारूपदोषापत्तेः । एवं निर्धर्मकत्वादेव ब्रह्मणि बोधत्वमानन्दत्वं च न- बोधस्यानन्दस्य च निर्धर्मकत्वेन तत्र बोधत्वादिधर्मस्थितिव्याघातात् ।

अत्रेदं वेद्यम्- सावयवस्य वस्तुनः क्वचिन्निरवयवे वस्तुनि विश्रान्तिरवश्यमभ्युपेया- अन्यथाऽनवस्थादोषात् । तथाहि- घटस्सावयवः, कपालद्वयसंयोगवत्त्वात्सम्प्रतिपन्नवत् । सच कपालस्सावयवः, मृत्पिण्डारब्धत्वात् । सच मृत्पिण्डस्सावयवश्चूर्णपुञ्जमयत्वात् । सच चूर्णस्सावयवस्त्रसरेणुमयत्वात् । सच त्रसरेणुस्सावयवः द्व्यणुकारब्धत्वात् । सच द्व्यणुकस्सावयवः, अणुद्वयारब्धत्वात् । तच्चाणुद्वयं सावयवमण्वारब्धत्वात् । स चाणुस्सावयवः, परमाणुद्वयसंयोगजन्यत्वात् । सच परमाणुर्निरवयवस्तस्यापि सावयवत्वे अनवस्थादोषात् । एवं पटादावप्यूह्यम् । यथैवं निरवयवत्वस्य क्वचिद्विश्रान्तिस्तथा निर्धर्मकत्वस्यापि क्वचिद्विश्रान्तिरवश्यमभ्युपगन्तव्या । अन्यथा घटे घटत्वमस्ति,घटत्वे घटत्वत्वमस्ति, घटत्वत्वत्वे घटत्वत्वत्वत्वमस्तीत्येवमनवस्थादोषप्रसङ्गात् । तच्च निर्धर्मकत्वं ब्रह्मण्येव विश्रान्तमिति निर्धर्मकब्रह्मसिद्धिः, एवं निरवयवब्रह्मसिद्धिश्च । नच परमाणुर्निरवयवस्सिद्ध इति प्रागुक्तमिति वाच्यं, परमतेन तथोपपादनात् , स्वमतेन तु परमाण्वनभ्युपगमान्निरवयवं ब्रह्मैव । ब्रह्मणस्सकाशादेवाण्वादिक्रमेण घटोत्पत्तिः । तथा सविशेषस्य जगतो निर्विशेषे ब्रह्मणि विश्रान्तिर्वक्तव्येति निर्विशेषब्रह्मसिद्धिः । तथाहि- सविशेषा पृथ्वी कुत्र विश्रान्ता- जले, तच्च सविशेषं जलं कुत्र विश्रान्तमग्नौ, सच सविशेषोग्निः कुत्र- वायौ, सच सविशेषो वायुः कुत्र--गगने, तत्र सविशेषं गगनं कुत्र-अहङ्कारे, सच सविशेषोहङ्कारः कुत्र-महत्तत्वे, तच्च सविशेषं महत्तत्वं कुत्राव्यक्ते, तच्च सविशेषमव्यक्तं कुत्र-ब्रह्मणि, तच्च ब्रह्म कुत्र विश्रान्तं स्वस्मिन्नेव, 'स्वे महिम्नि प्रतिष्ठित'-मिति श्रुतेः । कुतो ब्रह्म स्वस्मिन्नेव विश्रान्तं- निर्विशेषत्वे, सविशेषत्वे हि ब्रह्मणः कस्मिंश्चिदन्यस्मिन्नेव विश्रान्तिर्भवेत्पृथिव्यादिवदिति—**अलं प्रपंचेन** ।

## निर्विशेषे ब्रह्मणि प्रमाणविचारः, तत्र निर्विशेषे वस्तुनि सौषुप्तिकप्रत्यक्षप्रमाणविचारः ।

**ननु** प्रत्यक्षादिप्रमाणानां सविशेषविषयत्वान्निर्विशेषवस्तुनि शब्दः प्रमाणमिति वक्तव्यं तच्च न सम्भवति, निर्विशेषे वस्तुनि शब्दस्यापि प्रवृत्त्ययोगात् । निष्प्रमाणकमेव निर्विशेषं ब्रह्मेति । नच निर्विशेषवस्तुप्रसाधनपरा युक्तयो दर्शिता इति वाच्यं, युक्तीनामपि सविशेषविषयत्वेन निर्विशेषे युक्तिप्रसरायोगात् । नच शास्त्रं प्रमाणं दर्शितमिति वाच्यं, शब्दरूपस्य तस्य शास्त्रस्य निर्विशेषविषयत्वायोगस्योक्तत्वादिति **चेन्मैवम्**—सविशेष इव निर्विशेषेपि वस्तुनि प्रत्यक्षानुमानशब्दप्रमाणप्रवृत्तिसम्भवात् । तथाहि- सुषुप्त्यादिषु कस्यापि विशेषस्याग्रहणात्तात्कालिकं प्रत्यक्षं निर्विशेषविषयकमेव । नच तदानीं प्रत्यक्षमेव नास्तीति वाच्यं, 'न किञ्चिदवेदिष'मित्युत्थितस्मरणेन तद्धेतोर्निर्विशेषप्रत्यक्षस्यानुमीयमानत्वात् । न ह्यनुभवं विना स्मरणमुपपद्यते कस्यचिदपि वस्तुनः । किंच सुषुप्तौ त्वया के विशेषा ज्ञाता इति विष्णुमित्रेण पृष्टो देवदत्तस्तं प्रति वक्ति- न केपीति । न चेमे विशेषा मया ज्ञाता इति प्रतिवक्तीति वाच्यं, अनुभवविरोधात् , तद्वाक्यस्य मृषावाक्यत्वाच्च । तच्च मया न केपि विशेषा ज्ञाता इति वचनं किमनुभवपूर्वकमुताननुभवपूर्वकम् ? आद्ये किंविषयकस्सोनुभवः ? नच विशेषाभावविषयक इति वाच्यं, किं स विशेषाभावस्साधिकरण उतनिरधिकरणः? आद्येयत्र विशेषाभावोनुभूतस्तदधिकरणं किं सविशेषमुत निर्विशेषम् ? आद्ये व्याघातः- सविशेषस्य विशेषाभावाधिकरणत्वायोगात् । द्वितीये-

निर्विशेषं वस्तु सिद्धमेव । तद्वचनमननुभवपूर्वकमिति विकल्पे तु तद्वचनस्याप्रामाणिकत्वमेवागतम् । **तस्मात्सुषुप्त्यादिप्रत्यक्षान्निर्विशेषवस्तुसिद्धिः ॥**

## निर्विशेषवस्तुनि अनुमानप्रमाणविचारः ।

अनुमानानि तु दर्शितान्येव । नच निर्विशेषे अनुमानाप्रसरः, ब्रह्म निर्विशेषं सुषुप्त्यादिषु ब्रह्मणि कस्यापि विशेषस्यादर्शनाद्व्यतिरेकेण घटवदित्यनुमातुं प्रतिबन्धाभावात् । एवं निर्विशेषं ब्रह्मेति प्रतिपादयितुं शब्दस्यापि न काचिदनुपपत्तिरिति । **ननु** प्रत्यक्षविरुद्धमर्थं साधयितुं शब्दोनुमानं वा न शक्नोति- ब्रह्मणस्सविशेषत्वं च प्रत्यक्षसिद्धं, जागरे प्रत्यक्षेण तदनुभवात् । नच सुषुप्तौ निर्विशेषं ब्रह्मेति वाच्यं, तदानीमपि सविशेषमेव । परंतु मन आदिकरणाभावात्तद्गतविशेषाग्रहणमिति **चेन्मैवम्** — अगृहीतविशेषसद्भावे प्रमाणाभावात् । यद्यगृहीता अपि विशेषास्युस्तर्हि शशशृङ्गमपि स्यादेव, अगृहीतत्वाविशेषात् । नच जागरे गृहीता एव ब्रह्मविशेषास्स्युस्सुषुप्तावपीति वाच्यं, भ्रमकाले गृहीतस्य रज्जुसर्पस्यापि भ्रमापगमकाले सत्त्वप्रसङ्गात् । नच जागरो न भ्रमकाल इति वाच्यं, भ्रमहेतोरज्ञानस्य सत्त्वेन तस्य भ्रमत्वात् । नच सुषुप्तावप्यज्ञानमस्तीति वाच्यं, तदानीं विक्षेपशक्तिमदज्ञानस्यासत्त्वात् । किंच यदि ब्रह्म सविशेषं स्यात्, तर्हि सर्वदा सर्वेषां विशेषाणामसत्त्वात्केषांचिद्विशेषाणामागमापायाभ्यां ब्रह्म सविकारं स्यात्तच्चायुक्तं-कूटस्थत्वप्रतिपादकश्रुतिस्मृतिविरोधात् । अपिच ब्रह्म नित्यं, सविशेषत्वाद्घटवदित्याद्यनुमानैरनित्यत्वादिकमप्यापद्येत ब्रह्मणः । **तस्मान्निर्विशेषमेव ब्रह्म ॥**

**ननु** न ब्रह्म निर्विशेषं नित्यत्वादिविशेषवत्त्वाद्घटवदित्यनुमानेन न निर्विशेषब्रह्मसिद्धिरिति **चेन्मैवम्**, हेतोस्सपक्षवृत्तित्वाभावात् । न च कालवदिति वदाम इति वाच्यम्, तस्यापि तथात्वात् । न चात्मवदिति वदाम इति वाच्यम्, तस्य पक्षाभिन्नत्वात् । नच विशेषवत्त्वादित्येव हेतुरुच्यत इति वाच्यम्, पक्षेहेत्वसिद्धेः । नच नित्यत्वादयो विशेषाः पक्षे सन्तीति वाच्यम्, तेषामविशेषत्वात् । नित्यादभिन्नमेव नित्यत्वं नित्यशब्दार्थत्वान्नित्यत्वस्य यथा तच्छब्दार्थ एव तत्त्वम् । नच दृष्टान्तासम्प्रतिपत्तिः, 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधस्स्मृतः' इति । 'तत्त्वं नारायणः पर' इति च स्मृतिश्रुतिभ्यां तदवगमात् । नच नित्यशब्दो न नित्यत्ववाचीति वाच्यम्, गवादिशब्दा अपि गोत्वादिवाचिन एवेति सिद्धान्तात् । नच जातौ शक्तिरिति पक्षे भवतु स सिद्धान्तः, तवतु जातेरेवाऽनभ्युपगमात् कथं स इति वाच्यम्, व्यक्त्यतिरिक्तजात्यनभ्युपगमेपि अनुवृत्तत्वरूपेण व्यक्तेरेव जातित्वमित्यभ्युपगमात् । व्यक्तेर्ह्यस्ति रूपद्वयमनुवृत्तं, व्यावृत्तं चेति । तत्रानुवृत्तत्वरूपेण गोत्वमेव व्यक्तिः व्यावृत्तत्वेन तु गौरिति । तस्मान्नित्यं नित्यत्वं चेति द्वयं व्यक्तिरेव- व्यक्तेश्चैकत्वान्नित्याभिन्नमेव नित्यत्वम् । एवं सत्यत्वादिकमपि वेद्यम् । किंच श्रुतिसिद्धोऽनुभवसिद्धश्च तर्क एव ग्राह्यः, नतु तदुभयविरुद्धः । ब्रह्मणो निर्विशेषत्वानुमानं तु तदुभयसिद्धम्, सविशेषत्वानुमानं तु तदुभयविरुद्धमिति न ब्रह्मणोऽनुमानेन सविशेषत्वसिद्धिः । अत एव 'श्रुतियुक्त्यनुभूतिभ्यो वदतां किं नु दुश्शक'मित्याचार्यैरुक्तमिति **संक्षेपः ।**

## सविकल्पकनिर्विकल्पकज्ञानविचारः ।

यदुक्तं रामानुजेन निर्विकल्पकमपि ज्ञानं सविशेषविषयमेव- निर्विकल्पकमेकजातीयद्रव्येषु प्रथमपिण्डग्रहणं, सविकल्पकं तु द्वितीयादिपिण्डग्रहणमिति, **तदसत्**—प्रथमगोपिण्डग्रहण इव द्वितीयादिगोपिण्डग्रहणस्यापि खण्डोयं शुक्लो गौः मुण्डोयं कृष्णो गौः पूर्णशृङ्गोयं रक्तो गौरिति नामजात्यादिविकल्पसहितत्वेन प्रथममेव निर्विकल्पकं, द्वितीयादिकं सविकल्पकमिति वचनस्यायुक्तत्वात् । यत्र ज्ञाने विकल्पो विषयो भवति तत्सविकल्पकम् । यत्र तु विकल्पो विषयो न भवति तन्निर्विकल्पकमिति शब्दशक्त्यैव सिद्धत्वात । विकल्पश्च नामजात्यादिरूपो भेद इति सम्प्रतिपन्नम् । तस्मादेकजातीयद्रव्येषु प्रथमपिण्डग्रहणमपि डित्थोयं ब्राह्मणोयं श्यामोयमिति नामजात्यादिविकल्पसहितमेवेति सविकल्पकमेव । नामादिविकल्परहितमेव ज्ञानं निर्विकल्पकम् । तस्य च लक्षणमुक्तं तार्किकैः—'विशेषणविशेष्यसम्बन्धानवगाहिज्ञानं निर्विकल्पक'मिति । एतेन तदवगाहिज्ञानं सविकल्पकमिति सिद्धम् । इदमेवोक्तमस्मदीयैरपि—'संसर्गानवगाहिज्ञानं निर्विकल्पकं, वैशिष्ट्यावगाहिज्ञानं सविकल्पक'मिति ।

**ननु** लोके कतिपयविकल्परहितमेव ज्ञानं प्रसिद्धं, नतु सर्वविकल्परहितमिति कथमप्रसिद्धनिर्विकल्पकज्ञानसिद्धिरिति **चेन्मैवम्**, अविदुषां सुषुप्तौ, विदुषां निर्विकल्पसमाधौ च तत्सत्त्वस्य प्रसिद्धत्वात् । इति ॥

## निर्विकल्पकज्ञाने प्रत्यक्षादिप्रमाणानां करणत्वाक्षेपः ।

**ननु** यदुक्तं संसर्गानवगाहिज्ञानं निर्विकल्पकमिति । **किं तत्र ज्ञाने करणम्**—न तावत्प्रत्यक्षप्रमाणं, तस्यातीन्द्रियत्वेन प्रत्यक्षप्रमाणाजन्यत्वात्प्रत्यक्षप्रमाणं हीन्द्रियम् । नापि व्याप्तिज्ञानं, तस्यादर्शनात् । नच गौरिति विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वाद्दण्डीति ज्ञानवदित्यनुमानस्य तत्र प्रमाणत्वमिति वाच्यं, सविकल्पकज्ञानस्य विशेषणज्ञानजन्यत्वानभ्युपगमात् । तदभ्युपगमेपि विशेषणज्ञानस्य निर्विकल्पकत्वे प्रमाणाभावात् । नच सविकल्पकस्य विशिष्टबुद्धित्वेन निर्विकल्पकस्य विशेषणबुद्धित्वसिद्धिरिति वाच्यं, निर्विकल्पकस्य विशेषणबुद्धित्वे सिद्धे सविकल्पकस्य विशिष्टबुद्धित्वसिद्धिः । सविकल्पकस्य विशिष्टबुद्धित्वे सिद्धे निर्विकल्पकस्य विशेषणबुद्धित्वसिद्धिरित्यन्योन्याश्रयत्वात् । तस्माद्विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वे सत्यपि न विशेषणज्ञानस्य निर्विकल्पकत्वसिद्धिः । नच निर्विकल्पकादेव सविकल्पकस्योदयात्सविकल्पकेन कार्येण लिङ्गेन निर्विकल्पककारणमनुमीयत इति वाच्यं, दर्शितनियमासिद्धेः, निर्विकल्पकस्यापि ज्ञानत्वेन ज्ञानकरणत्वायोगाच्च । नापि शब्दः करणं, प्रकृतिप्रत्यययोगेन हि पदत्वं- प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयम् । पदभेदश्चार्थभेदनिबन्धनः- पदसङ्घातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधायित्वात्संसर्गानवगाहिनिर्विकल्पज्ञानजनकत्वं न **शब्दस्येति**—

## निर्विकल्पकज्ञानस्य अन्तःकरणवृत्तिजन्यत्वोपपत्तिः ।

**मैवम्**—सविकल्पकं प्रत्यक्षज्ञानमेवेन्द्रियजन्यं, निर्विकल्पकं त्वदीन्द्रियमिति तार्किकैरेवोक्तत्वान्न निर्विकल्पकज्ञानस्येन्द्रियाजन्यत्वेन प्रत्यक्षज्ञानत्वानुपपत्तिरिति कृत्वा निर्विकल्पकज्ञानस्य करणं प्रत्यक्षप्रमाणं भवति । तच्च निर्विकल्पकप्रत्यक्षप्रमायाः करणमन्तःकरणवृत्तिरेव । सर्वेष्वपि ज्ञानेषु फलभूतेष्वन्तःकरणवृत्तेरेव करणत्वात् । नचैवं सर्वप्रमाणसांकर्यम्, वृत्तिभेदेन प्रमाणभेदात्- यथा परमते एकस्यापि प्रत्यक्षप्रमाणस्येन्द्रियस्य चक्षुरादिभेदभिन्नत्वं तद्वत् । तस्मात्त्वाचचाक्षुषरासनादिप्रत्यक्षप्रमाणानां यथैकमेव प्रत्यक्षप्रमाणं करणं, तथा प्रत्यक्षानुमित्यादिप्रमाणाणां चैकैवान्तःकरणवृत्तिः करणम् । अत एव प्रमाता प्रमाणं प्रमेयं चेति त्रिपुटी विद्यते । तत्र प्रमाताऽन्तःकरणावच्छिन्नचैतन्यं, प्रमाणमन्तःकरणवृत्त्यवच्छिन्नचैतन्यं, प्रमेयं विषयावच्छिन्नचैतन्यमिति सम्प्रदायवचनम् । नच फलभूतं चैतन्यं नोक्तमिति तदनुक्तिर्दोष इति वाच्यम्, अज्ञातं विषयचैतन्यं प्रमेयं, ज्ञातं विषयचैतन्यं फलमित्येकस्यैव विषयचैतन्यस्य ज्ञातत्वाज्ञातत्वाभ्यां प्रमेयत्वफलत्वभेद इति प्रमेयमेव फलमिति नानुक्तिदोषः । तथाच सविकल्पज्ञानस्येव निर्विकल्पकज्ञानस्याप्यन्तःकरणवृत्तिरूपकरणसत्त्वान्न काप्यनुपपत्तिः ॥

## निर्विकल्पकज्ञानस्यान्तःकरणवृत्तिजन्यत्वोपपत्तिः ।

ननु भवत्वन्तःकरणवृत्तेः निर्विकल्पकज्ञानं प्रति करणत्वम्, तथापि साऽन्तःकरणवृत्तिः किमिन्द्रियद्वारा निर्गता निर्विकल्पकज्ञानस्य करणं भवति ? यद्वाऽनिर्गतैव व्याप्तिज्ञानरूपा ? उत शब्दज्ञानरूपेति पृच्छ्यत इति चेदुच्यते—अनिर्गतैवेति । तर्हि सा किं रूपेति चेत्- निर्विकल्पविषयरूपेति विद्धि! नच नास्ति निर्विकल्पविषय इति वाच्यं, निर्विकल्पो विषयः निर्विशेषवस्तुरूपोऽस्तीति पूर्वमेव बहुधा सिद्धान्तितत्वात् । न चान्तःकरणस्य निर्विशेषब्रह्माकारता न सम्भवतीति वाच्यं, अन्तःकरणस्य विषयसमानाकारत्वनियमात् । यदाकारो विषयस्तदाकारं ह्यन्तःकरणं भवति । अत एव भक्तस्य चित्तं श्रीविष्णुध्यानात्तन्मयं भवतीति भवदीयैरप्युच्यते । न च निराकारत्वाद्ब्रह्मणः कथं ब्रह्माकारता चित्तस्येति वाच्यं, चित्तस्यापि निराकारत्वात् । यदि तु ब्रह्म चिदानन्दाकारमित्युच्यते, तर्हि चित्तमपि चिदानन्दाकारं भवत्येव । न च ब्रह्मणश्चित्ताविषयत्वान्न चित्तस्य ब्रह्माकारतेति वाच्यं, संस्कृतचित्तविषयत्वस्य ब्रह्मणि स्थापितत्वात् । तस्मान्निर्विकल्पकब्रह्मविषयान्तःकरणवृत्तिजन्यं निर्विकल्पकं ज्ञानमिति सिद्धम् ॥

## निर्विकल्पकज्ञाने शब्दस्य प्रमाणत्वोपपत्तिः ।

यदि तु निर्विकल्पकज्ञानं वृत्तिज्ञानमित्यविवक्षितं, तदा निर्विकल्पकं ज्ञानं चैतन्यमेव । चैतन्यस्यैव ज्ञानत्वान्निर्विकल्पकत्वाच्च । तच्च चैतन्यं साक्षि ब्रह्मैवेत्येतदास्ताम्— साच निर्विकल्पकान्तःकरणवृत्तिः विचारिताद्वेदान्तमहावाक्यादेव भवतीति निर्विकल्पकज्ञाने शब्द एव करणम् ।

**ननु** किं शब्दः करणं, उत शब्दज्ञानं? नाद्यः- पुस्तकस्थादपि शब्दात्कस्यचिद्ज्ञानस्योदयप्रसङ्गात् । न द्वितीयः- शब्दज्ञानस्य ज्ञानत्वेन ज्ञानकरणत्वायोगादिति **चेन्मैवम्**— ज्ञानस्य ज्ञानकरण-

त्वसद्भावात् । व्याप्तिज्ञानादनुमितिज्ञानस्य पदार्थज्ञानाद्वाक्यार्थज्ञानस्य च जन्मदर्शनात् । शब्दज्ञानं निर्विकल्पकज्ञाने करणम् । न च शब्दस्य करणत्वे दर्शितदोषस्य कः परिहार इति वाच्यम्, पद-सङ्घातरूपस्य वाक्यस्य संसर्गानवगाहिज्ञानजनने दोषो दर्शितो न तु ब्रह्माकारवृत्तिजनने इति ।

**ननु** किं तत्त्वमसीति वाक्यं श्रुतं विचारितं च सत् संसर्गानवगाहिज्ञानं जनयित्वा ब्रह्माकारा-मन्तःकरणवृत्तिं जनयति? उताजनयित्वैव? आद्ये दर्शितदोषः प्रसक्त एव । द्वितीये कथं तादृशवृत्तिजननमिति **चेदुच्यते**—तत्त्वमसीत्यादिमहावाक्यस्य ब्रह्माकारान्तःकरणवृत्तिजनकत्वमेव संसर्गा-नवगाहिज्ञानजनकत्वमिति । नच दर्शितदोषप्रसक्तिः, पदं पदसमुदायरूपं वाक्यं वा तात्पर्यविषयमेवार्थं प्रतिपादयतीति नियमः । यत्परश्शब्दस्स शब्दार्थ इति न्यायात् । सच तात्पर्यविषयोऽर्थस्संसर्ग एव भवितव्य इति न नियमः, विषं भुंक्ष्वेत्याप्तवाक्येन अनभिमतसंसर्गस्यापि प्रतिपादनप्रसङ्गात् । गङ्गायां घोष इत्यत्र घोषस्य गङ्गाधिकरणकत्वायोगेन तत्संसर्गस्य प्रत्यक्षबाधितत्वाच्च । सोयं देवदत्त इत्यत्र तदेतद्देशकालसंसर्गस्यायुक्तत्वाच्च । तस्मात्तात्पर्यविषयस्संसर्ग एवेति न नियमः । तथा च सति यथा प्रकृष्टप्रकाशश्चन्द्रः, सोयं देवदत्त इत्यादिवाक्यानि स्वरूपमात्रबोधकानि तत्परत्वात्तेषां, यथा वा घटः पट इत्यादिपदानि स्वरूपमात्रबोधकानि तद्वत्तत्त्वमसीत्यादिमहावाक्यान्यपि ब्रह्मस्वरूपमात्र-बोधकानि । तेषां तत्रैव तात्पर्यमित्युपक्रमादिभिर्लिङ्गैरवधारणात् । न हि गामानयेति वाक्यादिव सोयं देवदत्त इति वाक्यात्कोपि संसर्गः प्रतीयते । अतः पदस्य वाक्यस्य वा संसर्गावगाहिज्ञानजनकत्वमिति न नियमः । किंतु स्वतात्पर्यविषयार्थज्ञानजनकत्वमित्येव नियम इति न दोष इति ।

**ननु** प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थप्रतिपादनमवर्जनीयं, किं पुनर्वाक्यस्येति यदुक्तं तत्र त्वया न कोपि समाधिरुक्त इति कृत्वा पदस्य वाक्यस्य वा विशिष्ट एवार्थ इति विशिष्टार्थाभिधा-यित्वाच्छब्दस्सविकल्पकज्ञानजनक एवेति **चेन्मैवम्**—विषं भुंक्ष्वेति वाक्यात्प्रतीयमानस्य शत्रुगृहभोजन-निवृत्तिरूपार्थस्य न विषभुजि प्रकृत्यर्थत्वम् । नापि तदुत्तरवर्त्यमादिप्रत्ययार्थत्वमिति, प्रकृतिप्रत्ययार्थाति-रिक्तार्थबोधकत्वात्तद्वाक्यस्य । नच प्रकृतवाक्यगतप्रकृतिप्रत्ययातिरिक्तोपि सोर्थः प्रकृत्यन्तरप्रत्ययान्त-रार्थत्वेन विशिष्ट एवेति विशिष्टार्थबोधकमेव विषं भुंक्ष्वेति वाक्यमिति वाच्यं, प्रकृष्टप्रकाशश्चन्द्र इति वाक्यस्यातथात्वात् । नच तत्रापि चन्द्रपदं प्रकृतिप्रत्यययोगेनाह्लादनक्रियाकर्तारमभिधत्त इति वाच्यं, शब्दशक्त्या चन्द्रपदस्य आह्लादनक्रियाकर्तृवाचित्वेपि वक्तुस्तत्र तात्पर्याभावेन स्वरूपमात्रवाच्येव चन्द्रपदं तत्रेति । तथा घटशब्दं श्रुत्वा तदर्थं जिज्ञासुः पुत्रः पितरं पृच्छति 'घटः क' इति, सच पिता तं प्रति वक्ति- 'अंगुल्या निर्दिशन्नयं घट' इति । तद्वाक्यात्स पुत्रो घटं जानाति । एवं स्थिते किमयं पुत्रः प्रकृति-प्रत्यययोरर्थं विदित्वा घटरूपं वस्तु विदितवानुताविदित्वा? सच पिता किं विदित्वैव घटं बोधयामास पुत्राय उताविदित्वा? नाद्यः- पुत्रस्याज्ञस्यत द्वेदनासम्भवात् । द्वितीये न त्वदिष्टसिद्धिः । पिता च यद्यव्युत्पन्नस्तर्हि न त्वदिष्टसिद्धिः । तस्मात्प्रकृतिप्रत्यययोरर्थभेदे सत्यपि पदस्य विशिष्टार्थाभिधायकत्वे सत्यपि तात्पर्यवशात्स्वरूपमात्रवाचित्वमुपपद्यत एव । नच घटपदमपि केनचिन्नाम्ना केनचिदाकारेण

च विशिष्टमेव वस्तु बोधयति, नतु निर्विशेषमिति वाच्यं, नाम्नः पुत्रेण विदितत्वेन पितृप्रयुक्तस्यायं घट इति वाक्यस्य घटनामप्रतिपादने तात्पर्याभावात् । अनधिगतार्थे हि शब्दस्य तात्पर्यमङ्गीकर्तव्यं प्रामाण्याय, किंतु वस्तुमात्रबोधन एवेति । नच कम्बुग्रीवाद्याकारविशिष्टवस्तुबोधने तात्पर्यमिति वाच्यं, तस्य प्रत्यक्षसिद्धत्वेन शब्दप्रतिपाद्यत्वायोगात् । ननु स पुत्र आकारं वेद नाम च वेदेत्युभयमप्रतिपाद्यमेव । किंतु तदुभयसंसर्गं न वेद । अतस्तत्प्रतिपादानायायं घट इति पित्रा प्रयुक्तं वाक्यं संसर्गं बोधयति । तथाच संसर्गबोधकमेव वाक्यं, नतु संसार्गानवगाहिज्ञानजनकमिति **चेन्नैवम्**· अयं घट इति वाक्याद्घटनामकम्बुग्रीवाद्याकारयोस्संसर्ग इति प्रतिपत्त्यनुदयात् । नच घटनामकम्बुग्रीवाद्याकार-विशिष्टवस्तुप्रतिपत्त्युदयाद्विशिष्टबोधकत्वमेवास्तु दर्शितवाक्यस्येति वाच्यं, सत्यपि विशिष्टबोध-कत्वे तत्र विशेषणयोर्ज्ञातत्वेन तद्बोधने वाक्यतात्पर्यकल्पनस्यायुक्तत्वाद्विशेष्यमात्रबोधकमेव तद्वाक्य-मित्यवश्यमभ्युपगन्तव्यम् । नच विशिष्टवाचिपदस्य कथं विशेष्यमात्रपरत्वमिति वाच्यं, तात्पर्या-नुपपत्त्या विशिष्टवाचकमपि पदं लक्षणया विशेष्यमात्रं प्रतिपादयति । यथा परमते- घटोऽनित्य इत्यत्र घटत्वविशिष्टवाचकमपि घटपदमनित्यत्वविशेषणान्वयानुपपत्त्या अनित्यं घटमेव व्यक्तिभूतं प्रतिपादयति तद्वत् । घटत्वं हि जातित्वान्नित्यमिति तार्किकसमयः । तस्मादयं घट इति वाक्यं विशेष्यमात्रपरमिति स्थितम् । तच्च विशेष्यं न मृत्, मृदोपि घटविशेषणत्वात् । किंतु मृदोतिरिक्तं घटस्वरूपमेव । किं तदितिचेत्त्वमेव ब्रूहि । नाहं तद्वक्तुं शक्नोमीतिचेत्किमनुभावाभावादशक्तिरुतानिर्वचनीयत्वात् ? नाद्यः- आत्मसाक्षिकस्यानुभवस्य दुरपलापत्वात् । द्वितीये इष्टापत्तिः । एवं घटोऽयमित्यनुभवस्यापि निर्वि-कल्पकवस्तुसत्त्वे प्रमाणत्वे सिद्धे तदप्रामाण्यवादो महामोहविलसितमेव । तस्मादानयनादिक्रियारहितं सर्वमपि सिद्धवस्तुप्रतिपादकं विशिष्टार्थबोधकमपि वाक्यं तात्पर्यतः विशेष्यभूतवस्तुमात्र**परमेव** ॥

## वेदान्तवाक्यानां निर्विकल्पकब्रह्मपरत्वोपपत्तिः ।

तच्च विशेष्यवस्तु निर्विकल्पकब्रह्मैवेति न निर्विकल्पकब्रह्मप्रतिपादने महावाक्यस्य काचिदनुपपत्तिः। अत एव सर्वे शब्दा ब्रह्मप्रतिपादका इत्युच्यते । 'वेदैश्च सर्वैरहमेव वेद्य' इति स्मर्यते । 'सर्वे वेदा यत्पदमामनन्ती'ति श्रूयते । नच क्रियापरवाक्यानां गामानयेत्यादीनां कथं ब्रह्मपरत्वमिति वाच्यं, तत्रापि गौः क इति विवेचने दर्शितरीत्या गोशब्दस्य ब्रह्मपरत्वात् । तस्मात्पदस्य पदसमूहस्य वा तात्पर्यवृत्त्या ब्रह्मप्रतिपादने न काचिदनुपपत्तिः । अभिधाशक्तिस्तु ब्रह्मणि कुण्ठितैव, तत्र शब्दप्रवृत्ति-निमित्तनामजात्यादिविशेषाभावात् ।

**नच** ब्रह्मेश्वरानन्तसच्चिदानन्दादिशब्दानां ब्रह्मनामत्वात्कथं ब्रह्मणो नामविशेषराहित्यमिति **वाच्यं**, किं सच्चिदादिशब्दप्रतिपाद्यत्वप्रयुक्तं सच्चिदादिनामविशेषवत्त्वं ब्रह्मणः परमार्थतोस्तीत्युच्यते ? यद्वा व्यवहारतः ? नाद्यः- परमार्थतश्शब्दानामेवाभावेन तत्प्रयुक्तविशेषाभावात् । द्वितीय इष्ट एव । नहि वयं व्यवहारतो ब्रह्म निर्विशेषं ब्रूम इति । नामरूपे हि ब्रह्मणि मायया कल्पिते- यथा मृदि घटनामकम्बुग्रीवादिरूपे । एवं नामरूपयोः कल्पितत्वादेव 'मृत्तिकेत्येव सत्य'मिति श्रुतिर्विकारासत्यतां

कारणसत्यतां चाब्रवीत् । नचेदं मृत्तिका सत्येति भ्रमितव्यं, तस्या अपि मृत्तिकेति नाम्नश्चूर्णपिण्डादितद्रूपस्य च कल्पितत्वेनासत्यत्वात् । नच ब्रह्मणो नामरूपाभावोऽप्रमाण इति वाच्यं, 'अशब्दमस्पर्शमरूपमव्यय'मित्यादिश्रुतेः । 'न नामरूपे गुणकर्म एवे'ति स्मृतेश्च प्रमाणत्वात् । किंच यस्येदं नामेति त्वयोच्यते तद्वस्तु किं नामैव? यद्वा नामवत्? अथवा नामरहितम्? नाद्यः- नामाश्रयस्य नामत्वायोगाद्घटवतः पुरुषस्येव घटत्वम् । न द्वितीयः- सविशेषस्य विशेष इत्यत्रेव नामवतो नामेत्यत्राप्यात्माश्रयान्योन्याश्रयादिदोषसद्भावात् । तृतीये तु सिद्धमेव नामरहितं वस्तु । एवं रूपजात्यादिष्वपि बोद्धव्यम् । नचैवं नामादिरहितस्य वस्तुनः कथं नामादिसहितत्वमिति वाच्यं, नीरूपस्यापि गगनस्य यथा भ्रान्तदृष्ट्या नीलत्वं तद्वदिति । नचैवं विवेचने सर्वमपि वस्तु नामरूपादिरहितमेवावतिष्ठत इति वाच्यं, इष्टापत्तेः । सर्वं ब्रह्मेति ह्यस्माभिरुच्यते । नच कथं ब्रह्मणो निर्विशेषस्य सर्वत्वमपीति वाच्यं, यत्र सर्वाण्यपि नामानि रूपाणि कल्पितानि तत्सर्वमिति स्वीकारात् । सर्वाध्यासाधिष्ठानत्वमेव सर्वत्वम् । तच्च व्यवहारत एव, न परमार्थतः । परमार्थतस्सर्वाध्यासानामभावेन तदधिष्ठानत्वस्य दूरोत्सारितत्वात् । तस्मान्निर्विशेषं ब्रह्म तज्ज्ञानं च निर्विकल्पकम् । तच्च शब्दाद्भवतीत्यनवद्यम् ॥

## सुषुप्तावपि निर्विकल्पकब्रह्माकारवृत्तिसत्त्वोपपत्तिः ।

**ननु** समाधौ भवत्वेवं शब्दाद्ब्रह्माकारान्तःकरणवृत्तिः, कथं पुनस्सुषुप्तौ तदाऽन्तःकरणस्यैवाभावादिति **चेन्मैवम्**—अविद्यायास्सत्त्वेन तदा ब्रह्माकाराविद्यावृत्तिसत्त्वान्न निर्विकल्पकज्ञानस्य कापि क्षतिः । किंच अन्तःकरणस्याविद्याया वा निर्विशेषब्रह्माकारा वृत्तिः स्वाभाविक्यैवेति न तदुदयार्थं कस्यापि प्रमाणस्यावश्यकत्वम् । नचैवं वेदान्तानां वैयर्थ्यमिति वाच्यं, सविकल्पकवृत्तिनिरासार्थत्वात्तेषां । अतएव निदिध्यासनं विहितं श्रुत्या । तद्धि चित्तस्य दर्शनस्मरणाख्यवृत्तिराहित्येनावस्थापनम् । एवं चित्तस्य सविशेषविषयाकारराहित्येनावस्थापने स्वाभाविकं निर्विशेषविषयाकारत्वमवतिष्ठते । तदानीं स्वयमेवात्मा स्फुरति । अतएवात्मनस्स्वप्रकाशत्वम् । अनन्यभास्यत्वं हि तत् । तदुक्तं भागवते—श्लो॥ 'यदोपरामो मनसो नामरूपरूपस्य दृष्टस्मृतिसम्प्रमोषात् । य ईयते केवलया स्वसंस्थया हंसाय तस्मै शुचिषद्मने नमः ॥' इति । नच निर्विशेषवृत्तिर्यदि स्वाभाविकी तर्हि सदापि सा स्यादिति वाच्यं, सदापि सास्त्येव, परं तु सविशेषवृत्त्या प्रतिबद्धा सती असतीव वर्तते । यथा मेघच्छन्नेऽम्बरे विद्यमानोप्यरुणोऽविद्यमानवद्भवति तद्वत् । यद्वा निर्विशेषवृत्तिस्सदापि नास्ति, किंतु निर्विशेषवृत्तिजननस्वाभाव्यमस्ति । सविशेषवृत्त्या तु तत्स्वाभाव्यस्य प्रतिबन्धात्तद्वृत्त्यभावस्तदेति वेद्यम् । **नन्वेवं** समाधाविव सुषुप्तावपि निर्विकल्पकज्ञानाभ्युपगमे सर्वेषामपि मुक्तिस्स्यादिति व्यर्थमेव वेदान्तशास्त्रमिति **चेन्मैवम्**—सुषुप्तावज्ञानसत्त्वेन मुक्त्यभावात् । नच सति निर्विकल्पकज्ञाने कस्मादज्ञानानिवृत्तिरिति वाच्यं, अन्तःकरणवृत्तेरेवाज्ञाननाशकत्वं नाविद्यावृत्तेरिति । नच जडाया अन्तःकरणवृत्तेरपि कथमज्ञाननाशकत्वमिति वाच्यं, चैतन्यप्रतिफलनसाहित्येन तस्यास्तत्सामर्थ्यसत्त्वादिति । नचाविद्यावृत्तेरप्यस्ति चैतन्यप्रतिफलनसाहित्यमिति वाच्यं, अन्तःकरणस्याविद्यातोऽतिस्वच्छत्वेन तत्र चैतन्यस्य स्फुटमवभासात् । जलाद्दर्पणे हि सूर्यप्रति-

फलनविशेषो दृश्यते । नच चैतन्यस्यैवाविद्यमानमज्ञाननाशनसामर्थ्यं कथं तत्प्रतिफलनसहितवृत्तेरिति वाच्यं, सूर्यस्याविद्यमानमपि दाहकत्वसामर्थ्यं सूर्यप्रतिफलनसहितदर्पणविशेषस्य दृश्यते हि— तस्मात्सत्यपि सुषुप्तौ निर्विकल्पकज्ञाने, नाज्ञाननाशः । नचैवं सुषुप्तौ निर्विकल्पकज्ञानं नास्त्येवेति वाच्यं, किं साक्षिभूतं निर्विकल्पकं ज्ञानं सुषुप्तौ नास्तीति विवक्षितम्? यद्वा वृत्तिभूतम्? नाद्यः- साक्षिणः कदाचिदप्यसत्त्वायोगात् । न द्वितीयः- अविद्यावृत्तेस्सत्त्वात् । नचाविद्यावृत्तेरभावश्शङ्क्यः, उत्थितस्मृत्यनुपपत्तिपरिकल्पितायास्तस्या अपलापस्य दुष्करत्वात् । अन्यथानुपपत्तिर्हि सर्वप्रमाणाधिका । तस्मात्सुषुप्तावविद्यावृत्तिभिस्साक्ष्यानन्दाज्ञानानुभवस्य जायमानत्वान्न निर्विकल्पकज्ञानासत्त्वमिति । **एवं श्रुतियुक्त्यनुभूतिभ्यो निर्विकल्पकं वस्तु निर्विकल्पकं ज्ञानं च सिद्धमिति संक्षेपः ॥**

## श्रुतप्रकाशिकोक्तदूषणनिराकरणपूर्वकं निर्विकल्पकस्वरूपनिरूपणम् ।

**यदुक्तं** श्रुतप्रकाशिकायां निर्विशेषशब्दो बहुव्रीहिसमासेनान्यपदार्थाभिधायीतीति, **तदस्माकमिष्टमेव** । अतएवास्माभिर्विशेषरहितान्यपदार्थो निर्विशेषपदार्थ इत्युच्यते । नहि निर्गता विशेषा यस्मात्स पदार्थः सविशेषो भवितुमर्हति । **यच्चोक्तमेतेन** प्रत्ययस्य सविशेषविषयत्वाभावे प्रत्ययत्वमेव हीयेतेति **तदप्ययुक्तम्**— निर्विकल्पकस्यापि सविशेषविषयत्वे निर्विकल्पत्वं हीयेतेति । नच कतिपयविकल्पराहित्यसत्त्वेपि निर्विकल्पत्वस्य न हानिरिति वाच्यं, तथासति सविकल्पकनिर्विकल्पक शब्दयोः पृथगर्थत्वायोगात् । नच सर्वविकल्पसहितं सविकल्पकं कतिपयविकल्परहितं निर्विकल्पकमिति भेद इति वाच्यं, सर्वविकल्पसहितस्य वस्तुनः कस्यचिदभावात् । नह्येकस्मिन् घटादौ विषये सर्वे विकल्पास्सम्भवन्ति, नहि ज्ञातृत्वादिविशेषा घटे सन्ति, नापि जडत्वादिविशेषा जीवे सन्ति, नापि दुःखादिविशेषा ईश्वरे सन्ति, प्रत्युत सर्वविशेषास्पदं निर्विशेषं ब्रह्मैव । नच निर्विशेषस्य तस्य कथं सविशेषत्वमिति वाच्यं, मायया तत्सम्भवात् । तस्मात्कतिपयविकल्पसहितमेव सविकल्पं घटादिवस्तु सविकल्पकज्ञाने विषयो भवतीति कृत्वा यत्त्वयोक्तं कतिपयविकल्परहितं ज्ञानं निर्विकल्पकमिति तत्सविकल्पकं ज्ञानमेव । ततश्च निर्विकल्पकज्ञानस्य लक्षणं त्वया नैवोक्तमित्यवश्यं तद्वक्तव्यम् । नच प्रथमपिण्डग्रहणं निर्विकल्पकमित्युक्तमिति वाच्यं, तदयुक्तत्वस्यादावेवोक्तत्वात् । स्वसंकेतमात्रसिद्धार्थस्याग्राह्यत्वादिति ॥

**ननु** भवतु निर्विकल्पकस्य सविशेषविषयत्वे निर्विकल्पकत्वहानिः । प्रत्ययस्य सविशेषविषयत्वाभावे प्रत्ययत्वमेव हीयतेत्यस्य कस्समाधिरिति **चेदुच्यते**—प्रत्ययस्य निर्विशेषविषयत्वाभावे प्रत्ययत्वमेव हीयतेत्यपि सुवचत्वात् । नच प्रतीयतेऽनेनेति प्रत्यय इति व्युत्पत्त्या निर्विकल्पकप्रत्ययेन कस्यापि प्रतीत्यभावात्प्रत्ययत्वहानिरिति वाच्यं, सविकल्पकप्रत्ययेनापि कस्यापि प्रतीत्यभावात्तस्यापि प्रत्ययत्वहानिरिति वक्तव्यत्वात् । नच सविकल्पकप्रत्ययेन सविकल्पकं प्रतीयत इति वाच्यं, निर्विकल्पकप्रत्ययेनापि निर्विकल्पकं प्रतीयत इति वाच्यत्वात् । नच निर्विकल्पकस्य यदि प्रतीयमानत्वं तर्हि तेनैव प्रतीयमानत्वेन विकल्पेन तत्सविकल्पकमेव भवेदिति वाच्यं, यद्यप्येवं स्वप्रकाशत्वान्निर्विकल्पकस्य वस्तुनः

प्रतीयमानत्वमयुक्तं, तथापि निर्विकल्पवस्त्वावरकाज्ञाननाशस्य निर्विकल्पवस्त्वाकारवृत्तिकृतत्वेन निर्विकल्पवस्तुनो वृत्तिवेद्यत्वमुच्यते उपचारादिति । एवं ब्रह्मणो वृत्तिव्याप्यत्वसत्त्वादेव मनसैवानुद्रष्टव्यमिति श्रूयते । फलव्याप्यत्वाभावात्तु मनोवागगोचरमित्युच्यत इति न विरोधः । फलव्याप्यत्वं नाम वृत्तिप्रतिफलितचैतन्यभास्यत्वम् । तद्धि जडस्य सम्भवति, तस्य स्वतो भानायोगात् । न ब्रह्मणः तस्य स्वतो भानसम्भवात् । नच ब्रह्मणः स्वप्रकाशत्वेपि विवदितव्यं, 'तमेव भांतमनुभाति सर्वं','अत्रायं पुरुषस्स्वयंज्योति'रित्यादिशास्त्रात् । नच स्वयम्भासमाने तस्मिन् कथमज्ञानावरणमिति वाच्यं,अज्ञानावरणस्यापि तेनैव भास्यमानत्वात्कौशिकैः सूर्ये तमस इव मूढैर्ब्रह्मण्यज्ञानस्य कल्पितत्वाच्चेति । तस्मान्निर्विकल्पस्यापि वस्तुनो वृत्तिव्याप्यत्वसद्भावादौपचारिकं ज्ञेयत्वमस्तीति तद्विषयस्यापि निर्विकल्पकप्रत्ययस्यास्ति प्रत्ययत्वमिति । नच ब्रह्मणो वृत्तिव्याप्यत्वधर्मे सत्यपि निर्विकल्पत्वहानिरेवेति वाच्यं, परमार्थतो वृत्तेरेवाभावेन तद्व्याप्यत्वस्यैवाभावान्नास्ति ब्रह्मणो निर्विकल्पत्वव्याहतिः । व्यवहारतस्तु ब्रह्मणस्सविकल्पत्वमस्माभिरभ्युपेतमेव । किंच सविकल्पकप्रत्ययतया त्वयाऽभ्युपेतोयं घट इत्यनुभवोपि निर्विकल्पकवस्तुपर एवेति पूर्वमेव दर्शितत्वादनुभवमात्रकं निर्विकल्पकं स्वयम्प्रकाशं चेति । **यदुक्तं** सविकल्पके निर्विकल्पकानुभूतार्थविशिष्टप्रत्यभिज्ञानसत्त्वान्निर्विकल्पकज्ञानं च सविशेषविषयमिति **तदप्यसत्**—प्रमाता प्रमाणं प्रमेयं चेति त्रिपुटी यत्र भाति तत्सविकल्पकं- यथा घटमहं जानामीति । न चात्र प्रमातृप्रमेये एव भातो नतु प्रमाणमिति वाच्यं, जानामीत्यस्य ज्ञानाश्रयोस्मीत्यर्थाद्ज्ञानस्य वृत्तिज्ञानत्वेन प्रमाणत्वाद्वृत्तिः प्रमाणमिति हि प्रागुक्तम् । सविकल्पकादन्यन्निर्विकल्पकं ज्ञानम् । तच्चेदमित्थमिति वक्तुमशक्यं, वक्तुं शक्यत्वे हि तस्य सविकल्पकत्वमेव स्यात् । निष्प्रकारकं हि ज्ञानं दुर्वचम् । केनचित्प्रकारेण विशिष्टस्यैव वक्तुं शक्यत्वादत एवातीन्द्रियं निर्विकल्पकमिति तार्किकैरुक्तम् । नहि वाचा इदमित्थमिति वक्तुं शक्यमतीन्द्रियं भवितुमर्हति । एवं मनसापीदमित्थमिति चिन्तयितुमशक्यमेव तत् । मनोहीन्द्रियं तार्किकमते- एतस्मिन्नतीन्द्रिये निर्विकल्पके ज्ञाने विषयभूतो योर्थस्स यदि केनचिद्विशेषेण विशिष्टस्तर्हि तदिदमित्थमिति वक्तुं शक्येतैव । सविशेषं हि वक्तुं शक्यते- वक्तव्यविशेषसत्त्वात् । सुप्तोत्थितस्य प्रत्यभिज्ञानं तु सविकल्पकमेव । सुखमहमस्वाप्सं, न किञ्चिदहमवेदिषं, मामप्यहं नाज्ञासिषमिति त्रिपुटीप्रतिभानात् । नच प्रत्यभिज्ञानबलात्सुषुप्तावपि त्रिपुट्यस्तीति वाच्यं, तथात्वे तदैव सुखमहं स्वपिमि, न किञ्चिदहं वेद्मि, मामप्यहं न वेद्मीति प्रतीत्यापत्तेः । नच तदा विद्यमानापि त्रिपुटी तदा न भाति, मेघच्छन्ने गगने रविरिवेति वाच्यं, अभातायास्त्रिपुट्या विद्यमानत्वानभ्युपगमात् । प्रतिभाससमयनियता हि त्रिपुटी, नापि तदा त्रिपुटीसत्त्वे प्रमाणमस्ति । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये'दित्यादिश्रुत्या त्रिपुट्यभावस्यैव प्रमितत्वात् । नचैवमननुभूतायास्त्रिपुट्याः कथं प्रत्यभिज्ञानमिति वाच्यं, साक्षिणानुभूतस्य सुखस्याज्ञानस्य च तदभिन्नेन प्रमात्रा स्मर्यमाणत्वात्स्मरणसमय एव त्रिपुटी प्रतिभानमिति ।

**ननु** सुषुप्तावपि साक्षी सुखमज्ञानं चेति त्रयमस्तीति कथं त्रिपुट्यभावः ? सत्यां च त्रिपुट्यां सुखविषयकमज्ञानविषयकमात्मविषयकं च वृत्तित्रयं वर्तत एवेति कथं निर्विशेषज्ञानसिद्धिः ? वृत्तेः

प्रमाणस्य सुखादेः प्रमेयस्य साक्षिणः प्रमातुश्च तदापि सत्त्वाज्जागरात्को विशेष इति चेदुच्यते-- यद्यपि सुषुप्तावस्ति वृत्तित्रयं साक्ष्याकारा, सुखाकारा, ज्ञानाकारा चेति । तथापि नैका विशिष्टा वृत्तिः । जागरे तु घटमहं जानामीति घटाकाराऽहमाकारा च विशिष्टा एका वृत्तिरस्ति । एवं विशिष्टवृत्तिसत्त्वादेव जागरज्ञानस्य सविकल्पकत्वम् । तदभावादेव सुषुप्तिज्ञानस्य निर्विकल्पकत्वम् । विशिष्टवृत्तिजन्यं हि ज्ञानं विशिष्टज्ञानं सविकल्पकम् । अविशिष्टवृत्तिजन्यं च केवलज्ञानं निर्विकल्पकम् । किं बहुना- यत्र ज्ञानेऽहमाकार इदमाकारो वा स्फुरति तत्सविकल्पकं, यत्र तु न स्फुरति तन्निर्विकल्पकम् । सुषुप्तावहङ्काराभावान्नाहमिदमाकारस्फुरणमिति ।

**ननु** सुषुप्तावहङ्काराभावादहमाकारस्फुरणं माभून्नाम- विषयस्याज्ञानादेस्सत्त्वात्कुतो नेदमाकारस्फुरणमिति **चेन्नैवम्**— ज्ञातुरहन्तासत्त्वएव ज्ञेयस्येदन्तासत्त्वम् । ज्ञेयस्येदन्त्वं हि ज्ञातुः प्रत्यक्षविषयत्वम् । तस्मात्सुषुप्तौ प्राज्ञकर्तृकसुखकर्मकाज्ञानवृत्तिकरणकानुभवसत्त्वेपि तस्मिन्ननुभवेऽहमिदमाकाराभावात्तदनुभवस्य निर्विकल्पकत्वं, सुषुप्तेस्त्रिपुटीरहितत्वं च । प्रमात्रादिवत्त्वं हि त्रिपुटीवत्त्वम् । नच प्राज्ञ एव प्रमातेति वाच्यं, वस्तुतस्तथात्वेपि सर्वसंसारोत्तीर्णस्य प्राज्ञत्वं, संसारिणस्तु प्रमातृत्वमिति भेदात् । नच प्राज्ञोपि संसार्येवेति वाच्यम्, 'अन्धोप्यनन्धो भवती'त्यादिश्रुतेः । अत एव जीवस्य संसारो न स्वाभाविकः, किंतु आगन्तुक एवेत्युच्यते । एवमसंसारित्वादेव जीवस्य ब्रह्माभेदोपपत्तिः । ननु यदि सुषुप्तावप्यनुभविता अनुभाव्यमनुभवकरणं चेति विशेषास्सन्ति, अहमाकार इदमाकारश्चेति विशेषौ सतः, तर्हि कतिपयविशेषरहितमेव निर्विकल्पकं ज्ञानमिति सिद्धं । नचेष्टापत्तिः- रामानुजमतप्रवेशात्तवेति चेन्नैवम्- सौषुप्तिके हि निर्विकल्पके ज्ञाने साक्षी वा सुखं वा अज्ञानं वा विषयो भवति । तच्च विषयभूतं वस्तु निर्विशेषमेवेति न निर्विकल्पकज्ञानस्य सविशेषविषयत्वमिति । नच साक्षिणो निर्विशेषत्वेपि सुखं सविशेषमेवेति वाच्यं, साक्षिस्वरूपभूतत्वात्तत्सुखस्य निर्विशेषत्वमेवेति । नचाज्ञानं सविशेषमिति वाच्यं, जागरस्वप्नयोरज्ञानस्य सविलासत्वेन सविशेषत्वेपि सुषुप्तौ निर्विलासत्वेन निर्विशेषत्वमेव प्रलय इव । नच केवलाज्ञानाभावादज्ञानावच्छिन्नचैतन्यं चैतन्यसहितमज्ञानं वा विषयो भवतीति तत्सविशेषमेवेति वाच्यं, अज्ञानचैतन्यातिरिक्तानामेव विशेषत्वेन ग्रहणात् । अज्ञानस्य चैतन्यशक्तित्वेन चैतन्यात्पार्थक्येनापार्थक्येन वा निर्वक्तुमशक्यत्वाच्च । किं च अयं घट इति ज्ञाने घटचैतन्यद्वयस्य विषयत्वे सत्यपि घटमेकमेवाहं ज्ञातवानिति प्रत्येति लोको नतु घटचैतन्यद्वयमिति । नच विद्वान् घटावच्छिन्नचैतन्यं ज्ञातमिति प्रत्येतीति वाच्यं, तर्हीहापि विद्वान् अज्ञानावच्छिन्नचैतन्यमेवानुभूतमिति प्रत्येतीति तुष्यतु भवान् । नन्वेवमच्छिन्नचैतन्यस्य सविशेषत्वेन तद्विषयकं ज्ञानं सविकल्पकमेवेति सुषुप्तावपि सविकल्पकमेव ज्ञानं न निर्विकल्पकमिति **चेन्नैवम्**—सर्वथा निर्विकल्पकं न वृत्तिज्ञानं, नापि तद्विषयभूतं चैतन्यम् । किंतु पारमार्थिकमनवच्छिन्नं ब्रह्मभूतं चैतन्यमेव । नच वृत्तिज्ञानविषयभूतमनवच्छिन्नचैतन्यं निर्विकल्पकमेवेति वाच्यं, अनवच्छिन्नचैतन्यस्य वृत्तिज्ञानविषयत्वाभावात् । नच समाधावज्ञानाभावाद्वृत्तेर्विषयभूतमनवच्छिन्नचैतन्यमेवेति वाच्यं, अज्ञानाभावे तत्कार्यान्तःकरणवृत्तेरेव

स्थित्ययोगात् । अतएव निर्बीजसमाधौ वृत्तेरप्यनभ्युपगमः- बीजस्याज्ञानस्याभावात् । वृत्तिज्ञानस्य निर्विकल्पकत्वन्तु वृत्तेर्ज्ञानत्वमिवौपचारिकम् । तत्र च यस्मिन् ज्ञाने अज्ञानकार्यं विषयो भवति तत्स-विकल्पकम् । यस्मिंस्तु अज्ञानकार्यं विषयो न भवति तन्निर्विकल्पकमित्युच्यते व्यवस्था । नचैवं निर्विकल्पकवृत्तिज्ञानस्य कतिपयविशेषराहित्यमेवासदुक्तं सिद्धमिति वाच्यं, त्वया प्रथमपिण्डज्ञानस्य निर्विकल्पकत्वमुक्तं, नत्वेवंविधस्येति भेदात् । यद्वा यस्मिन् ज्ञाने वस्तुस्वरूपमात्रमेव विषयस्तन्निर्वि-कल्पकं, यत्र तु तदतिरिक्तमपि नामजात्यादिकं विषयस्तत्सविकल्पकम् । सुषुप्तौ च ज्ञाने वस्तुस्वरूपमेव विषय इति तस्य निर्विकल्पकत्वम् । नचैवं सुषुप्तावज्ञानविषयकं ज्ञानं न निर्विकल्पकमिति वाच्यं, तत्रापि ज्ञाने अज्ञानवस्तुस्वरूपस्यैव विषयभूतत्वेनादोषात् । **ननु** किं तदज्ञानस्य स्वरूपं यद्ज्ञाने विषयो भवतीत्युच्यत इति **चेदुच्यते**- किं त्वमज्ञानस्वरूपं न वेत्सि । नाहं वेद्मीति चेत्तर्हि ब्रूहि तदवेदनस्य स्वरूपं मह्यम् । नाहं वक्तुं शक्नोमीति चेत्किं तव तद्वचनाशक्तिस्तदवेदनानुभवाभावात् ? यद्वा सत्य-प्यनुभवे वाङ्मनसयोरविषयत्वात् ? नाद्यः- अनुभवपूर्वकत्वान्नाहं वेद्मीति वचनस्य । द्वितीते वेत्स्येव-त्वमज्ञानस्वरूपमिति व्यर्थोयं प्रश्नः । तस्मादनुभवैकवेद्यमेवाज्ञानं यथा सुखं दुःखं च । यद्यस्मदीयोऽज्ञान-स्वरूपजिज्ञासया पृच्छति तर्हि ब्रवीमि- यदेव घटादि द्वैतस्य स्वरूपं तदेव तत्कारणाज्ञानस्यापीति । नच घटादेः कम्बुग्रीवादिकं स्वरूपमिति वाच्यं, तस्य मृत्स्वरूपत्वात् । मृत्तिका हि कम्बुग्रीवाद्याकारवती कृता कुलालेन । तर्हि निस्तत्त्वं घटादिकमिति चेत्तथैवाज्ञानमपीति विद्धि ।

**ननु** भवत्वेवं घटादिविकारस्य निस्तत्त्वत्वं कथं पुनर्मृत्तिकाया इति **चेदुच्यते** । किं पुनर्मृत्ति-कायाः स्वरूपम् ? न तावद्गन्धवत्त्वं तस्य तटस्थलक्षणत्वात् । न नीलरूपवत्त्वं, नीलरूपस्य गुणत्वेन मृत्तिकाया द्रव्यत्वेन च तस्य मृत्तिकास्वरूपत्वाभावात् । न काठिन्यवत्त्वं, काठिन्यस्यापि गुणत्वात् । नापि पिण्डो मृत्स्वरूपं, पिण्डस्य मृदारब्धत्वेन स्वारम्भकमृद्द्रव्यस्वरूपत्वायोगात् । नहि पटस्स्वारम्भक-तन्तुस्वरूपं भवति, कार्यात्प्रागेव कारणस्य सिद्धत्वनियमात् । नापि चूर्णपुञ्जो मृत्स्वरूपम्, पुञ्जस्या-तात्त्विकत्वात् । नहि पुञ्जघटकावयवातिरिक्तः पुञ्ज इति कश्चिदवयव्यस्ति । नापि चूर्णो मृत्स्वरूपम्, चूर्णस्य त्रसरेण्वादेरवयवित्वे स्वावयवातिरिक्तचूर्णाभाव एव । निरवयवत्वे च कथं निरवयवस्य तस्य सावयवमृद्रूपत्वम् । नच मृदपि निरवयवैवेति वाच्यं, प्रत्यक्षविरोधात् । नच प्रत्यक्षसिद्धे मृत्स्वरूपे किं विचारेणेति वाच्यं, प्रत्यक्षसिद्धेपि रज्जुसर्पस्वरूपे विचारस्य कर्तव्यत्वदर्शनात् ॥ तस्मान्मृत्स्वरूपस्यापि दुर्वचत्वान्निस्तत्त्वमेव । एवं जलादावपि बोद्धव्यम् । नच 'मृत्तिकेत्येव सत्य'मिति श्रुतिविरोधः, घटा-द्यपेक्षया मृत्तिका सत्येति तदर्थात् । 'प्राणा वै सत्य'मितिवत् । 'तत्सत्यमतोन्यदार्त'मिति श्रुत्यनुसाराच्च । तस्मात्- सर्वस्यापि द्वैतस्य यदेव स्वरूपं तदेवाज्ञानस्यापीति सिद्धम् । नन्वेतावतापि न मया तद्विदितमिति चेद्विद्धि सौम्य वदामि- कल्पितस्याधिष्ठानमेव स्वरूपमिति ब्रह्मणि कल्पितस्य द्वैतस्याज्ञा-नस्य च ब्रह्मैव स्वरूपमिति । अत एव ज्ञानमात्रस्य निर्विकल्पकं ब्रह्मैव विषय इति ज्ञानमात्रं निर्विकल्प-कमेव । तस्य सविकल्पकत्वं तु भ्रान्तिसिद्धमेव । भ्रान्तिसिद्धं द्वैतमपि ज्ञाने विषयभूतमिति भ्रान्तिसत्त्वादज्ञ-

जन्यस्य । तस्माद्विचारे कृते सति सविकल्पकस्यैव ज्ञानस्यासिद्धिः, न तु निर्विकल्पकस्य । यथा सविकल्पकस्यैव द्वैतस्यासिद्धिर्न तु निर्विकल्पकस्याद्वैतस्य ब्रह्मणः तद्वदिति **संक्षेपः** । **यच्चोक्तं** श्रुतप्रकाशिकायां संस्कारसचिवं ज्ञानं सविकल्पकं तदसचिवं तु निर्विकल्पकमिति **तदतीवासत्**---सति ज्ञानस्य संस्कारसाचिव्ये स्मृतित्वं प्रत्यभिज्ञानत्वं वा सम्पद्यते; नतु निर्विकल्पकत्वमिति ॥

## प्रत्यक्षस्य भेदविषयत्वनिराकरणम् ।

अथ प्रत्यक्षस्य सन्मात्रविषयत्वान्न भेदविषयत्वं- भेदश्च दुर्निरूप **इत्यद्वैतिनः** । **जात्यादिविशिष्टस्यैव** वस्तुनः प्रत्यक्षविषयत्वाज्जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनस्स्वस्य च भेदव्यवहारहेतुत्वमिति **रामानुजः** ।

अत्र विचार्यते—प्रतिभासमानं सर्वमपि वस्तु अस्तीत्येव प्रतिभासते, नतु नास्तीति । ततस्सत एव वस्तुनो भानं न त्वसत इति **सिद्धान्तः** । असतोपि भानाभ्युपगमे शशशृङ्गमपि अस्तीति भायात् । नच शुक्तिरजतमसदेव भातीति वाच्यं, भानसमये तस्यापि सत्त्वात् । नचाऽभावोऽसन्नेव भातीति वाच्यं, केवलस्याभावस्य भानाभावात् । नच प्रतियोगिकाभावो भातीति वाच्यं, तत्र प्रतियोगिनोऽभानमेव, नतु सप्रतियोगिकाभावस्य भानम् । यद्वा सप्रतियोगिकाभावाधिकरणस्यैव भानम्- इति । तच्च सद्वस्तु ब्रह्मैव- 'सदेव सोम्ये'ति श्रुतेः । सत्यस्यैव सत्त्वा'त्सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुतेश्च । नच जगदपि सत्यत्वात्सदेवेति वाच्यं, 'तत्सत्यमतोऽन्यदार्त'मिति श्रुतेः । नाचानित्यत्वमेवार्तत्वं न त्वसत्यत्वमिति वाच्यं, सत्यत्वस्यैव नित्यत्वात्, सतोऽनित्यत्वायोगान्नित्यत्वायोगाच्चासतः । अनित्यत्वं ह्यभावप्रतियोगित्वं सम्मतम् । अभावप्रतियोगिनो हि घटादयोऽनित्याः । सद्वस्तुनश्चाभावप्रतियोगित्वमयुक्तं- 'नाऽसतो विद्यते भावो नाभावो विद्यते सत'इति गीतावचनात् । 'भूसत्तायामसभु'वीति पाणिन्यनुशासनात्सत्त्वस्य भावरूपत्वेन सतोऽभावायोगाच्च । एवं ब्रह्मण एव सद्वस्तुत्वे सज्जगदिति जगतस्सत्त्वप्रतीतिस्तु सत्तादात्म्याध्यासप्रयुक्तएव । यथा मृद्घट इति सामानाधिकरण्यप्रतीतिर्मृत्तादात्म्यप्रयुक्त एव घटस्य । नच मृत्कार्यत्वाद्घटस्य मृत्तादात्म्यमस्तुनाम- कथं जगतो ब्रह्मतादात्म्यमिति वाच्यम्, यतो वेत्यादि श्रुत्या जगतो ब्रह्मकार्यत्वावगमात् । नच मृद्घटयोरिव ब्रह्मजगतोस्सालक्षण्यादर्शनान्नास्ति कार्यकारणभाव इति वाच्यं, विवर्तवादाश्रयणात् । गगनमपि नीलात्मना विवर्तते हि । ननु सज्जगदिति प्रतीतिर्न ब्रह्मजगतोस्तादात्म्याध्यासप्रयुक्तः, तथासति ब्रह्मजगदिति प्रतीत्यापत्तेः । किंतु जगतो विद्यमानत्वप्रयुक्तेति चेन्नैवम् । ब्रह्मसत्तातिरिक्तजगत्सत्ताऽभावेन जगतो विद्यमानत्वायोगात् ।

**ननु** ब्रह्मसत्तयैवास्तु विद्यमानत्वं जगतः, तथापि विद्यमानत्वप्रयुक्तैव जगत्सदिति प्रतीतिरिति **चेत्सत्यम्**- अज्ञदृष्ट्या तथैव, विद्वद्दृष्ट्या तु न तथा, जगति वर्तमानस्य विद्यमानत्वस्य ब्रह्मधर्मत्वेन ब्रह्मतादात्म्यप्रयुक्तैव सा प्रतीतिरिति । यथा नीलो घट इति घटे नैल्यप्रतीतिर्मृद्धर्मस्य नैल्यस्य घटे वर्तमानत्वेनैव प्रयुक्ता, नतु घटे कस्य चिदपूर्वनैल्यस्य सत्त्वेनेति । नचैवं मृद्घट इति वद्ब्रह्म घट इति कुतो न प्रतीतिरिति वाच्यं, ब्रह्मणस्सत्त्वरूपो धर्मस्सर्वत्रानुगतः ब्रह्मत्वं तु न, यथा रज्जुसर्पस्थले रज्जोरिद-

मंशस्सर्पादावनुगतो धर्मः रज्जुत्वं तु न तद्वत्, अत एवायं सर्प इति प्रतीतिर्न तु रज्जुसर्प इति । यदि मृद इव ब्रह्मणो जगद्रूपेण परिणामस्तर्हि ब्रह्म जगदिति प्रतीतिस्स्यान्नतु तथा- किंतु रज्जोस्सर्परूपेणेव विवर्तः । अतो न तथा प्रतीतिरिति भावः । तस्मात्सर्वेष्वपि घटादिप्रत्यक्षेषु घटाद्यनुगतं सद्वस्त्वेव विषयो, न त्वसद्वस्तु घटादिकमिति कृत्वा सन्मात्रावगाह्येव प्रत्यक्षम् । नचैवं घटपटादिप्रत्यक्षज्ञानानां कथं वैलक्षण्यं सन्मात्रावगाहित्वस्य तुल्यत्वादिति वाच्यं, घटाद्युपाधिभेदेन तद्भेदसिद्धेः । अयं घट इति प्रत्यक्षं घटावच्छिन्नं सन्मात्रं गृह्णाति । अयं पट इति तु पटावच्छिन्नं सन्मात्रम् । एवं सदवच्छेदकघटपटभेदेपि सतोऽभिन्नत्वान्न काप्यनुपपत्तिरिति । **ननु** प्रत्यक्षं घटपटाद्यवच्छिन्नं सन्मात्रं न गृह्णाति, किंतु घटपटाद्यनुस्यूतां सत्तामिति **चेन्मैवम्**—सत्तायास्सतोऽनतिरेकात् । घटपटाद्यनुस्यूता सत्तैव घटपटाद्यवच्छिन्नं ब्रह्म सद्रूपं, नतु ततोन्यदिति । यथा तच्छब्दार्थादनतिरिक्तः तत्त्वशब्दार्थ इति प्रागेवोक्तं स्मर । नन्वेवं घटादिप्रत्यक्षं घटाद्युपहितमेव सद्गृह्णाति, नत्वनुपहितमिति कृत्वा कथमुच्यते प्रत्यक्षं सन्मात्रावगाहीति ? सद्ग्राहित्वेसति सदितराग्राहित्वं हि सन्मात्रावगाहित्वमिति चेदुच्यते- सर्पोयमिति रज्जुसर्पप्रत्यक्षस्थले इदमंशश्चाक्षुषप्रत्यक्षविषयः, सर्पांशस्तु अविद्यावृत्त्यात्मकभ्रमप्रत्यक्षविषय इति यथा प्रामाणिकैरभ्युपेयते, एवं सन्घट इति प्रत्यक्षेपि सदंशः प्रत्यक्षप्रमाणविषयः, घटांशस्तु अविद्यावृत्त्यात्मकभ्रमप्रत्यक्षविषय इति सन्मात्रावगाह्येव प्रत्यक्षम् । नच सन्घट इति प्रत्यक्षे तथा भवतु- कथं पुनर्घट इति प्रत्यक्षे तत्रांशद्वयानुपलम्भादिति वाच्यम्, भासमानं सर्वमपि वस्तु सद्रूपेणैव भातीति पूर्वमुक्तत्वाद्घट इति प्रत्यक्षेपि सदंशविषयं प्रत्यक्षमेकं घटांशविषयमपरमित्यस्ति द्वयमिति । यद्वा घट इति प्रत्यक्षे घटस्य स्वरूपभूतं वस्तु सद्ब्रह्मैव विषयः, अविद्यावशात्तु मिथ्याभूतघटभानमिति । एवं सविकल्पकप्रत्यक्षस्य सन्मात्रावगाहित्वं । निर्विकल्पकस्य सन्मात्रावगाहित्वं तु पूर्वमेव प्रपञ्चितम् । एवं शाब्दस्य मानसस्यैन्द्रियकस्य वा निर्विकल्पकस्य सविकल्पकस्य वा प्रत्यक्षस्य सन्मात्रावगाहित्वात्सद्वस्तुनश्चाद्वैतत्वाद्भेदप्रतीतिर्मृषैव ।

**नच** नाद्वैतं सद्ब्रह्मेति वाच्यं, 'सलिल एको द्रष्टाऽद्वैत' इत्यादिश्रुतेः । नन्वद्वैतमिति निषिध्यमानं द्वैतं किमस्ति, उत नास्ति ? आद्ये- सतः कथं द्वैतस्य निषेधः ? द्वितीये- निषेधस्य प्रसक्तिपूर्वकत्वादसतश्च प्रसक्त्ययोगात्कथं तन्निषेधः ? **मैवम्**- भ्रान्त्या द्वैतप्रसक्तिसत्त्वादिति । नच प्रमाणसिद्धस्य द्वैतस्य कथं भ्रान्तिसिद्धत्वमिति वाच्यं, केन पुनः प्रमाणेन सिद्ध्यति द्वैतम् ? न तावदैन्द्रियिकप्रत्यक्षेण- त्वक्चक्षुश्श्रोत्रजिह्वाघ्राणाख्येन्द्रियपञ्चकेन, स्पर्शरूपशब्दरसगन्धाख्यविषयपञ्चकस्य गृह्यमाणत्वेन, द्वैतस्य तदन्यतमत्वाभावात् । द्वैतं हि भेदः- भेदश्च न शब्दाद्यन्यतम इति । नापि मानसिकप्रत्यक्षेण, सुखादिवद्भेदस्याऽऽन्तरत्वाभावात् । नाप्यनुमानेन, घटः पटाद्भिन्नः नामाकारभेदात्कटवदित्यनुमानेन हि भेदस्साध्यते- तत्र नामाकारभेदः केन साध्यते । नच घटनामाकारौ पटनामाकाराभ्यां भिन्नौ घटनामाकारत्वात्कटनामाकारवदित्यनुमानेनेति वाच्यं, स्वप्रतियोगिघटपटभेदे सिद्धे सत्येव नामाकारभेदसिद्धिः, नामाकारभेदे सिद्धे सत्येव घटपटभेदसिद्धिरित्यन्योन्याश्रयात् । नाप्युपमानेन, सादृश्यज्ञानाभावात् । नापि शब्देन तस्याभेदपरत्वात् । नापि घटः पट इति व्यवहारानुपपत्त्या, भ्रान्तिसिद्धत्वात्तद्व्यवहारस्य ।

किंच घटपटभेदप्रयुक्तो व्यवहारः- व्यवहारप्रयुक्तो घटपटभेद इत्यन्योन्याश्रयात् । नापि घटे पटधर्मानुपलब्ध्या, अभावं प्रत्येवानुपलब्धेः प्रमाणत्वात् । नचान्योन्याभावत्वेन व्यवह्रियमाणोऽभाव एव भेद इति वाच्यं, भेदस्य भावधर्मत्वेनाभावत्वाभावात् । पटभिन्नो घट इति घटे पटभिन्नत्वं भावधर्मो हि । नचाभावस्यापि भावधर्मत्वं भवत्येवेति वाच्यं, विरोधात्- भावस्याभावो धर्म इति हि व्याहतम् । नच तोयस्य दाहकत्वाभावो धर्मो दृश्यत इति वाच्यं, तोयस्य दाहनिवारकत्वरूपभावधर्म एव स इति । नच घटस्य नाशरूपोऽभावो दृश्यत इति वाच्यं, घटस्य चूर्णत्वापत्तिरूपभावधर्म एव स इति । नचाग्निदग्धस्य देहस्य नाशो दृश्यत इति वाच्यं, भस्मभावापत्तिरूपभावधर्म एव सः । किं बहुना- सर्वस्यापि कार्यजातस्य दृश्यमानो नाशरूपो विकारः स्वकारणरूपेणावस्थानमेवेति भावधर्म एव । अत एवास्तित्वादीनां षण्णामपि भावविकारत्वप्रसिद्धिः । भवतु वा भेदस्याभावत्वं, न तावता तवेष्टसिद्धिः- घटः पटो न भवतीत्यन्योन्याभावरूपस्य भेदस्य घटपटभेदज्ञानप्रयुक्तत्वेन भेदस्यैवान्योन्याभावत्वे आत्माश्रयात् । भेदस्यान्योन्याभावादतिरिक्तत्वे चान्योन्याश्रयात् । तस्मात्सर्वथापि दुर्निरूप एव **भेदः ।**

**ननु** दुर्निरूपोपि भेदोस्त्येवानुभवसिद्धत्वादिति **चेन्मैवम्**—दुर्निरूपोऽनुभवसिद्धः किं रज्जुसर्पोस्ति ? येन भेदोपि स्यात् । दुर्निरूपत्वमनुभवसिद्धत्वं चोभयत्रापि सममेव । नच रज्जुसर्पो भ्रमरूपानुभवसिद्ध एव, न प्रमारूपानुभवसिद्ध इति वाच्यं, भेदस्यापि भ्रमरूपानुभवसिद्धत्वात् । जीवो हि भ्रमकाल एव भेदं पश्यति, न त्वभ्रमकाले- जागरस्वप्नयोरेव भेदानुभवात् । सुषुप्त्यादौ तदननुभवाच्च । सुषुप्त्यादौ भेदादर्शनं हि सार्वजनीनम् । समाधौ भेदादर्शनं तु विद्वदेकविषयम् । तस्माद्भ्रान्तिसिद्धमेव **द्वैतम् ।**

**ननु** भेदस्य भ्रान्तिसिद्धत्वमस्तुनाम प्रत्यक्षादिप्रमाणाविषयत्वात् । घटादिरूपं द्वैतं तु प्रत्यक्षादिसिद्धमेव, तद्विषयत्वात् । चक्षुर्हि रूपं रूपवद्द्रव्यं च गृह्णाति । तत्कथं चक्षुर्ग्राह्यो घटः भ्रान्तिसिद्धो भवेत् ? एवं स्पर्शादिषु तद्वद्द्रव्येष्वपि बोद्धव्यम् । **इति चेदुच्यते**—किं चक्षुर्ग्राह्यो गुणो रूपं घटो वा तद्युक्तः, कुतश्चिद्वस्त्वन्तराद्भिन्न उताभिन्नः ? आद्ये- कथं तद्विशेषणभेदसिद्धिः भिन्नो हि भेदविशिष्टः भेदासिद्धौ च कथं तद्विशिष्टस्य भिन्नस्य वस्तुनस्सिद्धिः ? द्वितीये- अभिन्नस्य घटस्य कथं द्वैतत्वम् ? द्वैतं हि भिन्नम् । **ननु** चक्षुरादीन्द्रियभेदात्तद्ग्राह्यरूपादिविषयभेद इति सुनिरूप एवात्र भेद इति **चेन्मैवम्**—स्वग्राह्यरूपादिविषयभेदादेव चक्षुरादीन्द्रियभेद इत्यन्योन्याश्रयात् । चक्षुर्ग्राह्यो गुणो रूपं- रूपग्राहकमिन्द्रियं चक्षुरिति हि प्रसिद्धिः । **ननु** भेदस्य चक्षुराद्यविषयत्वेन भ्रान्तिसिद्धत्वमस्तुनाम कथं पुनश्चक्षुरादिविषयस्य रूपादेर्भ्रान्तिसिद्धत्वम् ? कथं वा चक्षुराद्यविषयस्याद्वैतस्य ब्रह्मणोऽभ्रान्तिसिद्धत्वम् ? इति **चेदुच्यते**—यदि चक्षुरादीनि प्रमाणानीति मतं तर्हि तद्विषयस्य यथार्थत्वेनैव भवितव्यं, ब्रह्मभिन्नं तु न यथार्थमिति । कथं रूपादेरयथार्थस्य चक्षुरादिप्रमाणग्राह्यत्वं- किंतु चक्षुरादीनि रूपाद्यधिष्ठानचैतन्यग्राहीण्येव प्रमाणत्वात् यथा भ्रमस्थलेपि चक्षुरधिष्ठानं यथार्थमिदमंशमेव गृह्णाति तद्वदिति प्रागेवोक्तम् । **ननु** उक्तमेव परं त्वत्र कश्चिदस्ति संशयः । किमिति -चक्षुरादयो निरध्यासमेव ब्रह्म न **प्रतिपादयेयुरिति**—

**अत्रोच्यते**— यावदविद्यं निरध्यासं ब्रह्म नास्त्येव । यदा तु निरध्यासं ब्रह्म तदा चक्षुरादेरेवाभाव इति कथं निरध्यासं ब्रह्म चक्षुरादिकं विषयीकुर्यात् । नचैवं साध्यासब्रह्मप्रतिपादने किमिति चक्षूरूपाधिष्ठानं ब्रह्मैव प्रतिपादयति ? न रसाद्यधिष्ठानं ब्रह्मेति वाच्यं, फलबलपरिकल्प्यस्वभावविशेषे चोदनानवकाशात् । अन्यथा किमिति चक्षूरूपमेव गृह्णाति, नतु रसादिकमिति ? प्रश्ने त्वमपि किमप्युत्तरं ब्रूयाः- तस्मान्नियमेन चक्षुरादीन्द्रियाणि रूपाद्यध्यासाधिष्ठानचैतन्यग्राहकाणीत्यविवादम् । यातु "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैन" मित्यादिश्रुतिर्ब्रह्मणोऽतीन्द्रियत्वप्रतिपादिका, साहि रूपाद्यध्यासानधिष्ठानं ब्रह्म चक्षुराद्यविषयमित्येवंपरा । यद्यप्यज्ञा रूपादिकमेव पश्यामो वयमिति मन्यन्ते नतु तदधिष्ठानं ब्रह्मेति, तथापि विद्वान्ब्रह्मैवाहं पश्यामीति मन्यते । यत्पुरस्तादित्यादिश्रुतेः, "ऐतदात्म्यमिदं सर्व"मित्यादिश्रुतेश्च । तस्मादविदुषा चक्षुरादिभिर्विषयीकृतं सर्वमपि जगद्विदुषो ब्रह्मैव, अध्यस्तस्याधिष्ठानानतिरेकात् । अतएव विद्वान् सदा जगत्पश्यन्नपि ब्रह्मैव पश्यति । यथा घटतत्त्ववित्पुरुषो घटं पश्यन्नपि मृत्तिकामेव पश्यति इति । **नन्वेवं** रूपाद्यध्यासाधिष्ठानं ब्रह्मैव भेदाध्यासाधिष्ठानमपि ब्रह्म गृह्णीयादेव प्रमाणमिति **चेन्नैवम्**— रूपाद्यध्यासाधिष्ठानग्रहणस्वाभाव्यमिव चक्षुरादेर्भेदाध्यासाधिष्ठानग्रहणस्वाभाव्याभावात् । अविद्याया एव तत्स्वाभाव्यसत्त्वात् । नहि व्यावहारिकसर्पमिव प्रातिभासिकसर्पमपि चक्षुर्गृह्णाति, किन्त्वविद्यैव । नच व्यावहारिकभेदस्य कथं प्रातिभासिकत्वमिति वाच्यम्, चक्षुरादिप्रमाणागोचरत्वेनैव तस्य प्रातिभासिकत्वात् । नच प्रातिभासिकस्य कथं व्यवहारयोग्यत्वमिति वाच्यं, प्रातिभासिकस्यापि स्वप्नस्य व्यवहारयोग्यत्वदर्शनात् । नच ब्रह्मसाक्षात्कारं विना निवर्तयितुमशक्यस्य भेदस्य कथं प्रातिभासिकत्वमिति वाच्यं, सौषुप्तिकनिर्विकल्पकज्ञानेनापि भेदनिवृत्तिसम्भवात् । नचैवं व्यावहारिकजगतोपि प्रातिभासिकत्वं स्यादिति वाच्यमिष्टापत्तेः । नचैवं रूपादेरिव भेदस्यापि प्रातिभासिकत्वे तुल्ये कस्माद्भेदोऽविद्यावृत्त्यैव गृह्यत इति नियम्यत इति वाच्यम् , अविद्याया एव भेदग्रहण स्वाभाव्यदर्शनात् । तस्मान्नातिशङ्कनीयत्वादविद्यायाः प्रातिभासिक एव भेदश्शुक्तिरजितवद्दुर्निरूपत्वेनाविद्याविषयत्वादिति ।

## रामानुजमतखण्डनपूर्वकं भेदस्य दुर्निरूपत्वोपपादनम् ।

एवं प्रत्यक्षस्य सन्मात्रावगाहित्वे भेदस्य दुर्निरूपत्वे च स्थापिते सति एतदमृष्यमाणः प्रत्यवतिष्ठते **रामानुजः**— वस्तुसंस्थानरूपजात्यादिलक्षणभेदविशिष्टविषयमेव प्रत्यक्षं सच जात्यादिलक्षणवस्तुसंस्थानरूपो भेदस्सुनिरूप एवेति, **नैवम्**—गोवस्तुसंस्थानस्य सास्नादेर्गोत्वजातिरूपत्वाभावात् । एकमेव सास्नादिलक्षणं संस्थानं नहि सर्वेषु गोषु वर्तते— किंतु भिन्नमेव गोत्वं तु सर्वत्रानुगतमेकमेव । गोत्वभेदे प्रमाणाभावात् । संस्थानभेदे तु प्रत्यक्षमेव प्रमाणं, न हि देवदत्तगोसंस्थानमेव यज्ञदत्तगवि वर्तते, किंतु तत्तुल्यमन्यदेव । अपि च खण्डत्वमुण्डत्वादिरपि वस्तुसंस्थानमेव । नतु तस्यानुवृत्तिर्दृश्यते, विशेषधर्मत्वात् । तस्मात्संस्थानातिरिक्तमेव जातिपदवाच्यं गोत्वादि । संस्थानं तु पिण्डगताकारविशेषः । तत्संस्थानं साच जातिर्न भेदपदार्थः, तथा प्रसिद्ध्यभावात् । नहि घटस्य पटाद्भेद इति वाक्यादनुन्मत्तस्य

घटस्य पटाज्जातिरिति घटस्य पटात्कम्बुग्रीवाद्याकार इति वा बोधो भवति, अनन्वितार्थाभिधायित्वात्तद्वाक्यस्य । तस्मात्संस्थानं वा जातिर्वा भेदप्रयोजकमेव नतु भेदः । तत्र संस्थानमेकजातीयव्यक्तिभेदप्रयोजकं, जातिस्तु भिन्नजातीयभेदप्रयोजिका । एवं भेदस्य संस्थानत्वजातित्वाभावादेव प्रतियोगिसापेक्षत्वम् । घटस्य पटाद्भेद इति घटः पटाद्भिन्न इति च । नतु भेद इति भिन्न इति च व्यवहारः- यथा घटाभावः पटाभाव इत्येवाभावस्य प्रतियोगिसापेक्षत्वेन व्यवहारः, नतु अभाव इति । तन्निरपेक्षत्वेन- संस्थानजात्योस्तु न प्रतियोगिसापेक्षत्वं, कम्बुग्रीवाद्याकारः सास्ना घटत्वं गोत्वमिति तन्निरपेक्षत्वेनैव व्यवहारात् । ततः संस्थानजात्योस्सुनिरूपत्वेपि भेदो **दुर्निरूप एव** अभावपदार्थवत् । **नच दृष्टान्ते** विवादः, अभावस्य दुर्निरूपत्वात् । तथाहि- किमभावोस्ति, उत नास्ति ? नाद्यः- अभावस्य अस्तित्वायोगात् । अन्त्ये- अभावस्याभाव एवेति कथमभावसिद्धिः । अतः परिशेषात्सदसदनिर्वाच्यमेवाभावस्वरूपम् । नच कस्मादनिर्वचनीयत्वाभ्युपगमोऽभावस्येति वाच्यं, नास्तीति व्यवहारान्यथानुपपत्त्याऽभावकल्पनस्य कर्तव्यत्वात् । यथा जगत्कार्यान्यथानुपपत्त्या जगत्कारणमज्ञानं कल्प्यते तद्वत् । **यदत्रोक्तं** श्रुतप्रकाशिकायां- भेदस्सुनिरूप एव, कार्योत्पत्त्यनुरूपत्वं हि कारणस्य सुनिरूपत्वं, कार्योत्पत्त्या कारणस्य तदनुरूपत्वं सिद्धमिति, **तदसत्**- घटरूपकार्योत्पत्त्या मृद्रूपकारणस्य कार्योत्पत्त्यनुरूपत्वरूपसुनिरूपत्वदर्शनेपि सर्पोत्पत्त्या रज्जोः कर्योत्पत्त्यनुरूपत्वरूपसुनिरूपत्वादर्शनेन व्यभिचारात् । नच रज्जोस्सर्पो नैव जातः, किंतु अन्यथाख्यातिरेवेति वाच्यम्, वल्मीकादिदेशान्तरस्थसर्पस्य अयमिति पुरोवर्तित्वेन ग्रहणायोगात । नच सर्पवदिदमंशोपि भ्रमविषय एवेति वाच्यं, इदमंशस्य चक्षुस्सम्प्रयोगं विना रजतभ्रमानुदयात् । भ्रमःत्प्रागेव सिद्धस्येदमंशस्य न भ्रमविषयत्वमिति । किंच- जगत्कार्योत्पत्त्या ब्रह्मणोपि कार्योत्पत्त्यनुरूपत्वरूपसुनिरूपत्वं नैव दृश्यते, प्रत्युत जगत्कार्योत्पत्त्यननुरूपत्वमेव दृश्यते । सच्चिदानन्दलक्षणाद्ब्रह्मणः कथमनृतजडदुःखात्मकजगत्कार्योत्पत्तिरिति । नचाज्ञानमेव जगत्कारणमिति वाच्यं, यतो वेत्यादिश्रुतिविरोधात् । नच ब्रह्म निमित्तकारणमज्ञानं तूपादानमिति वाच्यं, "प्रकृतिश्च दृष्टान्तानुपरोधा"दिति सूत्रविरोधात् । तस्माद्विचारासहत्वमेव वस्तुनो दुर्निरूपत्वं । तच्च भेदस्यास्तीति दर्शितमेवेति । **यच्चोक्तं** भेदमूलस्य सुनिरूपत्वेन भेदस्सुनिरूप एवेति, **तदप्यसत्**- भेदमूलस्याज्ञानस्य सदसदनिर्वाच्यत्वेन दुर्निरूपत्वाद्भेदोपि दुर्निरूप एव । **यदप्युक्तम्**—भेदबाधकप्रमाणजन्यप्रतीतेरपि मिथ्याविषयत्वेन भेदस्य पारमार्थ्यप्रसङ्ग इति **तदप्ययुक्तम्**—भेदस्य तद्बाधकप्रमाणस्य तज्जन्यप्रतीतेश्च ब्रह्मभिन्नत्वेन मिथ्यात्वात्कथं भेदस्य पारमार्थ्यप्रसङ्गः । नहि भेदो मिथ्या ब्रह्मभिन्नत्वाद्रज्जुसर्पवदिति प्रतीतेर्मिथ्यात्वमात्रेण भेदस्य ब्रह्मभिन्नत्वाभावस्याधेन सत्यत्वं प्रसज्येत, अयं सर्प इति (रज्जुसर्पस्थले) प्रतीतेर्मिथ्यात्वेपि किं रज्जुसर्पस्य सत्यत्वं प्रसज्यते । नच मिथ्याज्ञानेन कथं भेदस्य बाध इति वाच्यं, मिथ्याभूतदण्डज्ञानेनापि रज्जुसर्पस्य बाधदर्शनात् ।

**ननु** किं तवाद्वैतशास्त्रनिर्णयस्सत्य उतासत्यः ? आद्ये- '**स्वशास्त्रे निर्णये सत्ये सत्यास्स्युर्लोककल्पनाः**' । द्वितीयेपि- ब्रह्म सत्यं जगन्मिथ्येति निर्णयस्यासत्त्वे जगत्सत्यमेव स्यादिति **चेन्नैवम्**—

किं त्वमस्मच्छास्त्रनिर्णयस्य लोकस्य वा यावद्व्यवहारं सत्यत्वमभिप्रैषि, यद्वा पारमार्थिकम्? आद्ये- इष्टापत्तिः । न हि भूरादिलोकानामस्मच्छास्त्रस्य वा व्यवहारदशायां बाधः । **न द्वितीयः- परमार्थतो** लोकस्य शास्त्रस्य वाऽभावात् । नचैवं व्यवहारदशायामस्मच्छास्त्रनिर्णयोपि सत्य इति वाच्यं, किं व्यवहारदशायां प्रतीयमानत्वं व्यावहारिकसत्यत्वमित्यभिप्रैषि? किं वा व्यवहारदशायामबाधितत्वम्? नाद्यः- तथासति रज्जुसर्पादेरपि व्यावहारिकसत्यत्वापत्तेः । द्वितीये तु- न त्वच्छास्त्रनिर्णयस्य सत्यत्वमबाधितत्वाभावात् । अद्वैतप्रतिपादकमपौरुषेयं हि वेदान्तशास्त्रं द्वैतप्रतिपादकशास्त्रान्तराणि बाधते, यथा रज्जुज्ञानं सर्पज्ञानदण्डज्ञानभूछिद्रज्ञानादीनि बाधते तद्वदिति । **अयं भावः**—'ततस्यमतोन्यदार्त'- मिति श्रुतिः ब्रह्मभिन्नं सर्वं मिथ्येतीमं यथार्थमंशं बोधयन्ती सती अयथार्थबोधकशास्त्रान्तराणि बाधमाना च सती ब्रह्मभिन्नत्वेनात्मानमपि मिथ्येति बोधयत्येवेति । नचैवं स्वनाशकत्वं स्वस्य क्वापि न दृष्टमिति वाच्यं, कतकरज आदौ तद्दर्शनात् । कतकरजो हि नीरे निक्षिप्तं सन्नीरगतमालिन्येन साकमात्मानमप्यथो नयन्नीरं नीरजस्कं करोति । तस्मादितरशास्त्रवदद्वैतशास्त्रस्यापि मिथ्यात्वाविशेषेपि तत्प्रतिपादितस्य ब्रह्मरूपस्यार्थस्याद्वैतस्य सत्यत्वेन स्वेतरशास्त्रबाधकप्रमाणराजत्वमुपपद्यते व्यवहारदशायामिति न जगन्मिथ्यात्वबाध इति । **यदुक्तं** भेदानभ्युपगमे वादिप्रतिवादिरूपेण कथानुपपत्तिरिति **तच्चासत्**— यावद्व्यवहारं सर्वस्याप्यस्तित्वाभ्युपगमात् । न हि वयं व्यावहारिकं भेदं प्रतिषेधामः, किंतु पारमार्थिकमभेदं प्रतिपादयाम इति । **एतेन** प्रत्यक्षस्य सन्मात्रावगाहित्वे प्रत्यक्षेण भेदस्यागृहीतत्वात्किमित्यश्वार्थी महिषदर्शनेन निवर्तत इति **रामानुजप्रश्नो दत्तोत्तरः** । प्रत्यक्षेण प्रमाणेन सन्मात्रे गृह्यमाणेपि आविद्यकप्रमाणाभासेन घटपटादिद्वैतस्यापि गृह्यमाणत्वादिति । यथा चाक्षुषप्रत्यक्षेणेदमंशे गृहीतेपि आविद्यकप्रमाणाभासेन सर्वस्यापि ग्रहणाद्भीत्या पुरुषः पलायते तद्वदिति । **यदुक्तं रामानुजेन** प्रतिसंवेदनं भेदाभ्युपगमात्प्रत्यक्षस्य विशिष्टार्थविषयत्वमेवापतितमिति **तदसत्**—उपाधिभेदादेव संवेदनभेदो नतु स्वतः । यथा घटाद्युपाधिकृत एव गगनभेदो नतु स्वतः तद्वत् । तथा च ज्ञानभेदस्याप्रामाणिकत्वान्न प्रत्यक्षस्य विशिष्टार्थविषयत्वम् । नचैवं सर्वेषां संवेदनानामेकविषयतायामेकेनैव संवेदनेनाशेषग्रहणादन्धबधिराद्यभावश्च प्रसज्येतेति वाच्यं, किं त्वं ज्ञानानेकत्वं ब्रवीषि, यद्वा ज्ञानावच्छेदकवृत्तिनानात्वम्? आद्ये- 'सत्यं ज्ञानमनन्तं ब्रह्म' 'एकमेवाद्वितीय'मिति श्रुतिपराहतं तव वचनम् । द्वितीये इष्टापत्तिः- विषयभेदादिना वृत्तीनां नानात्वात् । तथा च तत्तद्विषयाकारवृत्त्या तत्तद्विषयावभासमित्यदोषः । नच सर्वापि वृत्तिस्सन्मात्रविषयैवेति त्वयोक्तमिति वाच्यं, प्रमाणवृत्तिरेव सन्मात्रविषया न त्वविद्यावृत्तिरित्युक्तत्वात् । यद्वा चक्षुरिन्द्रियद्वारा निर्गतान्तःकरणवृत्तिरूपाध्यासाधिष्ठानचैतन्यमेव व्याप्नोति, नतु रसाद्यधिष्ठानचैतन्यमिति नियमस्य दर्शितत्वात् इति । किंच- ज्ञानं निर्विषयं तच्चैकमिति वदन्तं प्रति संवेदनानामिति एकविषयतायामिति च प्रश्नस्याकर्तव्यत्वात् । अपि च सविकल्पकज्ञानानामनेकत्वमस्माभिरभ्युपेतमेव । निर्विकल्पकज्ञानस्यैवानेकत्वं नाभ्युपेतम् । शब्दस्पर्शज्ञानानि च सविकल्पकान्येवेति न कोपि दोष इति । **यदुक्तं रामानुजेन** निर्विशेषसन्मात्रस्य प्रत्यक्षेणैव ग्रहणे तद्विषयागमस्य

प्राप्तविषयत्वेनानुवादकत्वमेव स्यादिति **तदसत्**—प्रत्यक्षेणैवेत्यस्य कोर्थः- किमिन्द्रियार्थसन्निकर्षजन्य-ज्ञानेनेति, यद्वा प्रत्यक्षप्रमाणेन्द्रियेणेनेति, अथवा अन्तःकरणवृत्तिरूपप्रत्यक्षप्रमाणेनेति ? नाद्यः- तस्य फलभूतज्ञानत्वेन विषयग्राहकत्वायोगात् । न द्वितीयः- अतीन्द्रियत्वाद्ब्रह्मणः । तृतीये तु सा किमन्तः-करणवृत्तिः चक्षुरादीन्द्रियद्वारा निर्गता उतानिर्गता ? नाद्यः- तथाविधवृत्त्या रूपाद्युपहितं सद्वस्त्वेव ग्राह्यते, नतु सन्मात्रमिति । द्वितीये तु अनिर्गतानिर्विशेषब्रह्माकारा सा वृत्तिरागमेनैवोत्पाद्येति नागमस्य वैयर्थ्यमिति । **यच्चोक्तम्**— सन्मात्रब्रह्मणः प्रत्यक्षविषयत्वे प्रमेयभावापत्त्या जडत्वादयस्स्युरिति त्वयैवोक्तमिति रमानुजेन **तदप्यसत्**—वृत्तिप्रतिफलितचिदाभासलक्षणफलव्याप्यत्वमेव प्रमेयत्वं, न वृत्तिव्याप्यमित्युक्तत्वात् । यद्वा किं वस्तुतो प्रमेयत्वं ब्रह्मण उत व्यवहारतः ? नाद्यः- वस्तुतः प्रमातृ-प्रमाणयोरेवाभावात् । द्वितीयः कल्प इष्ट एव । जगत एव ब्रह्मणि कल्पितत्वेन कथं प्रमेयत्वस्या-कल्पितत्वमिति । तस्मान्न ब्रह्मण. प्रमेयत्वप्रयुक्तजाड्यादिप्रसङ्गः । **ननु** केन कल्पितं ब्रह्मणि प्रमेयत्वा-दिकमिति चेदुक्तमेवाज्ञानेनेति ।

**ननु** उक्तमेव- तथापि किं तदज्ञानं ब्रह्मणोऽभिन्नमुत भिन्नम् ? आद्ये ब्रह्मणो जडत्वाद्यापत्तिः । द्वितीये अज्ञानप्रतियोगिकस्स भेदः किं भिन्ने ब्रह्मणि वर्तते, उताभिन्ने ? आद्ये- आत्माश्रयादिदोष-प्रसङ्गः । द्वितीये व्याघात इति **चेन्मैवम्**— अज्ञानं ब्रह्मणो न भिन्नं, नाप्यभिन्नं नापि भिन्नाभिन्नं, किंतु भिन्नत्वाभिन्नत्वाभ्यां दुर्निरूपमेव । अतएव अनिर्वाच्यमित्युच्यते । अज्ञानं हि ब्रह्मशक्तिः । अग्निशक्तिश्च अग्नेर्भिन्नत्वादिना दुर्निरूपैव । तथाहि- यद्यग्निशक्तिरग्नेरभिन्ना तर्हि मणिमन्त्रादिना अग्निशक्तिप्रतिबन्धेऽग्नेर्नाशस्स्यात् । यदि भिन्ना अग्नेः पृथगुपलभ्येत । न भिन्नाभिन्ना एकत्वविरुद्ध-धर्मद्वयस्थित्ययोगात् । तस्माद्दुर्निरूपैव इति । **ननु** यथा अज्ञानं तत्प्रयुक्तभेदश्च दुर्निरूपं तथा अभेदोपि दुर्निरूप एव । किमभेदो ब्रह्मणः स्वरूपम्, उत धर्मः ? आद्ये- प्रतियोगिनिरपेक्षव्यवहार-प्रसङ्गः । न तु तथा व्यवहारोस्ति । किं तु प्रतियोगिसापेक्ष एव ब्रह्मणा भवत्यभेदो, "घटध्वंसे घटा-काशो न भिन्नो नभसो यथा" इत्यादिप्रतीतेः । द्वितीये- ब्रह्मणस्सविशेषत्वमागतं । ततश्चाप-सिद्धान्तस्तवेति **चेन्मैवम्**— अभेदो दुर्निरूपस्सुनिरूपो वा भवतु किमस्माकं तेन ? नहि वयमभेदं साधयामः येन तत्स्वरूपं वा धर्मो वेति त्वया चोद्येत, किंतु भेदं प्रतिषेधामः- श्रुतिश्च "नेह नानास्ति-किंच"नेति भेदमेव प्रतिषेधति । नचाद्वैतमपि प्रतिपादयति श्रुतिरिति वाच्यं, भेदनिषेधपरत्वात्तस्याः । नच 'सलिल एको द्रष्टाऽद्वैत' इति द्वैतरहितं ब्रह्म प्रतिपादयतीति वाच्यं, तस्येष्टत्वात् । नच भेदरहितं ब्रह्म भेदाभावविशिष्टमेवेति वाच्यं, नह्यभावः कस्य चिद्वस्तुनो विशेष्यं विशेषणं वा भवति, अभावत्वा-देव शशशृङ्गवदिति । नच भूतलं घटाभाववदिति प्रयोगे घटाभावस्य विशेषणत्वं भूतले घटाभाव इति प्रयोगे तस्य विशेष्यत्वं च शास्त्रविद्भिरभ्युपेतमिति वाच्यं, विशेषणविशेष्यत्वयोर्भावधर्मत्वादभावस्य च सत्ताऽयोगात्तदभ्युपगमस्यानादरणीयत्वात् । नच भेदस्यैवान्योन्याभावरूपत्वेन भेदाभावस्य भावत्वमेव-नाभावत्वमभावाभावस्य भावत्वाभ्युपगमादिति वाच्यं, भेदस्य ब्रह्मण्यज्ञानेन कल्पितत्वेन कल्पिताभाव-

स्याधिष्ठानानतिरेकाद्भेदाभावो ब्रह्मैव यथा रज्जुसर्पाभावो रज्जुरेव । नचैवं भेदाभावस्य ब्रह्मस्वरूपत्वे सत्यभावस्स्वरूपमिति प्राप्तमिति वाच्यं, न केवलाभावस्य स्वरूपत्वं, किंतु भेदाभावस्य जगदभावस्य वा तदिति । नचैवं घटाभावोपि ब्रह्मैवेति वाच्यं, वस्तुतस्तथात्वेपि मृदि घटस्य कल्पितत्वेन घटाभावो मृत्स्वरूपमिति व्यवहारः । नच वस्तुतस्तथात्वं कथमिति वाच्यं, मृदवच्छिन्नचैतन्य एव घटस्य कल्पितत्वात् । एवं सर्वमपि द्वैतं तत्तदवच्छिन्नचैतन्य एव कल्पितमिति कृत्वा रज्जुसर्पाभावोपि रज्ज्ववच्छिन्नचैतन्यमेव । तच्च रज्ज्वाद्यवच्छिन्नचैतन्यमज्ञानावच्छिन्नचैतन्यमेव, तस्य तत्र कल्पितत्वात् । तावच्चैतन्यमज्ञानावच्छिन्नं ततो महदाद्यवच्छिन्नं, ततो महाभूतावच्छिन्नं, तदुपरि भौतिकावच्छिन्नं च भवति । अज्ञानस्य चानादित्वादज्ञानावच्छिन्नचैतन्यमनाद्येव । महदाद्यवच्छिन्नचैतन्यानि तु सादीनि, महदादीनां सादित्वात् । **एतेन** ब्रह्मण्यज्ञानेन जगत्कल्प्यतां नाम, तदज्ञानं ब्रह्मणि केन कल्पितमिति शङ्का **परास्ता** । तस्यानादिसिद्धत्वात् । नच त्वयैव पूर्वमुक्तमज्ञानं कल्पितं कार्येण लिङ्गेनेति वाच्यं, कार्यलिङ्गेन ब्रह्मनिष्ठमज्ञानमनुमितमिति तदर्थात् । दाहरूपकार्येणाग्नौ शक्तिं कल्पयाम इत्यादौ तथाऽर्थाश्रयणात् । नहि वयमपूर्वामग्नौ शक्तिं कल्पयितुं शक्नुमः । नचैवमनादित्वे सत्यज्ञानस्य नाशो न स्यादिति वाच्यं, अनादिप्रागभावस्य नाशदर्शनात् । नचानादिभावस्य नाशो नेति वाच्यम्, अज्ञानस्य भावत्वाभावत्वाभ्यां दुर्निरूपत्वात् । यद्यज्ञानं भावस्तर्हि सतस्तस्य निवृत्त्ययोगः, यद्यभावस्तर्हि शशशृङ्गवत्प्रतीत्ययोगोऽसतस्तस्येति । यद्वा अज्ञानस्यानादित्वं न जन्माभावप्रयुक्तं, किंतु तत्कल्पकाभावप्रयुक्तं, तज्जन्मोपलक्षितकालाभावप्रयुक्तं च । ब्रह्मणोऽक्रियत्वान्नाज्ञानकल्पकत्वं, तद्भिन्नं तु वस्तु नास्त्येव । अज्ञानाभावे तज्जन्दसंवत्सराद्यात्मककालस्य कथं सत्त्वमिति कालाभावश्च । नचैवं कथमज्ञानस्य जन्मेति वाच्यं, अधिष्ठानस्य ब्रह्मणस्सत्त्वात् । नच सत्यप्यधिष्ठाने निमित्ताभावात्कथं तज्जन्मेति वाच्यं, श्रौतस्यार्थस्यातीन्द्रियस्य नातिशङ्कनीयत्वात् । नच श्रुतावज्ञानजन्म न श्रूयत इति वाच्यं, 'माया चाविद्या च स्वयमेव भव'तीति श्रुतेः । नचादित्यो यूप इति वत्कथं विरुद्धस्य श्रौतस्याप्यर्थस्य परिग्रह इति वाच्यं, अविरुद्धत्वात् । कथम् ? उच्यते- जगद्रूपकार्यलिङ्गकानुमानगम्यस्याज्ञानस्य कार्याभावे लिङ्गाभावादेवानुमानानवतारेणासिद्धेः । नच प्रलयेऽज्ञानाभावस्तर्हीति वाच्यं, तदा सूक्ष्मप्रपञ्चसत्त्वात् । नचैवं प्रपञ्चप्रलययोरुभयोरप्यज्ञानसत्त्वात्तन्नित्यमेवेति वाच्म्, मुक्तावभावात् । नहि मुक्तौ सूक्ष्मरूपस्स्थूलरूपो वा कश्चित्प्रपञ्चोस्ति- येनाज्ञानमस्तीत्यनुमीयेत । नच मुक्तावेव ब्रह्माद्वितीयं न तु सर्वदा- सत्त्वादज्ञानतत्कार्ययोरिति वाच्यं, तस्य नित्यमुक्तत्वात् । नचेदानीं तस्याज्ञानसत्त्वात्कथं नित्यमुक्तत्वमिति वाच्यं, बद्धदृष्ट्यैव तस्याज्ञानसत्त्वमिति । यथोलूकदृष्ट्या सूर्ये तमसस्सत्त्वम् । इति । अथवा अज्ञानं सादित्वानादित्वाभ्यां दुर्निरूपमेव । कल्पकाभावान्न सादित्वं, जन्मश्रवणान्नानादित्वमेवं सर्वथापि दुर्निरूपत्वादेव तस्यानिर्वाच्यत्वलक्षणं मिथ्यात्वं सङ्गच्छते । नहि यया कयापि विधया निरूपणार्हं वस्तु मिथ्या भवितुमर्हति- निरूपणानर्हत्वादेव हीन्द्रजालादौ मिथ्यात्वव्यवहारः । नचैवमज्ञाननिवृत्तिरपि दुर्निरूप्यैवेति चेद्यदि सा ब्रह्मभिन्नत्वेन विवक्षिता तर्हि दुर्निरूप्यैव । यदि तु ब्रह्मैव तर्हि सुनिरूप्यैव । अतएव मोक्षः

परमपुरुषार्थः नित्य इति क्वचिद्दृश्यते । बन्धवन्मोक्षोपि मिथ्यैव । बन्धपूर्वकत्वान्मोक्षस्येति कश्चित् । न च मोक्षस्य मिथ्यात्वं क्वचिदपि न दृश्यत इति वाच्यं, 'न निरोधो न चोत्पत्तिः न बन्धो न च साधकः, न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थ'तेति श्रुतेः । तस्मादभेदो यदि ब्रह्मभिन्नस्तर्हि मिथ्यात्वात् दुर्निरूप एव । यदि तु ब्रह्मैव तर्हि सत्यत्वात्सुनिरूप एवेति संक्षेपः ॥

## ब्रह्मणः व्यावृत्तिरूपत्वखण्डनम् ।

अथ किं ब्रह्मणः व्यावृत्तिरेव स्वरूपम्, उत स्वरूपान्तरमस्तीति विचार्यते--- 'अथात आदेशो नेति नेतीति' श्रुतेर्व्यावृत्तिरेव स्वरूपमिति केचित् । 'विज्ञानमानन्दं ब्रह्मे'ति श्रुतेर्ज्ञानमेव स्वरूपमिति परे । तत्र कः पक्षस्साधीयान्, उत्तरः । तथाहि---अवधिं विना निषेधायोगान्नेतिनेतीति निषेधो निषिध्यमानसकलद्वैतावधिभूतमेव ब्रह्म प्रतिपादयति, नतु व्यावृत्तिरूपम् । व्यावृत्तिर्हि निषेधः । नच-द्वैताभावो ब्रह्मेति त्वयाऽसकृदुक्तमभावश्च निषेध एव नञर्थत्वादिति वाच्यं, मृदि कल्पिते घटे ध्वस्ते सति मृदेवावशिष्यत इति घटाभावो मृदेवेति यथोच्यते-तथा ब्रह्मणि कल्पिते जगति ब्रह्मसाक्षात्कारेण बाधिते सति ब्रह्मैवावशिष्यत इत्यभिप्रायेण जगदभावो ब्रह्मेत्युक्तमिति । नच घटाभावो न मृदिति वाच्यं, गीताभाष्ये रामानुजेनैव घटस्य चूर्णभावापत्तिरेव प्रध्वंसाभाव इत्युक्तत्वात् । तथाच वेदान्तदेशिकेन व्याख्यातत्वाच्च । किंच यदि व्यावृत्तेरेव ब्रह्मस्वरूपत्वं तर्हि तत्प्रतियोगिद्वैतस्य तत्त्वं न स्यात्तच्चानिष्टं, सर्वं ब्रह्मेति सर्वस्यापि ब्रह्मस्वरूपत्वश्रवणात् । कल्पितस्याधिष्ठानमेव स्वरूपमिति न्यायाच्च । रज्जुसर्पस्य हि रज्जुरेव स्वरूपम् । एवं जगतोपि ब्रह्मैव स्वरूपमिति सिद्धे कथं व्यावृत्तेरेव ब्रह्मस्वरूपत्वम् ।

## ब्रह्मणः ज्ञानानन्दरूपत्वोपपादनम् ।

तस्माज्जगदध्यासाधिष्ठानत्वेन जगन्निषेधावधित्वेन च वर्तमानं ब्रह्मस्वरूपं न व्यावृत्तिमात्रं, किंतु ज्ञानमेव । न चानन्दमपीति वाच्यं, ज्ञानाभिन्नत्वादानन्दस्य । न चाभेदे तयोर्घटकुम्भयोरिव पर्यायत्वं स्यान्न चेष्टापत्तिः- 'विज्ञानमानन्दं ब्रह्मे'ति श्रुतावन्यतरवैयर्थ्यप्रसङ्गात्पुनरुक्तिदोषाच्चेति वाच्यं, एकार्थवाचिनोरपि शब्दयोः प्रवृत्तिनिमित्तभेदेन पौनरुक्त्यपरिहारात् । मृत्युंजयश्शिव इतिवत् । मृत्युहरत्वमङ्गलत्वरूपप्रवृत्तिनिमित्तभेदेन हि तच्छब्दद्वयमेकस्मिन्नेव वाक्ये प्रयुज्यते । यथा च 'व्यासो नारायणो हरि'रिति । कथमत्र स भेद इति चेत्प्रदर्श्यते--- सर्वावभासकत्वं ज्ञानशब्दप्रवृत्तिनिमित्तं परमप्रेमास्पदत्वमानन्दयितृत्वं वाऽऽनन्दशब्दप्रवृत्तिनिमित्तमिति । न चाप्रामाण्यशङ्का दर्शितार्थे, 'तस्य भासा सर्वमिदं विभाति, एष ह्येवानन्दया'तीत्यादिश्रुतेः । **ननु** तच्च सर्वावभासकं ज्ञानं ब्रह्म **कोऽवभासयतीति चेन्मैवम्**---स्वत एव भासमानत्वात्तस्य । अन्यथाऽनवस्थादोषात् । ज्ञानं हि स्वयम्प्रकाशं 'तमेव भान्त'मिति श्रुतेश्च । **ननु** यदि ब्रह्म स्वत एव सर्वदैकरूप्येण भासते, तर्हि भासमाने तस्मिन्ब्रह्मणि कथं जगदध्यासः? अभासमानायां हि शुक्तिकायां रजताध्यासः, शुक्तिभानस्य रजताध्यासविरोधित्वादिति **चेदुच्यते**---शुक्तिकायां सर्वात्मनाऽभासमानायां कुत्र रजताध्यासः? तस्मात्सामान्यतो भासमान एवाधिष्ठाने शुक्त्यादिरूपे रजताद्यध्यासः, नतु सुतरामभासमाने, नापि

विशेषाकारेण भासमाने वा । एवं सामान्यतो भासमान एव ब्रह्मणि जगदध्यास इति । नच निर्विशेषे ब्रह्मणि सामान्यविशेषाकाराभावादुक्तव्यवस्था न सिद्ध्यतीति वाच्यं, यावदविधं ब्रह्मण्यपि निर्विशेषे कल्पितविशेषाभ्युपगमात् । नहि वयं निर्विशेषे ब्रह्मणि जगदध्यस्तमिति वदामः, किंतु सविशेष एवाज्ञानावच्छिन्ने ब्रह्मणीति । तथा च- ब्रह्मणो जगदध्यासाधिष्ठानस्य सामान्याकारस्सन्मात्रं, विशेषाकारस्तु ज्ञानानन्दमिति न भ्रमकाले ब्रह्मविशेषाकारप्रतीतिः, किंतु तत्सामान्याकारप्रतीतिरेव । यथा शुक्तिकाया इदमंशस्सामान्याकारः, नीलपृष्ठत्रिकोणत्वादिकं विशेषाकारः । न भ्रमकाले शुक्तिविशेषाकारप्रतीतिः, किंतु तत्सामान्याकारप्रतीतिरेव । अत एवेदं रजतमिति भ्रमप्रत्यक्षं तद्वत् सज्जगदिति भ्रमप्रत्यक्षम् । नतु ज्ञानमानन्दं वा जगदिति, यथा शुक्ती रजतमिति न भ्रमस्तद्वत् । अयं च जगद्भ्रमो ज्ञानानन्दब्रह्मसाक्षात्कारान्निवर्तते । यथा रजतभ्रमो नीलपृष्ठत्रिकोणशुक्तिसाक्षात्कारान्निवर्तते तद्वत् । तस्माद्ज्ञानानन्दरूपेणाभासमाने सद्रूपेण च भासमाने ब्रह्मणि जगदध्यास उपपद्यत एव । अथापि यदि ब्रह्मणि कथं जगदध्यास इति तदनुपपत्तावेव तवाभिनिवेशस्तर्हि पृच्छाविद्याम्! 'कथं त्वयाऽध्यस्तं जगद्ब्रह्म'णीति । सा हि सर्वं तुभ्यं व्याख्यास्यति । मायायां सर्वं सम्भवतीति न्यायादघटितघटनापटीयस्यां मायायां सत्यां नास्ति कस्यापि काचिदप्यनुपपत्तिः । सत्यामप्यनुपपत्तौ सास्माकमलङ्कारायैव । 'सेयं भगवतो माया यन्नयेन विरुध्यत' इति हि भागवतम् । इति ॥

## घटपटादिप्रपंचस्य मिथ्यात्वोपपादनम् ।

अथ घटादीनां विशेषाणां व्यावर्तमानत्वेनापारमार्थ्यमुचितं वा नवेति विचार्यते—घटादयो विशेषा अपरमार्था व्यावर्तमानत्वाद्रज्जुसर्पवदित्यनुमानादुचितमेवेत्यस्मदीयाः । यस्मिन् देशे यस्मिन्काले यस्य भावः प्रतीतः तस्मिन्नेव देशे तस्मिन्नेव काले तस्याभावः प्रतीतश्चेद्द्वयोर्ज्ञानयोरेकत्र विरोधाद्बलवतो बाधकत्वमन्यस्य बाध्यत्वं च भवतीति व्यावर्तमानत्वमात्रं नापारमार्थ्यप्रयोजकमिति **रामानुजः । तदसत्**—तथासति रज्जुसर्पोपि परमार्थभूत एव स्यात् । न ह्येकस्मिन्नेव काले रज्जुसर्पज्ञानयोर्द्वयोस्सम्भवः, येन प्रबलरज्जुज्ञानेन दुर्बलसर्पज्ञानस्य बाध इत्युच्येत । नहि भ्रमकाले रज्जुज्ञानमस्ति, नापि प्रमाकाले सर्पज्ञानम् । **ननु** वयं ज्ञानस्य क्षणिकत्वमभ्युपगच्छामः, येनोक्तदोषः स्यात् । किंतु त्रिचतुरक्षणपर्यन्तस्थायित्वं । तथा च रज्जुज्ञानकालेपि सर्पज्ञानमस्त्येव । प्रबलेन तेन बाधितत्वान्निवर्तत इति **चेन्नैवम्**—रज्जुज्ञानकाले सर्पज्ञानाभावस्य सर्वानुभवसिद्धत्वात् । नहि कृकवाकुद्वयमिव मिथो युध्यमानं रज्जुसर्पज्ञानद्वयं कस्यचिदप्यनुभवसिद्धम् । नच वृत्तेः स्वविरोध्युत्पत्तिपर्यन्तस्थायित्वस्य त्वदीयैरभ्युपगतत्वाद्रज्ज्वाकारवृत्त्युदयपर्यन्तं सर्पाकाराविद्यावृत्तिरस्तीति वाच्यं, तथासति दीपोदयपर्यन्तं तमो वर्तत इत्यत्र यथा न दीपतमसोरेककालवर्तित्वं तद्वद्रज्जुसर्पवृत्त्योर्नैककालत्वमिति सिद्धमेव । ननु तमो बाधित्वा दीपो न जातः, दीपोदयात्प्राक्तमोबाधायोगात् । किं तर्हि दीपो जायमानस्सन्नेव तमो बाधते, तद्वद्रज्जुज्ञानं जायमानं सदेव सर्पज्ञानं बाधत इति चेद्भवत्वेवं, कथं पुनस्सर्पज्ञानतदभावज्ञानयोरेककालवृत्तित्वमिति चेत्तत्राप्येवमेव । सर्पाभावज्ञानं हि जायमानं सदेव

सर्पज्ञानं बाधत इति । हन्त! तर्हि ब्रह्मणि प्रतीतानां घटादिविशेषाणां विशेषाभावज्ञानाद्ब्रह्मज्ञानाद्वा भवत्येव बाधः, सत्यं भवत्येव । कथं पुनर्बाधितानां विशेषाणां सर्पवदपारमार्थ्याभावः । नहि त्वया बाधितत्वाद्विशेषा अपरमार्था इत्युक्तं, किंतु व्यावर्तमानत्वादिति चेद्भ्रान्तोसि । व्यावर्तमानत्वं हि निवर्तमानत्वं, तच्च बाधितस्यैव भवति नाबाधितस्य । बाधितं हि निवर्तते । तथाच व्यावर्तमानत्वं बाधितत्व एव पर्यवस्यतीति । नचैवं बाधितत्वादित्येव हेतुर्वक्तव्य इति चेद्व्यावर्तमानत्वं प्रति बाधितत्वं कारणं भवतु नाम । मिथ्यात्वं प्रति तु व्यावर्तमानत्वमेव साक्षात्कारणम् । सन्निहितत्वाद्बाधितत्वं हि व्यावर्तमानत्वद्वारा कारणमिति । यदि तु बाधो व्यावृत्तिरेवेति, तर्हि व्यावर्तमानत्वं बाधितत्वमेव नार्थान्तरमिति । **एतेन** व्यावर्तमानत्वं भिन्नत्वं तद्ब्रह्मण्यप्यस्त्येव, जगतस्सकाशाद्भिन्नं हि ब्रह्म । तथा च ब्रह्मापि मिथ्यैव व्यावर्तमानत्वादिति श्रुतप्रकाशिकावचनं—**पराहतम्** । मायामयाज्जगतस्सकाशाद्भिन्नत्वेनैव ब्रह्मणस्सत्यत्वात्, सत्याद्ब्रह्मणस्सकाशाद्भिन्नत्वेनैव जगतो मिथ्यात्वाच्च । बाधितत्वरूपं निवर्तमानत्वरूपं वा व्यावर्तमानत्वं तु ब्रह्मणि नास्त्येव । ब्रह्मज्ञानस्य सर्वप्रमाणराजवेदान्तमहावाक्यजन्यत्वेन बाधशङ्काया एवाभावात् । नच ब्रह्मज्ञानस्य प्रमाणराजजन्यत्वेन प्रमाणान्तरजन्यज्ञानान्मास्तु नाम बाधः, ब्रह्मज्ञानाभावादस्त्येव बाध इति वाच्यं, किं ब्रह्मज्ञानस्य बाधो नाम ब्रह्माकारवृत्तिनाशो विवक्षितः, यद्वा 'एकमेवाद्वितीयं ब्रह्म, तत्सत्यं, अतोन्यदार्तम्' इति निश्चयात्मकज्ञानविरहः । आद्य इष्ट एव- नहि ब्रह्मविदोपि सर्वदा तादृग्वृत्तिर्भवति । न द्वितीयः- ब्रह्मविदस्स्वप्नेपि तन्निश्चयविरहाभावात् ।

**नन्वेवं** रज्ज्वाकारवृत्त्युदयसमकालध्वंसवतस्सर्पज्ञानस्येव घटादिविशेषाकारवृत्त्युदयसमकालध्वंसवतो ब्रह्मज्ञानस्यापि मिथ्यात्वमेवाविशेषात् । नचेष्टापत्तिः- मिथ्याज्ञानविषयस्य वस्तुनोपि मिथ्यात्वात्सर्पवद्ब्रह्मापि मिथ्यैव भवेदिति **चेन्मैवम्**—तथासति घटाकारवृत्त्युदयसमकालध्वंसवतः पटज्ञानस्यापि मिथ्यात्वप्रसङ्गात् । नहि घटाकारा पटाकारा च वृत्तिरेकस्मिन् काले वर्तते, नच घटपटवृत्त्योरेकस्मिन्नेव वस्तुन्यजातत्वान्नान्यतरज्ञानस्य मिथ्यात्वमिति वाच्यं, तथा घटब्रह्मज्ञानयोरप्येकस्मिन्न जातत्वात् । नचैकस्मिन्नेव ब्रह्मणि ब्रह्मज्ञानं घटज्ञानं च जातमिति वाच्यम्, ब्रह्माकारवृत्तेर्ब्रह्मणि जातत्वेपि घटाकारवृत्तेर्ब्रह्मण्यजातत्वात् । नहि वस्त्वन्तरे वस्त्वन्तराकारवृत्त्युदयः- तथासति घटेपि पटाकारवृत्त्युदयप्रसङ्गः । नच रज्जौ सर्पाकारवृत्त्युदयो दृश्यत इति वाच्यं, तत्रापि सर्प एव सर्पाकारवृत्त्युदय इति । नचैवमतस्मिन् तद्बुद्धित्वाभावाद्रज्जुसर्पज्ञानमपि प्रमैवेति वाच्यम्, रज्जुसर्पस्य मिथ्यात्वादेव तद्ज्ञानस्य भ्रमत्वमिति । नच कथं तस्य मिथ्यात्वमिति वाच्यं, व्यावर्तमानार्थत्वात्तस्य । अबाधितार्थविषयं ज्ञानं प्रमा, बाधितार्थविषयं ज्ञानं तु भ्रम इति सिद्धान्तात् । नचाध्यासो नामाऽतस्मिन् तद्बुद्धिरित्यवोचा' मेति भाष्यकृच्छङ्कराचार्यवाग्विरोधस्तवेति वाच्यं, मतान्तराभिप्रायेण तैस्तत्र तथोक्तत्वात् । नच कथं रज्जुसर्परूपपदार्थस्य बाधितत्वमिति वाच्यं, व्यावर्तमानत्वात् । नच कथं व्यावर्तमानत्वमिति वाच्यं, रज्जुसर्पभ्रमसमकालत्वेन तदर्थस्य तत्पूर्वोत्तरकालयोरभावात् । नच रज्जुरपि तादृगेवेति वाच्यं, रज्जुज्ञानात्प्रागपि तत्सत्त्वात् । अन्यथा इन्द्रियार्थसन्निकर्षाभावेन रज्जुज्ञानानुदयप्रसङ्गात् । प्रातिभासिकस्यैव वस्तुनोऽ-

ज्ञातसत्तानभ्युपगमः । व्यावहारिकस्य वस्तुनस्तु अज्ञातसत्तास्त्यैवेति भावः । यद्यपि सूक्ष्मदृष्ट्या घटादिद्वैतं सर्वमपि रज्जुसर्पवत्प्रातिभासिकमेव- तथापि स्थूलदृष्ट्येदमुक्तमिति मन्तव्यम् । **नन्वेवं** रज्जुसर्पवद्व्यावर्तमानत्वं नास्त्येव घटादिविशेषाणां भ्रमसमकालत्वाभावादिति **चेन्नैवम्**—यावद्व्यवहारं भ्रमकालोत्र विवक्षितः । तथा च घटादिविशेषाणां व्यवहाररूपभ्रमसमकालत्वसद्भावादस्ति व्यावर्तमानत्वमिति । नच ब्रह्माप्येवंविधमेवेति वाच्यं, ब्रह्मणः पारमार्थिकत्वेन व्यवहारसमकालत्वाभावात् । तस्माद्घटादयो विशेषा अपरमार्था व्यावर्तमानत्वादित्यनुमानं साधीय एव । **यदुक्तं** यस्मिन् देशे यस्मिन् काले यस्य भावस्तस्मिन्देशे तस्मिन्काले तस्याभावो यदि प्रतीयते तर्हि स तस्य बाधक इति **तदसत्**—तस्य तदभावज्ञानेनैव बाध इति नियमायोगात् । भावस्य भावान्तरेणापि बाधस्य दर्शितत्वाच्च । निशि स्थाणुं दृष्ट्वा पुरुष इति भ्रान्तः प्रातः पुनस्तमेव स्थाणुं दृष्ट्वा पुरुष इति निशायामहं भ्रान्तोस्मीति प्रत्येति- तत्र न भ्रमप्रमयोरैककालिकत्वमिति कालनियमायोगाच्च । नच निशि जातस्स भ्रमः प्रातर्यावत्स्थाणुतत्त्वसाक्षात्कारं वर्तत इति वाच्यं, मध्यकाले अनन्तज्ञानानां जातत्वान्नष्टत्वाच्च तैर्भ्रमज्ञानस्य बाधोऽवश्यं वाच्य इति नहि पूर्वज्ञानमबाधित्वा उत्तरज्ञानं स्वरूपलाभं भजते । किंच बाध्यबाधकभावे भवतु नाम विवादः- बाधितस्य व्यावृत्तौ तु नास्ति विवादः, अव्यावृत्तौ बाधितत्वस्यैवासिद्धेः । तथाच व्यावर्तमानत्वमात्रस्य कथमपारमार्थ्यहेतुत्वम् ? नहि व्यावृत्तममिथ्याभूतं क्वापि दृष्टम् । नच 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुतिव्याख्यावसरे सत्यपदमसत्याद्व्यावृत्तपरं ज्ञानपदं जडाद्व्यावृत्तपरमनन्तपदमन्तवतो व्यावृत्तपरमिति प्रतिपादितत्वाद्भवदीयैरेव असत्याद्व्यावृत्तममिथ्याभूतं ब्रह्म दृष्टमिति वाच्यं, तत्र व्यावृत्तपदस्य भिन्नार्थबोधकत्वात् । नहि ब्रह्मणः बाधफलभूतां व्यावृत्तिं वयं वदामः- सर्वत्रानुवृत्तस्य ब्रह्मणः कुतश्चिद्व्यावृत्त्ययोगात् । **एतेन** परिच्छिन्नस्यैव व्यावर्तमानत्वसिद्धिर्नापरिच्छिन्नस्येति **सिद्धम्** । तथाच घटादयोऽपरमार्थाः परिच्छिन्नत्वाद्व्यतिरेकेण ब्रह्मवदिति प्रयोगश्च सूचितः । घटादीनां परिच्छिन्नत्वं च देशकृतं कालकृतं वस्तुकृतमिति त्रेधाऽस्ति-तत्त्रिविधपरिच्छेदराहित्यादेवानन्तं ब्रह्म । अन्तो हि परिच्छेद इति । घटादीनां परिच्छिन्नत्वाद्व्यावर्तमानत्वं व्यावर्तमानत्वाच्च परिच्छिन्नत्वमित्यन्योन्याश्रयः इति मैवम्- इहेदानीं घटो नास्ति, घटः पटो न भवतीति यथार्थानुभवबलाद्घटस्य देशकालवस्तुकृतपरिच्छेदास्सन्तीत्यवश्यमभ्युपेयम् । इहेदानीं घटोस्तीत्यनुभवबलादेव देशान्तरे कालान्तरे घटो नास्तीति वस्त्वन्तरं घटत्वं नास्तीति चाभ्युपेयम् । तथाच सति नहि दृष्टेऽनुपपन्नमिति न्यायाद्बीजांकुरस्थल इवात्राप्यन्योन्याश्रयो न दृष्ट इति । यद्वा परिच्छिन्नत्वव्यावर्तमानत्वयोरैकार्थ्यमेवास्तु, देशान्तरात्कालान्तराद्वस्त्वन्तराच्च निवृत्तिरेव हि वस्तुनः परिच्छेदः । **यदत्रोक्तं** श्रुतप्रकाशिकायां—विरोधबाधहेतुकमेव व्यावर्तमानत्वं मिथ्यात्वसाधकमिति **तदसत्**—तदहेतुकस्य व्यावर्तमानत्वस्य क्वाप्यदर्शनात् । नच तेजस्तमसोरिव घटपटयोर्विरोधाभावेपि घटः पटाद्व्यावृत्तो दृश्यत इति वाच्यं, यद्यविरोधेपि व्यावृत्तिस्तर्हि किमिति मृदस्सकाशाद्घटो व्यावृत्तो न स्यात् । तस्माद्यो यस्माद्व्यावृत्त इति त्वयोच्यते तयोरस्त्येव विरोधो व्यावृत्तिहेतुः । नच सति घटपटयोर्विरोधे घटं पटः पटं घटो वा बाधेत- तमस्तेज इवेति वाच्यं,

तमस्तेजो नेतिवद्घटः पटो नेति प्रतीत्यैव तद्विरोधसिद्धेः । नच सा प्रतीतिर्न बाध्यबाधकभावकृता किंतु भेदकृतेति वाच्यं, भिदिर्विदारण इति धात्वर्थस्य भेदस्य विदारणस्य कथं बाध्यबाधकभावातिरिक्तत्वम् । काष्टस्य हि दाहकोग्निरिव भेदकः परशुरपि बाधक एव । अन्यथा शत्रुम्बाधितुमिच्छुः पुरुषः खड्गं न स्वीकुर्यात् । नच नायं घटपटयोर्भेदो विदारणरूपः- किंतु तद्भिन्न एवेति वाच्यं, घटपटभेदो विदारणाद्भिन्न इत्यत्र भिन्नशब्दप्रतिपादितो भेदः किं रूपः, किं विदारणमुत तद्भिन्नः? आद्ये तदेव विदारणं प्रकृतेप्यस्तु । द्वितीये अनवस्था । नच घटपटयोर्भेदो द्वैधीभाव इति वाच्यं, किमेकधावस्थितयोर्घटपटयोर्द्वैधीभाव उत द्विधा स्थितयोः? नाद्यः- तयोरेकधावस्थित्यभावात् । नान्त्यः पिष्टस्य पेषणमितिवदर्थस्यायुक्तत्वात् । किं चायं द्वैधीभावोपि विदारणक्रियानिष्पाद्य एव । घटो हि विदारितस्सन्द्वैधीभावमापद्यते । नच घटपटयोः पृथगवस्थानं भेद इति वाच्यं, पृथक्पदार्थस्यैव भेदत्वेनात्माश्रयात् । पृथगनवस्थितयोः पुरुषकुण्डलयोर्भेददर्शनाच्च । पृथगवस्थितयोर्घटयोर्भेदादर्शनाच्च । नच भिन्नाकारवत्त्वं घटपटयोर्भेद इति वाच्यं, तदाकारभेदस्यापि दुर्निरूपत्वात् । नचाकारयोरन्योन्यवैषम्यमेव भेद इति वाच्यं, किमिदं वैषम्यं किं भेद उत विरोधः यद्वाऽन्यत्? आद्ये दोष उक्त एव । द्वितीये तवास्मत्पक्षप्रवेश एव । तृतीयं त्वसिद्धमेव । तस्माद्विरोध एव भेद इति कृत्वा नास्ति भिन्नयोरविरोधः । नच सति विरोधे तेजस्तमसोरिव बाध्यबाधकभावस्स्यादिति वाच्यं, घटस्य मृत्पिण्डारब्धत्वेन मृत्पिण्डघटयोरविरोधेपि घटाकारस्य पिण्डाकारबाधकत्वदर्शनात् । नच कार्यकारणयोरेवाविरोधस्तदाकारयोस्तु विरोध एवेति वाच्यं, मृज्जन्ये घटे मृदाकारोपलम्भात् । परिणामवाद एव कारणाकारबाधकत्वं कार्याकारस्य क्षीराकारोपमर्दं विना क्षीरस्य दध्याकारपरिणामायोगात् । आरम्भवादे तु न कारणाकारोपमर्दः- तन्त्वाकारस्यैव पटे दर्शनात् । नचैवमविरोधेपि क्वचिद्बाध्यबाधकभावोस्तुनाम- विरोधे तु बाध्यबाधकभावाभावो नेति न दोष इति वाच्यं, विरोधे सति बाध्यबाधकभावः भाध्यबाधकभावे सति विरोध इत्यन्योन्याश्रयात् । नच विरोध एव बाध्यबाधकभावस्य हेतुरिति वाच्यं, बाध्यबाधकभावातिरिक्तविरोधस्यैवाभावात् । नहि तेजस्तमसोर्बाध्यबाधकभावातिरिक्तः कश्चिदस्ति विरोधः । नच विरोधातिरिक्तबाध्यबाधकभावाभावेपि बाध्यबाधकभावातिक्तविरोधोस्ति मनुष्येषु, तथा दर्शनादिति वाच्यं, तर्हि स परश्रेयोऽसहनरूपो मत्सरः परद्रोहचिन्तनादिरूपो द्वेषो वास्तु, कामानुजः क्रोधोवास्तु, सर्वथापि चित्तवृत्तिविशेष एवेति न तस्य विरोधस्य सम्भवोऽचेतनेषु । तथा च घटपटाकारयोर्विरोधातिरिक्तं वैषम्यं नास्त्येव । एवं घटपटाकारयोर्विरोधादेव प्रकाशतमसोरिव सामानाधिकरण्याभावः । तादृशविरुद्धाकारवत्त्वादेव घटपटयोश्च विरोध इति । नचैवं कथं घटपटयोर्विरुद्धयोस्सामानाधिकरण्यमिति वाच्यं, तयोस्सामानाधिकरण्याभावात् । ननु यथा एकस्मिन्नेव गृहे एककालावच्छेदेन तेजस्तमसी न स्तः तथा एकस्मिन्नेव गृहे एककालावच्छेदेन घटपटौ न स्त इति न, किंतु स्त एव । अतस्तयोरस्त्येव सामानाधिकरण्यमिति **चेन्नैवम्**—एकस्मिन्नेव ब्रह्माण्डे एककालावच्छेदेन प्रकाशतमसी अपि स्त एवेति तयोरपि सामानाधिकरण्यमस्त्येव । यदा मेरोरुत्तरदिक्स्थानामहस्तदेव मेरोर्दक्षिणदिक्स्थानां निशेति

सिद्धान्तात् । यदि तु एकस्मिन् गृहे तेजस्तमसी न स्त इत्युच्यते तर्हि एकस्मिन् प्रदेशे घटपटावपि न स्त एव । यावान्प्रदेशो घटेन व्याप्तस्तावत्येव प्रदेशे पटो न हि भवति । नन्व घटपटौ युगपद्दृश्येते, नतु तेजस्तमसीति वाच्यं, देहलीस्थेन पुरुषेण गृहस्यान्तःस्तेजो बहिस्तमश्च युगपद्दृश्यत एवेति । नचैकस्मिन्नेव गृहे युगपन्न दृश्येते तमस्तेजसीति वाच्यं, घटपटावपि युगपदेकस्मिन्प्रदेशे नैव दृश्येते इति । तस्माद्विरुद्धावेव घटपटौ । अत एव घटे पटाभावः पटे घटाभावश्चोपलभ्येते । यथा तेजसि तमसोऽभावस्तमसि च तेजोऽभाव इति । एवं सति घटस्य पटाद्व्यावर्तमानत्वं विरोधहेतुकमेवेति व्यावर्तमानत्वं मिथ्यात्वमेव । **यच्चोक्तं** श्रुतप्रकाशिकायाम्—साध्यधर्मस्य मिथ्यात्वस्य मिथ्यात्वे जगतस्सत्यत्वं, अमिथ्यात्वे तु नाद्वैतसिद्धिरिति **तदप्यसत्**—किमिदं त्वया सिषाधयिषितं जगन्मिथ्यात्वस्य सत्यत्वं व्यावहारिकं, यद्वा पारमार्थिकम् ? आद्ये इष्टापत्तिः । न द्वितीयः- परमार्थतो जगत एवाभावे कथं तन्मिथ्यात्वस्य स्थितिः, कथं वा तन्मिथ्यात्वस्य सत्यत्वासत्यत्वविचारः, कथं वा अद्वैतहानिरिति । जगत इव तन्मिथ्यात्वस्यापि व्यावहारिकसत्यत्वान्न तेन ब्रह्मणस्सद्वितीयत्वं पारमार्थिकसत्यस्येति भावः । एवं जगन्मिथ्यात्वसाधकत्वं व्यावर्तमानत्वस्य **स्थापितम्** ॥

## मिथ्यात्वसाधकदृश्यत्वहेतोर्ब्रह्मणि व्यभिचारशङ्कानिरासः ।

अथ दृश्यत्वहेतुर्जगन्मिथ्यात्वं किं साधयति उत नेति विचार्यते— **जगन्मिथ्या** दृश्यत्वाच्छुक्तिरजतवदित्यनुमानं ब्रह्मण्यनैकान्तम् । अध्यस्तं स्वाधिष्ठानसमानाधिकरणतया वेद्यम् । यथा इदं रजतमिति, एवं घटस्सन् पटस्सन्नित्यधिष्ठानस्य सतः प्रपञ्चस्य चैकधीवेद्यत्वाद्ब्रह्मण्यपि दृश्यत्वमस्तीति श्रुतप्रकाशिकाकारः, **तन्मन्दम्**—स्वयम्भासमाने भानरूपे ब्रह्मणि भास्करे दीपभास्यत्वस्येव ज्ञानभास्यत्वलक्षणदृश्यत्वायोगात् । नच प्रत्यक्षं सन्मात्रग्राहीत्युक्तमिति वाच्यं, सदावरकाज्ञाननिवर्तकत्वमेव प्रत्यक्षस्य सन्मात्रग्राहित्वमित्युक्तत्वात् । अथापि यदि ब्रह्म दृश्यमेवेत्याग्रहः, तर्हि येन कर्त्रा येन करणेन ब्रह्म दृश्यते, स कर्ता तच्च करणं केनापि दृश्यते वा नवा ? आद्ये-किं स्वेन दृश्यते, उतान्येन ? नाद्यः-कर्मकर्तृभावविरोधात् । नच दर्पणे स्वयमेव पुरुषो दृश्यत इति वाच्यं, प्रतिबिम्बस्यैव तत्र दर्शनात् । नच देवदत्त आत्मानं पश्यन्नेव स्थूलोहमिति प्रत्येतीति वाच्यं, तत्र स्थूलस्य देहस्यैव देवदत्तेन दृष्टत्वात् । देहाद्भिन्नस्यात्मन एव देवदत्तत्वात् । द्वितीये-सोन्यः किं केनापि दृश्यते न वा ? आद्ये किं स्वेन दृयश्ते, उताऽन्येन? प्रथमे व्याघात उक्त एव । द्वितीये स चान्यः केनापि किं दृश्यते उत न? आद्ये किं स्वेन उतान्येन? प्रथमे व्याघात उक्त एव । द्वितीये त्वनवस्था । अथ यदि न दृश्यत इति पक्षः स्वीक्रियते- तर्हि शशशृङ्गवददृश्यमानस्स पदार्थो नास्त्येव । नच आत्मना कर्त्रा मनसा करणेन ब्रह्म दृश्यते तदुभयं ब्रह्मणा दृश्यत इति न दोष इति वाच्यम्, तद्ब्रह्म किमात्मानं वेत्ति उत न? आद्ये व्याघातः । द्वितीये ब्रह्मणोऽनात्मज्ञत्वेनासार्वज्ञ्यम् । अब्रह्मविद्ब्रह्मापेक्षया ब्रह्मविज्जीवस्योत्कृष्टत्वं च । एवं जीव आत्मानं किं वेद उत न? आद्ये व्याघातः । द्वितीये यः स्वयमेव जानाति स कथं ब्रह्म जानी-

यात् । एवं ब्रह्मापि कथं जीवं जानीयात्स्वमेव हि ब्रह्म न जानाति । नचाहं सुखीत्यात्मानं सर्वो वेत्तीति वाच्यं, सुखवदन्तःकरणमेव तत्रात्मना वेद्यते, तत्तादात्म्याध्यासादात्मनि सुखित्वप्रत्यय इति । नहि निर्विकारे आत्मनि सुखदुःखादिविकाराः स्युः । 'अविकार्योयमुच्यत' इति हि शास्त्रम् । तस्माद्ब्रह्म जीवो वास्वेनान्येन वा नैव दृश्यते । अत एव तदुभयं नास्तीति प्राप्तम् । न चेष्टापत्तिः, शून्यवादप्रसङ्गात् । ब्रह्माभावस्येष्टत्वेपि जीवाभावस्यानिष्टत्वाच्च । नहि कोपि स्वाभावमभ्युपैति- नहि नाहमस्मीति कोपि प्रत्येति । नच प्रत्येत्येवेति वाच्यं, प्रत्येतुरेवात्मत्वात्तस्य सत्त्वात् । तदभावे प्रत्ययस्यैवाभावात् । तथाचादृश्यत्वगुणको जीवोस्तीत्यभ्युपेयम् । एवं तर्हि अदृश्यत्वगुणकं शशशृङ्गमप्यभ्युपेयम् । नच तत्र सत्ता नास्तीति वाच्यं, जीवे सत्तास्तीति कथं ज्ञायते । नच शास्त्रादिति वाच्यं, किं सर्वो लोकश्शास्त्रादहमस्मीति प्रत्येति-नहि सर्वे शास्त्रविदः । किंच शास्त्राद्य आत्मनस्सत्तामधिगन्तुमिच्छति स किं शास्त्रात्सत्ताधिगमात्प्रागस्ति उत न ? आद्ये व्यर्थमेव शास्त्रम् । द्वितीये अधिजिगमिषोस्स्वस्यैवाभावे कथमधिगमः । तस्मादनुभवसिद्धैवात्मनस्सत्ता । नचात्मा केन सिद्ध इति वाच्यं, अनन्यसिद्धत्वात्स्वतस्सिद्ध एव । नचानुभवः केन सिद्ध इति वाच्यं, सच स्वतस्सिद्ध एव । नच प्रमाणसिद्ध इति वाच्यं, प्रमाणस्यैवानुभवसिद्धत्वात् । नचैवमात्मानुभवयोर्द्वयोस्सत्त्वादद्वैतहानिरिति वाच्यं, एकत्वात्तयोः । अनुभवरूप एवात्मा आत्मस्वरूपमेवानुभव इति । ब्रह्मचानुभवरूप एवेत्यात्मब्रह्मणोर्नाममात्रभेदः । एवमनुभवरूपत्वादेव ब्रह्मणो न दृश्यत्वम् । नह्यनुभवः केन चिद्वेद्यते । यद्यनुभवस्याप्यनुभवान्तरं तर्हि तस्याप्यन्यदनुभवान्तरमित्यनवस्थादोषः । नच ब्रह्मणोऽनुभवरूपत्वमप्रमाणमिति वाच्यं, 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुतेः । नच ज्ञानवदेव ब्रह्म न ज्ञानमिति वाच्यं, ज्ञानातिरिक्तस्वरूपाभावाद्ब्रह्मणः । नच ज्ञानं स्वरूपं धर्मश्च भवति- अत एव ममानुभव इति प्रतीतिरिति वाच्यं, राहोश्शिर इतिवत्तत्प्रयोगस्यौपचारिकत्वात् । नच यद्यात्मैवानुभवस्तर्हि घटानुभवोप्यात्मैव स्यादिति वाच्यं, इष्टापत्तेः । नच घटानुभवोहमिति कोपि न प्रत्येतीति वाच्यं, ज्ञानस्वरूपोहमस्मीत्यपि कोपि न प्रत्येत्येव । नच विद्वांसः प्रतियन्त्येवेति वाच्यं, तर्हि ते घटानुभवोहमित्यपि प्रतियन्त्येव । नच न प्रतियन्तीति वाच्यं, कथं त्वया तद्विदितं- परहृदयं ह्यप्रत्यक्षम् । नच विद्वानहं न तथा प्रत्येमीति वाच्यं, यदि तथा तव न प्रत्ययस्तर्हि त्वमविद्वानेव । नहि तर्कादिशास्त्रज्ञानं वेदान्तानामपार्थज्ञानं वा विद्वत्त्वम् । तस्मात्सर्वेष्वपि घटपटाद्यनुभवेष्वनुवर्तमानो योऽनुभवस्स आत्मैव । स एव सत्यः, अदृश्यत्वात् । व्यावर्तमानास्तु घटादयो मिथ्यैव, दृश्यत्वादिति ।

## ब्रह्मणि अदृश्यत्वोपपत्तिः ।

**ननु** ब्रह्मणः स्वयम्प्रकाशत्वाददृश्यत्वमित्युक्तं-तच्च स्वयम्प्रकाशत्वमनुभवरूपत्वादित्युक्तं-तथाच-ब्रह्मणोऽनुभवरूपत्वे सिद्धे स्वयम्प्रकाशत्वसिद्धिः, स्वयम्प्रकाशत्वे सिद्धे सत्यनुभवरूपत्वसिद्धिरित्यन्योन्याश्रयान्न कस्यापि सिद्धिरिति **चेन्मैवम्**—ब्रह्मणोऽनुभवरूपत्वं स्वयम्प्रकाशत्वञ्चेत्युभयं श्रुत्यैव सिद्धम् । 'सत्यं ज्ञानमनन्तं ब्रह्म'- 'तमेव भान्तमनुभाति सर्व' मिति श्रुतेः । 'यत्तदद्रेश्यमग्राह्य'मिति श्रुत्या अदृ-

श्यत्वमपि सिद्धमेव। नात्र किंचिदपि साध्यमस्ति। न हि वयं श्रुत्यसिद्धं किमपि साधयामः-किन्तु यच्छ्रुतिसिद्धं यच्च विद्वदनुभवसिद्धं तदेव युक्तिभिः स्थिरीकुर्मः। केवलश्रुत्यपेक्षया तर्कसहिता हि श्रुतिः प्रबला-यथा 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भव'तीति केवलश्रुत्यपेक्षया 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशु'रिति श्रुतिर्हि 'यत्कृतकं तदनित्य'मिति तर्कानुगृहीता प्रबला। यद्यपि तर्कोपि श्रुत्यैव प्रतिपाद्यते, तथापि श्रुतिप्रतिपादितस्य तस्य तर्कस्य प्रवितर्कनिरसनेन स्थैर्यं वयं सम्पादयामः। नचैतावता सिद्धसाधनदोषः। अथापि यदि श्रुतिप्रतिपादितस्यार्थस्योपपादनं सिद्धसाधनमिति मन्यसे-तर्हि त्वदीयं भाष्यमपि सिद्धसाधनदोषग्रस्तमेवेति शान्तो भव प्रज्ञावानसि! तस्माद्ब्रह्मणः स्वयंप्रकाशानुभवरूपत्वाददृश्यत्वमिति स्थितम्।

**ननु** यद्येवम्- ब्रह्मादृश्यमनुभूतित्वाद्व्यतिरेकेण घटवदित्यनुमानेन ब्रह्मणोऽदृश्यत्वं साध्यते, तर्हि कालात्ययापदेश इति **चेन्मैवम्**- प्रमाणविरोधो हि कालात्ययापदेशः। सच नास्त्येव, वेदप्रमाणसिद्धत्वादस्यार्थस्य। 'यत्तदद्रेश्य'मिति श्रुतिर्ह्यत्र मानमिति। **ननु** 'यत्तदद्रेश्य'मिति श्रुत्या ब्रह्मणस्सामान्यदृश्यत्वं निषिद्धं, 'दृश्यते त्वग्र्यया बुद्ध्ये'ति श्रुत्या तु विशेषदृश्यत्वं विहितं, विशेषेण हि सामान्यं बाध्यते---यथा 'मा हिंस्यात्सर्वभूतानी'ति सामान्यश्रुतेः 'अग्निषोमीयं पशुमालभे,तेति विशेषश्रुत्या बाधस्तद्वदिति **चेन्मैवम्**---यदि ब्रह्म संस्कृतबुद्ध्या दृश्यते तर्हि सा बुद्धिः केन दृश्यते-जीवेन, स जीवः केन दृश्यते-ब्रह्मणा, तद्ब्रह्म केन दृश्यते-संस्कृतबुद्ध्या, सा बुद्धिः केन दृश्यते-जीवेन, स जीवः केन दृश्यते-ब्रह्मणा, एवं चक्रकापत्तिः। यदि तु स जीवो ब्रह्मान्तरेण दृश्यते, तच्च ब्रह्मान्तरं बुध्यन्तरेण, तच्च बुध्यन्तरं जीवान्तरेणेत्युच्यते तर्ह्यनवस्था। अनेकब्रह्मकल्पनदोषश्च। नहि श्रुतिर्ब्रह्मानेकत्वं ब्रूते, 'एकमेवाद्वितीयं ब्रह्मे'ति श्रुतेः। अपि च यदि ब्रह्म दृश्यं स्यात्तर्हि द्रष्टृ नैव स्याद्घटवत्। न तु दृश्यं भवति- 'सलिल एको द्रष्टाऽद्वैत' इति श्रुतेः। नच द्रष्टृत्वदृश्यत्वयोरस्तु सामानाधिकरण्यमिति वाच्यम्, एकक्रियानिरूपितकर्तृत्वकर्मत्वयोः क्वापि समानाधिकरणत्वादर्शनात्। नच कालभेदाद्दृश्यते सामानाधिकरण्यमिति वाच्यं, तर्हि दृश्यत्वं यदा भवति ब्रह्मणस्तदा द्रष्टृत्वं नैव भवेत्। नचेष्टापत्तिः, ब्रह्मनिष्ठस्य सार्वज्ञ्यस्य कादाचित्कत्वप्रसङ्गात्। यः कोपि विद्वान् सदापि ब्रह्म पश्यत्येवेति सर्वदापि ब्रह्मणो द्रष्टृत्वाभावप्रसङ्गाच्च। **ननु** यथा युगपदुभौ भटौ परस्परमसिना निहतस्तथा जीवब्रह्मणी युगपदन्योन्यं पश्यत इति **चेन्मैवम्**---तत्र हन्तृत्वमेव देहिधर्मो हतत्वं तु देहधर्म एव। तथाहि- सुप्तमृतादिदेहेषु हन्तृत्वं न सम्भवति- हतत्वन्तु सम्भवति। सुप्ता मृता मूर्छिताश्च हि देहा हन्यन्ते नतु घ्नन्ति-परान्। किंच करे छिन्ने सति मम करश्छिन्न इति प्रत्येति, नैवमन्यं करेण हत्वापि मम करोऽहन्निति प्रत्येति, किंतु अहमेवाहनमिति प्रत्येति। यद्यपि हन्तृत्वमप्यनात्मधर्म एव- निष्क्रियत्वादात्मनः। 'नायं हन्ति' न हन्यत इति शास्त्रात्तथापि लोकदृष्ट्येदमुक्तम्। तस्माद्युगपद्भटद्वयस्य परस्परं हननेपि तत्र छेत्ता भटो देही छेद्यो भटस्तु देह इति नातिव्याप्तिः। एवं देवदत्तयज्ञदत्तयोरुभयोरन्योन्यं युगपत्पश्यतोरपि द्रष्टृत्वमेवात्मधर्मो दृश्यत्वं त्वनात्मधर्म एव। मया स्थूलो रक्तश्च देवदत्तो दृष्ट इति यज्ञदत्तः प्रत्येति,

मया कृशश्श्यामो यज्ञदत्तो दृष्ट इति देवदत्तः प्रत्येति । तत्र स्थूलत्वकृशत्वादीनां देहधर्मत्वाद्देह एव दृष्टो न त्वात्मा । तस्मान्नास्ति क्वापि द्रष्टुर्दृश्यत्वं तेजस इव श्यामत्वं तमस इव च भास्वरत्वम् । एवं सति यदि त्वात्मानं द्रष्टारं मन्यसे तर्हि दृश्यत्वं ते न भवतीति त्वददर्शनाद्ब्रह्मासर्वज्ञमेव स्यात् । यदि तु ब्रह्म द्रष्टृ मन्यसे तर्हि तव दृश्यत्वमेव भवतीति घटादिवज्जाड्यापत्तिः । तत्र यदि एको द्रष्टेति श्रुतिप्रामाण्याद्ब्रह्मणो द्रष्टृत्व एव तव विश्वासस्तर्हि भवत्येव तत्रानुभवविरोधः । त्वं हि सर्वं घटादिकं पश्यसि । यद्यनुभवप्रामाण्याद्ब्रह्मणो द्रष्टृत्वे न विश्वासस्तर्हि दृश्यं ब्रह्म जडं मिथ्याभूतं स्यादेव । अतस्तवास्तिकस्य उभयतः पाशारज्जुरियम् । तस्मात्तत्त्वमसीत्यादिश्रुतिसिद्धं ब्रह्मात्मनोरभेदं परिगृह्य पाशान्मुक्तो भव । स्वीकृते च तदभेदे प्रत्यगभिन्नं ब्रह्म द्रष्टैव भवति न तु दृश्यम् । द्रष्टृत्वस्य प्रतीचोऽनुभवसिद्धत्वात् , ब्रह्मणो द्रष्टृत्वस्य श्रुतिसिद्धत्वाच्च । श्रुत्यनुभवयोरविरोधः सिद्ध्यति । अत एव श्रुतिः— 'नान्यो ऽतोस्ति द्रष्टा' इति ब्रह्मणोऽन्यं द्रष्टारं निषेधति । यदि जीवब्रह्मणोर्भेदस्तर्हि अनुभवसिद्धं द्रष्टृत्वं जीवस्य कथं श्रुतिः निषिद्ध्येत् ? तथा निषेधन्तीच श्रुतिः कथं प्रमाणं स्यात् ? न ह्यास्तिकस्य श्रुत्यप्रामाण्यमिष्टम् । 'दृश्यते त्वग्र्यया बु'द्ध्येति श्रुतिस्तु ब्रह्मणो वृत्तिव्याप्यत्वप्रतिपादनपरेति प्रागेवोक्तम् । **तस्मात् दृश्यत्वहेतोः ब्रह्मणि न व्यभिचारः** । एवं जीवब्रह्मणोरभेदादेव न हेतोर्भागासिद्धिः । **यदुक्तं** श्रुतप्रकाशिकायां- जीवगताः नित्यत्वादिधर्माः परमार्थभूताः जीवधर्मभूतज्ञानवेद्या इति **तन्मन्दम्**— जीवस्य निर्धर्मकपरमानन्दबोधरूपत्वात्स्वरूपज्ञानातिरिक्तधर्मज्ञानाभावाच्च ।

## ब्रह्मणि अद्वितीयत्वोपपत्तिः ।

**ननु** किं जीवाभिन्नं ब्रह्म परमार्थतो जडादिभ्यो व्यावृत्तमुत न ? आद्ये कथं निर्धर्मकत्वं ? द्वितीये कथं तस्य जाड्याद्यभाव इति **चेन्मैवम्**-- यदि परमार्थतो जडादयस्स्युस्तर्हि तद्व्यावृत्तत्वं परमार्थतो ब्रह्मणस्स्यात् । नतु परमार्थतस्ते सन्तीति कथं तद्व्यावृत्तत्वसम्भवः । **एतेन** ब्रह्मणि परमार्थतो द्रष्टृत्वमस्ति वा नवा ? आद्ये कथं निर्धर्मकत्वं, द्वितीये कथं तस्य जाड्याभाव इति च **प्रत्युक्तम्** । परमार्थतो दृश्यस्यैवाभावेन तत्प्रयुक्तद्रष्टृत्वाभावाद्ब्रह्मणः । नच द्रष्टृत्वाभावे जाड्यप्रसक्तिः, निर्धर्मके तस्मिन् जाड्यस्याप्ययोगात् । **ननु** ब्रह्मणि जाड्याभावोस्ति वा नवा ? आद्ये सधर्मकता । द्वितीये जाड्यसत्त्वेन जडत्वं ब्रह्मण इति **चेन्मैवम्**-- भावस्यैव धर्मत्वं नाभावस्येति । अन्यथा धर्माभावोपि धर्म एव स्यात् । तस्मान्निर्विकल्पके ब्रह्मणि नैवंविधविकल्पविषयत्वसम्भवः । ननु मा सन्तु विकल्पाः- जीवाभिन्ने ब्रह्मणि जीवाभिन्नत्वमस्त्येवेति सधर्मकमेव ब्रह्मेति चेन्मैवम्-- परमार्थतो जीवस्यैवाभावेन तदभिन्नत्वकथा कथं ब्रह्मणः ? नच परमार्थतो जीवस्यैवाभावे कस्य मोक्ष इति वाच्यं, मोक्षस्याप्यपरमार्थत्वात् । ब्रह्म हि मायया जगन्निर्माय तदनुप्रविश्य जीवभावं प्राप्त इति मायामयमेव जीवत्वं ब्रह्मणः । ज्ञानेन जीवस्य मुक्तत्वं च मायामयमेव । साच माया दृश्यत्वान्मिथ्यैवेति सिद्धमेकमेवाद्वितीयं ब्रह्म ।

## द्वैतमिथ्यात्वोपपत्तिः ।

**ननु** ब्रह्मापि मिथ्यैव, तथाहि- किमनुवर्तमानं ब्रह्म व्यावर्तमानेभ्यो घटादिभ्यो व्यावृत्तमुत न? आद्ये- व्यावर्तमानत्वाद्ब्रह्म मिथ्यैव, द्वितीयेपि घटादिभ्यो मिथ्याभूतेभ्योऽव्यावर्तमानत्वान्मिथ्यैव, **मैवम्**--अनुवर्तमानत्वमपरिच्छिन्नत्वं व्यावर्तमानत्वं परिच्छिन्नत्वं द्वेअपि व्यधिकरणधर्माविवेति कथमनुवर्तमाने ब्रह्मणि व्यावर्तमानत्वसद्भावः? । नच व्यावर्तमानत्वं भिन्नत्वमिति वाच्यं, तथापि न तवेष्टसिद्धिः- नह्यस्माभिर्भिन्नत्वमात्रं मिथ्यात्वे हेतुरित्युक्तं, किंतु ब्रह्मभिन्नत्वं । तच्च ब्रह्मणि न सम्भवतीति नदोषः। वस्तुतस्तु परिच्छिन्नत्व भिन्नत्वयोर्न कोपि भेदः- यद्येन परिच्छिद्यते तत्तस्माद्भिद्यते- घटो हि पटेन परिच्छिद्यते पटाद्भिद्यते च । परिच्छेदो हि भेदः, परिच्छेदकत्वं च भेदकत्वमेव । तच्च परिच्छेदकं त्रिविधं- देशकालवस्तुभेदात्, यथा नेह घट इति घटस्य देशकृतः परिच्छेदः, नेदानीं घट इति कालकृतः, पटो न घट इति वस्तुकृतः देशभेदात्कालभेदाद्वस्तुभेदाच्च त्रिविधपरिच्छेदसम्भवः । ब्रह्मणश्च नास्ति त्रिविधः परिच्छेदः । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इति श्रुतेर्नेह ब्रह्मेति वक्तुं न शक्यते । अतो न देशपरिच्छेदो ब्रह्मणः । 'नित्यो नित्याना'मिति श्रुतेर्न कालकृतः, नेदानीं ब्रह्मेति वक्तुमशक्यत्वात् । कालस्यापि ब्रह्मणा व्याप्तत्वाच्च । 'सर्वं खल्विदं ब्रह्मेति श्रुतेर्घटो न ब्रह्मेति वक्तुमशक्यत्वान्न वस्तुकृतः परिच्छेदः । एवमपरिच्छिन्नत्वादेव ब्रह्मणः प्रकृतिपुरुषकृतो नास्ति परिच्छेदः- प्रकृतेर्ब्रह्मशक्तित्वेन ब्रह्मानन्यत्वात्पुरुषस्य ब्रह्मात्मत्वेन ब्रह्माभिन्नत्वाच्च । अत एवाद्वैतं ब्रह्मेत्युच्यते श्रुतिभिः । एवं ब्रह्मणः स्वप्रतियोगिकः प्रकृतिप्रतियोगिकः पुरुषप्रतियोगिको वा नास्ति परिच्छेदलक्षणो भेद इति न भिन्नत्वहेतोर्ब्रह्मण्यनैकान्त्यम् । घटादीनां तु ब्रह्मप्रतियोगिकभेदाभावेपि पटादिप्रतियोगिकभेदसद्भावादस्ति भिन्नत्वमिति । **नच** ब्रह्म प्रतियोगिकभेदाभावः कथं घटादीनामिति वाच्यं, ब्रह्मकार्यत्वात् । नहि मृत्कार्याणां घटादीनामस्ति मृत्प्रतियोगिको भेदः, किंतु शरावादिप्रतियोगिकोऽस्ति भेदः । तस्मात् घटादीनां व्यावर्तमानत्वान्मिथ्यात्वं युक्तमेव । **ननु** घटादीनामस्तु मिथो व्यावर्तमानत्वं, जगतस्तु न, न हि जगज्जगतो भिद्यते, नवा ब्रह्मणः, ब्रह्मकार्यत्वादिति **चेन्मैवम्**--जीवाद्भोक्तुर्भोग्यं जगद्भिद्यत एव । नहि जीवस्य कार्यं जगत् । नच जीवब्रह्मणोरभेद इति वाच्यं, सत्त्वादौपाधिकभेदस्य । अत एव तत्त्वमसीत्यादौ विशेषणांशपरित्यागः । **ननु** जीवोपाधिरपि जगदेव, उपहितं जीवचैतन्यं तु ब्रह्मैव ततोस्ति जगतोपि न भिन्नत्वमिति **चेन्मैवम्**--जगदन्तरादस्ति जगतो भेद इति । नच जगदन्तरं नास्तीति वाच्यं, 'धाता यथा पूर्वमकल्पय'दिति श्रुतेः । नच तदेवेदं जगदिति वाच्यं, विनष्टस्योत्पत्त्यसम्भवात् । नहि निर्वाणः प्रदीपः पुनर्जायते- किंतु तत्सदृशोन्य एव । तस्मात्पूर्वजगत्सदृशमेवेदं जगन्न तु तदेव । नचैवं ब्रह्मापि ब्रह्मान्तराद्भिन्नमिति वाच्यं, ब्रह्मणो नित्यत्वेन जन्माद्यभावात् । **ननु** भवतु जगत्यपि भिन्नत्वं मायायां तु नास्तीति सा सत्यैव स्यादिति **चेन्मैवम्**--मायाया ब्रह्मशक्तित्वेन जगदुपादानत्वेन च तदुभयप्रतियोगिकभेदाभावेपि मायान्तरादस्त्येव भेदः । नच सैवेयं मायेति वाच्यं, एतत्प्रपञ्चहेतुसंस्कारसहकृतमायायाः पूर्वप्रपञ्चहेतुसंस्कारसहकृतमायायाश्च परस्परं भेदात् । नच संस्कारस्यापि

सूक्ष्मप्रपञ्चत्वेन जगदन्तःपातित्वमेवेति नास्ति केवलमायाया भिन्नत्वमिति वाच्यं, संस्कारस्य जगद्धेतुत्वेन जगदन्तःपातित्वात् । नचानन्तःपातित्वेपि संस्कारस्य पृथक्करणे नास्ति मायाया भिन्नत्वमिति वाच्यं, मायातस्संस्कारस्य पृथक्करणायोगात् । नहि निस्संस्कारा मायास्ति येन संस्कारान्माया पृथक्क्रियेत । नच निरुपहतं चैतन्यमपि नास्तीति वाच्यं, उपाधेश्चैतन्यस्य पृथक्करणसम्भवात् । नहि परमार्थतश्चैतन्यस्योपाधिरस्ति । नच मायाया अपि परमार्थतस्संस्कारसाहित्यं नास्तीति वाच्यं, परमार्थतो मायाया एवाभावात् । नच प्रथमतस्संस्कारसाचिव्यं नास्ति मायाया इति वाच्यं, प्राथम्यस्यैवाभावात् । बीजांकुरसन्तानवत्संस्कारप्रपञ्चसन्तानस्यानादित्वं हि भण्यते । तस्मान्मायायां तत्सहकारिणि संस्कारे तज्जन्ये जगति तदवान्तरविशेषेषु घटादिषु च भिन्नत्वमस्तीति ब्रह्मभिन्नं तदेतत्सर्वं मिथ्यैव । अत एव 'अतोन्यदार्त' मिति श्रुत्युपपत्तिः । एवं ब्रह्मभिन्नसर्वस्य मिथ्यात्वादेव ब्रह्मभिन्नत्वं मिथ्यात्वे हेतुरिति कैश्चिदुक्तम् । मिथ्यात्वप्रयोजकं तु भिन्नत्वमेव । ब्रह्मभिन्नत्वमिति तु स्वरूपकथनम् ।

**ननु** परिणामवादे भवत्येवं सर्वस्य ब्रह्मभिन्नत्वं मृदभिन्नत्वमिव घटादेः । स च न युक्तः, ब्रह्मणः परिणामित्वे सति विकारित्वापत्तेरिति **चेन्मैवम्**-- अज्ञानद्वारा ब्रह्म जगद्रूपेण परिणमत इत्यभ्युपगमात् । एतेन विवर्तवादे सर्वस्य ब्रह्मभिन्नत्वमेव । यथा रज्जोर्भिन्नस्सर्पः । तन्मतरीत्या तु जगदादौ भिन्नत्वं सुसम्पादमेव । नच तदा जगतोपि भिन्नत्वं ब्रह्मणस्स्यादिति हेतोर्ब्रह्मण्यनैकान्त्यमिति वाच्यं, अत एवास्मिन् पक्षे ब्रह्मभिन्नत्वं मिथ्यात्वप्रयोजकं, न केवलं भिन्नत्वमिति बोध्यम् । **ननु** ब्रह्मभिन्नत्वहेतोरसम्भव एव, कल्पितस्याधिष्ठानानतिरेकेण ब्रह्मभिन्नत्वाभावाज्जगतीति **चेन्मैवम्**-- किं कल्पितस्याधिष्ठानानतिरेकित्वमधिष्ठानातिरिक्तसत्ताऽभावत्वं ? यद्वा अधिष्ठानातिरिक्तस्वरूपाभावत्वम् ? आद्य इष्ट एव, कल्पितस्य अधिष्ठानसत्तातिरिक्तसत्तानङ्गीकारात् । द्वितीये किं कल्पितस्याधिष्ठानस्वरूपातिरिक्तसत्यस्वरूपाभावः ? यद्वा अधिष्ठानस्वरूपातिरिक्तासत्यस्वरूपाभावः ! आद्य इष्ट एव । कल्पितस्य कल्पितत्वादेव सत्यस्वरूपाभाव इति । न द्वितीयः- असत्यस्वरूपाभावे कल्पितस्य कल्पितत्वस्यैवाभाव इति । तस्माद्ब्रह्मभिन्नत्वं मिथ्यात्वप्रयोजकमेव । तद्ब्रह्मणि न सम्भवतीति ब्रह्म सत्यमेव । अत एवाऽतोन्यदार्तमिति श्रुतिरुपपद्यते ।

**ननु** तत्रार्तशब्दस्य न मिथ्यात्वमर्थः, किंतु बाधितत्वम् । नच बाधितत्वादेव मिथ्यात्वमिति वाच्यं, ब्रह्मणि जगतोऽबाधितत्वेन मिथ्यात्वाभावात् । नच नेतिनेतीतिश्रुत्या बाधितं जगदिति वाच्यं, प्रलयपरत्वात्तच्छ्रुतेः । प्रलये हि भूतभौतिकविशेषा न सन्ति । यस्मिन् देशे यस्मिन्काले यस्यास्तित्वं तस्मिन् देशे तस्मिन् काले तस्याभावो यदि तर्हि तस्य मिथ्यात्वं भवति । यथा रज्जुसर्पादेः जगतश्च प्रपञ्चकाले सत्त्वं प्रलये त्वभाव इति कालभेदात्- एकस्मिन् पादे जगत्सत्त्वं पादान्तरेषु जगदभावो ब्रह्मण इति देशभेदाच्च न मिथ्यात्वमिति **मैवम्**---सम्प्रतिपन्नमिथ्यात्ववत्यपि रज्जुसर्पे एककालावच्छेदेन भावाभावयोरभावात् । नच तमोदीपन्यायेन दर्शितेन भवति समकालत्वं रज्जुज्ञानसर्पनिवृत्त्योरिति वाच्यं, तथासति तेनैव न्यायेन ब्रह्मसाक्षात्काराद्वैतनिवृत्त्योर्भवति समकालत्वमिति मिथ्यैव द्वैतमिति ।

नच सत्यपि ब्रह्मसाक्षात्कारे न द्वैतनिवृत्तिरिति वाच्यं, सति द्वैतदर्शने कथं ब्रह्मसाक्षात्कार इति । नच ब्रह्मदर्शनदशायां द्वैतदर्शनाभावेपि द्वैतमस्त्येवेति वाच्यं, अदृश्यमानद्वैतसत्त्वानभ्युपगमात् । नच प्रातीतिकस्यैवादृश्यमानसत्तानभ्युपगम इति वाच्यं, जगतोपि प्रातीतिकत्वात् । किं च समाहितस्य समाधौ ब्रह्मसाक्षात्काराद्द्वैतादर्शनं समाध्यपगमे द्वैतदर्शनमित्यस्तु- कथं पुनर्मुक्तस्य द्वैतदर्शनम् । नच मुक्तावपि कदाचिदात्मसाक्षात्कारः कदाचिद्द्वैतदर्शनमिति वाच्यं, मुक्तावपि द्वैतदर्शनेसति दुःखसम्भवात् । नच मुक्तौ दृश्यमानं द्वैतं सुखकरमेव न दुःखकरमिति वाच्यं, किं मुक्तस्य सर्वज्ञत्वमस्ति उत न ? आद्ये तापत्रयपीडितजनदर्शनस्य अनुभूतपूर्वदुःखस्मरणस्य च कथं सुखकरत्वं । द्वितीये- असर्वज्ञस्य कथं मुक्तत्वम् । नचैवं सर्वज्ञेश्वरस्यापि दुःखसम्भव इति वाच्यं, त्वन्मतरीत्या तस्य तत्सम्भवस्यास्माकमिष्टत्वात् । मन्मतरीत्या तु निर्धर्मकपरमानन्दबोधरूप एव जीव ईश्वरश्चेति कथं तस्य द्वैतदर्शनं, कथं वा तत्प्रयुक्तं दुःखम् । नच मायावच्छिन्नचैतन्येश्वरस्य अविद्यावच्छिन्नचैतन्यजीवस्य च भवति द्वैतदर्शनमिति वाच्यं, अज्ञानकल्पितत्वात्तत्सर्वव्यवहारस्य, कथमन्यथा परमेश्वरस्यापि श्रीरामस्य सीतावियोगादिदुःखानुभवः । किं च यदि मुक्तावपि द्वैतदर्शनं तर्हि नैवामृतम् । 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा', 'यो वै भूमा तदमृतम्', 'यत्रान्यत्पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पम्', 'अथ यदल्पं तन्मर्त्य'मिति श्रुतेः । मुक्तिर्हि भूमब्रह्मरूपत्वान्निरतिशयसुखम् । द्वैतं त्वल्पत्वाद्दुःखमेव । अत एव ब्रह्मलोकं गतोपि जनो ब्रह्मणासह मुक्तिं गन्तुं ब्रह्मविचारं करोति । नच विष्णुलोकं गतो नैवमिति वाच्यं, यदि विष्णुस्तल्लोकश्च ब्रह्मभिन्नस्तर्ह्येवमेव । 'तद्विष्णोः परमं पद'मिति श्रुतिस्तु परब्रह्मपरैवेति वेद्यम् । तस्माद्ब्रह्मणि प्रतीतस्य द्वैतस्य रज्जौ प्रतीतस्य सर्पस्य रज्जुसाक्षात्कारेणेव ब्रह्मसाक्षात्कारेण निवृत्तिसद्भावाद्रज्जुसर्पवज्जगन्मिथ्यैव । **एतेन** प्रतिपन्नोपाधौ यस्य त्रैकालिकाभावः तन्मिथ्येत्यपि **सिद्धम्** । नच प्रतीतितः पूर्वोत्तरकालयोरेव मिथ्याभूतस्याभावः, नतु प्रतीतिकाले इति वच्यं, भ्रमविगमानन्तरं हि पुरुषः नात्र सर्प आसीत्केवलमहं भ्रान्तोत्र सर्प आसीदिति प्रत्येति । तेन च प्रमाज्ञानेन प्रतीतिकालेपि सर्पाभावः सिद्ध एव । नच त्वन्मते अनिर्वचनीयख्यातिसत्त्वात्कथं प्रतीतिकाले सर्पाभाव इति वाच्यं, मन्मतेपि व्यावहारिकसर्पाभावाद्भ्रमकालेपि । नचैवं व्यावहारिकस्य जगतः कथं प्रातिभासिकसर्पवत्त्रैकालिकाभाव इति वाच्यं, ब्रह्मणि जगद्भ्रमापगमानन्तरं विद्वान् प्रत्येति हि न ब्रह्मणि जगदासीत्केवलमहं भ्रान्तोऽभवं जगदासीदितीति । तेन च प्रमाज्ञानेन जगद्भ्रमकालेपि जगन्नास्तीति सिद्धमिति । मन्मते रज्जुसर्पस्येव जगतोप्यनिर्वचनीयख्यातिर्ह्यभ्युपगता । नच रज्जुसर्पसत्यसर्पयोरवैलक्षण्यमिति वाच्यं, अनिर्वचनीयत्वांशे वैलक्षण्याभावेपि रज्जुसर्पस्य रज्जुज्ञाननिवर्त्यत्वं सर्पस्य ब्रह्मज्ञाननिवर्त्यत्वमित्यस्ति वैलक्षण्यमिति । तत्र को हेतुरिति चेदुच्यते— अज्ञानावच्छिन्ने ब्रह्मणि सर्पः कल्पितः, रज्ज्वाकारपरिणताज्ञानावच्छिन्ने ब्रह्मणि रज्जुसर्पः कल्पित इति । तस्मादेकस्मिन्नेव ब्रह्मणि देशे एकस्मिन्नेव काले जगतो भावाभावौ स्त इति मिथ्यैव जगद्रज्जुसर्पवदिति **संक्षेपः** ॥

## ब्रह्मसत्यत्वोपपत्तिः ।

अथ सद्वस्तु परमार्थं अनुवर्तमानत्वाद्रज्जुसर्पस्थले रज्जुवदित्यनुमानं विचार्यते — **नेदमनुमानमनवद्यम्** । तथाहि- अनेनानुमानेन प्रमाणसम्बन्धार्हतत्तद्घटादिस्वरूपस्य सच्छब्दार्थस्य किं पारमार्थ्यं साध्यते? उत अधिष्ठानतयानुवृत्तस्यार्थान्तरस्य ? आद्ये- सिद्धसाधनता । द्वितीये आश्रयासिद्धिः, इति **श्रुतप्रकाशिका** । **अत्रोच्यते**- किं यथार्थप्रमाकरणसम्बन्धार्हं वस्तु सच्छब्दवाच्यमित्युच्यते ? किं वा अयथार्थप्रमाकरणसम्बन्धार्हं वस्तु ? यद्वा तदुभयसम्बन्धार्हम् ? अथवा तदन्यतरसम्बन्धार्हम् ? आद्ये- चक्षुरादेः प्रमाणस्य वस्तुनो सच्छब्दवाच्यत्वं प्राप्तम् । नहि प्रमाणस्य प्रमाणान्तरेण सम्बन्धार्हत्वमस्ति । तथात्वे प्रमाणस्यापि प्रमाणापेक्षायामनवस्थादोषात् । द्वितीये- रज्जुसर्पादेरपि सच्छब्दवाच्यत्वमागतम् । तृतीये त्वसम्भवः । चतुर्थे- द्वितीयविकल्पोक्तदोषः । किं च 'असङ्गो ह्ययं पुरुष' इति श्रुतेर्ब्रह्मणो नास्ति केनचिदपि सम्बन्ध इति कृत्वा प्रमाणसम्बन्धानर्हस्य ब्रह्मणः प्राप्तमसच्छब्दवाच्यत्वम् । नचेदं युक्तम्- 'असन्नेव स भवति' 'असद्ब्रह्मेति वेद चे'दिति, 'सदेव सोम्येदमग्र आसी'दिति च श्रुतेः । अपि च यद्विषया घटबुद्धिर्न व्यभिचरति स घटशब्दवाच्य इति प्रसिद्धं लोके । एवं यद्विषया सद्बुद्धिर्न व्यभिचरति तद्वस्तु सच्छब्दवाच्यं भवति- अन्यथा अतिप्रसङ्गात् । तथाच- यदि घटस्सच्छब्दवाच्यस्स्यात्तर्हि घटविषयायास्सद्बुद्धेर्व्यभिचारो माभूत् - भवति तु व्यभिचारः- घटोऽस्तीतिवद्घटो नास्तीत्यपि प्रतीतिसत्त्वात् । नहि सद्घट इवासद्घटोऽपि सद्बुद्धिविषय इति वक्तुं शक्यते । तस्माद्घटस्य कदाचित्सद्बुद्धिविषयत्वं, कदाचिदसद्बुद्धिविषयत्वमिति घटविषयसद्बुद्धेर्व्यभिचारदर्शनान्न घटस्सद्बुद्धिविषयः । किंतु घटादर्थान्तरमेव । नच सद्बुद्धिविषयो घटः असद्बुद्धिविषयस्तु घटाभाव एव न घट इति वाच्यम्, घटो नास्तीत्यभावबुद्धौ घटस्यैव विषयत्वाद्घटविषयकं हि तदभावज्ञानं, यदि घटाभावस्यैव विषयत्वं तर्हि घटाभावविषयकं तदभावज्ञानमिति न विवक्षितघटाभावज्ञानसिद्धिः । किंतु घटाभावाभावज्ञानसिद्धिरेवेति । किंच यदि घटादिस्वरूपं सच्छब्दार्थस्तर्हि सन्घट इति प्रयोग एव माभूत् । किंतु घटस्य सदित्येव प्रयोगस्स्यात्- घटस्य स्वरूपमितिवत् । नतु तथा प्रयोगो दृश्यते । अपि च यदि घटशब्द इव सच्छब्दोऽपि घटस्वरूपमेवाभिदध्यात्तर्हि सन्घट इति पुनरुक्तिः। घटस्वरूपमेव सच्छब्दो वक्तीति नियमाभावेन पटस्वरूपस्यापि सच्छब्देन प्रतिपादने सति सन्घट इत्यत्र पटस्वरूपं घट इत्यपार्थप्रतीतिश्च ।

यदि तु स्वरूपसामान्यवाची सच्छब्दः घटशब्दस्य तद्विशेषवाचीत्युच्यते- तर्हि किं तत्स्वरूपसामान्यं यत्पटादावपि स्यात्- न द्रव्यत्वं, सन् गुण इत्यत्र तदभावात् । न गुणत्वं, सती मृत्तिका सत्कर्मेत्यादौ तदभावात् । नापि कर्मत्वं, सती पृथ्वी सन्गुण इत्यादौ तदभावात् । नापि सामान्यं, सती जातिरित्यत्र तदभावात् । नहि जातौ जात्यन्तरमस्ति । सत्कर्म सन्गुण इत्यादौ तदभावाच्च । एवमन्यत्रापि बोध्यम् । नच यत्सर्वत्रानुगतं वस्तु तदेव स्वरूपसामान्यं सच्छब्दवाच्यमिति वाच्यं, तदेव वस्त्वस्माभिः पृछ्यत इति- तस्मात्सर्वत्रानुगतं सत्तासामान्यमेव सच्छब्दवाच्यमित्यवश्यमभ्युपेयम् ।

तदनुगमादेव सन्घटस्सन्पट इति प्रतीतिः । यथा गोत्वमहिषत्वाद्यनुगमाद्गौर्महिष इत्यादिप्रतीतिः । साच सत्ता किं सति वर्तते ? उतासति ? आद्ये- कथं सन्घट इति प्रतीतिः । न द्वितीयः- असति सत्ताऽयोगादगवीव गोत्वायोगः । नच सति घटे सत्ता वर्तत इति वाच्यं, सत्तास्थितेः प्राग्घटस्य सत्ताऽभावेन सति घट इति विशेषितुमशक्यत्वात् । तथाहि- किं सत्तावति घटे सत्ता वर्तते ? उत सत्तारहिते ? आद्ये- समस्तपदवर्तिसत्ताया व्यस्तपदार्थसत्तायाश्चाभेदे आत्माश्रयः । भेदे अन्योन्याश्रयादयः । द्वितीये- व्याघातः । नन्वेवं ब्रह्मण्यपि समानो दोषः, किं सत्तावति ब्रह्मणि सत्ता वर्तते उत सत्तारहिते इति विकल्पने दोषसाम्यादिति वाच्यं, नास्माभिस्सच्छब्देन ब्रह्म विशेष्यते येनोक्तदोषः स्यात्, किंतु सच्छब्दवाच्यं ब्रह्मैवेत्युच्यते । यथा गोशब्दवाच्यो गौरेवेति । तथा च गवि गोत्वमिव सति सत्त्वं वर्तत इति न विकल्पनावसरः । नहि गोत्वं किं गोत्ववति वर्तते ? उताऽगोत्ववतीति विकल्प्यते । तस्मात्सर्वत्रानुगतं सद्रूपं ब्रह्मैव सत्पदवाच्यम् । नच सत्तैवानुगता नतु सदिति वाच्यं, सतस्सत्तातिरेकानभ्युपगमात् । तदभ्युपगमे च सद्धर्मस्सत्ता तद्धर्मस्सत्तात्वमित्यनवस्थादोषात् । सत्ताया धर्मस्यानुगमादपि सतोऽनुगमस्सिद्ध एव । सद्वस्तु विहाय सत्तायाः स्थित्ययोगात् । एवं च सन्घटःइत्यत्र मृद्घट इत्यत्रेव बुद्धिद्वयमस्ति सद्बुद्धिर्घटबुद्धिश्चेति । यथा मृद्बुद्धिर्घटबुद्धिश्च दृष्टान्ते । तत्र सद्बुद्धिविषयः वस्तु सदेव, घटबुद्धिविषयस्तु घट एव- यथा मृद्बुद्धिविषयो वस्तु मृदेव, घटबुद्धिविषयस्तु घटः तद्वत् । एवं विभक्ते बुद्धिद्वये सत्यपि तत्सामानाधिकरण्यं तु कार्यकारणयोस्तादात्म्याध्यासप्रयुक्तमेव । तादृशतादात्म्याध्यासस्तु घटादेस्सकाशात्सतो विवेचनं विना न निवर्तते । यथा मृद्घटतादात्म्याध्यासो घटादेस्सकाशान्मृदो विवेचनं विना न निवर्तते तद्वत् । तद्विवेकश्च तर्काधीन इति दर्शितानुमानस्य न सिद्धसाधनता, नाप्याश्रयासिद्धिरिति । नचासङ्गे पुरुषे कथं प्रमाणसम्बन्धार्हत्वं, येनानुमानेन तत्साध्येतेति वाच्यं, कल्पितसम्बन्धसत्त्वात् । 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपंच्यत' इति हि सम्प्रदायविद्वचनम् । नन्वेवं सर्वेषु देशेषु कालेषु वस्तुषु च सतस्सत्त्वादनुवर्तमानत्वमस्तु कथं पुना रज्जोरिति चेदुच्यते—कालत्रयवर्तित्वमेव रज्जोरनुवर्तमानत्वमिति । रज्जुर्हि सर्पप्रतिभासकाले तत्पूर्वोत्तरकालयोश्च वर्तते । नच सर्पप्रतिभासकाले रज्जुर्नास्तीति वाच्यं, तदापि रज्जोस्सत्त्वादत एव हि त्रैकालिकाभावप्रतियोगित्वं रज्जुसर्पस्य । एतेन सर्वस्य व्यावर्तमानत्वं च स्वपूर्वोत्तरकालयोरविद्यमानत्वमिति—सिद्धम् । इदं हि व्यावर्तमानत्वं घटादिष्वस्ति, घटस्य स्वोदयात्प्राक्स्वध्वंसानन्तरं चाभावात् । तथा जगत्यप्यस्ति सृष्टेः प्राक्प्रलये च जगतोऽभावात् । एवं मायायां चास्ति स्वोदयात्प्राग्ब्रह्मसाक्षात्कारानन्तरं चासत्त्वात्, नतु ब्रह्मण्यस्ति तस्य जन्मनाशाभावात्, नापि जीवे तस्यापि तथात्वात् । यद्यपि घटादीनां रज्जुसर्पवत्त्रैकालिकाभावप्रतियोगित्वेन स्वकालेप्यसत्त्वमेव । तथापि भ्रान्तदृष्ट्येदमुक्तमिति वेद्यम् । एतेन कालत्रयेपि सत्त्वाद्ब्रह्म परमार्थःकालत्रयेप्यसत्त्वाज्जगन्मिथ्येति—फलितम् । नच सृष्टिकाले जगदसत्त्वं न वयमभ्युगच्छाम इति वाच्यं, घटकालेपि मृद्व्यतिरेकेण घटाभावाद्यथा घटस्यासत्त्वं तथेदानीमपि जगत्कारणब्रह्मातिरेकेण जगतोऽसत्त्वं

किमिति नाभ्युपैषि । सर्पाभासकालेपि रज्जुव्यतिरेकेण सर्पाभावाद्यथा सर्पस्यासत्त्वं तथा ब्रह्मण्यपीदानीं जगदसत्त्वं किमिति नाभ्युपैषि ।

**ननु** माता मे वन्ध्येतिवत्- जिह्वा मे नास्तीतिवच्च नैव ग्राह्यं जगन्नास्तीदानीमिति तव वचनं, वक्तुस्तव प्रमातुर्वचनकरणस्य वागिन्द्रियस्य तदधिष्ठानस्य देहस्य च सत्त्वादिति **चेन्मैवम्**--- घटेन जलमाहरन्नपि विद्वान् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति मन्यते- नेदं मृत्तिका सत्येति घटो मिथ्येति च ज्ञानं न घटकरणकोदकाहरणक्रियाया निवर्तकं भवति तद्वत् । देहेन्द्रियादिकं सर्वं ब्रह्मैव तदेव सत्यं देहादिर्मिथ्यैवेति पश्यन्नपि विद्वान्व्यवहरेदेव, इति । न च मिथ्यावस्तुनो नास्त्यर्थक्रियाकारित्वं मरीचिकोदकं हि न केनापि पीयत इति वाच्यं, रज्जुसर्पस्य भयकम्पाद्यर्थक्रिया-कारित्वदर्शनात्स्वप्नदृष्टकान्तायास्सुरतहेतुत्वदर्शनाच्च । तस्माद्ब्रह्म सत्यं जगन्मिथ्येति स्थितम् । **यदुक्तं** श्रुतप्रकाशिकायामनुवृत्तमर्थान्तरं नास्ति सर्वे पदार्थाः परस्परं व्यावृत्ता एवेति तत्परिहृतमपि पुनः परिह्रियते बुद्धिसौकर्याय- तथाहि किं कार्येषु स्वकारणमनुवृत्तं भवति उत न ? आद्ये-कथमाकाशादि-ष्वनुवृत्तस्य सद्वस्तुनोऽर्थान्तरस्याभावः । द्वितीये- मृद्घटस्सुवर्णं कुण्डलमित्यादिव्यवहारस्य कथमुपपत्तिः । न चाकाशादीनां सत्कार्यत्वे विवदितव्यम्- 'आत्मन आकाशस्सम्भूत' इति श्रुतेः । नचात्मैवाकाशादि-कारणं न तु सदिति वाच्यं, 'सदेव सोम्येदमग्र आसी'दित्यादिश्रुतेः । 'सत इदमुत्थित'मिति भागवताच्च । सच्छब्दवाच्यं ब्रह्मैवात्मा । नच ब्रह्मैकमेव सच्छब्दवाच्यं, किंतु सर्वेपि प्रमाणसम्बन्धार्हाः पदार्था सच्छ-ब्दवाच्या इति **वाच्यम्**-सद्वस्तुनः कदाचिदप्यसत्त्वं न युज्यते, घटस्येवाघटत्वम् । 'नाभावो विद्यते सत' इति हि भगवता गीतम् । आकाशादीनां च भवत्यसत्त्वं सृष्टेः प्राक्प्रलये चेति न सच्छब्दवाच्यत्वम् । नच पूर्वोत्तरकालयोरप्याकाशादिपदार्थाः कारणरूपेण वर्तन्त एवेति वाच्यं, तथासति यद्रूपेण कार्यं वर्तत इत्युच्यते तस्य कारणस्यैव सत्त्वं सिद्धं, नतु कार्यस्य । घट उत्पत्तेः प्राग्ध्वंसात्पश्चाच्च स्वकाकरण मृद्रूपेण वर्तत इत्युक्तौ घटोत्पत्तेः प्राग्घटनाशे च मृदेवास्ति, नतु घट इति हि सिद्धम् । किंच यदि कार्यमुत्पत्तेः प्रागस्ति तर्हि उत्पत्त्ययोगः, कारकव्यापारस्य च वैयर्थ्यम् । यदि नास्ति तर्हि कस्य कारणरूपत्वमुच्यते- तस्मात्कार्यस्य पूर्वोत्तरकालयोः कारणमेवावतिष्ठते, न तु कार्यमिति कथं असतः कार्यस्य सच्छब्दवाच्यत्वम् । यद्यसदपि वस्तु सच्छब्दवाच्यं तर्हि शशशृङ्गादिकमपि सदेव भवेत् । न केवलं पूर्वोत्तरकालयोरेव कर्यस्यासत्त्वं, किंतु कार्यकालेपि । नहि घटकालेपि मृद्व्यतिरिक्तः घटरूप-कर्यांशः कश्चिदुपलभ्यते । नच कम्बुग्रीवाद्याकारोपलम्भः, तस्यापि मृन्निष्ठत्वात् । मृद्द्रव्यस्यैव हि चूर्णपिण्डकपालघटाद्याकारत्वं । न च केन चिदागन्तुकेनाकारेण युक्तं कारणमेव कार्यमित्युच्य इति कार्यं सदेवेति वाच्यं, तथापि कारणमेव सत्- आकारविशेषसाहित्यात्तु तस्य कार्यशब्दवाच्यत्वमित्येव सिद्धम् । एवं कालत्रयेपि कारणमेवास्ति, कार्यं नास्त्येव । अत एव 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मिति श्रुतिरुपपद्यते । तथा जगतः कार्यस्य पूर्वोत्तरकालयोर्जगत्कारणं वस्त्वेकमेवास्ति । जगत्काले च तदेवास्ति । उक्तन्यायेन कारणातिरिक्तकार्याभावात् । एवं जगत्कारणवस्तुनः कदाचि-

दप्यसत्त्वाभावादेव सच्छब्दवाच्यत्वं । जगतस्तु स्वकाले कारणातिरेकेण सत्त्वाभावात्पूर्वोत्तरकालयो-स्सुतरां सत्त्वाभावाच्च न सच्छब्दवाच्यत्वम् ।

एवं कालत्रयव्यापिनो जगति कार्ये सर्वस्मिन्ननुगतस्य च जगत्कारणवस्तुनस्सत्त्वात्कथमनुवृत्त-स्यार्थान्तरस्याभावः ? न च जगतो नार्थान्तरं ब्रह्मेति वाच्यं, कारणात्कार्यस्यैवार्थान्तरत्वाभावः, कार्यात्तु-कारणमर्थान्तरमेव । यस्मात्पृथग्यदुपलभ्यते तस्मात्तदर्थान्तरं, यस्मात्पृथग्यन्नोपलभ्यते तस्मात्तन्नार्थान्तरम्-- यथा घटात्पृथक्पट उपलभ्यत इति घटात्पटोऽर्थान्तरम् । मृदः पृथग्घटो नोपलभ्यत इति मृदो घटो नार्था-न्तरम् । एवं घटात्पृथक् मृदुपलभ्यते नेति न, किं तूपलभ्यत एवेति घटान्मृदर्थान्तरम् । तथा ब्रह्मणः पृथग्जगन्नोपलभ्यत इति न ब्रह्मणो जगदर्थान्तरम् । ब्रह्म तु जगतः पृथगुपलभ्यत एवेति जगतोऽर्थान्तरम् । तस्मादस्त्येव जगतो व्यावृत्तं, जगत्यनुगतं च, सच्छब्दवाच्यं ब्रह्म जगतोऽर्थान्तरम् । नच तत्प्रमाण-सम्बन्धार्हं नेति वाच्यं, उपनिषदेकगम्यत्वाद्विद्वत्प्रत्यक्षत्वाच्चेति । **यदुक्तं** सर्वे पदार्थाः परस्परव्यावृत्ता एवेति तदतीव **तुच्छम्**-- घटपटयोः परस्परव्यावृत्तत्वे सत्यपि मृद्घटयोस्तदभावेन सर्वे पदार्था इति नियन्तुमशक्यत्वात् । किंतु- कार्याणामेव परस्परं व्यावृत्तत्वं, न तु कार्यकारणयोः । नच कार्याणा-मेवेति कोयं नियमः ? कारणानां च परस्परं व्यावृत्तत्वमस्ति-- सुवर्णतन्तुमृत्तिकादीनां कारणानां तद्दर्शनादिति वाच्यं, तेपि सुवर्णादयः पदार्थाः कार्यभूता एवेति । कारणं हि ब्रह्मैकमेव- अनादित्वात् । यस्य ह्यादिर्विद्यते तत्कार्यमेव । यद्यपि मृदादीनां घटादीन्प्रति कारणत्वमस्ति, तथापि तत्सापेक्षमेव न तु निरपेक्षमिति भावः । तस्मात्कार्यत्वमेव व्यावृत्तत्वप्रयोजकं, नतु कारणत्वमिति कृत्वा सत्यनुगते कारणवस्तुन्यव्यावृत्ते कथमुच्यते-- सर्वे पदार्था व्यावृत्ता इति । नच 'अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यये' इति वचनात्कथमनुगतत्वमपि ब्रह्मण इति वाच्यं, परमार्थतोऽननुगतमव्यावृत्तमेव ब्रह्म- तदानीं द्वैतस्यैवाभावात् । सति हि द्वैते तदनुगतत्वं तद्व्यावृत्तत्वं च ब्रह्मणस्सम्भवति । व्यवहारतस्तु द्वैतेऽनु-गतं द्वैताद्व्यावृत्तञ्च-- यथा मृद्द्रव्यं घटेऽनुगतं घटाद्व्यावृत्तञ्च तद्वत् । तस्माद्दर्शितानुमानस्य नाश्रया-सिद्धिरिति—**संक्षेपः** ॥

## ब्रह्मणश्चिद्रूपत्वोपपत्तिः ।

अथ सच्छब्दवाच्यं ब्रह्मैव किमनुभवः ? उत ब्रह्मानुभवयोर्भेद इति विचार्यते—**अनुभवविष-यत्वाद्ब्रह्मणो नानुभवत्वम्**- अनुभवो हि विषयी, विषयविषयिणोस्तु भेदः प्रसिद्ध एवेति— **रामानुजः** । **तदसत्**—किमयमनुभवो ज्ञानं, यद्वा ज्ञानावच्छेदकवृत्तिः ? आद्ये- कथं ब्रह्मणो नानुभवत्वं- 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुतेः । त्वयापि ब्रह्मणो ज्ञानस्वरूपत्वमभ्युपगतं हि । द्वितीये- वृत्तिर्ब्रह्मणस्सकाशा-द्भिन्नैवेत्यस्तु विषयविषयिभावो ब्रह्मवृत्त्योः । नच ज्ञेयं ब्रह्म ज्ञानस्यापि विषय एवेति वाच्यं, यदि ज्ञानं ज्ञानस्य विषयस्स्यात्तर्हि ब्रह्मापि ज्ञानस्य विषयस्स्यात् । ब्रह्म हि ज्ञानम् । नच ब्रह्म ज्ञेयमेव, न ज्ञानमिति वाच्यं, दर्शितश्रुतिविरोधात् । नच ज्ञेयं ब्रह्मेति गीतास्वप्युक्तमिति वाच्यं, वृत्तिव्याप्यत्व-लक्षणमेव ज्ञेयत्वं ब्रह्मणो न ज्ञानावभावस्यत्वलक्षणमन्यथा श्रुतिविरोधेन गीताया अप्रामाण्यप्रसङ्गात् ।

स्वतः प्रमाणं हि श्रुतिः । स्मृतिस्तु श्रुत्यविरुद्धैव प्रमाणं, श्रुतिविरुद्धा त्वप्रमाणमेव । नच ज्ञानस्य वृत्तिविषयत्वमपि कथमिति वाच्यं, ज्ञानाकारज्ञानस्य अनुव्यवसायलक्षणस्य परैरप्यभ्युपगतत्वात् । नच वृत्तिज्ञानमेव ज्ञानं- तदतिरिक्तं सर्वमपि ज्ञेयमेवेति वाच्यं, वृत्तेर्ज्ञेयत्वेन ज्ञानत्वाभावात् । नहि ज्ञानं ज्ञेयं भवति- ज्ञेयं वा ज्ञानं, विरोधात् । नच वृत्तिर्न ज्ञायत इति वाच्यं, अज्ञायमानवृत्त्यनभ्युपगमात् । नच वृत्तिस्स्वयम्प्रकाशेति वाच्यं, ज्ञानस्यैव स्वयम्प्रकाशत्वात् । नच वृत्तिस्स्वयम्प्रकाशैवेति वाच्यं, जन्मनाशवत्त्वेन वृत्तेस्तदयोगात् । तथाहि-- अनन्यावभास्यत्वे सति स्वेतरसर्वावभासकत्वं स्वयम्प्रकाशत्वम् । इदं नित्यस्यैव वस्तुनस्सम्भवति, नानित्यस्य । वृत्तिश्च जन्मनाशवत्त्वेनानित्या । तथाच- वृत्त्या स्वजन्मनाशयोर्भानं न भवति, भासनदशायां वृत्तेरेवाभावात् । अन्येन केनचिद्भ्रायेते वृत्तिजन्मनाशौ । अन्यथा निस्साक्षिकयोस्तयोरनभ्युपगमापत्तेः । तस्माद्येन वृत्तिजन्मनाशाववभास्येते तेनैव वृत्तिरप्यवभास्यत इति वृत्तेर्भास्यत्वमेव । ज्ञानं तु नित्यत्वान्न केनापि भास्यते, स्वेतरं सर्वमवभासयति । नच स्वमपि भासयतीति कथं स्वेतरेत्युक्तिरिति वाच्यं, स्वस्मिन्नेकस्मिन् युगपद्भास्यत्वभासकत्वयोरयोगात् । तस्मात्स्वेनैव भास्यत इति न वक्तव्यं, किंतु स्वयमेव भासत इति वक्तव्यम् । स्वरूपेणैव भातीति तदर्थात् । तस्माद्ज्ञानमेव स्वयम्प्रकाशमनुभवशब्दवाच्यं ब्रह्म प्रत्यगभिन्नमिति—**सिद्धान्तः** ॥

## चैतन्यस्य स्वयम्प्रकाशत्वोपपत्तिः, तत्र रामानुजमतखण्डनं च ।

**अत्राह रामानुजः**—अनुभूतेः स्वयम्प्रकाशत्वं यदुक्तं तद्विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव, नतु सर्वेषां सर्वदा तथैवेति नियमोस्ति- परानुभवस्य हानोपादानादिलिङ्गकानुमानविषयत्वात् , स्वानुभवस्याप्यतीतस्य अज्ञासिषमिति ज्ञानविषयत्वदर्शनाच्च, अतोनुभूतिश्चेत्स्वतः सिद्धेति वक्तुं न शक्यते, अनुभूतेरनुभाव्यत्वे अननुभूतित्वमित्यपि दुरुक्तं- स्वगतातीतानुभवानां परगतानुभवानां चानुभाव्यत्वेनाननुभूतित्वप्रसङ्गादिति । अनुभूतित्वं नाम वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्व—मिति च । **श्रुतप्रकाशिकाकारश्च**—ज्ञानस्य नित्यद्रव्यत्वेन सदा वर्तमानत्वाद्वर्तमानदशायामिति पदं निरर्थकमिति शङ्कापनुत्तये विषयप्रकाशनवेलायामित्युक्तं, वर्तमानदशाशब्देन विषयसम्बन्धप्रसरस्य वर्तमानता विवक्षितेत्यवगम्यते—**इति । तदुभयमयुक्तम्**—तथाहि नित्यद्रव्यं ज्ञानमनुभव इति श्रुतप्रकाशिकयैव स्वानुभवस्याप्यतीतस्येति स्वगतातीतानुभवानामिति च रामानुजभाष्यं दुरुक्तमिति स्पष्टीकृतम् । नहि नित्यस्य वस्तुनोऽतीतत्वं सम्भवति । यद्धि पूर्वकाले आसीदिदानीं नास्ति तद्वस्तु खलूच्यते अतीतमिति । **यदि तु** अनुभवविषयसम्बन्धप्रसरस्यातीतत्वादनुभवस्यातीतत्वमौपचारिकमित्युच्यते, तर्हि प्रदीपस्थानीयं किमिदं नित्यं ज्ञानद्रव्यम्? प्रभास्थानीयश्च को वा तस्य प्रसरः? अन्तःकरणं नित्यद्रव्यं ज्ञानात्मकम् । तस्य विषयेण सह सम्बन्धः प्रसर इति **चेन्नैवम्**—पञ्चभूतसत्त्वांशसमष्टिकार्यस्यान्तःकरणस्य सादित्वेन नित्यत्वाभावात् । नच सादित्वे तस्य विवदितव्यम्—'तन्मनो कुरुते'ति श्रुतेः । प्रकृतिपुरुषेश्वराणामेव त्वन्मतेपि नित्यत्वाभ्युपगमादिति । नच प्रकृतिरिति वाच्यं, तस्यानादित्वेपि जडत्वात् । अत एव हि प्रकृतिकार्ये सर्वत्र जाड्योपलम्भः । प्रकृतेर्जडत्वं च

ईक्षत्यधिकरणसिद्धम्। एवं जडत्वादप्यन्तःकरणं न ज्ञानद्रव्यम्। यदि प्रकृतिरन्तःकरणं वा नित्यं ज्ञानं च भवेत्तर्हि श्रौतस्य 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति ब्रह्मलक्षणस्य प्रकृतौ तत्कार्येऽन्तःकरणे चातिव्याप्तिस्स्यात्। नच पुरुष इति वाच्यं, पुरुषस्य ज्ञातृत्वे ज्ञानत्वाभाव इति तव मतात्। नापीश्वरः- ईश्वरस्यैव ब्रह्मत्वाद्ब्रह्मज्ञानयोश्च त्वयोक्तत्वाद्भेदस्य। तस्माद्यन्नित्यं ज्ञानद्रव्यं तद्दुर्निरूपमेव तव। **ननु** यज्जीवेश्वरयोः स्वरूपभूतं ज्ञानं न तदिहानुभवशब्देन विवक्ष्यते- किंतु तयोर्धर्मभूतं ज्ञानमिति **चेन्नैवम्**—धर्मभूतज्ञानस्य गुणत्वेन द्रव्यत्वाभावात्। नित्यज्ञानानन्दादिगुणक ईश्वर इति हि तवाभ्युपगमः। नच जीवेश्वरयोः स्वरूपभूताद्गुणभूताच्चान्यदेवेदं धर्मभूतं ज्ञानाख्यं नित्यद्रव्यमिति वाच्यं, अप्रामाणिकत्वात्तत्कल्पनस्य। तस्मान्नित्यं ज्ञानं ब्रह्मैव। यत्तु गुणभूतं ज्ञानं तदनित्यमेव, वृत्तिज्ञानं हि तत्। अथ यदि रामानुजभाष्यगौरवात् श्रुतप्रकाशिकावचनं नाद्रियते, तर्हि अतीतत्वेन जन्मनाशवान्योऽनुभवः वृत्तिज्ञानमेव, न नित्यज्ञानं, तस्य च स्वयम्प्रकाशत्वाभावादब्रह्मत्वमेव। तस्य च वृत्तिज्ञानस्यानुभाव्यत्वेनाननुभूतित्वमस्माकमिष्टमेव। न हि वयं वृत्तिज्ञानमनुभूतिं ब्रूमः। अज्ञासिषमिति प्रतीतिश्च वृत्तिज्ञानविषयैव। यद्वा घटं जानामीति प्रत्ययो वर्तमानघटविषयः, घटमज्ञासिषमिति प्रत्ययस्तु अतीतघटविषयः। **यदुक्तमनुभूतित्वलक्षणं रामानुजेन तदसत्**—सुखादावतिव्याप्तत्वात्तस्य। सुखं हि वर्तमानदशायां स्वाश्रयं पुरुषं प्रति स्वसत्तयैव प्रकाशते, अप्रकाशमानसुखसत्ताऽभावात्। यदा हि सुखं जायते तदैव प्रकाशते। नच सुखाकारान्तःकरणवृत्त्या सुखं प्रकाश्यते, नतु स्वसत्तया प्रकाशत इति वाच्यं, सुखरूपान्तःकरणपरिणामस्यैव सुखत्वात्। **नचा**न्तःकरणस्यास्ति वृत्तिद्वयं तत्रैका कामक्रोधादिरूपा, अन्या तद्ज्ञानरूपा चेति, तथा च सुखरूपेणान्तःकरणं यदा परिणमते तदा सुखाकारा वृत्तिरपि जायते, तया च वृत्त्या तत्सुखं भासते- घटवदिति वाच्यं, तथासति अन्तःकरणपरिणामत्वाविशेषात्सुखमिव वृत्तिरपि स्वमन्यं वा न प्रकाशयेदेव-- अन्तःकरणस्य जडत्वेन तत्परिणामस्यापि जडत्वावश्यम्भावात्। नचान्तःकरणमजडमिति वाच्यं, तथा सति तत्परिणामभूतं सुखमप्यजडमेव भवेत्। तदुपादानभूता प्रकृतिरप्यजडैव भवेत्। तस्माद्यदि वृत्तिस्स्वसत्तयैव प्रकाशते, तर्हि सुखमपि तथैवेत्यतिव्याप्तिर्लक्षणस्य सुखादौ। किंच अनुभूतिस्स्वाश्रयम्प्रति स्वसत्तयैव प्रकाशत इत्यस्य कोऽर्थः- किमनुभूतिस्स्वाश्रयम्प्रति स्वात्मानं स्वसत्तयैव प्रकाशयतीत्यर्थः? यद्वा अनुभूतौ जातायां सत्यां पुरुषो ममानुभूतिर्जातेति प्रत्येति स्वत एवेत्यर्थः? आद्ये- कर्मकर्तृभाव विरोधः ग्राह्यकाले ग्राहकाभावात्, ग्राहककाले ग्राह्याभावाच्च। द्वितीये- ममानुभूतिर्जातेति या आसीदनुभूतिः पुरुषस्य सा किं प्रथमानुभूतेर्भिन्ना? उताभिन्ना? आद्ये- अन्योन्याश्रयादयः। द्वितीये- आत्माश्रयः। **अथ** यदुक्तमनुभूतेरननुभाव्यत्वं दुरुक्तमिति **तद्दुरुक्तमेव**। वृत्तिलक्षणानुभूतेश्चैतन्यावभास्यत्वलक्षणमनुभाव्यत्वमस्त्येव। ज्ञानलक्षणानुभूतेस्तु चैतन्यत्वान्न चैतन्यावभास्यत्वमिति भवत्येवाननुभाव्यत्वमिति। नच चैतन्यमपि चैतन्यान्तरावभास्यमिति वाच्यं, चैतन्यान्तराभावात्। 'एकमे'वेति श्रुतेः। नच ब्रह्मैवैकमिति वाच्यं, चैतन्यस्यैव ब्रह्मत्वात्। एतेन सर्वेषामनुभवानामिति

प्रत्युक्तम् । वृत्तिरूपविषयज्ञानानामेवानेकत्वम् , न चैतन्यात्मकानुभवस्येति । **यदुक्तं** परानुभव इति स्वानुभव इति च तदुभय**मयुक्तम्**—अनुभवे स्वत्वपरत्वाभावात् । नच परस्यानुभवः परानुभवः, स्वस्यानुभवः, स्वानुभव इति वाच्यं, परस्य स्वस्य च प्रमातुस्स्वरूपभूतमेकमेव चैतन्यमनुभव इति । तस्मात्स्वयम्प्रकाशानुभवरूपमेव ब्रह्म- इति । यदुक्तमनुभूतिस्स्वतस्सिद्धेति वक्तुं न शक्यत इति-तत्परास्त-मनुभूतेर्ब्रह्मत्वसमर्थनेन । ब्रह्म हि स्वतस्सिद्धम् । नच विषयेन्द्रियसन्निकर्षजन्यस्यानुभवस्य कथं स्वतस्सिद्धत्वमिति वाच्यं, न वयं तादृशस्य वृत्तिज्ञानलक्षणानुभवस्य स्वतस्सिद्धत्वं ब्रूमः, किंतु चैतन्य-लक्षणस्य नित्यस्यैव । नहि नित्यं वस्तु परतः सिध्यति । **एतेना**नुभवस्य नित्यत्वं, स्वतस्सिद्धत्वं च ब्रुवतश्श्रुतप्रकाशिकाकारस्य व्याहतवादित्वं **स्पष्टम् ।** नच नित्या अपि प्रकृतिकालादयः स्वतस्सिद्धा नेति वाच्यं, तेषामनित्यत्वात् । नहि ब्रह्मभिन्नं किमपि वस्तु नित्यमस्ति- 'अतोन्यदार्त'मिति श्रुतेः । आर्तत्वं हि बाधितत्वं- तदनित्यस्यैव वस्तुनः, नतु नित्यस्य सम्भवति- नित्यत्वस्य कालत्रयाबाधितत्व-रूपत्वात् । तस्मादनुभूतिर्नित्या, स्वयम्प्रकाशा एका चेति—**निरवद्यम्** । **अथ यदुक्तं रामानुजेन**—अनुभवस्यानुभवान्तरानुभाव्यत्वेपि नानुभवत्वमपगच्छतीति तदतीव **परिहासास्पदम्**—अनुभाव्यत्वानु-भवत्वयोस्सामानाधिकरण्यायोगात् । किंच यद्यनुभवोनुभवान्तरेणानुभूयते तर्हि तदनुभवान्तरं किमनु-भवान्तरेणानुभूयते, किं वा प्रथमानुभवेन, यद्वा अनुभवान्तरेण ? आद्ये- अनवस्था । द्वितीये-अन्योन्याश्रयः । तृतीये- कर्मकर्तृभावव्याघातः ।

**ननु** अनुभवस्यानुभवत्वं यद्यननुभाव्यत्वेन हेतुना साध्यते तर्हि खपुष्पस्याप्यनुभवत्वप्रसङ्गः-खपुष्पं ह्यननुभाव्यमिति **चेन्नैवम्**-- गोर्गोत्वमिव घटस्य घटत्वमिव चानुभवस्यानुभवत्वं सिद्धमेवेति न तत्साधनावकाशः- साध्यं हि साधनेन साध्यते न तु सिद्धम् । अतएव हि सिद्धसाधनस्य दोषत्वम् । अथापि यद्यननुभाव्यत्वेन तत्साधनीयमित्याग्रहस्तर्हि साधयामः- सत्त्वे सत्यननुभाव्यत्वं हेतुरिति वदामः । खपुष्पे तु विशेषणासिद्धेर्नानैकान्त्यम् । नचाज्ञाते घटे अतिव्याप्तिरिति वाच्यं, तस्याप्यनुभवयोग्यत्व-सत्त्वात् । अनुभवितुं योग्यं ह्यनुभाव्यम् । **यदुक्तं रामानुजेन**- अनुभूतित्वं नाम वर्तमानदशायां स्वा-श्रयं प्रति स्वसत्तयैव स्वविषयसाधनत्वमिति **तदयुक्तं**—विषयसाधनत्वं विषयप्रकाशकत्वं, तच्च विषय-प्रकाशजनकत्वं । विषयप्रकाशश्च विषयानुभवः । तथाच अनुभवोऽनुभवजनक इति सिद्धम् । तत्र यदि द्वयोरनुभवयोरेकत्वं तर्ह्यात्माश्रयः । भिन्नत्वं तर्हि द्वितीयानुभवः प्रथमानुभवजन्यः, सच प्रथमानुभवः किं जन्यः- विषयेन्द्रियसन्निकर्षजन्य इति चेत्तत एव सन्निकर्षात् द्वितीयानुभवो जायतां, किमिति तस्य प्रथमानुभवजन्यत्वकल्पनेन ? अथ स्वाश्रयं प्रतीत्यप्ययुक्तमनन्याश्रयत्वादनुभवस्य । न चात्माश्रय इति वाच्यं,आत्मन एवानुभवत्वात् । नचानुभवितैवात्मा नानुभव इति वाच्यं, अनुभवितृस्वरूपस्यैवानुभवत्वादात्मा ज्ञानस्वरूप इति त्वयाप्यभ्युपगतत्वात् । नच संकोचविकासार्हमात्मनस्स्वरूपादन्यदेव धर्मभूतं नित्यद्रव्यं ज्ञानमनुभव इति वाच्यं, संकोचविकासयोस्सावयवधर्मत्वात् विकारित्वाच्च- सावयवं विकारीदं त्वत्कल्पित-मप्रमाणं ज्ञानद्रव्यमनित्यमेव भवेत्-- नहि सावयवं विकारि वा नित्यं कचिद्दृष्टम् । किं च यथा धर्म-

भूतं त्वत्कल्पितं ज्ञानद्रव्यं स्वसत्तयैव विषयमवभासयति, तथा ज्ञानस्वरूप आत्मैव स्वसत्तयैव विषयमवभासयतीति व्यर्थं ज्ञानद्रव्यकल्पनं गौरवावहञ्चेति । नन्वेवं किमनुभूतित्वं त्वदभिमतमिति चेदुच्यते-- निर्धर्मकत्वादनुभवस्य नास्त्यनुभवत्वमिति । अथानुभवस्य किं लक्षणमिति चेत्, किमनुभवस्य स्वरूपलक्षणं पृच्छसि, उत तटस्थलक्षणम् ? आद्ये नास्त्यनुभवस्यानुभवादन्यत्किमपि स्वरूपम्-- यद्यनुभवस्याप्यन्यत्स्वरूपं स्यात्तर्हि तस्याप्यन्यत्तस्याप्यन्यत्स्वरूपं स्यादित्यनवस्था । तटस्थलक्षणं तु श्रुत्या दर्शितमेव-- 'यतो वा इमानि भूतानि जायन्त' इत्यादिना जगज्जन्मस्थितिलयहेतुत्वं । नच तद्ब्रह्मलक्षणमिति वाच्यं, ब्रह्मण एवानुभवत्वादिति । ननु अनुभवस्स्वयम्प्रकाशः तस्यापि परप्रकाश्यत्वेऽनवस्थादोषात् । ततस्तस्मिन् स्वयम्प्रकाशत्वरूपो धर्मोस्तीति कथं निर्धर्मकत्वमनुभवस्येति चेन्मैवम्— किमनुभवस्य निर्धर्मकत्वं वस्तुतोऽभिप्रैषि, यद्वा व्यवहारतः ? नाद्यः- वस्तुतो द्वैताभावात् । सति हि द्वैते अनुभवस्य स्वयम्प्रकाशत्वं भवति । न द्वितीयः- व्यवहारतस्सधर्मत्वादनुभवस्य कल्पितो हि धर्मोस्त्यनुभवे । ननु स्वयंप्रकाशत्वंनाम अनन्यावभास्यत्वे सति स्वेतरसर्वावभासकत्वमित्युक्तं, तन्न सङ्गच्छते- अनुभवस्य सर्वावभासकत्वायोगात्, सर्वावभासकत्वं हि सर्वावभासजनकत्वं- सच सर्वावभासस्सर्वानुभव एवेति कथमनुभवजनकत्वमनुभवस्येति चेन्मैवम्—निर्विकल्पकं ज्ञानं चैतन्यशब्दवाच्यं, सविकल्पकं ज्ञानं वृत्तिज्ञानशब्दवाच्यं जनयतीति तदर्थात् । ननु किमिदं वृत्तिज्ञानं- किं वृत्तिः, यद्वा चैतन्यमुतान्यत ? नाद्यः- वृत्तेर्जडत्वेन भासकत्वायोगात्- ज्ञानं हि भासकं भानमेव ज्ञानमिति स्वकालेपि वृत्तेर्जडाया भानरूपत्वमयुक्तम् । न द्वितीयः- चैतन्यं वृत्तिज्ञानजनकमित्युक्तत्वात् । न तृतीयः- अभावात् । नहि वृत्त्यतिरिक्तं चैतन्यातिरिक्तं च किञ्चिद्ज्ञानमस्तीति चेन्मैवम्—वृत्तिप्रतिफलितचैतन्यं वृत्तिज्ञानं, तदेव विषयचैतन्याभिन्नं सत्प्रत्यक्षमित्युच्यते । तस्माच्चैतन्याद्वृत्तेश्चान्यदेव वृत्तिज्ञानम् । एकस्यैव ज्ञानस्योपाधिभेदाज्जन्यजनकत्वभेद इति भावः । यद्वा अनुभवस्य स्वेतरसर्वावभासकत्वं नाम स्वेतरस्य सर्वस्य भातीति प्रतीतिविषयत्वजनकत्वं । सर्वस्यावभास्यत्वं च भातीति प्रतीतिविषयत्वम्- नहि जडस्य चिदाभासलक्षणफलव्याप्तिं विना भातीति प्रतीतिविषयत्वं स्वतस्सम्भवति । एतेन स्वतस्सर्वं सर्वदाऽवभासयन्नप्यनुभवः वृत्तिप्रतिफलितस्वचिदाभासद्वारैव सर्वस्य भातीति प्रतीतिविषयत्वं जनयतीति सिद्धम् ।

ननु भातीति प्रतीतिरेवानुभवः- तदतिरिक्तानुभवाभावादिति चेन्मैवम्— प्रतीत्यतिरिक्तानुभवसत्त्वात् । चक्षुषा हि घटं साक्षात्कृत्य पुरुषः प्रत्येति घटोस्ति भाति चेति । तथाच घटसाक्षात्कारात्मकानुभवादन्यैव प्रतीतिरनुभवजन्येति । नच तत्प्रतीत्यन्यः को घटानुभव इति वाच्यं, दुर्वचत्वात्तस्य । नच निर्विकल्पकानुभव एव दुर्वचो नतु सविकल्पकानुभव इति वाच्यं, द्विविधोप्यनुभवो दुर्वच एव । परं तु निर्विकल्पकानुभवविषयो वस्तु च दुर्वचम् । सविकल्पकानुभवविषयस्तु सुवच इति भेदः । तच्चानुभवस्य द्वैविध्यं विषयभेदप्रयुक्तमेव, नतु स्वत इति दुर्वच एवानुभवः । तस्य चानन्यावभास्यत्वेसति स्वेतरसर्वावभासकत्वं लक्षणं सङ्गच्छत एवेति । नन्वनुभवस्योक्तं घटावभासकत्वं किं घट इति प्रतीतिजनकत्वं, किं वा घट इति प्रतीतिविषयत्वजनकत्वं, यद्वा घट

इत्यनुभवजनकत्वमथवा घट इत्यनुभवविषयत्वजनकत्वम् ? तत्र प्रथमतृतीययोः द्वितीयचतुर्थयोश्च न भेदः- प्रतीतिरेवानुभवत्वात्, घट इति प्रत्येतीत्यस्य घट इति जानातीति ह्यर्थः । अनुभवस्यानुभवजनकत्व-मयुक्तमिति न प्रथमः कल्पस्सम्भवति । द्वितीयः कल्पः परिशिष्टः- सच नोपपद्यते- घटस्य सर्वदापि विषयत्वमस्त्येवेति कादाचित्कजनकत्वायोगादिति चेदुच्यते--- प्रतीतिर्व्यवहारश्शब्दप्रयोगलक्षण इति न प्रतीत्यनुभवयोरैक्यम् । यद्यपि स्वानुभवसमये न शब्दप्रयोगः- परोपदेशसमये हि सः । तथापि मानसिकस्सूक्ष्मश्शब्दप्रयोगः स्वानुभवसमयेप्यस्त्येवेति बोध्यम् । तज्जनकत्वमनुभवस्यास्तीति न प्रथम-कल्पस्य दुष्टत्वम् । नापि द्वितीयस्य- अनुभूत एव घटो घट इति व्यवहारविषयत्वमापद्यत इति । घट इति व्यवहारविषयत्वजनकत्वमनुभवस्यास्त्येव । तृतीयोपि समीचीन एव- केवलस्यानुभवस्य घट इत्यनुभवजनकत्वसत्त्वात् । निरुपाधिकं हि ज्ञानं, सोपाधिकज्ञानजनकं घट इत्यनुभवश्च घटोपाधिक इति । चतुर्थोपि युक्त एव- सामान्यानुभवविषयत्वे सत्यपि घटस्य सर्वदा न विशेषानुभवविषयत्वं सर्वदास्ति किंतु चक्षुर्घटसंयोगदशायामेव घट इति विशेषानुभवविषयत्वं घटस्येति । सच सामान्यानु-भवस्साक्षिचैतन्यम् । यद्वा साक्ष्याकारवृत्तिज्ञानम् । नच साक्ष्याकारवृत्तौ सत्यां साक्षिसाक्षात्कारेण सर्वस्याप्ययत्नसिद्धो मोक्ष इति वाच्यं, प्रमाणजन्यसाक्ष्याकारवृत्त्यैव साक्ष्यावरकाज्ञाननिवृत्तिद्वारा साक्षि-साक्षात्कार इति नियमात् । ननु कोसौ साक्षिसाक्षात्कारः, अनुभवस्य नास्त्यनुभव इति हि त्वयोक्त-मिति चेदुच्यते--- साक्षिभिन्नद्वैतानुभवाभाव एव साक्षिसाक्षात्कारः । नचानुभवाभावस्य कथमनुभवत्व-मिति वाच्यं, अनुभवस्य नित्यत्वेनाभावप्रतियोगित्वाभावात् । किंतु विशेषानुभवाभावस्य सामान्यानु-भवत्वमुच्यते- विशेषानुभववेलायां सन्नपि सामान्यानुभवोऽसत्कल्पतां याति- विशेषानुभवाभावदशायां तु सामान्यानुभवस्सत्ताप्रकर्षं लभते । तस्मादुच्यते विशेषानुभवाभाव एव सामान्यानुभवलक्षणस्साक्षि-साक्षात्कार इति । ननु विशेषानुभवाभावे अज्ञानानुभवोस्ति न साक्ष्यनुभव इति चेत्सत्यं, साक्ष्या-वरकस्यैवाज्ञानस्य सोनुभव इति साक्ष्यनुभवत्वेन व्यवहृतः । अज्ञानावच्छिन्नसाक्ष्यनुभवस्सामान्यानुभव इति भावः । ननु सोपाधिकस्य साक्षिणोऽनुभाव्यत्वेन भवतु तदनुभवः- कथं पुनः केवलस्साक्ष्यनुभवः ? न हि केवलसाक्षी अनुभव एव- इति चेन्मैवम्--- यावदविद्यं कथं साक्षिणः कैवल्यसम्भवः । नचैवं समाधावप्यज्ञानसत्त्वे कथं साक्षिस्फुरणमिति वाच्यं, समाधौ यदि साक्षिणः कैवल्यं, तर्हि तदा नास्त्येव साक्ष्यनुभवः- साक्षिणमनुभवितुः प्रमातुरेवाभावात् । किंतु साक्ष्येक एवास्ति । अत एव तदा साक्षिणमहं पश्यामीति प्रतीत्यभावः । तस्मादज्ञानस्य तत्कार्यस्य वा यस्य कस्यापि विशेषस्यानु-भवाभाव एव साक्षिसाक्षात्कार इत्युच्यते । नचाभावस्य कथं साक्षात्कारत्वमिति वाच्यं, अभावस्याधि-करणरूपत्वाद्विशेषानुभवाभावाधिकरणं साक्षिरूपोऽनुभव एवेति । सामान्ये हि विशेषस्याध्यासः, अध्यासाभावश्चाधिष्ठानानतिरेक्येव । तस्माद्विशेषानुभवाभावरूपस्साक्षिणोपि साक्षात्कार उपपद्यते । यद्वा साक्षिणः पारिशेष्यमेव साक्ष्यनुभवः । तच्च सर्वद्वैताप्रतीतौ भवतीति बोध्यम् । अथ वा साक्षिसाक्षात्कारयोरभेदेपि साक्षिणस्साक्षात्कार इति प्रतीतिरुपपद्यते- राहोश्शिर आत्मनश्चैतन्यं सूर्यस्य प्रकाश इतिवत् इति वेद्यम् । तस्मात्प्रत्यगभिन्नं ब्रह्मैव स्वयम्प्रकाशो- नित्यश्चानुभवः ॥

## अनुभूतेर्नित्यत्वोपपत्तिः ।

**ननु** नानुभवो नित्यः- अनुभवप्रागभावस्य सत्त्वात्, तस्य चानुभवेनैव ग्रहणादिति **रामानुजः, तन्मन्दम्**—किं यस्य कस्यापि वस्तुनो येन केनापि गृह्यमाणः प्रागभावोस्तीति त्वयोच्यते, उताऽगृह्यमाणोपि ? न द्वितीयः- अगृह्यमाणस्यापि प्रागभावस्यास्तित्वे ईश्वरादेरपि प्रागभावस्स्यात् । आद्ये किं स्वप्रागभावः स्वेनैव गृह्यते, उतान्येन ? नाद्यः- पुत्रप्रागभावस्य पित्रैव गृह्यमाणत्वं न पुत्रेणेति दर्शनात्, स्वप्रागभावग्रहणसमये स्वस्य सत्त्वे स्वप्रागभावायोगात्, स्वस्यासत्त्वे ग्रहणायोगाच्च । द्वितीय इष्ट एव । तत्तु प्रकृते न सम्भवति- अनुभवादन्यस्य जडत्वेन अनुभवप्रागभावग्रहणायोगात् । नचानुभवप्रागभाव आत्मना गृह्यत इति वाच्यं, आत्मन एवानुभवत्वात्- इति । ननु अनुभवप्रागभावमनुभवो न गृह्णातीति किं त्वया क्वचिद्दृष्टमुत न ? आद्ये- तस्मादेव तव दर्शनादनुभवप्रागभावसिद्धिः । द्वितीये- कथमदृष्टार्थस्य ग्राह्यत्वम् ? तथासति- अदृष्टं शशशृङ्गमपि ग्राह्यं स्यादिति **चेन्मैवम्**—पुत्रप्रागभावं पुत्रो न गृह्णातीत्येतन्मया दृष्टं, तेन स्वप्रागभावं स्वं न गृह्णातीति व्याप्तिज्ञानं मम जातं, ततो ब्रवीमि अनुभवप्रागभावमनुभवो न गृह्णातीति । **ननु** पुत्रप्रागभावं पुत्रो मा गृह्णातु, किं तेन पुत्रप्रागभावस्यासिद्धिः ? तथा अनुभवप्रागभावमनुभवो मा गृह्णातु नाम, न तावता अनुभवप्रागभावासिद्धिरिति **चेन्मैवम्**—पुत्रप्रागभावं पिता गृह्णातीत्यस्ति तत्सिद्धिः । नैवमनुभवप्रागभावं कोपि गृह्णातीति । **ननु** पुत्रप्रागभावं पुत्रोपि गृह्णाति नाहमुत्पत्तेः प्रागासमिति पुत्रोहि प्रत्येति- उत्पत्तेः प्राग्घटस्यासत्त्वदर्शनाल्लिङ्गादिति **चेन्मैवम्**—स्वप्रागभावस्य स्वप्रत्यक्षविषयत्वं नेत्येवास्माभिरुच्यते, स्वानुमानविषयत्वं तु भवत्येव । नचैवमनुभवोपि स्वप्रागभावमनुमानेन गृह्णात्विति वाच्यं, अनुभवः स्वसत्तयैव स्वविषयं प्रकाशयतीति त्वयैवोक्तत्वात् । अनुमानद्वारा अनुभवस्य स्वप्रागभावग्रहणे स्वसत्तयैवेत्युक्तं व्याहन्येत । ततश्चानुभवस्य त्वदभिमतमपि स्वयम्प्रकाशत्वं न सिध्यतीति । **ननु** अनुभवोऽतीतमपि विषयं बोधयति- अतीतवस्तुविषयप्रत्यक्षस्यापि योगिनस्सत्त्वात् । तथाच स्वपूर्वकालिकमपि प्रागभावमनुभवो बोधयतीति **चेन्मैवम्**—न वयमनुभवे वर्तमानमेव वस्तु विषयो भवतीति ब्रूमः- किं तर्हि अतीतमनागतं च विषयो भवत्येव- योगिनस्सर्वज्ञेश्वरस्य च त्रैकालिकवस्तुप्रत्यक्षसम्भवात् । अनुभवप्रागभावादिकं तु अनुभवे विषयो न भवतीति ब्रूमः । **ननु** मम गुरूपदेशात्पूर्वमेतच्छ्लोकार्थज्ञानं नासीदित्यनुभवे अनुभवप्रागभावोपि विषय एवेति **चेन्मैवम्**— नहि तत्र श्लोकार्थज्ञाने श्लोकार्थज्ञानप्रागभावो विषयः, किं त्वन्यस्मिन्नेव ज्ञान इति । एवं श्लोकार्थज्ञानप्रागभावस्य ज्ञानान्तरेण गृह्यमाणत्वादेव सिद्धिः । नैवमनुभवप्रागभावः केनापि गृह्यते- येन तत्सिद्धिः स्यात् । वृत्तिज्ञानप्रागभावप्रध्वंसाभावयोश्चैतन्येन गृह्यमाणत्वाद्वृत्तिज्ञानस्यानित्यत्वमस्तु- चैतन्यप्रागभावप्रध्वंसाभावौ तु न चैतन्येन- व्याघातात् । न चैतन्यान्तरेण- अभावात्, अतो न चैतन्यस्य प्रागभावादिकमस्ति । किंच यथा पुत्र उत्पत्तेः प्रागहं नासमिति प्रत्येति देवदत्तादिः तथा नाहमुत्पत्तेः प्रागासमिति प्रत्येति नानुभवः । अतश्च नानुभवस्य प्रागभावः । नच नाहमासमित्यात्मा प्रत्येत्येव- आत्मा ह्यनुभवस्तव मत इति वाच्यं, देहादितादा-

त्म्याध्यासप्रयुक्तत्वात्तत्प्रतीतेः । नचानुभवस्सर्वदाऽहमासमित्यपि न प्रत्येतीति वाच्यं, सर्वदाऽहमासमिति प्रत्येत्येव विद्वानात्मेति । नच सृष्टेः प्रागीश्वर एक एवासीत्- न जीवादिकं- 'अहमेवासमेकोग्रे नान्यद्यत्सदसत्पर'मिति भागवतादिति वाच्यं, जीवेश्वरयोरैक्यात् । 'अजो नित्यश्शाश्वत' इति हि जीवस्यापि नित्यत्वं श्रूयते । तस्मादनुभव एव प्रत्यगभिन्नं ब्रह्मेति न तस्य प्रागभावादिकं, नित्यत्वात् । **अत्र श्रुतप्रकाशिकाकारः प्रत्यवतिष्ठते—ननु** मृद्द्रव्यस्य नित्यत्वेपि घटत्वाद्यवस्थमृद्द्रव्यस्यानित्यत्ववत्- ज्ञानाख्यद्रव्यस्य नित्यत्वेपि, स्मृतित्वानुभूतित्वाद्यवस्थज्ञानस्यानित्यत्वमेव । ईदृशानित्यज्ञानस्यैव परेण स्वयम्प्रकाशत्वसमानाधिकरणनित्यत्वमुच्यत इति । **अत्रोच्यते**- अहो! श्रुतप्रकाशिकाकारस्य प्रज्ञाऽतिशयः- यथावस्थिताद्वैतमतप्रतिक्षेपणाशक्ततया मिथ्याभूतां कल्पनामद्वैते निपात्य तद्दूषितवान् । नहि वयमिन्द्रियसन्निकर्षादिजन्यप्रत्यक्षत्वाद्यवस्थज्ञानस्य स्वयम्प्रकाशत्वं नित्यत्वं च ब्रूमः, किंतु तदजन्यस्यैव निर्विकल्पकस्येति । अथ यदुक्तं मृद्द्रव्यस्य नित्यत्वेपीति- तदयुक्तमनित्यत्वाद्ब्रह्मभिन्नस्य । सर्वस्य स्वमतेपि प्रकृतेरेव नित्यत्वेन मृद्द्रव्यस्यानित्यत्वाच्च । **यच्चोक्तं** ज्ञानद्रव्यस्य नित्यत्वेपि स्मृतित्वाद्यवस्थज्ञानद्रव्यस्यानित्यत्वमिति **तदप्ययुक्तम्**—यस्य स्मृतित्वाद्यवस्थास्सन्ति तद्द्रव्यं ज्ञानं, किं नित्यमुतानित्यं ? नाद्यः- अवस्थावत्त्वेनानित्यत्वात् । न द्वितीयः- स्मृतित्वाद्यवस्थावतोऽनित्यस्य ज्ञानान्तरस्याभावात् । नच तदेव नित्यं ज्ञानं स्मृतित्वाद्यवस्थायुक्तं सदनित्यं भवतीति वाच्यं, नित्यस्य वस्तुनोऽवस्थाऽयोगात् । क्षीरत्वदधित्वाद्यवस्था ह्यनित्यस्य क्षीरद्रव्यस्य सम्भवन्ति । नित्यमवस्थावदिति हि विप्रतिषिद्धम् । अवस्थातत्त्वस्य विकारित्वरूपत्वाद्विकारिणश्चानित्यत्वात् । नच त्वयापि घटावच्छिन्नं चैतन्यमनित्यमित्युच्यत इति वाच्यं, तत्र घटस्यैवानित्यत्वं न चैतन्यस्येति । यदि तथा त्वमपि स्मृत्यनुभवादीनामेवानित्यत्वं नतु ज्ञानस्येति ब्रूषे तर्हि शिवम् । **यदनेनोक्तं** स्वयम्प्रकाशत्वनित्यत्वयोर्वैयधिकरण्यं तदतीव **परिहासास्पदम्**—यत्स्वयंप्रकाशं न भवति तत्स्वतस्सिद्धं न भवति, यत्स्वतस्सिद्धं न भवति तन्नित्यं च न भवतीति सिद्धान्तात्- इति । **यदुक्तं** ज्ञानानित्यत्ववादिना रामानुजेन- योग्यानुपलब्ध्यैव संवित्प्रागभावसिद्धिरिति, **तदसत्**—अनुपलब्धिरुपलब्ध्यभावः, उपलब्धिश्चानुभवः । तथा च अनुभवाभावेनानुभवप्रागभावो गृह्यत इति प्राप्तं- तत्र उभयोरनुभवयोरुभयोरभावयोश्चाभेदे आत्माश्रयः । भेदे स चानुभवाभावः केन गृह्यते ? अनुभवान्तरेण चेदन्योन्याश्रयादयः । नच यद्यत्र घटस्स्यात्तर्हि उपलभ्येत यतो नोपलभ्यते ततो न घट इति वत् । यदीदानीमनुभवस्स्यात्तर्हि उपलभ्येत, नतूपलभ्यते । तस्मान्नास्त्यनुभव इत्यनुभवाभावस्साध्यत इति वाच्यं, यद्यनुभवस्योपलभ्यमानत्वमस्ति तर्ह्येवं साध्येत न तु तदस्ति । किंच घटस्योपलब्धाऽऽत्मास्ति न त्वनुभवस्य कश्चिदस्त्युपलब्धा । नचात्मास्तीति वाच्यं, तस्यैवानुभवत्वात् । नच प्रमातास्तीति वाच्यं, प्रमातुस्स्वरूपस्यैवानुभवत्वात् । तस्मान्नानुपलब्धिप्रमाणादनुभवाभावसिद्धिः । **अथ यदुक्तं रामानुजेन**-- प्रत्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत्, तस्य न सर्वदा सत्तामवगमयत् दृश्यत इति घटादेः पूर्वोत्तरकालसत्ता न प्रतीयते-- तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः । घटादिविषयमेव संवेदनं स्वयं कालानवच्छिन्नं सत्,

प्रतीतं चेत्संवेदनविषयो घटादिरपि कालानवच्छिन्नः प्रतीयेतेति नित्यः स्यादिति, **तदयुक्तम्**—यदि घटादेर्विषयस्य कालपरिच्छिन्नत्वात्तद्विषयकं प्रत्यक्षज्ञानमपि कालपरिच्छिन्नमित्युच्यते, तर्हि विषयस्येश्वरस्यात्मनश्च नित्यत्वात्तद्विषयं प्रत्यक्षं नित्यमेवेति किमिति नोच्यते ?- नच घटादिस्थले प्रत्यक्षस्यानित्यत्वदर्शनादीश्वरात्मस्थलेपि तदनित्यमेवेति वाच्यं, ईश्वरात्मस्थले तन्नित्यत्वदर्शनाद्घटादिस्थलेपि तन्नित्यमेवेति किमिति नोच्येत ? नच संवेदनस्य नित्यत्वे तद्विषयो घटादिरपि नित्यस्स्यादिति वाच्यं, संवेदनस्यानित्यत्वे तद्विषयो ब्रह्मादिरप्यनित्य एव स्यादिति किमिति नोच्येत ? तस्मात्प्रत्यक्षस्य स्वविषयनित्यत्वानित्यत्वाभ्यां नित्यत्वानित्यत्वे वक्तुं न शक्येते । किंच घटसंवेदनस्य क्षणिकत्वेपि, यद्वा त्रिचतुरक्षणस्थायित्वेपि घटस्य मासादिस्थायित्वमवगम्यते, तत्कथमुपपद्यते घटस्य संवेदनसमकालत्वं, संवेदनस्य नाघटसमकालत्वम् ? अपि च किं संवेदनं स्वपूर्वोत्तरकालयोः घटस्याभावं बोधयति, यद्वा घटपूर्वोत्तरकालयोः ? नाद्यः- संवेदनात्पूर्वोत्तरकालयोरपि घटस्य सत्त्वात् । व्यावहारिकस्य घटस्याज्ञातसत्ता- न हि कोप्यनुन्मत्त इदानीं मम घटप्रत्यक्षं जातमितीदानीमेव घटोस्ति इतः पूर्वोत्तरक्षणयो र्घटो नासीन्न भविष्यतीति प्रत्येति । नचाद्वैतिनैवोक्तं यदा घटप्रतीतिस्तदा घटः यदा न घटप्रतीतिस्तदा न घट इतीति वाच्यं, प्रतीत्यतिरिक्तजगदभाववादविषयत्वात्तद्वाक्यस्य । तस्य च वादस्य सुसूक्ष्मबुद्धिविषयत्वात्किं तेन तव ? तस्मात्- इन्द्रियार्थसन्निकर्षजन्यस्य प्रत्यक्षज्ञानस्य घटादिविषयस्य क्षणिकत्वं, यद्वा त्रिचतुरक्षणस्थायित्वं, अथवा स्वविरोधिवृत्त्यन्तरोत्पत्तिपर्यन्तस्थायित्वमेव, नतु यावत्स्वविषयस्थायित्वमिति, तस्यानित्यत्वमस्माकमिष्टमेव । यत्त्वजन्यं ज्ञानं तस्यैव नित्यत्वं वयं ब्रूमः । नच नास्त्यजन्यं ज्ञानमिति वाच्यं, ज्ञानस्य स्वतोऽजन्यत्वेप्युपाधिवशाद्भवति जन्यत्वमिति । **एतेन** वृत्तेरेव जन्यत्वं नतु तत्प्रतिफलितचैतन्यलक्षणज्ञानस्येति—**सिद्धम्** । वृत्तेश्चैतन्यस्य च विवेचनस्य दुष्करत्वेन क्षीरनीरविवेचनवत्तस्य परमहंसैकविषयत्वेन च रामानुजस्य तद्विवेचनाशक्ततया एतादृशभाष्यकर्तृत्वमिति संतोष्टव्यं बुद्धिमद्भिः । **यदुक्तं** श्रुतप्रकाशिकाकारेण संविदपेक्षयैव विषयस्यातीतत्वानागतत्वे भवत इति कृत्वा नित्यत्वे संविदः तद्विषया अपि नित्यास्स्युरिति तदपि **मन्दम्**—यदि संविदपेक्षया विषयस्य अतीतानागतत्वे भवतः तर्हि संविदः किमपेक्षया ते भवतः ? नच स्वापेक्षयैवेति वाच्यं, विषयस्यापि तथैव वक्तव्यत्वात् । नच विषयापेक्षयेति वाच्यं, अन्योन्याश्रयात् । नापि संविदन्तरापेक्षयेति वाच्यं, तस्यापि संविदन्तरान्तरापेक्षयेत्यनवस्थादोषात् । तस्मात्कालापेक्षयैव विषयस्यातीतत्वादिकं- वर्तमानकालावच्छिन्नो घटः वर्तमान इति, अतीतकालावच्छिन्नोऽतीत इति, आगामिकालावच्छिन्नो भविष्यन्निति च व्यपदिश्यते । नच नित्यस्य कालस्य कथमतीतत्वादिकमिति वाच्यं, दिनमासादिलक्षणस्य कालस्यातीतत्वादिदर्शनात् । नचैवं संविदपेक्षयैव कालस्यातीतत्वादिकमिति वाच्यं, कालापेक्षयैव संविदस्तथात्वमिति । अस्मिन्क्षणे वर्तमानं हि घटज्ञानं वर्तत इति पूर्वक्षणे वृत्तं पटज्ञानमतीतमिति उत्तरक्षणे भविष्यत्पुस्तकज्ञानं भविष्यदिति च व्यवहारात् । नच संविदैव कालस्यातीतत्वादिकं वेद्यत इति वाच्यं, केनोक्तं संविदा न वेद्यत इति ? अपि तु घटसंविदा न वेद्यत इति ब्रूमः । संविदतिरिक्तं सर्वं हि संविदधीन-

स्थितिकम्- संविदेकैव स्वतःसिद्धा-- कालस्यातीतत्वादिकं तत्पूर्वकं विषयस्यातीतत्वादिकं च संविदा ज्ञायत इत्युक्तिमात्रेण कथं संविदोऽतीतत्वादिसिद्धिः । नच अतीतसंविदा अतीतविषयप्रकाशः, वर्तमानसंविदा वर्तमानविषयप्रकाशश्चेति वाच्यं, संविदवच्छेदककालगतमेव तदतीतत्वादिकं न संविद्गतं - यथा पूर्वदिनस्थितसूर्यप्रकाशेनैवैतद्दिनस्थितसूर्यप्रकाशभास्योपि घटो भास्यते- नहि कालभेदमात्रेण सूर्यप्रकाशभेदः तद्वत् । तस्माद्घटज्ञानमपि नित्यं स्वप्रकाशं न, तद्विषयो घट एवानित्यो जडश्च । तत्प्रयुक्तमेव तस्यानित्यत्वमिति । यदुक्तं रामानुजेन निर्विषया काचित्संविन्न चास्ति, अनुपलब्धेरिति तदसत्—किमथ निर्विषयसंविदनुपलम्भास्वस्य, यद्वा परस्य ? आद्ये स्वस्यैवाज्ञत्वम् । न द्वितीयः- परहृदयस्याप्रत्यक्षत्वात् । नच निर्विषयं ज्ञानमेव न सम्भवतीति वाच्यं, तत्र हेत्वभावात् । नचानुपलभ्यमानत्वं हेतुरुक्त एवेति वाच्यं, तस्य सविषयज्ञानेप्यतिव्याप्तत्वात- नहि सविषयं ज्ञानमप्युपलभ्यते-- ज्ञानस्य ज्ञेयत्वाभावस्योक्तत्वात् । किंच निर्विषयं ज्ञान नास्तीति किं त्वं निर्विषयज्ञानाभावमुपलभ्य ब्रवीषि ? किमुतानुपलभ्य? आद्ये- अभावस्य प्रतियोगिपूर्वकत्वनियमात्कथं तव निर्विषयज्ञानाभावोपलम्भः ? नहि घटमविदुषः पुरुषस्य घटाभावज्ञानं भवति । द्वितीये निर्विषयज्ञानाभावस्यानुपलब्ध्या निर्विषयज्ञानं सिद्धमेव ।

**ननु** ज्ञायतेनेन घटादिविषयजातमिति ज्ञानमिति व्युत्पत्त्या ज्ञानस्य विषयप्रकाशनैकस्वाभाव्याद्विषयप्रकाशकस्यैव ज्ञानत्वं न त्वन्यस्य, तदेव विषयप्रकाशकत्वं स्वयंप्रकाशत्वं ज्ञानस्य । यदि तु ज्ञानं निर्विषयं स्यात्तर्हि तस्य स्वप्रकाशज्ञानत्वमेव हीयेतेति चेन्मैवम्- यदि विषयप्रकाशकमेव ज्ञानमित्युच्यते तर्हि सूर्यादिप्रकाशोपि ज्ञानं स्यात् । तेन हि घटादिः प्रकाश्यते- नह्यन्धकारस्थो घटो भाति । यदि तु तदतिव्याप्तिवारणाय प्रकाशकत्वं नाम ज्ञानजनकत्वमित्युच्यते तर्हि विषयज्ञानजनकं ज्ञानमिति वाक्ये ज्ञानशब्दद्वयस्य किमर्थभेद उतैकार्थ्यम् ? आद्ये कस्सोर्थभेदः? जन्यज्ञानं फलं जनकज्ञानं तु तत्करणमिति चेत्तत्र यत्फलभूतं ज्ञानं तत्किं स्वप्रकाशमुत परप्रकाश्यम् ? नाद्यः- तस्य विषयज्ञानजनकत्वाभावेन स्वप्रकाशत्वाभावात् । न द्वितीयः- प्रकाशकस्य परस्याभावात् । तत्सत्त्वे च तत्परनिष्ठं प्रकृतफलज्ञानप्रकाशकत्वं फलज्ञानज्ञानजनकत्वमेवेति ज्ञानानवस्था प्रसक्ता । यद्यैकार्थ्यं तर्हि व्याघातः । तस्माद्यदि विषयावबोधजनकत्वं स्वप्रकाशत्वमिति विवक्षितं तर्हि विषयावबोधजनकं करणभूतमेव ज्ञानं स्वप्रकाशकं स्यात्- नतु फलभूतम् । न चेष्टापत्तिः, करणस्यैव स्वप्रकाशत्वे कर्तुरात्मनस्स्वप्रकाशत्वाभावप्रसङ्गात् , ब्रह्मणश्च स्वप्रकाशत्वाभावप्रसङ्गात् । यदि तु अनन्यावभास्यत्वे सति स्वेतरसर्वावभासकत्वं स्वप्रकाशत्वमिति विवक्षितं, तर्हि सर्वेष्टसिद्धिस्सर्वानिष्टपरिहारश्च । करणज्ञानं तु न स्वप्रकाशं, तस्य जडत्वेन चैतन्यावभास्यत्वादिति । यद्वाऽस्तित्वे सत्यनन्यावभास्यत्वं स्वप्रकाशत्वम् । शशशृङ्गादावतिव्याप्तिवारणाय विशेषणम् । व्यवहारसत्ये जगति साज्ञानेऽतिव्याप्तिवारणाय विशेष्यम् । इदं च वृत्तिज्ञाने करणभूते नास्त्येव । नच फलेपि नास्त्येवेति वाच्यं, तत्र सत्त्वात् । नच करणजन्ये फले कथमनन्या-

वभास्यत्वमिति वाच्यं, नित्यचैतन्यस्यैव फलत्वेनाजन्यत्वात्। नच करणानर्थक्यं, विषयावच्छिन्नचैतन्यावरकाज्ञाननिवृत्त्यर्थं तस्यावश्यकत्वात्। नचाजन्यस्य फलव्यवहारानुपपत्तिः, अजन्ये नित्ये मोक्षे तत्सत्त्वात्। तस्मादज्ञातं विषयावच्छिन्नं ब्रह्मचैतन्यं ज्ञातं सत्फलं भवतीति न तस्य जन्यत्वम्। हन्तैवं ब्रह्मचैतन्यस्य ज्ञातत्वेनान्यावभास्यत्वमेव सम्प्राप्तमिति **चेन्मैवम्**—विषयावच्छिन्नचैतन्यस्यैव ज्ञातत्वं न तु केवलस्येति। विषयगतो हि सोऽवभास्यत्वधर्मोऽविच्छिन्ने ब्रह्मण्यारोपितः, तस्मात्करणभूतं ज्ञानं स्वप्रकाशम्। **ननु** चैतन्यस्य स्वप्रकाशत्वं त्वदुक्तविधमस्तु—करणज्ञानस्य स्वप्रकाशत्वं तु विषयावबोधजनकत्वमेव। तथाच- निर्विषयं वृत्तिज्ञानं नास्तीति **चेत्** केनोक्तमस्तीति। नच निर्विकल्पकं ज्ञानमस्तीति त्वयोक्तमिति वाच्यं, निर्विकल्पकात्मविषयज्ञानस्यैव निर्विकल्पकत्वेन तस्यापि सविषयत्वात्। तत्त्वमस्यादिवाक्यजन्याखण्डाकारवृत्त्यात्मकं हि ज्ञानं ब्रह्मात्मसाक्षात्कारलक्षणमवबोधं जनयतीत्यस्मन्मतसिद्धान्तात्। तस्मान्निर्विषयं वृत्तिज्ञानमेव नास्ति- निर्विषयं चैतन्यं त्वस्त्येवेति—**सिद्धान्तः**॥ **यदुक्तं रमानुजेन**- सुप्तोत्थितस्य इयन्तं कालं न किंचिदहमवेदिषमिति प्रत्यवमर्शेनैव सुप्तावनुभवाभावस्सिद्ध इति **तत्तुच्छम्**-- किं सुप्तौ न किञ्चिद्विदितवत एव सुप्त्यपगमे दर्शितप्रत्यवमर्शस्सम्भवति? यद्वा किंचिद्विदितवतः? आद्ये न किंचिद्वेदनरूपोऽनुभवस्सिद्ध एव। द्वितीये परामर्शस्यैव सिद्धिर्दर्शितस्य। नच न किंचिद्वेदनं नाम किंचिदप्यवेदनं यस्य कस्यापि वेदनाभाव इत्यर्थः- तथाच सुप्तौ ज्ञानाभाव एवेति वाच्यं, किं सौप्तिकस्य ज्ञानाभावस्त्वया विदित उताविदितः? आद्ये ज्ञानाभावज्ञानरूपोऽनुभवस्सिद्ध एव। द्वितीये त्वयाऽविदितस्य ज्ञानाभावस्य कथमभ्युपगमः। अन्यथा शशशृङ्गादेरप्यभ्युपगमः प्रसज्येत- तस्मात्सुप्तौ विशेषानुभवाभाव एव। सामान्यानुभवाभावस्तु न शक्यते वक्तुम्। नच, सुप्तौ संविदस्ति- निराश्रया संवित्तु नास्ति- सर्वस्या अपि संविदस्साश्रयत्वादात्माश्रया हि संवित्- संविदः क्रियात्वेन क्रियायाः कर्त्राश्रितत्वेनात्मनश्च कर्तृत्वेन संविद आत्माश्रितत्वादिति वाच्यं, आत्मनो निष्क्रियत्वेनाकर्तृत्वात्संविदश्च फलत्वेनाक्रियात्वादात्मन एव संविद्रूपत्वात्संविद एव सर्वाश्रयत्वेन निराश्रयत्वात्साश्रया संविन्नास्त्येव। नचानुभवितुरात्मन एव कथमनुभवरूपत्वमिति वाच्यं, ज्ञानस्वरूपत्वमात्मनोऽभ्युपगतवता भवता नैवं बोधनीयमिति। नच ज्ञानस्वरूपमप्यात्मानमाश्रित्य यद्वर्तते द्रव्यं ज्ञानं तदेवानुभवो न त्वात्मेति वाच्यं, आत्मनो ज्ञानं स्वरूपं ज्ञानं- त्वात्मा नेति वाक्यस्य व्याहतत्वात्, आत्मनस्स्वरूपभूतेनैव ज्ञानेन सर्वसिद्धौ तदाश्रितज्ञानद्रव्यकल्पनस्य निष्प्रयोजनत्वाद्गौरवावहत्वात्प्रमाणशून्यत्वाच्च। यदि ज्ञानेपि ज्ञानान्तरं स्यात्तर्हि तस्मिन्नपि ज्ञानान्तरान्तरं स्यादित्यनवस्थादोषाच्च। किञ्च तव मते किमात्मा द्रव्यमुत न? आद्ये कथं ज्ञानरूपद्रव्यस्यात्मनो ज्ञानरूपद्रव्यवत्त्वम्। यदि ज्ञानद्रव्यमपि ज्ञानद्रव्यवत्स्यात्-- तर्हि तदपि ज्ञानद्रव्यं ज्ञानद्रव्यवत्किमिति न स्यात्, तदपि तृतीयं ज्ञानद्रव्यवत्किमिति न स्यादित्यनवस्थादोषः। द्वितीये तव मते सगुणत्वेनात्मनः कथमद्रव्यत्वं? गुणवत्त्वं हि द्रव्यत्वम्। नच द्रव्यत्वजातिमत्त्वं द्रव्यत्वमिति वाच्यं, संस्थानातिरिक्तजात्यनभ्युगमात्तव। नच संस्थानवत्त्वं द्रव्यत्वमिति वाच्यं, आत्मनि

कस्यचित्संस्थानविशेषस्यादर्शनात् । नच द्रव्यवान् द्रव्यभिन्न एवात्माऽस्त्विति वाच्यं, यदेवात्माश्रितत्वेन भवदभिमतद्रव्यस्य स्वरूपं, तदेवात्मनोपीति स्वरूपभेदाभावेन आत्मनो ज्ञानद्रव्यभिन्नत्वायोगात् । **ननु** भवत्वनुभव एवात्मा- तथापि सुप्तावात्मनोन्यन्नास्ति यत्किमपि ज्ञानमिति **चेन्मैवम्**—दर्शित-परामर्शबलादेवात्मनोस्ति अज्ञानज्ञानमिति । एवं सुखमहमस्वाप्समिति परामर्शबलात्सुखज्ञानमपीति । तस्मात्सुप्तौ चैतन्यस्य, वृत्तिज्ञानस्य वा नाभावस्साधयितुं शक्यत—इति । **ननु** सुप्तावन्तःकरणाभावा-द्विषयाभावाच्च विषयाकारपरिणतान्तःकरणवृत्तिज्ञानस्य कथं सम्भव इति **चेन्मैवम्**, सुखादिविषयसत्त्वा-त्तदाकारपरिणताविद्यावृत्तिसत्त्वाच्चेति । न चैवं सुप्तावपि ज्ञानं सविशेषमेवेति कथं निर्विशेषज्ञान-सिद्धिरिति वाच्यम्, सुप्तौ सविषयस्यैव ज्ञानस्य सिद्धिर्नतु सविशेषस्येति । **नन्वेवं** सुप्तादौ जाग-रादौ समाधौ वा निर्विषयज्ञानायोगात्सविषयमेव ज्ञानं सर्वदा विद्यते आत्मन इति कृत्वा ज्ञानवानेवात्मा नतु ज्ञानमिति **चेन्मैवम्**-- व्यवहारत आत्मनो वृत्तिज्ञानवत्त्वेपि परमार्थतस्तदभावान्न ज्ञानवत्त्वमिति ज्ञानमे-वात्मा । ननु परमार्थत आत्मा स्फुरति वा नवा? आद्ये स्फुरणं हि स्फुरतो धर्म इति धर्मिण आत्मनो धर्म-भूतज्ञानसिद्धिः । यथा प्रकाशमानस्य सवितुः प्रकाशो धर्मः । द्वितीये बन्धमुक्त्योरविशेषः- यथा संसारे न स्फुरत्यात्मा तथा मुक्तावपीति । न चेष्टापत्तिः- यथा घटः स्वयं न स्फुरति तथा आत्मापीति जाड्यापत्तिश्च । न हि मुक्तौ द्वितीयमस्ति येन परतः स्फुरत्यात्मेति वक्तुं शक्येत । तथा परतः स्फूर्त्यङ्गीकारे च स्वयं ज्योतिष्ट्वश्रुतिव्याकोप इति **चेन्मैवम्** — किमात्मनो धर्मभूतं त्वत्कल्पितं ज्ञानद्रव्यं स्फुरति उत न? आद्ये स्फुरतस्तस्य धर्मज्ञानस्य स्फुरणं हि धर्म इति धर्मान्तरं ज्ञानं स्यात्, तस्याप्यन्यदित्यनवस्था । द्वितीये- घटवत्तस्य धर्मस्य जाड्यमेव स्यादिति कथं ज्ञानत्वं इति । **एतेन**—यदुक्तं श्रुतप्रकाशिकायाम्- धर्मिस्वरूपभूतज्ञानस्य स्फुरणं नित्यं, तच्च भासमानताव्यवहारानुगुण्यं, धर्मभूतज्ञानस्य स्फुरणं विषयसम्बन्धजन्यं, तदानीमेव न त्वन्यदा, स्वापादौ तु तस्य सर्वविषयसम्बन्धार्हता प्रतिबद्धा वह्नेर्दाहकत्वशक्तिवत् । अतो न तदा स्फुरणमिति—**तत्परास्तम्** । तस्मात्स्फुरतो वस्तुनस्स्फुरणमेव स्वरूपं- यथा भास-मानस्य सूर्यस्य भास एव स्वरूपम् । नहि प्रकाशातिरिक्तस्सूर्य उपलभ्यते । सूर्यस्य प्रकाश इति तु राहोश्शिर इतिवदौपचारिकः प्रयोगः । यद्वा सूर्यस्य स्वरूपभूतः प्रकाश इत्यर्थः । **एतेन**-'यदादित्यगतं तेज'इति गीताश्लोकस्यापि आदित्यस्वरूपभूतं तेज इत्येवार्थ इति- **सिद्धम्** । तस्मात् प्रकाशो भाति वा न वेति विकल्पनवदात्मा स्फुरति वा न वेति विकल्पनमयुक्तमेव- आत्मन एव स्फुरणरूपत्वात् । नहि स्फुरणं स्फुरति वा नवेति कोप्यनुन्मत्तो विकल्पयति- इति । **ननु** स्फुरतः स्फुरणं धर्म एव न तु स्वरूपं- स्फुरणं हि क्रिया, क्रिया च कर्तुर्न स्वरूपं- नहि छेत्तुः पुरुषस्य छेदनं स्वरूपं भवतीति **चेन्मैवम्**- यदि ज्ञातुरात्मनस्स्वरूपत्वेन भवदभिमतं ज्ञानं क्रिया स्यात्तर्हि स्फुरत आत्मनस्स्व-रूपत्वेन मदभिमतं स्फुरणमपि क्रिया स्यात् । नच स्फुरतेर्धातोरर्थानुगमास्स्फुरणं क्रियेति वाच्यं, जानातेर्धातोरर्थानुगमात् ज्ञानमपि क्रियैवेति । **ननु** नास्माभिः स्फुरणं ज्ञानत्वेन विवक्षितं,

किं तु भासमानताव्यवहारानुगुण्यं स्फुरणमिति विवक्षितमिति **चेन्मैवम्**- भासमानताव्यवहारानुगुण्यं-नाम भासत इति प्रतीतिविषयत्वयोग्यत्वम् । तदनावृते घटादै जडेप्यस्त्येवेति तस्य कथमात्मधर्मत्वम् । नच स्वत एवात्मनस्तदस्ति- दीपादेरिव- घटस्य तु परत इति वाच्यं, तथासति यदा व्यवहारस्तदैव तद्विषयत्वयोग्यत्वमात्मनः, नतु व्यवहाराभावदशायामिति कृत्वा परमार्थत आत्मनि स्फुरणधर्माभाव एव सिद्धः । नचेष्टापत्तिः, आत्मनो धर्मभूतं नित्यं ज्ञानद्रव्यमिति हि तव राद्धान्तः— परमार्थतस्सतस्तस्य कथं नित्यत्वम् । नच मुक्तावपि व्यवहारोस्त्येवेति वाच्यं, 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये'दिति श्रुत्यैव मुक्तौ सर्वव्यवहारस्य निषिद्धत्वात् । तस्मात्स्फुरणमात्मनस्स्वरूपमेव— इति । **अथ यदुक्तं सुदर्शनेन**—इयन्तं कालं न किञ्चिदहमवेदिषमिति सुप्तोत्थितपरामर्शेन ज्ञानसामान्याभावगोचरेण तदन्तर्गतस्वाभावोपि स्वेनैव गृहीत इति **प्रागभावसिद्धिरनुभवस्येति** तत्पूर्वमेव खण्डितमपि बुद्धिसौलभ्याय पुनरिह प्रदर्श्यते। इह हि ग्रन्थे परिहृता अपि पूर्वपक्षाः पुनःपुनः प्रसङ्गमापद्य परिह्रियन्ते बुद्धिसौकर्याय, तथाहि- अनेन प्रागुक्तं मृद्द्रव्यमिव ज्ञानद्रव्यं नित्यं घटत्वाद्यवस्थमृद्द्रव्यमिव स्मृतित्वाद्यवस्थज्ञानद्रव्यमनित्यमिति । तथा च ज्ञानसामान्यस्य नित्यत्वं ज्ञानविशेषाणां त्वनित्यत्वमिति सिद्धम् । स्मृतित्वाद्यवस्थाविशेषरहितं हि ज्ञानं ज्ञानसामान्यम् - यथा घटत्वाद्यवस्थाविशेषरहितं मृद्द्रव्यं मृत्सामान्यम् । एवं सति कथं तस्य नित्यस्य ज्ञानसामान्यस्याभावः । न ह्यभावप्रतियोगि नित्यं क्वचिद्दृष्टम् । अपि च यदि सुप्तौ ज्ञानसामान्यमपि नास्ति तर्हि दर्शितपरामर्श एव न जायेत । यत्किञ्चिद्विषयकज्ञानाभावज्ञानस्य सत्त्व एव तत्परामर्शोदयात् । जागरेपि त्वयोच्यमानं किमप्यहं न जानामीति वदतो विशेषज्ञानाभावेपि सामान्यज्ञानमस्तीत्येवाभ्युपगन्तव्यम् । कथमन्यथा तदुच्यमानार्थज्ञानाभावज्ञानाभावे तद्वाक्यं स श्रोता प्रयुञ्जीत । तस्माद्विशेषज्ञानाभावमेव सामान्यज्ञानं गृह्णाति, नतु सामान्यज्ञानाभावं व्याघातादसिद्धेश्चेति— **सुस्थम्** । **अथ यदुक्तं रामानुजेन**— संविदो जन्माभावेपि विनाशोस्त्येव, अजस्य प्रागभावस्य अजाया अविद्यायाश्च नाशसद्भावादिति, **तदसत्**—जन्मादयष्षड्भावविकारा एव नाभावविकारा इति कथं प्रागभावस्य जन्मशून्यस्य नाशवत्त्वम् । यदि जन्मनाऽलब्धसत्ताकोपि प्रागभावो विनाशमीयात्तर्हि, शशशृङ्गादिकमपि विनाशमीयात् । अविद्यायास्तु जन्मास्त्येव 'माया चाविद्या च स्वयमेव भवती'ति श्रुतेः । तस्या अनादित्वप्रसिद्धिस्तु परतो जन्माभावप्रयुक्ता । न हि जगदविद्ययेवाविद्या केन चिदुत्पाद्यते । न चाविद्यापि जगदिव ब्रह्मण्येवासीदिति कथं परतस्तस्या जन्माभाव इति वाच्यं, ब्रह्मणि जगदविद्यात आसीदविद्या तु न तथा परत आसीत्किन्तु स्वत एवासीदिति तस्माद्यस्य जन्माभावस्तस्य नाशाभावः, यस्य जन्मास्ति तस्य नाशोऽवर्जनीयः । अत एव 'जातस्य हि ध्रुवो मृत्यु'रिति भगवता गीतम् । अत एव परमात्मनोऽव्ययत्वं प्रत्यनादित्वं हेतुतयोपन्यस्तं भगवतैव गीतासु—'अनादित्वान्निर्गुणत्वात्परमात्मायमव्यय' इति । किं च यद्यविद्या अजा तर्हि तस्या जगन्नैवाभविष्यत् । अविद्या हि जगदात्मना जायते यथा बीजमङ्कुरात्मना । एवं जगदात्मना जायमानाया अविद्यायाः कथमजत्वम्- न चैव'मजा'मिति श्रुतिविरोधः,

तस्या दर्शितरीत्या अविद्यायाः परतो जन्माभावपरत्वादिति । नचैवं ब्रह्माप्यजं न स्यात्, ब्रह्मण एव जगद्रूपेण जातत्वादिति वाच्यं, 'न तस्य कार्यं करणं च विद्यत' इति श्रुत्या जगतो ब्रह्माकार्यत्वात् । नहि ब्रह्म वस्तुतः किञ्चित्प्रति कारणं कार्यं वा भवति, अद्वितीयत्वात् । मायया तु ब्रह्मणो जगत्कारणत्वव्यपदेशः, तस्मादेकमेव ब्रह्म अजं नित्यमव्ययं च- 'अजो नित्यश्शाश्वतोऽयं पुराण' इति श्रुतेः, स्मृतेश्च । तच्च प्रत्यगभिन्नं- भिन्नत्वे प्रतीचोऽपि मिथ्यात्वप्रसङ्गात् । ब्रह्मभिन्नं सर्वमपि नाजं, नच नित्यं, नाप्यव्ययमिति मिथ्यैव । अनुभवश्च ब्रह्मैवेति न तस्य जन्मादयो विकारास्सन्तीति । ननु यद्यनुभवस्य जन्मादिविकाराभावस्तर्हि ममायमनुभवो जातो नष्ट इत्यादिव्यवहारः कथं सिद्ध्येदितिचेदुपाधिवशादित्युक्तमेव । **ननूक्तमेव**-- परं तु तन्नोपपद्यते, तथाहि- किं जन्मादयोऽनुभूतिविकारा मिथ्याभूता उत परमार्थभूताः ? आद्ये- किमनुभूतेरेव ते विकारा मिथ्याभूता उत घटादेरपि ? आद्ये- घटादिविकाराणां परमार्थत्वं स्यात् । द्वितीये- जन्मादिविकारवत्त्वे विषये घटादितुल्यैव भवत्यनुभूतिः । यद्यनुभूतिविकाराः परमार्थभूतास्तर्हि परमार्थतो ब्रह्मणोऽद्वितीयत्वं न स्यात्- परमार्थभूतैस्तैर्ब्रह्मणस्सद्वितीयत्वादिति **चेन्मैवम्**—विकारमात्रस्य मिथ्यात्वादनुभूतिविकारा इव घटादिविकारा अपि मिथ्याभूता एव । परं तु अनुभूतिविकारा औपाधिका घटादिविकारास्तु स्वाभाविका इति तद्विशेषः । तेन न घटादितौल्यमनुभूतेः- औपाधिकजन्मादिविकारवती अनुभूतिः, स्वाभाविकजन्मादिविकारवान् घटादिरिति । मिथ्याभूतविशेषणं तु न देयं- विकारस्य मिथ्यात्वाव्यभिचारादिति । तस्माज्जन्मादिविकारविहीना नित्या स्वप्रकाशा एका च संविदिति—**सिद्धान्तः** ।

**ननु** नैका संवित् विभक्तत्वात् । नचाजत्वात्संवित्स्वस्मिन् विभागं न सहत इति वाच्यं, अजस्यैवात्मनो देहादिभ्यो विभक्तत्वात्- अनादेरप्यविद्याया अत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात् । स विभागो मिथ्याभूत इति चेत्- जन्मप्रतिबद्धः परमार्थविभागः किं क्वचिद्दृष्टस्त्वया, अविद्याया आत्मनः परमार्थतो विभागाभावे वस्तुतो ह्यविद्यैव स्यादात्मा —**इति रामानुजः** । **मैवम्**-- संविदविभक्ता अजत्वाद्व्यतिरेकेण घटादिवदिति प्रयोगे हेतुसाध्ययोर्व्याप्त्यभावो यस्त्वया दर्शितस्स नोपपद्यते- संविद एवात्मत्वेन तदविभक्तत्वस्यैव साध्यत्वात्- अविद्यायाश्चाजत्वाभावस्योक्तत्वात् । नच देहादिविलक्षणत्वादनुभूतिरूप आत्मा देहादिभ्यो विभक्त एवेति वाच्यं, 'अत्मन आकाशस्सम्भूत' इत्यादि श्रुत्या सर्वस्यात्मकार्यत्वेनात्माभिन्नत्वान्न हि मृदो भिद्यते घटः । एवमात्मशक्तित्वेनाविद्याप्यात्माभिन्नैव- वह्निशक्तिरिव वह्न्यभिन्ना । यदि तु कार्यस्य कारणाभिन्नत्वेपि कारणं कार्याद्भिन्नमेव शक्तेश्शक्तिमदभिन्नत्वेपि शक्तिमान् शक्तेर्भिन्न एवेत्युच्यते, तर्हि किं त्वं परमार्थतो देहादेरविद्यायाश्च भिन्न आत्मेति ब्रूषे, यद्वा व्यवहारतः ? नाद्यः- परमार्थतो देहादेरविद्यायाश्चाभावेन तत्प्रयुक्तविभागस्य दूरोत्सारितत्वात् । **एतेन** अविद्यायाश्चात्मनः परमार्थतो विभागाभावे वस्तुतोऽह्यविद्यैव स्यादात्मेति—**निरस्तम्** । वस्तुतोऽविद्याया एवाभावात् । द्वितीय इष्ट एव । नहि वयं यावद्व्यवहारं देहादेरविद्यायाश्चात्मनो वैलक्षण्यं निषेधामः-- किंतु- श्लो॥ 'नाहं देहो नेन्द्रियाण्यन्तरङ्गो नाहङ्कारः प्राणवर्गो न बुद्धिः । दारापत्यक्षेत्रवित्तादिदूर-

स्साक्षी नित्यः प्रत्यगात्मा शिवोहम् ॥, इति हि वदामः । तस्मादविभक्तैव संविदजत्वात्संविदतिरिक्त-विभक्ताजवस्त्वभावाच्च नानुमानस्य दुष्टत्वमिति । **ननु** निर्विकारत्वात्संविदस्स्वगतभेदो मास्तु, देहादेरविद्यायाश्च मिथ्यात्वाद्विजातीयभेदो मास्तु, सजातीयभेदस्तु विद्यते-- संविन्नानात्वात् । नच संविन्नानात्वमसिद्धमिति वाच्यं, अबाधितप्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोपि समर्थित एव छेद्यभेदाच्छेदनभेदवदिति **चेन्मैवम्**—प्रकाश्यघटपटादिभेदेपि यथा प्रकाशस्य न भेदः- तथा दृश्यघटपटादिभेदेपि न दर्शनभेदः । यद्वा घटादिविषयभेदात्तत्तदाकारवृत्तिज्ञानभेदोस्तुनाम- कथं पुनस्संविद्भेदः, नहि संवित्क्रिया छेदनवत्- नापि जन्या छेदनवत्, वृत्तिस्तु क्रियाजन्या चेति छेदनतुल्यैव । एतेनात्मनानात्वं प्रत्युक्तं संविद एवात्मत्वात्- इति । तस्मात्संविद औपाधिक एव भेदो यथा गगनस्येति । **ननु** घटकरकादिव्यतिरेकेण लब्धसद्भावस्य गगनस्य भेदो घटाद्युपाधिकृत इत्यस्तु- ज्ञेयज्ञातृव्यतिरेकेणालब्धसद्भावस्य ज्ञानस्य कथमौपाधिकभेदः, किंतु स्वाभाविकभेद एव- संयोगादिवदिति—**श्रुतप्रकाशिका । मैवम्**—सर्वस्यापि सत्ता अनुभवायत्तैवेति स्थिते कथमुच्यते अनुभवस्य सत्ताज्ञातृज्ञेयायत्तेति—**न** ह्यनुभवं विना किञ्चिद्वस्तु सत्तां प्रतिपद्यते । अन्यथा शशशृङ्गादिरपि सन् स्यात्, अन्धकारे सन्नपि हि घटोनुभवाभावे असन्नेव भवति- इति । **ननु** प्रातीतिकस्य रज्जुसर्पादेरज्ञातसत्ताऽयोगादस्तु नामानुभवाधीनसत्ता , अन्यस्य सत्ता तु नानुभवाधीना- प्रत्युत विषयाधीन एवानुभवः विषये घटादौ सत्येव चक्षुषस्तस्य च सन्निकर्षे सति घटप्रत्यक्षं जायत इति **मैवम्**—किं घटादौ विषये सत्येवेन्द्रियार्थसन्निकर्षात्प्रत्यक्षज्ञानमात्रं जायत इत्युच्यते, यद्वा प्रत्यक्षप्रमा ? नाद्यः- स्वप्ने घटाद्यभावेपीन्द्रियाभावेपि तत्सन्निकर्षाभावेपि घटादिप्रत्यक्षसम्भवात् । न द्वितीयः- अनधिगताबाधितार्थविषयज्ञानस्य प्रमात्वाद्ब्रह्मभिन्नस्य बाधितार्थत्वाच्च घटादिज्ञानस्याप्रमात्वात् । नच यावद्व्यवहारमबाधितत्वमबाधितपदेन विवक्षितमिति वाच्यं, स्वाप्निकपदार्थस्यापि यावद्व्यवहारमबाधितत्वात् । स्वप्नोपि हि व्यवहारः । नचास्थिरव्यवहारस्स्वप्न इति वाच्यं, व्यवहारगतस्थिरत्वास्थिरत्वभेदस्य तद्विषयाबाधित्वबाधितत्वाप्रयोजकत्वात् । किमु शतायुषः पुरुषस्येव दशायुषः पुरुषस्यापि व्यवहाराबाधितत्वं न सम्भवति- तस्माद्यथा स्वप्नदशायां विषयेन्द्रियाभावेन विषयेन्द्रियसन्निकर्षाभावेपि विषयप्रत्यक्षं जायते, तथा जागरेपीति सन्तोष्टव्यम् । नचैवं स्वप्नजागरयोरभेदस्स्यादिति वाच्यं, निद्रादोषसहकृतत्वासहकृतत्वाभ्यामविद्यायास्तद्भेदात् । तत्तज्जीवादृष्टादिसहकृतत्वं तु तुल्यमुभयत्रापि । अत एव निद्रादोषापगमे स्वप्नापगमः । जागरे च पित्रादिदर्शनजनकादृष्टापगमे पित्रादिदर्शनाभावः, नतु पित्रादेर्मृतत्वात् । न ह्यनुभवातिरेकेण पित्रादयस्सन्ति येन तेषां मृतिस्स्यात् । अनुभवसत्ताधीना विषयसत्तेति हि सिद्धान्तितम् । अत एव लोकेपि मृतस्य पित्रादेर्नष्ट इति व्यवहारः । नाश अदर्शनमिति हि धात्वर्थः । तस्मात्प्रतीतिरेव विषयः, नतु प्रतीत्यतिरिक्तः कश्चिद्विषयोस्ति, येन प्रतीतेर्विषयाधीनसत्ताकत्वमाशङ्क्येत । प्रतीतेरेव विषयत्वे चान्वयव्यतिरेकन्यायोस्ति- यदा प्रतीतिस्तदा विषयः यदा न प्रतीतिस्तदा न विषय इति यथा मृत्सत्त्वे घटसत्त्वं मृदभावे घटाभाव इति न्यायान्मृदतिरिक्तघटाभावस्तद्वत् । नच विषये सति

प्रतीतिरस्ति विषयाभावे प्रतीत्यभाव इति न्यायः किमिति न स्यादिति वाच्यं, स्वप्ने विषयाभावेपि प्रतीतिसत्त्वस्य सम्प्रतिपन्नत्वात् । नहि मृताः पित्रादयः स्वप्ने सन्ति, येन विषयसत्त्वाद्दर्शनसत्त्वमिति वक्तुं शक्येत । नच जागर इव स्वप्नेपीश्वरसृष्टा विषयास्सन्तीति वाच्यं, जागरेपीश्वरसृष्टविषयसत्त्वस्यास्माभिरनभ्युपेतत्वात् । येतु जागरे अनुभवव्यतिरेकेण पदार्थास्सन्तीश्वरसृष्टा इति वदन्ति तान्प्रति ब्रूहि— जागर इव स्वप्नेपीश्वरसृष्टविषयास्सन्तीति । तस्मादनुभवाधीनैव विषयसत्ता । यद्वा यज्जन्यज्ञानं तस्य सत्ता विषयाधीना भवतु नाम- कथं पुनरजन्यस्य नित्यज्ञानस्य सत्ता जन्यानित्यविषयाधीना भवितुमर्हति ? नचाजन्यं नित्यं ज्ञानं नास्तीति वाच्यं, त्वयैवोक्तत्वान्नित्यं ज्ञानद्रव्यमस्तीति । तस्य नित्यज्ञानस्यात्मत्वात्माश्रितत्वयोरेव ह्यावयोर्वैमत्यम् ।

**ननु** घटादेर्विषयस्य कथमेतन्नित्यज्ञानाधीनसत्ताकत्वमिति **चेदुच्यते**—नित्यज्ञानमेवाविद्यावशाज्जन्यज्ञानं भवति । जन्यज्ञानस्य च विषयसत्ताहेतुत्वं दर्शितमेवेति । यद्वा नित्यज्ञानमात्मेत्युक्तं, आत्मसत्तयैव सर्वस्य सत्तावत्त्वमिति कृत्वा तथोक्तमिति वेद्यम् । नचात्माधीना जगतस्सत्तेति कुत उच्यते· जगतोस्ति पृथक्स्वतन्त्रसत्तेति वाच्यं, अहमस्मीत्यात्मा प्रत्येतीत्यात्मनस्स्वतन्त्रसत्ता, इदमस्तीत्यात्मप्रत्ययादेव घटादेस्सत्तालाभः, नतु स्वतः- नहि अहं घटोस्मीत्यादिरूपेण घटादिः प्रत्येति जडत्वादिति घटादेस्सत्ता आत्मायत्तेति । नच घटोस्तीत्यात्मप्रत्ययात्प्रागपि घटोस्तीति वाच्यं, अस्तीति प्रत्ययाविषये घटे सत्ताऽयोगात् । अन्यथा शशशृङ्गादावपि सत्तासम्भवात् । नचाहमस्मीति प्रत्ययात्प्रागपि यथाऽऽत्मनि सत्ता वर्तते तथा घटेपीति वाच्यं, अहमस्मीति यः प्रत्येपि स प्रत्येता तत्प्रत्ययात्प्रागेव सिद्ध इति भवत्यात्मनि तथा । अयं घट इति प्रत्ययात्प्राक्तु घटो नैव सिद्ध इति न घटे तथेति । तस्मान्न विषयाधीना अनुभवसत्ता नापि ज्ञात्रधीना- ज्ञातुरेवानुभवत्वात् । यदि तु ज्ञाताऽत्रानुभवाद्भिन्नः प्रमातेति विवक्षितः, तर्हि सोपि प्रमाता अनुभवाधीनसत्ताक एव स्यात् । वस्तुतस्तु प्रमातुः स्वरूपभूत एवानुभव इति न प्रमाताऽनुभवाद्भिन्नः । नच साक्ष्यैवानुभव इति वाच्यं, साक्षिण एव केनचिदुपाधिना प्रमातृत्वस्य सम्प्राप्तत्वादिति—**संक्षेपः** ॥

## अनुभूतेर्दृश्यत्वानुपपत्तिः ।

अथ अनुभूतिर्न दृश्यधर्मवती दृशित्वात्- यद्दृश्यधर्मवत् तन्न दृशिः, यथा घट इतीदमनुमानं किं समीचीनमुतासमीचीनमित्ययमंश इह विचार्यते—तत्र द्वितीयपक्षं समर्थयते रामानुजः । **तथाहि**—स्वाभ्युपेतैः प्रमाणसिद्धैर्नित्यत्वस्वयम्प्रकाशत्वादिभिर्धर्मैरनुभूतिर्दृश्यधर्मवत्येव । नच नित्यत्वादयस्संवेदनमात्रं स्वरूपभेदात् , नहि नित्यत्वस्वयम्प्रकाशत्वैकत्वादीनामेकमेव संवेदनं स्वरूपमिति वक्तुं शक्यते-- **इति नैतद्युक्तम्**—यो धर्मो येन दृश्यते स तस्य धर्मो न भवत्येव- यथा चक्षुषा दृश्यमानं रूपं न चक्षुर्धर्मः, किं तु वह्न्यादेरेव । नहि चक्षुः परगतमिव स्वगतमपि धर्मजातं पश्यति । नच देवदत्तः स्वगतमपि शुक्लादिरूपं स्थौल्यादिधर्मजातं च पश्यतीति वाच्यं, तस्य देहधर्मत्वाद्देवदत्तस्य देहाद्भिन्नत्वात् । नच देवदत्त आत्मगतं सुखादिकं पश्यतीति वाच्यं, तस्य मनोधर्मत्वाद्देवदत्तस्य च मनोभिन्नत्वात् । एवं

स्वधर्मः स्वेन न वेद्यत इति स्थिते अनुभवधर्मत्वेन भवदभिमता नित्यत्वादयः केन वेद्यन्ते ? न ताव-त्स्वेनैवानुभवेन- व्याघातात् , नाप्यनेनानुभवेन- अनुभवस्यैकत्वात् । नाप्यनुभवादन्येन- तस्य जडत्वात् । नच जडेनापि चक्षुषा रूपं गृह्यत इति वाच्यं, चक्षुषः करणत्वेन कर्तृत्वाभावात् । नापि जडेन मनसा सुखादि गृह्यत इति वाच्यं, तस्याप्यन्तःकरणत्वेन कर्तृत्वाभावात् । नचानुभवादन्येनात्मना अजडेनैव वेद्यन्ते नित्य-त्वादय इति वाच्यं, आत्मनोऽनुभवादनन्यत्वात् । तस्माद्यदि नित्यत्वादयोऽनुभूतिधर्मास्स्युस्तर्हि वेद्या न भवन्त्येव--वेदितुरभावात् । यदित्ववेद्या अपि धर्मा इष्यन्ते तर्हि शशशृङ्गादयोपीष्यन्ताम् । अतो नास्त्य नुभूतेः कोपि धर्मः । येतु नित्यत्वादयो धर्मा अनुभवेन वेद्यन्ते ते तु नानुभूतिधर्माः, नापि मायातत्कार्यवस्तु-धर्माः, किंतु अनुभूतिधर्मत्वेन मायया कल्पिता एव नतु परमार्थतोनुभूतिधर्माः । नचैवं यदि परमार्थतोनुभू-तिर्नित्या स्वप्रकाशा एका च न भवति तर्हि अनित्या जडा विभक्ता च भवेदिति वाच्यं, परमार्थतो नित्यत्वा-दिवदनित्यत्वादेरप्यनुभूतौ स्थित्ययोगात । निर्धर्मका हि सा- तथाहि- यदि परमार्थतो भास्यं वस्तु स्यात्तर्ह्यनुभूतेर्भासकत्वं स्यात् , यदि च परमार्थतः कालत्रयं स्यात्तर्ह्यनुभूतेः कालत्रयाबाध्यत्वलक्षणं नित्यत्वं स्यात् , यदि परमार्थत एकत्वादिसंख्या स्यात्तर्ह्यनुभूतेरेकत्वं स्यात्- व्यवहारतस्तु भास्यादिसत्त्वात्स्वप्रका-शत्वादिकमनुभूतेर्भवति । अतो दर्शितानुमानं समीचीनमेव-- दृश्यस्य यस्य कस्यापि धर्मस्य दृशौ स्थित्ययोगादिति । **ननु** दृशौ दृशित्वमस्ति वा नवा ? आद्ये दृशेर्निर्धर्मकता । द्वितीये दृशित्वरहिता सा दृशिरेव न भवेत्-- नहि घटत्वरहितो घटो भवति । अन्यथा घटत्वरहितः पटोपि घटो भवेदिति-**चेन्मैवम्**---व्यवहारभूमौ धर्म इति धर्मीति च किं पदार्थद्वयमस्ति, उत न ? आद्ये- सिद्धमेव निर्धर्मकं वस्तु, धर्मे धर्मायोगात् । यदि धर्मेपि धर्मान्तरमस्ति तर्हि स धर्म्येव स्यान्न तु धर्म इति । यथैवं धर्मो धर्मत्वरूपधर्मरहितस्सिद्धस्तथा दृशिरपि दृशित्वरूपधर्मरहितैव सिद्धेति । द्वितीये अयं धर्मोयं धर्मीति व्यवहारस्यैव लोपप्रसङ्गः । तस्मान्निर्धर्मिकायां दृशौ यः कोपि धर्मः स्थातुं नार्हत्येव । ननु ज्ञाने प्रकाश इति कश्चन धर्मोस्ति- प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यं, व्यवहारकर्मत्वरूपं व्यवहारानुगुण्यं साधारणं । तद्धि व्यवहारप्रतिसंबन्धित्वम् । तदेव भासमानत्वं, घटः प्रकाशत इति व्यव-हारश्च तन्निबन्धनतया मुख्यः । व्यवहारप्रतिसम्बन्धित्वं प्रति हेतुत्वरूपव्यवहारानुगुण्यं ज्ञानस्यैव । तत्र प्रत्यक्त्वानुकूलत्वैकत्वलक्षणस्य स्वस्य व्यवहारप्रतिसम्बन्धितां प्रतिहेतुत्वरूपं व्यवहारानुगुण्यं ज्ञातृस्वरूप-भूतज्ञानस्यैव । स्वस्वरूपस्वगतैकत्वपराक्त्वानुकूलत्वाद्याकारस्वाश्रयतत्सम्बन्धस्वविषयतत्सम्बन्धानां व्यव-हारप्रतिसम्बन्धित्वे हेतुत्वरूपं । व्यवहारानुगुण्यं तु धर्मभूतज्ञानस्यैव । अतः स्वपरव्यवहारानुगुण्यं ज्ञाना-साधारणप्रकाशलक्षणमिति युक्तमिति- **मैवम्**---व्यवहारानुगुण्यं द्विविधम्- व्यवहारप्रतियोगित्वरूपमेकम्, व्यवहारप्रतियोगित्वं प्रति हेतुत्वरूपमपरम् । तत्र प्रथमं घटादिविषयगतं, द्वितीयं तु ज्ञानगतमिति स्थिते, कथं स्वपरव्यवहारानुगुण्यं ज्ञानासाधारणप्रकाशलक्षणं भवितुमर्हति ।

**ननु** यदि व्यवहारानुगुण्यं प्रकाशलक्षणं स्यात्तर्हि तस्यातिव्याप्तिस्स्याद्घटादौ, नतु तथोक्तम्-किंतु स्वपरव्यवहारानुगुण्यमित्युक्तम् । तच्च स्वस्य परस्य च व्यवहारप्रतियोगित्वरूपं यद्व्यवहारानुगुण्यं

तत्प्रतिहेतुत्वरूपमेवेति नातिव्याप्तिरिति **चेन्मैवम्**—स्वतो जडत्वाद्घटस्य घटो भातीति व्यवहार-प्रतिसम्बन्धित्वं न भवतीति कृत्वा ज्ञानस्य तद्धेतुत्वमस्तु- यथा स्वतोऽभासमानस्य घटस्य सूर्यप्रकाश-वशाद्घटो भासत इति व्यवहारप्रतियोगित्वं भवति तद्वत् । कथं पुनस्स्वत एव भासमानस्य ज्ञानस्य व्यवहारप्रतिसम्बन्धित्वं प्रति स्वस्यैव हेतुत्वम् । नच प्रदीप आत्मानमपि घटादिमिव भासयत्येव, यथा- तथा ज्ञानमपि परमिव स्वमपि भासयतीति वाच्यं, सूर्यो घटमवभासयतीत्युक्तौ घटमनवभासयत-स्सूर्यादवभासयतस्सूर्यस्य कश्चिद्विशेषोऽस्ति । अन्यथा तद्वचनस्यैवानुपपत्तिः । देवदत्तोऽर्थं बोधयतीत्युक्तौ हि अर्थमबोधयितुर्देवदत्तादर्थं बोधयितुर्देवदत्तस्य कश्चिद्विशेषोऽस्ति तद्वत् । एवंसति सूर्य आत्मान-मवभासयतीत्युक्तौ आत्मानमनवभासयतस्सूर्यादवभासयतस्सूर्यस्य कश्चिद्विशेषस्स्यात् । न चेष्टापत्तिः- य आत्मानमनवभासयन् सूर्यस्स कीदृशः- किं प्रकाशरूप, उताप्रकाशरूपः ? आद्ये- कथं प्रकाशरूपस्य सूर्यस्यानवभासनम् । द्वितीये- कथं सूर्यस्याप्रकाशरूपत्वम् । तस्मात्स्वस्य स्वावभासनं नोपपद्यते । एतेन अचित्पदार्थव्यवहारानुगुण्यहेतुत्वमेव ज्ञानस्यास्ति, नतु चित्पदार्थस्य- चित एव ज्ञानत्वादिति सिद्धम् । **ननु** तथापि अचित्पदार्थव्यवहारानुगुण्यहेतुत्वरूपप्रकाशवत्त्वाद्ज्ञानं सधर्मकमिति **चेन्मैवम्**—किं ज्ञानस्य सधर्मकतां व्यवहारदशायां सिषाधयिषसि ? यद्वा परमार्थदशायाम् ? आद्ये- सिद्धसाधनम् । द्वितीये अचित्पदार्थस्यैवाभावात्परमार्थदशायां कथं तद्व्यवहारानुगुण्यहेतुत्वं ज्ञानस्य । अथ यदुक्तं धर्मभूतज्ञानस्येदं स्वरूपभूतज्ञानस्य पुनरिदमिति तत्स्वकपोलकल्पितमप्रमाणमग्राह्यमिति पूर्वमेवोक्तम् । तस्मान्निर्धर्मिकैवानुभूतिः । **यदुक्तमत्र रामानुजेन**—संविदि जडत्वाभावाद्यदभावरूपस्य ज्ञानत्वादि-भावरूपस्य वा धर्मस्यानभ्युपगमे तत्तन्निषेधोक्त्या किमपि नोक्तं भवेदिति **तदसत्**—तत्तन्निषेधावधित्वेन ब्रह्मण उक्तत्वान्न शून्यवादप्रसङ्ग इति । न ह्यवधिं विना निषेधो युज्यते- यत्र मया सर्वे धर्मा निषिध्यन्ते तद्ध्यधिष्ठानं वस्तु निषेधाधिकरणत्वादेव सिद्धम् । नचैवं संविदि निषेधावधित्वनिषेधाधिकरणत्वधर्मौ स्त इति वाच्यं, परमार्थतस्संविदि यस्य कस्यापि निषेधस्याभावात् । नच तर्हि निषेधाभावात्सर्वमस्तीति वाच्यं, परमार्थतस्सर्वस्यैवाभावात्कथं तन्निषेध इति मयोक्तत्वात् । तस्मात्संविद्रूपे प्रत्यगभिन्ने ब्रह्मणि स्वयम्प्रकाशे एके नित्ये अद्वितीये यदिदं सर्वं मयावशात्प्रतिभाति मरुमरीचिकायामिवोदकं तत्सर्वं वस्तुतो नास्त्येवेति । **यदत्रोक्तं श्रुतप्रकाशिकायाम्**—संवित् सती नित्या स्वप्रकाशा एका इत्यादयश्शब्दाः किं भिन्नार्थप्रतिपादका उताभिन्नार्थप्रतिपादकाः ? आद्ये- सिद्धं संविदस्सविशेषत्वम् । द्वितीये- एकेनैव पदेनालमिति पदान्तरवैयर्थ्यमिति **तदयुक्तम्**—अभिन्नार्थप्रतिपादका एव, तथापि न पौनुरुक्त्यम्- 'विष्णुर्नारायणः कृष्ण' इत्यादिशब्दानामिव प्रवृत्तिनिमित्तभेदादिति । **ननु** सविशेषे वस्तुनि प्रवृत्तिनिमित्तभेदोऽस्तु कथं पुनर्विशेषे- इति **चेन्मैवम्**—निर्विशेषेपि वस्तुनि यावद्व्यवहारं कल्पिताः केचन नित्यत्वादयो विशेषास्सन्ति, तादृशनित्यत्वादिरूपप्रवृत्तिनिमित्तभेदाद्ब्रह्मणि नित्यादि-शब्दप्रवृत्तिरिति । **किंबहुना**—परमार्थतो नित्यादिशब्दानामेवाभावे कथं तत्प्रतिपाद्यत्वं ब्रह्मणः येन तथा तथा शङ्क्येतेति । **अथ यदुक्तं रामानुजेन**— संवित्सिद्ध्यति वा नवा? सिद्ध्यति चेत्सधर्मकता,

न चेद्गगनकुसुमादिवत्तुच्छतेति **तदसत्**— सिद्धेः किं सिद्धिरस्ति उत न? आद्ये- तस्या अपि सिद्धेः सिद्ध्यन्तरमित्यनवस्था । द्वितीये- सिद्धेस्तुच्छता इति । **नन्वनवस्था**भिया सिद्धेस्सिद्ध्यन्तरानभ्युपगमेपि संविदस्सिद्धिरभ्युपगतैव त्वया स्वतस्सिद्धा संविदिति ततश्च संविदस्सधर्मकतेति **मैवम्**—संविदः स्वतस्सिद्धत्वंनाम संविद एव सिद्धित्वेन सिद्ध्यन्तराभाव एव । सिद्धिर्हि प्रतीतिः प्रतीतिश्च ज्ञानमेवेति संविदेव सिद्धिरिति न तस्यास्सिद्ध्यन्तराभ्युपगम इति । **ननु** सिद्धिरेव संविदिति चेत् कस्य कं प्रतीति वक्तव्यं, यदि न कस्यचित्कञ्चित्प्रति सा तर्हि नसिद्धिः- सिद्धिर्हि पुत्रत्वमिव कस्यचित्कञ्चित्प्रति भवति । आत्मन इति चेत्कोयमात्मा, ननु संविदेवेत्युक्तं, सत्यमुक्तं दुरुक्तं तु तत्, तथाहि— कस्यचित्पुरुषस्य किञ्चिदर्थजातं प्रति सिद्धिरूपतया तत्सम्बन्धिनी सा संवित्स्वयं कथमिवात्मभावमनुभवेत्-- इति **रामानुजः, अत्रोच्यते**—नास्माभिः पशुपुत्रादिलक्षणफलप्राप्तिरूपा सिद्धिस्संविदात्मेत्युच्यते, नापि घटपटादिविषयज्ञानरूपा सिद्धिः, किं तर्हि नित्योपलब्धिरूपा सिद्धिरेव- सा हि न कस्यचित्कञ्चित्प्रति भवति- नित्यत्वादेवाजत्वात् । अत एव नेयमात्मसम्बन्धिनी । अजं नित्यं हि वस्तु न हि कस्यचित्सम्बन्धि भवति- स्वतन्त्रत्वात् । सर्वं हि कस्यचिच्छेषभूतं वस्तु परतन्त्रत्वेनानित्यमनजमेव । न च परमात्मशेषभूतोऽयमात्मा नित्य एवाज इति वाच्यं, परमात्मत्वादात्मनः- 'परमात्मेति चाप्युक्तो देहेस्मिन् पुरुषः पर' इति गीतावचनात् । नापि परमात्मपरतन्त्रा प्रकृतिर्नित्येति वाच्यं, प्रकृतेरनित्यत्वात् । ब्रह्मभिन्नं सर्वं ह्यनित्यम् । 'तत्सत्यमतोन्यदार्त'मिति श्रुतेः । तस्मात्सविषयैव सिद्धिरात्मसम्बन्धिनी, निर्विषया सिद्धिस्तु आत्मैव । न च निर्विषया सिद्धिर्नास्तीति वाच्यं, तत्सद्भावस्य पूर्वं बहुवारं समर्थितत्वादिति । **ननु** संविदात्मा न भवति, आत्मनः प्रत्यक्त्वात्- प्रत्यक्त्वं च ज्ञानाश्रयत्वं, तद्धि ज्ञानक्रियाकर्तृत्वं । संविदश्च ज्ञानत्वेन ज्ञानकर्मत्वमिव ज्ञानकर्तृत्वमपि दुर्घटम् । तस्मात्सकर्मकोऽनुभवितुरात्मनो धर्मविशेषः स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादानस्वभावोऽनुभवस्संविन्न त्वात्मेति **चेन्मैवम्**—आत्मनो ज्ञानधर्मकत्वमेव विप्रतिपन्नं, ज्ञानस्वरूपत्वं तु सम्प्रतिपन्नम् । तत्र आत्मनस्स्वरूपभूतं ज्ञानं क्रियैवेति कथमात्मनोपि प्रत्यक्त्वम् । नच क्रियाभूताद्‌ज्ञानादन्यदेव ज्ञानमात्मनस्स्वरूपभूतमिति वाच्यं, तदेवात्मस्वरूपज्ञानमस्माभिस्संविदित्युच्यत इति । यस्तु घटमहं जानामीति सकर्मकोऽनुभवस्स नात्मनो धर्मः, नाप्यात्मा- किंतु वृत्तिज्ञानाख्योन्तःकरणधर्म एव । नचानुभवश्चेतनधर्मः कथं जडधर्मो भवितु मर्हति, जडं ह्यन्तःकरणमिति वाच्यं, न ह्यन्तःकरणं घटवज्जडं, किंतु चैतन्यप्रतिफलनग्राह्येव, यथा दर्पणस्सूर्यप्रतिफलनग्राही तद्वत् । अतिस्वच्छद्रव्यं ह्यन्तःकरणं पञ्चभूतसत्त्वांशपञ्चकसमारब्धत्वात् । एवमात्मानुग्रहवशात्प्राप्तचैतन्यस्यान्तःकरणस्य धर्मस्त्वदुक्तोऽनुभवः । न च तत्र प्रमाणमस्तीति वाच्यं, 'कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे'ति श्रुतेरेवात्र मानत्वात् । **एतेन**— ज्ञानातिरिक्ताजडवृत्तिकल्पनमप्रमाणमिति श्रुतप्रकाशिका—**परस्ता** । कामादिरूपेण मनसः परिणामं हि श्रुतिरेवाब्रवीत् । तमेव धीरूपपरिणामं मनसो वृत्तिमिति वयं ब्रूम—**इति** । यदि तु तदेवान्तःकरणद्रव्यमस्माभि-

रात्माश्रितं ज्ञानद्रव्यमित्युच्यत इत्युच्यते, तर्हि सन्तोष एव । परं तु न तन्नित्यद्रव्यं तस्य जन्यत्वेनानित्यत्वात्- यज्जन्यं तद्ध्यनित्यम् । एतदन्तःकरणतादात्म्याध्यासादेवात्मनो ज्ञातृत्वं यत्त्वया दर्शितम्, यथा- सुखाद्याकारपरिणतान्तःकरणतादात्म्याध्यासादात्मनोऽहं सुखीत्यादिव्यवहारः, यथा वा दग्धृत्वाश्रयवह्नितादात्म्याध्यासादयसः अयो दहतीति व्यवहारस्तद्वत् । तस्मात्सकर्मकादन्तःकरणधर्माद्वृत्तिज्ञानादन्य एवानुभव आत्मस्वरूपभूतश्श्रुतिसिद्ध इति संविदेवात्मा—**इति । ननु** संविदस्थिरा आत्मा तु स्थिरः- सुखादीनामिव संविदोप्युत्पत्त्यादयः प्रत्यक्षमीक्ष्यन्त इति **चेन्मैवम्**—सुखादीनां जडत्वादस्तु सुखादिविषयकानुभवः । कथं पुनस्संविद्विषयकानुभवः- । यदि संविदोप्यनुभवोस्ति तर्हि संविदनुभवस्याप्यनुभवोस्त्येवेत्यनवस्था । यदि संविदनुभवस्य नास्त्यनुभवस्तर्हि संविदोप्यनुभवो नास्त्येव । मम ज्ञानं जातं नष्टमिति प्रतीतिस्तु ज्ञानविषयवस्तुजन्मनाशप्रयुक्तैव । किन्न ज्ञानं जातं नष्टमिति न कोपि प्रत्येति, किंतु अर्थज्ञानं जातमर्थज्ञानं नष्टमित्येव । एवं सति यदा अर्थो ज्ञाने विषयो भवति तदा अर्थज्ञानं जातमिति, यदा न भवति तदा नष्टमिति, भ्रान्त्या मन्यते पुरुषः । ज्ञानस्य विषयसम्बन्धविरहाभ्यां हि जन्मनाशव्यवहारः । ज्ञानं नित्यद्रव्यमिति वदता सुदर्शनाचार्येणाप्यभ्युपगत एवायमर्थः । तस्मान्न संविदो जन्मनाशौ स्त इति संवित्स्थिरैव, वृत्तिस्त्वस्थिरैव । तस्या वृत्तेर्नास्माभिरात्मत्वमुच्यत इति स्थिर आत्मैव संविदिति ।

**ननु** अनुभूतेरात्मत्वाभ्युपगमे तस्यानित्यत्वेपि प्रतिसन्धानाभावस्तदवस्थः । प्रतिसन्धानं हि पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति, नानुभूतिमात्रम्- अहमेवेदं पूर्वमप्यन्वभूवमिति भवतोप्यनुभूतेर्न ह्यनुभवितृत्वमिष्टमिति **मैवम्**—पूर्वकाले दृष्टस्यार्थस्य कालान्तरे पुनर्दर्शने सति अहमेवेदं पूर्वमन्वभूवमिति यः प्रतिसन्धत्ते- तस्य प्रमातुरात्मनः किं स्वरूपम् ? यदि ज्ञानं तर्हि कथं संविदः प्रतिसन्धानाभावस्तदवस्थः । यदि तु ज्ञानादन्यत्तर्हि श्रुतिविरोध, एवाभ्युपगमविरोधश्च । **यदुक्तं** अनुभूतेरनुभवितृत्वं भवतोपि नेष्टमिति **तदसत्**—अनुभवितुः स्वरूपमेवानुभव इति सिद्धान्तात्- अनुभवे साक्षिणि प्रतीचि अनुभवितृत्वस्य प्रमातृत्वरूपस्य मायया कल्पितत्वाच्चेति । यावद्व्यवहारमनुभूतेरनुभवितृत्वमस्माकमिष्टमेवेति । तस्मात्- 'स नित्योपलब्धिस्वरूपोहमात्मे'त्याचार्योक्तविधया नित्योपलब्धिरेवात्मा -**इति । ननु** न संविदात्मा किं त्वहमर्थ एव- अहमर्थश्च संविदो भिन्नः- अहं जानामीति प्रतीतेरिति **चेन्मैवम्**—अहंशब्दस्य मुख्यार्थो लक्ष्यार्थश्चेति द्वावर्थौ स्तः- तत्र प्रमाता मुख्यार्थः, साक्षी तु लक्ष्यार्थः । नच साक्ष्यसिद्धिः प्रमाणाभावादिति वाच्यं, साक्षाद्द्रष्टरि 'सञ्ज्ञायामिति पाणिन्यनुशासनात्साक्षिशब्द आत्मनि रूढः- 'साक्षी चे'तेति श्रुतिश्चात्र मानम् । तस्य च साक्षिणो ब्रह्माभेदश्श्रुत्या प्रतिपाद्यते- 'अहं ब्रह्मास्मी'ति । तस्मात्तत्राहंशब्दो लक्षणया साक्षिणं बोधयति । साक्षी च संविदेवेति कृत्वा अहंशब्दलक्ष्यार्थस्संविदेव । अहं जानामि पश्यामि शृणोमि सुखी दुःखी स्थूलः कृशो मनुष्यो ब्राह्मणो गृहस्थ इत्यादौ तु मनोबुद्धीन्द्रियदेहतादात्म्याध्यासविशिष्टं प्रमातारं बोधयति मुख्यवृत्त्याहं शब्द इति, तत्राहमर्थो न साक्षी किंतु प्रमातैव । नास्य संविद्भेदः प्रतिपाद्यते, विरो-

धात् । संविद्धि ब्रह्म-ब्रह्म चासंसारि- प्रमाता च संसारीति कथं संसार्यसंसारिणोरभेदः । अतएव तत्त्वमस्यादिषु भागत्यागलक्षणाऽऽश्रिता । यद्यपि प्रमातुरपि स्वरूपं संविदेव, तथापि विशेषणप्राधान्यादेवमुक्तमिति बोध्यम् । तस्मात् अहमर्थस्साक्षी संविदेव । अहमर्थः प्रमाता तु संविदि कल्पित इति तद्भिन्न एव । कल्पितमधिष्ठानादनतिरिक्तमिति न्यायाश्रयणे तु सोपि संविदभिन्न एव । तथाचाहमर्थस्यात्मनः प्रमातृत्वमाध्यासिकं, संविद्रूपत्वं तु स्वाभाविकमिति—**सिद्धम्** । **एनेन** युष्मदस्मत्प्रत्ययगोचरयोरिति श्रीशङ्कराचार्यैरेवाहमर्थस्यात्मत्वमुक्तमिति कृत्वा कथमहमर्थस्यानात्मत्वमिति श्रुतप्रकाशिकाशङ्का—**परास्ता** । अहंशब्दलक्ष्यत्वमेवात्मनो नाहंशब्दवाच्यत्वमित्युक्तत्वात्—**इति** । **ननु** अहं जानामीत्यादौ अहमर्थत्वेन भवदभिमतः प्रमाता किमात्मा उत न ? आद्ये - कथं तस्य संविदभेदः, द्वितीये- अनात्मनः प्रमातुस्तस्य कथं प्रत्यक्त्वम्-- प्रत्यक्त्वं हि स्वस्मै भासमानत्वम्—**इति, मैवम्**—अहं मनुष्योहं गच्छामीत्यादौ योहमर्थस्स किमात्मा उत न ? आद्ये कथं शिरःपाण्याद्यवयववतो मनुष्यदेहस्यात्मत्वम्-- आत्मा हि निरवयवो ज्ञानस्वरूप इति सम्प्रतिपन्नम् । द्वितीये-- अनात्मनस्तस्य कथमहमर्थत्वमात्मा ह्यहमर्थः । यदि तु मनुष्योहमित्यादिप्रतीतिरञ्जनाश्रया, अविवेकमूला चेति मतं तर्हि अहं जानामीतिप्रतीतिरपि तथैवास्तु । यदि तु मनुष्याद्भिन्न एवात्मा तत्राहमर्थस्तर्हीहापि प्रमातुर्भिन्न एवात्माहमर्थ इत्यभ्युपगच्छ । **अथ यदुक्तं**—प्रत्यक्त्वं स्वस्मै प्रकाशमानत्वं, पराक्त्वं परस्मै प्रकाशमानत्वं । तत्रात्मधर्मः प्रत्यक्त्वमनात्मदीपादिधर्मः पराक्त्वमिति **तद्विचार्यते**—स्वस्मै इति परस्मै इति च तादर्थ्ये चतुर्थी । स्वार्थं भासते प्रत्यगात्मा, परार्थं भासते प्रदीपः-- दीपो हि घटादिकं पुरुषाय बोधयति न तु स्वस्मै इति दीपस्य पराग्धामत्वम् । आत्मा तु घटादिकं स्वस्मै बोधयतीति प्रत्यग्धामा । अतएव 'प्रत्यग्धामा स्वयंज्योति'रिति भागवतम् इति—**विशिष्टाद्वैतिनां प्रघोषः, नैष युक्तः**—किमयं शिष्येभ्यः किमपि मतमुपदिशन् गुरू रामानुजः प्रत्यग्धामा किं वा पराग्धामा ? आद्ये- कथं परेभ्यश्शिष्येभ्यो मतबोधकत्वं तस्य । द्वितीये- कथं तस्यात्मत्वमात्मा हि प्रत्यग्धामा । नच गुरुशिष्यश्चैक एवात्मेति वाच्यं, आत्मभेदात्तव मते । नचात्मभ्यो घटादेर्बोधकत्वं प्रत्यक्त्वमिति वाच्यं, दीपादेरपि तर्हि प्रत्यक्त्वात्- तेपि हि आत्मभ्य एव घटादिकं बोधयन्ति । **ननु** यो घटादिकमर्थं स्वयं बुध्वा परस्मै बोधयति स प्रत्यग्धामेति चेन्नैतदप्युपपद्यते—यो घटादिकमर्थं स्वयं बुद्ध्यते नतु परस्मै बोधयति, तस्यात्मनः प्रत्यक्त्वाभावप्रसङ्गात् । किं च आत्मा स्वस्मै घटादिकं बोधयतीत्युक्तौ एकस्यैवात्मनो गुरुशिष्यभावः प्राप्तस्स न युक्तः- तस्य द्विनिष्ठत्वात् , बोधककाले बोध्याभावाद्बोध्यकाले बोधकाभावाच्च । अपि च स्वस्मै घटादिकं बोधयन्नयमात्मा किं बोधनात्प्राग्घटादिकं वेद उत न वेद ? अद्ये- व्यर्थं पुनर्बोधनम् । द्वितीये बोधनस्यैवासम्भवः । तस्मादात्मा घटादिकमवभासयतीत्येतावदेव वक्तव्यं, नतु स्वस्मा अवभासयतीति । नच दीपादावतिव्याप्तिः, दीपादेर्घटाद्यावरकतमोनिवारकत्वरूपमेवावभासकत्वं, नतु घटादेस्स्फूर्तिप्रदत्वरूपमवभासकत्वमिति । स्फूर्तिप्रदत्वं च घटादेः स्फुरतीतिप्रतीति विषयत्वजनकत्वम् । **अयं भावः**—जडस्य मिथ्याभूतस्य च

घटस्य स्वतः स्फूर्तिसत्तयोरभावादात्मचैतन्यांशयोस्स्फूर्तिसत्तयोरनुगमादेव सन् घटः, स्फुरति घट इति-व्यवहारः । तथाच घटादेरनात्मनस्सत्तास्फूर्तिप्रदे आत्मनि यः स्फूर्तिप्रदत्वरूपोंशस्स उच्यते घटाद्यव-भासकत्व--**मिति** । नन्विदमवभासकत्वं स्वप्रकाशत्वमेव, न तु प्रत्यक्त्वमिति चेत्केनोक्तमिदं प्रत्यक्त्वमिति ; प्रत्यक्त्वंनाम सर्वान्तरत्वम्-- प्रति सर्वं देहेन्द्रियादिकमञ्चति- व्याप्नोतीति प्रत्यक्पद-निरुक्तेः । सर्वव्यापकत्वं च सर्वान्तरत्वमेवेति- आत्मा हि सर्वान्तरः । नचात्मनोप्यन्तरः परमात्माऽन्त-र्याम्यस्तीति वाच्यं, प्रत्यगात्मन एव परमात्मत्वेनान्तर्यामित्वादिति । **नन्वस्त्विदं** प्रत्यक्त्वमात्मनः तथापि स्वस्मै भासभानत्वरूपं प्रत्यक्त्वमप्यस्त्येव- स्वार्थं ह्यात्मा भासते घटादिकं तु परमार्थमेव- नहि घटेन घटस्य कोप्यर्थ इति **चेन्मैवम्**—आत्मा केवलं भासते न तु स्वार्थं भासते नापि परार्थम् । नहि स्वभानेन सम्पादनीयः कश्चिदर्थोऽस्त्यात्मनः, नाप्यात्मभानेन परस्य कोप्यर्थः- आत्मभिन्नस्य सर्वस्य जडत्वेनार्थवत्त्वाभावात् । नचैवमात्मभानस्य व्यर्थत्वे तदर्थं वेदान्तविचारो व्यर्थ इति वाच्यं, वेदान्त-विचारात्प्रागेवात्मनो भासमानत्वात् । नह्यात्मा कदाचिद्भाति कदाचिन्नेति वक्तुं शक्यते- निर्विकारत्वा-दात्मनः, भानरूपत्वाच्च । वेदान्तविचारस्तु भासमाने प्यात्मनि यः प्रतिभासते मनुष्योहमित्याद्यनात्म-तादात्म्यभ्रमस्तस्यापनयनायैव, नत्वपूर्वात्मभानजननार्थम्-- नित्यत्वादात्मभानस्य । तस्मात्केवलभारूप-स्सर्वान्तरः प्रत्यगात्मेति—**संक्षेपः** ।

**ननु** संविन्नात्मा संविदि पुरुषस्याहंबुद्ध्यभावात् । यत्र पुरुषस्याहंबुद्धिर्वर्तते स प्रत्यगात्माऽ-हमर्थः, यत्र तु नाहंबुद्धिस्स परागनात्मा घटवदिति कृत्वा संविदनात्मैवेति, **मैवम्**—यत्र पुरुषस्याहं-बुद्धिस्स प्रत्यगात्मेति नियन्तुं न शक्यते । मनुष्योहं स्थूलोहं काणोहमिति देहेन्द्रियादिष्वपि पुरुषस्याहंबुद्धिदर्शनेन तेषामपि प्रत्यगात्मत्वापत्तेः । नच विदुषो यत्राहंबुद्धिस्स प्रत्यगात्मेत्युच्यत इति वाच्यं, देहाद्यात्मत्ववादिनामपि बौद्धादीनां विद्वत्त्वात् । नच वेदान्तशास्त्रविदां यत्राहंबुद्धिस्स प्रत्यगात्मेति वाच्यं, वेदान्तशास्त्रसम्प्रदायार्थविदां संविद्येवाहंबुद्धिसत्त्वात् । न चास्माकं नास्तीति वाच्यं, युष्माकं सत्सम्प्रदायसिद्धवेदान्तार्थबोधविधुरत्वात् । नच वेदान्तशास्त्रे संविदात्मेति क्वापि नास्तीति वाच्यं, 'सत्यं ज्ञानमनन्तं ब्रह्म', 'मनोमयोयं भारूपः', 'तेजोमयोऽमृतमय' इत्यादिश्रुति-सत्त्वात् । नच तत्र तेज आदिशब्दा द्युतिवाचका इति वाच्यं, 'अशब्दमस्पर्शमरूपमव्यय'मिति श्रुते-रात्मनो वह्निधर्मद्युत्ययोगात् । पृथिव्यप्तेजोव्यतिरिक्तानां वाय्वाकाशादीनां हि नास्ति रूपम् । तस्मा-त्संविदेवात्मा । यदुक्तं परागर्थात्प्रत्यगर्थो हि भिद्यत इति तदिष्टमेव । परं तु अहं जानामि गच्छामि शोचामि पश्यामि शृणोमीत्यादिषु योहमर्थस्स परागर्थ एव । प्रत्यगात्मनो ज्ञातृत्वगन्तृत्वाद्यभावात् । ते हि ज्ञानगमनादयः क्रिया अनात्मन इन्द्रियादिधर्माः । निर्धर्मकपरमानन्दबोधरूपो ह्यात्मा प्रत्यगर्थः, तदतिरिक्तास्सर्वेपि परागर्था एव । नहि घटपटादय एव परागर्थाः, देहेन्द्रियान्तःकरणानि तु न परागर्था इति वक्तुं शक्यते- येन गमनादिक्रियाश्रयो देहादिः प्रत्यगर्थ इत्युच्येत । नच देहादिविलक्षण एव प्रत्यगात्मेति वाच्यं, तथासति गमनादिक्रियाश्रयत्वमिव ज्ञानक्रियाश्रयत्वमपि प्रत्यगात्मनो नास्त्येव ।

घटस्य स्वतः स्फूर्तिसत्तयोरभावादात्मचैतन्यांशयोस्स्फूर्तिसत्तयोरनुगमादेव सन् घटः, स्फुरति घट इति-व्यवहारः। तथाच घटादेरनात्मनस्सत्तास्फूर्तिप्रदे आत्मनि यः स्फूर्तिप्रदत्वरूपोंशस्स उच्यते घटावभासकत्व--**मिति**। नन्विदमवभासकत्वं स्वप्रकाशत्वमेव, न तु प्रत्यक्त्वमिति चेत्केनोक्तमिदं प्रत्यक्त्वमिति; प्रत्यक्त्वंनाम सर्वान्तरत्वम्-- प्रति सर्वं देहेन्द्रियादिकमञ्चति- व्याप्नोतीति प्रत्यक्पद-निरुक्तेः। सर्वव्यापकत्वं च सर्वान्तरत्वमेवेति- आत्मा हि सर्वान्तरः। नचात्मनोप्यन्तरः परमात्माऽन्तर्याम्यस्तीति वाच्यं, प्रत्यगात्मन एव परमात्मत्वेनान्तर्यामित्वादिति। **नन्वस्त्विदं** प्रत्यक्त्वमात्मनः तथापि स्वस्मै भासमानत्वरूपं प्रत्यक्त्वमप्यस्त्येव- स्वार्थं ह्यात्मा भासते घटादिकं तु परमार्थमेव- नहि घटेन घटस्य कोप्यर्थ इति **चेन्मैवम्**—आत्मा केवलं भासते न तु स्वार्थं भासते नापि परार्थम्। नहि स्वभानेन सम्पादनीयः कश्चिदर्थोस्त्यात्मनः, नाप्यात्मभानेन परस्य कोप्यर्थः- आत्मभिन्नस्य सर्वस्य जडत्वेनार्थवत्त्वाभावात्। नचैवमात्मभानस्य व्यर्थत्वे तदर्थं वेदान्तविचारो व्यर्थ इति वाच्यं, वेदान्त-विचारात्प्रागेवात्मनो भासमानत्वात्। नह्यात्मा कदाचिद्भाति कदाचिन्नेति वक्तुं शक्यते- निर्विकारत्वा-दात्मनः, भानरूपत्वाच्च। वेदान्तविचारस्तु भासमाने प्यात्मनि यः प्रतिभासते मनुष्योहमित्याद्यनात्म-तादात्म्यभ्रमस्तस्यापनयनायैव, नत्वपूर्वात्मभानजननार्थम्-- नित्यत्वादात्मभानस्य। तस्मात्केवलभारूप-स्सर्वान्तरः प्रत्यगात्मेति—**संक्षेपः**।

**ननु** संविन्नात्मा संविदि पुरुषस्याहंबुद्ध्यभावात्। यत्र पुरुषस्याहंबुद्धिर्वर्तते स प्रत्यगात्माऽहमर्थः, यत्र तु नाहंबुद्धिस्स परागनात्मा घटवदिति कृत्वा संविदनात्मैवेति, **मैवम्**—यत्र पुरुषस्याहं-बुद्धिस्स प्रत्यगात्मेति नियन्तुं न शक्यते। मनुष्योहं स्थूलोहं काणोहमिति देहेन्द्रियादिष्वपि पुरुषस्याहंबुद्धिदर्शनेन तेषामपि प्रत्यगात्मत्वापत्तेः। नच विदुषो यत्राहंबुद्धिस्स प्रत्यगात्मेत्युच्यत इति वाच्यं, देहाद्यात्मत्ववादिनामपि बौद्धादीनां विद्वत्त्वात्। नच वेदान्तशास्त्रविदां यत्राहंबुद्धिस्स प्रत्यगात्मेति वाच्यं, वेदान्तशास्त्रसम्प्रदायार्थविदां संविद्येवाहंबुद्धिसत्त्वात्। न चास्माकं नास्तीति वाच्यं, युष्माकं सत्सम्प्रदायसिद्धवेदान्तार्थबोधविधुरत्वात्। नच वेदान्तशास्त्रे संविदात्मेति क्वापि नास्तीति वाच्यं, 'सत्यं ज्ञानमनन्तं ब्रह्म', 'मनोमयोयं भारूपः', 'तेजोमयोऽमृतमय' इत्यादिश्रुति-सत्त्वात्। नच तत्र तेज आदिशब्दा द्युतिवाचका इति वाच्यं, 'अशब्दमस्पर्शमरूपमव्यय'मिति श्रुते-रात्मनो वह्निधर्मद्युत्ययोगात्। पृथिव्यप्तेजोव्यतिरिक्तानां वाय्वाकाशादीनां हि नास्ति रूपम्। तस्मा-त्संविदेवात्मा। यदुक्तं परागर्थात्प्रत्यगर्थो हि भिद्यत इति तदिष्टमेव। परं तु अहं जानामि गच्छामि शोचामि पश्यामि शृणोमीत्यादिषु योहमर्थस्स परागर्थ एव। प्रत्यगात्मनो ज्ञातृत्वगन्तृत्वाद्यभावात्। ते हि ज्ञानगमनादयः क्रिया अनात्मन इन्द्रियादिधर्माः। निर्धर्मकपरमानन्दबोधरूपो ह्यात्मा प्रत्यगर्थः, तदतिरिक्तास्सर्वेपि परागर्था एव। नहि घटपटादय एव परागर्थाः, देहेन्द्रियान्तःकरणानि तु न परागर्था इति वक्तुं शक्यते- येन गमनादिक्रियाश्रयो देहादिः प्रत्यगर्थ इत्युच्येत। नच देहादिविलक्षण एव प्रत्यगात्मेति वाच्यं, तथासति गमनादिक्रियाश्रयत्वमिव ज्ञानक्रियाश्रयत्वमपि प्रत्यगात्मनो नास्त्येव।

तस्मादहमर्थः प्रत्यगात्मा संविद्रूप एव । तस्य ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं त्वन्तःकरणतादात्म्याध्यास-प्रयुक्तमेव । नैतावता ज्ञाता नाहमर्थ इति वयं ब्रूमः- किंतु अहमर्थो ज्ञाता न प्रत्यगात्मेति ब्रूमः- प्रत्यगात्मनः कूटस्थत्वेन ज्ञातृत्वादिविकारायोगात् । अहंशब्दश्च रूढ्या ज्ञातार्थं लक्षणया प्रत्यगात्मानं च वक्तीति प्रागेव प्रतिपादित—**मित्यलम्** ॥

## आत्मनो ज्ञप्तिरूपत्वे श्रुत्याद्युपपत्तिः ।

**यदुक्तं**-श्रुतिस्मृतिसूत्राण्यात्मानं ज्ञातारं वदन्तीत्यात्मा ज्ञातैव, नतु ज्ञप्तिमात्रमिति **तदयुक्तम्**— किं तानि व्यवहारदशायामात्मानं ज्ञातारं वदन्ति, यद्वा परमार्थदशायाम्? आद्य- इष्ट एव । याव-द्व्यवहारमन्तःकरणावच्छिन्नचैतन्यलक्षणः प्रमातैवात्मेति । न द्वितीयः- तदा ज्ञेयस्यैवाभावेन कथमात्मनो ज्ञातृत्वम् । नच तदापि द्वैतमस्तीति वाच्यं, अद्वैतप्रतिपादकश्रुत्यादिविरोधात् । नच द्वैतप्रतिपादक-श्रुत्यादिविरोधस्तवापीति वाच्यं, व्यवहारदशाविषयत्वात्तेषाम् । तस्माद्ज्ञप्तिमात्रमेव प्रत्यगात्मा 'विज्ञानमानन्दं ब्रह्मे'त्यादिश्रुतिभ्यः । नच ब्रह्मैव ज्ञप्तिमात्रं नात्मेति वाच्यं, ब्रह्मण एवात्मत्वादिति । **यदप्युक्तं रामानुजेन**—अहंप्रत्ययसिद्धोह्यस्मदर्थः, युष्मत्प्रत्ययविषयो युष्मदर्थः । तत्राहं जानामीति सिद्धो ज्ञाता युष्मदर्थ इति वचनं जननी मे वन्ध्येतिवद्व्याहतार्थं चेति **तदप्यसत्**—युष्मदस्मत्प्रत्यय-गोचरयोरिति शाङ्करभाष्यगतयुष्मच्छब्द इदंशब्दार्थबोधकः । तथा च अहं प्रत्ययगोचरोस्मदर्थः, इदं प्रत्ययगोचरो युष्मदर्थः, अहंबुद्धिविषयाद्वस्तुन इदंबुद्धिविषयो वस्तु भिन्नमेव । एतावदज्ञोपि वेदैव- किंतु अहंबुद्धिविषयः क इदंबुद्धिविषयः पुनः क इत्यत्र तु विप्रतिपद्यन्ते- तथा हि किं देह इदंबुद्धि-विषय उताहंबुद्धिविषयः? नाद्यः- स्थूलोहमिति प्रतीत्ययोगात् । नान्त्यः- ममायं देहस्स्थूल इति प्रतीत्ययोगात् । नापि बुद्धिद्वयविषयः- बुद्धिद्वयस्य परस्परं भिन्नत्वेन एकस्यैव वस्तुनस्तदुभयविषयत्वाऽयोगात् । एवं च देहेऽन्यतरबुद्धिविषयत्वमेव निश्चेतव्यम् । एवंसति श्रुतियुक्त्यनुभूतिभ्यो देह इदंबुद्धिविषय एवेति निश्चीयते । तत्र स्थूलोहमित्यादिप्रतीतिस्तु भ्रान्तिरेवेति सिद्धम् । तथा इन्द्रियप्राणमनोबुद्धय इदंप्रत्ययविषया एव । काणोहं पश्याम्यहमित्यादिप्रतीतयस्तु भ्रान्तिभूता एवेति सिद्धम् । एवं सिद्धे कृशोहं गच्छाम्यहं पश्याम्यहमित्यादिषु अहंप्रत्ययसिद्धः कृशो गन्ता द्रष्टा च पदार्थः किमस्मच्छब्दार्थ उत युष्मच्छब्दार्थः? आद्ये- तव देहाद्यात्मवादिबौद्धत्वापत्तिः, द्वितीये- जननी मे वन्ध्येतिवत्तवापि वचनं व्याहतमेव । तस्मात् लोको रज्जुं सर्पमिव, सर्पं रज्जुमिव च अस्मदर्थं युष्मत्प्रत्ययविषयत्वेन, युष्मदर्थं चास्मत्प्रत्ययविषयत्वेन भ्रान्त्या गृह्णातीति कृत्वा न तद्भ्रान्तिज्ञानमिहोपा-देयम् । न चाहं कृश इतिवदहं ज्ञातेति न भ्रान्तिरिति वाच्यं, यथा देहतादात्म्याध्यासादात्मनः कृशत्वं तथाऽन्तःकरणतादात्म्याध्यासात् ज्ञातृत्वमपीत्यविशेषात् । न च श्रुत्यादिसिद्धमात्मनो ज्ञातृत्वं प्रमाणभूतमिति वाच्यं, व्यावहारिकज्ञातृत्वमनुवदन्ति श्रुत्यादय आत्मन इति । कथमन्यथा ज्ञानमेवा-त्मस्वरूपमिपि ते ब्रूयुः । युष्माभिश्चाभ्युपेतो हि सोंशः । तस्मादहं कृश इत्यत्रैव अहं जानामीत्य-त्राप्यहंशब्दार्थो युष्मदर्थ एव । युष्मदर्थस्याप्यहंप्रत्ययविषयत्वं तु भ्रान्तिप्रयुक्तम् । यथा रज्जोरपि

सर्वप्रत्ययविषयत्वमिति—**संक्षेपः** । **यदुक्तं** रामानुजेनाहमर्थस्य ज्ञातुरात्मनश्चैतन्यस्वभावता हि स्वयंप्रकाशत्वमिति, यच्चोक्तं सुदर्शनेन चेतना ज्ञानं तद्भावश्चैतन्यं ज्ञानत्वं तत्स्वभावस्तद्गुणक आत्मेति तदुभय**मयुक्तम्**—घटस्य घटत्वमिव ज्ञानस्य ज्ञानत्वं गुण इति कृत्वा ज्ञानत्वगुणक आत्मा ज्ञानमेव स्यादिति कथं स्वेष्टज्ञात्राऽऽत्मसिद्धिः । यदि तु सुदर्शनं दुर्दर्शनं कृत्वा रामानुजभाष्यगतचैतन्यस्वभावतापदस्य ज्ञानगुणकत्वमित्यर्थ उपवर्ण्यते तर्हि चैतन्यस्वभावस्य आत्मा किंरूपः, न चैतन्यरूपः—चैतन्यस्यात्मस्वभावत्वेनात्मस्वरूपत्वाभावात् । न जडरूपः घटादितौल्यापत्तेः, श्रुत्यादिविरोधाच्च । न चात्मनश्चैतन्यं स्वरूपं स्वभावश्चेति वाच्यं, एकस्यैव चैतन्यस्य स्वरूपत्वस्वभावत्वयोरयोगात् । न चात्मनस्स्वरूपभूताच्चैतन्यात्स्वभावभूतं चैतन्यं भिन्नमेवेति वाच्यं, चैतन्यद्वयकल्पनस्य व्यर्थत्वादप्रमाणत्वाद्गौरवावहत्वाच्च । किमेकेन चैतन्येन सर्वार्थनिर्वहणं न भवति, येन चैतन्यान्तरं कल्प्येत । किंच किमात्मनस्स्वरूपभूतं चैतन्यं स्वयम्प्रकाशं, यद्वा स्वभावभूतम्? आद्ये- अस्वयम्प्रकाशज्ञानस्वभाव एवात्मेति प्राप्तं- तदनिष्टम् । द्वितीये- स्वभावभूतज्ञानस्य ज्ञानस्वभावत्वरूपं स्वयम्प्रकाशत्वं कथम् । नहि स्वभावभूते ज्ञाने स्वभावभूतं ज्ञानान्तरमस्ति- अन्यथा अनवस्थादोषात् । आत्मनस्स्वरूपभूतस्यापि चैतन्यस्य स्वयम्प्रकाशत्वं न चैतन्यस्वभावत्वरूपं त्वदुक्तम्-- चैतन्ये चैतन्यायोगात् । नच ज्ञाने ज्ञानत्वं वर्तते, तदेव स्वयम्प्रकाशत्वमिति वाच्यं, स्वयम्प्रकाशं ज्ञानमित्युक्तं- तत्र ज्ञानं विशेष्यं स्वयम्प्रकाशं विशेषणमिति कृत्वा कथं स्वयम्प्रकाशत्वं ज्ञानत्वं भवेत् । नहि नीलमुत्पलमिति स्थिते उत्पलत्वमेव नीलत्वं भवेत् ।

**ननु** नीलोत्पलातिरिक्तनीलरत्नादिपदार्थान्तरसत्त्वात्तत्र नीलत्वमुत्पलत्वं माभून्नाम- प्रकृते तु स्वयंप्रकाशज्ञानातिरिक्तस्वयंप्रकाशपदार्थान्तराभावात्स्वयंप्रकाशत्वं ज्ञानत्वं भवत्येवेति चेद्भन्त! तर्हि ज्ञानातिरिक्तस्य ज्ञातुरात्मनस्स्वयम्प्रकाशत्वं पराहतमेव । यदि तु ज्ञाने ज्ञानत्वं स्वयम्प्रकाशत्वं, ज्ञातरि तु ज्ञातृत्वं ज्ञानगुणकत्वरूपमिति भेदः कल्प्यते, तर्हि ज्ञाने ज्ञातरि च स्वयंप्रकाशे अनुगतं स्वयम्प्रकाशत्वं ब्रूहि ! नह्यननुगम इष्टः । नच तव मतेपि यथा दीपसंविदोः स्वयम्प्रकाशत्वाननुगमः, तथा मन्मतेपि दीपसंविद्ज्ञातॄणामिति वाच्यं, मन्मते संविदन्यस्य स्वयम्प्रकाशवस्तुनोऽनभ्युपगमात् । 'तमेवभान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभा'तीति श्रुतेः । नच तस्य भासेति संविदात्मनोर्भेद इति वाच्यं, राहोश्शिर इतिवदौपचारिकत्वात्तस्य । **ननु** यद्येवं संविदेकैव स्वयम्प्रकाशा तर्हि दीपादेः स्वयम्प्रकाशत्वप्रथा कुत इति **चेदुच्यते**—यथा घटं द्रष्टुं पुरुषो दीपमपेक्षते- तथा दीपं द्रष्टुं पुरुषो न दीपान्तरमपेक्षत इति दीपस्य स्वयम्प्रकाशत्वमिति । अथ कथं दीपस्य स्वयम्प्रकाशत्वाभाव इति, उच्यते—घटं द्रष्टुं दीपस्येव दीपं द्रष्टुमपि चक्षुषोस्त्यपेक्षेति । **एतेन** यं द्रष्टुमन्यापेक्षा नास्ति स स्वयम्प्रकाश इति—**सिद्धम्** । तथा च अनन्याधीनप्रकाशत्वं स्वयम्प्रकाशत्वमिति फलितम् । इदमेव मया प्रागप्युक्तम्-- अनन्यावभास्यत्वं स्वयम्प्रकाशत्वमिति । नचैवमात्मानं द्रष्टुमपि मनसश्शास्त्रस्य चापेक्षास्तीति कथमात्मा स्वयम्प्रकाश इति वाच्यं, य आत्मानं मनसा शास्त्रेण वा दिदृक्षति, तस्यात्मनः करणव्यापारात्पूर्वमेव

सिद्धत्वेनानन्यापेक्षत्वादात्मदर्शनस्य । तथा ज्ञेयं द्रष्टुं करणापेक्षास्ति न तु ज्ञानमिति ज्ञानं स्वप्रकाशमेव तदेवात्मा **चेति** । नच ज्ञातैवात्मा न ज्ञानमिति वाच्यं, ज्ञातुः स्वरूपमेव ज्ञानमित्यसकृदुक्तत्वात् । तस्मादात्मस्वरूपभूता संविदेकैव स्वयम्प्रकाशा इति । **ननु** अनन्याधीनप्रकाशत्वं कथं संविदः ? संविदेव हि प्रकाश इति **चेदुच्यते**—संविदः स्वरूपभूतः प्रकाशोऽनन्याधीन इति कृत्वा संविदोऽनन्याधीनप्रकाशत्वमिति । नचात्मनस्स्वरूपभूतायास्संविदः कथं स्वरूपभूतः प्रकाशस्स्यादिति वाच्यं, काऽन्नानुपपत्तिः- आत्मसंवित्प्रकाशशब्दानामनतिरिक्तार्थत्वात् । स्वरूपं हि स्वम् । तस्मादनन्याधीनप्रकाश आत्मैव संवित् । दीपादीनां तु अनन्याधीनप्रकाशत्वमापेक्षिकं, यथा कालादीनां नित्यत्वम् । घटाद्यपेक्षया हि दीपः स्वयम्प्रकाशः, यथा भौतिकापेक्षया भूतानि नित्यानि तद्वदिति । **यदुक्तं रामानुजेन**—दीपादिः स्वप्रभावलनिर्भासित इति तदपि **मन्दम्**—प्रभातिरिक्तदीपस्यैवाभावात् । नच गृहान्तस्सर्वभागव्यापिप्रभावांश्चतुरंगुलपरिमितो दीप इति वाच्यं, तस्यापि दीपस्य प्रभैव रूपमिति । दीपज्वालापि हि प्रभा । नच दीपज्वालैव प्रभा- दीपस्तु ज्वालावानन्य इति वाच्यं, ज्वालातिरिक्तदीपाभावात् । नच वर्त्यग्रवर्ती दीपः तदुपरि चतुरंगुलपरिमिता तु ज्वालेति वाच्यं, वर्त्यग्रवर्तिनोपि दीपस्य रक्तवर्णस्य प्रभान्यतिरेकेणासत्त्वात् । प्रभा हि कान्तिः- न हि तेजोव्यतिरिक्तं किमपि दीपस्य स्वरूपं दृश्यते- अग्निर्हि दीपः अग्निश्च तेज एव- तेज एव हि भूतशब्दवाच्यं, नतु तेजोवद्द्रव्यं भूतशब्दार्थः-- पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वात् । यदि तेजोवानग्निस्स्यात्तर्हि अग्रे तेजोवदुल्मुकदार्वपि अग्निरेव स्यात् । यदि तथा दार्वप्यग्निस्स्यात्तर्हि अग्रे तेजोवती वर्तिरपि दीपस्स्यात् । तस्मात्प्रभया निर्भासितो घटादिरिव, दीप इति कश्चिन्नास्ति पदार्थः । अस्ति चेत्प्रभातः पृथगेव स उपलभ्येत घटवत् । किंच यदि दीपः स्वप्रभया भास्यते तर्हि भासनात्प्राक्स दीपः कीदृशो वद- पूर्वमभासितं हि वस्तु पश्चाद्भासितमित्युच्यते-- सचाभासितो दीपः कः- यस्य भासितत्वं भवेत् । तस्माद्दीपः केवलं भासत एव न तु स्वेन भास्यते- कर्तृकर्मभावविरोधात् । अन्यांस्तु घटादीन्भासयति । एवं संविद्रूप आत्मापीति । **एतेन एकमेव तेजोद्रव्यं** प्रभाप्रभावद्रूपेणावतिष्ठत इति रामानुजमतं—**परास्तम्** । प्रभातिरिक्तस्य प्रभावतो द्रव्यस्याभावात् ।

**ननु** प्रभावानस्ति मण्यादिपदार्थ इति **मैवम्**—मण्यादिर्हि न तेजोद्रव्यं- उष्णस्पर्शवत्त्वं हि तेजोद्रव्यस्य लक्षणम् । दीपस्तु तेजोद्रव्यमेव उष्णस्पर्शवत्त्वात् । मण्यादेरुष्णस्पर्शाभावान्न तेजोद्रव्यत्वम् । या तु मण्यादेः कान्तिः सा मणिगततेजोंश एव, मणिर्हि घटवन्न मृण्मयः, दीपवन्न तेजोमयः, किंतु तदुभयमयः । एवं चन्द्रोपि जलतेजोद्वयमयः । द्युमणिस्तु तेजोमय एव । तथैवाग्निरपि । तस्मान्मणौ तेजसस्सद्भावान्मणिस्तेजोवद्द्रव्यमेव । दीपस्तु तेज एवेति न तेजोवद्द्रव्यं, किंतु तेजोद्रव्यमेव । **ननु** प्रभाप्रभावतोर्भेदः प्रत्यक्षेणैवोपलभ्यते- दीपसूर्याद्यदर्शनेपि तत्प्रभाया दर्शनादिति **चेन्मैवम्**—दीपात्पृथक्प्रभादर्शनेपि प्रभायाः पृथग्दीपो नोपलभ्यत इति । **अयमाशयः**—संहतावयवश्चतुरंगुलपरिमाणो ज्वालामयः प्रभामयश्च दीप इति, तस्यैव सर्वगृहव्यापी विरलावयवः प्रकाशः प्रभेति

चोच्यते—**इति** । तस्मादेकमेव तेजोद्रव्यं स्वावयववैरल्यसंहननाभ्यां प्रभाप्रभावच्छब्दद्वयप्रतिपाद्यं भवतीति । भवतु वा तेजोद्रव्यस्य सावयवत्वेन प्रभाप्रभावद्रूपेण द्वेधाऽवस्थितिः, न तद्दृष्टान्तेन एकस्यैवात्मद्रव्यस्य ज्ञानज्ञानवद्रूपेण द्वेधाऽवस्थितिरिति वक्तुं शक्यते- निरवयवत्वादात्मनः । नचैकमेव ज्ञानद्रव्यं ज्ञानज्ञानवदात्मरूपेण वर्तत इति वाच्यं, आत्मनस्सावयवत्वे सत्यनित्यत्वं स्यादिति निरवयव एवात्मा सम्प्रतिपन्नः । तथा च ज्ञानमपि निरवयवमेव स्यादन्यथा तस्यात्मस्वरूपत्वानुपपत्तेरिति । तस्माद्यथा दीपः प्रभारूपः प्रभागुणकश्च तथा आत्मा चिद्रूपश्चैतन्यस्वभावश्चेति वक्तुं न शक्यते-- दीपस्य सावयवत्वेनात्मनो निरवयवत्वेन च दृष्टान्तदार्ष्टान्तिकभावासिद्धेरिति । **ननु** यद्यात्मनो ज्ञानस्वरूपत्वमेव न तु ज्ञानधर्मकत्वं तर्हि स्वयम्प्रकाशत्वमात्मनो न स्यादेव- ज्ञानधर्मकत्वाद्धि स्वयम्प्रकाशत्वमात्मन इति **चेन्मैवम्**—ज्ञानस्वरूपत्वादेव स्वयम्प्रकाशत्वमात्मनो न तु ज्ञानधर्मकत्वात् । ज्ञानं हि स्वयम्प्रकाशमिति । **ननु** यथा दीपः स्वधर्मभूतप्रभानिरपेक्षप्रकाशवत्त्वात्स्वयम्प्रकाश एवमात्मापि स्वधर्मभूतज्ञाननिरपेक्षप्रकाशवत्त्वात्स्वयम्प्रकाश इति—**सुदर्शनः , मैवम्**—दीपस्यापि स्वरूपभूतप्रभातिरिक्तधर्मभूतप्रभाऽनङ्गीकारात् । या तु सर्वगृहवर्तिनी प्रभा सापि दीपस्य स्वरूपभूतैव, दीपस्य धर्मस्तु तमोनिरासकत्वादिः । नच कथं दीपस्य प्रभेति भेदनिर्देश इति वाच्यं, राहोश्शिर इतिवत्तदुपपत्तेः । नच दीपस्य स्वरूपभूता प्रभा चतुरंगुलपरिमिता ज्वालैवेति वाच्यं, दीपस्य स्वरूपभूताया एव प्रभायाः यस्संहतावयवांशस्स ज्वालेति यो विसृमरावयवांशस्स प्रभेत्युच्यत इति । यदि तु दीपस्य औष्ण्यमिव प्रभापि धर्मस्स्यात्तर्हि यत्र दीपस्तत्रैव प्रभाप्युपलभ्येत औष्ण्यवत् । दीपस्तु वर्त्यग्र एव वर्तते प्रभा तु ततोन्यत्रापीति । नहि धर्मो धर्मिणं विहायान्यत्र भवितुमर्हति । नचैवं प्रभाया अपि दीपत्वेन कथं दीप इव प्रभायामप्यौष्ण्यानुपलम्भ इति वाच्यं, यथायथा प्रभाया अवयवनैबिड्यं तथातथा औष्ण्यातिशयोपलम्भः । अतीव विरलावयवायां प्रभायां तु सूक्ष्मत्वादौष्ण्यस्यानुपलम्भः, न स्वभावादिति । तस्मादेकैव प्रभा यथा दीपस्य स्वरूपं स्वभावश्च तद्वदेकमेव चैतन्यमात्मनस्स्वरूपं स्वभावश्चेति वक्तुं न शक्यते- सर्वत्रापि स्वरूपादन्यस्यैव धर्मत्वेन समुपलम्भादिति कृत्वा नास्ति दीपस्येवात्मनोपि धर्मभूतः प्रकाशः—**इति** । **ननु** यद्येवं दीपस्य स्वरूपभूतैव प्रभा कथं तर्हि प्रभायां दीपबुद्ध्यभावो लोकस्येति चेत्समान एवायमनुयोगस्तवापि-- यदि दीपस्य स्वरूपभूताप्यस्ति काचित्प्रभा कुतस्तर्हि तस्यां दीपस्वरूपभूतायां प्रभायां लोकस्य न प्रभाबुद्धिः । नहि दीपस्य स्वरूपभूतायां प्रभायां प्रभाबुद्धिर्न कर्तव्या- स्वभावभूतायामेव कर्तव्येति राजाज्ञा । तस्माल्लोको निबिडावयवं प्रभाभागं दीपज्वालेति विरलावयवं तु प्रभेति भेदं कल्पयित्वा व्यवहरति । सा ज्वाला सा च प्रभा द्वयमपि दीपस्य स्वरूपभूतमेव तदुभयातिरिक्तदीपपदार्थाभावादिति । अथापि यदि दीपस्य ज्वालैव स्वरूपं, प्रभा तु धर्म एवेत्यभिनिवेशस्तर्हि कथमुक्तं दीपस्य प्रभा स्वरूपं धर्मश्चेति । तस्मादेकमेव वस्तु कस्यचिद्वस्तुनस्स्वरूपभूतं धर्मभूतं च भवितुं नार्हतीति **घण्टाघोषः** । अथ **यदुक्तं रामानुजेन**—चिद्रूपता हि स्वयम्प्रकाशतेति, **तत्**चैतन्यस्वभावता हि स्वयम्प्रकाशतेति स्वपूर्वग्रन्थेन—**व्याहतम्** । नच चिद्रू-

पत्वादात्मनः स्वयम्प्रकाशत्वमित्येतत्तवापीष्टमेवेति वाच्यं, तस्येष्टत्वेपि चिद्रूपत्वमेव स्वप्रकाशत्वमिति तु नेष्टं- अनन्यावभास्यत्वमन्यावभासकत्वं च हि स्वप्रकाशत्वमिति । **ननु** ज्ञानस्वरूपो ज्ञानगुणकश्चात्मेत्यत्र श्रुतयः प्रमाणं तथाहि 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते', 'एष हि द्रष्टा श्रोता विज्ञानात्मा पुरुषः' इत्यादय इति **मैवम्**—विज्ञातुः स्वरूपभूता विज्ञातिरिति तदर्थात् । अन्तःकरणादितादात्म्याध्यासेन द्रष्टृत्वादिमानप्यात्मा वस्तुतो ज्ञानस्वरूप एवेति तदर्थाच्च । नच ज्ञातुर्ज्ञानं धर्म एव, न स्वरूपमिति वाच्यं, ज्ञानस्वरूपत्वमात्मनस्तवापि सम्मतमिति । तस्मात्स्वप्रकाशोयमात्मा चिद्रूप एव नतु ज्ञाता- ज्ञानत्वं स्वप्रकाशत्वमिति त्वयैवोक्तत्वादिति—**संक्षेपः** ॥

## संविद आत्मत्वोपपत्तिः ।

अथ अजडत्वात्संविदेवात्मेतीदमनुमानं किं समीचीनमुतासमीचीनमिति विचार्यते—**असमीचीनमेवेति रामानुजः**—तथाहि- अजडत्वं किमभिप्रेतम्-- स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेद्दीपादिष्वनैकान्त्यं, संविदतिरिक्तप्रकाशधर्मानभ्युपगमेनासिद्धिर्विरोधश्च । अव्यभिचरितप्रकाशसत्ताकत्वमपि सुखादिषु व्यभिचारान्निरस्तम् । स्वस्मै प्रकाशमानत्वमपि संविद्यसिद्धम् । अन्यस्मै अहमर्थायैव संविदो भासमानत्वात्--**इति, नैतद्युक्तम्**—अजडत्वं स्वसत्ताप्रयुक्तप्रकाशत्वमेव, नतु दीपादिष्वनैकान्त्यं- दीपादयोपि हि घटादिवच्चक्षुरवभास्या एवेति । नहि चक्षुषि निमीलिते घट इव दीपोपि स्फुरेत, प्रकाशस्तु संविदो न धर्मभूतः, किंतु स्वरूपभूत इति नासिद्ध्यादिकमपि । यद्वा घटस्येव संविदोपि प्रकाशो नाम व्यवहारविषयीभवनं तद्धि यावद्व्यवहारमस्तीति न दोषः । अजडत्वमव्यभिचरितप्रकाशसत्ताकत्वमित्युक्तावपि न दोषः । यस्य प्रकाशस्सत्ता चेत्युभयं न व्यभिचरति तदव्यभिचरितसत्ताकम् । सुखादेस्तु तदुभयं व्यभिचरति- जन्मनःप्राक्प्रध्वंसात्पश्चाच्च सुखादेस्तदुभयाभावात् । नहि सुखसद्भावदशायां सुखप्रकाशोस्तीत्येतावन्मात्रेण सुखमव्यभिचरितप्रकाशसत्ताकं भवति । यदितु यस्य सत्ता प्रकाशं न व्यभिचरति तदव्यभिचरितप्रकाशसत्ताकं, सुखादिकं च तादृगेवेति सुखादौ व्यभिचार इत्युच्यते, तदपि **न युक्तम्**—प्रकाशशब्देन स्वरूपभूतप्रकाशस्य विवक्षितत्वात् । अजडत्वं स्वस्मै भसमानत्वमित्यपि युक्तमेव । अहमर्थस्यात्मनस्संविद्रूपत्वेन संविदन्यत्वाभावात्--**इति । वस्तुतस्तु**—अजडत्वंनाम स्वप्रकाशत्वं-- परप्रकाश्यत्वस्यैव जडत्वरूपत्वात् । स्वप्रकाशत्वं चानन्यावभास्यत्वमन्यावभासकत्वं चेत्युक्तं प्राक् । **यदुक्तमत्र श्रुतप्रकाशिकायाम्**— संविदः स्वयम्प्रकाशत्वंनाम किं ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वं, किं वा ज्ञानान्तरनिरपेक्षप्रकाशत्वम् ? आद्ये ज्ञातर्यतिव्याप्तिः । द्वितीयमसिद्धं- संविदःस्वरूपभूतज्ञानाधीनत्वात् । अतोहमर्थस्यैव स्वयम्प्रकाशत्वं न तु संविद इति--**तदयुक्तम्**—आद्यस्य न ज्ञातर्यतिव्याप्तिः- ज्ञातुरात्मनस्स्वरूपभूतैव संविदिति । यदि तु संविदन्य एव ज्ञातेति मतं तर्हि सोनात्मा युष्मदर्थ एवेति ज्ञानकर्मतयैव तस्य व्यवहारानुगुणत्वम् । द्वितीयस्य च नासिद्धत्वम्- धर्मभूतज्ञानवादिनस्तव मते आत्मस्वरूपभूतज्ञानाधीनमात्मधर्मभूतज्ञानमित्यस्तु । मम मते तु आत्मस्वरूपभूतज्ञानमेव संविदिति कृत्वा कथं तस्य ज्ञानान्तराधीनत्वम् । तस्मात्स्वप्रकाशा संविदेवाहमर्थः प्रत्यगात्मा । यदि तु ज्ञान-

वानेवात्मा न ज्ञातेत्याग्रहस्तर्हि ज्ञानज्ञातृसम्बन्धस्य ज्ञानान्तरवेद्यत्वाद्ज्ञानज्ञातारावपि ज्ञानान्तरवेद्यावेवेति जडावेव स्याताम् । वेद्यत्वं हि जडत्वम् । नच स्वसंबन्धः स्वेनैव वेद्यत इति वाच्यं, किं ज्ञानज्ञातृसंबन्धो ज्ञानेन वेद्यते, यद्वा ज्ञात्रा ? अथवा सम्बन्धेन ?- न प्रथमद्वितीयौ-- सम्बन्धस्य सम्बन्धिधर्मत्वात्स्वस्य स्वधर्मग्रहणायोगाच्च । न तृतीयः- व्याघातात् । नच स्वधर्मोपि स्वग्राह्यो भवत्येव-- आत्मधर्माणां नित्यत्वादीनामात्मना गृह्यमाणत्वादिति वाच्यं, आत्मनो निर्धर्मकत्वात् । आत्मनि कल्पितानां नित्यत्वादिधर्माणां प्रमात्रा गृह्यमाणत्वादात्मनः कूटस्थत्वेन ज्ञातृत्वादिविकारायोगाच्च । नच ज्ञानगतं स्वप्रकाशत्वं ज्ञानेन गृह्यत इति वाच्यं, तत्रापि प्रमातैव ग्राहक इति । अपि च आत्मनो ज्ञातृत्वे सिद्धे सत्येव ज्ञानेन सह स्वस्य सम्बन्धज्ञानम् । आत्मनो ज्ञानेन सह सम्बन्धे विदिते सत्येवात्मनो ज्ञातृत्वसिद्धिरित्यन्योन्याश्रयः । किंच मम ज्ञानेन सम्बन्धोस्तीति यदात्मनो ज्ञानं तेन सहात्मनस्सम्बन्धोपि ज्ञानान्तराधीन इत्यनवस्था । अपिचात्मनः केनापि सङ्गं न सहते श्रुतिः-- 'असङ्गो-ह्ययं पुरुष' इति श्रवणात् । एवमसङ्गत्वादेवात्मनः आत्मानात्मतादात्म्यप्रतीतिर्भ्रान्तिसिद्धेत्युच्यते । अपि च घटवत आत्मनो यथा घटो न स्वरूपमेवं ज्ञानवत आत्मनो ज्ञानं नैव स्वरूपं भवेत्, नहि धर्मिणो धर्म एव स्वरूपमिति क्वचिद्दृष्टम् । नचात्मस्वरूपभूताद्ज्ञानाद्धर्मभूतं ज्ञानमन्यदेवेति वाच्यं, अन्यत्वस्यैव दुरुपपादत्वात् । ज्ञानद्वित्वे सिद्धे ज्ञानभेदसिद्धिः, ज्ञानभेदे सिद्धे ज्ञानद्वित्वसिद्धिरित्यन्योन्याश्रयात् । इदं मम स्वरूपभूतं ज्ञानमिदं तु मम धर्मभूतं ज्ञानमित्यनुभवाभावात्—**इति** ।

**ननु** अहमर्थो विशेष्यतैकस्वभावं स्वात्मानं प्रकाशयति, धर्मभूतज्ञानं तु विशेषणतैकस्वभावं स्वात्मानमिति भेदात्स्वरूपधर्मज्ञानद्वयसिद्धिरिति, **चेन्मैवम्**—किं धर्मभूतज्ञानं स्वात्मानं स्वयं ज्ञात्वा अन्यस्मै प्रकाशयति, उताज्ञात्वा ? आद्ये- धर्मभूतज्ञानस्य यदस्त्यात्मज्ञानं तदप्यात्मानं ज्ञात्वैवान्यस्मै प्रकाशयतीत्यनवस्था । द्वितीये- स्वेनैवाविदितस्यार्थस्य कथमन्यस्मै बोधनम् । नच दीपो यथा स्वेनैवाविदितमात्मानं घटादिकं चान्यस्मै प्रकाशयति तद्वद्धर्मभूतज्ञानमपीति वाच्यं, तथासति दीपवदस्यापि जडत्वप्रसङ्गात् । किंच दीपस्य प्रकाशकत्वंनाम न ज्ञानजनकत्वं, किंतु आवरकतमोनिरासकत्वमेवेति न तद्दृष्टान्त इह युज्यते । अपि च स्वरूपज्ञानेनैव धर्मभूतज्ञानं प्रकाश्यत इति स्वोक्तिव्याघातश्च । एवमहमर्थोप्यात्मानं कस्मै प्रकाशयति- नात्मने प्रकाशनात्प्रागेव सिद्धत्वात्तस्य । प्रकाशितस्यैव पश्चात्सिद्धिर्न तु प्रकाशकस्येति । आत्मा च प्रकाशक एवेति । अपि च कर्मकर्तृभावव्याघातः । तस्मादहमर्थ आत्मा केवलं प्रकाशत एव । नचैवं प्रकाशकं ज्ञानमहमर्थः- प्रकाश्यं तु तद्धर्म इति वाच्यं, प्रकाशकत्वस्यैव ज्ञानत्वरूपत्वात्प्रकाश्यस्स धर्मो जड एव स्यान्न तु ज्ञानमिति । नच ज्ञानस्य यदि प्रकाशकत्वं लक्षणं तर्हि दीपादौ तद्व्यभिचरितमिति वाच्यं, दीपादेरप्रकाशकत्वस्योक्तत्वात् । यद्वा अप्रकाश्यत्वे सति प्रकाशकत्वं ज्ञानस्य लक्षणम् । दीपादिवारणाय विशेषणम् । शशशृङ्गादिवारणाय विशेष्यम् । नचेदं स्वप्रकाशत्वलक्षणमिति वाच्यं, ज्ञानस्यैव स्वप्रकाशत्वात् । तस्मान्नास्त्यात्मनो धर्मभूतं ज्ञानमिति । न ज्ञाताऽऽत्मा किंतु ज्ञानमेवात्मा । ज्ञातृत्वस्य ज्ञेयाधीनत्वेन आत्मनो ज्ञातृत्वे सति

अनन्याधीनत्वासिद्धेः । नच ज्ञानमपि ज्ञेयज्ञातृद्वयाधीनमिति वाच्यं, क्रियाभूतज्ञानस्यैव तथात्वं, न त्वात्मस्वरूपभूतज्ञानस्येत्युक्तत्वादिति । **ननु** अनुभवोहमिति प्रतीत्यभावादनुभवाम्यहमिति प्रतीतेश्च अनुभववानेवात्मा नत्वनुभव इति, **मैवम्**—किमनुभवस्यानुभवत्वमनुभवेन साधितं भवता येनात्मनोऽनुभवत्वमनुभवेन सिषाधयिषसि- किंच अस्तुनाम प्रतीतिः कथं पुनस्तस्याः प्रामाण्यम् । नच प्रतीतेः स्वतः प्रामाण्यमिति वाच्यं, किमबाधितप्रतीतेः स्वतःप्रामाण्यं, यद्वा बाधितप्रतीतेरपि? आद्ये-त्वद्दर्शितप्रतीतेरबाधितत्वं केन त्वया ज्ञातम् । द्वितीये- सर्पोयमिति प्रतीते रज्जुरपि सर्पस्स्यादेव । नच ममानुभव इति प्रतीतेः केनापि बोधो नास्त्येव- तद्बाधस्याननुभवादेवेति वाच्यं, अहं मनुष्य इति प्रतीतेरपि केनापि बाधो नास्त्येवाननुभवादिति प्रत्याह बौद्धः । अपि च मम मनुष्य इति प्रतीत्यभावादेव मनुष्यत्वमात्मधर्म एव नतु देहधर्म इति । नच वेदान्तशास्त्रादस्ति मनुष्योहमिति प्रतीतेर्बाध इति वाच्यं, तर्हि तत एव ममानुभव इति प्रतीतेरपि बाध इति विद्धि । नच नास्ति आत्मनोऽनुभवरूपत्वप्रतिपादकं वेदान्तशास्त्रमिति वाच्यं, 'विज्ञानमानन्दं ब्रह्म'त्यादिसत्त्वात् । त्वया-प्यात्मनोऽनुभवरूपत्वस्याभ्युपेतत्वात् । किमहमनुभवामीतिवन्मम स्वरूपं ज्ञानमिति लोकः प्रत्येति, येनानुभवबलादात्मनो ज्ञानस्वरूपमित्युच्येत । किं वा तथाविधानुभवाभावादात्मा ज्ञानस्वरूपो नेति त्वया वक्तुं शक्यते । तस्मादहं मनुष्य इति प्रतीतिर्यथा देहतादात्म्याध्यासप्रयुक्तत्वेनाप्रमाणं, तथा अहं सुखमनुभवामीत्यादिप्रतीतिरप्यन्तःकरणतादात्म्याध्यासप्रयुक्तत्वेनाप्रमाणमिति न तद्बलादात्मनो-नुभवरूपत्वं प्रत्याख्यातुं शक्यते- तस्याबाधितोपनिषत्प्रमाणजन्यत्वात् । न चात्मनो ज्ञातृत्वमप्युपनिष-त्प्रमाणसिद्धमेवेति वाच्यं, व्यावहारिकज्ञातृत्वानुवादपरत्वाद्विज्ञातारमित्याद्युपनिषदाम् । नच कथं व्यवहारतोपि ज्ञानस्य ज्ञातृत्वमिति वाच्यं, प्रतिभासतो रज्जोस्सर्पत्वमिव तदुपपत्तेः । नच रज्जौ सर्पः कल्पित इति वाच्यं, अनुभवरूपेप्यात्मनि ज्ञातुः कल्पितत्वात् ।

**ननु** आत्मानाम चैतन्यं- ज्ञातानाम अन्तःकरणविशिष्टचैतन्यं- ततश्च विशेषणे विशिष्टस्याध्यासो न युक्त इति- कथमात्मनि ज्ञातुरध्यस्तत्वमिति **चेन्मैवम्**—चैतन्यस्य विशेष्यत्वेन विशेषणत्वाभावात्तस्य विशेषणत्वं तु भ्रान्तिसिद्धमेव । नच विशेष्येपि चैतन्ये कथं विशिष्टस्याध्यास इति वाच्यं, नीलं नभ इति विशेष्ये नभसि विशिष्टस्य नीलनभसोऽध्यासदर्शनात् । नच तत्र नीलरूपमेवाध्यस्तमिति वाच्यं, अत्रापि अन्तःकरणमेवाध्यस्तमिति तुल्यत्वात् । विशेष्ये विशिष्टाध्यासेपि विशेषणांश एव ह्यध्यस्तो भवति । नच नीलं नभ इतिवदनुभवोहमिति प्रतीत्यभावान्नाहमर्थस्य ज्ञातुरनुभवेऽध्यस्तत्वमिति वाच्यं, नीलं नभ इतिवद्ज्ञाताहमिति प्रतीतिसत्त्वेन नभसि नैल्यस्येवाहमर्थे प्रतीच्यनुभवे ज्ञातृत्वस्याध्यस्तत्वात् । नच नभो नीलमितिवदनुभवो ज्ञातेति प्रतीतिस्स्यादिति वाच्यं, नीलरूपविरोध्याकाराभावेन नभसि नभो नीलमिति प्रतीतिर्भवति- अनुभवे तु ज्ञातृविरोध्याकारसत्त्वादनुभवो ज्ञातेति न प्रतीतिः- यथा अयं सर्प इत्येव प्रतीतिर्न तु रज्जुसर्प इति । नच निराकारे अनुभवे कथं ज्ञातृविरोध्याकारसत्त्वमिति वाच्यं, ज्ञानत्वादनुभवस्य लोके ज्ञानज्ञात्रोर्ज्ञेयज्ञात्रोरिव भेदसत्त्वाच्च । यद्वाप्यनुभवस्य निर्विषयज्ञानस्य ज्ञात्रा-

कारविरोधाभावादेव तत्र ज्ञातुरध्यासः, तथापि लोकः सविषयज्ञानमेवानुभवं मन्यत इति कृत्वा तस्य च ज्ञात्राकारविरोधसत्त्वादनुभवो ज्ञातेति लोको न प्रत्येति । एवमनुभवगतज्ञानाकारस्य ज्ञात्राकारविरोधेनानुभवो ज्ञातेति प्रतीत्यभावेपि अनुभवगताहमाकारस्य तदविरोधाद्ज्ञाताहमिति प्रतीतिर्भवति । नचानुभवस्याहंशब्दार्थत्वाभावान्नास्त्यहमाकार इति वाच्यं, अनुभवस्याहंशब्दलक्ष्यार्थत्वसत्त्वात् । नच लक्ष्यार्थस्स न मुख्य इति वाच्यं, लोकदृष्ट्या तस्यामुख्यत्वेपि शास्त्रदृष्ट्या मुख्यत्वमेवेति । आत्मवाची खल्वहंशब्दः--**आत्मा चानुभव** एवेति । एवमात्मनोहंशब्दवाच्यत्वादेव आत्मनि ज्ञातुरध्यासेपि अहं ज्ञातेति व्यवहारो लौकिकः आत्मा ज्ञातेति तु शास्त्रीयव्यवहारः । तस्मादनुभवरूपस्यात्मनो ज्ञातृत्वं मिथ्यैव-- यथा नीरूपस्य गगनस्य नीलरूपत्वं मिथ्या तद्वदिति । **यदुक्तमत्र सुदर्शनेन**—विषयप्रकाशकसंविद एवात्मत्वाभ्युपगमेन, त्वया स्वयम्प्रकाशत्वसमर्थनाच्च सैवाधिष्ठानमिति तदवभासे तस्याश्च शुक्तित्वादिवद्भ्रमविरोधित्वेऽध्यासानुदय इति-- **तदयुक्तम्**—ज्ञात्रध्यासात्प्राक्संविदो विषयप्रकाशकत्वमेव नास्तीति । **नचैवं** विषयप्रकाशकत्वाभावे संविदः स्वयम्प्रकाशत्वासिद्धिरिति वाच्यं, घटादिविषयप्रकाशकतया स्वयम्प्रकाशत्वेन त्वदभिमतस्य दीपस्यापि घटादिविषयाभावे विषयप्रकाशकत्वाभावेन स्वयंप्रकाशत्वासिद्धिप्रसङ्गात् । प्रकाशान्तरनिरपेक्षतया स्वयम्प्रकाशमानत्वं हि स्वयम्प्रकाशत्वं, तच्च संविदि ज्ञात्रध्यासात्प्राग्विषयाभावेन विषयप्रकाशकत्वाभावेपि सम्भवत्येवेति । तस्मान्निर्विषयस्वयम्प्रकाशसंविद्येव ज्ञातुरध्याससम्भव इति । नच निर्विषया संविन्नास्त्यनुपलब्धेरिति वाच्यं, तच्चोद्यं प्रागेव परिहृतमिति ।

**ननु** यद्यात्मनो ज्ञातृत्वं मिथ्या तर्हि आत्मनि ज्ञाताऽध्यस्त इत्युच्येत, न तु तन्मिथ्या-- तथा सति आत्मतयाऽभिमताया अनुभूतेरपि मिथ्यात्वं स्यादिति **चेन्मैवम्**—नह्यस्माभिर्ज्ञातृत्वमनुभव इत्युच्यते, येन ज्ञातृत्वमिथ्यात्वेनानुभूतेर्मिथ्यात्वं शङ्क्येत । किं तर्हि ज्ञातुः स्वरूपमेवानुभवो न तु धर्म इत्युच्यते, अतो न दोष इति । नचानुभवाध्यस्तस्य ज्ञातुः कथमनुभव एव स्वरूपमिति वाच्यं, कल्पितस्याधिष्ठानमेव स्वरूपमिति । **यदुक्तं रामानुजेन**—देहात्माभिमानवत एव ज्ञातृत्वप्रतीतिवदनुभूतिप्रतीतिरिति कृत्वा ज्ञातृत्वस्य मिथ्यात्वे अनुभूतेरपि मिथ्यात्वमिति तदपि **मन्दम्**—देहादिष्वनात्मस्वात्माभिमानवानेव मनुष्योहं द्रष्टाहं ज्ञाताहमिति प्रत्येति, तद्रहितस्तु अहमनुभव इत्येव प्रत्येतीति । देहाद्यात्माभिमानवतो दर्शितप्रतीत्यभावात् । नच मम देहाद्यात्माभिमानो नास्ति, ज्ञाताहमिति प्रतीतिरस्तीति वाच्यं, अन्तःकरणतादात्म्याभिमानप्रयुक्तत्वादेव तत्प्रतीतेः—**इति** । **यदुक्तं** अनुभववद्ज्ञातृत्वमप्यबाधितत्वान्न मिथ्येति **तदप्ययुक्तम्**—किं जानामीति प्रतीत्या त्वमात्मनो ज्ञातृत्वं सिषाधयिषसि, यद्वा शास्त्रेण ? नाद्यः- सुषुप्त्यादौ तत्प्रतीत्यभावेनात्मनो ज्ञातृत्वायोगात् । **न द्वितीयः**- निर्धर्मकपरमानन्दबोधरूपत्वमेवात्मनश्शास्त्रं प्रतिपादयतीति । नच मुक्तावप्यात्मा ज्ञातैवेति वाच्यं, मुक्तौ द्वितीयस्यैवाभावेन कथं ज्ञातृत्वमात्मन इति । नच मुक्तौ द्वितीयमस्तीति वाच्यं, 'एकमेवाद्वितीयं ब्रह्म', 'एकोऽद्वैतः'- 'नान्यत्पश्यति'- 'तत्केन कं पश्येदि'त्यादिश्रुतिशतात् । नचानुभवोपि बाधित एवेति वाच्यं, अनुभवः केन बाध्यते । नच सुषुप्त्यादावनुभावाभावात्कालेन बाध्यत इति वाच्यं, सुषुप्तौ

सत्त्वादज्ञानाद्यनुभवस्य । किंच यत्किमपि वस्त्वनुभवानधीनस्थितिकं नेष्टमिति कृत्वा सर्वस्याप्यनुभवाधीनस्थितिकत्वेन परतन्त्रत्वान्नानुभवबाधकं किमपि वस्त्वस्ति- अनुभवस्यैवात्मत्वाच्च न बाधितत्वमात्मा हि नित्यस्तवापि मते— इति ।

**ननु** यदि ज्ञातृत्वं नात्मधर्मस्तर्हि तच्छशशृङ्गप्रायमेव भवेत्- जडस्य ज्ञातृत्वायोगादात्मभिन्नस्य सर्वस्य जडत्वाच्च । तस्मादहं जानामीति प्रतीतिसिद्धं ज्ञातृत्वमात्मधर्म एव नाहङ्कारधर्मस्तस्य जडत्वादिति **मैवम्**—अन्तःकरणवृत्तिविशेषस्याहङ्कारस्य स्वतो जडत्वेपि चित्प्रतिबिम्बग्राहितया भवत्यजडत्वमिति । **एतेना**हङ्कारस्यापि देहवद्दृश्यत्वाद्दृशित्ववद्द्रष्टृत्वमपि नोपपद्यत इति—**परिहृतम्** । केवलाहङ्कारस्य दृश्यत्वेपि साभासाहङ्कारस्य द्रष्टृत्वं सम्भवतीति । **अयमाशयः**— लोके चेतनाचेतनविभागो दृश्यते- तत्र मनुष्यादयश्चेतनाः, पाषाणादयोऽचेतना इति सम्प्रतिपन्नम् । इदं च चेतनत्वं जीवधर्म एव, न देहादिधर्म इति कृत्वा कथं मनुष्यादीनां चेतनत्वं- मनुष्यादयो हि देहाः देहधर्मत्वान्मानुष्यादेः । एवं जीवधर्मस्यापि चेतनत्वस्य देहे अध्यासान्मनुष्यादयश्चेतना इति, तदध्यासाभावाद्घटादयोऽचेतना इति च व्यवहारः । तथा देहधर्मस्य मनुष्यत्वस्य जीवेऽध्यासादहं मनुष्य इति व्यवहारः । एवमितरेतराध्यासात्प्रवृत्तोऽयं सर्वोपि व्यवहारः । तत्र घटाद्यचेतनदृष्ट्या देहश्चेतनः । देहेन्द्रियविवेचने तु इन्द्रियमेव चेतनं, न तु देहः- इन्द्रियाभावादेव मृतदेहे अचेतनत्वदर्शनाद्घटवत् । तस्य चेन्द्रियस्यान्तःकरणाद्विवेचने अचेतनत्वमेव- मनस्सन्याक्रान्ते सतीन्द्रियस्य घटवन्निर्व्यापारत्वादर्थप्रकाशनासमर्थत्वाच्च । तस्य चान्तःकरणस्याहंवृत्तिरिदंवृत्तिरित्यस्ति वृत्तिद्वयम् । तत्रेदंवृत्तिमदन्तःकरणं मन इति, अहंवृत्तिमदन्तःकरणमहङ्कार इति चोच्यते । तच्च मनोऽहङ्काराद्विवेचितं सदचेतनमेव भवति घटवत् । मम घट इतिवन्मम मन इति मनसश्चेतनपारतन्त्र्यदर्शनात् । अचेतनं हि वस्तु चेतनपरतन्त्रं- यथा वाऽस्यादिस्तक्षादिपरतन्त्रः । स चाहङ्कारश्चेतनस्य जीवस्य सन्निहितत्वेन मुख्यो ग्रन्थिः । चेतनात्तस्य च विवेचने कृते सोप्यचेतन एव भवति । अविवेकात्तु अहङ्कार एव चेतनः, यथा देहः । तच्चात्माहङ्कारयोर्विवेचनं दुष्करं विदुषोपि- यथा देहात्मनोर्विवेचनं दुष्करमविदुषः । अहङ्कारस्यात एव ग्रन्थित्वम् । एवमात्मचैतन्याध्यासवशादहङ्कारस्य चेतनत्वमहङ्कारतादात्म्याध्यासादात्मनोऽहंप्रत्ययविषयत्वं च प्राप्तमिति कृत्वा तदुभयाध्यासप्रयुक्त एव अहं जानामीति व्यवहारः । एवमहङ्कारविशिष्टस्यैवात्मनो मनसा सहान्योन्याध्यासादहं सुखीति व्यवहारः । तथा अहङ्कारविशिष्टस्यैवात्मनो देहेन सहान्योन्याध्यासादहं मनुष्य इति व्यवहारः । तस्मादात्मन्यहङ्कार एव तावदध्यस्तः । मन आदयस्तु अहङ्कारविशिष्ट एवात्मनीति कृत्वा आत्मनो मन आदीनां च साक्षादितरेतराध्यासाभावात्तद्विवेकस्सुकरो विदुषः । आत्माहङ्कारविवेकस्तु दुष्करः, अत एवात्र रामानुजादयो भ्रान्ता अहमर्थमहङ्कारमेवात्मत्वेन प्रतिपन्नाः । न चाहमर्थ आत्मैव नाहङ्कार इति वाच्यं, अहमर्थो नाहङ्कार इति वाक्यस्य व्याहतत्वात् । घटार्थो न घट इतिवत् । नच त्वयाप्यहमर्थ आत्मेति प्रागुक्तमिति वाच्यं, अहंशब्दश्चाभासाहङ्कारवाची लक्षणया त्वात्मानं बोधयतीत्युक्तत्वात् । यदि त्वहमर्थ एवात्मेत्याग्रहस्तर्हि सुषुप्त्यादावात्मनाशस्स्यादेव--

तत्राहमर्थास्फुरणात् । नहि जागरस्वप्नयोरिव सुषुप्तावहंजानामीति व्यवहारः । तस्मादहमर्थस्याहङ्कारस्य चेतनसान्निध्येन, चेतनतादात्म्याध्यासाच्चेतनत्वलाभ इति कृत्वा स्वतो जडोऽप्यहङ्कारश्चेतन एवेति ।

**ननु** किं चेतनस्य जीवस्य ज्ञातृत्वमस्ति वा न वा ? आद्ये तव मतपातः । द्वितीये जीवस्यैवा-विद्यमानं ज्ञातृत्वं कथं तदध्यस्तस्याहङ्कारस्य भवितुमर्हतीति, **मैवम्**—सूर्यस्यैव चेतनस्य प्रकाशकत्वमस्ति—तच्च सूर्यप्रतिबिम्बग्रहणाद्दर्पणस्य यथा भवति, तथा चेतनप्रतिबिम्बग्रहणादहङ्कारस्य भवति । सचात्मानु-प्रवेशलब्धचैतन्योऽहङ्कारस्सर्वं विषयमवभासयन्नहंग्रहपूर्वकमवभासयति । आत्मा तु केवलमवभासयति । अत एव सामान्याकारेण सर्वावभासक आत्मा, विशेषाकारेण सर्वावभासकस्तु अहंपदार्थोऽहङ्कारः । तस्माज्जीवस्य विद्यमानं प्रकाशकत्वमेव तदध्यस्तस्याहङ्कारस्यागम् । तदेव प्रकाशकत्वं अहंग्रहपूर्वकं सदहङ्कारस्य ज्ञातृत्वमित्युच्यत—**इति** । **एतेन** यथा आत्मा सर्वं प्रकाशयति तथा साभासाहङ्कारोपि सर्वं प्रकाशयत्येव । परं तु साभासाहङ्कारस्सर्वं प्रकाशयन्नहमिदं जानामीति प्रत्येति । अतएवा-हङ्कारस्य ज्ञातृत्वमागतं आत्मनस्तु ज्ञानत्वमेवेति—**सिद्धम्** । नचात्मैवाहं जानामीति प्रत्येति नाहङ्कार इति वाच्यं, अन्वयव्यतिरेकन्यायादहङ्कार एव तथा प्रत्येति नात्मेति- जागरस्वप्नयोरहङ्कारसत्त्वाद्हं जानामीति प्रत्ययसत्त्वं, सुषुप्त्यादौ तु तदभावात्तदभाव इति । तस्मात्साभासाहंकरोहमर्थ एव ज्ञाता, नत्वात्मा- स तु दृग्रूप एवेति ।

**ननु** विषयावभासकत्वमात्मनस्सम्प्रतिपन्नम्-- तदेव ज्ञातृत्वमित्यस्मदभिप्रेतमिति **चेन्मैवम्**—ज्ञानस्यापि विषयावभासकत्वं सम्मतमेवेति । किंच विषयावभासकत्वं ज्ञातृत्वमिति स्वीकारेपि किं वस्तुत आत्मनो ज्ञातृत्वमभिप्रैषि ? किं वा व्यवहारतः ? नाद्यः- वस्तुतो विषयाणामेवाभावेन कुतस्त-त्प्रकाशकत्वमात्मन इति । द्वितीय इष्ट एव- अहंकारतादात्म्याध्यासेन हि भवति ज्ञाता प्रत्यगात्मा । नच विषयप्रकाशकत्वं ज्ञानत्वमित्यभ्युपगमे कथमात्मनो वस्तुतो ज्ञानस्वरूपत्वमिति वाच्यं, वस्तुत इत्यस्यात्राध्यासाभाव इत्यर्थात् । व्यवहारदशायामेव आत्मनो वास्तवं रूपं ज्ञानम् । अहङ्कारतादात्म्या-ध्यासप्रयुक्तत्वेनावास्तवमौपाधिकं तु ज्ञातृत्वं- यथा तव मतेपि आत्मनो वास्तवं रूपं ज्ञातृत्वं देहतादा-त्म्याध्यासप्रयुक्तत्वेनावास्तवमौपाधिकं तु मनुष्यत्वमिति तद्वत् । **एतेन**—परमार्थदशायामात्मा ज्ञान-स्वरूपोपि न भवति-- विषयप्रकाशकत्वलक्षणज्ञानत्वाभावादिति—**सिद्धम्** । अत एव 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'ति श्रुतिरुपपद्यते वाङ्मनसाविषयत्वमात्मनो ब्रुवाणा । नहि ज्ञानस्वरूपे सत्यात्मनः ज्ञानमात्मेति प्रतिपादयितुं श्रुतेरस्ति कोपि बाधः । अत एव च ज्ञानादिपदानां लक्षणया ब्रह्मप्रतिपादकत्वमित्युक्तम् । एवं तदिदमिति निर्देष्टुमशक्यत्वादेव नेतिनेतीति निषेधविधया अवधि-भूतं ब्रह्म तात्पर्यवृत्त्या श्रुतयः प्रतिपादयामासुः । तदुक्तम्—'श्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भव-न्निधनाः' इति भागवते व्यासेन ।

**ननु** विधिमुखेन निषेधमुखेन च द्विधा वेदान्तानां ब्रह्मणि प्रवृत्तिरिति शङ्कराचार्यैरेवोमिति कथं त्वया विधिमुखेन प्रवृत्तिर्निरस्यत इमि **चेन्मैवम्**—यावद्व्यवहारं ब्रह्मणि विषयप्रकाशकत्वलक्षग-

ज्ञानत्वसत्त्वाद्ज्ञानं ब्रह्मेति श्रुतिर्विधिमुखेन ब्रह्म प्रतिपादयति । वस्तुतो ब्रह्मणि तस्याप्यभावान्नेतिनेतीति श्रुतिर्निषेधमुखेन ब्रह्म प्रतिपादयतीति । तस्मान्निर्विशेषमेव ब्रह्म— **इति** । नच ब्रह्मणि यदि कोपि विशेषो नास्ति तर्हि शून्यमेव तदिति वाच्यं, विशेषाभावाधिष्ठानस्य तस्य शून्यत्वायोगात् । शून्यं नहि यस्य कस्याप्यधिष्ठानं भवितुमर्हति । एवं निर्विशेषब्रह्माभेदप्रतिपादनादेवात्मापि निर्विशेषः । तस्य च यावद्व्यवहारं ज्ञानस्वरूपत्वम्- व्यवहारत एव यावदहङ्काराध्यासं ज्ञातृत्वमिति—**सिद्धम्** ।

नन्वेवमात्मनो ज्ञातृत्वमिव ज्ञानत्वमपि मिथ्यैवेति कृत्वा कथमुच्यते ज्ञातृत्वमेव मिथ्येति **चेदुच्यते**—अध्यासप्रयुक्तत्वाद्ज्ञातृत्वं मिथ्या तदप्रयुक्तत्वाद्ज्ञानत्वं न मिथ्येति तथोक्तम् । अपारमार्थिकत्वरूपमिथ्यात्वं तूभयत्राप्यविशिष्टम्- इति । नचैवं ज्ञानस्यापि मिथ्यात्वे ज्ञानस्वरूपस्यात्मनोपि मिथ्यात्वमागतमिति वाच्यं, न वयं ज्ञानं मिथ्येति ब्रूमः- येनात्मनो मिथ्यात्वं स्यात् । किंतु विषयप्रकाशकत्वलक्षणं ज्ञानत्वं मिथ्येति ब्रूमः । अतो नानुपपत्तिरिति । नचैवं ज्ञातापि न मिथ्या तस्यापि चैतन्यरूपत्वादिति वाच्यं, अहङ्कारविशिष्टचैतन्यरूपत्वेन ज्ञातुर्मिथ्यात्वात् । यदि तु ज्ञातुरपि विशेष्यांश एव पक्षपातः, तर्हि ज्ञातृत्वमेव मिथ्या, नतु ज्ञातेति विद्धि । एवं घटादीनामपि घटाद्यवच्छिन्नचैतन्यरूपत्वाद्विशेष्यांशपक्षपातेन मिथ्यात्वं किंतु घटत्वादेरेव मिथ्यात्वम् । तस्मादात्मनि कल्पितस्य घटादिविषयस्य तद्ज्ञातुरहङ्कारस्य च यत्स्वरूपभूतं ज्ञानं सत्ताऽभिन्नं सुखाभिन्नं च तदेवात्मा । तच्च निर्विशेषम् । तत्र विषयप्रकाशकत्वं तु ज्ञातृत्वादिवत्कल्पितमेव । एवं विषयप्रकाशकत्वस्य वस्तुत आत्मन्यभावादेव प्रवृत्तिनिमित्ताभावेन ज्ञानशब्दोपि नात्मनि प्रवर्तत इति शब्दाविषयत्वमात्मन उच्यते । तात्पर्यवृत्त्या त्वात्मा ज्ञानादिशब्दैः प्रतिपाद्यत इति निषेधमुखेन च प्रतिपाद्यत इत्यौपनिषदत्वं चोच्यत इति भावः ।

**ननु** ज्ञातृत्वमात्मनो नाहङ्काराध्यासप्रयुक्तं, किंतु ज्ञानत्वमिव स्वाभाविकमेव अहङ्कारज्ञातृत्वादात्मनः । नह्यहङ्कारज्ञातृत्वमहङ्काराध्यासप्रयुक्तमिति **चेन्मैवम्**—साभास एवाहङ्कार आत्मानं जानाति घटादिमिव । नच कर्मकर्तृभावव्याघातः, छेत्तुः करस्य स्वस्मिन्नपि छेदनक्रियादर्शनात् । अहङ्कारकर्तृकं हीदं ज्ञानं क्रिया । नचैवमात्माप्यात्मानं जानीयादेवेति वाच्यं, निष्क्रियस्यात्मनो ज्ञानक्रियाश्रयत्वायोगान्निर्विकारस्य चात्मनो ज्ञानक्रियाकर्तृत्वायोगात्कर्तृत्वं हि विकारः । अत एवेदं ज्ञानक्रियाकर्तृत्वमात्मनो न स्वाभाविकं, किं त्वौपाधिकमित्युक्तमिति । **ननु** यथा आत्मनो ज्ञातृत्वमौपाधिकं तथा ज्ञानत्वमप्यौपाधिकमेव-- अन्तःकरणोपहितस्यैवात्मनो विषयप्रकाशकत्वं न तु शुद्धस्य मुक्तप्राप्यस्येति **चेन्मैवम्**— यद्यप्यन्तःकरणविशिष्टस्य ज्ञातृत्वं तदुपहितस्य तु ज्ञानत्वं तथापि आत्मनो विषयप्रकाशनरूपे कार्ये नास्त्यन्तःकरणस्यान्वयित्वम् । अत एव हि अन्तःकरणस्य विशेषणत्वोपाधित्वाभ्यां प्रमातृसाक्षिणोर्भेदः । कार्यान्वयित्वे सति व्यावर्तकं विशेषणं, कार्यानन्वयित्वेसति व्यावर्तकमुपाधिरिति तल्लक्षणात् । तस्मादात्मनो ज्ञातृत्वमेवौपाधिकं ज्ञानत्वं तु स्वाभाविकमेव ।

**ननु** यदि साभासाहङ्कार एव द्रष्टा आत्मा तु ज्ञानमेव तर्हि 'नान्योतोस्ति द्र'ष्टेति श्रुत्या द्रष्ट्रन्तरस्य निषिद्धत्वादात्मन एव द्रष्टृत्वं सिद्धमिति कथं तव श्रुतिविरोधपरिहारः, **मैवम्**—अहङ्का-

शादिस्वेतरसर्ववस्त्ववभासकत्वरूपं द्रष्टृत्वमात्मन एव । ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं त्वहङ्कारस्यैवेति । **ननु** मम मन इतिवन्ममाहङ्कार इति दृश्यादहङ्काराद्द्रष्टाऽऽत्मा भिन्न एव- द्रष्टा हि दृश्यं दृष्ट्वा ममायमिति प्रत्येति, **मैवम्**—यो ममाहङ्कार इति प्रत्येति स साभासाहङ्कार एव । न त्वात्मा- सुषुप्त्यादावात्मनस्तादृशप्रत्ययाभावात् । अहङ्कारस्य स्वस्मिन्ममत्वबुद्धिस्तु देहात्मवादिनो मम देह इति प्रतीतिवदुपपद्यते । ब्रह्मविदस्तु अस्मच्छब्दलक्ष्यार्थस्य प्रतीच उपाधिभूतोऽहंकार इत्यभिप्रायेणोपपद्यते । तस्मादवभास्यस्याहङ्कारस्यावभासक आत्मा द्रष्टैवेति । नच दृशिरेवात्मेति पूर्वमुक्तमिति वाच्यं, विषयावभासकत्वलक्षणद्रष्टृत्वाद्दृशित्वस्याभेदात् । विषयावभासकत्वं हि दृशित्वम् । अत एव द्रष्टुरात्मनो दर्शनमेव स्वरूपमित्युक्तं द्रष्टृत्वस्यैव दृशित्वात् । नचैवं विषयावभासकत्वलक्षणद्रष्टृत्वमेव साभासाहङ्कारस्याप्यस्तीति स कथमात्मा न स्यात्कथं नामात्मा ज्ञाता न स्यादिति वाच्यं, अहंग्रहपूर्वकं विषयप्रकाशकत्वमेव ज्ञातृत्वं, न तु तदपूर्वकमिति पूर्वमेवोक्तत्वात् । तस्माद्ज्ञाताऽहमर्थस्साभासाहङ्कार एव । ज्ञानस्वरूपः प्रत्यगात्मा तु अहंशब्दस्य लक्ष्यार्थ एव । अहंजानामीत्यादौ पूर्वस्य ग्रहणं, अहंब्रह्मेत्यादौ परस्येति—**संक्षेपः** ।

**ननु** दृशिकर्मणोऽहंकारस्य दृशित्वमिव द्रष्टृत्वमपि नोपपद्यत इति—**रामानुजः; तदयुक्तम्**—तव मते मामहं जानामीति दृशिकर्मण आत्मन एव दृशिकर्तृत्वस्योक्तत्वात्कथं दृशिकर्तुरात्मनो दृशिकर्मत्वमिति । नच मम मतमस्तु दुष्टं, तव मतस्य कथमनवद्यत्वमिति वाच्यं, मम मते मामहं छिनद्मीतिवन्मामहं जानामीतिप्रतीतिवशादेव कर्तृत्वकर्मत्वयोस्सामानाधिकरण्यसिद्धेरिति । **ननु** किमात्मन्यहंबुद्धिरुतानात्मनि ? आद्ये- कथमहंकारस्याहमर्थता, द्वितीये- कुतो घटादावनात्मनि नाहं बुद्धिरिति, **मैवम्—न** केवलात्मन्यहंबुद्धिर्नाप्यनात्मनि केवले, किंतु अध्यासविशिष्टेऽहंकार एव । तथाहि- अहंजानामीत्यत्र आत्माध्यासविशिष्टोऽहंकारोऽहमर्थः । अहं पश्यामीत्यत्र अनात्मभूतचक्षुरिन्द्रियाध्यासविशिष्टोऽहंकारः, अहं स्थूल इत्यत्र देहाध्यासविशिष्ट इति । नचाहं जानामीत्यत्र नास्त्यात्माध्यासवैशिष्ट्यमहंकारस्येति वाच्यं, तदभावे जडस्याहंकारस्य ज्ञातृत्वायोगात् । न चात्माऽऽभासविशिष्ट एव तदाऽहंकार इति वाच्यं, आभासाध्यासयोरेकत्वाद्भेदेपि आत्माभासेन सहाध्यासोस्त्येवाहंकारस्य । स चात्माभास आत्मनो पृथग्भूत एव प्रतिमुखमिव मुखात् । उपाधिवशादेकस्यैव हि मुखस्य द्वेधा प्रतीतिः । एवमन्तःकरणोपाधिवशादेवात्मनोपि बिम्बप्रतिबिम्बभाव इति । तस्मादविदुषोऽहंबुद्धिविषयो विशिष्टाहंकार एव । विदुषोऽहंबुद्धिविषयस्तु विविक्तः प्रत्यगात्मैव । न चाहंकारविधुरे केवलात्मनि कथं विदुषोप्यहम्बुद्धिरिति वाच्यं, अहंकारोपहिते प्रत्यगात्मन्येव विदुषोऽहंबुद्धिरिति । नचैवं मायोपहिते परमात्मनि विदुषोहम्बुद्ध्यभावात्कथं ब्रह्मात्माभेदबुद्धिरिति वाच्यं, यदेव मायोपहितं चैतन्यं तदेवान्तःकरणोपहितं सत्प्रत्यगात्मेत्युच्यत इति ब्रह्मात्मभेदाभावात् ।

**ननु** अन्तःकरणोपहितस्यात्मनः परिच्छिन्नत्वात्कथमपरिच्छिन्नब्रह्माभेद इति वाच्यं, अन्तःकरणपरिच्छिन्नत्वादात्मनो नान्तःकरणोपहितत्वमित्यस्माभिरुच्यते, किं त्वन्तःकरणे उपलभ्यमानत्वादिति ।

नचैवमात्मनो दृश्यत्वमागतमिति वाच्यं, अन्तःकरणे लयविक्षेपशून्ये सत्यात्मा स्फुरतीत्येतावताऽऽत्मनोन्तःकरणे उपलभ्यमानत्वकथनात् । न चोपलब्धाप्यात्मैवेति वाच्यं, प्रमातुरेवोपलब्धत्वात्प्रत्यगात्मा हि साक्षी । ननु साक्षाद्द्रष्टरि सञ्ज्ञायामिति पाणिन्यनुशासनात्साक्षी साक्षाद्द्रष्टैव, नतु दृशिः, अत एव साक्षिणा प्रमाताप्युपलभ्यते- इति **मैवम्**---साक्षिगतं द्रष्टृत्वं विषयावभासकत्वमेव, नतु ज्ञातृत्वमित्यसकृदुक्तत्वात्— **इति** ।

**ननु** निर्विकारस्यात्मनो ज्ञातृत्वरूपविकारायोगादिति हि त्वया ज्ञाता न भवत्यात्मेत्युच्यते । न तु तथा विक्रियात्मकं ज्ञातृत्वं, किंतु ज्ञानगुणाश्रयत्वम् । ज्ञानं चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यमिति—रामानुजः, **मैवम्**-- 'ज्ञा' धात्वर्थस्य ज्ञानस्य क्रियात्वेन गुणत्वाभावात् । ज्ञानक्रियाश्रयत्वलक्षणं ज्ञातृत्वं विक्रियात्मकमेवेति । आत्मनश्च स्वरूपभूताद्ज्ञानादन्यद्धर्मभूतं ज्ञानं नास्त्येवेति प्रागेव प्रत्यपादि । **यदत्रोक्तं श्रुतप्रकाशिकाकारेण**— कर्तृत्वं विक्रियात्मकतया नानात्मत्वप्रसञ्जकं 'कर्तारमीशं पुरुषं ब्रह्मयोनि'मिति परमात्मनोपि कर्तृत्वश्रवणान्न हि परमात्मा अनात्मा साधुकारीऽसाधुर्भवति । 'कर्ता शास्त्रार्थवत्त्वा'दित्यादिना आत्मनोपि कर्तृत्वस्य सिद्धान्तितत्वेन कर्तुरात्मनोप्यनात्मत्वप्रसङ्गात् । कर्तृत्वरहितस्य घटादेश्चानात्मन आत्मत्वप्रसङ्गाच्चेति, **तन्मन्दम्**----योयोऽनात्मा स स कर्तेति नास्माभिरुच्यते, किंतु यो यः कर्ता स सोऽनात्मेत्युच्यते- अकर्तुर्घटादेश्चानात्मत्वे प्रयोजकं न कर्तृत्वं, दृश्यत्वादिकमन्यदेव । नच यो यः कर्ता स सोऽनात्मेत्युक्तावपि दोषो दर्शित एवेति वाच्यं, 'निष्कलं निष्क्रियं शान्त'मित्यादिश्रुतिभिरात्मनो निष्क्रियत्वस्योक्तत्वादात्मपरमात्मनोरभेदाच्च । जगत्कर्तृत्वादिकं तु कूटस्थस्यापि माययोपपद्यते मरुभूमेरिव पंकिलत्वम् । तस्मान्निष्क्रिय एवात्मा कर्ता त्वनात्मैव । कर्ताहि क्रियया विक्रियते- अविकृतस्य क्रियाऽदर्शनात् । किंच चलनं क्रिया चलत्येव वस्तुनि क्रियादर्शनात्, आत्मा त्वचल इति कथं तत्र क्रिया ? नचात्मनो लोकान्तरगमनश्रवणादस्ति चलनमिति वाच्यं, लोकान्तरगंतृलिङ्गशरीरतादात्म्याध्यासप्रयुक्तत्वादात्मनो लोकान्तरगमनस्य श्रुत्या च लोकव्यवहारस्यैवानूदितत्वादिति । तस्माद्यद्यात्मा नित्य इति मतं, तर्हि विक्रियारहित एव- विक्रियावतोऽनित्यत्वदर्शनात् । यद्यविक्रियस्तर्हि निष्क्रिय एव- क्रियावतो विक्रियादर्शनात् । यदि निष्क्रियस्तर्हि ज्ञाता न भवत्येव-- ज्ञानस्य क्रियात्वादिति ।

**ननु** यद्यात्मा न ज्ञाता तर्हि ज्ञात एवेति सूत्रविरोध इति **चेन्मैवम्**---ज्ञ इत्यस्य नित्यचैतन्यस्वरूप इत्यर्थात् । नच जानातीति ज्ञ इति नित्यचैतन्यवानेवात्मेति वाच्यं, जानातीत्यस्य प्रकाशयतीत्यर्थात् । आत्मा हि स्वरूपचैतन्येन सर्वं सामान्यतः प्रकाशयति, वृत्तिप्रतिफलितचैतन्येन तु विशेषेण प्रकाशयति । अत एव 'स सर्वज्ञस्सर्ववि'दिति श्रूयते । अन्यथा सर्वज्ञसर्ववित्पदयोरैकार्थ्येन पुनरुक्तिस्स्यात् । एवं सर्वप्रकाशकत्वादात्मा ज्ञ—**इत्युच्यते** ।

**ननु** किमयमात्मा सर्वं स्वस्मै प्रकाशयति, यद्वा परस्मै ? आद्ये- सिद्धमात्मनो ज्ञातृत्वम् । द्वितीये- सिद्धं दीपादेरप्यात्मत्वं, यद्वा आत्मनोप्यनात्मत्वं सिद्धमिति **चेन्मैवम्**—ज्ञानस्य विषय-

नचैवमात्मनो दृश्यत्वमागतमिति वाच्यं, अन्तःकरणे लयविक्षेपशून्ये सत्यात्मा स्फुरतीत्येतावताऽऽत्मनोन्तःकरणे उपलभ्यमानत्वकथनात् । न चोपलब्धाप्यात्मैवेति वाच्यं, प्रमातुरेवोपलब्धत्वात्प्रत्यगात्मा हि साक्षी । ननु साक्षाद्द्रष्टरि सञ्ज्ञायामिति पाणिन्यनुशासनात्साक्षी साक्षाद्द्रष्टैव, नतु दृशिः, अत एव साक्षिणा प्रमाताप्युपलभ्यते- इति **मैवम्**---साक्षिगतं द्रष्टृत्वं विषयावभासकत्वमेव, नतु ज्ञातृत्वमित्यसकृदुक्तत्वात्— **इति** ।

**ननु** निर्विकारस्यात्मनो ज्ञातृत्वरूपविकारायोगादिति हि त्वया ज्ञाता न भवत्यात्मेत्युच्यते । न तु तथा विक्रियात्मकं ज्ञातृत्वं, किंतु ज्ञानगुणाश्रयत्वम् । ज्ञानं चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यमिति—रामानुजः, **मैवम्**-- 'ज्ञा' धात्वर्थस्य ज्ञानस्य क्रियात्वेन गुणत्वाभावात् । ज्ञानक्रियाश्रयत्वलक्षणं ज्ञातृत्वं विक्रियात्मकमेवेति । आत्मनश्च स्वरूपभूताद्ज्ञानादन्यद्धर्मभूतं ज्ञानं नास्त्येवेति प्रागेव प्रत्यपादि । **यदत्रोक्तं श्रुतप्रकाशिकाकारेण**— कर्तृत्वं विक्रियात्मकतया नानात्मत्वप्रसञ्जकं 'कर्तारमीशं पुरुषं ब्रह्मयोनि'मिति परमात्मनोपि कर्तृत्वश्रवणान्न हि परमात्मा अनात्मा साधुकारीऽसाधुर्भवति । 'कर्ता शास्त्रार्थवत्त्वा'दित्यादिना आत्मनोपि कर्तृत्वस्य सिद्धान्तितत्वेन कर्तुरात्मनोप्यनात्मत्वप्रसङ्गात् । कर्तृत्वरहितस्य घटादेश्चानात्मन आत्मत्वप्रसङ्गाच्चेति, **तन्मन्दम्**----योयोऽनात्मा स स कर्तेति नास्माभिरुच्यते, किंतु यो यः कर्ता स सोऽनात्मेत्युच्यते- अकर्तुर्घटादेश्चानात्मत्वे प्रयोजकं न कर्तृत्वं, दृश्यत्वादिकमन्यदेव । नच यो यः कर्ता स सोऽनात्मेत्युक्तावपि दोषो दर्शित एवेति वाच्यं, 'निष्कलं निष्क्रियं शान्त'मित्यादिश्रुतिभिरात्मनो निष्क्रियत्वस्योक्तत्वादात्मपरमात्मनोरभेदाच्च । जगत्कर्तृत्वादिकं तु कूटस्थस्यापि माययोपपद्यते मरुभूमेरिव पंकिलत्वम् । तस्मान्निष्क्रिय एवात्मा कर्ता त्वनात्मैव । कर्ताहि क्रियया विक्रियते- अविकृतस्य क्रियाऽदर्शनात् । किंच चलनं क्रिया चलत्येव वस्तुनि क्रियादर्शनात्, आत्मा त्वचल इति कथं तत्र क्रिया ? नचात्मनो लोकान्तरगमनश्रवणादस्ति चलनमिति वाच्यं, लोकान्तरगंतृलिङ्गशरीरतादात्म्याध्यासप्रयुक्तत्वादात्मनो लोकान्तरगमनस्य श्रुत्या च लोकव्यवहारस्यैवानूदितत्वादिति । तस्माद्यद्यात्मा नित्य इति मतं, तर्हि विक्रियारहित एव- विक्रियावतोऽनित्यत्वदर्शनात् । यद्यविक्रियस्तर्हि निष्क्रिय एव- क्रियावतो विक्रियादर्शनात् । यदि निष्क्रियस्तर्हि ज्ञाता न भवत्येव-- ज्ञानस्य क्रियात्वादिति ।

**ननु** यद्यात्मा न ज्ञाता तर्हि ज्ञात एवेति सूत्रविरोध इति **चेन्मैवम्**---ज्ञ इत्यस्य नित्यचैतन्यस्वरूप इत्यर्थात् । नच जानातीति ज्ञ इति नित्यचैतन्यवानेवात्मेति वाच्यं, जानातीत्यस्य प्रकाशयतीत्यर्थात् । आत्मा हि स्वरूपचैतन्येन सर्वं सामान्यतः प्रकाशयति, वृत्तिप्रतिफलितचैतन्येन तु विशेषेण प्रकाशयति । अत एव 'स सर्वज्ञस्सर्ववि'दिति श्रूयते । अन्यथा सर्वज्ञसर्ववित्पदयोरैकार्थ्येन पुनरुक्तिस्स्यात् । एवं सर्वप्रकाशकत्वादात्मा ज्ञ—**इत्युच्यते** ।

**ननु** किमयमात्मा सर्वं स्वस्मै प्रकाशयति, यद्वा परस्मै ? आद्ये- सिद्धमात्मनो ज्ञातृत्वम् । द्वितीये- सिद्धं दीपादेरप्यात्मत्वं, यद्वा आत्मनोप्यनात्मत्वं सिद्धमिति **चेन्मैवम्**—ज्ञानस्य विषय-

शाय स्वयं यतेत । तस्मादात्मनः प्रमातृत्वमेव बाधितं, चैतन्यरूपत्वं तु नेति चैतन्यमेव सत्यं, तदतिरिक्तं सर्वं मिथ्यैव- 'तत्सत्यं, अतोन्यदार्तं', 'विज्ञानमानन्दं ब्रह्मे'ति श्रुतेरिति—**संक्षेपः** । **यदुक्तमत्र रामानुजेन**—अस्य ज्ञानस्वरूपस्यैव मणिप्रभृतीनां प्रभाश्रयत्वमिव ज्ञानाश्रयत्वमप्यविरुद्धमिति, **तदसत्**—नहि मणिः- प्रभारूपः- येन तद्दृष्टान्तेनात्मनो ज्ञानरूपस्यापि ज्ञानाश्रयत्वमित्युच्येत । किंतु प्रभावद्द्रव्यमेव मणिः मणौ तैजसांशस्येव पार्थिवांशस्याप्युपलम्भात्- काठिन्यादिर्हि पार्थिवांशो मणावस्ति । तस्मादेकस्यैव वस्तुनो धर्मत्वं धर्मित्वं च क्वापि न दृष्टमिति कृत्वा नात्मनोपि स्वरूपं धर्मश्चेत्युभयं ज्ञानं भवितुं नार्हति—इति । **यच्चोक्तं** स्वयमपरिच्छिन्नमेव संकोचविकासार्हं ज्ञानमिति **तदप्ययुक्तम्**—अपरिच्छिन्नस्य पूर्णस्य संकोचविकासायोगात्- परिच्छिन्नस्य हि संकुचितत्वं विकसितत्वं च- यथा पद्मस्य । सर्वत्रास्तित्वं ह्यपरिच्छिन्नत्वम् । नचापरिच्छिन्नत्वं नित्यत्वमिति वाच्यं, तथापि तवेष्टासिद्धेः । नहि संकोचविकासरूपविकारवतो वस्तुनो नित्यत्वं सम्भवति । तस्मादनित्यस्यैव वृत्तिज्ञानस्य संकोचादिकम् । तच्च ज्ञानं नात्मधर्मः, नाप्यात्मस्वरूपं, किं त्वन्तःकरणधर्म एवेति नास्ति ज्ञानक्रियाश्रयत्वमात्मनः । **यदुक्तं सुदर्शनेन**—धात्वर्थाश्रयत्वमात्मनो न सम्भवतीति तदयुक्तम्—किं परमार्थभूतधात्वर्थाश्रयत्वं नात्मनः, यद्वा अपरमार्थभूतधात्वर्थाश्रयत्वम् ? आद्ये- घटादेरपि तदभावाद्भवेदात्मत्वम् । द्वितीये- भेदभ्रमाश्रयत्वेन स्यादनात्मत्वमात्मन इति, **तत्तुच्छम्**—स्वसमानसत्ताकधात्वर्थाश्रयत्वमनात्मत्वमिति विवक्षितत्वात् । अथ वा अपरमार्थभूतधात्वर्थाश्रयत्वमेवानात्मत्वम् । न च तदात्मनोस्ति- धात्वर्थस्यैवापारमार्थिकत्वे तदाश्रयत्वस्याप्यपारमार्थिकत्वादपारमार्थिकेन तेन पारमार्थिकस्यात्मनस्सम्बन्धाभावान्नास्त्यात्मनोऽपरमार्थभूतधात्वर्थाश्रयत्वम् । मिथ्याभूतप्रपञ्चाश्रयत्वमपि ह्यात्मनो मिथ्याभूतम्- मरुभूमेरुदकाश्रयत्वमिव । घटस्यामिथ्यात्वेन हि भूतले घटाश्रयत्वस्यामिथ्यात्वम् । अनात्मनस्तु अपरमार्थभूतधात्वर्थाश्रयत्वमस्ति- देहाद्यनात्मगतगमनादिधात्वर्थस्य व्यावहारिकत्वेनापारमार्थिकत्वादिति । यद्वा परमार्थभूतधात्वर्थाश्रयत्वमेवानात्मत्वम् । घटादेस्तु तदस्ति- लौकिकपरमार्थभूतधात्वर्थाश्रयत्वाद्घटादेः । आत्मनि प्रतीयमानं धात्वर्थाश्रयत्वं तु रज्जुसर्पवल्लौकिकपरमार्थभूतं न भवत्येव, किंतु मिथ्यैवेति न दोष इति । नचैवं लौकिकपरमार्थभूतधात्वर्थाश्रयत्वाभावाद्रज्जुसर्पादेरनात्मत्वं न स्यादिति वाच्यं, लौकिकपरमार्थभूतधात्वर्थानाश्रयत्वेसति व्यवहारकालाबाध्यत्वमात्मत्वमित्यभ्युपगमात् । विशेष्यमात्रोपादाने घटादेरात्मत्वं स्याद्विशेषणमात्रोपादाने रज्जुसर्पादेरात्मत्वं स्यादिति तदुभयवारणार्थमुभयोपादानमिति ।

**अथ यदुक्तं रामानुजेन**—ज्ञानं नित्यं तस्य चेन्द्रियद्वारा प्रसरोस्ति, तमिमं प्रसरमपेक्ष्य ज्ञानस्योदयास्तमयौ व्यपदिश्येते- ज्ञानप्रसरे तु कर्तृत्वमस्त्येव, तच्च न स्वाभाविकमपि तु कर्मकृतम्- एवंरूपं विक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूपस्यात्मन एवेति, **तदसत्**—किमात्मनस्स्वरूपभूतं ज्ञानं नित्यं, यद्वा धर्मभूतं, अथवोभयम् ? आद्य इष्ट एव । न द्वितीयः- 'तत्सत्यमतोन्यदार्त'मिति, आत्मस्वरूपादन्यस्यार्तत्वश्रवणात् । अत एव न तृतीयः- नच ज्ञानगुणकं ब्रह्मैव सत्यमिति तच्छ्रुत्यर्थ इति वाच्यं,

निर्गुण इति श्रुतिविरोधात् । नच सत्त्वादिगुणरहित इति निर्गुणश्रुत्यर्थ इति वाच्यम्, 'सत्त्वात्सञ्जायते ज्ञान'मिति गीतावचनात्सत्त्वादिगुणरहितस्य ज्ञानसत्ताऽयोगात् । अतएव गीतावचनाच्च ज्ञानस्यानित्यत्वम् । नच चक्षुरादीन्द्रियद्वारा प्रसृतत्वावस्थमेव ज्ञानमनित्यं, ज्ञानस्य हि प्रसरो जायते, नतु ज्ञानं इति वाच्यं, निरवयवस्य ज्ञानस्य प्रसरायोगात् । नच ज्ञानं सावयवमेवेति वाच्यं, सावयवत्वे सति तस्यानित्यत्वापातात् । नच निरवयवं नित्यमिति नास्ति व्याप्तिर्गगनस्य निरवयवस्याप्यनित्यत्वदर्शनादिति वाच्यं, गगननिरवयवत्वस्यासम्प्रतिपन्नत्वादात्मभिन्नं निरवयवं किमपि नास्तीत्यस्मत्सिद्धान्तात् । सावयवत्वादेव हि गगनस्य श्रूयमाणं जन्माप्युपपद्यते । तस्मादनित्यमेवेदमात्मस्वरूपादन्यद्ज्ञानम् । अत एव तत्कर्तृत्वमन्यस्योपपद्यते । यत्क्रियते तद्ध्यनित्यं यथा घटः । नच ज्ञानप्रसर एव क्रियते न तु ज्ञानमिति वाच्यं, निरवयवनित्यज्ञानस्य प्रसरानुपपत्तेर्दर्शितत्वात् ।

**ननु** श्लो।। नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं, ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिस्स्पन्दते ॥' इति शङ्कराचार्यैरेवोक्तत्वात्कथं नित्यज्ञानस्य प्रसरानुपपत्तिरिति **चेन्मैवम्**—आत्मस्वरूपभूतज्ञानस्य चक्षुरादिद्वारा बहिर्निस्सृतविषयाकारपरिणतान्तःकरणवृत्तिप्रतिफलितत्वमेव बहिस्स्पन्दनत्वेन विवक्षितमिति तादृशवृत्तेर्जन्यत्वेन तदवच्छिन्नं ज्ञानमपि जन्यमिति व्यपदिश्यत इति नास्माकं काचिदनुपपत्तिः । नच धर्मभूतज्ञानस्याप्येवमेवोपपत्तिः कल्प्येति वाच्यं, स्वरूपज्ञानस्यैव वृत्तिप्रतिफलनेन सर्वकार्यनिर्वहणे सति तदतिरिक्तधर्मज्ञानकल्पनं व्यर्थमप्रामाणिकं चेति । एतद्ज्ञानक्रियाकर्तृत्वं चात्मनः कर्मकृतमित्येतदयुक्तं- किं कर्मणैव ज्ञानं क्रियते, यद्वा कर्म निमित्तीकृत्यात्मना ज्ञानं क्रियते ? नाद्यः- घटवज्जडस्य तस्य ज्ञानकर्तृत्वायोगात् । अन्त्ये- आत्मनो ज्ञानकर्तृत्वं स्वाभाविकमेवेति प्राप्तं— यथा कर्मकृतं देहाधिष्ठातृत्वरूपं कर्तृत्वमात्मनस्स्वाभाविकमेवेति तव मतं तद्वत् । किंच यद्यात्मनो ज्ञानकर्तृत्वं न स्वाभाविकं तर्हि ज्ञातृत्वाभाव एव स्वाभाविक इति सिद्धम् । न चेष्टापत्तिः- ज्ञातृत्वरहित आत्मा ज्ञानगुणको न भवत्येव- ज्ञातृत्वं हि ज्ञानगुणः, तस्माद्ज्ञानमेवात्मा नतु ज्ञातेति— **संक्षेपः ॥**

**ननु** यदि ज्ञानस्वरूपस्यात्मनो न ज्ञातृत्वं तर्हि जडस्याहङ्कारस्यापि न ज्ञातृत्वमिति कृत्वा ज्ञातृत्वस्य निर्विषयत्वं प्राप्तमिति **चेन्मैवम्**—जडस्याप्यहङ्कारस्य चिच्छायापत्त्या भवति ज्ञातृत्वमित्युक्तत्वात् । **ननूक्तमेव** परं तु न तत्सम्भवति, तथाहि- केयं चिच्छायापत्तिः- किमहङ्कारच्छायापत्तिस्संविदः, उत संविच्छायापत्तिरहङ्कारस्य ? न तावत्संविदः- संविदि ज्ञातृत्वानभ्युपगमात् । नाप्यहङ्कारस्य— जडस्य तस्य ज्ञातृत्वायोगात् । द्वयोरप्यचाक्षुषत्वाच्च । न ह्यचाक्षुषाणां छाया दृष्टेति **मैवम्**—अहङ्कारच्छायापत्तिस्संविद इति नोच्यते, किंतु संविच्छायापत्तिरेवाहङ्कारस्य । संविच्छायापत्तिर्नाम संविद्यहङ्कारगतज्ञातृत्वच्छायापत्तिरिति नार्थस्सुदर्शनव्याख्यानुसारेण, किंतु अहङ्कारे संविदश्छायापत्तिरित्येव । छाया च न ज्ञातृत्वं, येन संविदि ज्ञातृत्वानभ्युपगमो दोषस्स्यात् । किंतु प्रतिफलनं- अहङ्कारे हि संवित्प्रतिफलति- दर्पण इव भास्करः । न चाचाक्षुषाणां छाया न दृष्टेति वाच्यं, अचाक्षुषस्यापि गगनस्य जले

प्रतिबिम्बदर्शनात् । नचालोकं तमो वा विना गगनं न प्रतिभातीति गगनं चाक्षुषमेवेति वाच्यं, गगनभागव्यापिनः प्रकाशस्य तमसो वा चाक्षुषत्वेपि गगनस्य साक्षिप्रत्यक्षसिद्धत्वेनाचाक्षुषत्वात् । यत्र प्रकाशस्तमो वोपलभ्यते तस्य प्रकाशतमोधिष्ठानद्रव्यस्य गगनत्वात् । तद्धि न चक्षुर्ग्राह्यं, किंतु सुखादिवदनुभवैकवेद्यमेवेति गगनमचाक्षुषमेव । नचैवं चक्षुर्व्यापाराभावेपि गगनोपलम्भस्स्यादिति वाच्यं, गगनाधेयप्रकाशतमसोर्ग्रहणार्थं चक्षुर्व्यापारस्यावश्यकत्वात् । चक्षुषा आधेयप्रकाशादिग्रहणे सत्येव तदाधारगगनप्रतीतिसम्भवादिति । नच गगनस्य नास्ति प्रतिबिम्ब इति वाच्यं, जानुदघ्नेपि जले गगनप्रतिबिम्बसत्त्वादेवागाधत्वप्रतीतिरिति । तथा अचाक्षुषस्यापि शब्दस्य प्रतिशब्दरूपच्छाया दृश्यत एव-- श्रुतिसूत्रकृत्सम्मतश्चायं चित्प्रतिबिम्बवादः । अतीन्द्रिये हि शास्त्रसिद्धेर्थे नातिशङ्कनीयम्—**इति** । **यद्वा** अहङ्कारस्य ज्ञातृत्वं चित्संसर्गकृतं- यथा वह्निसम्पर्कादयसो दाहकत्वं तद्वदिति ।

**ननु** वह्नेर्दाहकत्वसत्त्वात्तत्सम्पर्केणायसो दाहकत्वं भवति, संविदस्तु ज्ञातृत्वाभावात्कथं तत्सम्पर्केणाप्यहङ्कारस्य ज्ञातृत्वमिति; **चेन्मैवम्**—सूर्यतेजसो दग्धृत्वाभावेपि तत्सम्पर्काद्दर्पणविशेषस्य दग्धृत्वसद्भावदर्शनात् । न चासङ्गपुरुषस्य कथमहङ्कारसंसर्ग इति वाच्यं, आत्मनोहङ्कारेण सह वास्तवसंसर्गस्याभावेप्याध्यासिकसंसर्गस्य सत्त्वादिति । अथवा अहङ्कारस्य चिदभिव्यञ्जकत्वकृतं जडत्वम् । अहङ्कारो हि अनुभूतेरभिव्यञ्जकस्सन् स्वात्मस्थामेवानुभूतिमभिव्यनक्ति दर्पणवदिति । **नच** स्वयंज्योतिष आत्मनस्संविद्रूपस्याभिव्यङ्ग्यत्वं न सम्भवति, जडस्य चाहंकारस्याभिव्यञ्जकत्वशक्तिर्नास्ति स्वयंज्योतिषाह्यात्मना सर्वे पदार्था अनात्मानोऽभिव्यंज्यन्त इति वाच्यं, नेदमहंकारस्य चिदभिव्यंजकत्वं चिदवभासकत्वं, किंतु चित्प्रतिफलनग्राहत्वम् । अहंकारो हि स्वच्छद्रव्यत्वात्स चित्प्रतिफलनं सञ्चिता सामान्येन प्रकाशितमेव, तं तं विषयं विशेषाकारेण प्रकाशयति तत्तदाकारवृत्त्या । यद्यप्येवमात्माकारवृत्त्या आत्मानमप्यवभासयति साभासाहंकार इति तस्य चिदवभासकत्वमपि सम्भवति, तथापि चिदावरकाज्ञाननाशकत्वमेवाहङ्कारस्य, नतु चिद्भासकत्वं- स्वत एव चितो भासमानत्वात् । तस्मात्साभास एवाहङ्कारश्चिदावरकाज्ञाननाशनद्वारा चिदभिव्यक्तिकरो भवति । एवं चिद्भास्योप्यहङ्कारश्चित्प्रतिफलनग्रहणद्वारा चिदभिव्यञ्जकस्सर्वविषयावभासकश्च भवतीति स एव ज्ञाता । नचाहङ्कारप्रकाशकस्यात्मनोहङ्कारव्यङ्ग्यत्वं न सम्भवतीति वाच्यं, चक्षुःप्रकाशकस्यापि सूर्यस्य चक्षुर्भास्यत्वदर्शनात्, सूर्यप्रकाशितस्यैव दर्पणस्य सूर्यप्रतिफलनग्रहणदर्शनात् । आत्मभास्येन मनसा आत्मा वेद्यत इति त्वयाप्यभ्युपेतत्वाच्च । किंच- सर्वत्र सन्नप्यात्मा अन्तःकरण एवोपलभ्यत इत्यन्तःकरणस्य चिदभिव्यञ्जकत्वम् । अपिच- आत्मा अन्तःकरणप्रतिफलितस्सन्नेव स्वपरविषयकविशेषज्ञानवान्भवतीति चिदभिव्यञ्जकत्वमन्तःकरणस्येति सर्वथापि साभासाहङ्कार एव ज्ञाता **इति** । **यदुक्तं** अहङ्कारानुभवयोस्स्वभावविरोध इति **तदयुक्तम्**—अहङ्कारस्य जाड्यस्वभावसत्त्वेप्यनुभवस्य निर्धर्मकत्वेन स्वभावाभावात् । यदि तु अहङ्कारस्य प्रकाश्यत्वं स्वभावः, अनुभवस्य तु प्रकाशकत्वं स्वभाव इत्युच्यते, तर्हि तयोस्स्वभावयोर्नास्त्येव विरोधः । प्रकाशकेन हि प्रकाश्यं प्रकाश्यते दीपेन घटवत्- नहि दीपघटयोस्तेजस्तमसोरिवास्ति विरोधः- नहि तेजसा तमो

भास्यते- किंतु निर्मूल्यते । तस्मात्प्रकाश्यप्रकाशकयोरहङ्कारात्मनोर्नास्ति स्वभावविरोधः । नाप्यस्ति स्वरूपविरोधः- सूर्येण राहुरिव संविदैवात्मावरकमज्ञानमवभास्यत इत्युक्तत्वेन तत्कार्याहङ्कारादेस्संविदवभास्यत्वस्य का कथेति । **यदप्युक्तम्**—व्यङ्ग्यत्वे सत्यात्मनोऽननुभूतित्वमेव भवेद्घटवदिति **तच्चायुक्तम्**—अनुभूतेरननुभाव्यत्वे अनुभूतित्वमेव न स्यादिति स्ववचोविरोधात् । स्वमते आत्मनो वेद्यत्वस्याभ्युपगमाच्च । अस्मन्मतरीत्या तु परिहार उक्त एव । **यदुक्तं रामानुजेन**—करतलस्य रविकररश्मिप्रतिहतिद्वारा तद्बाहुल्यहेतुत्वमेव न व्यञ्जकत्वमेवेति कृत्वा रविकराणां स्वाभिव्यङ्ग्यकरतलाभिव्यञ्जकत्वं नस्तीति, **तदयुक्तं**—किमिति करतलवद्भूतलस्य रविकररश्मिप्रतिहतिद्वारा तद्बाहुल्यहेतुत्वं न स्यादिति ।

## अहङ्कारस्य चिदभिव्यंजकत्वोपपत्तिः ।

**ननु**—चिदभिव्यञ्जकत्वमहङ्कारस्योक्तं, संविदोहङ्कारनिर्वर्त्या साऽभिव्यक्तिः किंरूपा ? न तावदुत्पत्तिः- संविदस्स्वतस्सिद्धत्वेनानुत्पाद्यत्वात् । नापि तत्प्रकाशनं- तस्या अनुभवान्तराननुभाव्यत्वात् । नापि तदनुभवसाधनानुग्रहः- अनुभवसाधनस्य करणभूतस्य कर्तृभूतस्य वा अहङ्कारकरणीयानुग्रहाभावादिति, **मैवम्**—उत्पत्तिरित्येवास्तु- संविदः स्वतस्सिद्धत्वेनानादित्वेपि वृत्त्यवच्छिन्नसंविदस्सादित्वेनोत्पाद्यत्वात् । यद्वा तत्प्रकाशनमित्येवास्तु- सामान्याकारेण भासमाना हि संविद्विशेषाकारेण भास्यते साभासाहङ्कारेण । अथवा तदनुभवसाधनानुग्रह इत्येवास्तु- आत्मदर्शनसाधनस्य चित्तस्यैकाग्र्यसम्पादनं हि साभासाहङ्कारलक्षणप्रमात्रधीनम् । आत्मानं दिदृक्षुः पुरुषो हि स्वचित्तं प्रयत्नेन शोधयेत् । नचातीन्द्रियत्वादात्मनस्तद्दर्शने करणमेव नास्तीति कथं करणानुग्रह इति वाच्यम्, अतीन्द्रियोप्यात्मा मनोवेद्य एव- मनसोऽनिन्द्रियत्वेनातीन्द्रियवस्तुज्ञाने करणत्वादिति । **यदुक्तं रामानुजेन**—अनुभूतेरनुभाव्यत्वाभ्युपगमेपि अहमर्थेन न तदनुभवसाधनानुग्रहस्सुवचः- सहि अनुभाव्यानुभवोत्पत्तिप्रतिबद्धनिरसनेन भवेत्- यथा रूपादिग्रहणोत्पत्तिविरोधितमोनिरसनेन चक्षुषो दीपादीना । नचेह तथाविधं निरसनीयं सम्भाव्यते, न तावत्संविदात्मगतं तद्ज्ञानोत्पत्तिनिरोधि किंचिदप्यहङ्कारापनेयमस्ति । अस्तिह्यज्ञानमिति चेन्न अज्ञानस्याहंकारापनोद्यत्वानभ्युपगमात् । ज्ञानमेव ह्यज्ञानस्य निवर्तकम्- इति, **तन्मन्दम्**—एकाग्रमेव चित्तमात्मदर्शने साधनमिति सम्प्रतिपन्नम् 'दृश्यते त्वग्र्यया बुद्ध्या'तिश्रुतेः । तस्य च चित्तैकाग्र्यस्य विरोधिलयविक्षेपजनकं पुण्यापुण्यलक्षकं प्राचीनानन्तभवसञ्चितं दुरितं, तद्धि अहङ्कारेण साभासेन प्रमातृलक्षणेन ईश्वरप्रणिधानादिना निरसनीयमिति । तथा आत्मज्ञानोत्पत्तिप्रतिबन्धि आत्मावरकमज्ञानमस्ति- यथा घटावरकमज्ञानं । तच्च अन्तःकरणस्यात्माकारवृत्तिजननद्वारा अहङ्कारेण निरसनीयम्- वृत्तिज्ञानं हि ज्ञातृपरतन्त्रम् । तत एव न स्वत उदेतुमर्हति । तथाच संविदावरकाज्ञाननिवर्तकज्ञानकर्तृत्वेनाहङ्कारस्याहमर्थस्यात्मानुभवसाधनानुग्रहत्वमस्तीति ।

## अहङ्कारस्याज्ञानाश्रयत्वं, संविद अज्ञानविषयत्वं च ।

**ननु** अहङ्कारेण कर्त्रा ज्ञानेन करणेनापनेयमज्ञानं संविदि नास्त्येव- यस्य ज्ञानाश्रयत्वं तस्यैवा-

ज्ञानाश्रयत्वमपि- ज्ञानाज्ञानयोस्समानाश्रयविषयत्वनियमात् । नहि ज्ञानाश्रयत्वरहितस्य घटादेरज्ञानाश्रयत्वमस्ति, संविच्च ज्ञानमेव, न ज्ञानाश्रयमिति तवाभ्युपगम इति, मैवम्—मास्तु संविदो ज्ञानाश्रयत्वमिवाज्ञानाश्रयत्वमपि । तथापि ज्ञानविषयत्वमिवाज्ञानविषयत्वमप्यस्ति- न ममात्मसाक्षात्कार इत्यविदुषः, अस्ति ममात्मसाक्षात्कार इति विदुषश्चानुभवात् । इमे च ज्ञानाज्ञाने कर्तारमहङ्कारमेवाश्रित्य वर्तेते । तस्य हि ज्ञानाश्रयत्वादज्ञानाश्रयत्वमप्युपपद्यते । एवमहङ्काराश्रयज्ञानविषयत्वादात्मनो यथा विदितत्वं सम्भवति, तथा तदाश्रयाज्ञानविषयत्वात्तस्याविदितत्वमपि सम्भवति । इदमेवाज्ञानविषयत्वमात्मनोऽज्ञानावृतत्वमित्युच्यते । तथाचाहङ्काराश्रयमप्यात्मविषयकमज्ञानमात्मावरकं भवत्येवेति न संविदोस्त्यज्ञानाश्रयत्वमिति ।

यद्वा चैतन्याश्रितमेवाज्ञानं- अनाद्यज्ञानस्य सकार्याहङ्काराश्रितत्वायोगात् । अहङ्काराश्रितत्वपक्षेपि अहङ्कारावच्छिन्नचैतन्याश्रितत्वमेव वाच्यं, चैतन्यस्यानादित्वात् । तदेवाज्ञानं चैतन्यविषयं च । नच घटादिरज्ञानविषय इति वाच्यं, घटाद्यवच्छिन्नचैतन्यस्यैवाज्ञानविषयत्वात् । न हि पूर्वसिद्धस्य तमसः पश्चिम आश्रयो विषयो वा भवितुमर्हति- एवमज्ञानस्य समानाश्रयविषयत्वं सिद्धं, ज्ञानं तु वृत्तिरूपं कर्त्रहङ्काराश्रयमिति न संविदोस्ति ज्ञानाश्रयत्वम् ।

ननु कथमहङ्काराश्रितज्ञानेन संविदाश्रिताज्ञाननिवृत्तिः? नहि चैत्रज्ञानेन मैत्राज्ञाननिवृत्तिरिति, चेदुच्यते—अनाद्यज्ञानस्य चैतन्याश्रितत्वेपि साद्यज्ञानानामहङ्काराश्रितत्वाददोष इति । मूलाज्ञानमनादि, अवस्थाऽज्ञानानि तु सादीनि । तथाच चैतन्याश्रितं चैतन्यविषयं च मूलाज्ञानमेकमेव । घटाद्यवच्छिन्नचैतन्याश्रितानि तद्विषयाणि चाज्ञानानि नाना । इमान्यहङ्काराश्रितानि च भवन्ति । एतद्विरोधीनि घटज्ञानादिवृत्तिज्ञानानि चाहङ्काराश्रितान्येव । अखण्डात्माकारं च वृत्तिज्ञानमहङ्काराश्रितमेव । एवंसति घटाद्यवच्छिन्नचैतन्याश्रितं घटाद्यवच्छिन्नचैतन्यविषयमज्ञानमहङ्काराश्रितं च घटादिविषयावच्छिन्नचैतन्यविषयमज्ञानं द्विविधमपीदमहङ्काराश्रितघटाद्यवच्छिन्नचैतन्यविषयकज्ञानान्निवर्तत इति न काचिदनुपपत्तिरिति । अथवा साद्यज्ञानानामहङ्काराश्रितत्वमेवास्तु- यथा जन्यज्ञानानाम् । अनाद्यज्ञानं तु चैतन्याश्रितं, तदेव चैतन्यविषयं च । इदं चाज्ञानमहंकाराश्रितमपि भवति- अहङ्कारावच्छिन्ने चैतन्ये तत्सत्त्वात् । एवं च अहङ्काराश्रितैस्तत्तद्विषयैर्वृत्तिज्ञानैरहङ्काराश्रितानि तत्तद्विषयाण्यवस्थाऽज्ञानानि नाश्यन्ते । चैतन्याश्रितं स्वाश्रितं च चैतन्यविषयमज्ञानं चैतन्याकारवृत्तिज्ञानेनाहङ्काराश्रितेन नाश्यत इति—वेद्यम् ।

ननु सूर्ये तमस इव कथं चिन्मात्रे भवेदज्ञानस्य स्थितिरिति चेन्मैवम्—सूर्यतमसोरिव चिदज्ञानयोर्विरोधाभावात् । चिताह्यज्ञानं भास्यते- सुषुप्तौ ह्यज्ञानमनुभवति पुरुषः । नच कथं ज्ञानाज्ञानयोरविरोध इति वाच्यं, वृत्तिज्ञानाज्ञानयोरेव विरोधो नतु चैतन्याज्ञानयोरिति । नचाज्ञानकार्यान्तःकरणपरिणामरूपवृत्तिज्ञानस्यापि कथमज्ञानविरोधित्वमिति वाच्यं, सङ्घटितदारुद्वयजन्यस्यापि वह्नेस्तद्विरोधित्वदर्शनात् । यद्वा न चैतन्यमज्ञानविरोधि, नापि वृत्तिरज्ञानविरोधिनी- वृत्तेर्जडत्वेनाज्ञानाविरोधित्वात् । किंतु वृत्तिप्रतिफलितचैतन्यमज्ञानविरोधि । नच वृत्तेर्विरोधित्वं प्रागुक्तमिति वाच्यं, साभासवृत्तेरजडत्वमभिप्रेत्योक्तमिति ।

**ननु** विम्बचैतन्यमेव यदज्ञानं नाशयितुं नेष्टे- तदज्ञानं कथं प्रतिबिम्बचैतन्यं नाशयेदिति **चेन्मैवम्**—तृणादिराशिं स्वयं दग्धुमशक्तोपि सूर्यः दर्पणविशेषे प्रतिफलितस्सन् दहत्येवेति । तस्माद्वृत्तिज्ञानमेवाज्ञानविरोधीति कृत्वा आत्मस्वरूपज्ञानस्याज्ञानाश्रितत्वं युज्यत एव ।

**ननु** घटद्रष्टरि पुरुषे घटस्येवाज्ञानसाक्षिण्यात्मन्यज्ञानस्य स्थितिर्न सम्भवतीति **चेन्मैवम्**—तव मते आनन्दादिद्रष्टर्यात्मन्यानन्दादिसत्त्वात् । नच तव मते कथमुपपत्तिरिति वाच्यं, किं त्वं वस्तुत आत्मनोऽज्ञानाश्रयत्वं न सम्भवतीति वदसि ? यद्वा व्यवहारतः ? आद्य- इष्ट एव- नहि वस्तुतोऽज्ञानमस्ति येन तदाश्रयत्वमात्मनो भवेत । न द्वितीयः- यावद्व्यवहारमात्मनोऽज्ञानाश्रयत्वसम्भवात् । आत्मनि हि ज्ञानानन्दादिवदज्ञानमपि कल्पितं व्यवहारानुपपत्त्या । तस्मादात्मा न ज्ञानाश्रयः, नाप्यज्ञानाश्रयः, व्यवहारतस्तु स्वतोऽज्ञानाश्रयः स्वाध्यस्तान्तःकरणद्वारा तु ज्ञानाश्रयोपि भवतीति । **एतेन**—ज्ञातृभावविषयभावरहिते ज्ञानमात्रे साक्षिणि नाज्ञानसम्भव इति—**परास्तम्** । ज्ञानमात्रे तदसम्भवेपि साक्षिणि तत्सम्भवात् । साक्षी हि अज्ञानावच्छिन्नचैतन्यरूपः- शुद्धचैतन्यस्याद्वितीयत्वेन साक्षित्वायोगात् । अज्ञानोपहितचैतन्यस्य चाज्ञानाश्रयत्वं युक्तम् । अज्ञानवशादेव च विषयभावोप्यस्ति साक्षिणः । अज्ञानोपहितस्यैवाहङ्कारोपाध्यन्तरवशाद्ज्ञातृभावोपि भवति—**तस्मादज्ञानाश्रयत्वं साक्षिण उचितमेव ।**

**ननु** स्वावच्छिन्नं चैतन्यं स्वमज्ञानं कथमाश्रयेत- आत्माश्रयदोषप्रसङ्गात- अज्ञानाश्रयणात्प्रागज्ञानावच्छिन्नचैतन्यस्यैवाभावाच्च, **मैवम्**—अज्ञानस्य तदाश्रयणस्य तदवच्छेदस्य च अनादित्वेन अज्ञानाश्रयणात्प्रागिति वक्तुमशक्यत्वात् । अज्ञानं स्वावच्छिन्नचैतन्यमेवाश्रितवत्, न तु स्वमित्यात्माश्रयाभावाच्च । वस्तुतस्तु चैतन्यस्याज्ञानावच्छिन्नत्वमेवाज्ञानाश्रयत्वम् । नचाज्ञानावच्छिन्नत्वमनादि । ततश्चाज्ञानावच्छेदात्प्राक्चैतन्यं शुद्धमिति वक्तुं न शक्यते- येन शुद्धचैतन्ये कथमज्ञानसम्भव इति चोद्येत । एवमनादिचैतन्यावच्छेदकमनाद्यप्यज्ञानं ब्रह्मात्मज्ञानान्निवर्तत एव—'तरत्यविद्यां वितता'मित्यादिशास्त्रप्रामाण्यात । परमतेप्यनादिप्रागभावस्य नाशाभ्युपगमाच्च । तस्माद्यावद्व्यवहारमज्ञानावच्छिन्नमेव चैतन्यमिति कृत्वा चैतन्याश्रितमेवाज्ञानमिति—**संक्षेपः** ।

**ननु** संविदोऽज्ञानाश्रयत्वाभ्युपगमेपि आत्मतयाऽभ्युपगतायास्तस्याज्ञानविषयत्वाभावेन ज्ञानेन न तदज्ञाननिवृत्तिः- ज्ञानं हि स्वविषय एवाज्ञानं निवर्तयति- यथा रज्ज्वादौ, अतो न केनापि कदाचित्संविदाश्रयमज्ञानमुच्छिद्येत इति **रामानुजः, मैवम्**—ज्ञानाश्रयत्वमेवास्माभिस्संविदो निराकृतं, न तु ज्ञानविषयत्वम् । संविद्विषया अखण्डाकारा हि अन्तःकरणवृत्तिरस्माभिरभ्युपेता । तथाच घटानाश्रितेनापि घटविषयेण ज्ञानेन यथा घटाज्ञाननिवृत्तिः, तथा संविदनाश्रितेनापि संविद्विषयेण ज्ञानेन संविदज्ञाननिवृत्तिरिति । एवमात्मभूताया अपि संविदोऽज्ञानविषयत्वेनाहमात्मानं जानामीत्यनुभवः प्रमाणम् । ज्ञानेन तदज्ञाननिवृत्तौ च अहं ब्रह्मास्मीत्यनुभवः प्रमाणम् । प्रथमस्सर्वलोकसाधारणः, द्वितीयस्तु ब्रह्मविदस्साधारण इति—**वेद्यम्** । इति ॥

**ननु** एवं सति- एकस्यैव ब्रह्मविदो ज्ञानेन संविदज्ञानस्य निवृत्तत्वात्संविदश्च घटादिवदनेकत्वाभावात्सर्वस्यापि प्रमातृवर्गस्य लोकशब्दाभिधेयस्य निर्यत्नमेवात्मसाक्षात्कारान्मुक्तिस्स्यात्, **नचेष्टापत्तिः**--शुकादिमुक्तिश्रवणान्नेदानीं जगदुपलम्भो भवितुमर्हति- यदि शुकादिमुक्तिरर्थवादस्तर्हि संवित्साक्षात्काराभावान्न कस्यापि मुक्तिरिति मुक्त्यर्थं वेदान्तविचारो व्यर्थ इति, **मैवम्**- तुल्यमिदं चोद्यं घटादावपि--एक एव घटो यदा चैत्रेण दृष्टस्तदैव घटावरकाज्ञाननाशान्मैत्रादेस्सर्वस्यापि लोकस्य घटसाक्षात्कारप्रसङ्गात्। तस्माद्विषयाभेदेपि प्रमातृभेदाद्विषयावरकाज्ञानभेदः। तथासति चैत्रं प्रति संविदावरकमज्ञानं चैत्रज्ञानेनैव निवर्तते, नतु मैत्रज्ञानेनेति न कश्चिद्दोषः। नचैवमज्ञानस्यैकत्वात्कथमनेकाज्ञानसिद्धिरिति वाच्यं, एकस्याप्यज्ञानस्यौपाधिकभेदाभ्युपगमात् इति। **यदत्रोक्तं सुदर्शनेन**---ज्ञाननिवर्त्याज्ञानाश्रयत्वे सति संविदः ज्ञानविषयत्वप्रसङ्ग इति---**तदिष्टमेव**। नच ज्ञानत्वेन संविदः कथं ज्ञानविषयत्वमिति वाच्यं, स्वरूपज्ञानस्य वृत्तिज्ञानविषयत्वेनादोषात्। न चाविषयस्यात्मनः कथं विषयत्वमिति वाच्यं, वस्तुतोऽविषयस्याप्यात्मनः मायया कल्पितस्य विषयत्वस्य सत्त्वात्। आश्रयत्वविषयत्वादिधर्मरहितेपि ब्रह्मणि माया हि सर्वान् धर्मान् कल्पयति- यथा भूतभौतिकादीनीति---**संक्षेपः**।

## अहङ्कारस्य स्वात्मस्थानुभूत्यभिव्यंजकत्वप्रतिपादनम्।

**ननु** अहङ्कारोनुभूतिमभिव्यनक्तुनाम, तथापि न स्वात्मस्थामनुभूतिमभिव्यनक्ति--नहि स्वाश्रयतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः। प्रदीपादिष्वदर्शनादिति, **मैवम्**-- प्रदीपः किमात्मस्थमारुण्यादिकमभिव्यनक्ति, उत न? आद्ये- नास्ति व्यभिचारः, द्वितीये- कथमरुणो दीप इत्यादिप्रतीतिः। किंच यथा दर्पणादिः स्वात्मस्थं प्रतिमुखमभिव्यङ्ग्यमभिव्यञ्जयति तद्वद्दर्पोस्त्वस्तु। ननु न दर्पणादिर्मुखादेरभिव्यञ्जकः, अपितु चाक्षुषतेजःप्रतिफलनरूपदोषकृतस्तत्रान्यथावभासः। अभिव्यञ्जकस्त्वालोकादिरेव, नचेह तथाऽहङ्कारेण संविदि स्वप्रकाशायां तादृशदोषोपपादनं सम्भवतीति, **मैवम्**---दर्पणे मुखं न प्रतिफलितं, किंतु चाक्षुषतेज एव प्रतिफलितमित्यस्यानुभवविरुद्धत्वात्। सर्वो हि लोको दर्पणे मुखादि प्रतिफलितमिति प्रत्येति। किंच अचाक्षुषस्य छाया न दृष्टेति त्वया प्रागुक्तं, तद्विरुद्धं चेदं वचनम्- नहि चक्षुस्तेजश्चक्षुषा गृह्यते- स्वात्मस्थं स्वयं नाभिव्यञ्जयतीति त्वयैवोक्तत्वात्। चक्षुर्भिन्नेन गृह्यतेचेत्तर्हि तस्याचाक्षुषत्वमेवागतमिति कथं तच्छायासिद्धिः। **नन्वचाक्षुषस्यापि** गगनस्य प्रतिफलनमभ्युपगतवतस्तव मते चक्षुस्तेजःप्रतिफलनमपि सम्भवत्येवेति **चेन्मैवम्**---अनुभवेन शास्त्रेणवाऽर्थस्साधनीयः- न तु केवलानुमानेन। जानुदघ्नेपि जले गभीरत्वदर्शनात्तत्र गगनप्रतिबिम्बोऽध्यवसीयते- प्रतिबिम्बाख्यमपरं दृश्यते। 'त्रिविधं नभ' इति स्मृतेश्च। प्रकृते तु चाक्षुषतेजसो दर्पणादौ प्रतिफलने नास्त्यनुभवः, नापि शास्त्रमिति कथं तदभ्युपगमः। नापि तत्कल्पनेऽन्यथानुपपत्तिरस्ति। किंच ग्राह्यस्य चक्षुस्तेजःप्रतिफलनस्य ग्राहकाभावादभावः। नच चक्षुस्तेज एव स्वप्रतिफलनं गृह्णातीति वाच्यं, कर्मकर्तृभावविरोधात्। नच बिम्बप्रतिबिम्बयोः कर्मकर्तृभाव इति वाच्यं, **स्वप्रतिबिम्बे स्वव्यापारादर्शनात्**। नच मुखं प्रतिमुखं गृह्णातीति वाच्यं, चक्षुष एव तद्ग्राहकत्वात्। **नच चक्षुश्चक्षुः**-

प्रतिबिम्बं गृह्णातीति वाच्यं, चक्षुर्गोलकस्यैव प्रतिफलनं, नतु चक्षुरिन्द्रियस्येति चक्षुर्गोलकप्रतिबिम्ब-ग्रहणं चक्षुरिन्द्रियस्य युज्यत एवेति । नच चिदाभासं चिद्गृह्णातीति वाच्यं, चितो ज्ञानाश्रयत्वाभावस्योक्तत्वात् । नच स्वस्मिन्नेव स्वव्यापारो युज्यत इति कथं स्वप्रतिबिम्बे स्वव्यापारायोगः- छेत्तुः करस्य च्छेद्ये स्वस्मिन्नेव व्यापारदर्शनादिति वाच्यं, छेदककरभागादन्य एव छेद्यकरभाग इति ।

**ननु** यथा साक्षिणा गगनं तत्प्रतिबिम्बश्च वेद्यते, तथा तेनैव चाक्षुषतेजस्तत्प्रतिबिम्बश्च वेद्यत इति नास्ति ग्राहकाभाव इति, **मैवम्**—अनुभवाविषयस्य वस्तुनस्साक्षिवेद्यत्वकल्पनायोगादन्यथा शशशृङ्गादेरपि तत्कल्पनप्रसङ्गात् । अपिच यदि दर्पणे मुखस्य प्रतिफलनं न स्यात्तर्हि सूर्यस्यापि न स्यादेव । नचेष्टापत्तिः- 'अत एव चोपमा सूर्याकाशादिव'दिति सूत्रविरोधात् । **ननु** दर्पणे मुखादेर्नास्ति प्रतिफलनमित्यस्माभिर्नोच्यते- चाक्षुषस्य छायाभ्युपगमात् । किंतु दर्पणे प्रतिफलितस्य वस्तुनो न दर्पणमभिव्यञ्जकं, किंतु तत्प्रतिफलितं चाक्षुषतेज एवेति वदाम इति, **चेन्मैवमपि**—चाक्षुषतेजसः प्रतिफलनाभावस्योक्तत्वात् । चाक्षुषतेजस एव दर्पणप्रतिफलितमुखग्राहकत्वे सम्भवति सति तत्प्रतिफलनकल्पनायोगाच्च । **ननु** दर्पणे मुखादेरेव प्रतिफलनमित्यस्तु, चाक्षुषतेजःप्रतिफलनं मास्तु, तथापि न दर्पणस्य स्वात्मस्थप्रतिमुखाभिव्यञ्जकत्वं, किं त्वालोकादेरेवेति- **मैवम्**—आलोकादिसहकृतस्यैव दर्पणस्य मुखादिप्रतिबिम्बग्राहित्वेन तदभिव्यञ्जकत्वात् । नह्यालोकाद्यभावे दर्पणमात्रं मुखादिप्रतिबिम्बग्राहि भवेत् । **ननु** आलोकादिसहकृत एव दर्पणे मुखादिप्रतिफलनमस्तु, तथापि- दर्पणस्य प्रतिमुखादिव्यञ्जकत्वं तु नेति चेत्- **मैवम्**—रज्जुसर्पवदज्ञातसत्ताकप्रतिबिम्बस्य दर्पणे स्थित्ययोगात् । दर्पणस्य यत्सम्प्रतिपन्नं मुखादिप्रतिबिम्बग्राहित्वं तदेव मुखादिप्रतिबिम्बाभिव्यञ्जकत्वमपि । अतएव चैतन्याभिव्यञ्जकत्वं नामाहङ्कारस्य चैतन्यप्रतिफलनग्राहित्वमेवेत्युक्तमभियुक्तैः । भवतु वा दर्पणस्य स्वप्रतिफलितमुखानभिव्यञ्जकत्वं, जडत्वात् कथं पुनरहङ्कारस्य तत् । अहङ्कारो हि चैतन्यप्रतिफलनग्राही सन्नजड एव जातः- दर्पणादिवस्तु न मुखादिप्रतिफलनग्राही सन्नजडो जातः- स्वप्रतिफलितदर्पणादेरजडत्वात् । अहङ्कारप्रतिफलितं चैतन्यं तु न जडमिति कथं साभासाहङ्कारस्याजडस्य स्वात्मस्थानुभूत्यनभिव्यञ्जकत्वमिति । तस्मादहङ्कारः स्वात्मस्थामेवानुभूतिमभिव्यनक्ति । **यदुक्तं** संविदि तादृशदोषापादनं न सम्भवतीति **तदयुक्तं**—किं वस्तुतो न सम्भवति, यद्वा व्यवहारतः ? आद्य इष्ट एव । न द्वितीयः- मायया सर्वसम्भवात् । माया ह्यहङ्कारे संविदं प्रतिफलयति ।

**ननु** ज्ञानतत्साधनयोरनुग्राहकस्य च यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्यान्नाहङ्कारस्यात्मप्रतिफलितानुभूतिव्यञ्जकत्वमिति, **मैवम्**—प्रमारूपज्ञानादेरेव तत्स्वाभाव्यं, नाप्रमारूपज्ञानादेरिति । प्रमारूपं च ज्ञानमनधिगताबाधितार्थविषयं, सच विषयः प्रत्यगभिन्नं ब्रह्मैकमेव । घटादिज्ञानानां प्रमात्वं तु सापेक्षं, यावद्व्यवहारमबाधितार्थविषयकत्वात् । अहङ्कारस्तु प्रमाज्ञानाश्रयोऽप्रमाज्ञानाश्रयश्च भवति- वृत्तेरात्मानात्माकारद्वयसत्त्वात् । तत आत्माकारवृत्तिः प्रमा, अनात्माकारवृत्तिरप्रमा । एवं सति अहङ्कारस्य स्वात्मस्थानुभूत्यभिव्यञ्जकत्वे न काचिदनुपपत्तिः । ननु अहङ्काराभिव्यङ्ग्या सा अनुभूतिः किं

बिम्बभूता ? यद्वा प्रतिबिम्बभूता ? आद्ये- स्वप्रकाशायास्तस्या व्यङ्ग्यत्वमयुक्तम्—द्वितीये प्रतिबिम्बरहितोऽहङ्कारः, किं प्रतिबिम्बमभिव्यनक्ति, यद्वा स प्रतिबिम्बः ? आद्ये जडस्याहङ्कारस्य तदयोगः, द्वितीये कर्मकर्तृभावविरोधः, इति **मैवम्**—साभासाहङ्कारस्यैवाभिव्यञ्जकत्वात्तदभिव्यङ्ग्यानुभूतिर्बिम्बभूतैव । यावद्व्यवहारं संविदि बिम्बभावस्येव वेद्यत्वस्यापि कल्पितस्य सत्त्वात् । नच तस्या अहंकारस्थत्वमयुक्तमिति वाच्यं, सर्वव्यापिन्यास्तस्या अहंकारस्थत्वस्यायुक्तत्वात् । यद्वा प्रतिबिम्बरूपेणात्मस्था नानुभूतिरिति वक्तव्यम् । एकमेव हि चैतन्यमुपाधिवशाद्बिम्बप्रतिबिम्बभावं भजत इति कृत्वा अहंकाराद्बहिर्बिम्बरूपेणेव तदन्तःप्रतिबिम्बरूपेणापि सैवास्तीति । नचैवं प्रतिबिम्बस्यापि बिम्बवदमिथ्यात्वमापतितमिति वाच्यं, बिम्बवत्प्रतिबिम्बस्यापि मिथ्यात्वमेवागतमिति बिम्बप्रतिबिम्बानुस्यूतं हि वस्तु सत्यं, नह्युपाधिदर्पणादिविगमे मुखादेः प्रतिबिम्बत्वमिव बिम्बत्वमप्यनिवृत्तं भवति । एवमौपाधिकबिम्बप्रतिबिम्बभावापन्नसंविदभिव्यञ्जकोप्यहङ्कारस्तात्पर्यवृत्त्या चिन्मात्रं बोधयत्येव । तथाच नानुग्राहकस्याहङ्कारस्य यथावस्थितवस्तुप्रतिपत्तिजनकत्वस्वाभाव्यप्रच्युतिरपि-- यावद्व्यवहारमहङ्कारे प्रतिबिम्बरूपेणात्मनस्सत्त्वात्तस्यार्थस्य यथावस्थितवस्तुत्वाच्च- इति । **यदुक्तं** अन्तःकरणभूताहङ्कारस्थतया संविदुपलब्धेर्वस्तुतो दोषतो वा न किञ्चिदिह कारणमिति **तदयुक्तम्**—वस्तुतोऽहङ्कारस्यैवाभावात्कथं तत्र संविदः स्थितिः- व्यवहारतस्तु अहङ्कारस्य सत्त्वान्मायया तत्र संवित्प्रतिफलनसम्भव इत्युक्तत्वात् । नच मूर्तस्वच्छस्थूलद्रव्य एव चाक्षुषस्यैव प्रतिफलनमिति वाच्यं, तस्य प्रत्युक्तत्वात् ।

**ननु** गगनादेरचाक्षुषस्य कथं चित्प्रतिफलनमस्तु नाम- अमूर्तास्वच्छास्थूलद्रव्ये तु कस्यापि न प्रतिफलनमिति **चेन्मैवम्**—स्वच्छत्वमात्रमेव प्रतिफलनप्रयोजकं, न तु मूर्तत्वादिकम् । अहङ्कारश्चातिस्वच्छ इति तत्र संवित्प्रतिफलनमुचितमेव- गगने शब्दप्रतिफलनमप्युपलभ्यते हि- शास्त्रैकगम्येऽर्थे किं तर्कावष्टम्भेन । शास्त्रं च चितः प्रतिफलनं वक्ति- 'आभासस्त्वपरं बिम्बभूतमेवं त्रिधा चिति'रित्यध्यात्मरामायणात्-- इति । यद्वा सर्वव्यापित्वेन संविदोहङ्कारे स्थितिस्तावदविवादा । अहङ्कारस्थायास्संविदोऽहङ्कारेण सह तादात्म्याध्यासो भवति- यथा तव मतेपि जीवस्य देहस्थस्य देहेनसह तादात्म्याध्यासः, एवमात्मतद्धर्माणामनात्मन्यहङ्कारे, अहङ्कारतद्धर्माणामात्मनि चाध्यासे सति सर्वव्यवहारसिद्धिः । स एवात्मतद्धर्माणामहङ्कारेऽध्यासस्संवित्प्रतिफलनमित्युच्यते । स चाहङ्कारस्स्वस्मिन्नध्यस्तमात्मानमभिव्यञ्जयतीति, युक्तमहङ्कारस्य संविदभिव्यञ्जनम् । अथवा सर्वव्यापि गगनं घटादिभिरिव सर्वव्यापिनी संविदन्तःकरणादिभिरवच्छिद्यते । तत्र स्वच्छत्वादन्तःकरणे संवित्प्रतिभाति । तदेतदन्तःकरणोपलभ्यमानत्वमेव संविदोन्तःकरणव्यङ्ग्यत्वमित्यास्ताम् । तस्माच्चिदनुग्रहादहंकारः प्राप्तचैतन्य इति ज्ञाता भवत्येव ।

## अहमर्थविचारः ।

**ननु** संविद आत्मत्वं न भवति, अहम्भावविगमे प्रत्यक्त्वायोगादिति सुदर्शनः, **तन्मन्दम्**—प्रत्यक्त्वाहन्त्वयोस्सामानाधिकरण्याभावात् । नचाहमर्थ एव प्रत्यगात्मेति वाच्यं, तस्यानात्मत्वादिद-

मर्थवत्- अहमिदमर्थकल्पनाधिष्ठानचैतन्यस्यैव प्रत्यगात्मत्वात् । आत्मा च स्वयंशब्दार्थः । सच सर्वानुगतः- अत एव घटः स्वयं न जानातीत्यादिप्रतीतिः । अहमर्थवदिदमर्थोप्यात्मनि कल्पितत्वेनात्मा हि भवति । न चाकल्पित एवाहमर्थ इति वाच्यं, अकल्पितत्वे सति तस्य नित्यत्वापातात् । नच नित्य एवेति वाच्यं, सुषुप्तौ तस्याभावात् । अहमिति प्रतीत्या हि सत्त्वमहमर्थस्याहङ्कारस्य साध्यते-- यथा सर्प इति प्रतीत्या रज्जौ सर्पसत्त्वम् । नहि सुषुप्तावहमिति प्रतीतिः । **ननु** तमोगुणाभिभवा-त्परागर्थानुभवाभावाच्चाहमर्थस्य विविक्तस्फुटप्रतिभासाभावेपि अप्रबोधादहमित्येकाकारेणात्मनस्स्फुरणा-त्सुषुप्तावपि नाहम्भावविगम इति, **मैवम्**—मदभिमतस्याहमर्थस्याहङ्कारस्य त्रिगुणात्मकप्रकृतिकार्यत्वेन त्रिगुणत्वाद्भवति तमोगुणाभिभवः । त्वदभिमतस्य प्रत्यगात्मनस्तु त्रिगुणातीतत्वान्नास्ति तमोगुणाभिभवः । नच स्वतो निर्गुणस्यापि प्रतीचः प्रकृतिसंसर्गात्सगुणतेति वाच्यं, असङ्गपुरुषस्यात्मनः प्रकृतिसंसर्गा-योगात् । तथा सुषुप्तौ अज्ञानानुभवसत्त्वादज्ञानस्य च परागर्थत्वात्परागर्थानुभवाभाव इत्यपि न युक्तम्-- अहमित्येकाकारेण स्फुरणादित्यप्ययुक्तं- तदा अहमाकारवृत्तेरेवाभावात् । नच प्रत्यक्त्वरूपेण स्फुरण-मस्तीति वाच्यं, तस्येष्टापत्तेः । नच प्रत्यक्त्वमहं त्वमेवेति वाच्यं, तस्य प्रत्युक्तत्वात् । तस्मान्नास्ति सुषुप्तावहम्भावः ।

**ननु** तव मतेपि सुषुप्तावहंकारस्सर्वात्मना नैव नष्टः- तथासति मुक्तिप्रसङ्गादितिचेत्सत्यं, मम मते अहंकारः कारणात्मना तिष्ठति सुषुप्तौ- कार्यस्य कारणात्मना स्थितिर्हि लयः- इयमेव स्थितिः संसारात्मिकेत्युच्यते । एवमहंकारनाशेपि सुषुप्तावहंकारसंस्कारानाशान्न मुक्तिः । एवमहंकारसंस्कार-सचिवाज्ञानात्मककारणशरीरवत्त्वादेव सुषुप्तौ जीवस्य प्राज्ञशब्दवाच्यत्वम् । सचाहंकारसंस्कारो नाहं-प्रतीतिजनकः- यथा प्रलये प्रकृतौ निलीय स्थिता जागतपदार्था न स्वप्रतीतिजनकाः तद्वत् । तस्मात् सुषुप्तौ प्रतीचस्सत्त्वेप्यहम्बुद्ध्यभावान्न तस्याहमर्थत्वम् । अहं बुद्ध्यभावादेव नाहंकारस्य च सत्त्वम् । **यदत्रोक्तं सुदर्शनेन**—प्रत्यक्त्वादयस्सर्वात्मसाधारणास्सुखित्वदेवत्वादयस्सर्वात्मासाधारणा इति **तत्तु-च्छम्**—देवत्वमनुष्यत्वादीनां देहधर्मत्वात्सुखित्वादीनामन्तःकरणधर्मत्वाच्च तेषां प्रत्यगसाधारणधर्मत्वा-योगात् । सर्वव्यापिनोऽनन्तस्य प्रतीचो भेदकाभावेन नानात्वाभावाच्चेति ।

**ननु** सुप्तोत्थितपरामर्शात्सुषुप्तौ न ज्ञप्तिमात्रावशेषता, किंतु अहम्भावयुक्तस्यैवाहमर्थस्य । तथाहि सुप्तोत्थितो न हि कश्चिदहम्भावावियुक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिरहमज्ञानसाक्षितयावतिष्ठ इत्येवंविधां स्वापसमकालामनुभूतिं परामृशति, किंतु सुखमहमस्वाप्समिति, **मैवम्**—यदि घटानुभववेलायामिव सौषु-प्तिकसुखानुभववेलायामप्यहमर्थस्यात्तर्हि घटमहं पश्यामीतिवत्सुखमहमनुभवामीति प्रतीतिर्भवेदेव । परा-मर्शकाले त्वहङ्कारसत्त्वाद्दर्शितपरामर्शोदयः । न चान्येनाहङ्कारादनुभूतस्य सुखस्य कथमहङ्कारेण परामर्श इति वाच्यं, यदहङ्कारसंस्कारसचिवाज्ञानोपाधिकेन साक्षिणा यदनुभूतं तदहङ्कारेण तस्य परामर्श इति । तस्मादनुभवकालेऽहमर्थाभावान्न भवद्दर्शितपरामर्शोदयः ।

**ननु** स्वापकालेऽहमर्थाभावादहंग्रहपूर्वकोऽनुभवो मास्तुनाम- अनुभवमात्रमस्ति, तस्य च परा-

मर्शो दर्शितविधया सम्भवत्येव । यथा सुषुप्तावहम्भावाभावेपि सुप्तोत्थितस्य तत्सत्त्वात्सुखमहमस्वाप्समिति परामर्शः, तथा अज्ञानसाक्षितया ज्ञप्तिमात्रमहमवातिष्ठ इति परामर्शो भवेदेव, **मैवम्**—सुषुप्तौ न चिन्मात्रस्यावशेषस्तथा सत्ययत्नतः सर्वमुक्तिप्रसङ्गात् । किंतु अज्ञानावच्छिन्नचैतन्यलक्षणस्य प्राज्ञस्यैव । सच तदानीमविद्यावृत्तिभिस्सुखमज्ञानं चानुभवति, न त्वज्ञानसाक्षिचैतन्यमात्रं, ज्ञानं विना तदनुभवा-योगात् । ज्ञानं चान्तःकरणवृत्तिरूपं, साच तदा नास्त्येवेति । अत एव सुषुप्तौ स्वेनानुभूतं सुखमज्ञानं च प्राज्ञो जागरे अहङ्कारतादात्म्याध्यासं प्रपद्य सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति परामृशत इति । **यदुक्तमत्र सुदर्शनेन**—'अत्रायं पुरुषस्स्वयंज्योतिर्भव'तीति श्रुतेः पुरुषशब्दवाच्यः प्रत्यगात्मा न सविन्मात्रं किंतु ज्ञातैव, 'एष हि द्र'ष्टेति श्रुतौ विज्ञानात्मा पुरुष इति ज्ञातुरेव पुरुषत्वश्रवणात् । लोके ज्ञातरि पुरुषशब्दप्रसिद्धेश्च- इति, **तदयुक्तम्**—पूर्णत्वं पुरिशयनं वा पुरुषशब्दप्रवृत्तिनिमित्तमिति श्रुतिसिद्धं- तत्र पूर्णत्वलक्षणं पुरुषत्वं तव मते प्रतीचो न सम्भवत्येव । प्रत्यगात्माहि तव मते भवत्यणुः । मम मते तु न ज्ञातुरहंकारस्य तदुपपद्यते, तस्य परिच्छिन्नत्वात्किन्त्वपरिच्छिन्नायास्संविद एवेति संविदेव स्वयम्प्रकाशः पुरुषः । पुरिशयनलक्षणं पुरुषत्वं तु संविदोन्तःकरणाध्यासाद्भवति । अहंकारस्य तु स्वत एवेति । यदि तु पुरिशयनंनाम देहे साभिमानता, तर्हि सा अहंकारस्यापि संविद्धर्माध्यासादेव भवति स्वतस्तस्य जडत्वात् । यद्यपि सर्वव्यापिन्यास्संविदः पुरि शयनमपि स्वतस्सम्भवति तथापि पुर्येव शयनं तस्या अध्यासप्रयुक्तमेव । एवं तत्रतत्र तात्पर्यानुरोधेन पुरिशयनलक्षणं पुरुषत्वं, संविदोऽहंकारस्य च भवत्येव । यद्यपि न केवलसंविदः केवलाहंकारस्य वा भवति, तथापि अहंकारावच्छिन्नसंविद-स्संविदाभाससहिताहंकारस्य वा भवतीति बोध्यम् । एवंसति 'अत्रायं पुरुषस्स्वयंज्योतिर्भव'तीति श्रुति-स्स्वप्नावस्थायां पुरुषस्य स्वयंज्योतिष्ट्वं, प्रतिपादयतीति कृत्वा तत्र स पुरुषस्तैजसश्शरीरद्वयावच्छिन्नो ज्ञातैव-- यथा जाग्रति शरीरत्रयावच्छिन्नो ज्ञाता पुरुषशब्दवाच्यस्तद्वत् । अयमेव जाग्रदभिमानी विश्वः एष हीति श्रुतौ पुरुषशब्देन निर्दिष्टः । एवं जाग्रत्स्वप्नावस्थाद्वयाभिमानिनोर्विश्वतैजसयोश्श्रुतिद्वये पुरुषत्व-स्योक्तावपि न संविदः पुरुषशब्दवाच्यत्वस्य कापि क्षतिः । पूर्णत्वलक्षणपुरुषत्वस्य तत्रैव सत्त्वात् । किंच विश्वतैजसयोरुक्तयोरनुक्तस्य च कारणशरीरावच्छिन्नस्य प्राज्ञस्य यद्वास्तवं स्वरूपं विज्ञानं तदेव संवित् । तच्छ्रुत्यैवोक्तं विज्ञानात्मेति । ज्ञानस्वरूप इति हि तदर्थः । आत्मशब्दस्य स्वरूपवाचित्वात् । ज्ञानधर्मक इत्यर्थवर्णनं त्वयुक्तमेवात्मशब्दस्य धर्मपरत्वाभावात् । तथाच पुरुषशब्दवाच्या अपरिच्छिन्ना संविदेव मनश्चक्षुरादितादात्म्याध्यासाज्जाग्रति द्रष्टा श्रोता च भवन्विश्व इत्युच्यते । अयं च विश्व आदि-त्यादिचक्षुराद्यनुग्रहाज्जगत्प्रकाशयतीति नास्य स्वयंज्योतिष्ट्वं विविच्य सुग्रहम् । सैव संवित्स्वप्ने सर्वेन्द्रियोपरमादादित्यादिदेवताभावाच्च स्वाविद्यया स्वयमेव सर्वमवभासयन्ती सती स्वयंज्योतिः पुरुष-स्तैजस इत्युच्यते । सैव सुषुप्तौ सर्वद्वैतोपरमादज्ञानानन्दभुक्प्राज्ञ इत्युच्यते । अस्यचावस्थात्रयस्याविद्य-कत्वात्तत्त्रयसाक्षी तत्त्रयास्पृष्टस्तुरीयश्चिन्मात्रः प्रत्यगात्मेति स्थितम् । एवं सति कथं तव श्रुत्यनुग्रहो मतस्य । प्रत्युत श्रुतिविरोध एव- प्रत्यगात्मा विज्ञानस्वरूप एवेति श्रुतिभिर्बहुश उद्घुष्टत्वात् । नच

ज्ञानस्वरूपोपि ज्ञातैवेति वाच्यं, ज्ञानस्य ज्ञातृत्वायोगात् । यदि तु ज्ञानमेव ज्ञात्रिति मतं, तर्हि आत्मा ज्ञातैव न तु ज्ञानमिति कुत उच्यते । **ननु** नास्माभिस्तथोच्यते- किंतु आत्मा ज्ञानमात्रं न भवति, किंतु ज्ञातापि भवतीत्युच्यते । तथाच ज्ञानस्वरूपो ज्ञानगुणकश्चात्मेति मन्मतमिति **चेन्मैवम्**—एकस्यैव ज्ञानस्य स्वरूपत्वधर्मत्वरूपधर्मद्वयायोगात्, ज्ञानद्वित्वस्याप्रसिद्धत्वाच्चेति । तस्मात्पुरुषशब्दस्य संविद्ज्ञातृद्वयसाधारण्येपि संविदेवात्मा, नतु ज्ञाता आत्मा- सत्यस्यात्मनो मिथ्याभूतज्ञातृत्वायोगात्, मिथ्याभूतस्य ज्ञातुस्सत्यात्मत्वायोगाच्च । आत्मभिन्नं हि सर्वं मिथ्या-- 'स आत्मा तत्सत्यम्'- 'अतोन्यदार्त'मिति श्रुतेरिति लोके ज्ञातम् । पुरुषशब्दप्रसिद्धिस्तु मदनध्वजवति पिण्डे पुरुषशब्दप्रसिद्धिरिव नेया, नहि लोकप्रसिद्धिश्शास्त्रीयपदार्थनिर्णयाय प्रभवति-- 'नहि वाजिभ्यो वाजिन'मित्यत्र वाजिनमिति पदं लोकप्रसिद्ध्या तुरगं बोधयति । भवतु वा लोकप्रसिद्ध्यनुरोधात्पुरुषशब्दो ज्ञातरि प्रसिद्धस्तथापि नास्माकं कापि क्षतिः- ज्ञातुः पुरुषस्य तस्य यत्स्वरूपं ज्ञानं तदेव खल्वात्मेत्यस्माभिरुच्यते । ज्ञातैवात्मा, ज्ञातुस्स्वरूपं तु नात्मेति वाक्यं श्रुत्वा तु बाला अपि परिहसेयुः-- इति । **यदुक्तं** सुखमहमस्वाप्समिति प्रत्यवमर्शेनाहमर्थस्य तदानीं सुखित्वं ज्ञातृत्वं च ज्ञायत इति **तदयुक्तम्**—अनुभवकाले अहमिति प्रतीत्यभावेन अहमर्थाभावात्, अहमर्थत्वेन त्वदभिमतस्य च प्रत्यगात्मनस्सुखरूपत्वेन सुखित्वाभावात्, धर्मभूतज्ञानस्य च सुषुप्तावभावाद्ज्ञातृत्वाभावाच्च । नच स्वरूपज्ञानादेव तदा ज्ञातृत्वसिद्धिरिति वाच्यं, किं स्वरूपज्ञानमेव ज्ञात्रित्युच्यते, यद्वा स्वरूपज्ञानादेवाज्ञानसुखादिज्ञानमात्मनो जायत इति ? उभयथापि ज्ञानस्य स्वरूपभूतस्य ज्ञानाश्रयत्वमागतमिति कृत्वा कथं धर्मिभूतात्माश्रितस्य तस्य ज्ञानस्य धर्मज्ञानत्वाभावः । नचैवं सुषुप्तावपि धर्मज्ञानमात्मनोस्तीति वाच्यं, तत्तु विषयप्रकाशनवेलायामिति स्वभाष्यविरोधात् । किंच यद्यात्मनस्सुखित्वं ज्ञातृत्वं च स्यात्तर्हि दुःखित्वादिकमपि स्यादेव । नचेष्टापत्तिः-- कूटस्थस्यात्मनस्सुखदुःखादिविकारायोगात् । अपिच यद्यात्मनस्सुखं धर्मस्तर्हि सुखमहमस्वाप्समिति किमिति परामृशेत् । किंतु सुख्यहमस्वाप्समित्येव । नच सुखं यथातथेति क्रियाविशेषणमिदमिति वाच्यं, क्रियायास्सुखाश्रयत्वायोगादिति सुदर्शनेनैवोक्तत्वात् । तस्मात्सुखमहमस्वाप्समित्यस्य सुखरूपोहमस्वाप्समित्येवार्थः समीचीनः । लोकस्तु नैतदभिप्रायेण सुखमहमस्वाप्समिति वाक्यं प्रयुंक्ते, किंतु सुखं यथातथेत्यभिप्रायेणैव- यथा मम सुखं भवेत्तथेत्यभिप्रायात् । लोको ह्यविद्वान् सुखमात्मधर्मत्वेनाभिमन्यते । नच जडस्य सुखस्य कथमात्मस्वरूपत्वमात्मा हि ज्ञानस्वरूप इति वाच्यं, ज्ञानस्यैव सुखत्वात् । एकाकारमेव ह्यात्मस्वरूपं प्रकाशकत्वाद्ज्ञानमिति आनन्दयितृत्वात्सुखमिति च व्यपदिश्यते । नच सुखस्य कथं सुखजनकत्वमिति वाच्यं, यथा ज्ञानस्य ज्ञानजनकत्वम् । नच तदप्ययुक्तमेवेति वाच्यं, पदार्थज्ञानस्य वाक्यार्थज्ञानजनकत्वदर्शनात् । तस्मान्निर्विकल्पकं नित्यज्ञानं सविकल्पकं वृत्तिज्ञानमिव निर्विकल्पकं नित्यसुखं सविकल्पकं वृत्तिसुखं जनयतीत्यलम् । **यदुक्तं सुदर्शनेन**—न किंचिदवेदिषमित्यज्ञानसाक्षित्वेन स्थितिं वदता अज्ञानाश्रयभूताहमर्थोऽभ्युपगन्तव्य इति **तदयुक्तम्**—अज्ञानसाक्षित्वेन सुषुप्तौ प्राज्ञस्यैव स्थितिरस्माभिरुच्यते, नाहङ्कारस्येति कृत्वा अज्ञानाश्रयभूतः प्राज्ञोभ्युपगत

एवेति । **यदुक्तं रामानुजेन**— अहमवेदिषमिति वेदितुरहमर्थस्यानुवृत्तिरिति **तदयुक्तम्**— वेदनसमये अहङ्कारे सति अहं विदामीति प्रतीयादेव— इति । यच्चोक्तं सुषुप्तौ वित्तिर्निषिध्यते ज्ञाता त्वनुवर्तत इति, **तदुन्मत्तप्रलपितम्** । न किंचिदवेदिषमित्यज्ञानानुभवरूपवित्तेस्सत्त्वात् । तस्या अपि निषेधे दर्शितपरामर्शस्यैवानुदयप्रसङ्गात् । ज्ञातुरहङ्कारस्यानुवर्तनं तु प्रत्युक्तम् ।

**सुषुप्तावपि अहमर्थस्याहङ्कारस्य अनुवृत्तिरस्तीत्येतद्रामानुजमतनिराकरणम् ।**

**ननु** मामप्यहं नाज्ञासिषमिति परामर्शादस्ति सुषुप्तौ ज्ञाताऽहमर्थ इति **चेन्मैवम्**— तत एव परामर्शादहमर्थस्य तदानीमभावनिश्चयात्- नाहं गृहे घटमपश्यमिति परामर्शात्किं गृहे तस्य घटानुभवादृघटोस्तीति निश्चीयते । नच तत्र द्रष्टुः पुरुषाद्भिन्न एव घट इति वाच्यं, अत्रापि अहङ्कारो मामिति पदवाच्यो भिन्न एव प्राज्ञात् । नच मामिति पदवाच्योहङ्कार एवाहमिति पदवाच्योपीति वाच्यं, स्मरणसमय एवाहङ्कारसत्त्वं, न त्वनुभवसमय इत्युक्तत्वात् । तस्मात्सुषुप्तौ घटस्येवाहङ्कारस्याभावादेव प्राज्ञस्य तदनुभवाभावः । एवं प्राज्ञः स्वेनानुभूतमर्थमहङ्काराभावरूपं, जाग्रति विश्वीभूय स्मरति- मामप्यहं नाज्ञासिषमिति । कथमन्यथा स्वस्य स्वानुभवाभावस्सम्भवेत्-- तथाहि घटो नासीदिति यो वक्ति तेन किं घटाभावोऽनुभूत उत न ? आद्य इष्ट एव । न द्वितीयः- अननुभूतस्य घटाभावस्यानुसन्धानायोगात् । एवं- मामहं नाज्ञासिषमिति यो वक्ति तेन किमहमर्थाभावोऽनुभूत उत न ? अद्ये- कथमहमर्थेनैवाहमर्थाभावोऽनुभूतः, नहि स्वाभावस्स्वेन ग्रहीतुं शक्यते, ग्राहककाले ग्राह्याभावाद्ग्राह्यकाले ग्राहकाभावाच्च । द्वितीये- कथमननुभूतस्य स्मरणम् । तस्मादहमर्थादन्येनैवाहमर्थाभावस्सुषुप्तावनुभूतस्स चानुभविता प्राज्ञ इति । **नन्वेवं** सुषुप्तावपि प्राज्ञस्यानुभवितुरेवावशेषस्सिद्धः- न त्वनुभवमात्रस्येति **चेत्सत्यम्**—मुक्तावेवानुभवमात्रस्यावशेषः, सुषुप्तौ तु प्राज्ञस्यानुभवितुरेव । तथापि अहङ्कारस्य ज्ञातृत्वं, प्राज्ञस्य त्वहङ्काकाराभावान्न ज्ञातृत्वमित्येतावन्मात्राभिप्रायेण सुषुप्तौ संविदवशेष इत्युक्तम् । यथा— सुषुप्तेः परमार्थदशात्वमुच्यते तद्वदिति । तस्मान्नास्ति सुषुप्तावहमर्थाहङ्कारानुवृत्तिरिति ।

**ननु** सुषुप्तावहमर्थोस्त्येव- अहमर्थानुभवस्तु नास्तीति **चेन्मैवम्**—अहमर्थानुभवः कस्य नास्ति-- किमहमर्थस्य तस्यैव, यद्वा ततोन्यस्य ? आद्ये- किमहमर्थेन स्वानुभवाभावो विदित उताविदितः ? आद्ये स्वपरज्ञानशून्यस्य तस्य कथं स्वानुभवाभावज्ञानं, कथं वा तादृशज्ञानवतः स्वज्ञानाभावः, कथं वा स्वज्ञानं विना तादृशज्ञानोदयः । द्वितीये- कथमविदितस्यार्थस्याभ्युपगमः । ततोन्यस्येति पक्षस्त्वस्मदीय एव-- इति । **ननु** मामहं न ज्ञातवानित्यत्र कर्मपदस्य जागरितावस्थानुसंहितजात्यादिविशिष्टास्मदर्थो विषयः, कर्तृपदस्य तु स्वाप्ययावस्था प्रसिद्धा । विशदस्वानुभवैकनानास्मदर्थो विषयः, **मैवम्**—स्मरणकर्तुरहमर्थस्य जागरणकालिकस्य जात्यादिविशिष्टास्मदर्थत्वेन त्वदुक्तविधत्वाभावात् । नच सुषुप्तौ अनुभवैकतानस्य मम जात्यादिविशिष्टास्मदर्थानुभवो नाभूदिति सुप्तोत्थितः परामृशतीति वाच्यं, कोसावनुभवैकतानोऽहमर्थः- किमहङ्कारविशिष्टः ? उत तद्रहितः ? नाद्यः- अनुभवैकतानत्वाहङ्कारविशिष्टत्वयोस्सामानाधिकरण्यायोगात् । न द्वितीयः- सुषुप्तावहम्भावविगमो नास्तीति त्वयोक्तत्वात् । तस्मादनुभवैकतानस्यात्मनोऽहम्भावविगमो नास्तीति वचनं तव व्याहतमेव ।

**ननु** सुषुप्तावहम्भावविगमो नास्त्येव, परं तु ब्राह्मणोहं मनुष्योहं बधिरोहं कृशोहं वृद्धोहमित्याद्यहम्भावविगमोस्ति, तावतैवात्मनोऽनुभवैकतानत्वमुच्यत इति **चेन्नैवम्**—सुषुप्तौ ब्राह्मणोहमित्याद्यहम्भावो मास्तु नाम- कीदृशोहंम्भावोस्ति त्वं ब्रूहि ! किमनुभवरूपोहमित्यहम्भावोस्ति ? किं वा ज्ञाताहमिति ? किं वा सुख्यहमिति ? यद्वा मामहं न वेद्मीति ? यदि तु न कीदृशोप्यहम्भावस्तर्हि कथमहम्भानुवृत्तिस्सुषुप्तौ । **तस्मादहम्पदवाच्यार्थस्याहङ्कारस्य साभासस्य नास्त्येव सुषुप्तौ स्थितिः । ननु** मास्तु नाम सुषुप्तावहम्भावः ज्ञाता त्वस्त्येव-- अज्ञानसाक्ष्यस्तित्वस्य तवापि सम्मतत्वात्साक्षित्वस्य च ज्ञातृत्वादिति **चेत्सत्यम्**—यावद्व्यवहारमात्मनो ज्ञातृत्वमस्तीत्यस्माभिरसकृदुक्तत्वात् । ज्ञानस्वरूपेप्यात्मनि माया हि ज्ञेयं वस्त्विव ज्ञातृत्वमपि कल्पयति । नच ज्ञाता साभासाहङ्कार एवेत्युक्तमिति वाच्यं, यथा साभासाहङ्कारो ज्ञाता तथाऽहङ्कारावच्छिन्न आत्मापि ज्ञातैवेति, तथा अज्ञानावच्छिन्न आत्मापि ज्ञातैव । अनवच्छिन्नस्त्वात्मा ज्ञानमेव, न ज्ञाता ज्ञेयाभावात् । मायावच्छिन्ने खल्वात्मनि ज्ञेयं कल्पितम् । **तदयं निर्गलितार्थः**—वस्तुतो ज्ञानमेवात्मा, मायया तु ज्ञाता भवति । तत्र जागरस्वप्नयोरहङ्कारवैशिष्ट्यादात्मनो ज्ञातृत्वं- सुषुप्तौ त्वविद्यावैशिष्ट्यात्, अहङ्कारस्य सुषुप्तावभावात् । एवं यावद्व्यवहारं ज्ञेयसत्त्वादात्मनो ज्ञातृत्वस्य सद्भावादेव- 'साक्षी चेता- स किल एको द्रष्टा- नान्योतोस्ति द्रष्टा- ज्ञात एव' इत्यादिश्रुतिसूत्रादि सङ्गच्छते । एवमनात्मतादात्म्याध्यासवशादात्मन आगतं ज्ञातृत्वं मिथ्यैवेति ज्ञानमेवात्मा—'सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्मे'त्यादिश्रुतेः । तथा आत्मतादात्म्याध्यासवशाज्जडोप्यहङ्कारो भवति ज्ञाता । नच तस्याहङ्कारस्य ज्ञातृत्वं मिथ्यैवेति वाच्यं, यावदहङ्कारभावित्वात्तस्य अहङ्कारस्य मिथ्यात्वादेव तद्गतज्ञातृत्वस्य मिथ्यात्वं न त्वात्मवदहङ्कारस्य सत्यत्वात् । तस्मान्मिथ्याभूतज्ञातृत्वधर्मवदहङ्कार एव ज्ञाता, आत्मा तु ज्ञानमेवेति- आत्मनो ज्ञानं स्वरूपमिति सम्प्रतिपन्नं-- ज्ञानं गुण इति तु विप्रतिपन्नम् । आत्मनो ज्ञातृत्वमौपाधिकमिति वयं, स्वाभाविकमिति तु परे । सुषुप्तावहङ्कारो नास्तीति वयं, विशेषाहङ्काराभावेपि सामान्याहङ्कारोस्तीति परे । चिदाभासवशादहङ्कारो ज्ञातेति वयं, चित आभास एव नास्तीत्यहङ्कारो जड एवेति परे । एवमादयो विप्रतिपन्ना अंशाः पूर्वमेव विचार्य निर्णीता इति—**संक्षेपः** ॥

## अहमः अहङ्कारार्थत्वोपपत्तिः, मुक्तौ अहङ्कारस्य अननुवृत्तित्वोपपत्तिः ।

**अथ मोक्षदशायां किमहमर्थोऽनुवर्तते उत नेति विचार्यते**—तत्राद्यः पक्षो रामानुजीयः । तथाहि- नानुवर्तत इति त्वपेशलं तथासति आत्मनाश एवापवर्ग इति प्रकारान्तरेण प्रतिज्ञातस्स्यात् । अहमर्थोह्यात्मा- इति, **नैष युक्तः**--अहमर्थस्याहङ्कारस्यानात्मत्वात् अहङ्कारग्रन्थिरूपबन्धनाशस्यैव मोक्षत्वात्- आत्मनो मुक्त्यन्वयित्वेन स्वनाशाभावाच्चेति । **नन्वहमर्थ** एवात्मनस्स्वरूपं ज्ञानं तु तस्य धर्म इति मुक्तावहमर्थनाशे आत्मनस्स्वरूपनाश एवेति, **मैवम्**—ज्ञानमेवात्मनस्स्वरूपमिति बहुशच्छ्रुतत्वान्नाहमर्थ आत्मनस्स्वरूपं- धर्मभूतं ज्ञानं तु जन्यं वृत्तिज्ञानमेव । तच्चान्तःकरणधर्म एव तस्य च न मुक्तौ स्थितिः । अहं जानामीति ज्ञानं मे जातमिति च प्रतीतिरिदं ज्ञानमेतदाश्रयमहंकारं च साभासमाश्रित्य

प्रवृत्ता । तस्मादहमर्थधर्मतया प्रतीतज्ञानं वृत्तिज्ञानमेव । तद्ज्ञानाश्रयतया प्रतीतोहमर्थोहंकार एवेति नात्मधर्मो ज्ञानं, नित्यज्ञानं चैतन्यं तु नात्मधर्मो नाप्यनात्मधर्मः किंत्वात्मनस्स्वरूपमेवेति । **यदुक्तं रामानुजेन**—अहं दुःखीति य आत्मानमनुसन्धत्ते स एव दुःखनिवृत्तये तत्साधनानुष्ठाने प्रवर्तते । यद्यहमेव न भविष्यामीत्यवगच्छेत्तर्हि मोक्षकथाप्रस्तावादपसर्पेदेवासाविति मोक्षशास्त्रमप्रमाणं स्यादिति, **नैतद्युक्तम्**—अधिष्ठानं कूटस्थचैतन्यं तत्र कल्पितोहङ्कारस्तत्र चित्प्रतिमिम्बश्चेत्येतत्त्रयमहमर्थो जीवस्संसारी । तथा च दुःखविशिष्टो दुःखनाशायेव साभासाहंकारविशिष्टस्साभासाहङ्कारनाशाय यतत इत्येकः पक्षः । अधिष्ठानचैतन्यं तत्र कल्पितोहङ्कारश्चेत्येतद्द्वयमेवाहमर्थो जीवः । तथा च अहंकारविशिष्टोहंकारनाशाय यतत इत्यन्यः पक्षः । अहंकारस्तत्र चित्प्रतिबिम्बश्चेत्येतद्द्वयमेव जीवः । सचाहंकारविशिष्ट आभासस्स्वस्य बिम्बसायुज्यार्थमहंकारनाशाय यतत इत्यपरः पक्षः । अत्रैव साभासाहङ्कारो जीवस्स्वस्याधिष्ठानचैतन्यात्मनावस्थानार्थं यतत इति मतान्तरम् । नचायमेव पक्षस्स्वनाशरूपदोषाक्रान्त इति वाच्यं, उत्पत्तेः प्रागधिष्ठानचैतन्यात्मना स्थितस्याहङ्कारस्य पुनरधिष्ठानचैतन्यात्मनावशेषवाञ्छा युक्तैवेति । ब्रह्मैव स्वाविद्यया जीवभावमापन्नं सज्जीवभावविगमाय यतत इति परःपक्षः । एवमादयः पक्षाः प्राचीनग्रन्थेषु सन्ति ताश्च विस्तरभिया नेह प्रपञ्चिताः । सर्वथापि जीवस्याहङ्कारतादात्म्याध्यासप्रयुक्तोहम्भावो बन्धः । विद्यया समूलस्य तस्य निवृत्त्या स्वाभाविकब्रह्मभाव एव मोक्षः । नच जीवस्य जीवभाव एव स्वाभाविको न ब्रह्मभाव इति वाच्यं, व्याधकुलवर्धितराजकुमारदृष्टान्तेन ब्रह्मण एव देहे प्रविश्य जीवीभूतत्वेन जीवस्य ब्रह्मभाव एव स्वाभाविक इति । तथाच श्रूयते- 'अनेन जीवेनात्मनानुप्रविश्येति ।

**ननु** व्याधकुलवर्धितस्य राजकुमारस्य स्वजन्मापरिज्ञानाद्व्याधबुद्धिस्स्वस्मिन् भवतु, कथं पुनर्ब्रह्मणो जीवभाव इति चेत्कात्रानुपपत्तिस्सत्त्वादज्ञानस्य । यावद्व्यवहारमज्ञानावच्छिन्नं हि ब्रह्म । भवतु वा ब्रह्मणो जीवभावापत्तिरनुपपन्ना, तथापि- नास्माकं क्षतिः- नहि वयं वस्तुतो ब्रह्मणो जीवभावं ब्रूमः, किंतु मायया । साहि स्थाणोः पुरुषत्वमिव रज्जोस्सर्पत्वमिव गगनस्य नीलत्वमिव सुतस्य मनुष्यस्य विपिनसञ्चारिव्याघ्रत्वमिव च ब्रह्मणो जीवत्वं कल्पयति । अत एव मायामयस्य जीवत्वस्य विद्यया विनिर्मुक्तिः सम्भवति । नहि सत्यं निवर्तते- निवर्तमानं वा न ज्ञानेन । नचैवं बन्धस्य मिथ्यात्वे मोक्षोपि मिथ्यैव भवेदिति वाच्यं, इष्टापत्तेः । तस्माज्जीव आगन्तुकजीवभावविनाशपूर्वकस्वाभाविकब्रह्मभावापत्तये यतत एवेति नास्ति शास्त्रस्याप्रामाण्यमिति ।

**यदुक्तं रामानुजेन**—स च प्रत्यगात्मा मुक्तावहमित्येव प्रकाशत इति **तदयुक्तम्**—सुषुप्त्यादावेवाहमिति प्रकाशाभावे तस्य कथं मुक्तौ तत्प्रसङ्गः । अहङ्कारो हि संस्कारात्मना स्वापादावस्ति मुक्तौ तु सकारणस्य तस्य नाश एवेति । किंच केवलाहङ्कारः कदापि नास्त्येव- सर्वत्रापि 'अहं जानामि' 'अहं पश्यामि' 'अहं शृणो'मीतिविशिष्टाहङ्कारस्यैव दर्शनात् । सच मुक्तौ नास्त्येव देहेन्द्रियादिवैशिष्ट्याभावात् । अपि च यदि मुक्तावहमर्थस्स्यात्तर्हि स स्वेनानुभूतं संसारदुःखं स्मरेदेवेति मुक्तेरपुरुषा-

र्थत्वमेव भवेत् । किंच मायाख्यबीजवत्यां सुषुप्तावेवाविद्यमानस्याहङ्कारस्य कथं निर्बीजमुक्तौ सत्त्वप्रसङ्गः । नच सुषुप्तावस्त्वहङ्कार इति वाच्यं, यावत्पर्यन्तमहङ्कारो वर्तते तावत्पर्यन्तं सुषुप्तेरेवानुदयात् । अतएव अहमिदमकरवमिदं पुनः करिष्यामीति चिन्तयितुर्निद्रानुदयः । तस्मात्प्रत्यगात्मा मुक्तौ प्रकाशते केवलं न त्वहमिति प्रकाशते- अहमिति इदमिति वा प्रतीचः प्रकाशाभावात् । अहङ्कारस्यैवाहमिति प्रकाशः, मनसस्तु इदमिति प्रकाशः, उभयमप्यन्तःकरणमेवेति प्रागेवोक्तम्—**इति** ।

**ननु** प्रत्यगात्मा मुक्तावहमित्येव प्रकाशते- स्वस्मै प्रकाशमानत्वात्- यो यः स्वस्मै प्रकाशते स सर्वोहमित्येव प्रकाशते-- यथा संसार्यात्मा, यः पुनरहमिति न भाति नासौ स्वस्मै प्रकाशते, यथा घट इति, **मैवम्**—अहङ्कारविशिष्टो हि संसार्यात्मा अहमिदं जानामीति विशेषाकारेण सर्वं वेत्ति । अत एव तस्य स्वसंबद्धसर्वावभासकत्वं, नतु सर्वं स्वस्मै बोधयति, स्वं वा स्वस्मै बोधयति । चतुर्थ्यन्त-प्रथमान्तपदार्थयोरैक्यायोगात्- नहि गुरुश्शिष्यायार्थं बोधयतीत्यादौ चतुर्थ्यन्तप्रथमान्तपदार्थयोरैक्यमस्ति किंचायं बोधनात्प्रागेवात्मानमन्यं च विदितवानिति व्यर्थं बोधनम् । नच विदितवानिति वाच्यं, तथा-सति बोधनस्यैवासम्भवात् ।

**ननु** स्वस्मै प्रकाशमानत्वं नाम स्वार्थं प्रकाशमानत्वं दीपादिस्तु न स्वार्थं प्रकाशते किंतु परार्थ-मेवेति **चेन्नैतदपि** । किमिदं प्रकाशमानत्वं तेजो धर्मभूतं, यद्वा ज्ञातृधर्मभूतम् ? नाद्यः- नीरूपत्वा-दात्मनः । द्वितीये तु दीपादेर्जडस्य नास्ति परार्थमपि ज्ञातृत्वम् । यदि तु दीपादेः प्रकाशमानत्वं तेजोधर्म एव, आत्मनस्तु प्रकाशमानत्वं ज्ञातृत्वमित्युच्यते, तर्हि किमयं स्वार्थं स्वं जानाति ? यद्वा परम् ? नाद्यः- ज्ञानकर्तुर्ज्ञानकर्मत्वायोगात्, स्वज्ञानात्प्रागेव स्वस्य सिद्धत्वाच्च । द्वितीये किं परमा-त्मानं जानाति, यद्वा प्रकृतितत्कार्यजातम् ? नाद्यः- स्वस्यैव परमात्मत्वेनोक्तदोषानतिवृत्तेः । न द्वितीयः-- प्रकृतितत्कार्यजातज्ञानजन्यस्य कस्यचिदर्थस्यात्मनोऽभावात् । प्रत्युत तद्ज्ञानस्यानर्थावहत्वात् ।

**ननु** स्वस्य सुखाद्यर्थं संसार्यात्मा स्रक्चन्दनादिकं जानातीति **चेन्मैवम्**—स्रक्चन्दनादिज्ञान-मात्रेण तस्य तदलाभात् । भवतुनाम संसार्यात्मनस्स्वस्वरूपसुखालाभाज्जन्यसुखार्थं तद्धेतुभूतस्रगादिवस्त्वस-म्भवः । मुक्तात्मनस्तु स्वस्वरूपसुखाविर्भावान्नास्त्येव विषयसुखापेक्षा । नास्ति च तत्र विषयसुखं, नाप्यस्ति विषयजातमिति । तस्मादात्मसुखार्थं विषयानुभवितृत्वरूपस्य स्वस्मै प्रकाशमानत्वस्य संसा-र्यात्मनि सत्त्वेपि न मुक्तात्मनि तत्सत्त्वमिति पक्षे हेत्वसिद्धिः । य एवं स्वस्मै प्रकाशते स संसार्या-त्मातु अहमित्येव प्रकाशते- अहमिदं जानामीति प्रतीतेस्तस्याहङ्कारविशिष्टत्वात् । घटादिस्तु नैवं भासते । तस्याहङ्कारवैशिष्ट्याभावात् । प्रत्यगात्मा च नैवं भासते-- तस्याहङ्काराभावात् । किंच प्रत्य-गात्मा परार्थमपि भासते- प्रत्यगात्मभानेनैव परस्य भानसम्भवात् । 'तस्य भासा सर्वमिदं विभा'तीति-श्रुतेः । मुक्तात्मा तु न परार्थं भासते-- परस्याभावात् । नापि स्वार्थं- स्वस्य पूर्णकामत्वेन भानसम्पा-द्यार्थाभावात् । तत्सत्त्वे वा अकृतकृत्यत्वेनामुक्तत्वादिति ।

यदुक्तं अज्ञत्वाद्यहेतुरहंप्रत्यय इति **तदयुक्तम्**—अहंप्रत्ययाभावे इदमहं न वेद्मि सुख्यहं

दुःख्यहमित्यादिप्रतीत्यभावात्तत्सत्त्वे तत्सत्त्वाच्चाहम्प्रत्यय एवाज्ञत्वादिहेतुरिति । यच्चोक्तमहमित्येवात्मनस्स्वरूपमिति स्वरूपज्ञानरूपोऽहंप्रत्ययः नाज्ञत्वमापादयति- कुतस्संसारित्वमपि तु तद्विरोधित्वान्नाशयत्येवेति, **तदपि मन्दम्**—अहङ्कारस्यैवाहमिति स्वरूपं, नात्मनः- आत्मनस्तु ज्ञानमेव स्वरूपमित्युक्तत्वात् । अनात्मस्वरूपे तस्मिन्नात्मस्वरूपभ्रमस्तु कुतो नाज्ञत्वमापादयति कुतो वा संसारित्वं नापादयति ? कथं वा संसारबीजभूतस्य तस्य संसारनाशकत्वम् ? नह्यहं मनुष्यस्स्थूलः कृशो रोगी सुखी दुःखी चेति मन्वानोऽसंसारी भवति ।

**ननु** ब्रह्माहमस्मीति मन्वानोऽसंसारी भवत्येवेत्यहंप्रत्ययस्संसारनाशक एवेति **चेन्मैवम्**—अहं ब्रह्मास्मीत्यस्याखण्डब्रह्मप्रत्ययत्वेनाहंप्रत्ययत्वाभावात् । अहं शब्दो हि लक्षणया तत्र प्रत्यक्चैतन्यं बोधयति । **एतेन**—वामदेवादीनामहमित्येवात्मानुभवदर्शनमिति—**प्रत्युक्तम्** । 'अहं मनुरभवं'मिति वामदेवप्रतीतावहमित्यस्य प्रत्यक्चैतन्यमर्थ इति । नच प्रतीचः कथं मनुत्वाद्यापत्तिरिति वाच्यं, मायया तस्य सर्वात्मत्वात् । **नन्वीश्वरस्याप्यहमित्येवात्मानुभवः**- 'हन्ताहमिमास्तिस्रो देवता' इत्यादिश्रुतेरिति **चेन्मैवम्**—यथा जीवान्तःकरणस्याहंवृत्तिरिदंवृत्तिरित्यस्ति वृत्तिद्वयं, तथा ईश्वरोपाधिमायाया अप्यस्तीति मायिन एवेश्वरस्याहंप्रत्ययो नतु शुद्धस्य ब्रह्मण इति । नहि मुक्तात्मवच्छुद्धब्रह्म अहमित्यभिमन्यते । नच शुद्धं ब्रह्म नास्त्येवेति वाच्यं, यस्य मायास्तीत्युच्यते, स मायावान्मायातः पृथग्भूतश्शुद्ध एवेति-- 'निरवद्यं निरञ्जन'मित्यादिशास्त्राच्च । न चेश्वरस्याप्यहङ्कारसत्त्वेऽज्ञित्वप्रसङ्ग इति वाच्यं, अन्तःकरणवृत्तिरूपाहङ्कारस्यैवाज्ञत्वप्रयोजकत्वमिति । न ह्यन्तःकरणसम्बन्धाज्जीवस्येव मायासम्बन्धादीश्वरस्याज्ञत्वं भवति । अपि तु सर्वज्ञत्वमेवात एवेश्वरस्यासंसारित्वम् । किञ्चिद्‌ज्ञत्वं हि संसारित्वावहं माया च सर्वव्यापिनीति तद्योगादीश्वरस्य सर्वज्ञत्वमन्तःकरणं च परिच्छिन्नमिति तद्योगाज्जीवस्य किञ्चिद्‌ज्ञत्वमिति । तस्माद्वस्तुत ईश्वरस्य जीवस्येवाहंग्रहाभावेपि यावद्व्यवहारं तत्सद्भाव एवेति कृत्वा अहं घटं करवाणीति कुलालवदहं नामरूपे व्याकरवाणीतीश्वरोपि प्रतीयादेव । अहं पुरुषोत्तमः अहमात्मेत्यादीश्वरप्रयोगेषु तु अहंशब्दो लक्षणया परमात्मानं बोधयति, न त्वभिधया । अहंशब्दस्य हि वक्तरि शक्तिः । सच वक्ता यदि जीवस्तर्हि स प्रमाता अन्तःकरणावच्छिन्नचैतन्यलक्षणः । यदीश्वरस्तर्हि स मायावच्छिन्नचैतन्यलक्षणः । नहि शुद्धं चैतन्यं वक्तृत्वादिधर्मयोगि भवति- शुद्धत्वधर्मवत्त्वयोर्विरोधात् । किंच देहेन्द्रिययुक्तमेव चैतन्यं वक्तृ भवति, नतु तद्रहितमिति कृत्वा देहिन्येव वक्तर्यहंशब्दस्य शक्तिः । सच देही जीव ईश्वरो वा न भवेदेव । 'अकायमव्रण'मित्यादिशास्त्राद्‌ज्ञानस्वरूपत्वाच्च तयोः । रामकृष्णादिशरीरोपलम्भस्त्वीश्वरस्य मायया भवति । जीवस्तु कर्मसहिताविद्यया देहतादात्म्याध्यासमापद्य जायते म्रियते च । तस्माज्जीवेश्वरप्रयोगगतोऽहंशब्दश्शुद्धं चैतन्यं लक्षणयैव बोधयतीति स्थितम् । नचानेकवाक्यस्थाहंशब्दस्य लक्षणादोष इति वाच्यं, मुख्यार्थबाधे सति बीजे अनेकवाक्यस्थाहंशब्दस्यापि लक्षणा न दोष इति । नच नास्ति मुख्यार्थानुपपत्तिरिति वाच्यं, अहं ब्रह्मेत्यादावहंपुरुषोत्तम इत्यादौ च अहंशब्दमुख्यार्थस्य वक्तुर्देहिनो जीवस्येश्वरस्य च शुद्धचैतन्यसामानाधिकरण्याभावस्यैवानुपपत्तेर्दर्शितत्वादिति ।

**नन्वात्मन्यहंशब्दप्रयोगो** न लाक्षणिकः किंतु मुख्य एव- अबाधिताहंप्रत्ययगोचरत्वादात्मनः— सर्वोहि लोक आत्मानमहमित्येव प्रत्येति, नहि कोप्यात्मानं नाहमिति प्रत्येति, **मैवम्**—सर्वस्य लोकस्य चात्मन्यहम्बुद्धिस्तथासति सर्वमुक्तिप्रसङ्गात् । किंतु आत्मत्वेनाभिमते देहादावेवाहंबुद्धिः । अत एवाहं मनुष्य इत्यादिप्रतीतिः, विदुष एवात्मन्यहंबुद्धिः । एवं सार्वजनीनानुभवविषयत्वादहं-शब्दस्यात्मा न मुख्यार्थः । अनात्मा त्वहङ्कारो मुख्यार्थ इति ।

**ननु** स्वस्यैवाहंशब्दवाच्यत्वादात्मनश्च स्वत्वादात्मशब्दाहंशब्दौ पर्यायभूतावेव । तथाचात्म-शब्द इवाहंशब्दोपि मुख्ययैव वृत्त्या जीवमीश्वरं वा बोधयति, **मैवम्**—त्वन्ताऽहन्तयोरिवात्मताऽहंतयो-रविरोधेनात्माहंशब्दयोरपर्यायत्वात् । त्वमात्मना जानासीति हि प्रयुज्यते, स्वयंशब्दार्थे आत्मशब्दो वर्तते । सच त्वन्ताहन्तेदन्तानामविरोधी- आत्मनासौ तृतीय इत्यादिप्रयोगात् । **यदुक्त**महंशब्दस्य मुख्यया वृत्त्या जीवेश्वरवाचित्वमिति **तदिष्टमेव**—चैतन्यवाचित्वं हि लाक्षणिकम् ।

**ननु** अत्मन्यहंशब्दप्रयोगस्स्वाभाविक एव । अनात्मन्यहंशब्दप्रयोगस्तु दोषकृतः । सच दोषोऽविद्या- अविद्यया हि जीवो नात्मानं देहादिमहमिति मन्यते, विद्यया तु आत्मानमेवाहमिति मन्यते । तस्मादहंशब्दार्थ आत्मैवेति, **मैवम्**—आत्मानमहमिति किमात्मा मन्यते? उतानात्मा? नाद्यः- चिन्मात्रस्यात्मनो मन्तृत्वायोगात् । अन्यथा सुषुप्तिमृतिमूर्छास्वपि अहमित्यात्मा मनुयादेवा-त्मानम् । नचेष्टापत्तिस्सार्वजनीनानुभवविरोधात् । अन्त्ये- अनात्मैवाहंशब्दार्थ इति सिद्धम् । एवमात्मन्यहंशब्दं यः प्रयुंक्ते स किमात्मा, उतानात्मा? नाद्यः- देहेन्द्रियादिरहितस्य तस्य शब्दप्रयो-गायोगात् । द्वितीये- अनात्मैवाहंशब्दार्थः । नच देहेन्द्रियादिसहित एवात्मा शब्दं प्रयुंक्त इति वाच्यं, अविद्यां विना आत्मनो देहेन्द्रियादिसाहित्यायोगात् । असङ्गस्य पुरुषस्यात्मनो नहि देहेन्द्रियादिसङ्गः । य एवं देहेन्द्रियादिसहितस्स न प्रत्यगात्मा, किंतु जीव एव कर्ता भोक्ता । तस्य चाहंकारविशिष्ट-स्याहमर्थत्वमस्मदभिप्रेतमेव । तस्मादात्मन्यात्मशब्दप्रयोगस्स्वशब्दप्रयोगो वा स्वाभाविकः । अहंशब्द-प्रयोगस्तु दोषकृत एव । सच दोषोऽविद्याकृतोऽहंकारात्मनोस्तादात्म्याध्यास एव । विद्यया समूलस्य तस्य नाशे सति आत्मन्यहंशब्दप्रयोगो न सम्भवत्येव । नच विद्वानप्यात्मन्यहंशब्दं प्रयुंक्ते- अहं ब्रह्मेति प्रतीतेरिति वाच्यं, तत्र लक्षणयाऽहंशब्द आत्मवाची न त्वभिधयेत्युक्तत्वात् ।

**ननु** यद्येवमनात्मन्येवाहंशब्दो मुख्यस्तर्हि घटादिरप्यहंशब्दार्थस्स्यादिति **चेन्मैवम्**—अनात्म-न्यहङ्कार एवाहंशब्दो मुख्य इत्युक्तत्वात् । किंच तव मते यद्यहंशब्दार्थ एवात्मा तर्हि कः पुनस्त्वं-शब्दार्थः । नच सोप्यात्मैवेति वाच्यं, त्वया आत्मनोहमित्येव स्वरूपमित्युक्तत्वात् । नहि आत्मन-स्त्वमित्यपि स्वरूपमिति त्वयोक्तम् । नच तदिदानीमुच्यत इति वाच्यं, त्वन्ताहन्तयोर्विरुद्धयोरेकत्रात्मनि वृत्त्ययोगात् । नच द्वयोरात्मयोर्द्वयं वर्तत इति वाच्यं, आत्मद्वित्वाभावात् । सत्यप्यात्मभेदे- अता-त्मनि त्वन्ता वर्तते, अत्र पुनरहन्तेति नियमासिद्धेः । नच स्वात्मन्यहन्ता परात्मनि त्वन्ता चेति नियमसिद्धिरिति वाच्यं, स्वात्मशब्दयोरेकार्थत्वात्, परात्मशब्दयोः परस्परविरुद्धार्थत्वाच्च । नच

स्वस्मिन्नहन्ता, परस्मिंस्त्वन्ता चेति वाच्यं, कोसौ स्वशब्दार्थः परशब्दार्थश्च, आत्मेति **चेन्मैवम्**— परशब्दार्थत्वायोगादात्मनः- नहि कोप्यात्मानं परं मन्यते । तस्मात्स्वशब्दार्थ एवात्मा, नाहंशब्दार्थो नापि त्वंशब्दार्थः ।

**ननु** अहंशब्दार्थस्साभासाहङ्कार इत्युक्तं, तत्तथाऽस्तु- कः पुनस्त्वंशब्दार्थः ? नच साभासाहङ्कार एवेति वाच्यं, त्वङ्काराहङ्कारयोर्विरोधादिति **चेन्मैवम्**—'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव'चेति गीतावचना'दव्यक्तान्महन्महतोऽहङ्कार' इति शास्त्राच्च । अहङ्कार एव तत्त्वं, नतु त्वङ्कारः- त्वङ्कारस्य तत्त्वत्वेन काप्यनुक्तत्वात् । परन्तु एकस्य साभासाहङ्कारस्य जीवस्य स्वपुरोवर्तिन्यन्यस्मिन् साभासाहङ्कारे जीवे त्वमिति बुद्धिर्भवतीति सैव त्वङ्कार इत्युच्यत इति । तथाच त्वङ्कारविषयोपि साभासाहङ्कार एवेति नाहङ्कारतत्त्वस्य त्वङ्कारबुद्धिविरोधित्वं, किंतु अहंबुद्धेरेव त्वंबुद्धिविरोधित्वमिति ।

**ननु** साभासाहंकारस्य स्वस्मिन्नहंबुद्धिर्भवतीत्युक्तं, स्वशब्दश्चात्मवाचीत्युक्तं, तथाचाहंशब्दार्थ आत्मैवेति फलितमिति **चेन्मैवम्**—साभासाहंकारस्य यत्राहंबुद्धिर्भवति स स्वशब्दार्थस्साभासाहंकार एव **न त्वात्मेति** । यद्यपि सर्वमात्मैव 'ऐतदात्म्यमिदं सर्वमिति'श्रुतेः, सर्वस्यात्मनि कल्पितत्वेनात्मत्वाच्च । तथापि लोको नैतज्जानाति, किंतु जीवमेवात्मानं मन्यते, तथा च- बोद्धृतात्पर्यानुरोधेन साभासाहङ्कारस्याहंबुद्धिविषयस्साभासाहङ्कार एव-- इति । **यदुक्तं रामानुजेन** — अनात्मन्यहंबुद्धिजनकोहङ्कारः प्रकृतिपरिणामः, आत्मन्यहंबुद्धिस्तु स्वाभाविक्येवेति नाहङ्कारजन्येति, **तदयुक्तम्**— सर्वस्या अपि बुद्धेर्वृत्तिज्ञानरूपाया अन्तःकरणजन्यत्वेन तदजन्यस्वाभाविकबुद्धेरेवाभावात् । आत्मन्यहंबुद्धेस्स्वाभाविकत्वे सति वेदान्तशास्त्रवैयर्थ्यप्रसङ्गात् । आत्मसाक्षात्कारार्थं हि तत् । तस्मादहंबुद्धिजनक एवाहङ्कारः । **यदुक्तम**भूततद्भावार्थे च्विप्रत्यये कृते निष्पन्नोऽहङ्कारशब्दः- अनहमि अहमः करणं कारोऽहङ्कार इति, **तदयुक्तम्**—च्विप्रत्ययस्यादर्शनात्, तत्कल्पनस्य चाप्रमाणत्वात्, अहमः कारोऽहङ्कार इत्यस्यैवार्थस्य यथाश्रुतत्वाच्च ।

**यदुक्तं रामानुजेन**—अयमेवाहङ्कारो गर्वापरनामा शास्त्रे हेयतया कथित इति, **तदयुक्तम्**— अहङ्काराख्यतत्त्वस्य विषय एव गर्वो न त्वहङ्कारः 'मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरं । संशयो निश्चयो गर्वः स्मरणं विषया अमी' इति वचनात् । 'गर्वोभिमानोऽहङ्कार' इति निघण्टुवचनं तु अहङ्कारविषये गर्वे अहंकारशब्दप्रयोग औपचारिक इत्यभिप्रायगर्भम् । **सुदर्शनस्तु**—एतद्दोषपरिहाराय भावसाधनो गर्ववाची अहंकारशब्दः, तत्त्ववाची तु करणसाधन इत्युक्तवान्— अनहमहं क्रियतेऽनेनेत्यहंकार इति करणे व्युत्पत्तिः- अनहमोहमः कारोऽहंकार इति भावे व्युत्पत्तिः । उभयत्राप्यभूततद्भावे च्विविरयेव तदाशयः । स एवायुक्तः- अभूततद्भावस्यात्राभावात् । किंच अनहमि अहंबुद्धिरेवाहंकारः, अहमि अहम्बुद्धिस्तु नाहङ्कार इत्येतदपहासास्पदम्- अत्वमि त्वम्बुद्धिरेव त्वङ्कारः, त्वमि त्वम्बुद्धिस्तु न त्वङ्कार इति, अनिदमि इदम्बुद्धिरेवेदङ्कारः, इदमि इदम्बुद्धिस्तु नेदङ्कार इत्यपि वक्तव्यत्वापत्तेः । नचेष्टापत्तिस्सर्वशास्त्रविरोधात् । अपिच बुद्धावहम्बुद्धिः किमहङ्कार उत न? आद्ये अनहम्यहम्बुद्धिरहंकार

इत्यस्य भङ्गः । नच बुद्धिरहमर्थो नेति वाच्यं, 'अथातोऽहंकारादेश' इत्यत्राहंशब्दस्साक्षादहमर्थबुद्धिवाचीति सुदर्शनेनैवोक्तत्वात् । द्वितीये- अनहम्यहम्बुद्धेस्तस्याः कथं नाहङ्कारता । नच बुद्धिरहमर्थ एवेति वाच्यं, अहमर्थ आत्मेति स्वमतभङ्गप्रसङ्गात् । तस्मादहमर्थ आत्मेति प्रतिज्ञाय साक्षादहमर्थबुद्धिवाचीति वचनं सुदर्शनस्य सुदर्शनं साधु प्रकटयति ।

**यदुक्तं रामानुजेन**—शरीरादावनात्मन्यात्मबुद्धिरविद्या, आत्मन्यहंबुद्धिस्तु बाधकापेतेति **तदयुक्तम्**—अनात्मन्यात्मबुद्धेरविद्यात्वमुचितमेव- अतस्मिंस्तद्बुद्धेर्भ्रमत्वात् । आत्मन्यहम्बुद्धिस्तु न बाधकापेता । किमात्मन्यहम्बुद्धिरात्मनो भवति ? उतानात्मनः ? नाद्यः सुषुप्त्यादावप्यहम्बुद्धिप्रसङ्गात् । द्वितीये- आत्मन्यनात्मनोहम्बुद्धिरविद्यैव । अहमात्मेति मन्वानोऽनात्माह्यहमर्थः--इति । नचाहंपदलक्ष्य आत्मेति बुद्धिर्बाधकापेतेति वाच्यं, तस्यास्त्वयाऽनभ्युपेतत्वात् । **यदप्युक्तं** यदि ज्ञप्तिमात्रमेवात्मा तर्हि अनात्मन्यात्माभिमानशरीरे ज्ञप्तिमात्रप्रतिभासस्स्यात्, न ज्ञातृप्रतिभास इति, तदपि **मन्दम्**—वस्तुतो ज्ञप्तिमात्रस्याप्यात्मनो व्यवहारतो ज्ञातृत्वमित्युक्तत्वात् । यो ज्ञप्तिमात्रमात्मेति जानाति तस्यानात्मन्यात्मबुद्धिर्न भवेदेव ।

**यदुक्तं सुदर्शनेना**नात्मन्यहंप्रत्ययः कथमात्माभिमान इति, **तदयुक्तम्**—चिदाभासाहङ्कारयोरन्योन्याविवेकाच्चिदाभासाविविक्तमहंकारमेव लोक आत्मेति जानातीति कृत्वा अनात्मनि शरीरे अहंप्रत्यय आत्माभिमान एवेति । नचानात्मन्यहंकारेप्यहम्प्रत्यय आत्माभिमान एवेति वाच्यं, अनात्मन्यहंकारे यद्यात्मनोहम्प्रत्ययो भवेत्तर्हि स आत्माभिमान एव भवेत्, न तु तस्य भवति- जन्यज्ञानानाश्रयत्वात्तस्य । यद्यनात्मनो भवति कथं तस्यात्माभिमानता । तस्मात्साभासाहंकारस्य जीवस्य साभासाहंकारे जीवे स्वस्मिन्नहम्प्रत्ययो नात्माभिमानः, किंतु स्वस्मादन्यस्मिन् शरीरादावेवाहम्प्रत्यय आत्माभिमानः-- जीवस्य स्वस्मिन्नहम्बुद्धेरिवात्मबुद्धेर्भवितुं युक्तत्वात् । नचैवमहमर्थो जीवो ज्ञातैव सिद्ध इति वाच्यं, तस्यैव सेद्धव्यत्वात् । अहमर्थो हि साभासाहंकारो जीवो ज्ञाता संसारी, प्रत्यगात्मा तु नाहमर्थः- तस्य ज्ञप्तिमात्रत्वादित्युक्तत्वात् इति ।

**नन्वहमर्थस्यानात्मत्वे स्थूलोहमिति भ्रान्तेरयोग इति, मैवम्**—भ्रान्तदृष्ट्या अहमर्थ आत्मैवेति-- यथा भ्रान्तदृष्ट्या इदमर्थस्सर्प एव तद्वत् । किंच यद्यहमर्थ एवात्मा तर्हि नियमेन स्थूलोहमित्येव किमिति प्रतीयात्- स्थूल आत्मेति किमिति न प्रतीयात् । **तस्मादहङ्कारावच्छिन्न एवात्माऽहंशब्दार्थो न केवल इति । यदुक्तम्**—'देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः । नित्यो व्यापी प्रतिक्षेत्रमात्माऽभिन्नस्स्वतस्सुखी ॥' इति तत्र पूर्वार्धमनवद्यम् । उत्तरार्धस्य त्वयमर्थः- आत्मा नित्यः कुतः- प्रतिक्षेत्रं व्यापी प्रतिशब्दः कार्त्स्न्यपरः- सर्वमपि क्षेत्रजातं व्याप्य स्थित इत्यर्थः । आत्मभिन्नं सर्वमपि क्षेत्रमेवेति सर्वव्यापीति यावत् । सर्वव्यापित्वं च देशकालवस्तुकृतपरिच्छेदराहित्यम् । तथाचापरिच्छिन्नत्वादात्मा नित्य इति सिद्धं- परिच्छिन्नस्य घटादेरनित्यत्वदर्शनात् । **एतेन**—आत्मा न विभुः किंतु सूक्ष्म इति परोक्तं—**प्रत्युक्तम्** । अभिन्न इति छेदः । स्वतो वस्तुतोऽभिन्नः व्यवहारतस्तु

उपाधिवशाद्भिन्न इव प्रतिभातीत्यर्थः । सुखी सुखस्वरूपवान्- सुखस्वरूप इत्येतत् । सुखधर्मवानिति तु नार्थः- अन्तःकरणधर्मत्वात्सुखस्य निर्धर्मकत्वाच्चात्मनः । अस्यार्थस्य परिग्रहे उत्तरार्थमपि निरवद्यमेव । अन्यथा तु सावद्यमेव- इति । नच जीवस्य व्याप्तित्वं न स्वरूपतः- किंतु धर्मज्ञानद्वारेति वाच्यं, धर्मज्ञानस्यैवाभावात् । तत्सत्त्वेपि तस्य सर्वव्याप्त्यभावात्- व्याप्तिसंकोचस्य चायुक्तत्वात् इति ।

## प्रत्यक्षस्य आगमबाध्यत्वोपपत्तिः ।

अथ भेदप्रत्यक्षस्य शास्त्रबाध्यत्वमस्ति वा नवा इत्यंश इह विचार्यते—**अत्राह रामानुजः**— यदुक्तं दोषमूलत्वेनान्यथासिद्धिसम्भावनया सकलभेदावलंबिप्रत्यक्षस्य शास्त्रबाध्यत्वमिति कोयं दोष इति वक्तव्यम्- यन्मूलतया प्रत्यक्षस्यान्यथासिद्धिः- अनादिभेदवासनैव दोष इति चेत् , भेदवासनायास्तिमिरादिवद्यथावस्थितवस्तुविपरीतज्ञानहेतुत्वं किमन्यत्र ज्ञातपूर्वम्- अनेनैव शास्त्रविरोधेन ज्ञास्यत इति, चेन्न—अन्योन्याश्रयणात्- शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चयेसति, भेदवासनाया दोषत्वनिश्चयः, दोषत्वनिश्चये सति शास्त्रस्य तादृशवस्तुबोधित्वनिश्चय इति, **नैतत्सारम्**—अपौरुषेयत्वेनासम्भावितभ्रमप्रमादादिपुंदोषतया वेदः प्रमाणमिति भवत्यास्तिकस्य निश्चयः । तत्र च 'एकमेवाद्वितीयं ब्रह्म' 'तत्सत्यं'- 'अतोन्यदार्तम्'-.'मृत्योस्समृत्युमाप्नोति' 'य इह नानेव पश्यति'- 'नेह नानास्ति किञ्चन' इत्यादिवाक्यैरद्वैतसत्यत्वस्य द्वैतासत्यत्वस्य च प्रतिपादितत्वाद्रज्जुसर्पवन्मिथ्याभूतमिदं द्वैतं कस्माच्चिद्दोषादेव जातमिति निश्चीयते । सच दोषोऽनादिभेदवासनासहकृताविद्यैवेति । तत एवावगम्यत इति नात्रान्योऽन्याश्रयः । नच शास्त्रादप्यद्वैतसत्यत्वनिश्चये सत्येव द्वैतमिथ्यात्वनिश्चयः, द्वैतमिथ्यात्वनिश्चये सत्येवाद्वैतसत्यत्वनिश्चय इत्यन्योन्याश्रय इति वाच्यं, अद्वैतसत्यत्वनिश्चयाद्द्वैतमिथ्यात्वनिश्चयो भवति । द्वैतमिथ्यात्वनिश्चयादद्वैतसत्यत्वनिश्चयो भवतीति यदुच्यते तर्ह्यन्योन्याश्रयात्कस्याप्यनुत्पत्तिरित्यस्तु- नैवमुच्यते, किंतु शास्त्रादेव तदुभयं भवतीत्युच्यते- अतो न तदुत्पत्त्यनुपपत्तिरिति । तथा अनादिभेदवासनासहकृताविद्यादोषस्य विपरीतज्ञानहेतुत्वं स्वप्ने दृष्टमेव । एक एव हि सुप्तः पुरुषः स्वस्मिन्नेव रथगजादिद्वैतमविद्यादोषात्पश्यति- जाग्रति चाविद्यादोषादेकस्यामेव रज्ज्वां सर्पदण्डभूच्छिद्रादिभेदान्पश्यति । किं बहुना तिमिरादिदोषस्य विपरीतज्ञानहेतुत्वं सम्प्रतिपन्नम्- तत्र तिमिरादिदोष एव न तद्धेतुः, किंतु तत्सहकृताऽविद्यैव- सर्वत्र लाघवादविद्याया एव दोषत्वेन स्वीकर्तव्यत्वात्, अविद्यां विना यस्य कस्यापि भ्रमस्यानुदयात् , अनात्मन्यात्मभ्रमहेतुरविद्येति त्वयाप्युक्तत्वात् । एवं भ्रममात्रे प्रत्यविद्याया दोषत्वस्य रज्जुसर्पादौ ज्ञातपूर्वत्वादभेदे ब्रह्मणि भेदभ्रमोप्यविद्यादोषजन्य एवेति निश्चीयते । नच ब्रह्म न निर्भेदमिति वाच्यं, 'एकमेवाद्वितीयं ब्रह्मे'ति मुक्तकण्ठं श्रुत्यैवोक्तत्वात् । नच द्वैतभ्रमहेतुरविद्येति शास्त्रे क्वापि नोक्तमिति वाच्यं, 'इन्द्रो मायाभिः पुरुरूप ईयत' इत्यादिशास्त्रसद्भावात् । एवं रज्जुसर्पप्रत्यक्षवदविद्यादोषजन्यत्वाद्द्वैतप्रत्यक्षस्य भ्रमत्वाद्बाध्यत्वम् । नच रज्जुसर्पप्रत्यक्षस्यापि बाधकं रज्जुज्ञानमेवेति न शास्त्रमिति वाच्यं, आप्तवाक्यरूपशब्दस्यैव तत्रापि बाधकत्वाभ्युपगमात् । नायं सर्पः किंतु रज्जुरित्याप्तवाक्यं हि सर्पभ्रमं बाधते- तथा नेदं द्वैतं किं त्वद्वैतमेवे-

त्यागमाद्द्वैतभ्रमो बाध्यते । नच रज्जुसर्पप्रत्यक्षस्येव द्वैतप्रत्यक्षस्य कथं भ्रमत्वसिद्धिरिति वाच्यं, रज्जुसर्पप्रत्यक्षस्य कथं भ्रमत्वसिद्धिः ? आप्तवाक्यप्रदीपालोकादिना रज्जुज्ञानबाध्यत्वादिति चेत्तथैवेहाप्यस्तु, श्रवणमननादिना ब्रह्मज्ञानबाध्यत्वादिति । अतस्मिंस्तद्बुद्धित्वादिति चेत्तत एवेहाप्यस्तु रज्जौ सर्पस्याविद्यमानत्वादिति चेत्तथैव ब्रह्मणि द्वैतस्याविद्यमानत्वादित्यस्तु । किं बहुना—यथा यथा त्वं रज्जुसर्पप्रत्यक्षस्य भ्रमत्वं साधयसि, तथा तथा वयं द्वैतप्रत्यक्षस्य भ्रमत्वं साधयामः । साधिते च तस्मिन् शास्त्रमत्यन्ताप्तेश्वरवाक्यत्वेन प्रमाणत्वात्सर्पप्रत्यक्षमाप्तवाक्यमिव द्वैतप्रत्यक्षं बाधत एव । नचैवं प्रत्यक्षमात्रस्य शास्त्रबाध्यत्वेसति सन्मात्रावगाहिप्रत्यक्षमपि शास्त्रबाध्यं भवेदिति वाच्यं, न वयं प्रत्यक्षमात्रं शास्त्रबाध्यमिति वदामः, शास्त्रस्यापि प्रत्यक्षज्ञानजनकत्वात् । किंतु भ्रमप्रत्यक्षं शास्त्रबाध्यमिति वदामः । नहि सर्पप्रत्यक्षं रज्जुसर्पप्रत्यक्षवदाप्तवाक्यबाधितं भवति- सन्मात्रावगाहिप्रत्यक्षं च सर्पप्रत्यक्षवत्प्रमैवेति न तस्य कुतोपि बाधः । अबाधितार्थविषयं ज्ञानं हि प्रमा । सन्मात्रं चाबाधितार्थविषयः- यथा यावद्व्यवहारं सर्पोऽबाधितार्थविषयः । तस्मात्सन्मात्रावगाहि प्रत्यक्षं शास्त्रजन्यमेवेति न शास्त्रबाध्यत्वं तस्य । **एतेन** प्रत्यक्षान्तराणां दोषमूलत्वमनुमीयते चेत् , शब्दत्वाच्छास्त्रस्यापि दोषमूलत्वमनुमीयतामिति—**श्रुतप्रकाशिका परास्ता** । भ्रमप्रत्यक्षस्यैव दोषमूलत्वानुमानं, न तु प्रमाप्रत्यक्षस्येति कृत्वा प्रमाप्रत्यक्षजनकत्वाच्छास्त्रमदोषमूलं प्रमाणमेवेति । न च शास्त्रस्य प्रमाप्रत्यक्षजनकत्वेपि घटप्रत्यक्षमिव शास्त्रप्रत्यक्षमपि दोषमूलकत्वेन भ्रमभूतमेवेति वाच्यं, इष्टापत्तेः- ब्रह्मभिन्नं हि सर्वं मिथ्या । नचैवं भ्रमभूतस्य शास्त्रस्य कथं प्रमाजनकत्वमिति वाच्यं, रजसोपि कतकस्य रजस्स्वलजलनिर्मलत्वहेतुत्वदर्शनात् ।

**वस्तुतस्तु** शास्त्रं, तत्कर्ता ईश्वरः, तदध्येता जीवः, तज्जन्यं ज्ञानं, तत्साध्यं द्वैतं चेत्येतत्सर्वं मिथ्यैव, ब्रह्मभिन्नत्वात् । ततश्च मिथ्याभूतं शास्त्रं मिथ्याभूतमेव प्रमाज्ञानं जनयतीति न कश्चिद्दोषः । नचैवं भ्रमज्ञानवत्प्रमाज्ञानस्यापि मिथ्यात्वेन बाधितत्वे सति भ्रमप्रमयोरविशेष इति वाच्यं, नहि ज्ञानस्याबाधितत्वं प्रमात्वप्रयोजकं वृत्तिरूपज्ञानस्य त्रैकालिकत्वाभावेन बाधितत्वात्किं तर्हि अबाधितार्थविषयत्वमेव, तच्च भ्रमस्य नास्तीति । एवं प्रमाजनकत्वादेव शास्त्रं मिथ्याभूतमपि प्रमाणमित्युच्यते । चक्षुरादीनि तु एतत्प्रमाजनकानि न भवन्तीत्यप्रमाणान्येव । यद्यप्येवं तथापि यावद्व्यवहारमबाधितार्थविषयज्ञानजनकत्वात्तान्यपि प्रमाणानीत्युच्यन्ते ।

**वस्तुतस्तु** प्रमाणाभासा एव तानि । एवं शास्त्रस्य प्रमाणत्वादेवादोषमूलत्वमित्युच्यते- न त्वमिथ्यात्वात्- शास्त्रं ह्यविद्याजन्यत्वान्मिथ्यैव । यद्वा भ्रमप्रमादादिपुंदोषरहितत्वाच्छास्त्रमदोषमूलमित्युच्यते । तस्माच्छास्त्रमेव प्रमाणं तज्जन्यं निर्विकल्पकं ज्ञानमेव प्रमा, सविकल्पकं सर्वं ज्ञानजातं भ्रम एव । ततस्सर्वस्य द्वैतभ्रमस्य शास्त्रबाध्यत्वं निर्विवादमिति ।

**यदुक्तं सुदर्शनेन**—आयुर्वेदे दोषाणां स्वरूपं तन्निवृत्त्युपायादिकं च निरूपितं सर्वप्रत्यक्षाणां दोषमूलत्वानुमानं तद्विरुद्धमिति **तदयुक्तम्**—परमार्थतत्त्वावेदनपरे वेदान्तशास्त्रे कामकर्मादिसहकृतायाः अविद्याया दोषत्वस्योक्तत्वादायुर्वेदे रोगादिस्वरूपप्रतिपादनपरत्वेनातत्परे तदनुक्तेरकिंचित्करत्वाच्च ।

तस्माज्जीवानां सहजसखत्वेन परमाप्तभूतेश्वरप्रणीतं प्रमाणराजवेदान्तशास्त्रमपौरुषेयत्वादसम्भावितसकलपुंदोषगन्धं सर्वतो बलाधिकं सत् कामकर्मादिसहकृताविद्यादोषजन्यं द्वैतभ्रमं दुर्बलं बाधत एव--आप्तवाक्यमिव रज्जुसर्पभ्रमम् । **एतेन**—शास्त्रप्रत्यक्षयोस्तुल्यदोषत्वं तुल्यबलत्वं चेत्येतदुभयं **प्रत्युक्तम्** । **नच** यथा प्रत्यक्षमविद्याजन्यं तथा शास्त्रमपीति तुल्यदोषत्वमिति वाच्यं, प्रत्यक्षं शास्त्रादपि भवतीति न शास्त्रप्रत्यक्षयोस्तुल्यकक्ष्यता, किंतु प्रत्यक्षज्ञानजनकस्य शास्त्रस्य चक्षुरादेश्च तुल्यकक्ष्यता वाच्या । **नच** तथैव वदामः- यथा चक्षुरादिप्रमाणमविद्याजन्यं तथा शास्त्रं प्रमाणमप्यविद्याजन्यमेवेति तुल्यदोषत्वमिति वाच्यं, अविद्याजन्यत्वांशे समेपि अपौरुषेयत्वपौरुषेयत्वप्रयुक्तनिर्दोषत्वसदोषत्वाभ्यां भेदादिति । **नच** शास्त्रवच्चक्षुरादिकमपीश्वरसृष्टत्वादपौरुषेयमेवेति वाच्यं, ईश्वरसृष्टत्वेपि चक्षुरादेः पुरुषतन्त्रत्वेनापौरुषेयत्वाभावात् । नच शास्त्रमपि पुरुषेणाधीयत इति पुरुषतन्त्रमेवेति वाच्यं, पुरुषेण वेदस्य भारतादिवन्निजेच्छया उच्चारयितुमयुक्तत्वात् । गुरूच्चारणानूच्चारणविषयो हि वेदः । अत एवानुश्रव इत्युच्यते । एवमीश्वराद्धिरण्यगर्भो यथा श्रुतवान्वेदं तथैव मरीच्यादिभ्यस्स प्रोवाच । तेच स्वशिष्येभ्यः । स चेश्वरः कल्पान्तरस्थवेदसजातीयमेवेति वेदस्यापौरुषेयत्वम् । अत एव नित्यत्वं च 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भु'वेति । तस्माच्छास्त्रस्य चक्षुरादेश्च अविद्यादिसाधारणदोषतौल्येपि भ्रमप्रमादादिपुंदोषतौल्याभावान्न तुल्यदोषत्वम् । एवमसाधारणदोषवत्त्वाच्चक्षुरादिप्रमाणानां प्रमाणाभासत्वेन दुर्बलत्वं, तद्रहितत्वाच्च शास्त्रस्य प्राबल्यम् । शास्त्रं च वेद एव प्रमाणम् , न पाञ्चरात्रागमादिकं तस्य नारदादिपुरुषविशेषकृतत्वेनाप्रमाणत्वात् । स्वतः प्रमाणं हि वेदः- अपौरुषेयत्वात् । स्मृत्यादयस्तु तदनुरोधिन एव प्रमाणानि, इति विरोधाधिकरणे स्थापितं जैमिनिनैव । पाञ्चरात्रागमादयस्तु श्रौताद्वैतमतविरुद्धार्थप्रतिपादकत्वादप्रमाणान्येवे—**त्यलम्** ॥

## प्रत्यक्षस्य ज्येष्ठत्वं बाध्यत्वे हेतुः ।

**किंच** अपच्छेदन्यायेन परत्वादपि शास्त्रं द्वैतप्रत्यक्षस्य बाधकम् । नच दोषमूलस्य शास्त्रस्य परत्वमकिञ्चित्करमिति वाच्यं, शास्त्रस्यासाधारणदोषमूलत्वाभावस्योक्तत्वात् । साधारणदोषमूलत्वस्य च बाध्यबाधकयोस्तुल्यत्वेन असाधारणदोषरहितं शास्त्रं तद्युक्तं द्वैतं प्रत्यक्षं परत्वादपि बाधत एव । **एते**नोपक्रमाधिकरणन्यायेन परस्यापि शास्त्रस्य पूर्वमेव प्रत्यक्षं बाधकमस्त्विति—**परास्तम्** । निर्दोषमेव पूर्वं परबाधकं नतु सदोषमिति । नचैवं निर्दोषत्वादेव शास्त्रं प्रत्यक्षबाधकमित्यस्तु किमिति परत्वाच्चेत्युक्तमिति वाच्यं, शास्त्रस्य प्रत्यक्षबाधकत्वदार्ढ्यार्थमिति ।

## परत्वादागमस्य बाधकत्वोपपत्तिः ।

**यद्वा** शास्त्रस्य चक्षुरादिवद्दोषमूलस्याभ्युपगमेपि परत्वादस्ति बाधकत्वं । नच परत्वमकिञ्चित्करमिति वाच्यं, पूर्वमपि रज्जौ सर्पभ्रमं परो दण्डभ्रमं बाधते हि- नहि सर्पभ्रमो रज्जुज्ञानादेव निवर्तत इति वक्तुं शक्यते-- दण्डभ्रमादपि तन्निवृत्तिदर्शनात् । तस्मान्नास्त्यत्रोपक्रमाधिकरणन्यायप्रवृत्तिरिति भावः ।

**ननु** यदि पूर्वभ्रमं परभ्रमो बाधते तर्हि सचापि परभ्रमः यथार्थज्ञानेन बाध्यत एव, यद्वा ततोपि परभ्रमेण बाध्यते- एवं शास्त्रमपि प्रत्यक्षबाधकं परं ततोपि परः कश्चिद्बाधत एवेति **चेन्मैवम्**—तस्यैव सर्वपरत्वेन ततः परस्याभावात् । अधीतवेदान्तः प्रतिपन्नब्रह्मात्मसाक्षात्कारः कृतकृत्यस्सर्वविद्ब्रह्मीभूतः पुरुषो हि न शास्त्रान्तरमध्येति, नापि ज्ञानान्तरं प्रतिपद्यते नाहं ब्रह्मेति, येन ब्रह्माहमस्मीति शास्त्रजन्यं ज्ञानं पूर्वमुदितं परं ज्ञानान्तरं बाधेत । सर्वाण्यपि ज्ञानान्तराणि सविकल्पकान्युपमृद्य हि शास्त्रान्निर्विकल्पकमहं ब्रह्मेति ज्ञानं जातम् । तस्मान्न वेदान्तशास्त्रजन्यज्ञानस्यास्ति बाधकं परं ज्ञानान्तरम् ।

**ननु** परमपि शास्त्रं निर्दोषत्वात्प्रमाणमिति निश्चये सत्येव तज्जन्यज्ञानस्य संसारनिवर्तकत्वम्—नतु तदभावे तत्- रज्जुसर्पभ्रान्तिमान्हि नायं सर्पः, किंतु रज्जुरेवेति वदति परस्मिन् प्रामाणिकत्वनिश्चये सत्येव तद्वाक्यात्स्वभ्रान्तिं जहाति नतु तदभावे- शास्त्रं च सदोषमिति न तत्र प्रामाण्यनिश्चयः पुरुषस्येति । न तज्जन्यज्ञानात्पुरुषस्य संसारनिवृत्तिरिति, **मैवम्**—शास्त्रकर्तर्यास्तिकस्य प्रामाणिकत्वनिश्चयसत्त्वात् । परमेश्वरकर्तृके च शास्त्रे निर्दोषत्वात्प्रामाण्यनिश्चयसत्त्वाच्च । नचाविद्यकं शास्त्रं कथं निर्दोषमिति वाच्यं, तदतिरिक्तभ्रमप्रमादादिपुंदोषरहितत्वस्यैव निर्दोषत्वरूपत्वात् । तस्मादनादिकालादारभ्य द्वैतभ्रमं प्रतिपन्नः पुरुषः परमेश्वरानुग्रहादुत्पन्नब्रह्मजिज्ञासस्सन् पश्चाद्गुरूपदेशादिना वेदान्तशास्त्रार्थमधिगत्य मननादिना ब्रह्मात्मसाक्षात्कारात्तं भ्रमं परित्यजतीति विद्वन्मार्गात्- पूर्वं प्रत्यक्षं परं शास्त्रं बाधत एव । शास्त्रस्याविद्यादोषजन्यत्वं तु न भ्रमबाधकत्वप्रतिक्षेपकं भ्रमस्यापि तथात्वात् । अपौरुषेयत्वादसम्भाव्यमानदोषत्वं तु भ्रमबाधकत्वस्थापकमेवेति ।

## आगमस्य प्रमाणत्वोपपत्तिः ।

**ननु** इदं शास्त्रमसम्भाव्यमानैतद्दोषमिति, प्रत्यक्षादिकं तु सम्भाव्यमानदोषमिति च केनावगतं? त्वया न तावन्निर्विशेषाऽनुभूतिरिममर्थमवगमयति- तस्या निर्विशेषत्वाच्छास्त्रपक्षपातविरहाच्च । नाप्यैन्द्रियिकं प्रत्यक्षं- दोषमूलत्वेन विपरीतार्थत्वात् । नाप्यनुमानादीनि- तेषां प्रत्यक्षमूलत्वात् । अतः स्वपक्षसाधनप्रमाणानभ्युपगमान्न स्वाभिमतार्थसिद्धिरिति—**रामानुजः**, **नैतद्युक्तम्**—शास्त्रमसम्भाव्यमानपुंदोषमिति मया शास्त्रादेवावगतम्- शास्त्रकर्ता हीश्वरस्सर्वज्ञस्सकलपुंदोषविधुरः । तथा प्रत्यक्षादेस्सम्भाव्यमानदोषत्वं च शास्त्रादनुभवाच्चावगतमिति । नच प्रत्यक्षस्य दोषमूलत्वेसति प्रत्यक्षमूलत्वाच्छब्दोपि दोषमूल एवेति विपरीतार्थ एवेति वाच्यं, अपौरुषेयत्वेन शास्त्रस्यादोषमूलत्वस्योक्तत्वात् । शास्त्रस्य पृथक्प्रमाणत्वेन स्वतः प्रमाणत्वेन च प्रत्यक्षमूलत्वाभावाच्च ।

**ननु** शास्त्रंनाम वैदिकशब्दराशिः, सच घटवद्वैर्यादिशब्दवच्च चक्षुश्श्रोत्रप्रत्यक्षविषय एवेति कृत्वा प्रत्यक्षमूलमेव शास्त्रं, तथाच प्रत्यक्षस्यैव विपरीतार्थत्वे तन्मूलस्य शास्त्रस्य कथमविपरीतार्थत्वमिति, **मैवम्**—यद्यपि ब्रह्मैव चक्षुषा स्वाभाविकदोषवशाच्छास्त्रत्वेन गृहीतं रज्जुरिव सर्पत्वेनागन्तुकदोषवशात्- 'ब्रह्मार्पणं ब्रह्म हवि'रिति गीतावचनात् । तथापि शास्त्रमविपरीतार्थकमेव- शास्त्रेणैवास्यार्थस्योक्तत्वात् । नच चक्षुर्ग्राह्यस्य शास्त्रस्य कथं चक्षुःप्रामाण्यप्रतिक्षेपकतेति वाच्यं, दीपावभास्यस्य घटस्य दीपप्रकाश-

प्रतिरोधित्वदर्शनात् । नच चक्षुषोऽप्रमाणत्वे तद्ग्राह्यस्य शास्त्रस्य कथं प्रमाणत्वमिति वाच्यं, अप्रमाजनकत्वेन चक्षुषोऽप्रमाणत्वेपि प्रमाजनकत्वेन शास्त्रस्य प्रमाणत्वात् । अग्निजनकस्य काष्ठस्याप्रकाशकत्वेपि काष्ठजन्यस्याग्नेः प्रकाशत्वदर्शनात् । नच चक्षुर्ग्राह्यत्वेन मिथ्याभूतं शास्त्रं कथं प्रमाजनकं भवेदिति वाच्यं, प्रमाया अपि जन्यत्वेन मिथ्यात्वात् । यज्जन्यं तद्धि नश्यत्वेन मिथ्या । नच यथार्थज्ञानस्य कथं मिथ्यात्वमिति वाच्यं, सापेक्षमेव ज्ञानस्य जन्यस्य याथार्थ्यं नतु निरपेक्षमिति भ्रमापेक्षया हि प्रमा सत्या, ब्रह्मदृष्ट्या तु सर्वमसत्यमेवेति । नच शास्त्रं कथं स्वस्यैव मिथ्यात्वं ब्रूयादिति वाच्यं, शास्त्रस्य जडस्य वचनायोगात् । नच शास्त्रकर्तापीश्वरः कथं स्वशास्त्रं मिथ्येति ब्रूयादिति वाच्यं, स्वशास्त्रस्य ब्रह्मभिन्नत्वेन मिथ्यात्वादेव । नच मिथ्याशास्त्रकर्तृत्वमीश्वरस्य सर्वशक्तेर्न युक्तमिति वाच्यं, कार्यमात्रस्य मिथ्यात्वेन सत्यस्याकार्यत्वेन च मिथ्याशास्त्रस्यैवेश्वरेण कर्तव्यत्वात् । नचैवं शास्त्रकर्तापीश्वरो मिथ्यैवेति वाच्यं, इष्टापत्तेः । नचेश्वरः स्वमिथ्यात्वं कथं प्रतिपादयेदिति वाच्यं, ब्रह्मैवाहं वस्तुतो मायया तु ममेश्वरत्वमागतं तच्च मिथ्येतीश्वरः प्रतिपादयेदेवेति । नच ममेश्वरत्वं मिथ्येतीश्वर एव कथं प्रतिपादयेदिति वाच्यं, स्वप्नोत्थितः पुरुषो ब्राह्मण एव स्वप्ने मम क्षत्रियत्वमागतं तच्च मिथ्येति प्रतिपादयतीति दर्शनात् । नच ब्राह्मण एव मम ब्राह्मणत्वं मिथ्येति कथं ब्रूयादिति वाच्यं, ब्राह्मण एव स्वस्य देहतादात्म्याध्यासविगमे सति नाहं ब्राह्मण इति निश्चीय मम ब्राह्मणत्वं मिथ्यैवाभूदिति वक्त्येवेति । नच तत्र ब्राह्मणदेहादन्यो जीव एव वक्तेति वाच्यं, जीवस्य वागिन्द्रियाभावेन मुखाभावेन च वक्तृत्वायोगात् । तस्माद्ब्रह्मण एव सतो मम मायया ईश्वरत्वं जीवत्वं चागतमितीश्वरो गुरुर्वा शास्त्रेणोपदेशेन वा शिष्यं प्रतिबोधयेदेव । यावद्व्यवहारं गुरुशिष्येश्वरादिसर्वद्वैतसत्त्वात् । परमार्थतस्तु 'न शास्ता न शास्त्रं न शिष्यो न शिक्षा नच त्वं नचाहं नचायं प्रपञ्चः'- 'नेह नानास्ति किंचने'-त्यादिशास्त्रात् । तथाच ऐन्द्रियकत्वेन मिथ्याभूतमपि शास्त्रं प्रमाजनकत्वाद्यावद्व्यवहारं परं प्रमाणमेव । तद्ग्राहकमिन्द्रियं तु विपरीतार्थग्राहित्वादप्रमाणमेव- यथा ग्राहकस्यान्तःकरणस्यानित्यत्वेपि ग्राह्यस्य ब्रह्मणो नित्यत्वं तद्वत् । नचैवं चक्षुरादेः प्रमाणत्वप्रसिद्धिभङ्गप्रसङ्गः- यावद्व्यवहारमबाधितार्थविषयज्ञानरूपप्रमाजनकत्वेन तेषां प्रमाणत्वप्रसिद्धेः । शास्त्रं त्वत्यन्ताबाधितार्थविषयज्ञानजनकत्वेनात्यन्तं प्रमाणम् । **तस्माद्वेदान्तशास्त्रमेकमेव प्रमाणम्-** अन्यानि चक्षुरादीनि प्रमाणानि तु प्रमाणाभासा एव—**इति ।**

**यदुक्तमत्र सुदर्शनेन**—स्वाभिमतार्थव्यतिरिक्तपरं शास्त्रान्तरमपरमार्थार्थकमित्यन्यस्मिन्नर्थे किं तव प्रमितिः? तत्साधनं वा अस्ति? उत नास्ति? अस्तिचेन्न प्रमाणादिभङ्गः, नास्तिचेत् तत एव न प्रमाणादिभङ्गः । अस्त्येव तद्व्यावहारिकमिति चेत्, किमिदं व्यावहारिकत्वं किं परमार्थत्वं उतापरमार्थत्वम्? अपरमार्थभूतं प्रमाणं किं साधकमुतासाधकम्? साधकं चेदपरमार्थसंज्ञितमन्येषां च प्रमाणं तत्पक्षसाधकमेव स्यात् । अथासाधकं ततो नितरां वाद्यन्तराभ्युपगतप्रमाणादिकं साधकं भवेत्, त्वदुक्तं प्रमाणादिकं परमार्थभूतं चेद्द्वैती विजयी स्यात्, तथा स्वपक्षपरपक्षभेदः किं परमार्थ उतापरमार्थः?

परमार्थश्चेन्न भेदमिथ्यात्वम् । अपरमार्थश्चेत्परपक्ष एव त्वयाऽङ्गीकृतस्स्यादिति भेदपारमार्थ्यं त्वयैवोक्तं स्यादिति, **तदयुक्तम्**—प्रमितितत्साधनादिकं सर्वमपि व्यवहारदशायामेवास्ति, नतु परमार्थदशायाम् । नहि तवापि सुषुप्त्यादिषु शास्त्रादिकमस्ति । तथा च ब्रह्मैकमेव पारमार्थिकं तद्भिन्नं सर्वमपि व्यावहारिकमेवेति स्थिते व्यावहारिकत्वं किं परमार्थत्वमुतापरमार्थत्वमित्यनुन्मत्तः कोपि न विकल्पयेत् । नचैवं व्यावहारिकत्वादपरमार्थभूतं प्रमाणमसाधकमेवेति वाच्यं, साध्यस्याप्यपरमार्थभूतत्वेन तत्साधकत्वसम्भवात्प्रमाणस्य । नच तथासति त्वच्छास्त्रं त्वदभिमतार्थमिव शास्त्रान्तरं पराभिमतार्थमपि साधयेदेवेति वाच्यं, अभिमतमपि दुस्साधमर्थं शास्त्रं न साधयत्येवेति । नच यश्शास्त्रोक्तार्थस्स सुसाध एवेति वाच्यं, असच्छास्त्रोक्तार्थस्य दुस्साधत्वात् । नहि बौद्धादिशास्त्रोक्तदेहात्मादिवादस्सुसाधः । नचाभेदवादोपि दुस्साध एवेति वाच्यं, तस्य सुसाधत्वात् । नच सति पाण्डित्यातिशये बौद्धेनापि स्ववादस्साध्यत इति वाच्यं, यद्येवं वादिदौर्बल्यमेव न वाददौर्बल्यं तर्हि व्यर्थोयं तवाद्वैतविजयार्थककोलाहलः । किंच- मार्गे गच्छन्तस्त्रयः पुरुषा एकमेव स्थाणुं दृष्ट्वा स्थाणुरिति, न स्थाणुः किंतु पुरुष इति, न स्थाणुर्न पुरुषः किंतु पिशाच इति च विप्रतिपद्यन्ते- किं तत्र वादत्रयस्य तुल्यबलत्वं वक्तुं शक्यते । अपि तु स्थाणुरिति वादः प्रबल **इति**—कुतः- यथावस्थितार्थविषयत्वात्तद्वादस्य । तथा च यथाभूतार्थप्रतिपादकमेव शास्त्रं प्रमाणं, तदन्यानि तु प्रमाणाभासा एव । एवं सति प्रमाणभूतशास्त्रमेव मदभिमतं त्वदभिमतं पराभिमतं वा अर्थं साधयति, नाप्रमाणभूतमिति—**सिद्धम्** । नच शास्त्रसाध्यो मिथ्याभूतार्थः कथं यथाभूतार्थस्स्यादिति वाच्यं, यथाभूतार्थप्रतिपादकं हि शास्त्रमयमेव यथाभूतार्थ इति यथाभूतमर्थं साधयतीत्यभिप्रायेण शास्त्रसाध्यत्वं यथाभूतार्थस्योक्तं नतु शास्त्रकार्यत्वेनेति न तस्य मिथ्यात्वमिति । तस्मात्सर्वमपि शास्त्रजातं स्वस्वकर्त्रभिमतं यथाभूतमयथाभूतं वाऽर्थं प्रतिपादयन् साधयति- तत्र यथाभूतार्थसाधकमेव शास्त्रं प्रमाणं, योर्थस्सर्वज्ञेश्वराभिमतस्स एव यथाभूतार्थः । किंचिदज्ञजीवाभिमतास्तु अयथाभूता एवार्थाः । अत एव गीतासु श्रीकृष्णेन स्वोक्तार्थे प्रामाण्याय 'मम मत'मित्युक्तम् । सच परमेश्वराभिमतोर्थः परमेश्वरप्रणीते शास्त्र एव वर्तत इति कृत्वा अपौरुषेयं शास्त्रमेव प्रमाणं, नतु पौरुषेया आगमादयः- तच्चापौरुषेयं शास्त्रं वेद एव- 'तस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेद' इत्यादिशास्त्रात् । स एवार्थसाधकः-- सच व्यवहारदशायामेव वर्तत इति प्रमाणभूतं शास्त्रं व्यावहारिकमेव । यथा अप्रमाणभूतान्यपि शास्त्रान्तराणि व्यावहारिकाणि तद्वत् । नच प्रमाणभूतस्य कथं व्यावहारिकत्वमिति वाच्यं, प्रमाणभूतस्य प्रातिभासिकत्वमेव विरुद्धं, नतु व्यावहारिकत्वमिति । नचैवं पारमार्थिकस्य ब्रह्मणोऽप्रमाणभूतत्वमागतमिति वाच्यं, इष्टापत्तेः । नहि निष्क्रियं ब्रह्म प्रमाजनकम् । नचाप्रमाणं ब्रह्म मिथ्यैवेति वाच्यं, ब्रह्म प्रमाणं न भवतीत्यस्माभिरुच्यते, नतु ब्रह्मणि प्रमाणं नास्तीति- शास्त्रयोनित्वाद्ब्रह्मणः । यद्वा-- 'यतो वाचो निवर्तन्त' इति श्रुतेरप्रमेये ब्रह्मणि प्रमाणप्रचारो मास्तुनाम- न तावता अप्रमाणस्यापि ब्रह्मणो मिथ्यात्वं- यस्य प्रतीतिबाधौ तदेव मिथ्येति- ब्रह्म च न प्रतीयते, नापि बाध्यत इति न मिथ्येति । नचैवं शशशृङ्गवच्छून्यमेव भवेद्ब्रह्मेति वाच्यं, प्रतीतित्वादेव ब्रह्मणो न शून्यत्वमिति ।

किंच शून्यं ब्रह्मेति या सविषया प्रतीतिस्तस्यास्सकाशाद्विषयापाकरणे यदवशिष्यते तदेव शुद्धं ज्ञानं ब्रह्मेति । अपिच शून्यं ब्रह्मेति यो मन्यते तस्य मन्तुर्यत्स्वरूपं तदेव ब्रह्मेति न शून्यं ब्रह्म । एवं व्यवहारदशायां यथाभूतमर्थमस्मभ्यं बोधयति वेदान्तशास्त्रमिति कृत्वा तदेव परं प्रमाणं न शास्त्रान्तरमिति न शास्त्रान्तरस्य तत्तदभिमतार्थसाधकत्वेपि न यथाभूतार्थसाधकत्वमिति प्रमाणत्वमिति । एवं परमार्थभूतब्रह्मप्रतिपादकत्वेन परं प्रमाणमपि शास्त्रं व्यावहारिकत्वेनापरमार्थभूतमेवेति । न तेन ब्रह्मणो द्वैतमिति न द्वैतिनो विजयः, नापि तद्द्वारा तव- किन्त्वद्वैतिन एव इति ।

**यदुक्तं**—स्वपक्षपरपक्षभेदस्यापरमार्थत्वे परपक्ष एव त्वयाङ्गीकृतस्स्यादिति **तत्तुच्छम्**—स्वपक्षपरपक्षभेदवत्स्वपक्षः परपक्षश्च मिथ्यैवेति मयोच्यमानत्वेन कथं परपक्षोऽङ्गीकृतः । नच त्वया स्वीकृतो यः पक्षः तस्य च परपक्षस्य च भेदाभावे परपक्ष एव त्वया स्वीकृतो भवतीति वाच्यं, यावद्व्यवहारं स्वपक्षपरपक्षादिभेदसत्त्वान्मया व्यवहारदशायां स्वीकृतो यः पक्षस्स परपक्षाद्भिन्न एवेति । नच त्वया व्यवहारदशायां स्वीकृतः पक्षः किं वस्तुतः परपक्षाद्भिन्न उताभिन्न इति वाच्यं, वस्तुतः स्वपक्षस्य परपक्षस्य वाऽभावेन तद्विकल्पाप्रसरात् । **एतेन** भेदपारमार्थ्यं त्वयैवोक्तं स्यादिति **निरस्तं**, व्यावहारिक एव सर्वोपि भेदो भेदी चेति मयोच्यमानत्वात् इति । **ननु** आपातप्रतीतिसिद्धो युक्तिभिर्निरूपितो न तथावस्थितोऽर्थो व्यावहारिक इत्युच्यते, तेन च न किमपि प्रयोजनं- प्रमाणतया प्रतिपन्नेपि यौक्तिकबाधादेव प्रमाणकार्याभावादिति—**रामानुजः, मैवम्**—तदुक्तार्थस्य प्रातिभासिकत्वात्- यावद्व्यवहारं वर्तमानस्यैवार्थस्य व्यावहारिकत्वात् । तेन च व्यावहारिकप्रमाणेन यद्यत्साध्यं तत्तत्साध्यते- साध्यसाधनप्रयोजनत्रयस्यापि व्यावहारिकत्वात् । यस्य यौक्तिकबाधस्स प्रमाणतया नैव प्रतिपन्न इति कृत्वा सर्वमपि व्यावहारिकं प्रमाणं यौक्तिकबाधरहितमेव । नह्यम्बुधूमो वह्निसाधकप्रमाणत्वयाभ्युपेतो येन तस्य यौक्तिकबाध इति सुदर्शनोक्तं समीचीनं भवेत् । तस्माद्व्यावहारिकप्रमाणेन व्यावहारिकप्रमातुर्व्यावहारिकं कार्यं भवेदेव । परमार्थतस्तु न प्रमाणादिकमित्यलम् ।

**प्रमाणादेर्व्यावहारिकत्वे** प्रयोजकं तु बाधितत्वमेव- अबाधितं हि परमार्थम्—इति । **ननु** अबाधितमपि दोषमूलकमपरमार्थमेव- अबाधितस्यापि दोषमूलकस्य तैमिरिकद्विचन्द्रज्ञानस्य मिथ्यात्वदर्शनात्, **मैवम्**—यस्य तैमिरिकदोषो नापगच्छति तदीयद्विचन्द्रज्ञानस्याबाधितत्वेपि अन्यत्र तस्य बाधितत्वदर्शनात् । अबाधितमपि बाधयोग्यमपरमार्थमित्याश्रयणात् । **यद्वा** तैमिरिकदोषानपगमादनिवृत्तमपि द्विचन्द्रज्ञानमाप्तवाक्यादिना बाध्यत एव । आप्तवाक्यादिना हि तैमिरिकपुरुषश्चन्द्रद्वयं पश्यन्नपि मच्चक्षुष एवायं दोषश्चन्द्रस्त्वेक एवेति प्रत्येति । तस्माद्यद्दोषमूलकं तत्तद्बाधितमेव- व्यवहारश्चाविद्यादोषमूलत्वाद्बाधित एवेत्यपरमार्थ एव । किंच ब्रह्मभिन्नस्य नास्त्यबाधितत्वं, सर्वस्यापि द्वैतस्य नित्यत्वेन बाधितत्वात् । नच रज्जुज्ञानबाधितसर्पवद्ज्ञानबाधितस्यैव मिथ्यात्वमिति वाच्यं, ब्रह्मज्ञानेन द्वैतज्ञानस्य बाधितत्वात् । नच ब्रह्मविदपि द्वैतं पश्यतीति न ब्रह्मज्ञानेन द्वैतबाध इति वाच्यं, द्वैतदर्शनवेलायां ब्रह्मदर्शनं, ब्रह्मदर्शनवेलायां द्वैतदर्शनं च न सम्भवत्येवेति न ब्रह्मविद्द्वैतं पश्यति, न वा द्वैतदर्शी ब्रह्म

पश्यतीति । यद्वा ब्रह्मविद्द्वैतं पश्यन्नपि ब्रह्मेत्येव पश्यति- 'ब्रह्मार्पणं ब्रह्महवि'रिति न्यायात् । यथा घटतत्त्वविद्घटं पश्यन्नपि मृत्तिकेत्येव पश्यति तद्वत्—इति । नच ब्रह्मज्ञानेन द्वैतज्ञानस्यैव बाधो न द्वैतस्येति वाच्यं, समूलस्य द्वैतज्ञानस्य बाधेसति तत एव द्वैतस्यापि बाधात् । तस्माद्बाधितत्वादेव द्वैतमपरमार्थमबाधितत्वादेवाद्वैतं ब्रह्म परमार्थभूतम्—इति । **यदुक्तं** दोषो ह्ययथार्थज्ञानहेतुरिति **तद्युक्तमेव** । **नचैवमविद्यादोषमूलत्वेन ब्रह्मज्ञानमप्ययथार्थज्ञानमेवेति** वाच्यं, इष्टापत्तेः । सर्वं हि जन्यं ज्ञानमयथार्थमेव, नित्यमजन्यं चैतन्यमेकमेव हि यथार्थज्ञानं- 'तत्सत्य'मिति श्रुतेः, यज्जन्यं तदसत्यमिति व्याप्तेश्च । याथार्थ्यं हि सत्यत्वम् । नचैवं दोषमूलत्वादयथार्थभूतेन ब्रह्मज्ञानेन कथं द्वैतज्ञानस्य बाध इति वाच्यं, दण्डभ्रमेण सर्पभ्रमस्य बाधदर्शनात् ।

**नन्वेवं** चेद्दण्डज्ञानस्य मिथ्यात्वाद्यथा तद्विषयदण्डस्य मिथ्यात्वं तद्वद्ब्रह्मज्ञानस्यापि मिथ्यात्वे तद्विषयस्य ब्रह्मणोपि मिथ्यात्वं स्यादिति, **मैवम्**—यदि सत्यज्ञानविषयस्य वस्तुनस्सत्यत्वं तर्हि मिथ्याज्ञानविषयस्य वस्तुनो मिथ्यात्वमित्यस्तु । नतु तदस्ति- सविषयस्य सत्यज्ञानस्यैवाभावात् । आत्मस्वरूपज्ञानस्य च सत्यस्य निर्विषयत्वात् । किंतु योऽबाधितोर्थस्स एव सत्यः, यश्च बाधितस्स मिथ्यैव— यथा अबाधितत्वाद्रज्जुस्सत्यार्थः, सर्पस्तु बाधितत्वान्मिथ्यार्थः तद्वत् । ब्रह्म च घटवन्मिथ्याज्ञानविषयोपि अबाधितत्वात्सत्यम् । यद्वा अविषये ब्रह्मणि मिथ्याज्ञानविषयत्वमपि न सम्भवतीति न मिथ्याज्ञानविषयत्वाद्ब्रह्म मिथ्येति वक्तुं शक्यते । नचैवं निर्विषयस्य ब्रह्मणः कथं ज्ञेयत्वमिति वाच्यं, ज्ञेयत्वस्यापि तत्र कल्पितत्वात् । नच घटेपि ज्ञेयत्वं कल्पितमेव- अकल्पितज्ञेयत्वस्याभावादिति वाच्यं, ब्रह्मणि घट एव कल्पित इति कृत्वा न घटे पुनर्ज्ञेयत्वस्य कल्पनावसरः- ज्ञेयस्यैव घटस्य कल्पितत्वात् । ब्रह्मणि तु ज्ञेयत्वं घटवत्कल्पनीयमेवेति भेदात् । एवं जन्यं ज्ञानमात्रमविद्यामूलत्वाद्यद्यप्यसत्यत्वेनायथार्थभूतं तथापि यद्विषयोर्थोऽबाधितस्तद्ज्ञानं यथार्थभूतं, यद्विषयस्तु बाधितस्तद्ज्ञानमयथार्थभूतमिति व्यपदिश्यते- यथा वल्मीकसर्परज्जुसर्पयोर्द्वयोरप्यनित्यत्वेनासत्यत्वे समेपि व्यवहारदशायामबाधितत्वाद्वल्मीकसर्पस्सत्य इति, तत्र बाधितत्वाद्रज्जुसर्पोऽसत्य इति च लोके व्यपदेशः तद्वत् । **एतेन** मूलाज्ञानपदवाच्याविद्यारूपदोषस्य भ्रमप्रमारूपज्ञानद्वयसाधारणहेतुत्वे सत्यपि भ्रमासाधारणहेतुत्वं नास्तीति कृत्वा तदतिरिक्तदोष एवायथार्थज्ञानहेतुरिति सिद्धम् ।

**यच्चात्रोक्तं रामानुजेन**— सन्ति चात्र प्रयोगाः- विवादाध्यासितं ब्रह्म मिथ्या, अविद्यावत उत्पन्नज्ञानविषयत्वात्- प्रपञ्चवत् । ब्रह्म मिथ्या- ज्ञानविषयत्वात्प्रपञ्चवत्, ब्रह्म मिथ्या- असत्यहेतुजन्यज्ञानविषयत्वात्प्रपञ्चवत् **इति, तदयुक्तम्**—निर्विशेषस्य ब्रह्मणोऽस्मन्मते ज्ञानाविषयत्वात् । ज्ञेयस्य च सोपाधिकस्य ब्रह्मणो मिथ्यात्वस्येष्टत्वात् । तत्रापि यद्द्वारा ब्रह्मणो ज्ञेयत्वमागतं तस्यैवोपाधिभूतस्यार्थस्य मिथ्यात्वं नतु विशेष्यस्य ब्रह्मण इति सिद्धान्तात्—इति । यद्वा ब्रह्म न मिथ्या- फलव्याप्यत्वलक्षणज्ञानविषयत्वाभावात् । यत्फलव्याप्यत्वलक्षणज्ञानविषयत्ववद्भवति तदेव मिथ्या- यथा प्रपञ्च इति । अथवा ब्रह्म न मिथ्या- अखण्डाकारवृत्तिज्ञानविषयत्वाद्यदखण्डाकारवृत्तिज्ञानविषयो न भवति तदमिथ्या

न भवति- यथा व्यतिरेकदृष्टान्तेन जगदिति । यद्वा ब्रह्म न मिथ्या- मिथ्यात्वसाधकज्ञानविषयत्वस्य ब्रह्मणि कल्पितत्वाद्यत्र स्वकल्पितं ज्ञानविषयत्वं वर्तते तदेव मिथ्या यथा जगदिति ।

**ननु** भवतु नाम ब्रह्म सत्यं, तथापि असत्यस्य शास्त्रस्य परमार्थभूतब्रह्मप्रतिपत्तिहेतुत्वं न युक्तमिति, **मैवम्**—असत्यस्यापि स्वाप्नस्य हस्त्यादिविज्ञानस्य परमार्थभूतशुभाशुभप्रतिपत्तिहेतुःभावदर्शनादिति । नच स्वाप्नज्ञानस्य सत्यत्वमेव, तत्र विषयाणामेव मिथ्यात्वं तेषामेव हि बाधो दृश्यते, न ज्ञानस्य- नहि मया स्वप्नवेलायामनुभूतं ज्ञानमपि न विद्यत इति कस्यचिदपि प्रत्ययो जायत इति वाच्यं, मिथ्याविषयमिथ्येन्द्रियसन्निकर्षजन्यस्य स्वाप्नज्ञानस्यामिथ्यात्वायोगात् । नच यथार्थविषयेन्द्रियसन्निकर्षजन्यं ज्ञानमपि त्वया मिथ्येत्येवोक्तमिति वाच्यं, व्यावहारिकसत्यमिति तदर्थात् । स्वप्नावस्थायां जातस्य क्षत्रियोहमिति ज्ञानस्य जाग्रत्कालिकेन ब्राह्मणोऽहमिति ज्ञानेन बाधदर्शनात् । ब्राह्मणोहं स्वप्नेपि क्षत्रियो नैवासं, किंतु तथा मम मिथ्यैव प्रतीतिरासीदित्यनुभवाच्च । यदि ज्ञानमात्रं सत्यं, तर्हि भ्रमज्ञानमपि सत्यमेव भवेदिति भ्रमप्रमयोरविशेष एव भवेत् । नच सत्यत्वे तुल्येपि स्वविषयबाधाबाधाभ्यां भ्रमप्रमयोर्विशेष इति वाच्यं, भ्रमस्सत्यः भ्रमविषयस्त्वसत्य इति वाक्यं श्रुत्वा बाला अपि परिहसेयुरिति । अपिच किमिदं भ्रमप्रमयोस्सत्यत्वम्? किं प्रातिभासिकम्? किं वा व्यावहारिकम्? किं वा पारमार्थिकम्? नाद्यः- भ्रमस्य प्रातिभासिकसत्यत्वेपि प्रमाया व्यावहारिकसत्यत्वात् । न द्वितीयः- प्रमाया व्यावहारिकसत्यत्वेपि भ्रमस्य प्रातिभासिकसत्यत्वात् । न तृतीयः- द्वयोरपि पारमार्थिकसत्यत्वाभावात् । नच प्रमावद्भ्रमोपि व्यावहारिकसत्य एवेति वाच्यं, स्वप्नकाल एव भ्रमो नतु जाग्रति व्यवहारकाल इति । किंच तस्मिंस्तद्बुद्धिरिवातस्मिंस्तद्बुद्धिरपि सत्या कथं स्यात्-- लोकोपि अयथाभूतार्थवचनमसत्यमित्येव प्रत्येति, एवमयथाभूतार्थज्ञानमप्यसत्यमेव । अपिच यदा स्वाप्नो रथादिविषयोस्ति तदैव तद्विषयप्रतीतिरप्यस्तीति कथं विषयस्यैव मिथ्यात्वं नतु तद्ज्ञानस्य । नच ज्ञानं जातत्वादमिथ्या विषयस्त्वजातत्वान्मिथ्येति वाच्यं, विषयस्याजातत्वे तत्सन्निकर्षजन्यज्ञानस्य कथं सम्भव इति । तस्मात्स्वप्नकालजन्यं ज्ञानं स्वविषयेणसह स्वग्राहकेणसह मिथ्यैव । यद्वा ज्ञानातिरिक्तं ज्ञेयं नास्त्येव- ज्ञानसत्त्वे ज्ञेयसत्त्वं ज्ञानाभावे ज्ञेयाभाव इत्यन्वयव्यतिरेकव्याप्तिन्यायसद्भावात् । यथा मृत्सत्त्वे घटसत्त्वं मृदभावे घटाभाव इति न्यायान्मृदतिरिक्तघटासत्त्वं तद्वत् । तथाच स्वाप्नज्ञानस्यैव स्वाप्नविषयत्वात्स्वप्नविषयस्य मिथ्यात्वमभ्युपगतवता त्वया स्वाप्नज्ञानस्यापि तदभ्युपगतमेव । नच स्वाप्नज्ञानातिरेकेण स्वाप्नविषयासत्त्वादेव स्वाप्नविषयस्य मिथ्यात्वं- यथा मृदतिरेकेण घटस्यासत्त्वादेव मिथ्यात्वं तद्वत्- स्वाप्नज्ञानं तु स्वाप्नविषयातिरेकेणास्त्येवेति न मिथ्या- यथा घटातिरेकेण सतो मृद्द्रव्यस्य न मिथ्यात्वं तद्वदिति वाच्यं, घटव्यतिरेकेण मृद इव स्वाप्नविषयव्यतिरेकेण स्वाप्नज्ञानानुपलम्भात् । नच दर्शनं विद्यते, अर्था न सन्तीति हि बाधकप्रत्यय इति वाच्यं, स्वापविगमे बाधकप्रत्ययकाले स्वाप्नदर्शनस्यावर्तमानत्वात् । नच दर्शनं जातमर्था नासन्निति बाधकप्रत्यय इति वाच्यं, व्यवहारक्षमार्थाभावाभिप्रायकत्वादर्था नासन्निति प्रत्ययस्य । अर्थाभावे तदधीनज्ञानोत्पत्त्यसम्भवस्योक्त-

त्वात्। नच रज्जौ सर्पाभावेपि सर्पज्ञानं जातमिति वाच्यं, रज्जौ सर्पस्य ज्ञानसमकालमेव जातत्वात्। नच विषयाभावेपि विषयस्य प्रतिभासमानत्वमात्रेण तद्बुद्धिर्जायत इति वाच्यं, अभूतस्य विषयस्य प्रतिभासमानत्वायोगात्। तथासति शशशृङ्गस्याप्यविद्यमानस्य प्रतिभासस्स्यादेव। **एतेन** दोषवशादसतोपि विषयस्य प्रतिभास इति—**प्रत्युक्तम्**। असन्नपि विषयो दोषवशाद्युगपदेव जायते प्रतीयते चेति नहि दोषस्य ज्ञानजनकत्वमेव, नतु विषयजनकत्वमिति नियन्तुं शक्यते- ब्रह्मणि दोषस्य जगद्धेतुत्वदर्शनात्। यदि तु ब्रह्मणि दोषवशाज्जगत्प्रतीतिरेव नतु जगदुदय इति मतं तर्हि तन्ममेष्टमेव जगन्मिथ्यात्ववादिनः, तव त्वनिष्टमेव जगत्सत्यत्ववादिनः। नच निद्रादोषवशाद्ब्रह्मण्यसत एव जगतः प्रतीतिः, स्वप्ने जाग्रति तु तदभावात्सत एवेति वाच्यं, जाग्रति निद्रादोषाभावेप्यविद्यादोषसत्त्वादसत एव जगतः प्रतीतिरिति। नच ब्रह्मणि जगदस्त्येवेति वाच्यं, 'नेह नानास्ति किंच'नेति श्रुतेः। यदि ब्रह्मणि जगत्सत्तर्हि न बाध्येतैव- नच यद्यसत्तर्हि न प्रतीयेतैवेति वाच्यं, अत एव मिथ्येत्युच्यते। सदसदनिर्वाच्यत्वं हि मिथ्यात्वम्। तस्माद्यथा व्यवहारकाले जाग्रति जगदस्ति, तथा स्वप्ने प्रतीतिकाले जगदस्त्येवेति प्रातीतिकस्य स्वाप्नस्य रथगजादेर्व्यावहारिकस्य जाग्रतस्य रथगजादेरिव नात्यन्तासत्त्वं शशशृङ्गादिवत्। एवं प्रातीतिकत्वेन स्वाप्नरथगजादेरेव मिथ्यात्वे कथं स्वाप्नप्रतीतेरमिथ्यात्वं भवेत्। नच स्वप्नसमये प्रतीतेस्सत्त्वान्न मिथ्यात्वमिति वाच्यं, तथासति प्रतीतिसमये स्वाप्नपदार्थानां सत्त्वान्न मिथ्यात्वमिति वक्तव्यत्वात्। नच प्रतीत्यतिरेकेण स्वप्ने विषयाणामसत्त्वान्मिथ्यात्वमिति वाच्यं, जागरेपि व्यवहारात्मकप्रतीत्यतिरेकेणासत्त्वाद्विषयाणां मिथ्यात्वमेवेति। नच स्वप्ने विषयाणां निद्रादोषजन्यत्वान्मिथ्यात्वं, जागरे तु तदजन्यत्वादमिथ्यात्वमिति वाच्यं, तथासति तदजन्यस्य शुक्तिरजतादेरमिथ्यात्वं स्यादिति। नचाविद्यातिरिक्तदोषजन्यत्वं मिथ्यात्वप्रयोजकमिति वाच्यं, अविद्याजन्यस्य सत्यस्य काप्यदर्शनात्- मायामयं जगत्सत्यमिति वचनस्य व्याहतत्वाच्च। नच मायामयं जाग्रतं जगत्सत्यमेव दृष्टमिति वाच्यं, तत्सत्यत्वस्यासम्प्रतिपन्नत्वात्। अजं ब्रह्मैकं विना जन्यं सर्वमपि मिथ्यैवेत्यस्मत्सिद्धान्तात्। तस्मात्स्वाप्नज्ञानमपि स्वाप्नविषयवज्जन्यत्वान्मिथ्यैव। नचैवं जाग्रद्ज्ञानमपि मिथ्यैव भवेदिति वाच्यं, इष्टापत्तेः- नहि वयं जाग्रद्ज्ञानं तद्विषयजगद्वा सत्यं ब्रूमः। नचैवं जाग्रत्स्वप्नयोस्तद्विषययोश्चाविशेष एव भवेदिति वाच्यं, इष्टापत्तेः- नहि मिथ्यात्वे तयोः कोपि विशेषः। नच तर्हि अवस्थाद्वयत्वेन तद्वर्णनमयुक्तमिति वाच्यं, अवान्तरविशेषसत्त्वात्। कोसाववान्तरविशेष इति **चेदुच्यते**—अस्थिरप्रतीतिः स्वप्नः, स्थिरप्रतीतिर्जागरः- अस्थिरविषयाः स्वाप्नाः, स्थिरविषयास्तु जाग्रताः- जीवान्तरैर्द्रष्टुमशक्याः स्वाप्नाः, शक्यास्तु जाग्रताः निद्रायां दृश्या स्वाप्नाः, निद्रापगमे दृश्या जाग्रताः- व्यवहाराक्षमास्स्वाप्नाः, व्यवहारक्षमाः जाग्रताः- इत्यादिर्बोध्यः।

एवमवान्तरविशेषसत्त्वादेव रज्जुसर्पवल्मीकसर्पयोरिव स्वप्नविषयजाग्रद्विषययोर्मिथ्यात्वसत्यत्वप्रयुक्तो भेदस्सावर्लौकिकस्सङ्गच्छते। नच स्वाप्नविषयस्यैव मिथ्यात्वं लोकप्रसिद्धं, नतु स्वाप्नज्ञानस्येति वाच्यं, मिथ्यैव मम स्वप्ने मृत-पितृदर्शनमासीदिति प्रतीतिविरोधात्। तस्मात्स्वाप्नज्ञानं

मिथ्यैव- रज्जुसर्पज्ञानवन्मिथ्याविषयविषयकत्वात् । किंच प्रमाणवृत्तिरप्रमाणवृत्तिरित्यस्ति वृत्तिद्वयम्— तत्र अन्तःकरणवृत्तिः प्रमाणवृत्तिः, अविद्यावृत्तिस्त्वप्रमाणवृत्तिः- तत्र व्यावहारिकविषयाकारा, पारमार्थिकविषयाकाराचान्तःकरणवृत्तिः प्रमाणवृत्तिः, प्रातिभासिकविषयाकारा सौषुप्तिकविषयाकारा चाविद्यावृत्तिरप्रमाणवृत्तिः- तत्र प्रमाणवृत्तिः प्रमा- अप्रमाणवृत्तिस्त्वप्रमा- प्रमा सत्या, अप्रमात्वसत्येति सर्वलोकप्रसिद्धोयमर्थः । ततश्चाप्रमाभूतं स्वाप्नज्ञानमसत्यं मिथ्यैवेति । एवमसत्यमपि स्वाप्नज्ञानं सत्यशुभाशुभहेतु भवत्येव । तथा असत्यमपि रज्जुसर्पज्ञानं सत्यभयकम्पादिहेतुभवत्येवेति कृत्वा शास्त्रस्याप्यसत्यस्य सत्यब्रह्मप्रतिपत्तिहेतुत्वं भवत्येव । **वस्तुतस्तु** परमार्थभूतब्रह्मप्रतिपत्तिहेतुत्वमित्यस्य कोर्थः- किं परमार्थभूतस्य ब्रह्मणः प्रतिपत्तिर्ज्ञानमिति ? यद्वा प्रतिपत्तिः प्राप्तिरिति ? अथवा परमार्थभूता ब्रह्मणः प्रतिपत्तिर्ज्ञानमिति ? अहोस्वित् प्रतिपत्तिः प्राप्तिरिति ? आद्ये जन्यं तदसत्यमेवेति तद्धेतुत्वमसत्यस्य शास्त्रस्य युक्तमेव । द्वितीयेपि नित्याप्तस्य ब्रह्मणः पुनःप्राप्तिर्मिथ्यैवेति तद्धेतुत्वमपि तस्य युक्तमेव— तृतीयतुरीयौ तु न युक्तौ कल्पौ- उक्तहेतुवशादेव तयोर्मिथ्यात्वेन परमार्थभूतत्वाभावादिति । नचैवं सर्वस्यासत्यत्वे त्वं त्वन्मतं च मिथ्यैवेति वाच्यं, मम ब्रह्माभिन्नस्यामिथ्यात्वान्मन्मतस्य च ब्रह्मभिन्नस्य मिथ्यात्वस्य मदिष्टत्वाच्च । नच मिथ्याभूतं त्वन्मतमग्राह्यमेवेति वाच्यं, मिथ्याभूतमपि मन्मतं यावद्व्यवहारं सत्यत्वात्सत्यार्थप्रतिपादकत्वाच्च ग्राह्यमेव । यद्यपि मतान्तराण्यपि यावद्व्यवहारं सत्यान्येव, तथापि सत्यार्थप्रतिपादकानि न भवन्तीति नैव ग्राह्याणि । लोकेपि सत्यार्थप्रतिपादकं हि वाक्यं ग्राह्यम् । तस्मात्स्वयमसत्यमपि शास्त्रं सत्यमर्थं प्रतिपादयेदेव स्वाप्नज्ञानमिव शुभाशुभादिकमिति—**संक्षेपः** ।

## दर्पणादौ मुखादिप्रतिभासस्य व्यावहारिकसत्यत्वनिरूपणम् ।

**यदुक्तं** वस्तुभूत एव जलादौ मुखादिप्रतिभास इति तत्र **वक्तव्यम्**—किं जलादौ मुखादिप्रतिफलनं वस्तुभूतं ? यद्वा जलादौ मुखादिप्रतिबिम्बदर्शनम् ? आद्ये तव प्रतिज्ञाभङ्गः । द्वितीये जलादौ मुखादिप्रतिबिम्बस्यैवानुदये कथं तद्दर्शनम् ? नहि कुड्यादौ मुखादिप्रतिफलनमनुदितं दृश्यते—येन जलादावप्यनुदितमेव दृश्येत । बिम्बेन्द्रियसन्निकर्षादिव प्रतिबिम्बेन्द्रियसन्निकर्षाद्धि बिम्बज्ञानवत्प्रतिबिम्बज्ञानं जायते । नच रज्जुसर्पवत्प्रतिबिम्बस्यापि प्रातिभासिकत्वेनाज्ञातसत्ताऽयोगान्नेन्द्रियसन्निकर्ष इति वाच्यं, प्रतिबिम्बस्य व्यावहारिकत्वेनाज्ञातसत्तासद्भावात् । दर्पणादौ प्रतिफलितं हि स्तम्भादिकं पुरुषेणादृश्यमानमपि विद्यत एव । नहि रज्जुसर्पवत्प्रतिबिम्बः पुरुषतन्त्रः- नहि रज्जौ सत्यां नियमेन तत्र सर्पो जायते, यथा दर्पणे पुरस्थितेसति नियमेन तत्र मुखादिप्रतिबिम्बो जायते तद्वत् । नापि नायं सर्प इति ज्ञानेन रज्जुसर्पस्येव प्रतिबिम्बस्य केनापि ज्ञानेन निवृत्तिः, किन्तूपाधिभूतदर्पणादिविगमादेव । तस्माज्जलादौ मुखादिप्रतिबिम्ब औपाधिकोपि यावद्व्यवहारं वस्तुभूत एव । अतएव तद्ज्ञानमपि तथा वस्तुभूतमेव । नहि सुप्तोत्थितस्स्वप्ने मम जातं हस्त्यादिज्ञानं मिथ्येति यथा मन्यते तथा दर्पणे मम मुखप्रतिबिम्बज्ञानं जातं मिथ्येति नहि कोपि प्रत्येति ।

## प्रकारान्तरेण ज्ञानस्य सत्यत्वाशङ्का तन्निरासश्च ।

**यच्चोक्तम्**—उत्पत्तिमत्त्वादर्थक्रियाकारित्वाच्च ज्ञानं सर्वं सत्यमिति **तत्तुच्छम्**—मिथ्यात्वेन सम्प्रतिपन्ने रज्जुसर्पेपि भयकम्पाद्यर्थक्रियाकारित्वदर्शनात्, उत्पत्तिदर्शनाच्च । नच ज्ञानमेव तत्रोत्पन्नमर्थक्रियाकारि चेति वाच्यं, जन्यस्य निर्विषयज्ञानस्यैवाभावात् । नच मिथ्याविषयविषयकमेव तत्र ज्ञानं न निर्विषयमिति वाच्यं, किं तत्र मिथ्याविषयोस्ति, यद्वा नास्ति ? आद्ये- अजातस्य तस्य कथं सत्ता, ब्रह्मभिन्नं सर्वं जातं सदेव सत्तालाभं भजते । अतएव जन्मानन्तरभाविविकारत्वमस्तित्वमपि सङ्गच्छते । द्वितीये कथमसतस्तस्य ज्ञानविषयत्वम् । तस्मादुत्पद्यतएव रज्जुसर्पस्तद्ज्ञानवत् । अर्थक्रियाकारित्वं च न सर्पज्ञानस्य, किंतु ज्ञायमानसर्पस्यैव- घटादिविषयस्यैव जलाहरणाद्यर्थक्रियाकारित्वं, नतु घटादिज्ञानस्येति, तत्साम्यादिहापि । किंच **यदुक्तमुत्पत्तिमत्त्वमर्थक्रियाकारित्वं** चेति द्वयं **सत्यत्वप्रयोजकमिति, तदसत्**—असत्यत्वप्रयोजकत्वाद्द्वयस्य । अन्यथा उत्पत्तिरहितस्य निष्क्रियस्य च ब्रह्मणो भवेदसत्यत्वम् । नच ब्रह्मभिन्नस्य सर्वस्यापि सत्यत्वे तदुभयं प्रयोजकमिति वाच्यं, ब्रह्मभिन्नस्य सर्वस्याप्यसत्यत्वात्- 'तत्सत्यम्'- 'अतोन्यदार्त'मिति श्रुतेः । नचार्तमित्यस्यासत्यमिति नार्थः, किंत्वनित्यमित्यर्थ इति वाच्यं, 'तत्सत्य'मिति सत्यपदप्रतियोगितया निर्दिष्टस्यार्तशब्दस्यासत्यवाचित्वात् । अन्यथा तन्नित्यमतोन्यदार्तमित्येव ब्रूयाद्वेदः । सत्यस्यानित्यत्वं नित्यस्यासत्यत्वं च व्याहतमिति प्रागेवोक्तम् । नच उत्पत्तिमतोर्थक्रियाकारिणश्च पारमार्थिकसत्यत्वाभावेपि व्यावहारिकसत्यत्वमस्तीति वाच्यं, तथैव प्रातिभासिकसत्यत्वमप्यस्तीति सुवचत्वात् । नच यद्यदुत्पत्तिमदर्थक्रियाकारि च तत्तत्सर्वं व्यावहारिकसत्यमित्युच्यत इति वाच्यं, रज्जुसर्पादेरपि व्यावहारिकसत्यत्वापत्तेः । नच तत्र तदुभयं नास्तीति वाच्यं, तत्सत्त्वस्य स्थापितत्वादिति ।

**ननु** व्यावहारिकवस्तुनोऽर्थक्रियाकारित्वे सत्यपि प्रातिभासिकवस्तुनो नार्थक्रियाकारित्वं, किंतु तद्ज्ञानस्यैव- नहि रज्जुसर्पः कंचिद्दशति, किंतु रज्जौ सर्पभ्रमात्पुरुषो बिभेति कम्पते विलपति चेति रज्जुसर्पज्ञानमेव भयकम्पाद्यर्थक्रियाकारीति, **मैवम्**—यदि प्रातिभासिकज्ञानमर्थक्रियाकारि, तर्हि व्यावहारिकज्ञानमप्यर्थक्रियाकार्येव—सर्पे सर्पज्ञानस्यापि भयकम्पादिहेतुत्वदर्शनात् । नच व्यावहारिकयोर्विषयतद्ज्ञानयोर्द्वयोरप्यस्त्यर्थक्रियाकारित्वं, प्रातिभासिकस्य तु ज्ञानस्यैवार्थक्रियाकारित्वं, न तु विषयस्येति वाच्यं, प्रातिभासिकस्य स्वाप्नस्य सर्पगजनार्यन्नादेर्दंशनवहनमैथुनक्षुन्निवारणाद्यर्थक्रियाकारित्वदर्शनात् । सुप्तो हि स्वप्ने सर्पेण दष्टो रक्तं पश्यति, मूर्छां च प्रतिपद्यते, गजं चारुह्य प्रयाति, नारीं च रमति, अन्नं च भुक्त्वा तृप्यति- तस्मादर्थक्रियाकारित्वमस्त्येव स्वाप्नस्य विषयजातस्य ।

**यदुक्तं** सुदर्शनेन अविद्यमानो विषयो ज्ञानस्य न हेतुतयाऽपेक्षितः, किंतु विषयतयैव- विद्यमानस्तु हेतुतया विषयतया च । तस्मादविद्यमानस्य विषयस्य ज्ञानहेतुत्वायोगाद्दोष एव ज्ञानहेतुरिति **तन्मन्दम्**—अविद्यमानविषयस्य ज्ञानहेतुत्वमिव ज्ञानविषयत्वमपि नास्त्येव- तथासति शशशृङ्गादेरपि ज्ञानविषयत्वप्रसङ्गात् । किंतु विद्यमानविषयस्यैव ज्ञानविषयत्वं ज्ञानहेतुत्ववत् । दोषस्तु विषयस्योत्पत्ति

प्रति हेतुः- यथा प्रतिभासमानत्वं प्रति । नच दोषवशाद्विषयस्य जन्मनोप्यभ्युपगमे गौरवमिति वाच्यं, तदनभ्युपगमे विषयप्रतिभासस्यैवायोगात् । **ननु** भ्रान्तो हि भ्रान्त्यपगमे नात्र सर्प आसीत् किंतु केवलमहं सर्प इति भ्रान्त आसमिति प्रत्येति, ततश्च भ्रमकालेपि विषयस्यासत्त्वमेव निश्चीयत इति, **मैवम्**—नात्र सर्प आसीदिति निषेधस्य व्यावहारिकसर्प एव विषयो नतु प्रातिभासिक इति ।

**यदुक्तं सुदर्शनेन**—सत्यभूतहस्त्याद्यालम्बनावच्छिन्नानि स्वप्ने हस्त्यारोहणादिज्ञानानि सत्यानीति, **तदयुक्तम्**—स्वाप्नज्ञानालम्बनहस्त्यादीनां मिथ्यात्वस्य **रामानुजेनैवोक्तत्वात्** । नच स्वाप्नहस्त्यादीनां मिथ्यात्वेपि तद्गतं ज्ञानालम्बनत्वं सत्यमिति वाच्यं, वन्ध्यापुरुषस्य मिथ्यात्वे सति किं तद्गतं सौन्दर्यं सत्यं भवेत् । नच रामानुजेन परमतमाश्रित्य मिथ्यात्वमभ्युपेत्य तथोक्तं स्वमतेन तु स्वाप्नाः पदार्थाः सत्या एवेति तदाशय इति वाच्यं, स्वाप्नार्थानां मिथ्यात्वस्य सार्वलौकिकत्वात् । नच लोकस्तत्र भ्रान्त इति वाच्यं, श्रुत्यैव तस्योक्तत्वात् । 'न तत्र रथा' इत्यादिश्रुतिर्हि स्वप्नदशायां वस्तुतो रथाद्यभावं प्रतीतितस्तत्सत्त्वं च प्रतिपादयति- तथाविधोह्यर्थो मिथ्याभूतो रज्जुसर्पवत् । नच 'अथ रथान् रथपथस्सृजत' इति श्रुतेरीश्वर एव तत्स्रष्टेति वाच्यं, निद्रादोषसहकृताविद्याया एव तत्स्रष्टृत्वात् । ईश्वरसृष्टत्वेपि व्यवहाराक्षमत्वेन शुक्तिरजतवत्स्वप्नरथादेर्मिथ्यात्वाच्च । नचार्थक्रियाकारित्वेन त्वदभिमतस्य प्रातिभासिकस्य वस्तुनः कथं व्यवहाराक्षमत्वमिति वाच्यं, व्यवहाराक्षममप्यर्थक्रियाकारि भवत्येवेति । यद्वस्तु प्रतीतिकाल एवास्ति नतु तत्पूर्वोत्तरकालयोस्तद्धि व्यवहाराक्षमम् । यत्तु कालत्रये तद्व्यवहारक्षमम्- रजतं हि कटकादिवस्तुनिर्माणादिपर्यन्तमवतिष्ठत इति व्यवहारक्षमम्- शुक्तिरजतं तु न तथेति व्यवहाराक्षमम् । एवं जाग्रता गृहपश्वादयः पदार्था यावद्व्यवहारमवतिष्ठन्त इति व्यवहारक्षमाः, स्वाप्नास्तु न तथावतिष्ठन्त इति व्यवहाराक्षमाः । तस्माच्छुक्तिरजतादिवत्स्वाप्नपदार्था मिथ्याभूता एव । नच शुक्तिरेव दोषवशाद्रजताकारेण भातीति शुक्तिरजतस्यास्तु मिथ्यात्वं- स्वप्ने तु रथादय उद्भूता एव रथादिरूपेण भान्तीति न तेषां मिथ्यात्वमिति वाच्यं, स्वप्नेपि अन्तःकरणमेव जाग्रत्संस्कारवशान्निद्रादोषवशाच्च रथादिरूपेण भातीति तुल्यत्वात्, अन्तःकरणसंस्कारसहकृताविद्यैव निद्रावशाद्रथादिरूपेण भातीति वा, अविद्यादिवशादात्मैव तथा भातीति वा सर्वथापि शुक्तिरजतसाम्यमेव स्वप्नरथादेः । नचानिर्वचनीयख्यातिवादिनस्तव नैतदुपपद्यत इति वाच्यं, अनिर्वचनीयस्य रजतस्य शुक्तावुत्पन्नत्वेपि वस्तुतश्शुक्तेरेव रजताकारेण भानम्- यथा मृदि घटस्योत्पन्नत्वेपि वस्तुतो मृद एव घटाकारेण भानं तद्वत् । नचैवं शुक्तावपूर्वं रजतमनुदितमित्यत्रैव तव मतं पर्यवसितमिति वाच्यं, वस्तुतस्तथैव भ्रान्त्या तूदितमिति- नहि भ्रान्तिसिद्धोर्थो वस्तुतस्सिद्धो भवति । नच वस्तुतश्शुक्तिरपि नास्तीति वाच्यं, इष्टापत्तेः । नचैवं शुक्तिरजतसत्यरजतयोर्नास्ति विशेष इति वाच्यं, व्यावहारिकवस्तुसिद्धत्वभ्रान्तिसिद्धत्वप्रयुक्तविशेषसत्त्वाद्रजतशुक्तिरजतयोरिति । **अयम्भावः**—वस्तुतस्सिद्धं, व्यवहारतस्सिद्धं, भ्रान्तितस्सिद्धमिति त्रिविधं वस्तु- तत्र आद्यं ब्रह्म, द्वितीयं जगत्, तृतीयं शुक्तिरजतादिकं, स्वप्नरथादिकं चेति । तत्र वस्तुतस्सिद्धमजमेवं । व्यवहारतस्सिद्धं तु ब्रह्मणि मायया जातम् । भ्रान्तितस्सिद्धं तु मायामये वस्तुनि

पुनरपि दोषवशाज्जातमिति । द्विविधमपीदं जातं वस्तु वस्तुतोऽजमेव—इति । तस्मादीश्वरसृष्टमपि भ्रान्तिसिद्धं स्वाप्नं वस्तु शुक्तिरजतवन्मिथ्यैव । नचेश्वरासृष्टत्वाच्छुक्तिरजतं मिथ्यैव- स्वाप्नं तु नेति वाच्यं, शुक्तिरजतस्यापीश्वरसृष्टत्वाभ्युपगमे बाधकाभावात् । नचेश्वरस्सत्यमेव सृजेन्न त्वसत्यं, सर्वशक्तित्वेनैन्द्रजालिकवत्तत्राशक्तिकल्पनायोगादिति वाच्यं, सत्यं सृजतीत्यस्य वाक्यस्य व्याहतत्वात्—कालत्रयवर्ति हि सत्यम्- सृष्टेः प्रागसतस्सत्यत्वायोगात्सतश्च सृष्ट्ययोगात् । नचेश्वरसृष्टं व्यावहारिकसत्यमिति वाच्यं, तथासति स्वाप्नस्य जगतः प्रातिभसिकसत्यस्येश्वरसृष्टत्वासिद्धेः । नच स्वाप्नजगद्व्यावहारिकसत्यमिति वाच्यं, तस्य व्यवहाराक्षमत्वेन व्यावहारिकसत्यत्वायोगात् । नहि स्वप्नलब्धया नार्या कोपि गृहमेधी भवति । तथासति जाग्रति तस्य पुनर्विवाहार्थमुद्यमायोगादिति ।

**यदुक्तमबाधिता** हि बुद्धिस्सत्यैवेति रामानुजेन **तदयुक्तमेव**—चैतन्यरूपाया अबाधितबुद्धेरसत्यत्वात् । नचाबाधितं स्वप्नज्ञानं सत्यमेवेति वाच्यं, विशेषणासिद्धेः । जाग्रद्ज्ञानेन हि स्वप्नज्ञानं बाध्यते । नच जाग्रद्ज्ञानेन स्वप्नविषयस्यैव बाधो न स्वप्नज्ञानस्येति वाच्यं, मम शिरश्छिन्नमिति स्वप्नज्ञानस्य जाग्रत्कालिकशिरोदर्शनेन बाधितत्वात् । नच तत्रापि छिन्नं शिर एव बाधितमिति वाच्यं, भिन्नशिरसो ज्ञानात्प्रागेव निवृत्तत्वात् । निद्रापगमसमकालैव हि छिन्नशिरसो निवृत्तिः, ततः पश्चात्तु अच्छिन्नशिरोदर्शनमिति । जाग्रत्यपि ब्रह्माहमस्मीति ज्ञानेनाहं मनुष्य इत्यादि भ्रान्तिज्ञानस्य बाधितत्वं इष्यत एवेति प्रमाज्ञानेन भ्रमज्ञानं बाध्यत एव । स्वाप्नज्ञानं च भ्रम एवेति कथं तस्याबाधितत्वम् । तस्माद्यावद्व्यवहारमबाधितत्वात्प्रमैव सत्या । **एतेन** विप्रतिपन्नास्सर्वेपि प्रत्यया यथार्थाः- प्रत्ययत्वात्सम्प्रतिपन्नवदित्यनुमानं परोक्तं **प्रत्युक्तम्** । यथाभूतार्थविषयत्वस्य तत्रोपाधित्वात् । रजते रजतप्रत्ययो यथार्थः, यथाभूतार्थविषयत्वाद्व्यतिरेकेण शुक्तौ रजतप्रत्ययवदिति । शुक्तौ रजतप्रत्ययोऽयथार्थः अयथाभूतार्थविषयत्वाद्व्यतिरेकेण रजते रजतप्रत्ययवदिति च ।

**अथ यथार्थख्यातिवादी प्रत्यवतिष्ठते—**

**ननु** शुक्तौ रजतसत्त्वात्तत्प्रत्ययोपि यथाभूतार्थविषयत्वाद्यथार्थ एवेति, **मैवम्**—शुक्तौ रजताभावात् तत्सत्त्वे शुक्तिज्ञानेन रजतबाधायोगात्- शुक्ताविदं रजतमिति ज्ञानस्यैवाभ्रमत्वेन नेदं रजतमिति ज्ञानस्य भ्रमभूतस्य तद्बाधकत्वायोगात्- कटकाद्यर्थं रजतार्थिनः पुरुषस्य शुक्तिग्रहणप्रसङ्गाच्च । ज्ञानमात्रस्य यथाभूतार्थविषयत्वे शुक्ताविदं रजतमिति नेदं रजतमिति च विरुद्धयोर्द्वयोर्ज्ञानयोस्सत्यत्वं यथाभूतार्थविषयत्वलक्षणं कथं भवेत् ।

**ननु** शुक्तौ शुक्त्यवयवा रजतावयवाश्च सन्ति । तत्र शुक्त्यवयवाभिप्रायेण शुक्तिरियं न रजतमिति, रजतावयवाभिप्रायेण रजतमिति च प्रतीतिद्वयं सत्यमेव जायते, **मैवम्**—अन्यस्मिन्नन्यावयवस्थित्ययोगात् । नच प्रदेशभेदेन तद्योग इति वाच्यं, एकस्यामेव शुक्तावत्र शुक्त्यवयवास्सन्ति- अत्र तु रजतावयवा इति कल्पनस्यायुक्तत्वादप्रमाणत्वादनुभवविरुद्धत्वाच्च । अग्नौ शुक्तौ निक्षिप्तायां सत्यां शुक्त्यवयवस्य भस्मीभूतत्वे सति रजतावयवानामभस्मीभूतत्वेन द्रवीभावापत्तेश्च । नच शुक्तौ विद्यमानं रजतं न

प्रसिद्धरजततुल्यं, किंतु तद्विलक्षणमेवेति वाच्यं, तथासत्यनिर्वचनीयख्यातिप्रसङ्गात् । नच तव मते शुक्तावपूर्वं रजतमुत्पन्नं सद्वर्तते न त्वनुत्पन्नं, मम मते त्वनुत्पन्नमपि वर्तत इति भेद इति वाच्यं, अनुत्पन्नस्य रजतस्य शशशृङ्गस्येव तत्र स्थित्ययोगात् । नचोत्पत्तेः प्रागपि तदस्तीत्यभिप्रायेणानुत्पन्नमस्तीत्युक्तमिति वाच्यं, उत्पत्तेः प्रागपि तत्सत्त्वे तदुत्पत्तिवैयर्थ्यात् । नचाभिव्यक्तिमात्रमेवोत्पत्तिरिति वाच्यं, सत एव वस्तुनोऽनभिव्यक्तस्य याऽभिव्यक्तिरभ्युपेता सापि किमुत्पत्तेः प्रागस्ति ? उत नास्ति ? आद्ये- उत्पत्त्ययोगः, द्वितीये त्वसत्कार्यवादापत्तिरिति । तस्मात्सत्ख्यातिवादोऽयुक्त एव । नच तव मतेपि शुक्तौ रजतावयवाभावात्कथं रजतोत्पत्तिरिति वाच्यं, लोकसिद्धसामग्रीविलक्षणैव सामग्री प्रातिभासिककार्यस्येति । तस्माद्भ्रमज्ञानं तद्विषयश्चेत्युभयं मिथ्यैव बाधितत्वादिति—**संक्षेपः** । **ननु** असत्याच्छास्त्रात्सत्यस्य ब्रह्मणः प्रतिपत्तिरित्यत्र स्वप्नज्ञानाच्छुभाशुभप्रतिपत्तिर्दृष्टान्ततयोपन्यस्ता त्वया- **न** तद्युक्तं शुभाशुभयोस्तव मते मिथ्यात्वान्मन्मते स्वप्नज्ञानस्य सत्यत्वाच्चेति, **मैवम्**—मम मते व्यवहारदशायां शुभाशुभयोस्सत्यत्वादिति ।

**वस्तुतस्तु** सत्यं ब्रह्म शास्त्रान्न ज्ञायते सत्यत्वादेव, यद्धि ज्ञायते तदसत्यमेव, यथा शुक्तिरजतमिति । किंच नित्यापरोक्षत्वाद्ब्रह्म न ज्ञायते- नह्यपरोक्षः पटः पुनर्ज्ञायते । नच न ब्रह्म नित्यापरोक्षमिति वाच्यं, 'यत्साक्षादपरोक्षाद्ब्र'ह्मेति श्रुतेः । अपि च यश्शास्त्राद्ब्रह्म जिज्ञासति स आत्मैव ब्रह्मेति न ब्रह्म ज्ञायते- कर्मकर्तृभावविरोधात् । नचैवं ज्ञातृत्वमात्मन आगतमिति वाच्यं, यावद्व्यवहारं तस्य तदागमनस्येष्टत्वात् । वस्तुतस्तु ज्ञानमेवात्मा ज्ञातुरात्मनस्स्वरूपं ज्ञानमेवेति । नचैवं शास्त्रं व्यर्थमिति वाच्यं, अनात्मस्वात्माभिमाननिरसनार्थं तस्यावश्यकत्वात् । नच सत्याभिमाननिरसनमसत्यशास्त्रस्य कथमिति वाच्यं, अभिमानस्यासत्यत्वात् । अनाद्यविद्याकामकर्मादिदोषजन्योह्यनात्मन्यात्माभिमानः पुरुषस्य । नच कथं स्वस्मिन्नप्यन्य इति भ्रम इति वाच्यं, स्वप्ने तथा दर्शनात् । नच दृष्टोप्यनुपपन्न एवेति वाच्यं, न हि दृष्टेऽनुपपन्नं नामेति न्यायात् । अनुपपन्नत्वं च भ्रमस्य युक्तमेव, उपपन्नस्य भ्रमत्वायोगात् । मायायां सर्वानुपपन्नार्थोपपत्तिसम्भवाच्चेति । तस्मादसत्यात्सत्याद्वा नास्ति सत्यस्य प्रतिपत्तिः । अतएव सत्योऽनन्यसिद्ध आत्मेति—**सिद्धान्तः** ।

**अथ** यदुक्तं रामानुजेन सत्ययैव रेखया सत्यस्यैव वर्णस्य प्रतिपत्तिरिति **तदसत्**—अ इत्येकस्यैव वर्णस्य बहुषु लिपिषु बह्व्यो व्यञ्जकरेखास्सन्ति- ताश्च परस्परं व्यावृत्ता इत्यसत्या एव । अ इति वर्णस्तु सर्वत्रैक एवेत्यव्यावृत्तत्वात्सत्य इति । यद्यपि रेखात्वं सर्वत्रानुवर्तमानत्वात्सत्यं तथापि रेखाकारविशेषो व्यावर्तमानत्वादसत्य एव । नचैवमकारादिवर्णा अपि परस्परं व्यावर्तमानत्वादसत्या वर्णत्वन्त्वव्यावर्तमानत्वात्सत्यमिति वाच्यं, इष्टापत्तेः- वर्णदृष्ट्या ह्यसत्या रेखेत्युच्यते, किंच वर्णश्शब्दात्मक एव न तु रेखात्मक इति कृत्वा रेखायां वर्णबुद्धिरतस्मिंस्तद्बुद्धित्वाद्भ्रम एवेति वर्णबुद्धिविषयत्वेनासत्यैव रेखा, रेखात्वरूपेण तु सत्या- रेखायां रेखाबुद्धेः प्रमात्वात् । नचैवं शुक्तौ रजतबुद्धेर्भ्रमत्वात्तद्विषयत्वेन शुक्तिरप्यसत्यैवेति वाच्यं, इष्टापत्तेः- शुक्तिबुद्ध्या गृहीतैव शुक्तिस्सत्या रजतबुद्ध्या गृहीता तु शुक्ति-

रसत्यैव । अत एव शुक्ताविदं रजतमिति प्रत्ययस्य भ्रमत्वम् । नच रजतभ्रमकाले शुक्तिप्रतिभासो नास्तीति वाच्यं, तद्वदिहापि अकारादिवर्णभ्रमकाले रेखाप्रतिभासो नास्त्येवेति । हन्ततर्हि शुक्तिवद्रेखैव सत्या- तत्रोत्पन्नरजतवद्वर्ण एवासत्य इति प्राप्तं, मैवम्—शब्दात्मको वर्णस्सत्य एव रेखात्मकस्त्वसत्य इति । यथा शुक्तिरजतस्यासत्यत्वेपि कान्ताचरणगतरजतस्य सत्यत्वं तद्वद्रेखागतवर्णस्यासत्यत्वेपि ध्वनिगतवर्णस्य सत्यत्वमिति । **एतेन** रेखा सत्या वर्णश्च सत्यः रेखायां वर्णबुद्धिस्त्वसत्या तस्या विषयश्च न रेखा नापि वर्णः, किंतु रेखायामुत्पन्नोऽपूर्वश्शुक्तिरजतादितुल्यः प्रातिभासिको वर्ण एवासत्य इति **—सिद्धम्** । नचैवं रेखाऽसत्येति वर्णस्सत्य इति च कथमुक्तमिति वाच्यं, रेखोत्पन्नवर्णस्य मिथ्यात्वाद्रेखाऽसत्येति ध्वन्यात्मकवर्णस्य सत्यत्वाद्वर्णस्सत्य इति चोक्तमिति । यद्वा रेखायास्सत्यत्वेपि तत्रोत्पन्नाया असत्याया एव वर्णबुद्धेर्वर्णप्रतिपत्तिहेतुत्वमित्यसत्यात्सत्यप्रतिपत्तिरित्यत्रायं समीचीन एव दृष्टान्तः । नच रेखायां वर्णबुद्धिस्सत्यैवेति वाच्यं, अतस्मिंस्तद्बुद्धेर्भ्रमत्वेनासत्यत्वात् । अथ वा रेखा सत्यैव, तत्र वर्णबुद्धिस्त्वसत्या, तथाच- असत्यात्सत्यप्रतिपत्तिः कथमित्यत्र यथा सत्यादसत्यप्रतिपत्तिस्तथेत्युत्तरम् । कथं पुनस्सत्यादसत्यप्रतिपत्तिरित्यत्र रेखातो वर्णप्रतिपत्तिर्दृष्टान्तत्वेनोदाहर्तव्येति । सर्वथापि व्यञ्जकरेखाया व्यङ्ग्यवर्णस्य च विषमसत्ताकत्वमेव शब्दब्रह्मणोरिवेति न कश्चिद्दोषः । **ननु** रेखावर्णयोर्द्वयोरपि व्यावहारिकत्वेन समसत्ताकत्वमेवेति **चेन्मैवम्** — रेखाबुद्धिवर्णबुद्ध्योरन्यतराया अन्यतरया बाधात्समसत्ताकत्वाभावात् । यदा रेखायां वर्णबुद्धिस्तदा न रेखाबुद्धिर्यदातु रेखाबुद्धिस्तदा न वर्णबुद्धिरिति युगपद्बुद्धिद्वयसामानाधिकरण्याभावात् । नच रेखेयमिति जानतोपि तत्र वर्णबुद्धिर्भवतीति नान्यतरबुद्धिबाध इति वाच्यं, अन्यतरबुद्ध्यबाधेप्यन्यतरविषयबाधोस्त्येवेति । मृत्तिकेति जानतोपि मृदि घटबुद्धौ भवन्त्यामपि घटस्यास्ति हि बाधः । कथमन्यथा 'मृत्तिकेत्येव सत्य'मिति श्रुतिरुपपद्येत । **वस्तुतस्तु** — मृद एव घटात्मना परिणतत्वान्मृद्बुद्धिघटबुद्ध्योर्युगपत्सामानाधिकरण्ये सम्भवत्यपि रेखाया वर्णात्मना परिणतत्वाभावान्न रेखाबुधिवर्णबुद्ध्योस्तत्सम्भवः । नच रेखैव वर्णात्मना परिणतेति वाच्यं, वर्णस्य ध्वन्यात्मकत्वाद्रेखायाश्च नीलादिरूपात्मकत्वात् । अतएव हि वर्णश्श्रावणप्रत्यक्षविषयो रेखा तु चाक्षुषप्रत्यक्षविषयः । मृद्घटयोस्तु द्वयोरपि चाक्षुषत्वमेवेति न तद्दृष्टान्त इह प्रचारणीयः । तस्माद्भिन्नेन्द्रियग्राह्ययोर्भिन्नस्वरूपयो रेखावर्णयोर्मृद्घटयोरिव परिणामपरिणामिभावायोगान्न समसत्ताकत्वम्—इति ।

**ननु** रेखा किं विद्यमानवर्णात्मना वर्णप्रतिपत्तेरुपायभूता, उताविद्यमानवर्णात्मना? आद्ये रेखात्मनेव वर्णात्मनापि रेखा सत्यैव । द्वितीये एकस्या एव रेखायास्सर्ववर्णप्रतिपत्त्युपायत्वं स्यादिति **रामानुजः, तन्मन्दम्** – रेखाविशेषोऽविद्यमानवर्णविशेषात्मना वर्णविशेषप्रतिपत्त्युपायभूतेति द्वितीय कल्पस्यैवाश्रयणात् । नचैतद्रेखाविशेष एतद्वर्णविशेषप्रतिपत्त्युपाय इति कथं नियम इति वाच्यं, अयं शब्द एतदर्थप्रतिपादक इति नियमस्य यथा सिद्धिस्तथैवेति । नच लोकव्यवहारात्तत्सिद्धिरिति वाच्यं, तथैवास्यापीति । नचैवं रेखायास्तत्संकेतस्य च सत्यत्वात्कथमसत्यात्सत्यप्रतिपत्तिरिति वाच्यं, तदुक्तस्य

व्यावहारिकसत्यत्वेपि रेखाया वर्णात्मकत्वं नास्त्येवेति वर्णात्मना रेखा ह्यसत्या—इति । नहि संकेत-वशादप्यतद्वस्तु तद्वस्तु भवति—येन रेखाया वर्णात्मता भवेत्सत्या । नहि सांकेतिकाप्यतस्मिंस्तद्बुद्धिः प्रमा भवति- येन तद्विषयो वस्तु सत्यं स्यात् । अन्नं ब्रह्मेत्युपासनायामप्यन्ने ब्रह्मबुद्धिराहिता हि भ्रम एव- आहार्यत्वात् । अनाहार्या हि बुद्धिस्सत्या । तस्माद्रेखायां वर्णबुद्धिराहार्यत्वादसत्यैवेति वर्णात्मना गृह्यमाणा रेखाप्यसत्यैव ।

**यदुक्तं** रेखागवयादपि सत्यगवयबुद्धिस्सादृश्यनिबन्धना- सादृश्यं च सत्यमेवेति, **तदपि मन्दम्**—अचेतनरेखागवये चेतनगवयबुद्धेरसत्यत्वात् । अतस्मिंस्तद्बुद्धिर्हि सा । यदि तु रेखागवये गवय-सदृशोयमिति बुद्धिस्स्यात्तर्हि सत्यसादृश्यनिबन्धना सा बुद्धिस्सत्या भवेत्, न तु भवति- किंतु गवय इत्येव बुद्धिर्भवतीति । किञ्च भेदवत्सादृश्यमपि दुर्निरूपत्वान्मिथ्यैव- सति सादृश्ये तेनायं सदृश इति प्रतीतिः, सत्यां च प्रतीतौ सादृश्यमित्यन्योन्याश्रयात् । सादृश्यं च भेदनिबन्धनं, भेदश्च दुर्निरूप इति भेदमूलकत्वाच्च सादृश्यं मिथ्या । नच भेदस्सुनिरूप इति वाच्यं, सति घटपटयोर्भेदे घटः पटाद्भिन्न इति प्रतीतिः, सत्यां च प्रतीतौ घटपटभेद इत्यन्योन्याश्रयात् । नच भेदिनौ घटपटौ तद्भेदं च चक्षु-र्गृह्णातीति चाक्षुषप्रत्यक्षविषयस्य भेदस्य कथं मिथ्यात्वमिति वाच्यं, रूपस्य रूपवद्द्रव्यस्य च चक्षुर्ग्राह्य-त्वेन भेदस्य तद्ग्राह्यत्वाभावात् । नहि भेदो रूपं रूपवद्द्रव्यं वा, नापि श्रोत्रादिविषयो भेदः- भेदस्य शब्दत्वाद्यभावात् । नापि सुखवन्मानसप्रत्यक्षविषयः- मनसो बहिरस्वातन्त्र्यात् । नच घटः पटाद्भिन्नो द्वयोराकारभेदसत्त्वादित्यनुमानेन भेदो गृह्यत इति वाच्यं, आकारयोरपि भेदासिद्धेः । ईदृशानुमाना-नवतारेपि भेदज्ञानसम्भवाच्च । नच शास्त्राद्भेदसिद्धिरिति वाच्यं, शास्त्रविदो भेदज्ञानायोगाच्च । सार्व-जनीनभेदप्रतिपादकत्वे शास्त्रस्याप्रामाण्यापत्तेश्च—अनधिगतार्थप्रतिपादकत्वेन हि शास्त्रं प्रमाणं भवति । **एतेन** परमते शास्त्रस्याप्रामाण्यं **सिद्धम्** । नच विशिष्टाद्वैतस्यानधिगतत्वेन तद्बोधकं शास्त्रं प्रमाण-मेवेति वाच्यं, शास्त्रे क्वापि विशिष्टाद्वैतपरस्यैवादर्शनात् । विशिष्टयोरद्वैतायोगेन अद्वैतस्य विशिष्टत्वा-योगेन च विशिष्टाद्वैतपदार्थासिद्धेः । प्रपंचितमेतन्मया सिद्धान्तसिन्धौ । **ननु** सार्वजनीनस्य भेदस्य कथमपलाप इति **चेन्मैवम्**—न वयं भेदं शशशृङ्गतुल्यं वदामः, येनानुभवविरोधस्स्यात्- किन्तु शुक्ति-रजतवन्मिथ्येति ब्रूमः, ततो नानुभवविरोधः । यद्धि अनुभूयते विचारं च न क्षमते तद्वस्तु हि मिथ्या। नचैवं भेदस्य मिथ्यात्वेपि भेदिनोर्घटपटयोः कथं मिथ्यात्वमिति वाच्यं, भेदस्य मिथ्यात्वे तद्वानपि मिथ्यैवेति । वन्ध्यापुत्रवत्तद्युक्तोपि मिथ्यैव खलु । तस्माद्भेदमूलं सादृश्यं च मिथ्यैव । तस्मादसत्या-देव रेखागवयनिष्ठात्सादृश्यात्सत्यगवयप्रतिपत्तिरिति तद्दृष्टान्तेन चासत्याच्छास्त्रात्सत्यब्रह्मप्रतिपत्तिस्सूप-पादैवेति—**संक्षेपः** ।

### ब्रह्मणः मिथ्यात्वाशङ्कानिरासः ।

**यदप्युक्तं रामानुजेन**—मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्य ब्रह्मणोपि मिथ्यात्वं, यथा धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वं तद्वदिति, तदेत-

ऽप्रत्युक्तमेव पूर्वं ब्रह्मणो ज्ञानविषयत्वाभावप्रतिपादनेन- मिथ्याभूतस्यापि भ्रमज्ञानस्यैव विषयो मिथ्या न तु प्रमाज्ञानस्येति वचनेन च। नच घटादिज्ञानमपि प्रमैवेति वाच्यं, वस्तुतस्तस्यापि भ्रमत्वमेवेति। अबाधितार्थविषयकं हि ज्ञानं प्रमा ब्रह्मभिन्नं च बाधितार्थ एवेति। नचैवं घटादिज्ञानस्य कथं प्रमात्वमिति वाच्यं, यावद्व्यवहारं घटादेरबाधितत्वेन तद्ज्ञानस्य प्रमात्वमिति। **एतेन** धूमजन्याग्निज्ञानस्य प्रमात्वेन तद्विषयाग्नेरमिथ्यात्वेपि बाष्पजन्याग्निज्ञानस्याप्रमात्वेन तद्विषयाग्नेर्मिथ्यात्वमेवेति—**सिद्धम्।** **ननु** शास्त्रजन्यं ब्रह्माहमस्मीति ज्ञानं किं मिथ्या? उत सत्यम्? आद्ये नाहं ब्रह्मेति ज्ञानस्य सत्यत्वमागतम्। द्वितीये- तेनैव ब्रह्मणस्सद्वितीयत्वं ब्रह्मभिन्नं मिथ्येति स्वप्रतिज्ञाभङ्गश्चेत्यादिकं प्राप्तं, **मैवम्**—ब्रह्माहमस्मीति ज्ञानस्य मिथ्यात्वेपि प्रमात्वान्नाहं ब्रह्मेति ज्ञानमसत्यमेव भ्रमत्वादिति। नच मिथ्याज्ञानस्य कथं सत्यत्वं सत्यं ह्यमिथ्येति वाच्यं, वस्तुतो सत्यत्वेन मिथ्याभूतमपि प्रमाज्ञानं व्यवहारतस्सत्यमेवेति। तस्माद्ब्रह्मभिन्नं सर्वं मिथ्यैवेति निर्विशेषं ब्रह्मैकमेव सत्यम्- 'एकमेवाद्वितीयं ब्रह्म तत्सत्य'मिति श्रुतेः।

**ननु** वस्तुतो मिथ्याभूतमपि ब्रह्माहमिति ज्ञानं व्यवहारकाले ज्ञानेन केनाप्यबाधितत्वात्सत्यमिति यदुक्तं तदयुक्तम्—शून्यमिति ज्ञानेन तस्य बाधितत्वादिति रामानुजः, **तत्तुच्छम्**—भेदवादमिव शून्यवादमपि बाधित्वैव ब्रह्माहमिति ज्ञानस्य जातत्वात्। नच कथं- 'असद्वा इदमग्र आसी'दिति श्रुतिसिद्धस्य शून्यवादस्य बाधितत्वमिति वाच्यं, 'असन्नेव स भवति असद्ब्रह्मेति वेद'चेदिति श्रुत्यैव शून्यवादस्य दूषितत्वात्। 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु'रिति- श्रुत्यैव ब्रह्मवादस्य स्तुतत्वाच्च। किंच किं शून्यमस्ति उत नास्ति? नाद्यः- शून्यस्य सत्ताऽयोगाच्छशशृङ्गवत्। द्वितीये- कथं शून्यवादसिद्धिः, शून्यस्यैवासत्त्वादिति। अपिच यश्शून्यवादी स किमस्ति, उत न? आद्ये- कथं शून्यवादसिद्धिः। द्वितीयेपि वादिन एवाभावे कथं वादसिद्धिः? नचायं दोषस्तव मतेपि प्रसरति- किं ब्रह्मवाद्यस्ति उत नास्ति? आद्ये कथं निर्विशेषब्रह्मसिद्धिर्वक्तुस्सत्त्वात्। द्वितीये- वादिन एवाभावे कथं वादसिद्धिरिति- इति वाच्यं, व्यवहारतो ब्रह्मवाद्यस्तीति वादसिद्धिः, वस्तुतो ब्रह्मवादी नास्तीति निर्विशेषब्रह्मसिद्धिरिति। नच कथं स्वाभावस्स्वस्येष्ट इति वाच्यं, ब्रह्मरूपेण स्वस्य सद्भावेन स्वाभावाभावात्। तस्मात्स्वस्यैव ब्रह्मत्वात्सत्त्वाच्च न शून्यवादसिद्धिर्नापि ब्रह्मवादासिद्धिरिति न शून्यबोधेन ब्रह्मबोधस्य बाधः।

**ननु** श्लो॥ वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम्। बोद्धाऽनृतो बुद्धिफले तथाऽनृते यूयं च बौद्धाश्च समानसम्पदः॥' इति, **मैवम्**—व्यवहारदशायामस्मन्मते- वेदस्सत्यः, तत्प्रामाण्यं च सत्यं, बोद्धा च सत्यः, बुद्धिश्च सत्या, फलं च सत्यमिति बौद्धानामस्माकं च महद्वैषम्यमिति। प्रत्युत- श्लो॥ आत्माहमर्थस्स च देह एव प्रमाणमत्रागम एव भाति। वेदोऽप्रमाणं नच शुद्धचित्तिर्यूयं च बौद्धाश्च समानसम्पदः॥' अहङ्कारस्य सूक्ष्मदेहस्यैवात्मत्वाभ्युपगमाद्देह एवात्मा। पाञ्चरात्रागमस्यैव प्रबलप्रमाणत्वाभ्युपगमश्चैतन्मते वेदाप्रामाण्यस्य लिङ्गम्। 'चतुर्षु वेदेष्विदं श्रेयोऽलब्ध्वा-

शाण्डिल्य इदमधीतवा'निति तद्वचनात्। चितिश्चैतन्यं ब्रह्म। यदुक्तं अहं ब्रह्मेति ज्ञानमपि भ्रान्तिमूलमिति त्वयैवोक्तमिति तदसत्—वेदान्तमूलत्वेन तस्याभ्रान्तिमूलत्वात्। नचाविद्यामूलत्वेन तस्य भ्रान्तिमूलत्वेन मितिवाच्यं, अविद्यामूलत्वेन भ्रान्तिमूलमपि ब्रह्मज्ञानं तस्मिंस्तद्बुद्धित्वेनाभ्रान्तित्वात्प्रमैवेत्युक्तत्वात्। तस्मात्प्रमाजनकत्वेन वेदान्तशास्त्रमेव प्रमाणम्। अन्यानि तु प्रमाणाभासा एवेति। यदुक्तं विषयसत्यत्वं दुर्वचं सत्यत्वाभ्युपेतस्य ब्रह्मणः प्रमाणविषयत्वानभ्युपगमादिति सुदर्शनेन, तन्मन्दम्—वस्तुतः प्रमाणाविषयेपि ब्रह्मणि व्यवहारतः कल्पितस्य प्रमाणविषयत्वस्य सत्यत्वात्। विषयस्य प्रमाणस्य प्रमेयस्य प्रमातुश्च वा वस्तुतस्सत्यत्वं हि दुर्वचं, व्यवहारतस्तु सर्वं सुवचमेवेति। यदुक्तं शास्त्रं न प्रत्यक्षविरुद्धार्थप्रतिपादनक्षममिति, तदसत्—प्रत्यक्षेण सूर्यमण्डलं कूश्माण्डप्रायं दृश्यते, शास्त्रेण तु भूमण्डलादधिकं प्रतिपाद्यते, तत्र किं शास्त्रेण प्रत्यक्षस्य न बाधः? तथा प्रत्यक्षेण जीवस्य लोकान्तरगमनं न दृश्यते शास्त्रेण तु प्रतिपाद्यते तत्र किं शास्त्रेण प्रत्यक्षस्य न बाधः? प्रत्यक्षेण परलोको नोपलभ्यते, शास्त्रेण तु प्रतिपाद्यते तत्र किं शास्त्रेण प्रत्यक्षस्य न बाधः? प्रत्यक्षेण जले गन्धो दृश्यते, शास्त्रेण तु पृथिव्येव गन्धवतीत्युच्यते- तत्र किं शास्त्रेण प्रत्यक्षस्य न बाधः? प्रत्यक्षेण गगनं नीलं दृश्यते, शास्त्रेण तु नीरूपमित्युच्यते- तत्र किं प्रत्यक्षस्य शास्त्रेण न बाधः? अज्ञस्य स्थूलोहमिति प्रत्यक्षं वर्तते- शास्त्रेण तु न त्वं स्थूलः किंतु देह एवेत्युच्यते- तत्र तु शास्त्रेण किं प्रत्यक्षस्य न बाधः? भ्रान्तस्य रज्जौ सर्पप्रत्यक्षं वर्तते- आप्तेन तु नायं सर्पः किंतु रज्जुरित्युच्यते- तत्र किं शब्देन प्रत्यक्षस्य न बाधः? नच भ्रमप्रत्यक्षस्यैव शास्त्रेण बाधो नतु प्रमाप्रत्यक्षस्येति वाच्यं, तथासति द्वैतप्रत्यक्षस्य भ्रमत्वेन शास्त्रेण तस्य बाधस्स्यादेवेति। नच द्वैतप्रत्यक्षं न भ्रम इति वाच्यं, रज्जुसर्पप्रत्यक्षस्य रज्जुप्रत्यक्षेणेव द्वैतप्रत्यक्षस्याद्वैतप्रत्यक्षेण बाधितत्वेन भ्रमत्वादिति। नचाद्वैतप्रत्यक्षं शून्यप्रत्यक्षेण बाधितमिति भ्रम एवेति वाच्यं, किं शून्यप्रत्यक्षं कस्यापि जातमुत न? आद्ये-यस्य तज्जातं तस्य सत्त्वात्कथं शून्यसिद्धिः। द्वितीये- अजातस्य तस्य कथमभ्युपगमः। नचाद्वैतप्रत्यक्षं कस्यापि जातमुत न? आद्ये- यस्य जातं तस्य सत्त्वात्कथमद्वैतसिद्धिः। द्वितीये- कथमजातस्य तस्याभ्युपगम इति वाच्यं, यस्याद्वैतप्रत्यक्षं जातं तस्यैवाद्वैतत्वादिति। नच जातेन तेन प्रत्यक्षेण तस्य सद्वैतत्वमेवेति वाच्यं, जातस्य तस्य मिथ्यात्वादजं ह्यमिथ्येत्युक्तम्। नचाद्वैतप्रत्यक्षं कस्यापि न भवतीति वाच्यं, सत्यप्रतिबन्धे श्रवणादौ साधने च साध्यस्य तस्यानुदयायोगात्। नच मम न भवतीति वाच्यं, तव प्रतिबन्धसत्त्वात्तदनुदयः। नच तवापि न भवतीति वाच्यं, परहृदयस्याप्रत्यक्षत्वात्। तस्माद्विद्वत्प्रत्यक्षाविरुद्ध एवायं शास्त्रोक्ताद्वैतवाद इति न शास्त्रप्रत्यक्षयोर्बाध्यबाधकभावशङ्कापि ॥

## वेदान्तशास्त्रं न निर्विशेषब्रह्मप्रतिपादकमिति रामानुजमतं--तन्निराकरणम्।

यदप्युक्तं रामानुजेन—वेदान्तशास्त्रमपि न निर्विशेषब्रह्मप्रतिपादनपरं- एकविज्ञानेन सर्वविज्ञानप्रतिपादनमुखेन सच्छब्दवाच्यस्य ब्रह्मणो जगदुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगस्सत्यसङ्कल्पत्वं सर्वान्तरत्वं सर्वाधारत्वं सर्वनियमनमित्याद्यनेककल्याणगुणविशिष्टतां कृत्स्नस्य जगतस्तदात्म-

कतां च प्रतिपाद्य एवंभूतब्रह्मात्मकस्त्वमसीति श्वेतकेतुं प्रत्युपदेशाय प्रवृत्तत्वात्प्रकरणस्य— इति, तदसत्— व्यवहारदशायामेव ब्रह्मण्युक्तगुणसद्भावो न परमार्थदशायामिति। वस्तुतो निर्गुणत्वादेव ब्रह्मणः- श्लो॥ 'ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः। कथं चरन्ति श्रुतयस्साक्षात्सदसतःपरे' इति प्रश्नस्य- श्लो॥ 'श्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधना' इति दत्तमुत्तरं भागवते। कथमन्यथा सकलकल्याणगुणपरिपूर्णे ब्रह्मणि श्रुतयः कथं चरन्तीति प्रश्नस्स्यात्। कथं वा असन्निरसनेन भवन्निधना इत्युत्तरमपि भवेत्। 'नेति नेतीत्येष आदेश' इति निषेधविधया ब्रह्मापत्तिश्च कथं श्रुत्योपदिश्येत— 'न नामरूपे गुणकर्म एव वा। निषेधशेषो जयतादशेषः' इति च व्यासेन कथमुच्येत? तादृशगुणवद्ब्रह्मात्मकत्वं च निर्गुणस्य जीवस्य कथं सम्भवेत्। 'यतो वाचो निवर्तन्ते अप्राप्य मनसा स'हेति वाङ्मनसागोचरस्य ब्रह्मणः कथं सच्छब्दवाच्यत्वं भवेत्। सति च सच्छब्दवाच्यत्वे- 'नायं गुणः कर्म न सन्नचास'न्निति भागवते ब्रह्मणस्सच्छब्दवाच्यत्वं कथं प्रतिषिध्येत? 'ज्ञेयं यत्तत्प्रवक्ष्यामि न सत्तन्नासदुच्यत' इति भगवता च कथं गीतम्। सच्छब्दवाच्ये ब्रह्मणि श्रुत्यप्रवृत्तिश्च कथं सम्भाविता। ब्रह्मणो वाङ्मनसविषयत्वे 'श्लो॥ यद्यन्निरुक्तं वचसा निरूपितं धियाक्षभिर्वा मनसोत यस्य। माभूत्स्वरूपं गुणरूपबृंहितं स वै गुणापायविसर्गलक्षणः' इति कथमुच्येत व्यासेन? अथ एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमपि तव मते नोपपद्यते—प्रकृतिपुरुषयोर्ब्रह्मभिन्नत्वेन ब्रह्मविज्ञानेन सर्वविज्ञानासिद्धिः।

**नच** प्रकृतिपुरुषशरीरकब्रह्मविज्ञानात्सर्वविज्ञानसिद्धिरिति वाच्यं, प्रकृतिपुरुषब्रह्मत्रयविषयकतज्ज्ञानस्यैकविज्ञानत्वाभावात्। नच विशिष्टं ब्रह्मैकमेवेति वाच्यं, विशिष्टज्ञानस्य विशेषणविशेष्यज्ञानद्वयाधीनत्वेन विशिष्टब्रह्मज्ञानस्यैकविज्ञानत्वाभावात्। नच जगतो ब्रह्मपरिणामत्वाद्ब्रह्मज्ञानाज्जगद्ज्ञानमिति वाच्यं, किं प्रकृतिर्ब्रह्मणः परिणामः, यद्वा आकाशादिकं, अथवा पुरुषः? नाद्यः- ब्रह्मवदनाद्यनन्तस्य नित्यस्य प्रकृतिद्रव्यस्य ब्रह्मपरिणामत्वायोगात्। न द्वितीयः- तस्य प्रकृतिकार्यत्वेन प्रकृतिपरिणामत्वात्। न तृतीयः- अनादेरनन्तस्य पुरुषस्य ब्रह्मपरिणामत्वायोगात्। एवं परिणामित्वे च ब्रह्मणोऽनित्यत्वमेव भवेत्। यत्परिणमते तद्धि विकारित्वादनित्यं मृद्वत्। नच सर्वस्य ब्रह्मशरीरत्वाद्ब्रह्मज्ञानात्सर्वज्ञानसिद्धिरिति वाच्यं, मृद्घटदृष्टान्ताननुरोधादस्यार्थस्य न हि मृदस्तद्विकारो घटादिश्शरीरम्— किंच शरीरभूतस्य सर्वस्य शरीरिभूतब्रह्मप्रकृतिकत्वेन ब्रह्मज्ञानात्सर्वज्ञानं च न सम्भवति। प्रत्युत सर्वज्ञानादेव तच्छरीरकब्रह्मज्ञानसिद्धिः। अपिच अचेतनवर्गस्य ब्रह्मशरीरत्वेपि चेतनस्य ब्रह्मशरीरत्वमयुक्तं ब्रह्मांशत्वात्तस्य, 'ममैवांशो जीवलोक' इति गीतावचनात्- 'अंशो नानाव्यपदेशा'दिति सूत्राच्च। नचांशिनोंऽशश्शरीरमिति वाच्यं, अंशिनः पटस्य तन्तुरंशो हि शरीरं न भवति। नचांशी अंशे एव तिष्ठति, पटस्य तन्तावेव स्थितिदर्शनादतोंऽशी ब्रह्म जीवेंऽशे तिष्ठतीति जीवश्शरीरं ब्रह्मण इति वाच्यं, तथासति अंशातिरिक्तांश्यभावाज्जीवातिरिक्तं ब्रह्म नास्त्येवेति पटवद्ब्रह्मणो सत्यत्वमेव भवेत्। तन्तुवत्पटोपि सत्य एवेति दुराग्रहे च पटस्य तन्तुकार्यत्वमिव जीवकार्यत्वं ब्रह्मणः स्यात्। ब्रह्मांशानां जीवानां संसारित्वेन च तदंशयुक्तं ब्रह्म जीवापेक्षयात्यधिकसंसारि भवेत्। सांशत्वे च ब्रह्मणस्सावयव-

त्वेनानित्यत्वं भवेन्निरवयवत्वे च निरंशत्वमेव भवेत् । अस्मन्मते त्वंशांशिभावो जीवब्रह्मणोर्मायया युज्यते ।

किञ्च यदि जीवो ब्रह्मांशस्तर्हि अंशभूतजीवज्ञानादेवांशिभूतब्रह्मज्ञानसिद्धिरिति न ब्रह्मज्ञानात्सर्वज्ञानप्रतिज्ञानसम्भवः । अंशभूतजीवानां चानन्तत्वात्तद्ज्ञानं च न सम्भवति कस्यापि जीवस्य । एवं प्रकृतेर्ब्रह्मशरीरत्वेपि शरीरभूतप्रकृतिज्ञानं विना शरीरिभूतब्रह्मज्ञानस्यासम्भव एव । तस्मात्तव मते श्रुतिदर्शितदृष्टान्तानुरोधेन एकविज्ञानात्सर्वविज्ञानं न सम्भवत्येव । नच तव मतेपि न सम्भवतीति वाच्यं, मम मते सर्वस्य ब्रह्मविवर्तत्वेन ब्रह्मज्ञानात्सर्वज्ञानसिद्धिरिति । नच जीवज्ञानं कथमिति वाच्यं, जीवस्यैव ब्रह्मत्वात् । नच प्रकृतिज्ञानं कथमिति वाच्यं, तस्या अपि ब्रह्मविवर्तत्वात् । नच जगतो ब्रह्मविवर्तत्वमश्रौतमिति वाच्यं, 'सच्च त्यच्चाभव'दिति श्रुत्यैव तस्योक्तत्वात् । नच सा श्रुतिर्जगतो ब्रह्मपरिणामं ब्रूत इति वाच्यं, नित्यस्य कूटस्थस्य ब्रह्मणः परिणामित्वायोगात् । नच कथं श्रुत्युपपत्तिरिति वाच्यं, मायया ब्रह्म सर्वमभवदित्येवंपरत्वाच्छ्रुतेः । नच परिणामपरैवेयं श्रुतिरिति वाच्यं, परिणामानुपपत्तेर्दर्शितत्वात् । नच मायया परिणाम उपपद्यत इति वाच्यं, मायया ब्रह्मणः परिणामो नाम विवर्त एवेति । मायया हि रज्जुस्सर्पात्मना परिणमते- स्वस्वरूपापरित्यागपूर्वकरूपान्तरप्रतिभासो हि विवर्तः । स एव मायामयः परिणामश्च । नच मृदपि माययैव घटात्मना परिणमत इति वाच्यं, विचार्यमाणे एवमेव मृदि मृद्रूपापरित्यागपूर्वकमेव घटरूपप्रतिभासदर्शनात् । परन्तु दण्डचक्रसलिलादिसामग्रीजन्यो घट इति मृदो घटरूपेण परिणामो न मायामयः, किंतु लौकिकसामग्रीजन्यः । रज्जौ सर्पस्तु माययैव जायते, नतु लौकिकसामग्र्येति रज्जोस्सर्पपरिणामो मायामय एवेति । एवं ब्रह्मणि जगच्च माययैव भवति, नतु लौकिकसामग्र्येति ब्रह्मणो जगद्रूपेण परिणामो मायामय एव । तस्मान्मायया ब्रह्म सर्वमनुभवदित्यस्य ब्रह्मविवर्तभूतं जगदित्येवार्थः । एवं सर्वस्य ब्रह्मविवर्तत्वेन ब्रह्मणः पृथगभावादेव ब्रह्मज्ञानात्सर्वज्ञानसम्भवः ।

ननु अधिष्ठाने ब्रह्मणि ज्ञाते सति जगद्भ्रमो न भवत्येवेति कथं ब्रह्मज्ञानात्सर्वविज्ञानसिद्धिस्तव मते, उच्यते—अधिष्ठाने ब्रह्मणि ज्ञाते सति यन्मयेतः प्राग्जगदिति प्रतीतं तद्ब्रह्मैवेति सर्वस्य ब्रह्मत्वज्ञानं भवतीति तदर्थात् । नच दृष्टान्ताननुरोधः- दृष्टान्तेपि मृदतिरिक्तघटाभावादेव मृद्ज्ञानाद्घटादिविकारज्ञानसिद्धिरिति । नचैवं ब्रह्मणो जगत्प्रकृतित्वं माययैव नतु वस्तुत इति सिद्धम्, तच्चायुक्तं 'प्रकृति'श्चेति सूत्रविरोधादिति वाच्यं, तत्सूत्रस्याप्यत्रैव तात्पर्यात् ।

ननु तर्हि मम मत इव तव मतेपि मायाविशिष्टं ब्रह्मैव जगत्प्रकृतिरिति कृत्वा विशिष्टब्रह्मज्ञानादेव सर्वज्ञानसम्भव इति विशिष्टस्य चैकत्वाभावात्कथमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानसिद्धिरिति चेदुच्यते—मायाविशिष्टस्येश्वराख्यस्य ब्रह्मणो जगत्परिणाम्युपादानत्वरूपप्रकृतित्वं, परब्रह्मणस्तु जगद्विवर्तोपादानत्वरूपप्रकृतित्वमिति कृत्वा परब्रह्मण एकस्यैव ज्ञानात्तद्विवर्तभूतसर्वविज्ञानसम्भव इति । नच परब्रह्मणो जगद्विवर्तोपादानत्वमपि माययैवेति कृत्वा तत्रापि मायोपहितमेव ब्रह्म ज्ञातव्यमिति वाच्यं,

रज्जोः काचकामलादिदोषसहकृताविद्यावशात्सर्वविवर्तोपादानत्वेपि रज्जुः केवलैव ज्ञातव्या न त्वविद्यासहिता रज्जुरिति । यद्वा मायाया ब्रह्मशक्तित्वात्तद्वैशिष्ट्येन ब्रह्मणोनेकत्वं न सम्भवति- नहि दृष्टान्तेपि घटोत्पत्त्यनुकूलमृच्छक्त्या मृदस्सद्वितीयत्वम् । अन्यथा मृद्ज्ञानस्याप्येकज्ञानत्वाभावप्रसङ्गात् । तव मते तु मायानाम ब्रह्मवन्नित्यमनन्तं चानादि किंचित्तत्त्वमेवेति तद्वैशिष्ट्येन भवेदेवानेकत्वं ब्रह्मणः । अपि च तव मते सूक्ष्मचिदचिद्विशिष्टं ब्रह्म स्थूलचिदचिद्विशिष्टमभवदिति कृत्वा यदि सूक्ष्मचिदचिद्विशिष्टं ब्रह्म एकं तर्हि स्थूलचिदचिद्विशिष्टमपि ब्रह्मैकमेवेत्येकविज्ञानादेकविज्ञानमित्येव सिद्धम् । अथ यदि तदनेकं तर्हीदमप्यनेकमेवेत्यनेकविज्ञानादेवानेकविज्ञानमिति सिद्धमिति नैकविज्ञानादनेकविज्ञानप्रतिज्ञानसिद्धिरिति ।

**किंच तव मते** ब्रह्मणः प्रकृतित्वमेव न सेत्स्यति, तथाहि- सूक्ष्मचिदचिद्विशिष्टं ब्रह्म स्थूलचिदचिदचिद्विशिष्टस्य ब्रह्मणः प्रकृतिरित्युक्तौ किं ब्रह्म चिदचितोः प्रकृतिर्यद्वा ब्रह्मणः? नाद्यः- सूक्ष्मत्वेन चिदचितोस्सृष्टेः प्रागपि सत्त्वात् । न द्वितीयः- अजत्वाद्ब्रह्मणः, स्वस्य स्वहेतुत्वायोगाच्च । नच विशिष्टं विशिष्टस्य प्रकृतिरिति वाच्यं, विशिष्टस्यावस्तुत्वान्न हि विशेषणविशेष्याभ्यामन्यद्विशिष्टमिति किञ्चिद्वस्त्वस्ति । तस्मात्सूक्ष्मयोश्चिदचितोरेव स्थूलचिदचित्त्वेन रूपेण परिणाम इति वक्तव्यं, तच्च न युज्यते- चिति निर्विकारायां सूक्ष्मत्वस्थूलत्वयोरयोगात् । अचितः परिणामस्त्वस्मत्पक्षपतित एव । माया हि जगद्रूपेण परिणतेत्यस्माभिरुच्यते । नच मायापरिणामत्वे जगतस्साङ्ख्यवादापत्तिः-- स्वतन्त्रमायापरिणामत्व एव स दोषः । साभासमायापरिणामत्वे तु नेति साभासस्य हि मायाख्यस्य ईक्षतिस्सम्भवति । प्रधानस्य ईक्षत्ययोगाद्धि प्रधानपरिणामवादनिरासस्सूत्रकारेण कृतः । तस्मात्सर्वस्य ब्रह्मविवर्तभूतत्वादेव ब्रह्मज्ञानात्सर्वज्ञानसिद्धिः । नच न ब्रह्मविवर्तभूता मायेति वाच्यं, तस्या अपि तथात्वात्, 'माया चाविद्या च स्वयमेव भव'तीति श्रुतेः । नच मायापरिणामभूतत्वान्मायाज्ञानात्सर्वज्ञानसिद्धिरिति वाच्यं, मायाया अतत्त्वत्वात् । ब्रह्मणः पार्थक्येन तस्या दुर्ज्ञेयत्वाच्च । नच मायां विना ब्रह्मापि दुर्ज्ञेयमिति वाच्यं, यस्य ब्रह्म दुर्ज्ञेयं तस्यैव स्वरूपं ब्रह्मेति । यां विना ब्रह्म दुर्ज्ञेयं तस्याश्च स्वरूपं ब्रह्मैवेति । नच निस्तत्त्वाया मायायाः कथं ब्रह्मस्वरूपवत्त्वमिति वाच्यं, ब्रह्मणि कल्पितायास्तस्या अधिष्ठानभूतब्रह्मस्वरूपातिरिक्तस्वरूपाभावादेव निस्तत्त्वत्वमिति । **एतेन**—सर्वस्यापि जगतस्स्वरूपं ब्रह्मैवेति—**सिद्धम्** । अत एव स्वरूपभूते ब्रह्मण्येकस्मिन्विदिते सति सर्वस्यापि विज्ञानं सम्भवति । नच यदि सर्वस्यापि ब्रह्मैव स्वरूपं तर्हि सर्वमपि सच्चिदानन्दात्मकमेव भवेदिति वाच्यं, इष्टापत्तेः-- 'सर्वं खल्विदं ब्र'ह्मेति श्रूयते । नचैवमनृतजडदुःखात्मकस्य जगतः कथं सच्चिदानन्दात्मकत्वमिति वाच्यं, जगतस्स्वेन रूपेणानृतजडदुःखात्मकत्वं स्वाधिष्ठानरूपेण तु सच्चिदानन्दात्मकत्वमित्यविरोधात् । यथा घटः स्वेन रूपेणानृतः स्वोपादानमृद्रूपेण तु सत्यस्तद्वदिति । नच घटोपि सत्य एव स्वेन कम्बुग्रीवादिरूपेणेति वाच्यं, 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मिति श्रुतिविरोधात् । व्यवहारार्थं मृदि घटादिनाममात्रमेव कल्पितमिति घटादिविकारजातं मिथ्यैव मृत्तिकैव सत्येति श्रुत्यर्थः ।

**ननु** मृत्तिकैव सत्येत्यनुक्त्वा मृत्तिकेत्येव सत्यमित्युक्तत्वादितिशब्दस्वारस्येन घटादिविकारजातमपि मृद्द्रव्यत्वेनैव प्रामाणिकमित्यर्थात्तदपि सत्यमेवेति, **मैवम्**—मृद्द्रव्यत्वेन प्रामाणिकमित्यनेनैव घटादिविकारजातस्य स्वेन रूपेणाप्रामाणिकत्वमिति सिद्धत्वात्—प्रामाणिकत्वाप्रामाणिकत्वयोरेव सत्यत्वासत्यत्वरूपत्वादिति । तस्माद्यथा घटादयो मृत्तिकात्वेन सत्यास्तथा जगदपि ब्रह्मत्वेन सत्यमेव--यथा ते स्वेन रूपेणासत्यास्तथा जगदपि स्वेन रूपेणासत्यमेवेति । किंच व्यवहारार्थं मृत्तिकया नामरूपे स्पृश्येते इति तव वचनादपि व्यवहारार्थं कल्पिते एव मृदि घटादिनामरूपयोरसत्यत्वमेव सिद्धम् । नच सत्येएव नामरूपे मृत्तिका स्पृशतीति वाच्यं, स्पर्शात्प्राक्तयोरसत्त्वेन सत्यत्वाभावात् । सत्यं हि सद्वस्तु कदाचिदपि न भजतेऽसत्त्वम् । नचैवं मृदपि जन्मप्रध्वंसवत्त्वादसत्यैवेति वाच्यं, घटादिविकारदृष्ट्या मृत्सत्येत्युक्तं- स्वकारणभूतजलदृष्ट्या तु साप्यसत्यैव- सर्वत्रापि कारणत्वं सत्यत्वप्रयोजकं कार्यत्वं तु मिथ्यात्वप्रयोजकम् । तथासति कारणत्वविवक्षायां मृत्तिका सत्या कार्यत्वविवक्षायां त्वसत्या । कथं पुनः काणस्य सत्यत्वं कार्यस्यासत्यत्वमिति चेदुच्यते—कार्यातिरेकेण सत्त्वात्कारणस्य सत्यत्वं, कारणातिरेकेणासत्त्वात्कार्यस्यासत्यत्वमिति । नच कारणाज्जातत्वात्कार्यमपि सत्यमेवेति वाच्यं, जातत्वादेव कार्यस्यासत्यत्वात् । सत्यं हि वस्तु न जायते, नापि नश्यति—'जातस्य हि ध्रुवो मृत्यु'रिति भगवता गीतम् । नहि विनाशि वस्तु सदित्युच्यते— सतो विनाशायोगात्— 'नाभावो विद्यते सत' इति हि गीतम् । नच सतो जन्मनाशाभावेपि सत्यस्य जन्मनाशौ स्त इति वाच्यं, सत्सत्यशब्दयोरेव भेदः, नार्थभेद इति । अतएव 'सदेव सोम्येदमग्रआसी'दिति सद्रूपस्य ब्रह्मण एव तत्सत्यमिति सत्यत्वमुक्तम् । नचाप्रमेयस्य ब्रह्मणः कथं सच्छब्दवाच्यत्वमिति वाच्यं, व्यवहारार्थं तत्र तस्य कल्पितत्वादिति । तस्मात्सर्वस्यापि जगतस्समूलस्य परमकारणब्रह्मानन्यत्वाद्ब्रह्मज्ञानात्तत्कार्यसर्वज्ञानसिद्धिः ।

**ननु** यदि कारणं ब्रह्म सत्यं तर्हि ब्रह्मगतकारणत्वमपि सत्यमेव, तच्च कार्यसत्यत्वाधीनं, कार्यस्य मिथ्यात्वे तत्प्रतियोगिककारणत्वमिथ्यात्वावश्यम्भावादिति, **सत्यम्**—निर्धर्मकं हि ब्रह्म, न तस्य कारणत्वधर्मसद्भावः । अत एव तस्य कार्यमपि किञ्चिन्नास्ति- 'न तस्य कार्यं करणं च विद्यत' इति श्रुतेः । यद्यप्येवं तथापि मायया ब्रह्मणि जगत्कारणत्वं कल्पितं ततस्तद्वस्तुतस्तस्य नास्त्येव । नचैवं कार्यं जगदिव कारणं ब्रह्माप्यसत्यमेवेति वाच्यं, विशेषणस्यैवासत्यत्वं नतु विशेष्यस्येति । नच कारणं ब्रह्म सत्यमिति कथं श्रुत्योक्तमिति वाच्यं, व्यवहारदृष्ट्या तया तथोक्तमिति- यावद्व्यवहारं हि ब्रह्म जगत्कारणं भवति । नचैवं यावद्व्यवहारमेव ब्रह्म सत्यमपीति वाच्यं, व्यवहाराभावे जगत्कारणत्वाभावेपि ब्रह्मास्त्येवेति । नच व्यवहारकाल एव ब्रह्माप्यस्ति न त्वन्यदेति वाच्यं, किमन्यदा ब्रह्मासत्त्वं केनापि विदितमुत न? आद्ये येन विदितं तस्यैव स्वरूपं ब्रह्मेति न ब्रह्मासत्त्वसिद्धिः । द्वितीये अविदितत्वे नासाक्षिकस्य ब्रह्मासत्त्वस्य शशशृङ्गवदसिद्धिरेवेति । **तस्माद्ब्रह्मैकमेव सत्यं, तदन्यत्सर्वं तु ब्रह्मेत्येव सत्यं स्वरूपेण त्वसत्यमेव** । नचावाग्विषयं ब्रह्म कथं सत्यशब्दवाच्यं स्यादिति वाच्यं, यावद्व्यवहारं वाग्विषयत्वाद्ब्रह्मणः- परमार्थतस्तु वाचामेवाभावे कथं तद्विषयत्वं ब्रह्मणः । नच नित्यस्य वेदस्य कथं

परमार्थदशायामभाव इति वाच्यं, ब्रूहि त्वं नित्यवेदवादिनं, नाहं नित्यवेदवादी ब्रह्मभिन्नस्य वेदस्यापि मिथ्यात्वात् । नचैवं बौद्धवत्तवापि वेदोऽप्रमाणमेवेति वाच्यं, यावद्व्यवहारं प्रमाजनकत्वेन वेदस्य प्रमाणत्वादिति ।

## प्रकारान्तरेण ब्रह्मणस्सविशेषत्वाक्षेपः तत्समाधानं च ।

**ननु** यदि तव वेदः प्रमाणं तर्हि तत एव न निर्विशेषब्रह्मसिद्धिः—'सदेव सोम्येदमग्र आसी'-दिति श्रुतावग्रशब्दो हि सृष्टेः पूर्वकालं वक्तीति तेन कालेन ब्रह्मणो विजातीयभेदसिद्धिः, वैषम्यनैर्घृण्य-परिहाराय जीवबहुत्वकर्मप्रवाहानादित्वादेरभ्युपगन्तव्यत्वात्सजातीयभेदसिद्धिः, सृष्टिस्थित्याद्युपयोगितत्त-द्गुणगणसाहित्यराहित्याभ्यां स्वगतभेदसिद्धिरिति भेदत्रयवत्त्वात्सविशेषमेव ब्रह्मेति, **मैवम्**—इदानीं स्थितिकालः प्राक्तु सृष्टिकालः पश्चाल्लयकाल इति कालवासनया युतं शिष्यं प्रति श्रुत्याग्र इत्युपदिष्ट-मिति । यद्वा किं त्वं परमार्थतः कालसद्भावमभिप्रैषि, यद्वा व्यवहारतः ? नाद्यः- एकमेवेति श्रुति-विरोधात् । द्वितीय इष्टएव । सृष्टिकालात्प्राक्प्रलयकालो ह्यवर्तत- दिनयामिन्याविव प्रपञ्चप्रलयकालौ विपरिवर्तेते- दिनान्ते निशा, निशान्ते दिनमितिवत्प्रपञ्चान्ते प्रलयः प्रलयान्ते प्रपञ्च इति- तत्र च अयमादिरिति वक्तुं न शक्यते- अतएवानादित्वं 'नानादित्वा'दिति सूत्रेणैवोक्तम् । एवं च प्रकृत-प्रपञ्चसृष्टेः प्राक्प्रलय आसीत्- तस्माच्च प्रलयात्प्राक्प्रपञ्चान्तरमासीत्- सचान्यः प्रपञ्चः प्रकृतप्रपञ्चतुल्य एव- 'धाता यथापूर्वमकल्पय'दिति श्रुतेः । तस्माच्च प्रपञ्चान्तरात्प्राक्प्रलयान्तरमासीदित्येतस्य प्रवाहस्य नास्ति क्वचिद्विश्रामः । अतएवैतदन्तःपातिजीवाश्रितकर्मप्रवाहस्याप्यनादित्वम् । एतन्मूलभूताविद्याया-श्चानादित्वम् । ब्रह्मणस्तु नैतादृशमनादित्वं, किंतु जन्माभावप्रयुक्तमेवेति । एवं स्थिते—अग्रेपीदानी-मिव ब्रह्म सविशेषमेव प्रलयेपि जीवादृष्टादिसहकृताविद्याख्याचेतनवस्तुनः चेतनजीवस्य च सत्त्वेन तत्प्र-युक्तभेदसत्त्वाद्ब्रह्मणः । यद्यप्येवं कारणवाक्येषु सर्वेष्वपि सविशेषमेव ब्रह्माश्रयणीयं, तथापि- 'एकमेवा-द्वितीयं ब्र'ह्मेति श्रुतिर्जगत्कारणस्य ब्रह्मणो वास्तवं रूपमभिप्रैतीति तद्वाक्येन निर्विशेषमेव ब्रह्म प्रति-पाद्यते । निर्विशेषत्वं च ब्रह्मणः परमार्थदशायामेव, व्यवहारदशायां तु सविशेषत्वमेव । प्रपञ्चव-त्प्रलयोपि व्यवहारदशैव—यथा जागरवत्सुषुप्तिश्च व्यवहारदशैव । तथापि जागरवत्सुषुप्तौ मन इन्द्रिय-व्यापाराभावात्सुषुप्तिः परमार्थदशेत्युपचर्यये, एवं प्रलयोपि तथा मृतिर्मूर्छा च । नैतावन्मात्रेण प्रल-यादेः परमार्थदशात्वं मन्तव्यं, परमार्थतो ब्रह्मणि प्रलयाद्यभावात् । नच प्रपञ्चाभावे प्रलयः, प्रलयाभावे प्रपञ्चश्चेति सर्वदापि द्वयोरन्यतरस्य सत्त्वात्कदा पुनः परमार्थदशेति वाच्यं, मुक्तेरेव परमार्थदशात्वात् । नच मुक्तावपि ब्रह्म निर्विशेषं भविष्यतीति कथं निश्चेयमिति वाच्यं, सदापि ब्रह्म निर्विशेषमेव नतु मुक्तौ निर्विशेषमिदानीं तु सविशेषं, तथासति सविशेषत्वनिर्विशेषत्वाभ्यां ब्रह्मणो विकारित्वप्रसङ्गात् । किंतु वयमेवाज्ञानादिदानीं ब्रह्म सविशेषं मन्यामहे- मुक्तौ च निर्विशेषं भविष्यतीति, तदानीमज्ञानापा-यात् । वस्तुतो निर्विशेषस्यापि ब्रह्मणोऽज्ञानाद्भवति सविशेषत्वं, रज्जोरिव सर्पत्वमिति । तस्माद्वस्तुतो निर्विशेषमेव ब्रह्म, व्यवहारतस्त्वज्ञानवशात्सविशेषमिव भातीति ।

ननु वस्तुतो जीवस्याज्ञानस्य चाभावात्संसारनिवृत्तये मोक्षसाधनानुष्ठानं व्यर्थमिति चेत्- किं ब्रह्मविदस्तद्व्यर्थमिति मन्यसे उताब्रह्मविदः? आद्य इष्ट एव, तस्य मुक्तत्वात् । न द्वितीयः- मुमुक्षोस्तस्य ब्रह्मज्ञानं विना स्वस्मिन्बद्धभ्रान्त्यनपगमात् । तदपगमाय हि मोक्षसाधनानुष्ठानम् । ननु मुक्तावज्ञानं मास्तुनाम, किं जीवोऽस्ति उत न? आद्ये- तेनैव ब्रह्मणस्सविशेषत्वं, द्वितीये- मुक्तेरपुरुषार्थता, **नैवम्**—मुक्तौ जीवस्य ब्रह्मरूपेणैवावस्थानात् । अज्ञानं हि जीवब्रह्मभेदकं, तन्नाशे सति जीवो ब्रह्मैव भवति- 'ब्रह्मविद्ब्रह्मैव भव'तीति श्रुतेः । ब्रह्मैव स्वाविद्यया जीवभावमापन्नं सद्विद्यया विमुच्यत इति सिद्धान्तात् । नचैवमेकजीवाश्रयविद्ययैव ब्रह्माश्रिताऽविद्यानिवृत्तौ जीवान्तरस्य मोक्षसाधनानुष्ठानं व्यर्थमिति वाच्यं, एकजीववादिनं प्रति नैतच्चोद्यमवतरति । नानाजीववादे तु एकमेव ब्रह्म बह्वीभिरविद्याभिर्बहुजीवभावं प्राप्तं, तत्र यदविद्यया यज्जीवभावं ब्रह्म प्राप्नोति तदविद्यायाः तज्जीवविद्यया नाश इति न जीवान्तरस्य मुक्त्यर्थं मोक्षसाधनानुष्ठानवैयर्थ्यप्रसङ्गः । एकमेवाज्ञानमपीति मते तु तच्छक्तिनानात्वादुपपत्तिर्बोद्धव्या । तस्माद्वस्तुतो नास्ति ब्रह्मणस्सजातीयविजातीयस्वगतभेदः । सति च तद्भेदे ब्रह्म देशतः कालतो वस्तुतश्च परिच्छिन्नं सदनित्यमेव भवेदिति न नित्यानन्तब्रह्मसिद्धिः । नच नानन्तं ब्रह्मेति वाच्यं, 'सत्यं ज्ञानमनन्त'मिति श्रुतेः । नापि न नित्यं ब्रह्मेति वाच्यं, 'नित्यं विभुं सर्वगतमिति श्रुतेः । नच परिच्छिन्नमपि ब्रह्म नित्यमनन्तं च भवत्विति वाच्यं, परिच्छिन्नस्य लोके कस्यचिदपि वस्तुनो नित्यानन्तत्वादर्शनात् ।

**ननु** सविशेषत्वेपि ब्रह्मणो भवत्येवानन्त्यं, तथाहि- यथा देशतः कालतश्च परिच्छेदाभावो नाम सर्वेषु देशेषु सर्वेषु कालेषु च सत्त्वं, तथा वस्तुतः परिच्छेदाभावो नाम सर्वेषु वस्तुषु सत्त्वमेव । तच्च सर्ववस्तुसद्भाव एव सम्भवति, नतु तदसद्भाव इति सविशेषमेव ब्रह्मानन्तं निर्विशेषं तु ब्रह्म नास्त्येवेति, **मैवम्**—यदि सर्ववस्तुसत्त्वमेव वस्तुतः परिच्छेदाभावस्तर्हि स देशतः परिच्छेदाभावरूप एवेति तत एव तत्सिद्धौ ततः पृथग्वस्तुतः परिच्छेदाभावकथनं व्यर्थमेव भवेत् । नच घटपटादिषु सर्वेषु वस्तुषु सत्त्वमेव वस्तुपरिच्छेदाभाव इति वाच्यं, किमाकाशे सत्त्वं वस्तुपरिच्छेदाभाव उत देशपरिच्छेदाभावः? आद्ये वस्तुपरिच्छेदाभावात्पृथग्देशपरिच्छेदाभावासिद्धिः- आकाशस्यैव देशत्वात् । द्वितीयेपि आकाशस्य वस्तुत्वात्स एव दोषः । नच नाकाशो देशः किंतु भूरेवेति वाच्यं, तथापि भुवो वस्तुत्वात्स दोषस्तदवस्थ एव । किंच यदि सर्ववस्तुषु तिष्ठत्येव ब्रह्म, नतु सर्ववस्तूनि ब्रह्म, तर्हि 'सर्वं खल्विदं ब्रह्म, ऐतदात्म्यमिदं सर्व'मिति श्रुतिविरोधः । 'जगतः प्रकृतिर्ब्रह्मे'ति सूत्रविरोधः । ब्रह्मैव जगद्रूपेण परिणतमिति स्वप्रतिज्ञाविरोधश्च । ब्रह्म हि जगतः परिणाम्युपादानं तव मते । नच चिदचिद्विशिष्टमेव ब्रह्म जगदुपादानमिति वाच्यं, तथासति चिदचिद्विशिष्टेन ब्रह्मणा व्याप्तव्यस्य वस्तुन एवाभावाद्ब्रह्मणस्सर्वव्यापित्वमेव न भवेत् । न चेष्टापत्तिः- 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इति श्रुतेः । नचात एव श्रुतेर्ब्रह्मव्याप्यं चेतनाचेतनात्मकं जगदस्तीति वाच्यं, ब्रह्मभिन्नस्याणुमात्रस्यापि वस्तुनस्सत्त्वे ब्रह्मणस्सर्वकारणत्वायोगात् । ब्रह्म हि सर्वस्योपादानं घटादेस्सर्वस्य मार्तिकस्य मृदिव, ततश्च यदि

मृत्कार्यभूतो घटादिर्मृद्भिन्नस्स्यात्तर्हि ब्रह्मकार्यभूतं जगद्ब्रह्मभिन्नं स्यात्, यदि च मृद्भिन्नः पट इव जगद्ब्रह्मभिन्नं स्यात्तर्हि पटस्य मृदिव जगतो ब्रह्म नोपादानं स्यात्- तस्माद्ब्रह्मभिन्नं जगन्नास्त्येव । नन्वेवं श्रुत्युपपत्तिः कथमिति वाच्यं, कारणभूतमृदा कार्यभूतो घटादिर्यथा व्याप्तस्तथा ब्रह्मणा जगदिति श्रुत्यर्थात् । नचैतावन्मात्रेण ब्रह्मभिन्नं जगत्सिद्धमिति वाच्यं, यदि मृद्भिन्नो घटस्सिद्ध्येत्तर्हि ब्रह्मभिन्नं जगत्सिद्ध्येदेव । एवं कार्यस्य कारणातिरेकेणासत्त्वमेव कारणव्याप्तत्वम् । नच कार्यस्य कारणातिरेकेणाभावे कथं कार्यकारणव्यवहार इति वाच्यं, घटः कार्यं मृत्कारणमिति व्यवहारमात्रमेवेति । तथा यदि ब्रह्म जगतः परिणाम्युपादानं, यदि वा विवर्तोपादानमुभयथापि ब्रह्मभिन्नं किमपि नास्त्येवेति न ब्रह्मणो वस्तुपरिच्छेदसिद्धिः । अयं च वस्तुपरिच्छेदाभावो देशपरिच्छेदाभावात्पृथग्भूत एवेति नान्यतरवैयर्थ्यम् । **ननु** यदि ब्रह्मभिन्नं किमपि नास्ति तर्हि ब्रह्मभिन्नं मिथ्येति कुतस्त्वयोच्यत इतिचेद**त एवेति विद्धि**—यदि ब्रह्मभिन्नमस्ति तर्हि कथं तस्य सतो मिथ्यात्वं भवेत्- यद्वस्तु भ्रान्त्या ब्रह्मभिन्नमिति गृहीतं तद्वस्तुतो ब्रह्मैव- यथा सर्प इति भ्रान्त्या गृहीतं वस्तु वस्तुतो रज्जुरेव तद्वत् । एवं वस्तुतस्सर्पस्येव जगतोऽभावादेव मिथ्यात्वमिति । तस्मान्निर्विशेषं ब्रह्मैकमेव सत्यम् । तत्र जीवेश्वरजगन्ति भ्रान्तिप्रयुक्तानीत्यसत्यान्येव । एवमसत्यैर्जीवेश्वरजगद्भिस्सत्यस्य वस्तुनस्सविशेषत्वायोगादेव निर्विशेषं ब्रह्म ।

**यदुक्तम्**—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्मेति वाक्यस्य कारणवाक्यत्वेन न विजातीयादिभेदनिरासपरत्वं, तथासति कारणपरत्वाभावेन ब्रह्मकारणत्वमप्रमाणं स्यादिति सुदर्शनेन, **तन्मन्दम्**—जगत्कारणब्रह्मयाथात्म्यप्रतिपादनपरत्वात्तद्वाक्यस्य- ब्रह्मणो याथात्म्यं च एकत्वादिकमेवेति । अथवा भवतु तद्वाक्यस्य कारणवाक्यत्वेन कारणब्रह्मपरत्वं, तथापि न तवेष्टसिद्धिः- किं ब्रह्म सर्वस्य कारणं, यद्वा कतिपयवस्तूनामेव? आद्ये- ब्रह्मकार्यस्य सर्वस्य स्वकारणब्रह्मणः कथं भेदजनकत्वं- नहि घटः स्वप्रतियोगिकमृद्भेदजनको दृष्टः- नहि कोपि घटमृत्तिकयोस्सजातीयं विजातीयं वा भेदं पश्यति मनीषी- तस्मात्सर्वस्य कारणं ब्रह्मकारणत्वादेव निर्विशेषम् । द्वितीये कथं ब्रह्मणस्सर्वकारणत्वसिद्धिः । **नन्वेवं** कार्यकारणयोस्सजातीयस्य विजातीयस्य वा भेदस्यायोगेन ब्रह्मजगतोरपि तदभावेपि स्वगतभेदस्स्याद्ब्रह्मणः- ब्रह्म हीदानीं नामरूपविभागार्हचिद्रूपं प्राक्तु तदनर्हचिदचिद्रूपमिति स्वगतभेदसत्त्वाद्ब्रह्मण इति, **मैवम्**—चिद्रूपस्य ब्रह्मणश्चिदचिद्रूपत्वाभावात् । नच चिद्रूपं ब्रह्म सृष्टेः प्रागविभक्तनामरूपजगद्रूपमासीदिदानीं तु विभक्तनामरूपजगद्रूपं भवतीति स्वगतभेदो ब्रह्मण इति वाच्यं, चिद्रूपस्य ब्रह्मणः किं चिद्रूपपरित्यागेन जगद्रूपमासीत्किं तदपरित्यागेन? नाद्यः- ब्रह्मणो जाड्यादिप्रसङ्गात् । न द्वितीयः- युगपदेकत्र विरुद्धयोश्चिदचिद्रूपयोस्सामानाधिकरण्यायोगात् । नच चिद्रूपस्यैव ब्रह्मणो मायया जगद्रूपमासीदिति वाच्यं, अस्मन्मतप्रवेशप्रसङ्गात्तव ।

**ननु** तत्तत्कालभेदेन ब्रह्मणस्स्रष्टृत्वभर्तृत्वसंहर्तृत्वरूपगुणभेदात्स्वगतभेद इति, **मैवम्**—मायागुणभूतरजस्सत्त्वतमोवशादेव ब्रह्मणस्तादृशगुणवत्त्वप्रतीतिर्न तु स्वत इति । नच सदापि ब्रह्मणस्समा-

यत्वात्सगुणत्वमेवेति वाच्यं, परमार्थदशायां निर्मायत्वेन वस्तुतो निर्गुणत्वात् । अतएव- सत्त्वं रजस्तम इति 'निर्गुणस्य गुणास्त्रय' इति भागवतम् । नच दोषगुणराहित्यं निर्गुणत्वं न तु कल्याणगुणराहित्यमिति वाच्यं, किं सत्त्वादयस्त्रयो गुणा ब्रह्मणस्सन्ति, उत प्रकृतेः ? आद्ये- दोषगुणराहित्यमपि ब्रह्मणो भवत्येव- रजस्तमसोर्दुष्टगुणत्वात्तत्कार्ययोश्च दुर्गुणत्वात् । द्वितीये प्रकृतेरेव सुगुणदुर्गुणवत्त्वं नतु ब्रह्मणः, नहि सत्त्वादिगुणरहितस्य ब्रह्मणो दयादिसद्गुणानां क्रोधादिदुर्गुणानां वा प्रसक्तिर्भवति- 'सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमस' इति गीतावचनात् । नच ब्रह्मणश्शुद्धसत्त्वात्मिका प्रकृतिः जीवस्य तु मलिनसत्त्वात्मिका, तथासति ब्रह्मणः कल्याणगुणयोग एवेति, **मैवम्**—दर्शितविभागो जीवेश्वयोरेव नतु जीवब्रह्मणोः- ब्रह्मैकमेव शुद्धप्रकृतियोगादीश्वरोऽशुद्धप्रकृतियोगाच्च जीवो भवतीति । नचेश्वरातिरिक्तं ब्रह्म नास्तीति वाच्यं, यस्य शुद्धप्रकृतियोगादीश्वरत्वं जातं तस्य चैतन्यस्यैव ब्रह्मत्वात् । **ननु** यदि ब्रह्मद्वयं स्यात्तर्हि तत्रैकस्य ब्रह्मणश्शुद्धप्रकृतियोगादीश्वरत्वमन्यस्याशुद्धप्रकृतियोगाज्जीवत्वमित्ययं विशेषस्सिद्ध्यतु- नतु ब्रह्मद्वयमस्ति- 'एकमे'वेति श्रुतेः । यद्वा यदि ब्रह्म सांशं स्यात्तर्हि तत्र क्वचिदंशे शुद्धप्रकृतियोगादीश्वरत्वं क्वचित्पुनरशुद्धप्रकृतियोगाज्जीवत्वमित्ययं विशेषस्सिद्ध्यतु- नतु ब्रह्म सांशं, किंतु निरंशमेवेति कथं तव मतस्याप्युपपत्तिरिति **चेदुच्यते**—एकमेव ब्रह्म- तच्च यद्यपि निरंशं तथापि मायया सांशमिव भवति- 'पादोस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवी'ति श्रुतेः । तथाच ब्रह्मण एकस्मिन्नंशे जीवोन्यस्मिन्नंशे ईश्वरः परस्मिन्नंशे जगच्च वर्तते मायया । जीवेश्वरजगद्रहितं तु मुक्तप्राप्यं शुद्धं ब्रह्म च वर्तत इति मायायां सर्वसम्भवात्कात्रानुपपत्तिः । यद्यनुपपत्तिरेवेत्याग्रहस्तर्हि सास्माकमिष्टैव- अनुपपन्नार्थस्यैव मायामयत्वात् । उपपन्नोह्यर्थो न मायामयः, प्रसिद्धं चैतदिन्द्रजालादौ । उक्तं च भागवते व्यासेन—'सेयं भगवतो माया यन्न येन विरुद्ध्यते'—इति । यद्वा ब्रह्मणि तावदीश्वरः कल्पितः, तत्रैवेश्वरे पुनर्जीवः कल्पितः, तत्रैव जीवे पुनर्जगत्कल्पितं मयेति विद्धि- चैतन्यं ब्रह्म- तदेव मायावच्छिन्नं सदीश्वरो भवति, तदेवेश्वरीभूतमन्तःकरणावच्छिन्नं सज्जीवो भवति, तदेव जीवभूतं भूतभौतिकावच्छिन्नं सज्जगद्भवतीति भावः । नच यदि जीवे जगत्कल्पितं स्वप्नवत्तर्हि जाग्रत्यप्यन्तरेव दृश्येत जगदिति वाच्यं, मायया बहिरिवोद्भूतं दृश्यते- स्वप्नेपि हि बहिरेव दृश्यते- नहि स्वप्नद्रष्टथादीन् स्वस्मिन्पश्यति किंतु बहिरेव भूमाविति- अस्याप्यर्थस्य मायामयत्वाद्विचारासहत्वं **युक्तमेवेत्यलम्** ।

## सदेवेति वाक्यं असद्वादनिरासपरमेव नतु विजातीयभेदनिरासपरमिति सुदर्शनमतं तन्निराकरणम् ।

'सदेव सोम्येदमग्र आसी'दिति वाक्ये सदेवेत्यनेन असद्वादनिरास एव, नतु विजातीयभेदनिरास इति **यदुक्तं सुदर्शनेन, तदयुक्तम्**—असतस्सद्विजातीयत्वादिति । नच सद्विरोधित्वरूपेणासद्वादनिरासोयं नतु सद्विजातीयत्वरूपेणेति वाच्यं, सद्विरोधित्वमपि सद्विजातीयत्वादनतिरिक्तमेवेति । यदि तु सजातीयमपि वस्तु कस्यचिद्विरोधि भवति- यथा शुनकस्य शुनकः, विजातीयमपि **वस्तु कस्य-**

चिदविरोधि भवति- यथा शुनकस्य महिषः, ततो विरोधित्वं विजातीयत्वादतिरिक्तमेवेत्युच्यते- तर्हि सद्विरोधिभूतं तद्वस्तु सत्सजातीयमपि भवेदेवेति कथमसद्वादव्युदासः- नहि सद्विरोधि वस्तु सद्विजातीयमेवेति नियमः- सद्विजातीयभेदनिरासे कृते तु असद्वादनिरासः कृतो भवति- असद्वस्तुनस्सद्विजातीयत्वाव्यभिचारात् , असद्वस्तुनस्सद्विरोधित्वं हि व्यभिचरितमित्युक्तम् । वस्तुतस्तु नेदं वाक्यमसत्कार्यवादव्युदासपरं, नापि सत्कार्यवादप्रतिष्ठापकम्- तथा हि कार्यमुत्पत्तेः प्राङ्नास्ति प्रागपि तत्सत्त्वे कारकव्यापारवैयर्थ्यादित्यसत्कार्यवादस्तार्किकाद्यभिमतः । कार्यमुत्पत्तेः प्रागप्यस्त्येव- किन्त्वनभिव्यक्तं सद्वर्तते स्वकारणे- कारकव्यापारात्तु तदभिव्यक्तिर्भवतीति सत्कार्यवादस्साङ्ख्याभिमतः, इदं तु वाक्यं कार्यं जगदुत्पत्तेः प्राग्ब्रह्मैवेति प्रतिपादयतीति नासत्कार्यवादनिरासपरं, नापि सत्कार्यवादस्थापनपरं, किंतु जगतो ब्रह्मभावप्रतिपादकमेव । अतएव भगवानाह भागवते ब्रह्माणम्प्रति—'अहमेवासमेकोग्रे नान्यद्यत्सदसत्परम् । पश्चादहं यदेतच्च योवशिष्येत सोस्म्यहम्'—इति । यथा घटस्याद्यन्तरयोर्मृत्तिकैव, मध्येपि सैव घट इति तु भ्रान्तिमात्रम्- तथा जगत आद्यन्तयोर्ब्रह्मैव मध्येपि ब्रह्मैव, जगदिति तु भ्रन्तिमात्रमेव- इत्येवं परमेवेदं वाक्यम् । तस्माद्ब्रह्मणस्सजातीयं विजातीयं वा वस्तु सृष्टेः प्राङ्नास्त्येव । यद्यपीदानीमपि नास्ति तथापि भ्रान्तदृष्ट्या अस्तीव भाति- इति विवेकः ॥

## सदेवेतिवाक्यस्थस्य सच्छब्दस्य सुदर्शनाभ्युपगतप्रकृतिपुरुषकालशरीरकपरमात्मार्थकत्वनिराकरणम् ।

**यदुक्तं सुदर्शनेन** सच्छब्दो विशेष्यभूतपरमात्मवाचकोपि प्रकृतिपुरुषकालशरीरकं परमात्मानमुपस्थापयति, सच्छब्दो हि मानसंबन्धयोग्यतालक्षणं सत्त्वं प्रवृत्तिनिमित्तीकृत्य परमात्मनि वर्तत इति, **तदसत्**—यदि प्रमाणसम्बन्धार्हं ब्रह्म तर्हि न सत्तन्नासदुच्यत इति भगवता कथं गीयेत । किञ्च किं ब्रह्मेदानीं मानसम्बन्धार्हं, यद्वा सृष्टेः प्राक् ? आद्ये सृष्टेः प्राक्कथं तस्य सच्छब्दवाच्यता । द्वितीये सृष्टेः प्राक्प्रमाणस्यैवाभावे कथं तत्संबन्धार्हता ब्रह्मणः । नच प्रलयेपि मानं शास्त्रं नित्यवेदरूपमस्तीति वाच्यं, ध्वन्यात्मकस्य तस्य प्रलये सत्त्वायोगात् , नहि तदा ध्वन्यभिव्यञ्जकशरीरादिरस्ति, तदा प्रकृतिपुरुषकालशरीरकत्वं परमात्मनो युक्तम्- प्रकृत्यतिरिक्तकालाभावात् । परमात्मन एवोपाध्यन्तरवैशिष्ट्यात्पुरुषत्वमिति पुरुषशरीरकत्वाभावाच्च । प्रकृतिशरीरकत्वं तु सम्मतमेव । नच प्रकृतिवत्पुरुषोपि परमात्मव्याप्तत्वात्तन्नियाम्यत्वाच्च परमात्मनश्शरीरमेवेति वाच्यं, पूर्णस्य स्वतन्त्रस्य च पुरुषस्य तदुभयायोगात् । परिच्छिन्नत्वपारतन्त्र्ययोस्त्वनुभवसिद्धयोरनात्मगतयोरेव तत्तादात्म्याध्यासेनात्मगतयोरिव प्रतीयमानत्वाच्च । किंच कारणेन कार्यं व्याप्तं दृष्टं लोके- यथा मृदा घटः, नैवं परमात्मना जीवात्मा व्याप्तः- परमात्माऽकार्यत्वाज्जीवात्मनः- 'अजो नित्य' इति श्रुतेः । परमात्मनस्सकाशाज्जीवा जायन्त इति पाञ्चरत्रागमोक्तार्थस्याप्रमाणत्वाच्च । नचाकारणेनाकार्यमपि व्याप्तमस्तीति वाच्यं, तददर्शनात् । नच गगनेन घटो व्याप्त इति वाच्यं, परम्परया गगनकार्यत्वाद्घटस्य । नच मनसा विषयो व्याप्त इति वाच्यं, मनोमयत्वाद्विषयस्य । नचाचेतनेन घटो व्याप्त इति वाच्यं, परम्परया तेजःकार्यत्वाद्घटस्य ।

एतेन जलेन घटो व्याप्त इत्यपि प्रत्युक्तम् । (नच तैलेन घटो व्याप्त इति वाच्यं, तैलस्यापि द्रव-द्रव्यत्वेन जलत्वात्) नच तिरुमणिद्रव्येण मुखं व्याप्तमिति वाच्यं, मुखस्य पार्थिवत्वात्तिरुमणिद्रव्यस्य च पृथिवीत्वादिति । यदि तु- येन पार्थिवांशेन मुखं जातं ततो भिन्नेनैव पार्थिवांशेन मुखं व्याप्तमित्यकारणेनैव कार्यं व्याप्तमित्युच्यते- तर्हि किं सर्वात्मना पुरुषः परमात्मना व्याप्त उतैकदेशेन ? आद्ये— अकारणेन कार्यं सर्वात्मना व्याप्तं न भवत्येव । द्वितीये तु- परमात्मनस्सर्वव्याप्तिभङ्गप्रसङ्ग इति । तस्माद्यदि जीवः परमात्मव्याप्तत्वार्थमात्मनश्शरीरं तर्हि परमात्मकार्यत्वादजो न भवत्येव । नचैवं प्रकृतिरप्यजत्वात्परमात्मा कार्यत्वेन परमात्मशरीरं न भवत्येवेति वाच्यं, प्रकृतेः परमात्मन्यध्यस्तत्वेन परमात्मकार्यत्वात् । 'माया चाविद्या च स्वयमेव भव'तीति श्रुतेः । तस्या अजत्वं तु निमित्तान्तराजन्यत्वप्रयुक्तमेव । माया हि स्वयमेव भवति, नतु निमित्तान्तरात् । जगत्तु ब्रह्मणि स्वयं न भवति, किं तु मायावशादिति भवति नाजम् ।

## एकमेवाद्वितीयं ब्रह्मेति श्रुतौ एकपदस्य सुदर्शनाभ्युपगतकारणावस्थात्मकब्रह्मबोधकतानिराकरणम् ।

**अथ यदुक्तं सुदर्शनेन**—'एकमेवाद्वितीयं ब्र'ह्मेति श्रुतौ एकमेवेत्यनेन अविभक्तनामरूपं कारणावस्थं ब्रह्मोच्यत इति, **तदप्ययुक्तम्**--अविभक्तयोरपि नामरूपयोर्ब्रह्मणि सत्त्वे निरुपचरितैकत्वस्थित्ययोगात् । निरुपचरितैकत्वे सम्भवति सति लाक्षणिकैकत्वस्वीकारायोगाच्च । किंच नामरूपे अविभक्ते भूत्वा कुत्र तिष्ठत.- न ब्रह्मणि- तस्य नामरूपरहितत्वात् । यदि त्वविभक्ते नामरूपे ब्रह्मणि स्तः, तर्हि विभक्ते च ते तत्र भवत एव । तथाच सर्वदापि ब्रह्म नामरूपानिर्मुक्तमेव भवेत् । यदि त्वव्यक्ते तर्हि ब्रह्मण्येकत्वं निरुपचरितमेव । अविभक्तनामरूपस्य अव्यक्तत्वेन ब्रह्मत्वाभावादिति । नच अविभक्तनामरूपाव्यक्तोपहितत्वाद्ब्रह्म न भवत्येकमिति वाच्यं, किं प्रलयदशायां ब्रह्म तथाविधमिति वदसि ? किं वा परमार्थतः ? आद्य इष्ट एव । न द्वितीयः- परमार्थतोऽज्ञानस्यैवाभावादिति । किंच कारणावस्थं ब्रह्मेत्युक्तिरयुक्ता- मृद इव ब्रह्मणो यदि कार्यकारणावस्थे तर्हि तद्वद्विकारित्वेनानित्यत्वमेव भवेत्- नह्यवस्थावानविकारी नित्यः, क्वचिद्दृष्ट उपपन्नो वा । नच सकलकारणस्य ब्रह्मणः कथं कारणावस्थाऽभाव इति वाच्यं, सकलकारणस्य ब्रह्मणः कथं कार्यावस्थासद्भाव इति । नच मास्तु ब्रह्मणः कार्यावस्था, कारणावस्थात्वस्त्येवेति वाच्यं, किं ब्रह्मणः कारणावस्था सर्वदा वर्तते ? उत सृष्टेः प्रागेव ? आद्ये- कथं जगत्प्रलयसम्भवः । द्वितीये- इदानीं प्रपञ्चसमये ब्रह्म कारणं न भवत्येव । नच ब्रह्मणोस्ति कारणावस्थात्रयं- तत्रैका सृष्टिकारणावस्था, अन्या स्थितिकारणावस्था, अपरा लयकारणावस्था । अत एव 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविश'न्तीति जगज्जन्मस्थितिलयकारणत्वं ब्रह्मणः श्रूयत इति वाच्यं, पूर्वपूर्वावस्थापरित्यागेनोत्तरोत्तरावस्थास्वीकारेण च ब्रह्मणो विकारित्वमित्युक्तत्वात् । नच बाल्याद्यवस्थापरित्यागपूर्वकयौवनाद्यवस्थास्वीकारशालिनो जीवस्येव नास्ति ब्रह्मणोपि विकारित्वमिति वाच्यं, तत्र देहस्यैव तत्स्वीकारशालित्वं तत्प्रयुक्तं

विकारित्वमनित्यत्वं चेति । नच जाग्रदाद्यवस्थापरित्यागपूर्वकस्वप्नाद्यवस्थास्वीकारशालिनो जीवस्येव ब्रह्मणो भवत्यविकारित्वमिति वाच्यं, तत्राप्यवस्थावतस्साभासाहङ्कारस्य प्रमातुरेव तत्स्वीकारशालित्वादिकं, नत्ववस्थात्रयसाक्षिणस्तुरीयस्य कूटस्थस्य जीवस्येति । तस्माद्यद्यदवस्थावत्तत्तत्सर्वमनित्यमेव । नच घटत्वाद्यवस्थावन्मृद्द्रव्यं नित्यमेवेति श्रुत्यैवोक्तमिति वाच्यं, घटाद्यपेक्षया व्यावहारिकमेव तन्नित्यत्वमित्युक्तत्वात् । नच वृक्षस्य बीजवज्जगतो मूलभूतं ब्रह्म कारणावस्थमेवेति वाच्यं, अव्यक्तमेव जगतो मूलं नतु ब्रह्मेति । नच ऊर्ध्वमूलमिति गीतया ऊर्ध्वस्य ब्रह्मण एव जगन्मूलत्वमुक्तमिति वाच्यं, अव्यक्तोपहितं ब्रह्मैव तत्रोर्ध्वशब्देनोक्तं, नतु शुद्धं ब्रह्मेति कृत्वा अव्यक्त एव जगन्मूलत्वविश्रान्तिरिति । 'अव्यक्तमूलप्रभव' इति पुराणवचनानुसाराच्च । तस्मात्परब्रह्मण उपाधिभूतस्याव्यक्तस्यैव कारणावस्था कार्यावस्था चेत्यवस्थाद्वयं नतु ब्रह्मणः- यथा बाल्याद्यवस्था देहस्यैव न जीवस्य तद्वत् । तथापि- अज्ञास्तु ब्रह्मैव कार्यावस्थं कारणावस्थं चेति मन्वते, यथा ततोप्यज्ञा जीव एव बालो युवा स्थविरश्चेति मन्वते तद्वदिति ।

## अव्यक्तस्य जगत्कारणत्वे साङ्ख्यवादापत्तिरित्याक्षेपः, स्वतन्त्रस्य तस्य जगत्कारणत्वाभावात् तद्वैलक्षण्यमिति समाधानं च ।

**ननु** यद्येवमव्यक्तमेव जगन्मूलं तर्हि साङ्ख्यवादी जयं प्राप्त इति, **मैवम्**—स्वतन्त्रमव्यक्तं जगन्मूलमित्यस्माभिरनुक्तत्वात् । ब्रह्मण्यध्यस्तं साभासमव्यक्तं हि जगतो मूलं । यद्वा अव्यक्तोपहितं ब्रह्म जगतो मूलमिति । नच सदेव सोम्येदमिति वाक्ये जगन्मूलं ब्रह्मैव सच्छब्देनोक्तमिति वाच्यं, उक्तं भवतु- तथापि न शुद्धं ब्रह्म जगतो मूलं, किंतु अव्यक्तोपहितमेवेति । नचाव्यक्तोपहितस्य ब्रह्मणः कथमेकत्वादिकमिति वाच्यं, अव्यक्तस्य ब्रह्मशक्तित्वेन ब्रह्मान्यत्वेन परिगणनायोगात् । नहि लोके अग्निरेकस्तच्छक्तिर्द्वितीयेति भवति परिगणना । भवतु वा अव्यक्तं ब्रह्मणोन्यत्वेन परिगणनीयं तत्त्वान्तरं, तथापि न तेन मिथ्याभूतेन ब्रह्मणोऽनेकत्वं- यथा मिथ्याभूतेन नैल्येन गगनस्य न रूपित्वं तद्वत् । अव्यक्तं नामरूपविभागानर्हं सूक्ष्मावस्थं व्यक्तिमनापन्नं प्रलयकालगोचरमचिद्द्रव्यं, तदेव नामरूपविभक्तं स्थूलावस्थं व्यक्तं प्रपञ्चकालगोचरं जगदित्युच्यते- यथा बीजस्यैव तरुत्वं तथा अव्यक्तस्यैव जगत्त्वम् । जगतोऽचिद्द्रव्यत्वात्तत्परिणाम्युपादानं ह्यचिद्द्रव्यमेव भवितुमर्हति, नतु चिद्द्रव्यमुपादानोपादेययोस्सालक्ष्ण्यनियमात् । मृद्घटादिषु तथा दर्शनाच्च । ब्रह्म तु जगतो विवर्तोपादानमेव सर्पस्य रज्जुवत् । तत्र च न कार्यकारणयोस्सालक्षण्यनियम इति, चिद्रूपादपि ब्रह्मणोऽचिज्जगदुत्पद्यत एव । एवंस्थिते त्वं तु ब्रह्मैव जगतः परिणाम्युपादानमिति ब्रूषे ! सच्चिदानन्दं ब्रह्म जगत्त्वचिदिति च वदसि ! अतः कथं तव व्याहतवादाभावः । नच प्रकृतिविशिष्टं ब्रह्मैव जगतः परिणाम्युपादानमित्यस्माभिरुक्तमिति वाच्यं, तर्हि किं शुद्धं ब्रह्म जगतः परिणाम्युपादानं न भवतीत्यभ्युपेतम् ? ओमित्युक्तौ जितमेवास्माभिः । यदि वाभ्युपेतं तर्हि कथं दर्शितदोषातिवृत्तिरिति । तस्मान्नामरूपविभागानर्हकारणावस्थं तद्विभागार्हकार्यावस्थं चाव्यक्तमचिद्द्रव्यमेव, नतु चिद्द्रव्यं, ब्रह्म तदेव बोधकवाक्ये एक-

मेवेत्यनेनोच्यते । निरुपचरितैकत्वस्य तत्रैव विश्रान्तत्वात् । **एतेन**—सदेवेति वाक्यमेव कारण-वाक्यं, एकमेवेति तु न कारणवाक्यं, किंतु बोधकवाक्यमेवेति कृत्वा कारणवाक्ये कथं शुद्धब्रह्मप्रति-पादनमिति शङ्कापि प्रत्युक्ता । **यदुक्तम्**—'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' **इति** श्रुत्यन्तराच्चायमेवार्थ इति **तदयुक्तम्**—तस्यापि श्रुत्यन्तरस्य मदुक्तार्थ एव पर्यवसानात्, तथाहि-- नामरूपे व्याकरवाणि इति सङ्कल्प्य नामरूपे यो व्याकरोत्स किं व्याकृतनामरूपाद्वस्तुनः पृथग्भूतः? यद्वाऽपृथग्भूतः? आद्ये- यद्व्याकृतनामरूपं तद्वस्तु नामरूपव्याकरणात्प्रागव्याकृतनामरूपमेवेति तदेवा-व्याकृतशब्दवाच्यम्—तदेव ब्रह्मणा व्याकृतं सृष्टेः प्राक्चेदं जगदव्याकृतात्मनैव स्थितं—तदेतदेवोक्तं श्रुत्या- 'तद्धेदं तर्ह्यव्याकृतमासी'दिति । सृष्टेः प्रागिदं जगदव्याकृतात्मना स्थितमिति हि तदर्थः । तच्चाव्याकृतमव्यक्तमेव । नामरूपव्याकरणाभावेन हि तस्याव्यक्तत्वम्- तस्माद्ब्रह्मणोऽन्यदव्याकृतमेव वस्तु जगतो मूलं न ब्रह्मेति न ब्रह्मपरिणामभूतजगत्सिद्धिस्तवानया श्रुत्या । द्वितीये कर्तृकर्मविरोधः- नहि व्याकरणक्रियाकर्त्रैव तत्कर्म भवेत् । नच 'आत्मानमेवाकुरु'तेति श्रुतेः, 'आत्मन्येवात्मनात्मानं सृज-स्यवसि हंसि'चेति स्मृतेश्च ब्रह्मैवाव्याकृतमात्मानमेव नामरूपाभ्यां व्याकरोदिति वाच्यं, अजस्याव्य-यस्यानन्तस्य नित्यस्य परस्य ब्रह्मणः स्वतो वा परतो वा जन्मस्थितिलयायोगात् । स्वस्मादेव स्वं जायत इति विरुद्धं स्वजन्मनः प्राक् स्वस्यैवाभावेन स्वजन्महेतुत्वस्य निराश्रयत्वात् । **एतेन** बौद्धाद्यभिमत-स्स्वभावकारणवादः **प्रत्युक्तः** । एवं स्वनाशहेतुत्वमपि स्वस्य न सम्भवति- स्वनाशकाले स्वस्थित्ययो-गात् । तस्मादुक्तश्रुतिस्मृत्योर्माययेत्येव परिहारः- मायया हि नित्यमजमनन्तमव्ययं चिन्मात्रं शुद्धं बुद्ध-मानन्दं सदैकरूपमपि ब्रह्म नानारूपेण प्रतिभाति- गगनमिव नीलाद्यात्मना । तस्माद्ब्रह्मणाऽव्याकृता-द्भिन्नेनैवाव्याकृतं नामरूपाभ्यां व्याक्रियते, नतु ब्रह्म । यदि तु ब्रह्मैवेत्याग्रहः तर्हि अव्याकृतोपाधिकं ब्रह्म नामरूपव्याकृतोपाधिकमभूदिति वक्तव्यम् । नच तथैव वदामः- सूक्ष्मचिदचिद्विशिष्टं ब्रह्म स्थूल-चिदचिद्विशिष्टमभूदित्यस्माभिरुच्यमानत्वादिति वाच्यं, तथासति ब्रह्मण उपाधिरेव पूर्वमव्याकृतमिदानीं नामरूपाभ्यां व्याकृतं च भवतीति ब्रह्मणस्सिद्धमेव जगत्प्रत्यपरिणाम्युपादानत्वमिति **संक्षेपः** ॥

## अद्वितीयमिति पदं निमित्तकारणान्तराभावं बोधयति, नतु द्वैतसामान्याभाव-मिति सुदर्शनमतनिराकरणम् ।

**अद्वितीयमित्यनेन** निमित्तान्तराभाव उक्त इति **सुदर्शनः**, **तदयुक्तम्**— निमित्तान्तराणां कालादृष्टादीनां सत्त्वात् । नचैकमेवाद्वितीयमित्यनेन ब्रह्मैवोपादानं निमित्तं चेत्युच्यत इति वाच्यं, ब्रह्मो-पादानवादस्य पराकृतत्वादक्रियस्य ब्रह्मणो जगत्कर्तृत्वरूपनिमित्तत्वायोगाच्च । नचाभिन्ननिमित्तोपादान-वादी शङ्कराचार्योपीति वाच्यं, मायाविशिष्टमीश्वराख्यं ब्रह्मैव जगत उपादानं निमित्तं च, नतु शुद्धं ब्रह्मेति तदाशयात् । यद्वा माययैव ब्रह्म जगत उपादानं, निमित्तं च नतु वस्तुत इति । किंच ब्रह्म जगतो विवर्तोपादानमेव, नतु परिणाम्युपादानमिति स्थापितम् । तथाच ब्रह्मणो जगद्विवर्तोपादानत्वं प्रति निमित्तं मायास्त्येवेति कथमद्वितीयमित्यनेन निमित्तान्तरनिषेधः । अपिच- अचिदव्यक्तमेवाचि-

ज्जगत उपादानम् । ब्रह्मत्वीश्वराख्यं तत्र निमित्तमेव । अव्यक्तस्य स्वतो जगद्रूपेण परिणन्तुमशक्तत्वाज्जडं हि तत् । तस्मादव्यक्तं जगद्रूपेण व्यक्तं विदधत ईश्वरस्यैव निमित्तत्वमिति कथमभिन्ननिमित्तोपादानसिद्धिः । तव मते हि प्रकृतिरन्या ईश्वरोन्यः, अस्मन्मते तु प्रकृतिविशिष्टस्य ब्रह्मण एवेश्वरत्वात्तत्सिद्धिः । **तस्मादेकमेवाद्वितीयमिति पदत्रयं भेदत्रयनिरासपरमेव ॥**

## कारणवाक्यस्य, तत्स्वरूपशोधकवाक्यस्य रामानुजाभ्युपगतार्थनिराकरणम् ।

रामानुजमते तु एकमिति पदेन ब्रह्मोपादानमिति, अद्वितीयमितिपदेन ब्रह्म निमित्तमिति च सिद्धे, एवेति पदं व्यर्थमेव । नच नामरूपविभागरहितकारणावस्थब्रह्मप्रतिपादनपर एवकार इति वाच्यं, एकपदेनैव तल्लाभात् । नच वैशेषिकादिभिर्नित्यत्वेनाभिमतानामाकाशादीनामपि संहाराभिप्राय एवाकार इति वाच्यं, तथासति त्वया नित्यत्वेनाभिमतानां प्रकृतिकालादीनामपि संहाराभिप्राय एवकारः किं न स्यात्- ब्रह्मव्यतिरिक्तनित्यवस्तुनिरासपर एव भवेदेवकार इति । नचास्य कारणवाक्यत्वात्कारणावस्थायां चाव्यक्तादीनां सत्त्वान्न तत्संहार एवकाराभिप्रेत इति वाच्यं, एकमेवेति वाक्यस्य कारणस्वरूपशोधकवाक्यत्वेन कारणवाक्यत्वाभावादिति । नचैवं जगत्कारणस्याव्यक्तस्यैव कारणवाक्येन ग्रहणे तत्स्वरूपशोधकवाक्यमिदं ब्रह्मपरं नैव भवेदिति वाच्यं, ब्रह्मेति कण्ठत एवोक्तत्वात् । नच ब्रह्मशब्दः प्रकृतिपर एव-- 'मम योनिर्महद्ब्रह्मे'ति गीताप्रयोगादिति वाच्यं, माता मे वन्ध्येतिवद्ब्रह्मशब्दस्य ब्रह्मपरत्वाभावकथनस्यापहास्यत्वात् । गीतायां तु प्रकरणादिवशादर्थान्तरपरिग्रह इति । भवतु वा अव्यक्तस्वरूपशोधकमेवेदं वाक्यं, तथापि नास्मकं क्षतिः- व्यक्ताव्यक्तयोस्स्वरूपं ब्रह्मैवेति ब्रह्मपरत्वस्यैव सिद्धत्वात् । कल्पितस्य ह्यधिष्ठानं स्वरूपं, ब्रह्मणि च व्यक्ताव्यक्ते कल्पिते- अतएव- जगतः परिणाम्युपादानत्वेन जगत्कारणभूतायाः प्रकृतेरपि विवर्तोपादानं ब्रह्मैवेति ब्रह्मैव जगतः परमकारणं- जगत्कारणकारणत्वात् । यथा जगत्कर्तुर्हिरण्यगर्भस्यापि कर्तृत्वाज्जगतः परमः कर्ता नारायण एवेत्युच्यते तद्वदिति । एवं परमकारणत्वादेव सदेवेति वाक्येन ब्रह्मैवोच्यते नत्वव्यक्तम् । तस्य च परमकारणस्य ब्रह्मण एकत्वादिकं युक्तमेव । व्यक्तोपादानभूताव्यक्ताध्यासात्प्राग्ब्रह्मभिन्नस्य कस्याप्यभावात् । एवं चैकमेवेति वाक्यस्य कारणवाक्यत्वेपि न भेदत्रयनिरासपरत्वानुपपत्तिरिति सिद्धम् ।

नचाव्यक्ताध्यासस्यानादित्वात्ततः प्रागिति वचनमयुक्तमिति वाच्यं, कालनिर्णयाभावादेवानादित्वं, नतु जन्यत्वाभावादिति । **अत्र च पक्षे सदेवेति वाक्ये इदंशब्देन व्यक्तमव्यक्तं चेति द्विविधमचिद्द्रव्यं गृह्यते प्रपञ्चकालगोचरं प्रलयकालगोचरं चेति बोध्यम् ।** ननु यदि ब्रह्म जगतो नोपादानं तर्हि बहुस्यामित्यस्य कथमुपपत्तिः ? उच्यते—बहुस्यामिति सङ्कल्पः किं परस्य ब्रह्मणः ? उत मायाविशिष्टस्य ईश्वराख्यस्यापरस्य ? नाद्यः- तस्य सङ्कल्पाद्ययोगात् । द्वितीय इष्ट एव- मायिन ईश्वरस्य जगदुपादानत्वं, जगन्निमित्तत्वं चास्माभिरभ्युपेतमेवेति । मायाया जगद्रूपेण परिणामान्मायी ईश्वरोपि जगद्रूपेण परिणत इव भवतीतीश्वरस्य जगदुपादानत्वं, स्वोपाधिभूतमायाया जगद्रूपेण परिणमयितृत्वादीश्वरस्य जगन्निमित्तत्वं च सम्भवतीति । किं बहुना—यद्यत्कल्याणगुणयोगं भवन्तो

ब्रुवन्ति ब्रह्मणस्तत्तत्कल्याणगुणयोगं वयं वदाम ईश्वरस्य- ततो नास्माकं कस्यचिदप्यनुपपत्तिः काचिदपि । निर्गुणं ब्रह्म तु युष्माभिरनभ्युपगतमिति न्यूनता युष्माकमियमिति । अथ जीवेनात्मनेत्यस्य जीवशरीरेण मयेत्यर्थवर्णनं तु अयुक्तमेव- जीवेश्वरयोश्शरीरशरीरिभावायोगस्योक्तत्वात् । जीवेनेतिपदस्य जीवशरीरेणेत्यर्थस्य लाक्षणिकत्वेनायुक्तत्वाच्च । नच 'सिंहेन भूत्वा बहवो मयात्ता' इतिवद्युक्तं तदिति वाच्यं, तत्रापि सिंहात्मभूतेन मयेत्येवार्थात् । मनुष्येण मयेति प्रयोगवत्सिंहेन मयेति प्रयोगस्यापि देहात्मनोरन्योन्याध्यासप्रयुक्तत्वेन सिंहशरीरेणेत्यर्थालाभात् । स्वशरीरे जीवे स्वबुद्धेर्भ्रान्तिभूताया ईश्वरस्य भावनायोगाच्च । सर्वज्ञो हीश्वरः । नचात एव जीवे ईश्वरस्य नास्त्यहम्बुद्धिः, किंतु मच्छरीरमित्येव बुद्धिस्तस्माज्जीवेनेत्यस्य जीवशरीरेणेत्यर्थ उपवर्णित इति वाच्यं, तर्हि सिंहेन भूत्वेति दृष्टान्तोपन्यासोऽयुक्तएव । किंच यदि जीव ईश्वरस्य शरीरमेव न त्वीश्वरः, तर्हि अणुभिरपि जीवैर्ये ये भागा व्याप्तास्ते ते ईश्वरेण नैव व्याप्ता इति श्रुत्युक्ता सर्वव्याप्तिरीश्वरस्य नैव सिद्ध्येत् । अपिच जीवस्यान्तस्थित्या जीव ईश्वरस्य शरीरं यथा भवति, तथा ईश्वरस्यान्तस्थित्या जीवस्यापीश्वरश्शरीरं स्यादेव । नचेश्वरस्यान्तर्जीवो न तिष्ठतीति वाच्यं, 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित' इति श्रुत्या चेतनाचेतनयोर्बहिरपीश्वरो वर्तत एवेति । निरवयवाणुपरिमाणजीवस्यान्तरीश्वरस्यावस्थितिरपि न सम्भवति- निरवयवस्य वस्तुनो निरवकाशत्वात् । नच निरवयवं गगनं सावकाशमिति वाच्यं, गगनस्य सादित्वेन सावयवत्वात् । नच निरवयवमपि व्याप्तुमस्तीश्वरस्य शक्तिरिति वाच्यं, दृष्टविपरीतशक्तिकल्पनायोगात् । लोके व्याप्तस्य सर्वस्य सावयवत्वदर्शनात् । नच 'यस्यात्मा शरीर'मिति जीवस्येश्वरशरीरत्वं श्रुत्युक्तमिति तत्र नातिशङ्कनीयमिति वाच्यं, 'अन्धो मणिमविन्दत्' इतिवच्छ्रौतस्याप्यसम्भावितार्थस्य स्वीकारायोगात् । श्रुतिगतात्मशब्दस्य च बुद्धिपरत्वात्पाठान्तरे 'य आत्मनि तिष्ठ'न्निति पर्याये 'यो विज्ञाने तिष्ठन्नि'त्येव दर्शनात् । यद्यात्मविज्ञानशब्दयोर्जीव इत्येवार्थ इत्याग्रहस्तर्हि स जीवः साभासाहङ्कारः प्रमातैवेति तदन्तःकूटस्थात्मावस्थितिस्सम्भवत्येव । अन्तःकरणावच्छिन्नचैतन्ये शुद्धचैतन्यस्य साभासान्तःकरणे बिम्बचैतन्यस्य च स्थितियोगादिति । **एतेन** जीवस्येवेश्वरस्याप्यन्तश्चैतन्यमस्त्येव मायावच्छिन्नचैतन्ये शुद्धचैतन्यस्य स्थितत्वादिति कृत्वा जीववदीश्वरोपि चैतन्यभूतब्रह्मव्याप्त एवेति—**स्थितम्** ।

**यदि तु**- यदेव ब्रह्मचैतन्यं तदेव मायावच्छिन्नं सदीश्वरो भवतीति ब्रह्मैवेश्वरो नतु ब्रह्मव्याप्त **इत्युच्यते, तर्हि तथैव**—यदेव ब्रह्मचैतन्यं तदेवान्तःकरणावच्छिन्नं सज्जीवो भवतीति ब्रह्मैव जीव इति नतु ब्रह्मव्याप्त इति वक्तव्यम् । तस्मात् यदीश्वरो ब्रह्मशरीरं तर्हि जीवोपि ब्रह्मशरीरमेव । यदि त्वीश्वरो ब्रह्म तर्हि जीवोपि ब्रह्मैव । यदित्वीश्वरे ब्रह्मबुद्ध्या ब्रह्मशरीरं जीवमीश्वरशरीरमिति वदामीति वदसि, तर्हि जीवे ब्रह्मबुद्ध्या ब्रह्मशरीरमीश्वरं जीवशरीरमित्यहमपि वदामि- कल्पनायामविशेषात् । नच 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठ'तीति गीतावचनाज्जीवानामन्तरीश्वर एव तिष्ठतीति वाच्यं, तत्र भूतशब्दस्य कार्यकरणसङ्घातपरत्वादीश्वरस्य च जीवरूपेण तदन्तस्थितिरुक्तेति । प्रत्यगात्मा हि सर्व-

भूतान्तरः । नच प्रत्यगात्मनो भूतभ्रामणं न सम्भवतीति वाच्यं, अयस्कान्तलोहन्यायेनाविकृतस्यापि प्रत्यगात्मनस्तत्सम्भवात् । मायया हि सर्वं सम्भवति । नच परमात्मन एव मायास्ति नतु प्रत्यगात्मन इति वाच्यं, प्रत्यगात्मन एव परमात्मत्वात् । परमात्मा हि बुद्धावुपलभ्यमानः प्रत्यगात्मेत्युच्यते । तस्माज्जीव ईश्वर एव न त्वीश्वरशरिरं, परमात्मन एव बुद्धौ प्रविष्टत्वेन जीवत्वस्य जातत्वात् । नच प्रवेशात्प्रागेव बुद्धौ स्थितस्य परमात्मनः कः पुनः प्रवेश इति वाच्यं, प्रतिबिम्बरूपेण पुनः प्रवेश इति, यद्वा अवच्छिन्नत्वरूपेणेति, अथवा- परमात्मनो बुद्धितादात्म्याध्यास एव बुद्धौ प्रवेश इति । नच परमात्मनः कथमध्यास इति वाच्यं, पृच्छ! मायां- इति । तस्माज्जीवस्य यन्निष्कृष्टं स्वरूपं सच्चिदानन्दलक्षणं तदेव ब्रह्म, तदेव चेश्वर इति कृत्वा जीवस्याभ्यन्तर ईश्वर इति क्वचिदुच्यतां नाम, न तावता जीव ईश्वरशरीरमिति भ्रमितव्यं, किंतु जीव ईश्वर एवेति ज्ञातव्यं, तत्त्वमसीति श्रुतिप्रामाण्यादिति **संक्षेपः** ।

**यदुक्तं** शरीरवाचिशब्दस्य शरीरिपर्यन्तत्वं मुख्यतयोपपन्नमिति **तदयुक्तम्**—अहं मनुष्य इति प्रत्ययस्य भ्रान्तिप्रयुक्तत्वेन शरीरवाचिमनुष्यादिशब्दानां शरीरिपर्यन्तत्वं न मुख्यमिति । किंच शरीरवाचिनश्शब्दाश्शरीरकायदेहाङ्गादयो देह एव रूढा नतु देहिनीति, न शरीरिपर्यन्तत्वं तेषाम् । अपिच मनुष्यत्वसिंहत्वपशुत्वादिजात्याश्रयतया मनुष्यसिंहपश्वादयश्शब्दाश्शरीरवाचिनो भवन्तु नाम, कथं पुनर्जीवशब्दश्शरीरवाची भवेत्- जीवो हि शरीरधारी नतु शरिरं- मनुष्यत्वादिजात्यनाश्रयत्वात् । नच जीवत्वजात्याश्रयत्वाज्जीवश्शरीरमिति वाच्यं, जीवत्वस्याजातित्वात् । अन्यथा ईश्वरत्वस्यापि जातित्वादीश्वरशब्दोपि शरीरवाच्येव भवेत् । जातिर्हि जायमानस्य धर्मः न त्वजस्य- अजस्य जातिरिति हि विप्रतिषिद्धम् । नचाचेतनत्वमिव चेतनत्वमपि जातिरेवेति वाच्यं, तथा सति चेतनत्वजातिमानीश्वरोपि शरीरमेव भवेत् । नचेश्वरश्चेतनो न भवत्यचेतनोपि न भवति, किं तूभयविलक्षण इति वाच्यं, 'चेतनश्चेतनाना'मिति श्रुतेः । विलक्षणत्वेपि चेतनत्वाचेतनत्वयोरिव तद्विलक्षणत्वस्यापि जातिरूपत्वं दुर्वारमेव भवेत् । तस्मादीश्वरशब्द इव जीवशब्दोपि न शरीरवाचीति । **यदुक्तम्**—'स आत्मा तत्त्वमसी'त्यनेन कृत्स्नस्य जगतस्स आत्मा एवंभूतब्रह्मात्मकस्त्वमसीत्युच्यत **इति**, **तत्तु** स्वाभिप्रायेण विरुद्धं, तथाहि- ईश्वरस्य जगदिव जीवोपि शरीरमिति कृत्वा जीवस्य ब्रह्मात्मकत्वं नाम ब्रह्मशरीरत्वमिति हि तवाभिप्रायः । स नोपपद्यते- त्वं तदसीति मुख्यसामानाधिकरण्ये श्रूयमाणे तद्भञ्जनायोगात् । त्वं तच्छरीरमसीति, त्वं तच्छरीरिकोसीति वा विपरीतार्थवर्णनस्यायुक्तत्वात् । स आत्मेत्यत्रात्मशब्दस्य स्वरूपवाचित्वेन शरीरवाचित्वायोगात् । घटस्य मृदात्मेत्युक्तौ किं घटश्शरीरं मृद इत्यर्थ आयाति? किंतु घटस्य मृत्स्वरूपमेवेत्यर्थ आयाति । नचाहमर्थस्यात्मनश्शरीरित्वादात्मशब्दश्शरीरिवाचीति वाच्यं, तथासत्यात्मशब्दोहमर्थजीववाच्येव नतु शरीरिवाचीति । नच जीवश्शरीर्येवेति वाच्यं, भवतु वा न शरीरित्वधर्मपुरस्कारेण जीवे आत्मशब्दः प्रयुज्यते, किंतु स्वत्वादेव । आत्मा हि स्वं- अनात्मनस्स्वान्यत्वात् । मन्मते तु जीवजगतोस्स्वरूपं ब्रह्मैवेति कृत्वा स्वरूपस्य स्वशब्दार्थत्वेनात्मत्वाज्जग-

ज्जीवयोरात्मा ब्रह्मैवेति जीवस्य ब्रह्मात्मकत्वमुपपद्यते ब्रह्मस्वरूपत्वलक्षणम् । एवं च तत्त्वंपदयोर्मुख्य-सामानाधिकरण्यमपि सम्भवति- त्वं ब्रह्मासीति । सम्भवति च मुख्ये अमुख्याश्रयणस्यान्याय्यत्वं लोक-शास्त्रसिद्धम् । तस्मात्त्वदुक्तार्थस्त्वदभिप्रायेणानुपपन्नोपि मदभिप्रायेणोपपन्न **एवेत्यलम्** ।

**यदुक्तं सुदर्शनेन**—जगच्छरीरकत्वमित्यनेन वस्त्वपरिच्छेदसिद्धिः- सर्वगतत्वमित्यनेन देशापरिच्छेदसिद्धिरिति, **तद्भ्रान्तप्रलपितमेव**—जगच्छरीरकत्वस्यैव सर्वगतत्वरूपत्वात् । सर्वस्मिन् जगति व्याप्य वर्तमानत्वं हि जगच्छरीरकत्वं सर्वगतत्वं च । किंच यस्य जगच्छरीरमेव, न तु स्वरूपं स स्वशरीरेण तेन परिच्छिन्नः कथं न स्यात्, शरीरिणो जीवस्य हि शरीरेणास्ति परिच्छेदः, किंच परमात्मनो जगच्छरीरमेव नतु परमात्मा जगदित्यत्र वदन् सुदर्शनएव-- श्रुतिषु तदात्मानं स्वयमकुरुतेति- नतु व्यवर्ततेति- परिणामादिति सूत्रात् नतु विवर्तादिति— 'कटकमकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम् । सुरपशुमनुजादिकल्पनाभिर्हरिरखिलाभि-रुदीर्यते तथैक' इति विष्णुपुराणाच्च ब्रह्मपरिणाम एव जगदिति वादो निरवद्य इति कथं पूर्वमुदा-जहारेति न वयं विद्मः- नहि कनकस्य कनकमकुटादयश्शरीरं, नापि शरीरिणश्शरीराकारपरिणामः, नहि जीवस्य मनुष्यादिदेहाकारपरिणामः, तस्माज्जगच्छरीरकस्य परमात्मन. परिणामो जगदिति वाक्यं मनुष्यशरीरकस्य जीवस्य परिणामो मनुष्यशरीरमितिवदपहासास्पदमेव । श्रुतिसूत्रादयस्तु कूटस्थं ब्रह्मैक-मेव मायया जगद्रूपेण परिणतमिव भवतीत्यभिप्रायवन्तः । प्रपञ्चितश्चायमर्थः प्रागेवेतीहोपरम्यते ।

**यच्चोक्तं** जीवगतहेयगुणा ब्रह्मणो न सन्तीत्येवपरं निर्गुणवाक्यमिति **तदप्ययुक्तम्**—हेया उपादेया वा गुणाः प्रकृतिगता एव, नतु जीवगता नापीश्वरगता इति । नच प्रकृतिगता एव गुणाः प्रकृतिसंसर्गाज्जीवगता भवन्तीति वाच्यं, तथासतीश्वरस्यापि प्रकृतिसंसर्गोस्त्येवेति जीववदीश्वरस्यापि प्राकृतगुणयोगोऽवर्जनीय एव । नच जीवस्य प्रकृतिसंसर्गादागता गुणा हेयास्तत्प्रकृतेरशुद्धत्वात् । ईश्वरस्य तु प्रकृतिसंसर्गादागता गुणा उपादेयास्तत्प्रकृतेश्शुद्धत्वादिति वाच्यं, किं प्रकृतिसंसर्गान्निर्गुणस्य गुणा आगताः ? यद्वा सगुणस्य ? आद्ये- जितोसि त्वम् । द्वितीये- जीव ईश्वरश्च प्रकृतिसंसर्गा-त्प्रागेव सगुण इति कृत्वा कथं जैवा गुणाः प्राकृता इति, ऐश्वरा गुणा अप्राकृता इति चोच्यते । किंच केते अप्राकृता ऐश्वरा गुणाः । नच सर्वज्ञत्वसर्वकर्तृत्वसर्वोपादानत्वसर्वाधारत्वसर्वान्तरात्मत्व-सर्वनियन्तृत्वादय उक्ता एवेति वाच्यं, ते सर्वेपि प्राकृता एवेति । प्रकृत्यभावे सर्वस्याप्यभावात्कथं सर्वज्ञत्वादिगुणा ईश्वरे प्रकृतिसंसर्गात्प्राग्भवेयुः । नच नित्यत्वशुद्धत्वादयो प्राकृता इति वाच्यं, नित्यत्वं कालत्रयाबाध्यत्वं, तच्च कालत्रयस्य प्राकृतत्वेन प्राकृतमेव । शुद्धत्वं मलास्पर्शित्वं, सच्च मलः प्राकृत एव । ज्ञानत्वं च प्रकाशकत्वं, तच्च प्रकाश्याभावेन भवत्येवेति प्राकृतमेव । आनन्दत्वमानन्दयितृत्वं तच्चानन्दयितव्याभावेन न भवत्येवेति प्राकृतमेव । यद्यानन्दस्वरूपत्वादानन्दं ब्रह्मेत्युच्यते तर्हि आनन्दो गुणो न भवत्येव । किं बहुना यं यं गुणं कल्याणमकल्याणं वा त्वं ब्रह्मणि सम्भावयसि, स सर्वोपि प्राकृत एवेति ब्रह्म निर्गुणमेव ।

## सत्यं ज्ञानमित्यादिश्रुतेः निर्विशेषब्रह्मपरत्वोपपत्तिः ।

अथ सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्यं विमृश्यते—**अत्राह रामानुजः**—सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या नात्रापि निर्विशेषवस्तुसिद्धिरिति, **तदसत्**—अतएव सत्यमिति वाक्यं लक्षणया ब्रह्म प्रतिपादयतीत्युक्तमिति । नच मुख्यार्थबाधरूपलक्षणाबीजाभावान्नात्र लक्षणोदय इति वाच्यं, बीजस्य सत्त्वात्- तथाहि लोके ज्ञानस्य जन्मनाशप्रसिद्धेर्ज्ञातृज्ञेयाभ्यां परिच्छिन्नत्वप्रसिद्धेस्सत्यमनन्तं च ज्ञानं नास्ति । यद्यपि परमते सत्यमनन्तं च वस्तु गगनमस्ति, तथापि तस्य ज्ञानत्वं नास्तीति- ज्ञानमनन्तं च सत्यं वस्तु नास्ति- अर्थक्रियाकारित्वेन सत्यं ज्ञानं यद्यप्यस्ति तथापि तदनन्तं न भवति अन्तवत्त्वदर्शनात्तस्येति सत्यज्ञानसम्भवेपि सत्यानन्तज्ञानासम्भवः । एवं सत्यत्वज्ञानत्वानन्दत्वानां सामानाधिकरण्यासम्भव एव लक्षणाबीजमिति । नीलं महत्सुगन्ध्युत्पलमिति स्थले तु नीलत्वमहत्त्वसुन्धित्वानां सामानाधिकरण्यसम्भवात्तत्राभिधाया एव प्रवृत्तिर्न तु लक्षणाया इति तद्वाक्यं विशेषणविशिष्टवस्तुपरत्वेन सविशेषविषयमेव । प्रकृतवाक्यं तु विशेषणविशिष्टवस्तुपरं न भवतीति निर्विशेषविषयमेवेति प्रकृतवाक्याल्लक्षणया निर्विशेषब्रह्मसिद्धिरिति । **ननु** सत्यत्वानन्तत्वविशेषितज्ञानस्य, ज्ञानत्वविशेषितसत्यानन्तस्य वा वस्तुनो लौकिकस्याभावादेव सत्यं ज्ञानमनन्तमिति ब्रह्मलक्षणवाक्यस्य क्वापि नातिव्याप्तिः । तथाच सत्यत्वज्ञानत्वानन्तत्वविशेषणविशिष्टं ब्रह्मैव प्रकृतवाक्यात्सिद्धं न निर्विशेषमिति, **मैवम्**— किमत्र वाक्ये सत्यादिपदत्रयं विशेषणभूतं ? यद्वा तत्रान्यतमं विशेष्यभूतम् ? आद्ये ब्रह्मणो विशेष्यस्य स्वरूपं प्रकृतवाक्येन नैवोक्तं भवेत् । नचेष्टापत्तिः- प्रकृतवाक्यस्य ब्रह्मस्वरूपलक्षणत्वाद्यतो वेत्यादि वाक्यं हि तटस्थलक्षणम् । द्वितीये- कतमं पदं तत्र विशेष्यम् ? न तावत्सत्यमितिपदं- ज्ञानत्वानन्तत्वविशेषितसत्यपदार्थाभावात् । नापि ज्ञानं सत्यत्वादिविशेषितज्ञानपदार्थाभावात्-- नाप्यनन्तमितिपदं, सत्यत्वादिविशेषितानन्तपदार्थभवात् ? एतादृशानुपपत्तिवशादेवेदं वाक्यं लक्षणया ब्रह्मस्वरूपपरमिति । नच ब्रह्मणस्स्वरूपं ज्ञानमेवेति ज्ञानपदमत्र विशेष्यमिति वाच्यं, लोके सत्यत्वानन्तत्वविशेषितज्ञानपदार्थाभावेन सत्यमनन्तं च ज्ञानं ब्रह्मेति श्रुत्वा कोपि ब्रह्मास्तीति न प्रतीयात् । किंतु वन्ध्यापुत्रोतिसुन्दर इति वाक्यं श्रुत्वा वन्ध्यापुत्राभावमिव प्रकृतवाक्यं श्रुत्वापि ब्रह्माभावमेव प्रतीयादिति । नचैवं ज्ञानपदस्यैव लक्षणास्तु कुतः पुनरसत्यानन्तयोरिति वाच्यं, सत्यानन्तपदसम्बन्धादेव ज्ञानपदस्य लक्षकत्वं नतु स्वत इति । ननु सत्यानन्तत्वाभ्यां विशेषितमिदं ज्ञानपदं यदि लक्षणया ब्रह्म बोधयति, तर्हि ब्रह्मणः स्वरूपं ज्ञानं नैव भवेदिति चेत्तदिष्टमेव । नहि वयं घटज्ञानवत्सत्यानन्तं, किंचिद्ज्ञानमस्ति तद्ब्रह्मेति ब्रूमः । नच तर्हि ब्रह्मणः स्वरूपं किमित्युच्यते त्वयेति वाच्यं, अवाङ्मनसगम्यं निर्विशेषं ब्रह्मस्वरूपं कथमहमिदमिति प्रतिपादयेयम् । नच ज्ञानं ब्रह्मस्वरूपमिति बहुश उद्घोषितं त्वयेति वाच्यं, ब्रह्म सर्वावभासकमिति कृत्वा भासकत्वधर्मपुरस्कारेण ब्रह्म ज्ञानस्वरूपमित्युक्तं, ज्ञानं हि लौकिकं भासकं, नचैवं भासकत्वधर्मेण सविशेषं ब्रह्मेति वाच्यं, परमार्थतो भास्याभावेन ब्रह्मणो भासकत्वाभावादिति ।

## विज्ञानमानन्दमिति श्रुतेर्निर्विशेषब्रह्मपरत्वोपपत्तिः ।

**ननु** विज्ञानमानन्दं ब्रह्मेत्येतद्ब्रह्मस्वरूपलक्षणमिति कृत्वा ज्ञानत्वानन्दत्वविशिष्टमेव ब्रह्म नतु निर्विशेषमिति **चेन्मैवम्**—तत्रापि ज्ञानत्वविशेषितानन्दस्य आनन्दत्वविशेषितज्ञानस्य चाभावेन मुख्यार्थानुपपत्त्या लक्षणयैव निर्विशेषब्रह्मसिद्धिरिति । नच ब्रह्मण आनन्दः स्वरूपमिति वाच्यं, स्रगादिविषयभोगजन्यस्य लौकिकस्यानन्दस्यानित्यस्य ब्रह्मस्वरूपत्वायोगात् । नच नित्य एवानन्दो ब्रह्म भवेदिति वाच्यं, लोके नित्यस्यानन्दस्यैवाभावात् । नहि ज्ञानं नित्यमिति आनन्दं नित्यमिति च कोपि प्रत्येति । नच त्वयैव ब्रह्मण आनन्दः स्वरूपमेव नतु गुण इत्युक्तमिति वाच्यं, ब्रह्मणो यद्यानन्दः स्वरूपं तर्हि तस्य किमित्यवाङ्मनसगम्यत्वं भवेत् । नच कथं स्वोक्तिव्याघातपरिहार इति वाच्यं, यथा सर्वावभासकत्वाद्ब्रह्म ज्ञानस्वरूपमित्युक्तं तथैव सर्वानन्दयितृत्वादानन्दस्वरूपमित्यप्युक्तमिति । तर्हि ब्रह्म किं सर्वं नानन्दयति-- आनन्दयत्येव परन्तु सर्वमेव न भवति वस्तुत इति कथं सर्वानन्दयितृत्वम् ।

**ननु** यदि ब्रह्म सर्वं व्यवहारदशायामानन्दयति तर्हि स्रगादिवद्ब्रह्म न भवेदानन्दः, अपितु जड एव भवेत् । नचेष्टापत्तिः- 'आनन्दो ब्रह्मेति व्यजाना'दित्यादिश्रुतिविरोधादिति, **मैवम्**—स्रगादयो नानन्दयितारः, किंतु स्रगादिविषयभोगेन स्रगादिविषयेच्छाया निवृत्तौ मनस्यन्तस्सुखे सति ब्रह्मानन्दस्तत्र प्रतिबिम्बतीति ब्रह्मैवानन्दयितृ । किंच वैषयिकमानन्दमनुभवतो जीवस्य तत्क्षणे यादृशी स्थितिस्तादृश्येव ब्रह्मानुभवसमयेपि ब्रह्मविद इति कृत्वा ब्रह्मानन्द इति व्यपदिश्यते । वस्तुतस्तु न ज्ञानमानन्दो वा ब्रह्म तयोरनित्यत्वाद्ब्रह्मणश्च नित्यत्वादिति । यदि तु लौकिकौ क्षणिकौ ज्ञानानन्दौ ज्ञानानन्दौ नैव भवतः-- अलौकिकं नित्यं ब्रह्मैव ज्ञानमानन्दं चेति मतं तर्हि लौकिकज्ञानानन्दवाचिनोर्ज्ञानानन्दशब्दयोः कथमलौकिके ब्रह्मणि लक्षणां विना प्रवृत्तिस्स्यात् । नच लौकिकज्ञानानन्दशब्दयोर्ब्रह्मण्यप्रवृत्तावपि वैदिकयोस्तयोस्तत्र प्रवृत्तिर्भवेदिति वाच्यं, वेदस्यापि लौकिकत्वात् । लोके हि भवति वेदः । तस्माद्ज्ञानानन्दयोर्ब्रह्मस्वरूपलक्षकत्वादेव ब्रह्मस्वरूपत्वव्यवहार इति निर्विशेषब्रह्मसिद्धिः ।

**ननु** भास्याभावादानन्दयितव्याभावाच्च ब्रह्मणो ज्ञानत्वमानन्दं वा वस्तुतो मास्तुनाम- किं ब्रह्म वस्तुतस्सत्यमुतासत्यम् ? आद्ये- सत्यत्वरूपविशेषवत्त्वान्न निर्विशेषब्रह्मसिद्धिः । द्वितीये- असत्यमेव ब्रह्म भवेदिति कथं पारमार्थिकसत्यत्वं ब्रह्मणस्त्वयोच्यत- इति, **मैवम्**—लोके यद्वस्तु सद्बुद्धिविषयस्तत्सत्यमिति दृष्टम् । सद्बुद्धिविषयत्वं च घटादेर्भ्रान्तिप्रयुक्तमिति कृत्वा ब्रह्मैव सद्बुद्धिविषय इति स्थापितम् । एवं वस्तुतस्सद्बुद्धिविषयत्वाद्ब्रह्म पारमार्थिकसत्यमित्युक्तम् । ततश्च सत्यशब्दोपि ब्रह्मणि लक्षणयैव प्रवर्तते न त्वभिधया । वस्तुतस्सद्बुद्धेरेवाभावेन कथं पुनस्तद्विषयत्वं ब्रह्मणो वस्तुतो भवेत् । तस्माद्वस्तुतस्सत्यत्वरूपविशेषाभावान्निर्विशेषब्रह्मसिद्धिरिति । व्यवहारदशायामेव ब्रह्म सत्यमिति ज्ञानमिति आनन्दमिति अनन्तमिति नित्यमिति शुद्धमिति चोच्यते- नतु परमार्थदशायामिति कृत्वा परमार्थतो ब्रह्म निर्विशेषमेव व्यवहारतस्तु सविशेषमेवेति पूर्वमेवोक्तो मयायं विवेक---**इत्यलम्** । **यदुक्तम्**—सर्वविशेषनिषेधे स्वाभ्युपगतास्सिसाधयिषिता नित्यत्वादयश्च निषिद्धास्स्युरिति **रामानुजेन, तत्परास्तम्** । व्यवहारदशायां विशेषसाधनं परमार्थदशायां तन्निषेध इति ।

**ननु** ज्ञानानन्दादिकल्याणगुणविशिष्टत्वान्न निर्गुणं ब्रह्मेति न निर्विशेषब्रह्मसिद्धिः । नच 'यतो वाचो निवर्तन्त' इति श्रुत्या ब्रह्म निर्गुणमिति वाच्यं, तच्छ्रुतेः गुणानन्त्यपरत्वात् । तथाचोक्तम्— 'सङ्ख्यातुं नैव शक्यन्ते गुणा दोषाश्च शार्ङ्गिणः । आनन्त्यात्प्रथमो राशिरभावादेव पश्चिमः ॥ यथेषवो निवर्तन्ते नान्तरिक्षक्षितिक्षयात् । तथा वाचो निवर्तन्ते नाच्युतस्य गुणक्षया'दिति च । अत एव 'आनन्दं ब्रह्मणो विद्वा'निति, स एको ब्रह्मण आनन्द' इति च- ब्रह्मण आनन्दगुणश्श्रूयत इति, **नैतत्सारं**- व्यवहारदशायां मायाविशिष्टस्य विष्ण्वाख्यस्य परस्य ब्रह्मण ईश्वरस्य सर्वज्ञत्वादयो गुणा असङ्ख्येया एवेत्यस्माभिरप्युक्तमेव । परमार्थतस्तु निर्गुणं ब्रह्म निर्मायत्वादित्युच्यते । एवं च निर्गुणसगुणश्रुत्योर्विरोध एव नास्ति, विभिन्नदशाविषयत्वादिति कृत्वा नात्रापच्छेदादिन्यायावतारः । सर्वास्वपि शाखास्वेवमेवेति सर्वशाखाप्रत्ययन्यायोऽस्मदनुकूल एव । 'आनन्दं ब्रह्मण' इत्यत्र तु ब्रह्मणस्स्वरूपभूतमानन्दमित्यर्थः । राहोश्शिर इति वदिति न ब्रह्मगुणत्वमानन्दस्य- यतो वाच इति श्रुतौ यच्छब्दो ब्रह्मपर एव, न ब्रह्मणः कल्याणगुणपर इति न त्वदुक्तार्थसिद्धिः । वाचश्च मनसा सह कल्याणगुणान्प्राप्त एवेति नाप्राप्येत्येतत्त्वन्मते सङ्गच्छते । नच यत इत्यस्य यदीयकल्याणगुणादित्यर्थमुपवर्ण्य अप्राप्येत्यस्य यदीयकल्याणगुणगणास्तमप्राप्येत्यर्थ उपवर्ण्यत इति वाच्यं, तस्यार्थस्यायथाश्रुतार्थत्वेनाग्राह्यत्वात् । 'स एको ब्रह्मण आनन्द' इत्यत्र ब्रह्मशब्दः प्रजापतीनां पितास्ति यो हिरण्यगर्भस्तत्पर एव तदानन्दस्यैव परिच्छिन्नत्वेन एकत्वसङ्ख्यायोगित्वात्- अपरिच्छिन्नानन्दश्च ब्रह्मस्वरूपभूत एवेति ब्रह्मैव । नच परस्य ब्रह्मणो गुणभूतो प्यानन्दोऽपरिच्छिन्नोस्तु, इति वाच्यं, यस्यानन्दो गुण इत्युच्यते तेन स परिच्छिन्न एवेति गुणाद्गुणी हि भिन्नः शुक्लाद्घट इव, यो यस्माद्भिन्नस्स तेन परिच्छिन्न एव- यथा घटाद्भिन्नः पटो घटेन परिच्छिन्नस्तद्वत् । एवं च यदि ब्रह्मण आन्दो गुणस्स्यात्तर्हि आनन्दो परिच्छिन्नो मास्तुनाम- ब्रह्माप्यपरिच्छिन्नं नैव सिद्ध्यति । नच परिच्छिन्नमेव ब्रह्मापि भवत्विति वाच्यं, अनन्तमिति पूर्ण इति च श्रुतिविरोधात् । किंच त्वदभिप्रेता ब्रह्मगुणा ज्ञानानन्दादयः किं ब्रह्मभिन्नाः ? उताभिन्नाः ? आद्ये- ब्रह्मभिन्नास्ते किं ब्रह्मणा व्याप्ता उताव्याप्ताः ? आद्ये- गुणव्यापि ब्रह्म निर्गुणमेव- यथा घटस्यापि गगनं निर्घटं- यथा वा शरीरव्यापि ब्रह्म अशरीरम् । द्वितीये- ब्रह्मणस्सर्वव्याप्तिभङ्गप्रसङ्गः । यदि ते ब्रह्माभिन्नास्तर्हि गुणस्य निर्गुणत्वाद्गुणाभिन्नं ब्रह्मापि निर्गुणमेवेति । अपिच यदि गन्धवतीव पृथिवी गुणवद्ब्रह्म तर्हि गन्धः पृथिवीमिव गुणो ब्रह्म सर्वात्मना व्याप्यावतिष्ठेतेति- ब्रह्म व्याप्तमेव भवेत् । नचेष्टापत्तिः- सर्वान्तरत्वं सर्वव्यापित्वं च ब्रह्मणः प्रतिपादयन्ती श्रुतिर्बाधिता भवेत् । किंच ये ज्ञानादयो गुणास्तेषां किं ब्रह्मस्वरूपमुतान्यत् ? आद्ये- निर्गुणमेव ब्रह्म द्वितीये ब्रह्मणस्सर्वात्मत्वप्रतिपादकश्रुतिव्याकोपः । सर्वस्यात्मा ब्रह्मेति श्रुत्योद्घुष्यते- 'स आत्मेति, ऐतदात्म्यमिदं सर्वमिति च ।

**किंच** यदि ब्रह्मानन्दवदेव नत्वानन्दः तर्हि ब्रह्मप्राप्त्या जीवस्यानन्दावाप्तिर्न स्यात् । नचेष्टापत्तिः- 'रसो वै सः रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवतीति श्रुतेः, विद्वदनुभवस्य सुप्तसर्वजनानुभवस्य च भङ्गप्रसङ्गात् । नच अनन्दिब्रह्मप्राप्त्या जीवस्याप्यानन्दित्वमिति वाच्यं, आनन्दिचैत्रप्राप्त्या मैत्रस्या-

प्यानन्दित्वप्रसङ्गात् । नचेष्टापत्तिः, आनन्दिचैत्रप्राप्त्यैव मैत्रस्यानन्दित्वे आनन्दार्थं मैत्रस्य पुनः प्रयतनायोगात्-- ब्रह्मचारिणोपि गृहमेधिप्राप्त्यैव सुखितत्वेन सुखार्थमुद्वाहविषयेच्छाऽयोगाच्च । प्रत्युत सुखिनं गृहमेधिनं प्राप्य ब्रह्मचारी खिद्यत एव मम भार्या नासीदिति । नच ब्रह्म आनन्दि आनन्दं च भवति- यथा ज्ञानि ज्ञानं च तद्वदिति वाच्यं, दृष्टान्तासम्प्रतिपत्तेः । ब्रह्मज्ञानमित्येव खलु सम्प्रतिपन्नोंशः । किंच यदि ब्रह्मणो ज्ञानमानन्दश्चेत्युभयं स्वरूपं, तर्हि ज्ञानस्वरूपं ब्रह्मैकं, आनन्दस्वरूपं ब्रह्मान्यदिति ब्रह्मद्वयं स्यात्- एकस्यैव ज्ञानस्वरूपस्य ब्रह्मण आनन्दस्वरूपत्वायोगात् । ज्ञानमानन्दं च भिन्ने हि । भिन्नयोः स्वरूपयोरेकत्वमयुक्तम् । नच तव मतेप्यस्त्ययं दोष इति वाच्यं, मन्मते ज्ञानाभिन्नमेवानन्दमित्यदोषात् । नच कथं ज्ञानस्यानन्दाभिन्नत्वमिति वाच्यं, जन्यज्ञानस्य जन्यानन्दाभिन्नत्वानुपपत्तावपि नित्यज्ञानं नित्यानन्दादभिन्नमेवेति । नित्यज्ञानं हि ब्रह्म तदेव नित्यानन्दं चेति । एकमेव ब्रह्म प्रकाशकत्वाद्ज्ञानमिति, आनन्दयितृत्वादानन्दमिति च व्यपदिश्यत इत्युक्तं हि प्रागेव । तस्माद्ब्रह्मानन्दमेव नत्वानन्दगुणकमिति निर्विशेषमेव ब्रह्म वस्तुत इति ॥

**ब्रह्मविदाप्नोति, सोऽश्नुते सर्वान् कामान्, ब्रह्मणा विपश्चितेति श्रुतेर्निर्विशेषब्रह्मपरत्वोपपत्तिः ।**

**ननु** 'ब्रह्मविदाप्नोतिपर'मिति ब्रह्म तद्वेदनं तत्प्राप्तिः प्राप्यं चेति, चतुष्टयमुक्तं श्रुत्या—तत्र 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति ब्रह्मवेदनफलं दर्शितम् । काम्यन्त इति कामाः कल्याणगुणाः ब्रह्मणा सह तद्गुणान् सर्वान्प्राप्नोतीति श्रुत्यर्थात्सकलकल्याणगुणपरिपूर्णं ब्रह्मेति न निर्गुणब्रह्मसिद्धिरिति, **मैवम्**—ब्रह्मविदाप्नोतिपरमित्यत्र प्राप्यतया निर्दिष्टं वस्तु परं ब्रह्मैव न त्वन्यत्, परमित्युक्तत्वात् । परं हि सर्वापेक्षया ब्रह्म, ब्रह्मापेक्षया सर्वस्यापरत्वात् । यद्यप्यपूर्वमनपरमिति श्रुत्या ब्रह्म न परं, नाप्यपरं, तथापि व्यवहारतस्तत्परमेव । वस्तुतस्तु न परं, नाप्यपरं—तदपेक्षयान्यस्य सत्त्वेहि तद्दृष्ट्या तत्परमपरं वा भवेत् । अतएव 'ब्रह्मविद्ब्रह्मैव भव'तीति श्रुत्यन्तरप्रसङ्गतिः । ब्रह्मप्राप्तिर्हि ब्रह्मभावः न त्वप्राप्तस्य ब्रह्मणः प्राप्तिः, परिपूर्णस्य ब्रह्मणो नित्याप्तत्वेन प्राप्तव्यत्वाभावात् । नित्याप्तमपि ब्रह्म ज्ञानादप्राप्तमिव भूत्वा तदपायात्प्राप्तमिव भवति । तस्माद्ब्रह्मज्ञानात्प्राप्यं ब्रह्मैव-- तदेवेह परमित्युक्तम् । अस्य च ब्रह्मविदः प्राप्तब्रह्मभावस्य स्वरूपभूतेन ब्रह्मचैतन्येन युगपदेव सर्वकामावाप्तिरिति सोऽश्नुत इति श्रुत्यर्थः । अयं च स्तुतिभूत एव । ब्रह्मभावं प्राप्तस्य निर्मायस्य मायामयकामप्राप्त्ययोगात् । 'यवागूं पिब शिखा ते वर्धिष्यत' इति वद्ब्रह्मप्राप्तस्य तव सर्वकामप्राप्तिर्भवेदिति वचनं प्ररोचनारूपमेव । यद्वा यावत्सर्वमुक्तिमुक्तस्य ईश्वरभावापत्तिरेवेति मते ब्रह्मविदीश्वरसायुज्यं प्राप्य स्वरूपभूतब्रह्मचैतन्येन युगपदेव सर्वान् कामान्प्राप्नोतीति श्रुत्यर्थः । अथवा ब्रह्मविद्ब्रह्मसायुज्यमेव प्राप्नोतीति मतेपि यावद्व्यवहारं पुरुषान्तरदृष्ट्या ब्रह्मभूतस्य ब्रह्मविन्मायाविशिष्ट ईश्वर एव । यथा ब्रह्मभूतोपीश्वरो भवतीश्वरः । तथा च तस्येश्वरस्य ब्रह्मविदः सर्वकामावाप्तिरुचितैवेति । सर्वथापि ब्रह्मवित्प्राप्यं परं ब्रह्मैवेति न ब्रह्मविदः कामप्राप्तिः कापि । ते च ब्रह्मवित्प्राप्यत्वेन तवाभिमताः कामा ऐश्वरा एव, न ब्राह्मा इति नानया श्रुत्या निर्गुणब्रह्मसिद्धिरिति ।

**ननु विविधं पश्यच्चित्त्वं विपश्चित्त्वं**, तद्धि सार्वज्ञ्यं, तद्गुणयुक्तेन ब्रह्मणा सह स सर्वान्कामानश्नुत इति श्रुत्यर्थात्कथं न निर्गुणब्रह्मासिद्धिरिति, **मैवम्**—पुत्रेण सहागतः पितेतिवत्सहयुक्तेऽप्रधान इति यद्यत्र सहशब्दयोगादप्रधाने तृतीया तर्हि सर्वकामावाप्तावीश्वरस्याप्राधान्यं, जीवस्यैव प्राधान्यं च भवेत्। नचेष्टापत्तिः, जीव एव सर्वान्कामानश्नुते, ईश्वरस्तु तान् प्राधान्येन नाश्नुत इति जीवापेक्षया ईश्वरस्य न्यूनतावगमात्। किंच ईश्वरेण समं जीवः कामानश्नुत इत्यस्य कोर्थः- ईश्वरेण सह स्थित्वा कामानश्नुत इति ? यत्र क्वापि स्थित्वा ईश्वरेण सहाश्नुत इति ? आद्ये ईश्वरवज्जीवस्यापि विभुत्वमागतं, तत्तवानिष्टम्। द्वितीये ईश्वरेण सह तिष्ठतः कथमीश्वरेण सहाशनं- नहि पुत्रेण सहातिष्ठन् पिता पुत्रेण सहाश्नाति- किंच अप्राप्तान् कल्याणगुणान्जीवः प्राप्नुयान्नाम। कथं पुनः प्राप्तानेव तानीश्वरः पुनः प्राप्नुयात्। नच कामाशनमित्यस्य कामप्राप्तिरिति नार्थः, किंतु कामभोग इत्यर्थः। तथाच ईश्वरः स्वीयानेवानन्दादीन् कल्याणगुणान्यथा भुंक्ते तद्वज्जीवोपीत्यर्थ इति वाच्यं, तथासत्यानन्दस्य भोग्यत्वेपि ज्ञानादीनामभोग्यत्वमेवेति कथं सर्वकामाशनस्य सर्वकामभोग इत्यर्थः। अपिच ईश्वरेण सहेत्यस्य ईश्वरवदित्यर्थोपि लाक्षणिकत्वादुपेक्ष्यः। भवतुनामैतद्वाक्यं विपश्चित्त्वादिगुणकब्रह्मपरं, तथापि नास्माकं क्षतिः- यावद्व्यवहारं सर्वज्ञत्वादिगुणकस्येश्वराख्यस्य ब्रह्मणोस्माभिरभ्युपेतत्वात्। नच ब्रह्मवित्प्राप्यं परं ब्रह्म सकाममीश्वराख्यमेवेति न मुक्तस्य निर्विशेषब्रह्मभावापत्तिरिति नास्ति निर्विशेषं ब्रह्मेति वाच्यं, यदि ब्रह्मविद् ईश्वरभावकामः तर्हि तेन कामेन स ईश्वरभावमेव प्राप्नोति, न ब्रह्मभावमिति- यथा ब्रह्मविदोपि ब्रह्मलोकप्राप्तिकामश्चेत्तेन कामेन ब्रह्मलोकस्य हिरण्यगर्भस्वामिकस्यैव प्राप्तिर्न तु परब्रह्मणः। निष्कामस्य तु ब्रह्मविदः परब्रह्मभावापत्तिः कामस्य ब्रह्मप्राप्तिप्रतिबन्धकत्वात्—इति। अथवा सोश्नुत इति श्रुतिगतब्रह्मशब्दो हिरण्यगर्भवाच्येव भवति—पुंलिङ्गब्रह्मशब्दस्य तत्र रूढत्वात्। तथा च ब्रह्मविदपि पुरुषः ब्रह्मलोककामी चेद्ब्रह्मलोकं प्राप्य तत्र हिरण्यगर्भेण सह सर्वान् कामानश्नुत इति श्रुत्यर्थः। तेच कामाः ब्रह्मलोकोपभोग्या विषयविशेषा इति बोध्यम्—इति।

**ननु** 'सोश्नुत इति' वाक्यं 'ब्रह्मविदाप्नोति पर'मिति श्रुतिगतपरशब्दविवरणपरम्। तथाच परशब्दवाच्यं ब्रह्मवित्प्राप्यं फलं ब्रह्मणा सह सर्वे कामा इत्येतत्। ब्रह्मणा सहितास्सर्वकामाः, फलभूता इत्यर्थः। सर्वकल्याणगुणविशिष्टं ब्रह्म फलमिति यावत्। गुणप्राधान्यं वक्तुं सहशब्द इति, **मैवम्**—यदि गुणविशिष्टं ब्रह्मैकं, निर्गुणं ब्रह्मान्यदिति ब्रह्मद्वयं स्यात्तर्हि गुणविशिष्टं ब्रह्म सोश्नुत इति वक्तुं युक्तं, नतु तदस्तीति व्यर्थमेवेदं वचनं, गुणविशिष्टं ब्रह्म प्राप्नोतीति- स ब्रह्माश्नुत इत्यनेनैव सगुणं ब्रह्म स प्राप्नोतीति सिद्धत्वात्। नच निर्गुणं ब्रह्मेति शङ्काव्युदासायैवमुक्तमिति वाच्यं, एवमुक्तेपि निर्गुणं ब्रह्मेत्येव सिद्धत्वात्। तथाहि- यद्वस्तु गुणविशिष्टमित्युच्यते, तत्किं निर्गुणं ? यद्वा सगुणम् ? आद्ये- निर्गुणब्रह्मसिद्धिः। द्वितीये सगुणस्य कुतः पुनर्गुणविशिष्टत्वं—यैर्गुणैर्विशिष्टमिदं सगुणं वस्तु तेभ्यः पृथग्भूताः के ते गुणास्सगुणवस्तुगताः, तेच सगुणवस्तुगता गुणाः किं निर्गुणे स्थिताः ? उत

सगुणे ? आद्ये- व्याघातश्च । द्वितीयेऽनवस्था । **यदुक्तं** गुणप्राधान्यं वक्तुं सहशब्द इति **तद्प्ययुक्तम्**—ब्रह्मस्वरूपापेक्षया ब्रह्मगुणानां प्राधान्याभावात् । गुणाः खलु परतन्त्राः- परतन्त्रं चाप्रधानम् । एवमप्रधानत्वादेव गुणेषु गुणशब्दप्रयोगः । नच गुणानां स्थितौ पारतन्त्र्येपि भोग्यत्वे प्राधान्यमेवेति वाच्यं, आनन्दरूपत्वेन ब्रह्मण एव भोग्यत्वेपि प्राधान्यात् ।

## ब्रह्मण आनन्दरूपत्वोपपत्तिः ।

**तथाहि** स्रक्चन्दनवनितादयो लोके भोग्यत्वेन प्रसिद्धाः, ते किं सुखप्रदत्वेन भोग्या इत्युच्यन्ते? यद्वा स्वरूपत एव ? आद्ये- स्रगादिजन्यं सुखमेव भोग्यं, नतु स्रगादय इति कृत्वा प्रधानं भोग्यमानन्दमित्येव सिद्धम् । द्वितीये तु प्रतिकूला अपि वनितादयो भोग्या एव भवेयुः, तस्मादानन्दमेव प्रधानं भोग्यं तदर्थमेव सर्वविषयसम्पादनात्तदर्थमेव सुषुप्त्यनुधावनात्तदर्थमेव समाध्यनुष्ठानान्मोक्षकामनाच्च । अत एव- सुखमेकमेव पुरुषार्थः- पुरुषेण हि सुखं प्रार्थ्यते, धर्मादीनां चतुर्णां पुरुषार्थत्वव्यवहारश्च पुरुषार्थसुखहेतुत्वप्रयुक्तत्वादौपचारिक एव- यथा नेत्रानन्दहेतौ चन्द्रे नेत्रानन्दश्चन्द्र इति प्रयोगः तद्वत् । नच दुःखाभावोपि पुरुषार्थ एव- पुरुषेण तस्याप्यर्थ्यमानत्वादिति वाच्यं, अभावस्यावस्तुत्वेन पुरुषार्थत्वायोगात् । भावत्वे सति पुरुषेण अर्थ्यमानत्वं पुरुषार्थत्वमिति वा लक्षणात् । यद्वा यथा वनितादीन् भावपदार्थानानन्दार्थमेव पुरुषः कामयते तथा दुःखाभावमप्यानन्दार्थमेवेति कृत्वा दुःखाभावजन्यं सुखमेव पुरुषार्थः । अत एव सर्वो लोकः सुखं मे भूयादिति प्रार्थयते, नतु दुःखाभावो मे भूयादिति । प्रत्युत दुःखं मे माभूदिति दुःखस्य भावस्यैव निवृत्तिं कामयते नाभावस्योत्पत्तिं- अभावत्वादेवाभावस्योत्पत्त्ययोगात् । एवमनुकूलविषयभोगात्प्रतिकूलविषयभोगाभावाच्च, यत्सुखं भवति तदेव पुरुषार्थ इति स्थिते तादृशसुखस्वरूपस्य ब्रह्मणः कथं भोग्यत्वे अप्राधान्यम् । नच ब्रह्म न सुखमिति वाच्यं, तथा सति कथं वनितादिविषयान्हित्वा वनमाश्रित्य कायक्लेशं प्रसह्य दुर्लभमपीन्द्रियजयं सम्प्राप्य ब्रह्मचर्ये स्थित्वा मुनयो निर्विकल्पकसमाधिमभ्यसेयुः । कथंनाम प्राकृता अपि जनाः सर्वं धनधान्यगृहपशुपुत्रकलत्रादिकं विहाय सुषुप्तिं भजेयुः । नच ब्रह्मस्वरूपानन्दापेक्षया ब्रह्मगुणभूतानन्द उत्कृष्ट इति वाच्यं, तस्यैवासम्प्रतिपन्नत्वात् । तदभ्युपगमेपि ब्रह्मगुणभूतानन्दभोक्तृत्वं जीवस्य नैव सम्भवति- जीवब्रह्मणोर्भेदात्तव मते । नहि चैत्रेण भुज्यमानश्चैत्रगुणभूत आनन्दो मैत्रेण भुज्यते, एवं ब्रह्मगुणभूतं ज्ञानमपि जीवेन न भुज्यते, चैत्रज्ञानस्य मैत्रभोग्यत्वादर्शनात् । येतु पृथिव्यादिषु वर्तमाना गन्धादिगुणा इव ब्रह्मणि वर्तमाना जीवोपभोग्या गुणास्ते चानन्दजनकत्वादेव भोग्या नतु स्वत इति कृत्वा जीवभोग्यानां ब्रह्मगुणानां न ब्रह्मापेक्षया प्राधान्यं, नापि तादृशगुणास्सन्ति । तथासति ब्रह्मणो रूपादिगुणवत्त्वे अतीन्द्रियत्वं नैव भवेत् । नच ब्रह्म नातीन्द्रियमिति वाच्यं, अव्यक्तत्वात्- 'न संदृशे तिष्ठति रूपमस्ये'त्यादिश्रुतेश्च । **एतेन**—जगतो ब्रह्मपरिणामवादः—**परास्तः** । **यदि** कनकं कटकाद्यात्मनेव ब्रह्म जगद्रूपेण परिणतं तर्हि दृश्यमानं जगद्ब्रह्मैवेति कथं ब्रह्मणो रूपं चाक्षुषं न भवेत्- इति । नच ब्रह्मणो रूपादयस्सन्ति, ते तु मांसमयचक्षुराद्यगोचरा इति वाच्यं, 'अशब्दमस्पर्शमरूपमव्ययं

तथाऽरसं नित्यमगन्धवच्च यत्' इति श्रुतेः । नच प्राकृतशब्दादिगुणाभावेप्यप्राकृतशब्दादिगुणास्सन्ति ब्रह्मण इति वाच्यं, शब्दादिगुणानां प्राकृतत्वेनाप्राकृतत्वस्यैवासिद्धेः । प्रकृतिकार्याकाशादिपञ्चभूतगुणाः खलु शब्दादयः । नच तेजोमयं ब्रह्मेति वाच्यं, ज्ञानस्वरूप इति तदर्थात् । वायुकार्यतेजोभूतमयत्वा-योगाच्चाकार्यस्य सर्वकारणस्य ब्रह्मणः । किं बहुना जीवस्यैव शब्दादिगुणाभावे कथं ब्रह्मणः परस्य तत्सत्त्वशङ्का । तस्माज्जीवोपभोग्या गुणा ब्रह्मणि न सन्त्येव । ब्रह्मस्वरूपानन्दमेव मुक्तजीवोपभोग्यं, तदेव परशब्दप्रतिपाद्य—**मित्यलम्** ।

**नन्वेवं** गुणानां प्राधान्याभावाद्ब्रह्मणश्च प्रधानत्वाद्ब्रह्मणेत्यप्रधाने तृतीया माभून्नाम- ब्रह्मणः प्रधानत्वेपि कामैस्सह ब्रह्म फलमिति कृत्वा न निर्गुणब्रह्मसिद्धिरिति, **मैवम्**—कामशब्दस्यात्र ब्रह्मगुण-वाचित्वाभावात्- काम्यन्त इति कामा इति व्युत्पत्त्यैव विषयाणामेव कामत्वात् । नच ब्रह्मविदो ब्रह्मप्राप्तिरस्तु, कथं पुनर्विषयप्राप्तिरिति वाच्यं, ब्रह्म परिपूर्णत्वाद्गगनमिव सर्वव्यापीति सर्वान्कामानाप्त-वदेव । ततः ब्रह्मप्राप्तौ ब्रह्मविदः ब्रह्मैवेति कृत्वा सर्वान् कामानाप्तवानेवेति । यद्वा सर्वान् कामा-नश्नुत इत्यनेन पूर्णकामो निष्काम इत्युच्यते । ततश्च ब्रह्मप्राप्तस्य ब्रह्मविदो नास्ति प्राप्तव्यकामावशेष इत्यर्थः । अत एव कृतकृत्यत्वं ब्रह्मविदस्स्मर्यते । ब्रह्मणः पूर्णकामत्वं च सर्वात्मत्वप्रयुक्तं, ब्रह्म हि सर्वस्यात्मभूतं, ततो ब्रह्मवित् सर्वात्मा भवतीति श्रुत्यभिप्रायः । इदं च पूर्णकामत्वं, सर्वात्मत्वं च माय-यैव ब्रह्मणो नतु वस्तुत इति कृत्वा बद्धपुरुषदृष्ट्यैव ब्रह्मविदो ब्रह्मभूतस्य सर्वकामाप्राप्तिवचनमिति बोद्धव्यम् । अत्र च पक्षे ब्रह्मणा सह कामानश्नुत इत्यस्य यदा ब्रह्माश्नुते तदैव सर्वकामानश्नुत इति सहशब्दस्य सार्थक्यं बोध्यम् । यथा शत्रो राज्येन सह कोशमाप्तवानित्युक्ते राज्यकोशयोरेकदैव प्राप्ति-रभिहिता भवति तद्वदिति ।

**ननु** मायातरणाद्ब्रह्मविदो ब्रह्मप्राप्तिर्मायया तु सर्वकामावाप्तिरिति कथं युगपद्ब्रह्म कामजातयोः प्राप्तिरिति **मैवम्**— ब्रह्मण एव माययाऽवाप्तसमस्तकामत्वे सम्भवति सति का पुनरनुपपत्तिर्ब्रह्मविदो ब्रह्मभावं प्राप्तस्येति । नच ब्रह्मविदः कथं मायेति वाच्यं, यथा ब्रह्मणस्तथैवेति । नच मायां तीर्णवा-नेव ब्रह्मविदिति वाच्यं, किं ब्रह्म मायामतीर्णं ? नचेष्टापत्तिः- ब्रह्मण एवातीर्णमायित्वे कथं तद्ज्ञानाद्ब्रह्म-वित्तीर्णमायो भवेत् । यदि ब्रह्माऽतीर्णमायं तर्हि तदभेदमापन्नो ब्रह्मविदप्यतीर्णमाय एव भवेदिति नास्त्ये-वानुपपत्तिर्ब्रह्मप्राप्तस्य सर्वकामप्राप्तौ । तस्मादज्ञानमेव ब्रह्मणीव ब्रह्मभावं प्राप्ते ब्रह्मविद्यपि प्राप्तसमस्त-कामत्वादिगुणजातं कल्पयतीति सिद्धं निर्गुणं ब्रह्म ।

**ननु** ब्रह्मवित्प्राप्यं तत्परं ब्रह्म विपश्चित्त्वगुणकमेवेति न निर्गुणब्रह्मसिद्धिरिति, **मैवम्**—सर्वाव-भासकत्वलक्षणसर्वज्ञत्वमेव तद्विपश्चित्त्वं न तु ज्ञातृत्वलक्षणमिति । नच सर्वावभासकत्वमपि गुण एवेति वाच्यं, सत्यं गुण एव, परं तु व्यावहारिक एव स गुणः, वस्तुतस्सर्वस्यैवाभावात् । यद्ब्रह्म व्यवहारत-स्सर्वावभासकं तदाप्नोतीति श्रुत्यर्थाद्वस्तुतो निर्गुणमेव परं ब्रह्म, ब्रह्मविदाप्नोतीति निर्गुणब्रह्मसिद्धिः । श्लो ॥ भ्रमेण गगनं नीलं नीरूपं वस्तुतो यथा । मायया ब्रह्म सगुणं निर्गुणं वस्तुतस्तथा ॥ इति—

**सिद्धान्तः** । **एतेन**—उपास्यत्वाद्ज्ञेयत्वाच्च ब्रह्म सगुणमिति—**प्रत्युक्तम्** । उपास्योपासकोपासनरूपाया ज्ञातृज्ञेयज्ञानरूपायाश्च त्रिपुट्या व्यावहारिकत्वेन वस्तुतस्तदभावादिति । नच मोक्षोपि व्यावहारिक एवेति वाच्यं, इष्टापत्तेः- 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थ'तेति श्रवणात् । नच मोक्षो ब्रह्मस्वरूपत्वात्पारमार्थिक एवेति वाच्यं, मोक्षस्य फलत्वमेव व्यावहारिकं तत्स्वरूपं ब्रह्म तु पारमार्थिकमेवेति ॥

## निर्गुणस्य ब्रह्मणः उपास्यत्वोपपत्तिः ।

**ननु** मोक्षो ब्रह्मज्ञानाद्भवति, ज्ञानं चोपासनात्मकमेव, उपास्यं च ब्रह्म सगुणमेवेति सगुणब्रह्मज्ञानादेवाभीष्टमोक्षसिद्धौ मुमुक्षोर्निर्गुणब्रह्मज्ञानं व्यर्थमिति तद्विधायकशास्त्रस्याप्रमाणत्वान्निर्गुणब्रह्माभ्युपगमो व्यर्थः, **मैवम्**—तत्क्रतुन्यायात्सगुणब्रह्मोपासकास्सगुणब्रह्मसायुज्यं, निर्गुणब्रह्मोपासका निर्गुणब्रह्मसायुज्यं च गच्छन्तीति न निर्गुणब्रह्माभ्युपगमस्य वैयर्थ्यम् । **यदुक्तमु**पास्यं ब्रह्म सगुणमेवेति **तदयुक्तम्**—निर्गुणब्रह्मणोप्युपास्यत्वात् । नचोपास्यत्वगुणयोगे सति तद्ब्रह्म सगुणमेव स्यादिति वाच्यं, एवं ज्ञेयत्वगुणयोगे सति तद्ब्रह्म सगुणमेव स्यादिति सुवचत्वात् । तस्माद्ज्ञेयं ब्रह्म यथा निर्गुणमुपास्यं च ब्रह्म तथा निर्गुणमेव । नच निर्गुणस्योपासनं दुष्करमिति वाच्यं, यस्य दुष्करं स सगुणमेव ब्रह्मोपासीत, यस्य तु सुकरं स पुरुषधौरेयो निर्गुणमेवोपासीतेति । नच कस्यापि सुकरं निर्गुणोपासनं नेति वाच्यं, तथासति निर्गुणोपासनविधिवैयर्थ्यात् । नच तद्विधिरेव नास्तीति वाच्यं, 'आत्मेत्येवोपासीते'-त्यादिवचनसत्त्वात् । नच निर्गुणब्रह्मणो ज्ञानादेव मुक्तिसिद्धौ उपासनविधिर्व्यर्थ इति वाच्यं, यस्य श्रवणादिना निर्गुणब्रह्मसाक्षात्कारानुदयस्तस्य निर्गुणब्रह्मोपासनं विहितमिति वैयर्थ्यानवकाशात् । नच ब्रह्मज्ञानमात्रान्न मोक्षः, किंतु तदभ्यासरूपादुपासनादिति वाच्यं, ब्रह्मोपासनरूपज्ञानाभ्यासजन्यब्रह्मसाक्षात्काररूपज्ञानादेव मुक्तिर्न तूपासनादिति । तस्माच्छ्रवणादिना निगुणब्रह्मोपासनेन वा यथावस्थितब्रह्मसाक्षात्कारे सत्येव मुक्तिरिति निर्गुणब्रह्म सिद्धम् ॥

## ब्रह्मणो विदिताऽविदिताभ्यामन्यत्वोपपत्तिः ।

**ननु** 'अन्यदेव तद्विदितादथो अविदितादधी'ति श्रुतेर्यद्विदितं तद्ब्रह्म नैव भवतीति कथं ब्रह्मसाक्षात्कारसिद्धिः- ब्रह्मसाक्षात्कारो हि ब्रह्मवेदनम् । नच ब्रह्मसाक्षात्कारसिद्धिरस्तु को दोष इति वाच्यं, ब्रह्मसाक्षात्कारं विना मोक्षाभावान्मुमुक्षोर्मोक्षासिद्धिरेव दोष इति, **अत्रोच्यते**—यथा विदितं ब्रह्म न भवति तथा उपासितमपि ब्रह्म न भवति- 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत' इति श्रुतेः । तथा च मोक्षसाधनत्वेन भवदभिमतस्य ब्रह्मोपासनस्याप्यसिद्धेः कथं मोक्षसिद्धिस्तव मतेपीति । **अथ दुष्टं** भवतु मम मतं, तव मतस्य कथमदुष्टत्वमिति **चेदित्थम्**—तथाहि- विदितं ब्रह्म न भवति, अविदितं ब्रह्म न भवति, उपासितं च ब्रह्म न भवति- किंतु विदितादिभिन्नं वेदनमेव ब्रह्म । तच्च वेदितुरात्मनस्स्वरूपभूतमेव । अतएव 'यत्साक्षादपरोक्षाद्ब्र'ह्मेति श्रूयते । स्वस्य स्वयं हि नित्यापरोक्षः- ब्रह्म च स्वयमेव आत्मत्वात्- आत्मा हि स्वयम्- 'अयमात्मा ब्र'ह्मेति श्रुतेः । अस्मादेव ब्रह्मज्ञानान्मोक्षः—

इदं च ब्रह्मज्ञानं सुलभमेवेति नास्ति मोक्षस्यानुपपत्तिर्मम मते। नचैवं विदितमेव भवेद्ब्रह्मेति वाच्यं, किमात्मा विदितः? उताविदितः? आद्ये- किमात्मना विदित उतान्येनानात्मना? नाद्यः- स्वस्य स्वविदितत्वायोगात्। कर्मकर्तृव्याघातो हि सः। नान्त्यः- अनात्मनो जडत्वात्। नाप्यविदितः-- स्वस्य स्वपारोक्ष्यायोगात्। तथाच विदिताविदिताभ्यामन्य एवात्मा। एवं ब्रह्मापि, ब्रह्मात्मनोरभेदात्। तथासत्यात्मभूतमिदं ब्रह्म कथं विदितं भवेत्कथं वा अविदितं भवेत्। इदं च ज्ञानं वेदान्तशास्त्राध्ययनं विना दुर्लभमिति न शास्त्रस्याप्यानर्थक्यम्। अपिच ब्रह्म विदितं भवतु मा नाम अविदितं पुनर्माभूदिति तदर्थं वेदान्तशास्त्रमिति न शास्त्रानर्थक्यम्। एवं ब्रह्मणोऽविदितत्वाभाव एव मोक्षसाधक- इति सएवेह ब्रह्मज्ञानमित्युच्यते। तस्माद्ब्रह्म स्वेन विदितं माभून्नाम, अविदितं पुनर्माभूदिति कृत्वा सर्वोपि लोको यथा ब्रह्माऽविदितं न भवति तथा यतेत। तच्च यतनं वेदान्तश्रवणमननादिरूपं, निर्गुण-ब्रह्मोपासनरूपं वा भवति। तत्राद्यं साङ्ख्यमित्युच्यते। द्वितीयं तु योग इति। 'तत्कारणं साङ्ख्ययोगाभिपन्न'मिति श्रुतेर्ब्रह्मप्राप्ताविदं द्वयमेवोपायभूतम्। अतएव 'यत्साङ्ख्यैर्गम्यते स्थानं तद्योगैरपि गम्यते, एकं साङ्ख्यं च योगं च यः पश्यति स पश्य'तीति भगवता गीतम्—इति। नच यदि ब्रह्माविदितं न भवति, तर्हि विदितमेव भवेदिति वाच्यं, केन विदितं भवेत्- न तावद्ब्रह्मणा, कर्मकर्तृव्याघातात्। नाप्यात्मना- उक्तदोषादेव ब्रह्मण एवात्मत्वात्। नाप्यन्येन- जडत्वादिति।

**नन्वेवं** ब्रह्माविदितं यथा न भवति तथा यतितव्यमित्युक्तं- तत्र केन यतितव्यं- न तावद्ब्रह्मणा-- तस्य निष्क्रियत्वान्नाप्यात्मना-- तस्य ब्रह्माभिन्नत्वान्नाप्यनात्मना- तस्य जडत्वादिति, **मैवम्**—येन ब्रह्माविदितं, तेन यतितव्यमिति। नच स क इति वाच्यं, यो वा को वा भवतु, किं तेन तव। नच मयैव ब्रह्माविदितमिति वाच्यं, तर्हि जानास्येव त्वं तं येन ब्रह्माविदितं। नच मया ब्रह्माविदितमिति जानामि, परं तु कोहमिति पृच्छामीति वाच्यं, किं त्वामेव त्वं न जानासि, ओमिति न वाच्यं, मयेति त्वयोच्यमानत्वात्- अहमितिच। नच ममैव ब्रह्मत्वात्कथं मया यतितव्यमिति वाच्यं, तर्हि मा यतस्व-- अहमेव ब्रह्मेति निश्चयार्थं हि यत्नः कर्तव्य इत्युक्तम्—इति। **एतेन** 'यस्यामतं तस्य मतं मतं यस्य न वेद सः', 'अविज्ञातं विजानतां विज्ञातमविजानता'मिति श्रुतिर्व्याख्याता। योहं ब्रह्म जानामीति मन्यते स ब्रह्म नैव जानाति- ब्रह्मणो ज्ञानस्वरूपत्वेन ज्ञानकर्मत्वाभावात्। ज्ञानकर्म हि जडं वस्तु, यस्तु ब्रह्माहं जानामीति न मन्यते, किंतु ब्रह्मैवाहमिति मन्यते स ब्रह्म जानात्येवेति तदर्थात्। नच योहं ब्रह्मेति मन्यते तेनापि ब्रह्म कथं ज्ञातं भवति-- ज्ञाताज्ञाताभ्यां पृथग्भूतं हि ब्रह्मेति वाच्यं, योहं ब्रह्मेति मन्यते स ब्रह्मैवेति कृत्वा ब्रह्मणो ब्रह्मपारोक्ष्यायोगात्तेन ब्रह्म ज्ञातं भवतीति व्यपदिश्यते, न तु वस्तुतो ज्ञातं भवतीति। अस्याश्श्रुतेर्य उक्तो **रामानुजेनार्थः**- ब्रह्मैतावदिति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्माविज्ञातममतमित्युक्तमिति, स **दुष्टएव**—तस्यार्थस्यायथाश्रुतत्वात्- नहि मूलादयमर्थ आयाति, किंच यस्य ब्रह्म परिच्छिन्नमिति मतं तस्य ब्रह्मवेदनं मास्तुनाम, ब्रह्मापरिच्छिन्नमिति यस्य मतं तेनापि ब्रह्म कथं ज्ञायेत- अपरिच्छिन्नत्वं हि देशकालवस्तुत्रयकृतपरिच्छेदाभावः—तत्र सर्वकालवर्तित्वात्सर्वदेश-

वर्तित्वाच्च ब्रह्मणो देशकालकृतपरिच्छेदाभावेपि ब्रह्मभिन्नयोः प्रकृतिपुरुषयोस्सत्त्वात्कथं वस्तुकृतपरिच्छेदाभावः- प्रकृतेर्ब्रह्मणि कल्पितत्वेन पुरुषस्य ब्रह्मानन्यत्वेन च, यदि वस्तुकृतपरिच्छेदाभावस्तर्हि तदपरिच्छिन्नं ब्रह्म पुरुष एवेति कृत्वा कथं ब्रह्म ब्रह्मणैव ज्ञायेत- कर्मकर्तृभावव्याघातात् । तस्मादपरिच्छिन्नं ब्रह्मेति यस्य मतं स ब्रह्मैवेति न तेन ब्रह्म ज्ञायते—घटवद्ब्रह्मणस्स्वान्यत्वाभावादिति मयोक्त एवार्थश्रेयान् ।

**ननु** विदिताविदिताभ्यामन्यत्तद्ब्रह्म न वेदनमात्रं किंतु वेदितृ 'सलिल एको द्रष्टा'- 'नान्योतोस्ति द्रष्टा' इत्यादिश्रुतेः, 'वेदाहं समतीतानि वर्तमानानि चार्जुन । भविष्याणि च भूतानि मान्तु वेद न कश्च'नेति गीतायाः, 'आत्मानमन्यं च स वेद विद्वा नपिप्पलादो नतु पिप्पलादः' इति भागवताच्च । नच 'न दृष्टेर्द्रष्टारं पश्ये'दिति श्रुतिर्ज्ञानव्यतिरिक्तं ज्ञातारं प्रतिषेधतीति वाच्यं, सा हि श्रुतिरागन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतां कुतर्कसिद्धां मत्वा न तथा आत्मानं पश्येः, किं तु द्रष्टारमप्यात्मानं दृष्टिरूपमेव पश्येदित्यभिप्रायवतीति । यद्वा दृष्टेर्द्रष्टारं जीवात्मानं परिहृत्य परमात्मानमेवोपास्वेति श्रुत्यर्थ इति, **नैतत्सारम्**—किं ज्ञानमात्रं ज्ञातृ भवतीति त्वयोच्यते? यद्वा, जीवब्रह्मणोः स्वरूपभूतं ज्ञानमेव ज्ञातृ भवतीति? नाद्यः- ज्ञाता धर्मी ज्ञानं तु तद्धर्म इति लोके व्यवस्थायास्सिद्धाया भङ्गप्रसङ्गात्, ज्ञातृज्ञानयोरेकत्वे ज्ञातृज्ञानज्ञेयाख्यत्रिपुट्यभावप्रसङ्गाच्च, ममेदानीं घटज्ञानं जातमिति प्रतीतिलोपप्रसङ्गाच्च । द्वितीये- ज्ञातुस्तस्य जीवब्रह्मस्वरूपस्य कथं ज्ञानत्वव्यपदेशः- ज्ञातुर्हि भिन्नं ज्ञानम् । यदि जीवब्रह्मणोः स्वरूपं ज्ञात्रित्येवाग्रहस्तर्हि तस्य ज्ञानत्वाभ्युपगमः कथं, नहि लोके ज्ञातुः स्वरूपं ज्ञानमिति व्यवहारः, येन शास्त्रेपि तस्य प्रचारः स्यात् । किंच यदि लौकिकज्ञानाद्भिन्नमेव जीवब्रह्मणोः स्वरूपं, तर्हि तद्ज्ञानमिति कस्मादुच्येत, कथं वा ज्ञानशब्दस्तत्र प्रवर्तेत, तस्माद्ज्ञातृभूतयोर्जीवब्रह्मणोः स्वरूपं ज्ञानं नैव भवति । नच सत्यं ज्ञानमिति श्रुतिविरोधः, अत एव न ज्ञानपदवाच्यं ब्रह्म किंतु तल्लक्ष्यमित्युक्तम् । नचैवं ब्रह्मणो ज्ञानस्वरूपत्वाभावे अज्ञानस्वरूपत्वं स्यादिति वाच्यं, ज्ञातुर्ब्रह्मणोऽज्ञानस्वरूपत्वायोगात् । अज्ञानस्वरूपो हि घटो ज्ञाता न भवति । **ननु** यदि ज्ञातृ ब्रह्म तर्हि ज्ञानं तस्य धर्मो भवेत्, तच्च धर्मभूतं ज्ञानमनित्यमेवेत्यागन्तुकचैतन्यगुणयोगि भवेद्ब्रह्मेति चेद्भवतु । यथा जीवस्तथा ब्रह्मापीति । नच नित्यं ब्रह्मणो ज्ञानमिति वाच्यं, तस्यापि तत्तदवसरे तत्तत्सृष्ट्यादिकार्योपयोगिज्ञानानां जन्मश्रवणात् । अन्यथा यदि सृष्टिज्ञानं नित्यं स्याद्ब्रह्मणस्तर्हि सदापि सृष्टिरेव भवेदिति प्रलयानुपपत्तिः । एवं यदि प्रलयज्ञानं नित्यं स्यात्तर्हि सदापि प्रलय एव भवेदिति सृष्ट्यनुपपत्तिरिति । नच तत्तद्विषयज्ञानस्य जन्यत्वेपि निर्विषयं ज्ञानमजन्यं नित्यमेवास्ति जीवब्रह्मणोर्धर्मभूतमिति वाच्यं, निर्विषयज्ञानानभ्युपगमात्तव मते- लोके च निर्विषयस्य ज्ञानस्यादर्शनात्- नहि घट इतिवद्ज्ञानमिति कश्चित्पदार्थ उपलभ्यते, किंतु घटाभाववद्घटज्ञानमिति कश्चिदुपलभ्यते- तस्माद्यदि जीवब्रह्मणी ज्ञातृभूते तर्हि तयोरवश्यमागन्तुकमेव ज्ञानं धर्मभूतमाश्रयणीयम् । नच जीवब्रह्मणोस्सूर्यस्येव प्रकाशो नित्यमेवास्ति धर्मज्ञानं तच्च यदा यदा येन येन विषयेण सम्बध्यते, तदातदा तं तं विषयमव-

भासयतीति वाच्यं, तथासति विषयावभासकं तद्वस्तु जीवब्रह्मणोः स्वरूपभूतमित्येवास्तु, सूर्यस्य प्रकाशवदेव किमिति धर्मभूतमित्युच्यते । यद्येवं जीवेश्वरयोस्स्वरूपमेव सर्वावभासकमित्युच्यते तर्हि सर्वावभासकत्वाद्ज्ञानमेव तद्भवति, नतु ज्ञातृ - ज्ञानस्य हि घटादिविषयावभासकत्वं सम्प्रतिपन्नम् । एवं जीवो ब्रह्म च ज्ञानस्वरूपत्वेन ज्ञानमात्रमिति सिद्धे कथं न ज्ञानमात्रमिति त्वयोक्तं निर्व्यूढं भवेत् ।

**ननु** यद्येवं सर्वावभासकत्वाज्जीवो ब्रह्म च ज्ञानशब्देन व्यपदिश्येते, तर्हि द्रष्टृत्वं कथं तयोश्श्रुत्युक्तमुपपद्येत, **उच्यते**—सर्वस्यावभासनकर्तृत्वादेव द्रष्टेति श्रुतिभिरुच्यत इति । लोके च ज्ञानरूपभासनकर्ता हि द्रष्टेत्युच्यते- 'तस्य भासा सर्वमिदं विभा'तीति श्रुतेश्च ब्रह्म सर्वावभासकं स्वरूपचैतन्येन ब्रह्म सर्वमवभासयतीति श्रुत्यर्थः । इदं च सर्वावभासकत्वं ब्रह्मणि मायया कल्पितमेव वस्तुतस्सर्वस्यैवाभावादित्युक्तम् । **ननु** वस्तुतो ब्रह्म दर्शनं माभूत् द्रष्टृ च माभूत्, किमप्यनिर्वाच्यमेव भवतु- व्यवहारतस्तु किं द्रष्टृभूतम्? यद्वा दर्शनभूतम्? आद्ये- ज्ञानं ब्रह्मेति श्रुतिविरोधः । द्वितीये द्रष्टेति श्रुतिविरोधः । नच द्रष्टृभूतं दर्शनभूतं चेति वाच्यं, असम्भवात्- नहि द्रष्टा दर्शनं भवति, दर्शनं वा द्रष्टृ भवति, **अत्रोच्यते**—श्रुतिगतो ज्ञानशब्दो द्रष्टृशब्दश्च सर्वावभासकं वस्तु वदत इति । **ननु** किमिदं सर्वावभासकत्वं- यद्योगाज्जीवो ब्रह्म च द्रष्टेति दृष्टिरिति चोच्यते श्रुत्येति, **उच्यते**—सर्वं भातीति सर्वस्य भानव्यवहारविषयत्वापादनमेवेति । **ननु** जीवस्यानुभवसिद्धं ज्ञातृत्वमिति कथं तस्यापलाप इति **चेन्मैवम्**—साभासाहङ्कारस्यैव तदनुभवसिद्धं नतु कूटस्थजीवस्येति । 'एवं साभासमायामयेश्वरस्यैव ज्ञातृत्वानुभवो न कूटस्थस्य ब्रह्मणः- आत्मानमन्यं चेति श्लोकेन अपिप्पलाद ईश्वरः, पिप्पलादस्तु चिदाभास इति न तत्र ब्रह्मकूटस्थयोर्ग्रहणम्-- कूटस्थस्य कर्मफलरूपपिप्पलादनायोगात्, ब्रह्मणश्च वेदनायोगादिति । नच सर्वज्ञं ब्रह्मेति वाच्यं, ईश्वराख्यं ब्रह्मैव सर्वज्ञं न तु शुद्धमिति । **यदुक्तं** न दृष्टेर्द्रष्टारं पश्येदिति श्रुतिर्द्रष्टारमप्यात्मानं दृष्टिरूपमेव पश्येदित्यभिप्रायवतीति **तत्सत्यमेव**—व्यवहारतो द्रष्टाप्यात्मा वस्तुतो दृष्टिरेवेति । नचात्मा वस्तुतो ज्ञानमपि न भवतीति त्वयोक्तमिति वाच्यं, सत्यमुक्तं तथापि ज्ञानशब्दलक्ष्यत्वादात्मा वस्तुतो दृष्टिरेवेत्युच्यते । यद्वा यदात्मनः स्वरूपं चैतन्यं तदेव ज्ञानं । यत्तु लौकिकं जन्यं वृत्तिज्ञानं तदुपचारादेव ज्ञानमित्युच्यते- वृत्तौ ज्ञानत्वोपचारादित्याचार्यवचनात् । ततश्च वस्तुतो दृष्टिरेवात्मेति । नचैवं ज्ञानशब्दवाच्यत्वाद्ब्रह्मणस्सविशेषत्वं स्यादिति वाच्यं, यावद्व्यवहारं ब्रह्मणस्सविशेषत्वकल्पनाभ्युपगमादिति । एवं च ज्ञानमेवात्मा, नतु ज्ञानादन्यः कश्चिद्ज्ञातास्त्यात्मेति श्रुत्यभिप्रायवर्णनमुचितमेव । वस्तुतस्तु श्रुतेरयमर्थः- दृष्टिश्चक्षुरिन्द्रियं दृश्यं पश्यति, दृष्टेर्द्रष्टारन्तु न पश्यति, एवं मतिर्बुद्धिर्मन्तव्यं मनोति- मतेर्मन्तारं तु न मनोति—इति । तथाच अतीन्द्रियत्वं सर्वान्तर्बहिरिन्द्रियावभासकत्वं चात्मनस्सिध्यति । **ननु** दृष्टेर्द्रष्टा मतेर्मन्ता चात्मेति ज्ञातृत्वमेवात्मनः प्राप्तमिति चेत्सत्यं, तदेव प्राप्तव्यमिह 'विज्ञातारमरे केन विजानीया'दिति ज्ञेयत्वपरिहारायात्मनो ज्ञातृत्वस्यैव स्थापनीयत्वात् । नचैवं ज्ञातैवात्मा भवेन्न तु ज्ञानमिति वाच्यं, स्थूलारुन्धतीन्यायेन शास्त्रमात्मबोधने प्रवृत्तम्—तथाहि- अरुन्धतीं जिज्ञासुना अस्मिन्ज्योतिर्मण्डले काऽरु-

न्धतीति पृष्टस्तम्प्रति बोधयति विद्वान्सप्तर्षिमण्डले वशिष्ठाख्यां स्थूलामेव तारां तावदरुन्धतीति, पश्चात्तु नासावरुन्धती किंतु तत्पतिर्वशिष्ठ एव, या त्वस्य सन्निधे लसति सूक्ष्मा तारा सैवारुन्धतीति सत्यामेवारुन्धतीं बोधयति- एवं शास्त्रं च दृश्ये अनात्मनि देहादावेवात्मप्रत्ययवन्तं लोकं तावत्तत्रात्मप्रत्ययान्निवर्तयितुं न दृश्यः पदार्थ आत्मा किंतु द्रष्टैवेति प्रतिपादयति । ततो देहादेर्दृश्याद्व्यतिरिक्तो द्रष्टैवात्मेति निश्चयवन्तं प्रति द्रष्टाप्यात्मा न भवति- अहं पश्यामीति मन्तुरहङ्कारत्वेनानात्मत्वात्किं तु सर्वावभासकं ज्ञातुः स्वरूपभूतं यद्ज्ञानं तदेवात्मेति प्रतिपादयति, अनन्तरं तु ज्ञानमप्यात्मा न भवति, किं त्वनिर्वाच्यमेवात्मस्वरूपं निर्विशेषमिति प्रतिपादययि । तत्राद्यपक्षे द्रष्टृत्वमात्मनः प्रतिपादयन्त्यः द्रष्टेत्यादयः श्रुतयश्चरितार्थाः, द्वितीयपक्षे ज्ञानमित्याद्याः । तृतीयपक्षे यतो वाचो निवर्तन्त इत्याद्या इति विवेकः । तत्र द्वैतमतं तु प्रथमपक्षप्रतिष्ठापकमिति नात्यन्तं तत्रानादरः कार्यः- एकदेशद्वैतमतं तु द्वितीयपक्षप्रतिष्ठापकम्-- प्रधानाद्वैतमतं तु तृतीयपक्षप्रतिष्ठापकमिति बोध्यम् ।

## शाङ्करमतस्य अचलमतसाङ्कर्यशङ्कानिरासः ।

**ननु** तृतीयपक्षश्शिवरामदीक्षिताद्यभिमतमचलमतमेव, तत्र हि सच्चिदानन्दनिरसनं कृतम्-- अहमर्थस्य ज्ञातुरात्मनो नाश एव मोक्ष इत्यभिहितम्- ब्रह्मणस्सकाशाज्जगन्नैव जातमिति प्रतिपादितमिति तदशाङ्करमतमेवेति, **मैवम्**—शङ्कराचार्यैरप्येतत्त्रयमभ्युपेतमेव- परं तु अहंशब्दवाच्यार्थस्य ज्ञातुरात्मत्वं नाभ्युपेतं, किंतु तल्लक्ष्यार्थस्य चैतन्यस्यैवात्मत्वमभ्युपेतं, तदेव ब्रह्म तदेवाचलं परिपूर्णत्वादक्रियत्वाच्चेति नात्मनाशरूपोऽदोषो त्रास्ति । नचाहमिति यो मन्यते स मुक्तो न भविष्यत्येवेति विद्यत एवात्राप्यात्मनाश इति वाच्यं, नात्रात्मनाशोस्ति, किं त्वहङ्कारनाशएव- नह्यहमित्यभिमन्यमानं साभासाहङ्कारं वयमात्मेति प्रतिपादयामः । **ननु** यस्सर्वं जानाति, यच्च ज्ञात्रा ज्ञायते, तदुभयं मायामयत्वान्नास्त्येव-- ब्रह्मैकमेव त्वस्तीत्यचलमताभिप्रायः- त्वदभिप्रायोपि स एव- ततः कथं तव मते आत्मनाशाभाव इति, **चेन्मैवम्**—ब्रह्मण एवात्मत्वान्नह्यचलमतेपि ब्रह्मनाशोभ्युपगतः । **ननु** अहंपदलक्ष्यार्थस्य चैतन्यस्य ब्रह्माभिन्नात्मत्वं त्वयोच्यते- अचलमतानुयायिनां तु न तदुच्यत इतीयानेव भेदः- सच नास्त्येव- वस्तुतोहंपदलक्ष्यार्थत्वस्याप्यभावाच्चैतन्ये- ततस्तवापि मतमचलमतमेवेति **चेत्सत्यम्**—अशेषविशेषविधुरपरिपूर्णब्रह्ममात्रावशेष एव श्रीशङ्कराचार्यशिवरामदीक्षितमतविश्रान्तेर्दर्शनात्-- सत्यप्यवान्तरभेदे प्रधानप्रतिपाद्याभेदादिति । नच ब्रह्मणस्सकाशान्मायया जगज्जातमित्यद्वैतिनो वदन्ति- जगन्नैव जातमित्यचलमतानुयायिन इत्यस्ति महान् भेद इति वाच्यं, गौडपादाचार्यैर्जगन्न जातमित्येवोक्तत्वात्, मायया जातमिति वदतामपि वस्तुतो न जातमित्यत्रैव तात्पर्यात् । नचैवमवान्तरभेदोपि दुर्वच इति वाच्यं, ब्रह्मप्रतिपादनप्रकारभेदसत्त्वात् । तस्माद्यया कयापि विधया यत्र निर्विशेषब्रह्मावशेषसिद्धिस्तन्मतमुपादेयमेव- साच शङ्करमत इव दीक्षितमतेप्यस्तीति तदप्युपादेयमेव- रामानुजादिमतेषु तु सा नास्तीति तान्यनुपादेयान्येव ।

## दृष्टेर्द्रष्टारमित्यत्र रामानुजाभिमतार्थनिराकरणम् ।

**अथ** यदुक्तमथवेति पक्षान्तरं रामानुजेन **तदप्ययुक्तमेव**—यो दृष्टेर्द्रष्टा जीवात्मा सएव परमात्मेति- जीवात्मना जीवात्मनः परिहरणायोगाच्च- नहि स्वयं स्वस्य परिहर्तुमुपादातुं वा योग्यो भवति, अन्येन ह्यन्यः परिह्रियते स्वीक्रियते वा, यथा घटः पुरुषेण । परमात्मोपासनं च दुष्करं 'तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासत' इति श्रुत्या परमात्मन उपास्यत्वाभावस्योक्तत्वादिति । किंच दृष्टेर्दर्शनस्य द्रष्टेति हि एवाभिप्रायः- सचायुक्तः- दृश्यस्यैव द्रष्टा भवति न तु दर्शनस्येति-- नहि दर्शनं कोपि पश्यति, तथासति दर्शनमपि दृश्यमेव भवेदिति दृश्यदर्शनयोरभेदप्रसङ्गः । यदिच दृश्यविषयकमिव दर्शनविषयकमपि दर्शनं भवेत्तर्हि दर्शनविषयकदर्शनविषयकमपि दर्शनान्तरं भवेदेवेत्यनवस्था । तस्माद्द्रष्ट्रा दृश्यमेव दृश्यते न तु दर्शनम् । एवं मन्तव्यमेव मन्यते मन्त्रा नतु मननं मन्यते- तथा श्रोतव्यमेव श्रूयते श्रोत्रा, नतु श्रवणं श्रूयते । नच द्रष्टा चक्षुः पश्यतीति कथं त्वयाप्युक्तं द्रष्टाहि चक्षुषा दृश्यमेव पश्यति नतु चक्षुरिति वाच्यं, 'चक्षुषश्चक्षुश्श्रोत्रस्य श्रोत्र'मिति श्रुतेः । चक्षुरप्यात्मभास्यत्वाद्दृश्यमेव । मम चक्षुरिति पुरुषः प्रत्येति । नच चक्षुर्व्यापारस्य दर्शनस्य कथं चक्षुर्भिन्नव्यापारत्वमिति वाच्यं, चक्षुः पश्यतीत्यस्य चक्षुर्दर्शनस्य चक्षुःकर्मकज्ञानमित्येवार्थ इति । पुरुषश्चक्षुषा घटं पश्यति, चक्षुश्च मनसा पश्यति, मनश्च बुद्ध्या पश्यति, बुद्धिं च स्वयं पश्यति, स्वं तु स्वस्य नित्यापरोक्ष एवेति न स्वस्मिन्दर्शनक्रियाकर्मत्वम्- इदमेव हि स्वयम्प्रकाशत्वं पुरुषस्य इति । तस्माज्जीवस्य दर्शनद्रष्टृत्वमसम्भव्येव ।

## आनन्दशब्दस्य रामानुजाभिमतार्थनिराकरणम् ।

**यदुक्तं रामानुजेन**—अनुकूलं ज्ञानमेवानन्द इति, **तदसत्**—अनुकूलत्वप्रतिकूलत्वे विषयगते एव, नज्ञानगते इति । अनुकूलविषयकं हि ज्ञानमनुकूलमिति, प्रतिकूलविषयकं च ज्ञानं प्रतिकूलमिति च व्यपदिश्येते- न तु ज्ञानमात्रं कस्यचिदनुकूलं प्रतिकूलं वा भवितुमर्हति । किंच अनुकूलज्ञानादानन्दो जायते पुंस इति नानुकूलज्ञानमानन्दः । अपि च अनुकूलविषयज्ञानमात्रादपि न भवत्यानन्दः पुरुषस्य, किंतु अनुकूलस्य स्रक्चन्दनवनितादिलक्षणस्य विषयस्य भोगादेव । नहि ज्ञानमात्रं भोगः- नहि ओदनं भुंक्ते इत्युक्तौ ओदनं जानातीत्यर्थः । नच शब्दस्पर्शादीनां ज्ञानमेव भोग इति वाच्यं, तत्रापि सुखपर्यन्तं दुःखपर्यन्तं वा ज्ञानमेव भोगो नतु ज्ञानमात्रमिति । सर्वथापि भुज्यते अनुभूयत इति भोग इति व्युत्पत्त्या सुखं दुःखं च भोगशब्दवाच्यम् । भुज्यते अनेनेति व्युत्पत्त्या तु भोगशब्दस्सुखदुःखानुभवरूपज्ञानपर इति विवेकः । एवं चानन्दस्य सुखशब्दवाच्यस्य ज्ञानाद्भिन्नत्वात्कथमनुकूलं प्रतिकूलं वा ज्ञानमानन्दो भवेत् । यद्येवमनुकूलं ज्ञानमानन्दस्स्यात्तर्हि प्रतिकूलं ज्ञानं दुःखं स्यात् । प्रतिकूलज्ञानस्य च दुःखरूपत्वमयुक्तं, प्रतिकूलविषयभोगजन्यान्तःकरणवृत्तेरेव दुःखरूपत्वादिति । किंच यद्यनुकूलज्ञानं ब्रह्म तर्हि प्रतिकूलज्ञानमपि ब्रह्म भवेदेव । ज्ञाने हि स्वप्रकाशे ब्रह्मणि अनुकूला इव स्रगादयः प्रतिकूला अपि व्याघ्रादयो विषया भवन्त्येव । नन्वस्य कोपि लेशः,

यथा सवितृप्रकाशस्य घटादिभिर्विषयैः प्रकाश्यैरिति । अतएव 'सत्यं ज्ञानमनन्तं ब्र'ह्मेति श्रुतिर्ज्ञानमात्रमेव ब्रह्मेति प्रत्यपादयत् । नच 'विज्ञानमानन्दं ब्रह्मे'ति श्रुतिरनुकूलं ज्ञानमेव ब्रह्मेति प्रत्यपादयदिति वाच्यं, ज्ञानस्यानुकूलस्य प्रतिकूलस्य वा आनन्दत्वाभावस्योक्तत्वात् । कस्तर्हि विज्ञानमानन्दं ब्रह्मेति श्रुत्यर्थ इति चेदुच्यते श्रुणु-- सर्वावभासकत्वाद्विज्ञानं सर्वस्यात्मत्वेन परमप्रेमास्पदत्वादानन्दं च ब्रह्मेति। नच स्रगादिविषया एव प्रेमास्पदभूता न त्वानन्द इति वाच्यं, आनन्दजनकत्वेनैव स्रगादिविषयेषु प्रेमास्पदत्वं नतु स्वत इति कृत्वा अनन्दस्यैव प्रेमास्पदत्वमिति । दुःखे द्वेषस्सुखे प्रेमा च सर्वस्यानुभवसिद्धो हि- । नचैवं प्रेमास्पदभूतत्वेनानुकूलं ज्ञानमेवानन्द इति वाच्यं, ज्ञाने प्रेमास्पदत्वाभावात् । नच ज्ञाने सर्वस्य प्रेम दृश्यत इति वाच्यं, ज्ञानजन्यानन्दविषयक एव स प्रेमेति । शास्त्रार्थपरिज्ञानाद्धि विद्वानानन्दति- प्राकृतश्च कुलालादिः कर्तव्यघटादिपदार्थज्ञानादानन्दति- तस्मान्निरुपाधिकं परमप्रेम लोकस्यानन्द एव दृश्यत इति तादृशप्रेमास्पदत्वादात्मभूतं ब्रह्मानन्दमित्युच्यते । नच विज्ञानाभिन्नमानन्दमानन्दाभिन्नं विज्ञानं वा ब्रह्मेति श्रुत्यर्थ इति वाच्यं, विज्ञानानन्दयोरभेदायोगात्- नहि वनितेयमिति ज्ञानं वनितानिधुवनजन्यं सुखं चाभिन्नमिति कोप्यनुन्मत्तः प्रत्येति । नच इदं सुखमिति ज्ञानं सुखं चाभिन्नमेवेति वाच्यं, तथासति घटोयमिति ज्ञानं घटाभिन्नमेव भवेत्- नहि विषयविषयिणोरैक्यं स्वप्नेपि सम्भावयितुं शक्यते- ज्ञानं विषयि, आनन्दस्तु विषय इति कथं तयोरैक्यम् । किंच आनन्दं भोग्यं, ज्ञानं तु तद्भोग इति कथं तयोरैक्यम् । नचैवं भोग्यस्यानन्दरूपस्य ब्रह्मणो भोक्तुरात्मनश्च कथमैक्यमिति वाच्यं, अभोक्तृत्वादात्मनः यस्त्वानन्दभुक्- स साभासाहङ्कारः प्रमातैव । सच विकारित्वाद्ब्रह्मभिन्न एव । भोक्तृत्वं हि विकारः । अतएव 'तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' इति श्रुत्या विकारिचिदाभासस्य कर्मफलसुखदुःखभोक्तृत्वमविकारिकूटस्थस्य परमात्मनस्तद्राहित्यं चोक्तम् । **ननु** कूटस्थस्य जीवभुज्यमानसुखदुःखसाक्षित्वरूपज्ञातृत्वस्य कथं सम्भवः-- ज्ञातृत्वं हि विकार इति तव मतमिति- **मैवम्**—कूटस्थस्य सुखदुःखावभासकत्वमेव तत्साक्षित्वं, नतु सुखदुःखज्ञानक्रियाकर्तृत्वमिति भोगक्रियाकर्तृत्वमिव ज्ञानक्रियाकर्तृत्वमपि विकार एव हि । नच भासनकर्तृत्वमपि विकार एवेति वाच्यं, आत्मसन्निधानमात्रादेव सर्वमपि जगद्भातीति व्यवहारास्पदं भवति- यथा सूर्योदयमात्रादेव घटादिवस्तुजातं तद्वदिति । तावतैव कूटस्थस्य सर्वावभासकत्वमुक्तं सूर्यस्येवेति, न भासनक्रियाकर्तृत्वं- यथा वा लोहभ्रामणक्रियामकुर्वन्नप्ययस्कान्तस्स्वसन्निधिमात्रेण लोहे भ्रमति सति लोहभ्रामक इत्युच्यते तद्वदिति । आत्मनो भोक्तृत्वज्ञातृत्वे तु नैतादृशे इति विकारावेव । तस्माज्जीवोपभोग्यमानन्दभूतं ब्रह्म न ज्ञानाभिन्नं, नापि जीवाश्रितमानन्दाभिन्नं ज्ञानमनुभवरूपमिति । **ननु** किं बद्धजीवोपभोग्यमानन्दं ब्रह्म ? किं वा मुक्तजीवोपभोग्यम् ? नाद्यः- तथासति संसारदशायामेव सर्वस्य ब्रह्मानन्दोपभोगसम्भवान्मोक्षशास्त्रस्य ब्रह्मानन्दफलकस्य वैयर्थ्यप्रसङ्गात् । नान्त्यः- मुक्तौ द्वैताभावेन भोक्तुर्जीवस्य भोग्यस्य ब्रह्मानन्दस्य भोगस्य चावस्थित्ययोगादिति, **मैवम्**— यद्बद्धजीवैरनुकूलविषयभोगदशायां भुज्यते आनन्दं तदपि ब्रह्मैव- ब्रह्मानन्दस्यैव वृत्तौ प्रतिफलनात् । परं तु

तद्वृत्तेः क्षणिकत्वात्क्षणिकं वैषयिकं तत्सुखं नैव पुरुषार्थ इति नित्यसुखार्थं मोक्षशास्त्रमावश्यकमेव । मुक्तजीवस्तु ब्रह्मत्वादानन्दमेव न त्वानन्दमिति मुक्तौ नाद्वैतक्षतिः । ननु वैषयिकं सुखं ब्रह्मानन्दादन्यदेव- जन्यत्वान्नश्यत्वाच्चेति मैवम्—अपरिच्छिन्नब्रह्मानन्दांश एव वैषयिकसुखं, यथा अपरिच्छिन्नसमुद्रोदकांश एव कूपोदकम्- 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः । नच निरंशस्य ब्रह्मानन्दस्य कथमंशसिद्धिरिति वाच्यं, यथा निरंशस्य गगनस्य घटाद्युपाधिवशाद्घटाकाशाद्यंशसिद्धिस्तद्वदिति । नच तव मते गगनं सावयवत्वात्सांशमेवेति वाच्यं, तर्हि मायया निरंशस्यापि ब्रह्मानन्दस्यांशसिद्धिः । यद्वा बिम्बभूतब्रह्मानन्द एव अपरिच्छिन्नः, वृत्तौ तत्प्रतिबिम्बभूतवैषयिकानन्दस्तु परिच्छिन्न एवेति ।

**नन्वेवं** सुखादिव्यञ्जकान्तःकरणवृत्तिप्रतिफलितं ब्रह्मैवानन्दं, ज्ञानाभिव्यञ्जकान्तःकरणवृत्तिप्रतिफलितं ब्रह्मैव ज्ञानं चेति कृत्वा ज्ञानाभिन्नमानन्दमानन्दाभिन्नं ज्ञानं च ब्रह्मेवेति 'विज्ञानमानन्दं ब्रह्मे'ति श्रुतेरस्मदुक्त एवार्थ इति, **मैवम्**—किं त्वया विज्ञानानन्दशब्दाभ्यां वृत्तिज्ञानवृत्तिसुखे विवक्षिते ? यद्वा नित्यज्ञाननित्यसुखे ? नाद्यः- तयोरभेदायोगात् । न द्वितीयः- ज्ञानस्य सुखस्य वा नित्यस्याभावात् । नच नित्यज्ञानं नित्यसुखं च ब्रह्मैवेति वाच्यं, तथासति ब्रह्मवाचिनोर्नित्यज्ञाननित्यसुखशब्दयोः पर्यायत्वं स्यात्, घटः कलश इतिवत् । नचेष्टापत्तिः- अन्यतरवैयर्थ्यादन्यतरप्रयोगायोगात्- विज्ञानं ब्रह्मेति आनन्दं ब्रह्मेति वा वक्तव्यं, नतु विज्ञानमानन्दं ब्रह्मेति । किंच अनुकूलं ज्ञानमेवानन्दमिति तव मते आनन्दं ब्रह्मेत्यनेनैवेष्टसिद्धौ विज्ञानमिति पदं व्यर्थमेव, विज्ञानमनुकूलविज्ञानं ब्रह्मेति वाक्यस्यायुक्तार्थत्वात् । **ननु** विज्ञानमानन्दं ब्रह्मेत्यस्य अनुकूलविज्ञानमानन्दं ब्रह्मेत्यर्थः । तथा च आनन्दपदवाच्यमनुकूलविज्ञानं ब्रह्मेति फलितं, यद्वा अनुकूलविज्ञानरूपमानन्दं ब्रह्मेति, **मैवम्**—अनुकूलपदाध्याहारस्य स्वकपोलकल्पितत्वेनाप्रमाणत्वात् । अनुकूलविज्ञानं ब्रह्मेत्यनेन आनन्दं ब्रह्मेत्यनेन वा विवक्षितार्थसिद्धावन्यतरपदवैयर्थ्यस्य तदवस्थत्वादिति । तस्माद्विज्ञानमानन्दं च यद्वस्त्वस्ति तदेव ब्रह्मेति श्रुत्यर्थः- सत्यं ज्ञानमिति श्रुत्या विज्ञानं ब्रह्मेति, आनन्दो ब्रह्मेति श्रुत्या आनन्दं ब्रह्मेति च प्रतिपादितत्वाद्विज्ञानमानन्दं ब्रह्मेति श्रुतिर्विज्ञानमानन्दं च ब्रह्मेति प्रतिपादयति श्रुतिद्वयोक्तमर्थं संगृह्येति भावः । **नचैवं** ज्ञानस्वरूपमानन्दस्वरूपं च ब्रह्मेति ब्रह्मणस्स्वरूपद्वयं प्राप्तमिति वाच्यं, एकमेव ब्रह्म विज्ञानशब्देनानन्दशब्देन च प्रतिपाद्यत इति तदर्थात् । नच किं स्वरूपं ब्रह्मेति वाच्यं, ब्रह्मस्वरूपस्य वाङ्मनसागोचरत्वेनानिर्वाच्यत्वात् । नच ब्रह्मणो ज्ञानं स्वरूपमिति सम्प्रतिपन्नमिति त्वयोक्तं प्रागिति वाच्यं, ब्रह्मणो ज्ञानशब्दप्रतिपाद्यत्वेन ज्ञानं स्वरूपमित्युक्तमिति । यद्वा ब्रह्मणो ज्ञातृत्वनिषेधार्थं तत्र तथोक्तमिति । तस्मात्सर्वावभासकत्वात्परमप्रेमास्पदत्वाच्च ब्रह्म विज्ञानमानन्दमित्युच्यते । तादृशब्रह्मभूतचैतन्यावच्छेदकत्वाद्वृत्तेर्ज्ञानत्वोपचारः, तादृशब्रह्मभूतानन्दप्रतिफलनादेव वृत्तौ सुखित्वोपचार इति ।

**ननु** वृत्तौ ब्रह्मप्रतिफलने समाने सति कथमेकस्या वृत्तेर्ज्ञानत्वेनान्यस्यास्सुखत्वेन च व्यवहार इति, **उच्यते** ब्रह्मप्रतिफलनशालिनी शुद्धसत्त्वमयी अन्तर्मुखमनोवृत्तिस्सुखमित्युच्यते, ब्रह्मप्रतिफलनशालिनी

मलिनसत्त्वमयी बहिर्मुखमनोवृत्तिर्ज्ञानमित्युच्यते—इति । यद्वा ब्रह्मणि सर्वावभासकत्वं परमप्रेमास्पदत्वं चेत्यस्त्यंशद्वयं मायामध्यम्- तत्र काचिद्वृत्तिस्सर्वावभासकत्वमभिव्यञ्जयति ज्ञानमिति चोच्यते—काचित्तु परमप्रेमास्पदत्वमभिव्यञ्जयति सुखमिति चोच्यत—इति । अथवा ब्रह्मानन्दादन्यदेव वैषयिकमिदं सुखम्- इदं हि विषयेन्द्रियसंयोगादिनाऽन्तःकरणे जायते दुःखवत्- यदा सुखं जायते तदैव सुखाकारान्तःकरणवृत्तिर्भवति, तत्र च ब्रह्म प्रतिफलति, ततस्सुखसाक्षात्कारो जायते, यथा घटाकारान्तःकरणवृत्तौ ब्रह्मप्रतिफलनाद्घटसाक्षात्कारो जायते तद्वत्- सुखं हि घटवद्ज्ञाने विषयः । **नन्वस्मिन्**पक्षे 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः का वोपपत्तिरिति चेत् **उच्यते**—सुषुप्तौ सर्वभूतोपभोग्यं यदानन्दं तद्ब्रह्मानन्दस्य मात्रैवेति । तद्धि विषयेन्द्रियसंयोगाद्यजन्यत्वादवैषयिकम्-- एवमानन्दस्यान्तःकरणजन्मसुखवाचित्वादेव नानन्दपदेन ब्रह्मोच्यते, किंतु लक्ष्यत इत्युक्तम्-- यथा घटादिविषयेन्द्रियसंयोगजन्यवृत्तिज्ञानवाचिना ज्ञानशब्देन ब्रह्म लक्ष्यते तद्वदिति । **ननु** वृत्तेर्ज्ञानत्वमौपचारिकमिति मतस्य कथमुपपादनम्, **उच्यते**—ज्ञायते भास्यते सर्वमनेनेति सर्वावभासकं ब्रह्म ज्ञानशब्दस्य मुख्यार्थः, स्वस्मिन् ब्रह्मचैतन्यप्रतिफलनवशादेव स्वसंसृष्टं विषयं वृत्तिरवभासयतीति वृत्तिर्ज्ञानशब्दस्यामुख्यार्थ इति । एवमानन्द्यते सर्वमनेनेति व्युत्पत्त्या आनन्दशब्दो मुख्यो ब्रह्मणि 'एष ह्येवानन्दया'तीति श्रुतेः वैषयिकसुखे त्वमुख्य एव- तस्य स्वकाले स्वसंसृष्टस्य कस्यचिदेवानन्दनत्वादिति । **नन्वत्र** पक्षे ब्रह्मैव ज्ञानं ब्रह्मैवानन्दं चेति कृत्वा विज्ञानमानन्दं च ब्रह्मेति ज्ञानानन्दशब्दवाच्यस्य ब्रह्मणः कथं वाचामगोचरत्वमिति, **उच्यते**—इदं तदिति निर्देष्टुमशक्यत्वादेव ब्रह्म वाचामगोचरमित्युच्यते, नतु सुतरां शब्दाविषयत्वादिति । अन्यथा जिह्वा मे नास्तीतिवद्ब्रह्म शब्दाविषयमिति वचनं लज्जाकरमेव भवेत् । नचाप्रमेयस्य ब्रह्मणः कथं प्रमेयत्वमिति वाच्यं, वस्तुतोऽप्रमेयस्यापि ब्रह्मणो व्यवहारतः प्रमेयत्वमिति- अलं शाखाचंक्रमणेन, अनुकूलज्ञानमानन्दमित्युक्तिरयुक्तैव ।

## ब्रह्मणः आनन्दरूपत्वोपपत्तिः, ब्रह्मणः आनन्दगुणकत्वनिराकरणं च ।

**यदप्युक्तं** ब्रह्म नानन्दमात्रं किं त्वानन्दीति **तच्चायुक्तम्**—यथा न ज्ञानमात्रं ब्रह्म किंतु ज्ञानीत्युक्तिरयुक्ता तद्वदेव । तथाहि यद्यानन्दमानन्दवत्तर्हि तदपि मतुबन्तशब्दगतमानन्दमानन्दवद्भवेदेवानन्दत्वाविशेषादित्यनवस्थापातः । यदि तु मतुबन्तशब्दगतमानन्दमनानन्दं तर्हि प्रथममेवानन्दमनानन्दमस्तु- किं तेनापराद्धम् । नच स्वरूपभूतमानन्दमानन्दवत्- धर्मभूतमानन्दं तु नानन्दवदिति वाच्यं, धर्मभूतस्याप्यानन्दस्य स्वरूपमानन्दमेवेति तदपि स्वरूपभूतानन्दमेवेति । नच ब्रह्मस्वरूपानन्दमेवानन्दवन्न तु ब्रह्मधर्मानन्दमिति वाच्यं, तथा नियन्तुमशक्यत्वात्, स्वरूपानन्दादेव सर्वेष्टसिद्धौ धर्मानन्दाभ्युपगमस्य वैयर्थ्यादप्रमाणत्वाच्च । नच ब्रह्मण एवानन्दाभावे कथं जीवस्यानन्दं भवेदिति वाच्यं, ब्रह्मणो जीवस्य वा स्वरूपमेवानन्दमिति किमानन्दान्तराभावेन न्यूनत्वम् । **ननु** यदि ब्रह्मैवानन्दं तर्हि जीवस्यानन्दिनो धर्म एव भवेद्ब्रह्म, **मैवम्**—जीवस्याप्यानन्दत्वात् । हन्त तर्हि आनन्दरूप आनन्दगुणकश्च जीव इति सिद्धं, न- जीवोप्यानन्द एव नत्वानन्दी । नच सुख्यहमिति प्रत्यक्षात्कथं जीव-

स्यानन्दित्वाभाव इति वाच्यं, सुखधर्मकान्तःकरणतादात्म्याध्यासप्रयुक्तैव सा प्रतीतिरिति। नच जीवस्सुषुप्तावानन्दभुगिति भवत्येवानन्दीति वाच्यं, तदा जीवः स्वरूपानन्दभुगेवेति। नच स्वेन स्वं कथं भुज्यत इति वाच्यं, उपाधिवशादेवैकस्यैव भोक्तृत्वं भोग्यत्वं चागतमिति। यद्वा कारणशरीरी प्राज्ञो ब्रह्मानन्दं भुंक्त इति न विरोधः। नचैवं प्राज्ञस्यानन्दित्वं सिद्धमिति वाच्यं, तत्सिद्धिरस्माकमिष्टैवेति--विश्वतैजसप्राज्ञानामानन्दित्वं ज्ञानित्वं च सङ्गच्छत एव। तुरीयस्य हि तदुभयमसङ्गतम्। **नन्वेवं** प्राज्ञस्य ब्रह्मानन्दिनो धर्म एवानन्दो ब्रह्मेति सिद्धं, **मैवम्**—अविद्यावृत्तिप्रतिबिम्बभूतब्रह्मानन्द एव प्राज्ञोपभोग्यो न तु बिम्बभूत इति। नच समाधौ जीवेन ब्रह्मानन्दो भुज्यत इति समाहितस्य जीवस्य धर्म एव ब्रह्मेति वाच्यं, समाधावपि ब्रह्माकारान्तःकरणवृत्तिप्रतिफलितमेव ब्रह्मानन्दं विद्वाननुभवति न तु बिम्बानन्दमिति। नच मुक्तस्य बिम्बब्रह्मानन्दानुभवोस्तीति मुक्तधर्मो ब्रह्मेति वाच्यं, मुक्तस्य ब्रह्मानन्दरूपत्वेन ब्रह्मानन्दभोक्तृत्वस्यैवाभावात्। नचाभुज्यमान आनन्दोऽपुरुषार्थ एवेति वाच्यं, आनन्दप्राप्तेरेव पुरुषार्थत्वात्। नच मुक्त आनन्दं न प्राप्तवानिति वाच्यं, 'ब्रह्मविदाप्नोति पर'मिति श्रुतत्वात्परं ब्रह्म ह्यानन्दम्। नच मुक्तौ प्राप्यप्राप्तृप्राप्तिरूपत्रिपुटीसत्त्वं कथमिति वाच्यं, नास्माभिर्मुक्तौ जीव आनन्दं प्राप्नोतीत्युच्यते, येनोक्तदोषस्स्यात्। किंतु ब्रह्मानन्दं प्राप्तो जीवो मुक्त इत्युच्यत इति। तथा च मुक्तजीव आनन्दं ब्रह्मैवाभूदिति न कश्चिद्दोषः- 'ब्रह्मविद्ब्रह्मैव भव'तीति श्रुतेः। नच ब्रह्मविद्ब्रह्म भूत्वा आनन्दवान्भवतीति श्रुतितात्पर्यमिति वाच्यं, तर्हि ब्रह्मापेक्षया तद्गुण आनन्द एवोत्कृष्टस्स्यात्। नचेष्टापत्तिः- 'नतत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुतिविरोधात्। किंच- 'आनन्दो ब्रह्मेति व्यजाना'दित्येव श्रूयते, नत्वानन्दि ब्रह्मेति। तस्मादानन्दमेव ब्रह्म नत्वानन्दि। **ननु** ब्रह्मानन्दं नाप्यानन्दि किं तु आनन्दनमेव- 'एष ह्येवानन्दयाती'ति श्रुतेः, **मैवम्**—यदि ब्रह्म स्रगादिवदानन्दकरं तर्हि जडमेव भवेत्। **नन्वत** एव ज्ञानं ब्रह्मेत्युक्तं लोकेपि ज्ञानं हि ज्ञातुरानन्दकरं तस्माद्ज्ञानस्वरूपं ब्रह्म नानन्दरूपं किं त्वानन्दकरमिति, **अत्रोच्यते**—यथा सूर्य एव प्रतिसूर्यं करोति नासूर्यः तद्वदानन्द एवानन्दप्रतिबिम्बं करोति नत्वानन्दादन्यः- अन्तर्मुखमनोवृत्तावानन्दः प्रतिबिम्बतीति वैषयिकं सुखमानन्दप्रतिबिम्ब एव- अन्तःकरणे सुखं जायत इति पक्षेपि आनन्दादीश्वरादेव तज्जायते- 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इति श्रुतेः। सर्वभूतकर्तृत्वे एव सत्यानन्दस्य सुखकर्तृत्वं न स्यात्किम्। तस्मादानन्दकरत्वादपि ब्रह्म आनन्दमेव भवति। नचैवमानन्दस्य ब्रह्मणः कथं ज्ञानस्वरूपत्वमिति वाच्यं, यथा आनन्दकृत्त्वादानन्दमित्युच्यते ब्रह्म तथा आनन्दकृत्त्वाद्ज्ञानमित्यप्युच्यत इति। घटाद्याकारवृत्तिप्रतिफलितचैतन्यं हि ज्ञानं, ततश्च वृत्तावानन्दप्रतिबिम्बकृत्त्वाद्ब्रह्मानन्दमिति, ज्ञानप्रतिफलनकृत्त्वात्तु ज्ञानमिति चोच्यत इति कृत्वा विज्ञानमानन्दं ब्रह्मेत्युक्तं श्रुत्या। नचैकमेव ब्रह्म कथमेकस्यां वृत्तावानन्दप्रतिबिम्बमन्यस्यां पुनश्चैतन्यप्रतिबिम्बं च कुर्यादिति वाच्यं, वृत्तिद्वये प्रतिफलितमेकरूपमेव ब्रह्म वृत्त्याकारवैजात्यात्क्वचिद्विषयावभासकं सद्ज्ञानमित्युच्यते, क्वचित्तु प्रमात्रानन्दकरं सत्सुखमित्युच्यत इति। इदं च ब्रह्मणो विषयावभासकत्वमानन्दयितृत्वं च मायाकृतमेव, नतु वास्तवमिति **निर्विशेष-**

**ब्रह्मसिद्धिरिति संक्षेपः । ननु** यदुक्तमानन्दत्वं श्रुत्या न कण्ठोक्तमिति, **तदसत्**—'स एको ब्रह्मण आनन्दः'- 'आनन्दं ब्रह्मणो विद्वा'निति व्यतिरेकनिर्देशेन कण्ठोक्तत्वात् । किंच ज्ञातृत्वमेवानन्दित्वं ज्ञातृत्वं च कण्ठोक्तमेवेति **रामानुजः, तदसत्**—स एक इति श्रुतिगतब्रह्मशब्दो हिरण्यगर्भाख्यकार्यब्रह्मपर एव- एक इत्यानन्दपरिच्छेददर्शनात् । अपरिच्छिन्नो हि परब्रह्मानन्दः- आनन्दं ब्रह्मण इत्यत्र तु ब्रह्मणस्स्वरूपमानन्दमित्यर्थान्न त्वदिष्टसिद्धिः । अन्यथा आनन्दो ब्रह्मेति सामानाधिकरण्यं श्रुत्युक्तं हन्येत । ज्ञातृत्वादानन्दित्वं भिन्नमेवेति सर्वलोकविदितम्- नहि घटोयमिति ज्ञानवत्त्वमेवानन्दवत्त्वं ज्ञानानन्दयोर्भेदात् । अन्यथा ज्ञानपर्यायेष्वेव कोशेष्वानन्दशब्दः पठ्येत । किंच ज्ञानेन ज्ञेयमवभास्यते- नत्वानन्देन । प्रत्युत पुरुषमानन्दो मोहयत्येवेति न ज्ञानस्यानन्दत्वं, येन ज्ञातृत्वमेवानन्दित्वं भवेत् । किंच अनुकूलं ज्ञानमानन्दमित्युक्तमितः प्राक्त्वया, इदानीं तु ज्ञातृत्वमेवानन्दित्वमित्युच्यते-- ज्ञातृत्वं चानुकूलप्रतिकूलज्ञानक्रियाश्रयत्वमिति कथं ज्ञातृत्वमात्रमानन्दित्वम् । नचानुकूलज्ञातृत्वमेवानन्दित्वमिति वाच्यं, श्रुत्या ज्ञातृत्वमेव कण्ठोक्तं नानुकूलज्ञातृत्वमिति । नच सापि श्रुतिरनुकूलज्ञातृत्वपरैवेति वाच्यं, तर्हि अनुकूलज्ञातैवात्मा भवेन्न तु प्रतिकूलज्ञातेति । **ननु** ज्ञातृत्वमात्रं जीवेश्वरसाधारणधर्मः-- अनुकूलज्ञातृत्वरूपमानन्दित्वमीश्वरधर्मः- अनुकूलज्ञातृत्वरूपमानन्दित्वं प्रतिकूलज्ञातृत्वरूपं दुःखित्वं च जीवधर्म इति, **मैवम्**—यदीश्वरस्यानुकूलज्ञातृत्वमेव न तु प्रतिकूलज्ञातृत्वं, तर्हि कथं सर्वज्ञत्वमिति । नचेश्वरस्य सर्वमप्यनुकूलज्ञानमेव, नतु प्रतिकूलज्ञानं किञ्चिदस्तीति वाच्यं, नथासतीश्वरस्य भक्तरक्षणं रक्षोहरणं च न स्यादिति । नच तस्य भक्ता अनुकूला रक्षांसि प्रतिकूलानीत्येव नतु तद्ज्ञानमिति वाच्यं, सर्वत्रापि तथैवेत्युक्तत्वात्- ज्ञानमात्रं हि सर्वस्यानुकूलं विषयावभासकत्वादिति । नच यदि ज्ञानमात्रमनुकूलं तर्हि अनुकूलत्वादेव ज्ञानमात्रमानन्दं भवति- अनुकूलो ह्यानन्दः- तथाच ज्ञातृत्वमेवानन्दित्वमिति वाच्यं, आनन्दो विषयावभासकत्वादनुकूल इति न- आनन्दस्य विषयावभासकत्वाभावात् । किं तर्हि भोग्यत्वादेवानुकूलः । भोग्यत्वं च भोक्तुमिष्टत्वं, नतु भोगविषयत्वमात्रं, तथासति- भोग्यं दुःखमप्यनुकूलमेव भवेत्- एवमनुकूलं भोग्यमानन्दं तद्भोगस्तु ज्ञानमिति न भोग्यभोगयोरानन्दज्ञानयोरैक्यं, येनानन्दित्वज्ञातृत्वयोरैक्यं भवेत् । नच भोक्तृत्वमेवानन्दित्वं तदेव ज्ञातृत्वं चेति वाच्यं, किं भोक्तृत्वमात्रमानन्दित्वं ? किं वा आनन्दभोक्तृत्वमानन्दित्वम् ? आद्ये दुःखभोक्तृत्वमप्यानन्दित्वं भवेत् । द्वितीये तदानन्दभोक्तृत्वमानन्दज्ञातृत्वमेवेति कथं ज्ञातृत्वमेवानन्दित्वमित्युच्यते । अपितु- आनन्दज्ञातृत्वमानन्दित्वमिति वक्तव्यं । नच तथैव वदाम इति वाच्यं, तथासति- आनन्दं ज्ञेयमेव भवति नतु ज्ञानमिति कथं ज्ञानमेवानन्दमित्युक्तम् । **ननु** भवतु ज्ञानानन्दयोर्भेदः तथापि ज्ञातृत्वानन्दित्वयोरभेद एव- आनन्दज्ञातुरेवानन्दित्वादिति, **मैवम्**—यद्यानन्दज्ञातैवानन्दी तर्हि घटज्ञातापि घटी भवेत् । नच दुःखज्ञाता दुःखी भवत्येवेति वाच्यं, दुःखज्ञातुरपि दुःख्यहमिति प्रतीतिर्भ्रान्तिरेवेति- यद्येन ज्ञायते तत्तस्य धर्मो नैव भवतीति सिद्धान्तात् । नहि ज्ञेयं ज्ञातुर्भवति धर्मः । नच बाह्यस्य ज्ञेयस्य ज्ञातृधर्मत्वाभावेपि आन्तरं ज्ञेयं ज्ञातुर्धर्मो भवत्येवेति वाच्यं, किमपेक्षया आन्तरस्य

ज्ञेयस्य ज्ञातृधर्मत्वम्? यदि देहापेक्षया तर्हि ज्ञेयं चक्षुरादीन्द्रियं ज्ञातृधर्म एव भवेत्, तथा प्राणश्च पञ्चवृत्तिको ज्ञातृधर्म एव भवेत्, यदि तु देहप्राणेन्द्रियापेक्षया तर्हि अन्तःकरणमात्मधर्मो भवेत्, तदप्यात्मना ज्ञायते हि- यदित्वन्तःकरणापेक्षया तर्हि तदान्तरं वस्तु ज्ञातृभूतमेवेति न ज्ञेयम् । नचान्तःकरणापेक्षया आन्तरे सुखदुःखे ज्ञेये ज्ञातुर्धर्मभूते इति वाच्यं, तयोरन्तःकरणधर्मत्वात् । नच दुःखमेवान्तःकरणधर्मो न तु सुखमिति वाच्यं, द्वयोरन्तःकरण एव जन्मनाशदर्शनेन अन्तःकरणधर्मत्वाविशेषात् । तस्मादानन्दज्ञातृत्वादेव जीवात्मा परमात्मा वा नानन्दी भवति । नचानन्दभोक्तृत्वादानन्दी भवतीति वाच्यं, भोग्यस्य भोक्तृधर्मत्वाभावात्- नहि भोग्यं स्रक्चन्दनवनितादिविषयजातं भोक्तृधर्मो भवति । नच सुखदुःखे एव भोग्ये, स्रगादयस्तु भोग्यावच्छेदका एवेति न स्रगादीनां भोक्तृधर्मत्वं, किंतु सुखदुःखयोरेवेति वाच्यं, तर्हि भोग्यत्वादेव सुखदुःखे भोक्तृधर्मौ न भवतः- किं त्वन्तःकरणधर्मावेव । नच सुख्यहं दुःख्यहमिति प्रतीतेर्भोक्तृधर्माववेति वाच्यं, सुखदुःखाकारपरिणतान्तःकरणतादात्म्याध्यासप्रयुक्तैव तत्प्रतीतिरिति । नचैवमन्तःकरणधर्मस्य सुखस्य कथं ब्रह्मस्वरूपत्वमिति वाच्यं, केनोक्तमन्तःकरणधर्मः सुखं ब्रह्मेति । नचानन्दो ब्रह्मेति श्रुत्यैवोक्तमिति वाच्यं, अन्तःकरणधर्मसुखादन्य एव स आनन्द इति । कोसौ सुखादन्य आनन्द इति- उक्तमेव ब्रह्मेति । ननु किं तद्ब्रह्मेति- उक्तमेव आनन्दो ब्रह्मेति ।

**ननु** आनन्दपदार्थज्ञानं विना ब्रह्मपदार्थज्ञानस्य, ब्रह्मपदार्थविज्ञानं विना आनन्दपदार्थज्ञानस्य चानुदयादन्योन्याश्रय इति, **मैवम्**—ज्ञानं ब्रह्मेति श्रुत्या ब्रह्मपदार्थस्य सुज्ञेयत्वात् । **ननु** तत्राप्ययं दोषोस्त्येव, तथाहि- किं तद्ज्ञानं- ब्रह्म, किं तद्ब्रह्म- ज्ञानमिति, यद्वा- किं तद्ब्रह्म- ज्ञानं, किं तद्ज्ञानं- आनन्दं, किं तदानन्दं- ब्रह्म, किं तद्ब्रह्मज्ञानं, किं तद्ज्ञानं- आनन्दं इति चक्रकापत्तिदोषः । नचेष्टापत्तिः- ब्रह्मज्ञानस्यासिद्धेरिति, **उच्यते**—सर्वोपि लोकोऽनुकूलविषयसेवया सुखं, प्रतिकूलविषयसेवया दुःखं च प्रपद्यते हि, तत्र किं तत्सुखं दुःखं चेति प्रश्नस्य किमुत्तरम्- न किमपि, कथं तर्हि तयोस्सिद्धिः- अनुभवैकवेद्यत्वात्तयोस्सिद्धिः, कथं तर्हि तदनुभवस्य सिद्धिः- आत्मवेद्यत्वात्, किं तदात्मवेद्यत्वं- आत्मकर्तृकज्ञानविषयत्वं, कथं तदात्मकर्तृकज्ञानस्य सिद्धिः- ज्ञानान्तराच्चेदनवस्था, स्वतश्चेत्सुखदुःखानुभवेन किमपराद्धम्? तस्यैव स्वतस्सिद्धत्वमुच्यतां, यद्यात्मत एवानुभवस्य सिद्धिस्तर्हि कथं तस्यात्मनस्सिद्धिः- स्वत एव, कुतः- ज्ञानस्वरूपत्वात्, किं तद्ज्ञानं- आत्मैव, कस्स आत्मा- ज्ञातृभूतं ज्ञानमेव, किं तद्ज्ञातृभूतं ज्ञानं- आत्मैव, हन्त तर्ह्यन्योन्याश्रयदोषस्तवापि प्राप्तः । अपिच ज्ञानपदार्थज्ञानाधीनं ज्ञान्यात्मपदार्थज्ञानं, ज्ञान्यात्मपदार्थज्ञानाधीनं च ज्ञानपदार्थज्ञानमित्यन्योन्याश्रयः । यद्वा ज्ञान्यात्मपदार्थज्ञानं स्वाश्रयपदार्थज्ञानाधीनमित्यात्माश्रयः । नच ज्ञाने ज्ञाते सति तद्वानात्मा ज्ञायत इति न दोष इति वाच्यं, आत्मनोपि ज्ञानत्वात् । **ननु** आत्मस्वरूपभूते ज्ञाने ज्ञाते सत्यात्मापि ज्ञात एव भवेदिति, तर्हि ब्रूहि- किं तदात्मस्वरूपभूतं ज्ञानं- नाहं वक्तुं शक्नोमीतिचेत्किं तव तदशक्तिरात्मस्वरूपापरिज्ञानात्? यद्वा तस्य वागगोचरत्वात्? नाद्यः- तवैवात्मत्वात् । द्वितीय

इष्ट एव । **नन्वेवमा**त्मसिद्धावपि कथं ब्रह्मसिद्धिरिति **चेदुच्यते**—आत्मन एव ब्रह्मत्वादात्मनि सिद्धे ब्रह्मापि सिद्धमेव । नच ब्रह्मणस्सिद्धावपि तद्ज्ञानमसिद्धमिति वाच्यं, अज्ञातस्य ब्रह्मणस्सिद्ध्ययोगाद्ब्रह्मसिद्ध्या तद्ज्ञानमपि सिद्धमेवेति ।

**ननु** आत्मत्वात्सर्वभूतानां सिद्धं ब्रह्म भवत्वपि तु- 'तत्स्वरूपं तु किं ज्ञानं किमानन्दं नु किं परम्' तस्माद्ब्रह्मस्वरूपमसिद्धमेतावतापीति, **मैवम्**—ब्रह्मणस्सिद्धौ कथं पुनस्तत्स्वरूपस्यासिद्धिः-- नहि घटे सिद्धे घटस्वरूपासिद्धिः, नापि निस्स्वरूपं किञ्चिद्वस्तु सिद्ध्यति । तथासति शशशृङ्गस्यापि निस्स्वरूपस्य सिद्धिप्रसङ्गात्- सर्वं हि सिद्ध्यद्वस्तु सस्वरूपमेव सिद्ध्यति न तु स्वरूपं विना । तस्माद्यदि तव ब्रह्म सिद्धं तर्हि तत्स्वरूपमपि सिद्धमेव । **तर्हि** मम ब्रह्मस्वरूपज्ञानाभावादसिद्धमेव ब्रह्म, **मैवम्**—आत्मत्वाद्ब्रह्मणः- आत्मा हि सिद्धः । नचात्मस्वरूपपरिज्ञानाभावान्ममात्माप्यसिद्ध एवेति वाच्यं, तवैवात्मत्वात्कथं तवैव त्वमसिद्धो भवेः । नच नाहमात्मेति वाच्यं, किं त्वमनात्मा- न, अनात्मापि नाहं, तर्हि कस्त्वं- ज्ञाताऽहं, ज्ञातैवात्मा- न- ज्ञाता न भवत्यात्मेति त्वयोक्तत्वात् । **ननु** त्वं ज्ञातैव भवसि, तथापि ज्ञातुस्तव स्वरूपं किं त्वं वेत्सि- ओम् , किं तत्- ज्ञातृत्वमेव- न- तद्धि ज्ञातुस्तव धर्मः- तर्हि ज्ञानं मम स्वरूपं, तदेवात्मनोपीति त्वमात्मैव । तस्माद्ज्ञानमेवात्मा । **नन्वेवंचेद्**—क आत्मा ज्ञानं, किं ज्ञानं आत्मा- इति पूर्वोक्तान्योन्याश्रयदोषस्य कः परिहार इति, **उच्यते**—आत्मज्ञानानन्दसत्यानन्तपरब्रह्मपुरुषोत्तमादिशब्दा एकार्थवाचका एव- पर्यायत्वाद्घटकलशकुम्भादिशब्दवदिति । एवमेकार्थवाचित्वे सत्यपि तेषां प्रवृत्तिनिमित्तभेदोस्त्येव- अत्त्यतत्याप्नोतीति वा आत्मा, ज्ञायतेऽनेनेति ज्ञानमित्यादिव्युत्पत्तेः । तस्य च स्वरूपमिदमिति निर्देष्टुमशक्यमेव- 'यत्तदद्रेश्यमग्राह्य'-मित्यादिश्रुतेः । ज्ञानानन्दशब्दौ च आत्मब्रह्मादिशब्दवद्ब्रह्मप्रतिपादकावेव, नतु ब्रह्मस्वरूपवाचकौ-- नहि घटादिविषयेन्द्रियसंयोगजन्यं ज्ञानमानन्दं वा ब्रह्मस्वरूपं भवति । नच नित्यं ज्ञानं नित्यमानन्दं च ब्रह्मेति वाच्यं, नित्ययोर्ज्ञानानन्दयोरभावात् । एवं स्वरूपेण ब्रह्मणो दुर्वचत्वेपि स्वभावेन ब्रह्म सुवचमेवेति न शास्त्रयोनित्वाधिकरणविरोधः, नाप्यौपनिषदत्वश्रुतिविरोधः, नापि 'वेदैश्च सर्वैरहमेव वेद्य' इति गीताविरोधः । कः पुनर्ब्रह्मणस्स्वभाव इति **चेदुच्यते**—सर्वावभासकत्वसर्वानन्दयितृत्वसर्वाधारत्वनिराधारत्वसर्वव्यापित्वसत्यत्वनित्यत्वादिरूप इति । नच ब्रह्मण एव स्वभाववत्त्वे सविशेषत्वमेव भवेदिति निर्विशेषब्रह्मासिद्धिरिति वाच्यं, यावद्व्यवहारं ब्रह्म सविशेषमेवेत्युक्तत्वात् । परमार्थतो हि सर्वावभासकत्वादयो ब्रह्मणि न सन्तीति ब्रह्म निर्विशेषमित्युक्तम् । तस्माद्ज्ञानमानन्दं वा न ब्रह्मणः स्वरूपम् ।

**ननु** माभूदानन्दस्य ब्रह्मस्वरूपत्वं ब्रह्म तु भवत्येवानन्दि, **मैवम्**—किं सर्वमानन्दयतीति ब्रह्म आनन्दीत्युच्यते ? यद्वा स्वयमानन्दशालीति- आद्य इष्ट एव । नतु द्वितीयः- ब्रह्मणो जीवस्येव सुखित्वादिविकारायोगात् । नच दुःखित्वं मास्तुनाम- सुखित्वमस्तीति वाच्यं, यदि ब्रह्मापि सुखवत्स्यात्तर्हि सुखस्यानित्यत्वात्कदाचिद्ब्रह्म सुखयुक्तं कदाचित्तु सुखरहितमिति विकार्येव भवेदिति । नच

जीवस्य सुखमेवानित्यं ब्रह्मणस्तु सुखं नित्यमिति वाच्यं, गगनारविन्दवन्नित्यसुखस्यैवाभावात् । सर्वं हि सुखं विषयेन्द्रियसंयोगादिजन्यत्वादनित्यमेवेति- ब्रह्मणश्च विषयेन्द्रियाद्यभावान्नास्त्येव सुखमिति । नचैवं विषयोपभोगविधुरस्य समाहितचित्तस्य सुखाभावप्रसङ्ग इति वाच्यं, तस्य ब्रह्मानुभवादस्ति सुखित्वमिति 'रसगॅं ह्येवायं लब्ध्वाऽऽनन्दी भवती'ति श्रुतेः । ननु ब्रह्मण आनन्दित्वादेव तदनुभवाज्जीवस्यानन्दित्वमिति, **मैवम्**—स्रगादिविषयस्यानानन्दित्वेपि तदनुभवाज्जीवस्यानन्दित्वदर्शनात् । नचैवं ब्रह्मण आनन्दत्वादेव तल्लाभाज्जीव अनन्दी भवतीति वाच्यं, आनन्दं लब्ध्वा आनन्दी भवतीति वाक्यस्य पुनरुक्तिदोषग्रस्तत्वात् । आनन्दलाभ एव खल्वानन्दिभाव. । नच 'रसो वै स' इति श्रुतिर्ब्रह्मण आनन्दरूपत्वं वक्तीति वाच्यं, तत्र रसशब्दस्यानन्दवाचित्वाभावात् । नच तर्हि रस एव ब्रह्मेति वाच्यं, रसस्य जिह्वाग्राह्यस्य अग्राह्यब्रह्मत्वायोगात् । तर्हि कः श्रुतेरर्थ इति चेदुच्यते—यथा रसः पुरुषेण भुक्तस्सन्पुरुषमानन्दयति तथा ब्रह्मापि जीवेनानुभूतं सज्जीवमानन्दयतीति रसो ब्रह्मेत्युक्तमिति । नचानन्दो ब्रह्मेति श्रुतिर्ब्रह्मण आनन्दरूपत्वं वक्तीति वाच्यं, तत्रापि आनन्दयितृत्वादेवोच्यते आनन्द इति ब्रह्म । **ननु** विदुषा समाधावानन्दमेवानुभूयते नतु तदतिरेकेण किमपीति कृत्वा आनन्दं ब्रह्मस्वरूपमेव- अत एव 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'ति श्रूयते । ब्रह्मणस्स्वरूपभूतमानन्दमिति हि तच्छ्रुत्यर्थ इति त्वयाप्युक्तमिति, **मैवम्**—स्थूलारुन्धतीन्यायेन ब्रह्मणि बुद्धिप्रवेशं जनयितुमानन्दं ब्रह्मणो रूपमित्युक्तं, नतु वस्तुत आनन्दं ब्रह्मणः स्वरूपं, यथा ज्ञानं तद्वत् । किंतु ब्रह्मणस्स्वरूपं दुर्वचमेव । तच्च दुर्वचमपि ब्रह्मणः स्वरूपं भासकत्वानन्दयितृत्वव्यापित्वादिनिमित्तवशाद्ज्ञानानन्दात्मादिशब्दैः प्रतिपाद्यत इत्युक्तम् । निर्विकल्पकसमाधौ तु जीवो नानन्दमनुभवति, नापि ब्रह्मानुभवति- अनुभवित्रनुभाव्यानुभवसत्त्वे त्रिपुटीप्रसङ्गेन समाधेर्निर्विकल्पकत्वस्यैवासिद्धेः । किंतु जीवो ब्रह्मरूपेणैवावतिष्ठते । साच स्थितिस्सर्वसंसारदुःखप्रहाणात्परमानन्दमयीति व्यपदिश्यत इति । नचैवं नैयायिकोक्तविधया दुःखध्वंसएव मोक्ष इति सिद्धमिति वाच्यं, जीवस्य ब्रह्मात्मनावस्थितिरेव मोक्ष इत्युक्तत्वात् । 'ब्रह्मविद्ब्रह्मैव भव'तीति हि श्रुतं । **ननु** यदि मुक्तावानन्दो नास्ति दुःखध्वंस एवास्ति, तर्हि पाषाणकल्पया तया मुक्त्या किं जीवस्येति, **मैवम्**—यदि निर्विशेषं ब्रह्म पाषाणतुल्यं तर्हि मुक्तिः पाषाणकल्पा स्यात्- निर्विशेषब्रह्मभावापत्तिर्हि मोक्षः । नच निर्विशेषब्रह्म पाषाणतुल्यमेवेति वाच्यं, पाषाणस्य भास्यत्वानृतत्वादिबहुविशेषवत्त्वात् । यदि तु दुःखशून्यत्वेन ब्रह्म पाषाणकल्पमित्युच्यते, तर्हि तत एव हेतोस्त्वदभिमतं ब्रह्मापि पाषाणकल्पमेव भवेत् । नच मदभिमतस्य ब्रह्मणस्सविशेषत्वादस्ति तस्य पाषाणाद्विशेष इति वाच्यं, पाषाणस्य सविशेषत्वान्निर्विशेषस्य ब्रह्मणोस्त्येव पाषाणाद्विशेष इति । नच निर्विशेषस्य विशेष इति वचनं व्याहतमिति वाच्यं, सविशेषस्य विशेष इति वचनमप्यात्माश्रयान्योन्याश्रयादिदोषग्रस्तमेवेति । किंच मन्मते निर्विशेषस्य ब्रह्मणो निर्विशेषत्वादेव पाषाणकल्पत्वायोगः, तव मते तु सविशेषं ब्रह्म सविशेषत्वादेव पाषाणभूतमेव- ब्रह्म हि कनकं कटकादिरूपेणेव चेतनाचेतनजगद्रूपेण परिणतमिति तव मतं, तथाच ब्रह्म पाषाणमेवेति सिद्धम् । तस्मान्निर्विशेषब्रह्मभाव-

एव मोक्षः, स एव सर्वैराशास्य इति । **ननु** आनन्दमेव सर्वैराशास्यते—तादृशानन्दकरत्वेन चानुकूलविषय आशास्यते, ब्रह्म च नानन्दं, नाप्यानन्दकरं निर्विशेषत्वादेवेति कथं पुरुषस्य मुमुक्षासिद्धिः इति, **मैवम्**—यदाशास्यते पुरुषैरानन्दं तत्किं निर्विशेषमुत सविशेषम् ? आद्ये- निर्विशेषानन्द इव निर्विशेषब्रह्मण्यपि पुरुषस्य कामो भवेदेव । द्वितीये कैर्विशेषैर्विशिष्टं तदानन्दं त्वं ब्रूहि । नचानुकूलत्वप्रेमास्पदत्वभोग्यत्वादयो विशेषास्सन्त्यानन्द इति वाच्यं, नित्यद्रव्यवृत्तयो व्यावर्तका विशेषा इति विशेषलक्षणात् । आनन्दस्य च गुणत्वादनित्यत्वाच्च नानन्दवर्तिनः ते अनुकूलत्वादयो विशेषा भवन्तीति ।

**ननु** न व्यावर्तकधर्ममात्रमेव विशेष इत्यस्माकं मतम्- अनुकूलत्वादयश्च व्यावर्तकधर्मा एवेति सविशेषमेवानन्दमिति, **मैवम्**—तथासति निर्विशेषेपि ब्रह्मणि निर्विशेषत्वरूपधर्मोऽस्तीति तदपि सविशेषमेव भवेदिति, तत्रापि पुरुषस्य मुमुक्षा सिद्ध्यत्येवेति । वस्तुतस्तु आनन्दमनुभूतवन्तं पुरुषं प्रति त्वयानुभूते आनन्दे कोस्ति विशेष इत्युक्त न कोपीति स प्रतिवक्ति- न त्वस्मिन्नानन्दे अयं विशेषोस्तीति । आनन्दजनकेष्वेव विषयेषु विशेषसद्भावः, नतु तज्जन्ये आनन्दे सर्वेषामप्यानन्दानामानन्दत्वाविशेषात् । तथाच निर्विशेष एव जन्यानन्दे यथा पुरुषस्य कामः, तथा निर्विशेषेपि ब्रह्मणीति बोध्यम् । **नन्वेवं** दुःखहेतुविशेषसत्त्वेपि दुःखं सर्वत्र सममेवेति निर्विशेषमेव- तत्साम्यान्निर्विशेषब्रह्मणि द्वेषः किमिति माभूत , **मैवम्**—यदि निर्विशेषं ब्रह्म तदात्मभिन्नं स्यात्तर्हि तत्र द्वेषः पक्षान्तरेण भवेदेव- नत्वात्मभिन्नं किं त्वात्मैव- आत्मनि हि कस्यापि द्वेषो न भवति- प्रत्युत परमा प्रीतिरेव भवतीति । नचैवं परमप्रेमास्पदत्वादानन्दमेव ब्रह्मेति वाच्यं, केनोक्तमानन्दं ब्रह्म नेति- किंतु यल्लोके आनन्दशब्देन प्रसिद्धं तद्वस्तु ब्रह्म नेत्युच्यते- परमप्रेमास्पदत्वादानन्दशब्दवाच्यमेव ब्रह्म, नत्वानन्दरूपमिति हि प्रतिपादितम् । नचायमात्मा परानन्दः परप्रेमास्पदं यत इति विद्यारण्यस्वामिभिरेव परमानन्दरूपत्वं ब्रह्मणस्साधितमिति वाच्यं, परप्रेमास्पदत्वात्परमानन्दशब्दप्रतिपाद्यं संविद्रूपं ब्रह्मेति तदर्थात् । नचानन्दरूपत्वाभावे ब्रह्मणस्संविद्रूपत्वमपि कथमिति वाच्यं, संविद्रूपत्वमपि ब्रह्मणस्संविच्छब्दप्रतिपाद्यत्वप्रयुक्तमेवेति । नच संविदात्मेति तैः कण्ठत एवोक्तमिति वाच्यं, आत्मा ज्ञाता न भवति किंतु ज्ञानमेवेति स्थूलारुन्धतीन्यायमाश्रित्य तैस्तत्र तथोक्तत्वादिति । तस्मात्कस्यचिद्धर्मभूतं ज्ञानं आनन्दं वा न ब्रह्म- स्वतन्त्रत्वाद्ब्रह्मणः, धर्मस्य च परतन्त्रत्वादिति **संक्षेपः** ।

**ननु** 'कोह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्या'दिति श्रुतेः कथं ब्रह्मण आनन्दस्वरूपत्वाभावः, **मैवम्**—यद्यानन्दस्वरूपं ब्रह्म तर्हि आनन्दं ब्रह्मेति सुवचं, सुज्ञेयमेवेति कृत्वा कथं वाङ्मनसाविषयं भवेद्ब्रह्म, किं मनोवेद्यमानन्दं मनोऽविषयं स्यात्- 'यन्निरुक्तं वचसा निरूपितं धियाऽक्षभिर्वा मनसोत यस्य । माभूत्स्वरूपं गुणरूपबृंहितं स वै गुणापायविसर्गलक्षण' इति कथमुच्येत । नच तत्रैव 'ज्ञानात्मने भगवते नम ईश्वराये'त्युक्तमिति वाच्यं, यस्य स्वरूपं स्वयम्प्रकाशं स ज्ञानात्मेत्यर्थात् । एवमेव निर्वाणसुखानुभूतिरित्यत्रापि बोध्यम् । यस्य स्वरूपं निरतिशयप्रीतिपात्रं मुक्तोपभोग्यं च तदुच्यते निर्वाणसुखमिति । **ननु** श्रुतिशतसंवादात्स्मृत्यादिसंवादाच्च सर्वथापि ज्ञानानन्दा-

वात्मनः स्वरूपभूतावेव, विद्वदनुभवोऽप्यत्र प्रबलं प्रमाणं- विद्वांसो हि समाधौ स्थिरमानन्दमनुभवन्ति-- यद्यानन्दो ब्रह्म न स्यात्तर्हि विद्वद्भिस्तत्र कथमानन्दोऽनुभूयेत- नहि तत्र विषयसेवाऽस्ति येन वैषयिकानन्दस्स इत्युच्येत इति, **मैवम्**—यदि श्रुत्यादीनां ज्ञानानन्दयोरात्मस्वरूपत्वे तात्पर्यं तर्हि नेतिनेतीति सर्वनिषेधावधित्वेन ब्रह्मप्रतिपादनं तासां नैव सम्भवेत् । भागवते चोक्तम्—'निषेधशेषो जयतादशेष'- इति । नच कतिपयविशेषनिषेध एव तद्वाक्यानां तात्पर्यमिति वाच्यं, तथा संकोचनस्यायुक्तत्वात् । यद्यन्निषेद्धुं शक्यं तत्सर्वं निषिद्धं हि निषेधवाक्यैः । नचान्तःकरणधर्मभूतावेव ज्ञानानन्दौ निषिद्धौ, न त्वात्मस्वरूपभूताविति वाच्यं, अन्तःकरणधर्मभूतज्ञानानन्दातिरिक्तात्मस्वरूपभूतज्ञानानन्दयोरेवाधुनाप्यसिद्धेः । **यदुक्तं** विद्वदनुभवोऽत्र प्रमाणमिति **तदपि न**—समाधौ येन विदुषा आनन्दमनुभूयते स विद्वानात्मैव ब्रह्मेति कथमानन्दस्य ब्रह्मत्वं, अन्तःकरणं हि स्रगादिविषयसेवयेव ब्रह्मध्यानेनापि सुखाकारेण परिणमते, तच्च सुखं समाहितेन ज्ञायत इति न समाधावनुभूयमानस्य स्थिरस्याप्यानन्दस्य ब्रह्मत्वं परिच्छिन्नत्वादिति । नचापरिच्छिन्नमानन्दं ब्रह्मेति वाच्यं, तस्यैवाभावात्- नह्यपरिच्छिन्नानन्दसत्त्वे विद्वदनुभवः प्रमाणं- विद्वदनुभवविषयत्वापरिच्छिन्नत्वयोरेकत्रायोगात्- यद्यदनुभवविषयं तत्तत्परिच्छिन्नमेव घटवदिति । नापि शास्त्रं प्रमाणं- अपरिच्छिन्नब्रह्मसत्त्वे, शास्त्रं प्रमाणं नतु तादृशानन्दसत्त्वे इति । नचानन्दवल्ली तत्र प्रमाणमिति वाच्यं, सुखलोभाद्विषयसक्तानां संसारिजीवानां विषयवैतृष्ण्यजननार्थं तस्यास्तथा प्रवृत्तत्वात् । विषयसेवया तव यद्भवति सुखं तत्परिच्छिन्नमत्यल्पं तस्मात्तत्याज्यमेव दुःखहेतुत्वात्- सुखं हि क्षणिकत्वाद्भोगदशायामेव नाशभीत्या दुःखकरं, भोगात्प्रागलब्धं सद्बहुप्रयत्नप्रयासकरं च सद्दुःखकरं, भोगादनन्तरं नष्टं दुःखकरं, 'सुखस्यानन्तरं दुःख'मिति स्मर्यते । एवं सुखस्य दुःखकरत्वादेव सुखहेतवोऽर्था अपि दुःखकरा इति त्याज्या एव- 'अर्थानामार्जने दुःखं तथैव परिपालने । नाशे दुःखं व्यये दुःखं धिगर्थान् क्लेशकारिण' इति हि स्मृतम् । एवं गुरुणा विषयवैराग्ये उपदिष्टे सति शिष्यस्तं प्रतिवक्ति- 'त्याज्यं सुखं विषयसङ्गमजन्म पुंसां दुःखोपसृष्टमिति मूर्खविचारणैषा । व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान् कोनाम भोस्तुषकणोपहितान् हितार्थी' इति, नास्ति वैषयिकसुखादन्यत्सुखमिति च । ततो गुरुणा वक्तव्यमेवं शिष्यं प्रति- सोम्य मैवं वादीः- अस्ति विषयसुखादन्यन्नित्यसुखं ब्रह्मेति, सच शिष्यस्तन्नित्यसुखलोभेन विषयासक्तिं परित्यज्य ब्रह्मनिष्ठो भूत्वा सर्वसंसारदुःखं परित्यज्य ब्रह्मैव भवति । एतदभिप्रायेणापरिच्छिन्नानन्द एव ब्रह्मेति श्रुत्योक्तं- यथा उष्णरोगातुरस्य बालस्य तदुपशमनार्थं यवागूपानोपदेशे कर्तव्ये 'यवागूं पिब शिखा ते वर्धिष्यत' इति भिषजोच्यते तद्वदिति ॥

## ब्रह्मणः निर्विशेषत्वप्रतिपादनम् ।

**वस्तुतस्तु** नात्मा सुखरूपो नापि दुःखरूपः, किं त्वनिर्वाच्य एवेति । **ननु** यदि ब्रह्म सच्चिदानन्दं न भवति तर्हि तत्कार्ये जगति सत्ताचित्त्यानन्दानामनुगतिर्न भवेत्- अनुगतिस्तु दृश्यते- जगदस्ति भाति प्रियं चेति- तस्माज्जगत्कारणं ब्रह्म सत्यज्ञानानन्दरूपमेवेति कृत्वा तन्निरसनमयुक्तमिति,

**मैवम्**—यो ब्रह्मणस्सकाशाज्जगज्जातमिति ब्रूते तं प्रतीदं चोद्यं कर्तव्यं, न तु मां प्रति- मया हि न ब्रह्म जगत्कारणमिति प्रतिपाद्यते- 'न तस्य कार्य'मिति श्रुतेः । नचैवं सति त्वं त्वन्मतं च नास्त्येवेति वाच्यं, इष्टापत्तेः- भ्रान्त्या हि ब्रह्मभिन्नस्य सत्त्वं नतु वस्तुत इति । नचैवमसता त्वया त्वन्मतेन च किं ममेति वाच्यं, तव त्वन्मतस्य चासत्त्वात् । नच सर्वाभावे शून्यवादापत्तिस्तवेति वाच्यं, ब्रह्मवाद्येवाहं न शून्यवादीति । **ननु** तद्ब्रह्म किमस्ति ? उत नास्ति ? आद्ये- कथं सत्तानिरसनं, द्वितीये- कथं शून्यवादानापत्तिरिति, **मैवम्**—किं शून्यमस्ति ? उत नास्ति ? नाद्य- मम मते कस्यापि सत्तानङ्गीकारात् । द्वितीये- शून्यस्यैवाभावात्कथं शून्यवादापत्तिरिति । **ननु** तर्हि कथं त्वं ब्रह्मवादी भवसि, **उच्यते**—सर्वनिषेधावधित्वेन सर्वाभावसाक्षित्वेन च ब्रह्मणोऽभ्युपगमात् । हन्तैवं तस्य सद्रूपत्वं चिद्रूपत्वं च प्राप्तं- भवतु प्राप्तम् । नच सत्ताचित्यानन्दास्त्वया निरस्ता हि, सत्यं निरस्ता एव । परमार्थतः- यदि निषेधस्सत्यस्स्यात्तर्हि निषेधावधित्वं ब्रह्मणस्सत्यं स्यात्, नतु निषेधस्सत्यः- निषेद्धा निषेध्यं निषेधश्चेति त्रिपुट्या अद्वैते ब्रह्मण्ययोगात् । एवं यदि साक्ष्यं सत्यं स्यात्तर्हि साक्षित्वं ब्रह्मणस्सत्यं स्यात्, नतु साक्ष्यं सत्यं, सक्षी साक्ष्यं साक्षात्कारश्चेति त्रिपुट्या अद्वैते ब्रह्मण्ययोगात् । तस्माद्वस्तुतः निषेधावधित्वेन सर्वाभावसाक्षित्वेन च न ब्रह्म सद्रूपः, नापि चिद्रूप इति । **ननु** ब्रह्मणो यदि न सत्ता तर्हि ब्रह्मास्तीति कथं प्रत्येतव्यं, **मैवम्**—यदि ब्रह्मज्ञानं तर्हि कथं तत्प्रत्येतव्यं, नहि ज्ञानं ज्ञेयं भवति । सिद्धान्ते तु न ब्रह्म सत्तावत्, नाप्यसत्तावदिति कृत्वा अस्तीति नास्तीति वा न तत्प्रत्येतुं शक्यते । एवमस्तिनास्तिप्रत्ययाविषयत्वादेवाप्रमेयं ब्रह्म । नचाप्रमेयत्वेसति ब्रह्म निर्विशेषं न भवेदिति वाच्यं, न वयं ब्रह्मण्यप्रमेयत्वमस्तीति ब्रूमः- किंतु प्रमेयत्वं नास्तीत्येवेति न निर्विशेषत्वव्याहतिः । नच प्रमेयत्वाभावोपि विशेष एवेति वाच्यं, तथासति विशेषाभावोपि विशेष एव भवेत्, नचेष्टापत्तिः-- नहि घटाभावो घटो भवेत्, किंच ब्रह्माप्रमेयमिति निर्विशेषमिति अनिर्देश्यमिति चायमपि व्यवहार एव- यथा घटोयमिति पटोयमिति च प्रतीतिर्व्यवहारः तद्वत् । तथाच व्यवहारस्सर्वोपि मायामय एव ।

**वस्तुतस्तु** न कोपि व्यवहारः- मायाया एवाभावादिति कृत्वा कथं ब्रह्म वस्तुतो प्रमेयं निर्विशेषमनिर्देश्यं वा भवेत् । अतएव हि श्रूयते—'अवचनेनैव प्रोवाच सहि तूष्णीं बभू'वेति । एवं वस्तुतो यस्यकस्यापि व्यवहारस्याभावादेव वस्तुतो ब्रह्म न सन्नाप्यसत्, न चिन्नाप्यचित्, नानन्दं नापि दुःखं, न निर्विषेषं, नापि सविशेषं, न प्रमेयं नाप्यप्रमेयं, न निर्देश्यं नाप्यनिर्देश्यं, न शून्यं नाप्यशून्यं, नान्तवन्नाप्यनन्तं, न सत्यं नाप्यसत्यमिति । नचैवं ब्रह्म सत्यं गजन्मिथ्येति सिद्धान्तोपि परास्त इति वाच्यं, सच सिद्धान्तो व्यावहारिक एव, न पारमार्थिक इति नहि परमार्थदशायामस्ति स सिद्धान्तः । नचैवं निर्विशेषब्रह्मपरिशेषोपि तव न सिद्ध इति वाच्यं, वस्तुतो ब्रह्मणि यस्यकस्यापि विशेषस्याभावान्निर्विशेषं ब्रह्म परिशिष्टमेव- सच निर्विशेषब्रह्म परिशिष्टमिति निश्चयो व्यावहारिक एव, नतु पारमार्थिकः- परमार्थदशायां तस्यापि निश्चयस्याभावादिति कृत्वा ब्रह्म न निर्विशेषमित्यस्मभिरधुनोक्तमिति । **किं बहुना** वस्तुतो यस्य कस्यापि प्रत्ययस्याभावात्सर्वप्रत्ययानिषयमेव ब्रह्मेति । अत

एव तस्य दुर्वचत्वादुक्तं श्रुत्या 'अवचनेनैव प्रोवाच सहि तूष्णीं बभू'वेति। तस्मादानन्दमपि ब्रह्मणः स्वरूपं न भवत्येवेति कृत्वा कथं पुनरानन्दि ब्रह्म भवेन्न कथमपीति संक्षेपः॥

## 'नेह नाना' इत्यत्र रामानुजाभिमतार्थनिराकरणम्।

**अथ यदुक्तं रामानुजेन**—नेह नानेत्यादिश्रुतिभिः- कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकया च, तदात्मकत्वेनैक्यात्तत्प्रत्यनीकनानात्वं प्रतिषिध्यते- न पुन'र्बहुस्यां प्रजाये'येति बहुभवनसङ्कल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रतिषिध्यत इति, **तदयुक्तम्**—यदीदं जगद्ब्रह्मकार्यतया ब्रह्मात्मकत्वेन ब्रह्माभिन्नं तर्हि जगतो विलक्षणं ब्रह्म नैव भवेत्- यथा मृत्कार्यतया मृदात्मकत्वेन मृदभिन्नाद्घटाद्विलक्षणा मृदभिन्ना भवति तद्वत्। नचेष्टापत्तिः- चिदचिद्विलक्षणं ब्रह्मेति हि तव मतम्- नहि चिदचिद्विलणस्येश्वरस्य चिदचिद्रूपजगदात्मना परिणामस्सम्भवति- नहि स्वाभिमते परिणामवादे कार्यकारणयोर्वैलक्षण्यं सम्भवति- सति च वैलक्षण्ये कार्यस्य कारणात्मकत्वं कथं सम्भवति- अचेतनस्य दारुपाषाणादेर्जन्यत्वेन तत्कारणत्वं ब्रह्मणोस्तु नाम, कथं पुनरजस्य चेतनवर्गस्य कारणं ब्रह्म भवेत्- येन कार्यकारणयोश्चेतनब्रह्मणोः कार्यकारणभावप्रयुक्तमैक्यं स्यात्। नच सूक्ष्मचिदचिद्विशिष्टं ब्रह्म जगद्रूपेण परिणतमिति कृत्वा कार्यकारणयोरस्ति सालक्षण्यमिति वाच्यं, तथासति स्थूलचिदचिद्विशिष्टं ब्रह्मैव कार्यमपीति कृत्वा जगच्छब्दवाच्यं ब्रह्मणः कार्यभूतं वस्तु नास्त्येवेति कस्य ब्रह्मणा सहैक्यमुच्येत। नच स्थूलचिदचिद्विशिष्टं ब्रह्मैव कार्यभूतजगत्पदार्थः, सूक्ष्मचिदचिद्विशिष्टं ब्रह्म तु कारणभूतब्रह्मपदार्थ इति वाच्यं, तथासत्यविशेषात्सूक्ष्मचिदचिद्विशिष्टं ब्रह्मैव कारणभूतजगत्पदार्थ इति वक्तव्यत्वात्। नच कार्यभूतमेव वस्तु जगच्छब्दवाच्यमिति वाच्यं, जगति कार्यभूतानां कारणभूतानां च बहूनां वस्तूनामुपलम्भात्। किंच सृष्टेः प्राग्यदासीत् सूक्ष्मचिदचिद्विशिष्टं ब्रह्म तदेवेदानीं स्थूलचिदचिद्विशिष्टमभूदिति तव मते-- न ब्रह्मणः कोपि परिणामः, किंतु चिदचितोरेव- तयोरेव सर्गात्प्राक्सूक्ष्मरूपेण स्थितयोरिदानीं स्थूलरूपेण परिणतत्वात्। यथा सूक्ष्मस्यैव बीजस्य स्थूलवृक्षरूपेण परिणतिस्तद्वत्। ततश्च ब्रह्मपरिणामत्वाभावान्न जगतो ब्रह्मात्मकत्वसिद्धिः, किंतु स्थूलचिदचिदात्मकस्य जगतः सूक्ष्मचिदचिदात्मकजगत्परिणामत्वात्सूक्ष्मचिदचिदात्मकत्वस्यैव सिद्धिः—यथा अंकुरस्य बीजात्मकत्वसिद्धिः। इदानीं स्थूलयोर्हि चिदचितोस्सृष्टेः प्राक् सूक्ष्मत्वमासीत्- यथेदानीं स्थूलस्य तरोरुद्भवात्प्राग्बीजात्मना सूक्ष्मत्वं तद्वत्। तस्मात्सूक्ष्मचिदचिदात्मकाव्यक्तपरिणाम एवायं स्थूलचिदचिदात्मको व्यक्तः प्रपञ्च इति कथं जगतो कारणब्रह्मैक्यम्। एवं ब्रह्मणो जगदकारणत्वादेव न ब्रह्मणः किमपि कार्यमस्तीति श्रूयते— 'न तस्य कार्यं करणं च विद्यत' इति। ईश्वरस्य बहुभवनं च स्वोपाध्यव्यक्तस्य व्यक्तरूपेण बहुधा भूतत्वादेव न तु स्वतः- अविकृतस्येश्वरस्य बहुभवनायोगात्। यद्वस्तु बहुधा भवति तद्धि विक्रियमाणं दृष्टम्- यथा घटपटादिरूपेण बहुधा भूता विक्रियमाणैव मृत्तिका तद्वत्। अव्यक्तं तु मृद्द्रव्यवदेवाविकारि न भवतीति तस्य बहुभवनं सङ्गच्छते। नचैवं बहु स्यामिति सङ्कल्पपूर्वकमीश्वरस्यैव चेतनस्य बहुभवनं श्रुत्युक्तं कथमुपपद्येतेति वाच्यं, यथा जीवस्य देहतादात्म्याध्यासाद्गमनसङ्कल्पस्तथेश्वरस्याप्यव्यक्ततादात्म्याध्यासा-

दिति । नचातत्त्वविदो जीवस्यास्तु अनात्मतादात्म्याध्यासः कथं पुनस्सर्वज्ञेश्वरस्येति वाच्यं, 'आत्मानं मानुषं मन्ये रामं दशरथात्मजं, राज्यनाशो वने वासो नष्टा भार्या द्विजो हतः । ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम्' इत्यादिवाग्व्यवहारः कथमीश्वरस्य श्रीरामस्येति । नच लीलया रामस्य तदुपपद्यत इति वाच्यं, माययेश्वरस्यापीदमुपपद्यत एव । नच कथं सर्वज्ञेपीश्वरेऽज्ञानं मायाह्यज्ञानमिति वाच्यं, कथं परमानन्दमयेपीश्वरे सीतावियोगदुःखविलास. ? लीला हि विलासः । नच श्रीरामस्य स्वदृष्ट्या नास्ति सीतावियोगादिदुःखं, किंतु दुःखीव भात्यस्माकमिति वाच्यं, परमेश्वरस्यापि स्वदृष्ट्या नास्ति बहुभवनसङ्कल्पादिकं, किंतु जीवानां तथा प्रतिभाति- बहुस्यामिति सङ्कल्पितवानिव बहुधाभूत इव चेति । वस्तुतस्तु परमेश्वरस्येव बहुभवनं श्रीरामस्य सीतावियोगादिकं च माययैव सम्पद्यते, नतु लीलया- 'ब्रह्मन् कथं भगवतश्चिन्मात्रस्याविकारिणः । लीलया वापि युज्येरन् निर्गुणस्य गुणाः क्रियाः' इति भागवतात् । तत्रैव परिहारश्चाभ्यधायि- 'सेयं भगवतो माया यन्नयेन विरुध्यते । ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम्' इति । अध्यात्मरामायणे च- 'रामो न गच्छति न तिष्ठति नानुशोच त्याकांक्षति त्यजति नो न करोति किञ्चित्, आनन्दमूर्तिरचलः परिणामहीनो मायागुणाननुगतो हि तथा विभाति' इति । तस्मादीश्वरस्यापि मायमा अव्यक्ततादात्म्याध्यासाद्बहुस्यामिति सङ्कल्प उपपद्यत एवेति ।

**ननु** अव्यक्तमेव मायेति कथं माययैव मायातादात्म्याध्यास इति वाच्यं, कात्रानुपपत्तिः- परमेश्वरस्योपाधिभूता मायैव परमेश्वरस्य स्वस्मिन् स्वतादात्म्याध्यासं जनयतीति । एवं ईश्वराधिष्ठितमायाकार्यत्वादेव जगत ईश्वरकार्यत्वं ब्रुवन्ति श्रुतय इति कृत्वा मायाया एव परिणामभूतमिदं जगत्तत्सालक्षण्यात्, ईश्वरस्य तु विवर्तभूतमेव तद्वैलक्षण्यात्- सच्चिदानन्दं हि ब्रह्म, अनृतजडदुःखात्मकं तु जगत्, माया चानृतजडदुःखात्मिकैवेति । तस्माद्ब्रह्मपरिणामतया ब्रह्माभिन्नं जगदिति वचनं नैव युक्तम् । नापि ब्रह्मान्तर्यामिकतया ब्रह्माभिन्नमिति वक्तुं शक्यं- जीवान्तर्यामिकतया देहोपि जीवाभिन्न इति वक्तव्यत्वात्- जीवो हि देहे स्थित्वा देहं यमयति । नचाचेतनस्य देहस्य कथं नियाम्यत्वमिति वाच्यं, समानोयं दोषस्तवापि जगत्खलु भवत्यचेतनम् । नच चेतनवर्गभूतजगत एव नियाम्यत्वमुच्यत इति वाच्यं, तथासति अचेतनजगतो ब्रह्मान्तर्यामिकत्वाभावेन कथं ब्रह्मैक्यमुक्तमुपपद्येतेति । नच ब्रह्मकार्यतया अचेतनवर्गस्य ब्रह्मान्तर्यामिकतया चेतनवर्गस्य च ब्रह्मैक्यमुच्यत इति वाच्यं, अचेतनवर्गस्याचेतनत्वादेवाचेतनप्रकृतिकार्यतया ब्रह्मकार्यत्वाभावस्योक्तत्वात्- चेतनस्य च सर्वान्तरत्वेन ब्रह्मान्तर्यामिकत्वायोगात् । नच 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'- 'केनापि देवेन हृदि स्थितेन यथा नियुक्तोस्मि तथा करोमि' इत्यादिवचनबलाज्जीवस्यान्तरीश्वरस्तिष्ठतीति वाच्यं, निष्प्रदेशस्य जीवस्य हृद्देशाभावात्- शरीरैकदेशो हि हृद्देशः । नच हृत्पुण्डरीकं नात्र हृच्छब्दवाच्यं, किंतु मन एव, तथा च जीवस्य मनसीश्वरस्तिष्ठतीति वाच्यं, तथासति मनस एवान्तर्यामी भवतीश्वरो नतु जीवस्येति कथं जीवस्येश्वरान्तर्यामिकत्वादीश्वराभेदः । नच जीवस्य हृद्देशो नाम जीवस्यान्तर्देश इति वाच्यं, सूक्ष्मस्याणोर्जीवस्य निरवयवस्यान्तर्देशाभावात् । नच 'अणोरणीया'निति श्रुतेर्जीवादपि सूक्ष्मस्येश्वरस्य जीवान्त-

स्थितिस्सम्भवतीति वाच्यं, तथासति जीवस्य प्रदेशत्वात्सावयव एव भवेदिति । किंच चेतनभूतस्याचेतनभूतस्य वा जगतः किं चिदचिद्विशिष्टब्रह्मान्तर्यामिकत्वमुच्यते ? किं वा शुद्धब्रह्मान्तर्यामिकत्वम् ? नाद्यः- चिदचितोश्चिदचिद्विशिष्टब्रह्मान्तर्यामित्वायोगात् । द्वितीये- विशिष्टाद्वैतमतभङ्गः- सदापि विशिष्टं हि ब्रह्म । यदि तु मतभङ्गमभ्युपेत्य शुद्धमेव ब्रह्म चिदचिदन्तर्यामीत्युच्यते, तर्हि तस्य कथं जगत्कारणत्वं- चिदचिद्विशिष्टं हि ब्रह्म जगद्रूपेण परिणतम् । नच विशिष्टं ब्रह्म जगत्कारणं, शुद्धं ब्रह्म तु जगदन्तर्यामीति वाच्यं, तथासति ब्रह्मद्वयाभ्युपगमादेकमेवेति श्रुतिविरोधः । नच यदेव विशिष्टं ब्रह्म तदेव शुद्धं ब्रह्मापीति वाच्यं, विशिष्टत्वशुद्धत्वयोस्सामानाधिकरण्यायोगात् । अविशिष्टत्वं हि शुद्धत्वम् । **ननु** चेतनाचेतनयोरन्तस्स्थितत्वादेव ब्रह्मोच्यते चिदचिद्विशिष्टमिति, तथाच चिदचिदन्तस्स्थितस्येश्वरस्य चिदचिदन्तर्यामित्वमुपपद्यत इति, **मैवम्**—तथासति चिदचितोरन्तःस्थितस्य कथं चिदचित्कारणत्वमिति । नच चिदचिद्द्वयं सृष्ट्वा तस्यैवान्तःप्रविश्य ब्रह्म स्थितमिति वाच्यं, तर्हि चिदचिद्द्वयसृष्टेः प्राग्ब्रह्माविशिष्टमेवेति ब्रह्मातिरिक्तस्य सर्वस्यापि जन्यत्वेनानित्यत्वादेकमेव ब्रह्म नित्यमिति च स्वमतविरुद्धार्थसिद्धेः । ईश्वरवत्प्रकृतिपुरुषावपि नित्यौ हि तव मते, यद्यनित्यो जीवः तर्हि कृतहानाकृताभ्यागमप्रसङ्गः मोक्षानुपपत्तिश्च । नच प्रकृतिपुरुषादन्तः प्रविश्य स्थितं ब्रह्म, भूतभौतिकजातं तु सृष्ट्वा अन्तः प्रविश्य स्थितमिति वाच्यं, प्रकृत्यतिरिक्तभूतभौतिकपदार्थाभावान्न हि मृदतिरिक्तघटादिपदार्थसत्त्वम्- अस्तु वा प्रकृत्यतिरिक्तत्वं भूतभौतिकमयस्य जगतः, कथं तथासति कार्यकारणयोर्भेदवादः कुतर्कसिद्ध इति त्वयोच्येत ? कथं नाम ब्रह्मजगतोः कार्यकारणभावप्रयुक्तभेदाभावो भवितुमर्हति? कथं वा प्रकृतिपुरुषयोर्ब्रह्मकार्ययोर्ब्रह्माभेदः ? **ननु** प्रकृतिपुरुषयोरजत्वेन ब्रह्मकार्यत्वादाकाशादिजगतश्च प्राकृतत्वेन ब्रह्मकार्यत्वात्कार्यकारणभावप्रयुक्तोऽभेदो ब्रह्मणा सह प्रकृतिपुरुषजगतां माभून्नाम ब्रह्मान्तर्यामिकत्वप्रयुक्तस्त्वभेदो भविष्यति, **मैवम्**—तदन्तर्यामिकस्य वस्तुनस्तदन्तर्यामिकत्वादेव तदभिन्नत्वं न सम्भवतीत्युक्तत्वात् । **ननु** नेह नानास्तीति श्रुत्या न जगद्ब्रह्मणोरैक्यमुच्यते, किंतु अब्रह्मान्तर्यामिकमब्रह्मकारणकं च वस्तु नास्तीत्युच्यत इति, **मैवम्**—ब्रह्मान्यस्य सर्वस्याप्यब्रह्मकारणकत्वेन तादृशवस्तुप्रतिषेधस्यायुक्तत्वात् । अथाब्रह्मान्तर्यामिकं वस्तु नास्तीत्येतदप्ययुक्तमेव, तथाहि- अब्रह्मान्तर्यामिकस्य चिद्वस्तुनस्सत्त्वात् । अचितश्च जडत्वेन प्रेर्यत्वायोगादब्रह्मान्तर्यामिकत्वादिति । तथा अब्रह्मान्तर्यामिकं वस्तु कुत्र नास्तीत्युच्यते । **ननूक्तमेवेहेति**- उक्तमेव तर्हि माभूदिह तादृशं वस्तु भवति त्वन्यत्र । नचेहशब्दस्य लोक इत्यर्थ इति वाच्यं, लोके तादृशवस्त्वभावेपि अलोके तादृशवस्तु भवेदेव- लोकश्च तादृशवस्त्वेव भवेदिति । यदि त्विहशब्दस्य ब्रह्मणीत्यर्थः, तर्हि निरवकाशे परिपूर्णे ब्रह्मणि कथं ब्रह्मान्तर्यामिकस्यापि वस्तुनस्सत्त्वम् ? कथं नाम अनन्तरमबाह्यमिति श्रुत्युक्ते अनन्तरे अबाह्ये च ब्रह्मणि आन्तरत्वबाह्यत्वयोस्सम्भवः ? सतिह्यान्तरत्वे ब्रह्मणोन्तर्यामित्वं सिध्यति, सति च बाह्यत्वे ब्रह्मणि ब्रह्मान्तर्यामिकवस्तुस्थितिस्सिद्ध्यतीति । **ननु** नेह नानेति श्रुत्या अब्रह्मात्मकस्वतन्त्रवस्तु निषिध्यत इति, **नैतदपि युक्तम्**—ब्रह्मकार्यत्वेनाजयोः प्रकृतिपुरुषयोस्सत्त्वेन तन्निषेधायोगात् । नच अब्र-

ह्मात्मकत्वस्वतन्त्रस्वरूपविशेषणद्वयविशिष्टं वस्तु निषिध्यत इति वाच्यं, अब्रह्मात्मकस्य स्वतन्त्रस्य चात्म-वस्तुनस्सत्त्वात् । नच पारतन्त्र्यमात्मनोऽनुभवसिद्धमिति वाच्यं, तस्यानात्मतादात्म्याध्यासप्रयुक्तत्वा-दनात्मा हि परतन्त्रः- अचेतनत्वात् । सर्वं ह्यचेतनं वस्तु चेतनपरतन्त्रं दृश्यते- आत्मा तु चेतन इति न परतन्त्रः । नच चेतना अपि भृत्या राजपरतन्त्रा इति वाच्यं, तत्र भृत्यशब्दवाच्यो नात्मा देह एव राजपरतन्त्रः न त्वात्मेति ।

**ननु** यथा देहस्य देही जीव आत्मा, तथा आत्मनोपि भवति ब्रह्म आत्मा—तथाच ब्रह्मात्म-कत्वेनास्वतन्त्र एवात्मा- आत्मतन्त्रं हि सर्वं वस्तु, **मैवम्**—यद्यात्मनोपि भवत्यात्मान्तरं तर्हि तस्या-प्यात्मान्तरस्य भवेदेवात्मान्तरान्तरमिति ब्रह्मणोपि भवेदेव कश्चिदात्मा- तस्याप्यन्य आत्मा भवेदेवेत्यन-वस्था । यदित्वनवस्थाभिया ब्रह्मणो नास्त्यन्य आत्मेत्युच्यते तर्हि किमपराद्धमात्मना- येन आत्मनो भवति ब्रह्म आत्मेत्युच्यते । नच ब्रह्मकार्यत्वादात्मनः ब्रह्म भवत्यात्मेति वाच्यं, ब्रह्माकार्यत्वादज-स्यात्मनः । नच आत्मान्तर्ब्रह्मसत्त्वादात्मा ब्रह्मात्मक इति वाच्यं, ब्रह्मणोप्यन्तः कश्चिदात्मास्त्येवेति ब्रह्माप्यन्यात्मक एव भवेदिति । नच ब्रह्मणोन्तः कोपि नास्तीति वाच्यं, आत्मनश्चान्तः कोपि नास्तीति तुल्यत्वात् । नचातिसूक्ष्मत्वान्नास्ति ब्रह्मण आन्तरं वस्त्विति वाच्यं, ब्रह्मणि ब्रह्मात्मकास्वतन्त्रवस्त्व-स्तीति त्वयेवोच्यमानत्वात् । नच ब्रह्मणि जगदस्ति, तत्र जगति पुनर्ब्रह्मास्ति, तस्मिंस्तु ब्रह्मणि किमपि नास्तीति कृत्वा जगदन्तस्स्थब्रह्मण आन्तरं वस्तु नास्तीत्युच्यत इति वाच्यं, ब्रह्मण्यचेतनं वस्तु जातमस्ति, तत्र चेतन आत्मास्ति, तस्मिन्नात्मनि किमपि नास्तीति सर्वान्तर आत्मेत्येवोच्यतामिति । नच तस्मिन्न-प्यात्मनि ब्रह्मास्तीति वाच्यं, तस्मिन्नपि ब्रह्मण्यात्मास्तीति वक्तव्यत्वात् । किंच यद्यनात्मेवात्मापि ब्रह्मा-त्मकस्स्यात्तर्हि आत्मशब्दवाच्यत्वमेवात्मनो भज्येत । तस्मादात्मब्रह्मशब्दावेकार्थवाचिनावेव- सर्व-व्यापित्वनिरतिशयवृद्धत्वरूपप्रवृत्तिनिमित्तभेदादिति नात्मब्रह्मभेदसिद्धिः । अतएव 'तत्सत्यं स आत्मा तत्त्वमसी'ति श्रूयते । नच तत्तद्व्यष्टिदेहावच्छिन्नस्य सूक्ष्मस्यात्मनो जीवस्य कथं सर्वव्यापित्वादिकमिति वाच्यं, तत्तद्घटावच्छिन्नस्याप्याकाशस्य विभुत्वदर्शनात् । नाचात्मनो जीवस्य चैतन्यमेव स्वरूपं, ब्रह्म च चैतन्यमेवेति ब्रह्मात्मक एवात्मा चैतन्यरूपत्वादात्मन इति वाच्यं, तथा सति ब्रह्मणोपि स्वरूपं चैतन्य-मेव, आत्मा च चैतन्यमेवेति ब्रह्मापि भवत्येवात्मात्मकमिति- चैतन्यरूपत्वाद्ब्रह्मणः । एवमात्मनो जीवस्य चैतन्यरूपत्वादेव चैतन्ये आत्मनि चैतन्यस्यैव ब्रह्मणस्सिद्धिर्नोपपद्यत इति बोध्यम् । नच जीवचैतन्ये जीवचैतन्यं मास्तुनाम ब्रह्मचैतन्यन्त्वस्त्येवेति वाच्यं, तथासति ब्रह्मचैतन्ये ब्रह्मचैतन्यं मास्तु-नाम, जीवचैतन्यं भवेदेवेति । तथा यदि चैतन्येपि चैतन्यान्तरसत्त्वं तर्हि तस्मिन्नपि चैतन्यान्तरे चैत-न्यान्तरान्तरमित्यनवस्था । तस्माच्चैतन्यमेकमेवेत्यभ्युपेयम् । नच जीवचैतन्ये ब्रह्मचैतन्यमस्ति, तत्र चैतन्यान्तरं नास्तीत्यनवस्थापरिहार इति वाच्यं, चैतन्यत्वाविशेषात्तत्रापि चैतन्यान्तरं भवेदेवेति । किंच व्यष्टिदेहव्यापि व्यष्टिदेहावभासकं च जीवचैतन्यम्—ब्रह्माण्डभूतसमष्टिदेहव्यापि, समष्टिदेहावभासकं च ब्रह्मचैतन्यम्- यथा घटमात्रव्यापी घटाकाशः, ब्रह्माण्डव्यापी महाकाशः तद्वत् । एवं सति महाकाश-

घटाकाशयोरिव ब्रह्मजीवचैतन्ययोः कथमन्तर्बहिर्भावः, कथं वा व्याप्यव्यापकभावः, कथं नाम कार्यकारणभावः, कथं नु तदात्मत्वतदात्मकत्वभाव इति । **ननु** जीवचैतन्यमीश्वरचैतन्यस्यांश इति कृत्वा-जीव ईश्वरात्मक इति, **मैवम्**—तथासति अंशांशिनोरिव जीवेश्वरयोर्भेदायोगात् । नहि घटाकाश-महाकाशयोरस्ति भेदः । एवं यदेव सर्वव्यापकमीश्वरचैतन्यं तदेव व्यष्टिदेहव्यापकमपीति कृत्वा ईश्वर एव जीव इति स्थिते कथमुच्यते जीवस्यान्तर्यामी भवतीश्वर इति । नह्यंशस्य अंशी भवत्यान्तरः, प्रत्युत अंशिन एवांशो भवेदान्तरः- यथा पटस्यांशिनस्तन्तुरंश आन्तरः- तथा । तस्मादीश्वरांशत्वादपि न जीवस्येश्वरान्तर्यामिकत्वसिद्धिः । नहि विष्ण्वंशस्य रामस्य कृष्णस्य वा विष्णुर्भवत्यन्तर्यामी । एवं अब्रह्मकारणकस्य अब्रह्मान्तर्यामिकस्य अब्रह्मात्मकस्य च स्वतन्त्रस्य च सत्त्वादात्मनः कथं तन्निषेधः कर्तुं शक्यते । **ननु** मास्तु तादृशात्मनिषेधः, अब्रह्मान्तर्यामिकस्याब्रह्मात्मकस्य च स्वतन्त्रस्य प्रकृतिवस्तुनो निषेधः क्रियत इति, **मैवम्**—किं तादृशं प्रकृतिवस्त्वस्ति ? उत नास्ति ? आद्ये कथं न निषेधः । द्वितीये अप्रसक्तस्य कुतो निषेधः । नच भ्रान्त्या प्रसक्तस्य निषेध इति वाच्यं, मन्मतप्रवेशापत्तेस्तव । **ननु** प्रकृतिरिति वस्तु किञ्चिदस्त्येव- तत्तु ब्रह्मान्तर्यामिकं, ब्रह्मात्मकमस्वतन्त्रं च- तस्य स्वतन्त्रत्वादिकं भ्रान्तिसिद्धमिति तन्निषेधश्श्रुत्या क्रियत इति चेत्, **मैवम्**—तथासति इह प्रकृतिरस्ति, परन्तु सा ब्रह्मा-न्तर्यामिका, ब्रह्मात्मिका, अस्वतन्त्रा च भवतीत्येव वक्तव्यत्वाच्छ्रुत्या कस्मादुक्तं 'नेह नानास्ति किञ्च'-नेति । नच द्वैतसद्भावप्रतिपादकश्रुतिविरोधाद्द्वैतनिषेधप्रतिपादकप्रकृतश्रुतेरर्थान्तरं मदुक्तविधया कल्प्यमिति वाच्यं, पारमार्थिकाद्वैतप्रतिपादकश्रुतिविरोधः कथं व्यावहारिकद्वैतप्रतिपादकश्रुतेर्भवितु-मर्हतीति । **ननु** यदि भेदः कश्चित्पारमार्थिकः कश्चित्पुनरपारमार्थिकश्च भवेत्तर्हि द्वैतप्रतिपादक-श्रुतेर्व्यावहारिकभेदपरत्वं भवेत्स एव नास्तीति, **मैवम्**—किं घटो नित्यः ? उतानित्यः ? नाद्यः- तस्य जन्मनाशदर्शनेनानित्यत्वात् । न द्वितीयः- यदि नित्यो घटः क्वापि कश्चिदस्ति तर्ह्ययं घटोऽनित्य इत्युच्येत, नतु सोस्तीति कथमनित्यो घट इत्युच्येत । नच घटस्य जन्मनाशदर्शनादनित्यो घट इति वक्तुं शक्यत एवेति न तद्वादस्य नित्यघटसद्भावाधीनत्वमिति वाच्यं, तथासति भेदस्य व्यवहारदशाया-मेवोपलम्भाद्भेदो व्यावहारिक एव, नतु पारमार्थिक इति वक्तुं शक्यत एवेति न तद्वादस्यापि पारमा-र्थिकभेदसद्भावाधीनत्वमिति । नच परमार्थदशायामपि द्वैतमस्ति- 'जक्षन्क्रीडन्रममाणस्स्त्रीभिर्वा यानैर्वे'-त्यादिश्रुतेरिति वाच्यं, तस्याश्श्रुतेर्हिरण्यगर्भलोकप्राप्तजीवपरत्वादिति । निर्विशेषब्रह्मभावापत्तिरूपा हि मुक्तिः परमार्थदशा । किंच ब्रह्मान्तर्यामिका ब्रह्मात्मिका चास्वतन्त्रा प्रकृतिरस्तीति वदता त्वयेदं वक्त-व्यम्-- सा कुत्रास्तीति । नच ब्रह्मण्येवेति वाच्यं, तथासति ब्रह्मणः प्रकृतिव्याप्यत्वप्रसङ्गाद्बाह्यत्वप्रसङ्गाच्च । नच मृदि घटादिविकारसत्त्वेपि यथा घटादिव्याप्यत्वं घटादिबाह्यत्वं च मृदो न भवति तद्वद्ब्रह्मणि प्रकृति-सत्त्वेपि तदुभयं न भवतीति वाच्यं, दृष्टान्तदार्ष्टान्तिकयोर्वैलक्षण्यात् । नहि घटस्य मृद्विकारत्वमिव प्रकृतेर्ब्रह्मविकारत्वमस्ति, येन तथोच्येत- प्रकृतिर्ब्रह्मजा, ब्रह्म च कूटस्थमविकारि । यदि तु प्रकृतिर्न ब्रह्मण्यस्ति किं त्वन्यत्रैवेत्युच्येत, तर्हि ब्रह्म सर्वव्यापकं न भवेत्, सर्वाधारत्वं च ब्रह्मणो न भवेत्, सर्वा-

त्मत्वं तु ब्रह्मणो दूरापास्तमेव- तच्च प्रकृत्यधिष्ठानं ब्रह्मणोन्यद्वस्तु स्वतन्त्रमेव भवेदिति त्वदभिमतार्था-सिद्धिश्चेति । तथा ब्रह्मकार्यभूतायाः प्रकृतेर्ब्रह्मात्मकत्वमप्ययुक्तमेव कार्यं हि कारणात्मकं दृष्टं लोके-यथा दृष्टं हि कल्प्यम् । नचैतत्सर्वदोषपरिहाराय प्रकृतेर्ब्रह्मकार्यत्वमुच्यत इति वाच्यं, तथासति प्रकृति-रजा नित्या चेति स्वमतप्रच्युतिप्रसङ्गात् । नच ब्रह्मणस्सकाशात्प्रकृतिस्स्वत एव जातेति हेतोरजेत्युप-चारादुच्यत इति वाच्यं, तथासति प्रकृतिरनित्यैव भवेत्-- 'जातस्य हि ध्रुवो मृत्यु'रिति गीतावचना-ज्जन्मवतो नाशाव्यभिचारदर्शनाच्च । नच प्रकृतेरनित्यत्वमप्यस्त्विति वाच्यं, तथासति मुक्तौ प्रकृत्यभा-वात्तत्कार्याभावाज्जीवस्यैव ब्रह्मत्वाच्च सिद्धमेकमेवाद्वितीयं ब्रह्मेति कृत्वा नेह नानेति श्रुतेर्वैकार्थवर्णनमिदं स्वमतिदोषसूचकमेवेत्यलम् ॥

## अद्वैतसिद्धान्ते सुदर्शनाचार्यमतनिराकरणम् ।

योऽत्राकारि सुदर्शनेन कोलाहलस्तत्र प्रतिवक्तव्यं, तथाहि- **सुदर्शनः**—सद्गुणस्य दुर्गुणेन जगता सहैक्यं श्रुतिर्न प्रतिपादयति, व्याहतत्वादित्य**वोचत्**, **तत्सत्यम्**— अत एव ब्रह्मपरिणामभूतं जगदिति तव वादोऽयुक्तः- परिणामपरिणामिनोर्हि सालक्षण्येन भवितव्यं, मृद्घटयोस्तथा दर्शनात् । मम मते तु सद्गुणस्य ब्रह्मणो दुर्गुणजगदाकारविवर्तस्सम्भवत्येव- रज्जुसर्पयोरिव । विवर्तवादे कार्य-कारणयोस्सालक्षण्यानपेक्षणात् । **नन्वपारमार्थिकेनापि हेयेन** जगता सह ब्रह्मणस्सम्बन्धो हेयप्रत्यनीकस्य नोपपद्यत इति **चेत्सत्यम्**—तवैव मते हेयेन जगता सह ब्रह्मणस्सम्बन्धः- सूक्ष्मचिदचिद्विशिष्टं ब्रह्मैव स्थूलचिदचिद्विशिष्टमिति त्वन्मतात् । मन्मते तु सम्बन्धिजगतो हेयस्यापारमार्थिकत्वात्तत्सम्बन्धो-प्यपारमार्थिक एवेति- नहि कपेरैन्द्रजालिकत्वेन मिथ्यात्वे तत्संयोगस्सत्यो भवेद्वृक्षस्य । नचैवं सम्बन्धसम्बन्धिनोर्मिथ्यात्वे नेह नानेति तन्निषेधो न युक्त इति वाच्यं, मिथ्यात्वादेव तन्निषेधो युज्यते-- नहि सत्यं वस्तु निषेद्धुं शक्यते, भ्रान्त्या प्रतीयमानस्य जगतस्तत्सम्बन्धस्य च ब्रह्मणि निषेधः क्रियते खलु श्रुत्या- सत्यस्यैवाप्रसक्तस्यापि निषेधायोगात् । तस्माच्छुक्तिरजतयोरिव ब्रह्मजगतोरैक्यं श्रुतिः प्रतिपादयेदेव । **यच्चोक्तं** सर्वज्ञस्येश्वरस्य स्वेच्छया स्वस्मिन् हेयापादनमयुक्तमिति, **तदपि सत्यमेव**— सच दोषस्तवैव मते पतितः- ईश्वरो हि सङ्कल्पपूर्वकं हेयं जगत्स्वस्मिन्नेव निर्मितवान् । किंच बहुस्या-मिति सङ्कल्प्य स्वयमेव हेयजगद्रूपोऽभूत्- यथा शारीरान्प्राणिहिंसादीन्दोषान्विधाय जीवो भवति स्थावरप्रायः तद्वत् । अहो! महत्कष्टमीश्वरस्य यत्स्वयं सच्चिदानन्दरूपो भवन्नपि हेयजगद्रूपोऽभूदीश्वरः । मम मते तु नेश्वरः स्वेच्छया परेच्छया वा स्वस्मिन्जगन्निर्मितवान्, नापि जगद्रूपोऽभूत्, किंतु माययास्माकं तथा प्रतिभाति रज्जुसर्पवत्, नतु वस्तुत इति न काप्यनुपपत्तिः- ईश्वरस्य स्वस्वरूप-परित्यागाभावाद्रूपान्तरप्राप्त्यभावाच्च, असङ्गस्य तस्यान्येन सम्बन्धाभावाच्च, त्रिविधभेदशून्ये तस्मि-न्वस्त्वन्तराभावाच्चेति । **यदप्युक्तम्**—ईश्वरस्य सार्वज्ञ्यं स्वाभाविकमेव नत्वाविद्यकमिति **तदसत्**-- सर्वस्याविद्यकत्वेन सर्वज्ञत्वस्याप्याविद्यकत्वात्- अविद्याया एवाभावे सर्वस्यैवाभावात्कथं सर्वज्ञत्वसद्भावः, 'स्वाभाविकी ज्ञानबलक्रिये'ति श्रुतिस्तु मायावच्छिन्नस्येश्वरस्य गुरूपदेशादिकं विनैव भवति सर्वज्ञत्व-

मित्येवंपरा, नतु निर्मायस्य ब्रह्मणस्सार्वज्ञं स्वाभाविकमित्येवं परेति । हिरण्यगर्भस्य तु न स्वाभाविकं सर्वज्ञत्वं, किंतु ईश्वरानुग्रहप्रयुक्तमेव- 'तेने ब्रह्महृदाय आदिकवय' इति भागवतात् । नच तदनुग्रहाद्वेदार्थमधिगम्य यथापूर्वं प्रपञ्चं निर्मितवानितीममेवार्थं श्रुतिराह—'धाता यथापूर्वमकल्पय'दिति । यच्चोक्तम्—सर्वज्ञस्येश्वरस्य भ्रमापादनमयुक्तमिति, तच्च सत्यमेव— सर्वज्ञ ईश्वरो भ्रान्त इति हि विप्रतिषिद्धं, किंतु वयमेवात्र भ्रान्ता रज्जुं दृष्ट्वा सर्पं इतीव ब्रह्म दृष्ट्वा जगदिति । ननु जीवस्यैवेश्वरत्वात्तव मते जीवो भ्रान्त इत्युक्तेपीश्वरो भ्रान्त इत्येव सिद्धमिति, मैवम्—अभ्रान्तस्यैव जीवस्य वयमीश्वरत्वं वदामो नतु भ्रान्तस्येति । ननु ईश्वर एव जीवभावमापन्न इति कृत्वा जीवभूतस्येश्वरस्यैव भ्रान्तत्वं सिद्धमिति चेत्सत्यम्—जीवभूतस्येश्वरस्य भ्रान्तिरुचितैव- यथा तव मते जगद्भूतस्येश्वरस्य हेयगुणवत्त्वं तद्वदिति । नच हेयाज्जगतस्सकाशादत्यन्तं भिन्न एवेश्वर इति वाच्यं, तथासति जगतः परिणाम्युपादानमीश्वरो नैव भवेदिति । नच चिदचिद्विशिष्टं ब्रह्मैव जगद्रूपमभून्न तु शुद्धमिति वाच्यं, मायाविशिष्ट एवेश्वरो जीवभूतो नतु शुद्धं ब्रह्मेति- तुल्यत्वात् । नच मायाविशिष्टस्य सर्वज्ञस्येश्वरस्य कथं किंचिद्ज्ञजीवत्वमिति वाच्यं, चिदचिद्विशिष्टस्य परमानन्दस्य परमात्मनः कथं हेयजगत्त्वमिति । नचेश्वरो जगद्रूपो नैवासीत्किंतु जगदन्तर्यामी भवतीति वाच्यं, ईश्वरस्संसारिजीवो नासीत्किंतु, संसारिजीवस्य साभासाहङ्कारस्य प्रमातृनामकस्य यत्साक्षिभूतं कूटस्थचैतन्यमात्मशब्दवाच्यं तदेवेश्वरो भवतीति । नचैवं जीवतत्साक्षीश्वरयोर्भेद एव प्राप्त इति वाच्यं, एकमेव चैतन्यमन्तःकरणावच्छिन्नं सज्जीव इति, तदुपहितं सदीश्वरसाक्षीति चोच्यत इति तद्भेदाभावात् । यद्वा एकमेव चैतन्यं बिम्बभूतं सदीश्वर इति, अन्तःकरणप्रतिबिम्बभूतं सज्जीव इति चोच्यत इति ।

ननु सर्वज्ञमसंसारीश्वरचैतन्यमेव अन्तःकरणावच्छिन्नं तत्प्रतिबिम्बितं वा भूत्वा जीवभावं प्रपद्य कथं किञ्चिद्ज्ञं संसारि च भवेदिति, मैवम्—अनुपपन्नोप्यर्थो मायया भवत्युपपन्नः- तथा चोक्तं भागवते-- 'भगवानेक एवैष सर्वक्षेत्रेष्ववस्थितः । अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः ॥' क्षेत्रज्ञरूपेण स्थित इत्यर्थः । 'सेयं भगवतो माया यन्नयेन विरुध्यते । ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ॥' इति । किंबहुना सच्चिदानन्दं ब्रह्म मायया असज्जडदुःखजगद्भावमेव प्राप्तमिति कृत्वा तस्य संसारिचेतनभावापत्तौ कानुपपत्तिरिति । तस्मादीश्वरस्यापि मायया जीवभावापत्तिस्तत्प्रयुक्तं भ्रमश्चेति द्वयमुपपद्यत एव ।

वस्तुतस्तु नेश्वरस्य जीवभावो नापि जगद्भावः, किंतु सदापि ब्रह्मभाव एव । अतएव नित्यमुक्त ईश्वर इत्युच्यते । तच्च ब्रह्म एकमेवाद्वितीयमिति भेदत्रयविधुरमेवेति बृ. ना नेह नानेति श्रुत्या ब्रह्मभिन्नं किमपि नास्तीति सर्वद्वैतनिषेधः क्रियते । यदप्युक्तम्—हेयं स्वगतत्वेन जानतस्सर्वशक्तेस्सत्यसङ्कल्पस्येश्वरस्य सहसा स्वगतहेयानिरासकत्वमपि नोपपद्यत इति, सच दोषस्तस्यैव शिरसि वज्रप्रहारवत्पतति । चिदचिद्विशिष्टस्य सर्वज्ञस्य सर्वशक्तेस्सत्यसङ्कल्पस्येश्वरस्य कुतो चिद्वैशिष्ट्यापरित्यागः, कुतो वा संसारिजीवभूतचिद्वैशिष्ट्यापरित्याग इति । विशिष्टेश्वरगतं हीदं द्विविधं हेयम् । किंच अचि-

द्विशिष्ट ईश्वरो दुःखविशिष्ट एव भवति- दुःखस्याचित्त्वात् । एवं च दुःखविशिष्ट ईश्वरस्सर्वशक्तित्वादिगुणकः किमिति स्वनिष्ठं तद्दुःखं न निर्मूलयेत् । स्वदुःखनिर्मूलनाक्षमस्स ईश्वरस्स्वाश्रितपरदुःखं वा कथं निर्मूलयेदिति । मन्मते तु नायं दोषः- निर्गुणे ब्रह्मणि हेयोपादेयगुणदोषयोरभावात्- हेयोपादेययोस्तयोः प्रकृतिगतत्वेनेश्वरगतत्वाभावादिति । **यदुक्तम्**—'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इति श्रुत्या भेदज्ञानस्य संसारहेतुत्वमुच्यते, 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक' इति भेदज्ञानस्य मोक्षहेतुत्वमपि श्रुत्यैवोच्यते, एवं द्वयोर्विरोधे प्राप्ते मदुक्तविधया अब्रह्मात्मकस्वतन्त्रवस्तुभेदज्ञानमेव संसारहेतुरित्यास्थेयमिति, **तच्चायुक्तम्**—अहमेवेश्वर इति । यस्सर्वस्मात्परमीश्वरं पश्यति स वीतशोको भवतीति जीवेश्वराभेदज्ञानमेव मोक्षहेतुत्वेन श्रुत्युक्तमिति । कथमन्यथा 'द्वितीयाद्वै भयं भवती'त्युच्यते । किंच लोकेपि राज्ञस्सकाशात्प्रजाया भीतिर्दृष्टा- एवं श्रुत्यापि लोकस्येश्वरात्सकाशाद्भीतिरुपदिष्टा- 'भीषास्माद्वातः पवत' इत्यादिना । एवं भयहेतावीश्वरादहमन्य इति यदि जीवस्य प्रत्ययस्तर्हि भयमेवावश्यं भवेत्, नत्वभयम् । मुक्तस्य चाभयप्राप्तिश्श्रूयते- 'अभयं वै जनक प्राप्तोसीति ।

**एवं** भयहेतोर्भिन्नेश्वरज्ञानस्य नास्त्येव मोक्षहेतुत्वम् । नच ईश्वरान्तर्यामिकोहमिति भेदज्ञानं मोक्षहेतुरिति वाच्यं, 'ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव' वेति तस्य भयहेतुत्वात् । नच दासोहमिति ज्ञानादभयप्राप्तिरिति वाच्यं, दासस्य राज्ञो भयदर्शनात्- उक्तं हि- 'राजसेवा मनुष्याणामसिधारावलेहनम्' इति । नचेश्वरसेवा नैतादृशीति वाच्यं, अस्या अप्यतीव कष्टैवेश्वरसेवामनसा स्वाम्यनर्थचिन्तनं स्वार्थचिन्तनं च भृत्यस्य नानर्थकरं, ईश्वरसेवायां तु मनसापि ममायमर्थो भूयादिति नैव चिन्तयेत् । 'धिगीश्वरममुं बहुनापि कालेन मदिष्टादायिन'मित्यादिविधया मनसापीश्वरं न निन्देदिति । नच 'नह्यच्युतं प्रीणयतो बह्वायासो सुरात्मजा' इति प्रह्लादेनोक्तत्वादीश्वरसेवा सुलभैवेति वाच्यं, आत्मभूतेश्वरसेवैव सुलभा, नतु भिन्नेश्वरसेवा, यतस्तत्रैवोक्तमुत्तरार्धेन- 'आत्मत्वात्सर्वभूतानां सिद्धत्वादिह सर्वतः' इति । नच पत्रपुष्पफलाद्यल्पद्रव्यार्पणेनापीश्वरस्तुष्यतीतीश्वरसेवा सुलभेति वाच्यं, पत्राद्यर्पणाविषयत्वादीश्वरस्य—नहीश्वर इन्द्रियग्राह्यः, येन तस्मै पत्रादिकमर्पयितुं शक्यते । नच अर्चारूपेश्वरं पत्रादिभिः पूजयेदिति वाच्यं, 'अर्चायां भजते मौढ्याद्भस्मन्येव जुहोति स' इति तस्य निन्दितत्वात् । नच सर्वधर्मपरित्यागपूर्वकेश्वरशरणागतिस्सुलभेति वाच्यं, अज्ञस्य जीवतस्सर्वधर्मपरित्यागस्यैवासिद्ध्या कुतः पुनस्तत्पूर्वकेश्वरशरणागतिसिद्धिरिति । नच प्राज्ञस्य जीवतस्तत्सिद्धिरिति वाच्यं, 'योन्यां देवतामुपास्ते अन्योऽसावन्योहमस्मीति न स वेद यथा पशु'रिति श्रुत्यैव ईश्वरोहमन्योहमिति भेददर्शिनोऽज्ञत्वस्योक्तत्वात् । नच 'आत्मेत्येवोपासीते'ति श्रुतेरीश्वरं स्वात्मत्वेन य उपास्ते स प्राज्ञ एवेति वाच्यं, इष्टापत्तेः । अतएव जीवेश्वरभेदः पराक्रियते- जीवस्येश्वरो भवति ह्यात्मा चैतन्यस्वरूपत्वादीश्वरस्य, जीवस्यापि हि चैतन्यमेव स्वरूपम् । तस्माज्जीवेश्वरभेददर्शिनो न संसारातिक्रान्तिरिति । नच 'यो मामेवमसम्मूढो जानाति पुरुषोत्तम'मिति भेददर्शिनो सम्मूढत्वं स्मर्यते

इति वाच्यं, पुरुषोत्तमं परमात्मानमात्माभेदेन यो जानाति स एवाभेददर्शी, असम्मूढ इति तदर्थात् । **यदुक्तम्**—भेदस्य लोकसिद्धत्वान्निषेधार्थं भेदानुवाद इत्येतदनुपपन्नं- भेदस्य शास्त्रसिद्धत्वादिति, **तदयुक्तम्**—नाहमीश्वर इति जीवेश्वरभेदस्य प्रत्यक्षसिद्धत्वेन लोकसिद्धत्वात् । नहि निरीश्वरवादी सेश्वरवादी वा कोप्यज्ञ ईश्वरोहमिति प्रत्येति । नच प्रत्यक्षसिद्धस्य भेदस्यापलापोप्ययुक्त इति वाच्यं, भ्रान्तिप्रत्यक्षसिद्धस्य तस्यापलापो युक्त एवेति । नच 'द्वाविमौ पुरुषौ लोके, ज्ञाज्ञौ द्वावजावीशानीशौ, गुहां प्रविष्टौ परमौ, द्वासुणा सयुजा सखाया' इत्यादिवचनानि भेदं प्रतिपादयन्तीति भेदश्शास्त्रसिद्ध एवेति वाच्यं, लोकतस्सिद्धस्यैव भेदस्य साधकं चेच्छास्त्रं तर्हि व्यर्थत्वादेवाप्रमाणमेव भवेत्- अनधिगताबाधितार्थबोधकं हि प्रमाणम् । नच जीवेश्वरभेदस्य प्रत्यक्षसिद्धत्वेपि तत्स्वरूपस्वभावादिभेदस्य प्रत्यक्षासिद्धत्वात्तदर्थं भेदमपि शास्त्रं बोधयेदेवेति वाच्यं, तथापि भेदबोधनांशे शास्त्रमप्रमाणमेव भवेदिति । नच निषेधार्थं भेदो नानूद्यते शास्त्रेण, किंतु विशेषवचनार्थमिति वाच्यं, भेदस्य मुखत एव निषिद्धत्वात् । **ननु** अभेदोपि सोयं देवदत्त इति लोकत एव सिद्ध इति तत्प्रतिपादनादपि शास्त्रस्य प्रामाण्यं न भवेदिति, **मैवम्**—सर्वस्यापि व्यवहारस्य भेदमूलकत्वेन लोकतोऽभेदासिद्धेः । अस्मिन् समये दृश्यमानस्य देवदत्तस्य पूर्वकालदृष्टदेवदत्ताभेदे सत्यपि यज्ञदत्तादिभ्यो भेदोस्त्येवेति नैकान्तेनाभेदप्रतिपादकं तद्वचनम् । किंच ब्रह्मणस्सजातीयविजातीयस्वगतभेदाभावरूपोऽभेदश्शास्त्रेण प्रतिपाद्यते, स च न लोकतस्सिद्ध इति । **ननु** घटपटादिभेद एव लोकतस्सिद्धो न जीवेश्वरभेद इति, **मैवम्**—नाहमीश्वर इति तद्भेदस्यापि लोकतस्सिद्धत्वस्योक्तत्वात् । **ननु** जीवेश्वरभेदमात्रस्य लोकतस्सिद्धत्वेपि जीवेश्वरयोर्नियाम्यनियामकत्वव्याप्यत्वव्यापकत्वशेषत्वशेषित्वादिरूपो भेदो न लोकतस्सिद्ध इति तत्प्रतिपादकं शास्त्रं प्रमाणमेवेति, **मैवम्**—सर्वोप्यज्ञ आस्तिकः मत्तोन्यः कश्चिदीश्वरस्सर्वज्ञोस्ति, सतु स्वतन्त्रः, मम तत्पारतन्त्र्यस्यानुभवसिद्धत्वात् , तस्मादीश्वरो नियामकः, अहं तु तन्नियाम्यः, सच सर्वज्ञत्वादेव सर्वव्यापकः, अहं तु किंचिद्ज्ञत्वात्परिच्छिन्न एवेति वेत्त्येवेति तादृशभेदप्रतिपादनमपि व्यर्थमेव । किंचानुवादवाक्यैः खलु विहितं स्तूयते, निषिध्यं निन्द्यते, एवं विधिस्तावकान्निषेधनिन्दकत्वादेव तेषां सार्थकत्वं, नतु स्वत इत्यर्थवादाधिकरणे निर्णीतम् । अर्थवादा ह्यनुवादवाक्यानि । एवंसति जीवेश्वरयोर्लोकप्रसिद्धो यो भेदस्स एवानुवादवाक्यैः स्तूयते, स्तुतिर्नाम स्तोतव्यवस्तुगतविशेषकथनम् । जीव ईश्वराद्भिन्न एव- जीवस्य नियाम्यत्वादीश्वरस्य नियामकत्वान्नियाम्यं हि वस्तु नियामकाद्भिन्नमित्येवं जीवेश्वरभेदस्स्तूयते । तथाचानुवादवाक्यानां तेषां लोकप्रसिद्धजीवेश्वरभेद एव तात्पर्यं, नतु स्वार्थे इति कृत्वा जीवेश्वरभेदरूपप्रधानप्रतिपाद्यस्य लोकत एवावगतत्वात्तत्प्रतिपादकं शास्त्रमप्रमाणमेवेति- नहि जीवेश्वरयोर्नियाम्यनियामकत्वादिरूपभेदज्ञानाज्जीवेश्वरभेदादन्यस्य सिद्धिः । सच लोकत एव सिद्ध इति । तस्माज्जीवेश्वरभेदनिषेधार्थमेव जीवेश्वरभेदोऽनूदितश्श्रुत्या सयुक्तिकम् । यथा सिद्धान्तिना पूर्वपक्षस्सयुक्तिकमनूद्यते निरसनार्थं तद्वदिति । **यच्चोक्तम्**—जीवेश्वरभेदज्ञानं मोक्षफलकमिति, तत्प्रतिपादकं मोक्षशास्त्रं प्रमाणमेवेति, **तदप्ययुक्तम्**—मोक्षफलकस्य जीवेश्वरभेद-

ज्ञानस्य लोकत एव सिद्धत्वेन तत्प्रतिपादनार्थं मोक्षशास्त्रस्यानावश्यकत्वादिति । नच जीवेश्वरभेदज्ञानमात्राच्च मोक्षः किंतु भिन्नेश्वरोपासनरूपाद्ज्ञानादिति कृत्वा तदुपासनविध्यादिप्रदर्शनार्थं मोक्षशास्त्रमावश्यकमिति वाच्यं, भिन्नेश्वरोपासकः पशुरेवेति श्रुत्यैव निन्दितत्वात्, जीवेश्वरभेदज्ञानस्य भयहेतुत्वश्रवणाच्च । 'य उदरमन्तरं कुरुते, अथ तस्य भयं भवतीति हि श्रुतिः । ईश्वरोहि जीवाद्भिन्नस्सन् भयहेतुर्भवति- 'भीषास्माद्वातः पवत' इत्यादिश्रुतेः, 'द्वितीयाद्वै भयं भव' तीति श्रुतेर्लोकप्रसिद्धेश्च । नच अनुपासित एवेश्वरो भयहेतुर्न तूपासित इति वाच्यं, वायुसूर्यादीनां महानुभावानां लोकस्थितिहेतूनां जन्मान्तरे ईश्वरोपासनां विना तत्तदधिकारासिद्धेः । नचाधिकृतानामेवेश्वरो भयहेतुर्नानधिकृतानामिति वाच्यं, य ईश्वरेणाधिकृता यमादयस्त एव जीवानां भयहेतव इति कृत्वा कथं यमादिभयहेतुरीश्वरो भवेन्न भयहेतुः- नहि राज्ञो भीतः पुरुषो राजशासकाद्भीतो न भवतीति वक्तुं शक्यते । किंच नियामकादीश्वरात्कथं नियाम्यजीवानां भयाभावः । ननु 'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं म'मेति रामायणादप्रपन्नस्यैवेश्वरो भयहेतुः, प्रपन्नस्य तु सर्वभूतसकाशादभयप्रद एवेति, मैवम्—वायुसूर्यादीनां प्रपन्नानामेवेश्वराद्भयश्रवणात्- न हीश्वरमुपासितवन्त ईश्वरमप्रपन्ना इति वक्तुं शक्यते । रामायणश्लोकस्तु प्रपन्नस्य सर्वभूतेभ्यस्सकाशादीश्वरोऽभयं प्रयच्छति, नतु स्वस्मादित्येवंपर एव । तथा च ईश्वरप्रपन्नस्य न जीवान्तराद्भीः, किं त्वीश्वरादेव-- ईश्वरमप्रपन्नस्य तु जीवान्तरादपि भीतिरिति विशेषस्सिद्धः । नच भर्तारं सर्वथा प्रपन्नाया भार्याया भर्ता यथाऽभयहेतुस्तथैव जीवस्येश्वरोपीति वाच्यं, सीताया अपि श्रीरामाद्भयस्य जातत्वात् । किंच नात्र भर्तृभार्यान्यायस्य प्रवृत्तिः- भर्ता भार्याया इव भार्यापि भर्तुर्भयहेतुरेव- प्रकृते तु- जीवस्यैवेश्वरो भयहेतुर्न त्वीश्वरस्य जीव इति वैषम्यात् । नचानन्दयितृत्वादीश्वरोऽभयहेतुरिति वाच्यं, जीवकृतकर्मानुसारेण दुःखकरत्वाद्भयहेतुरिति वक्तव्यत्वात । किं बहुना सर्वोपि लोक ईश्वराद्भीत्यैव साधु करोति, असाधु न करोति- नृशंसोपि मात्रादिहिंसां न करोति सार्वभौमः, ईश्वरं प्रपद्यमानोपि प्रमादाद्बिभेतीश्वरो मां किमपि कुर्यादिति भीत्यैव । तस्मान्नास्ति भिन्नेश्वरज्ञानिनोऽभयप्राप्तिः । नच भयभक्तिभ्यामीश्वरं सेवमानस्य शरीरपातानन्तरं वैकुण्ठगमनेऽभयप्राप्तिर्भविष्यतीति वाच्यं, तत्रापीश्वरसेवा भयहेतुरेवेति । नच वैकुण्ठं प्राप्तस्य न पुनरावृत्तिस्संसारायेत्यभयप्राप्तिरेवेति वाच्यं, जयविजययोर्वैकुण्ठं प्राप्तयोरपि पुनरावृत्तेर्जातत्वात् । सर्वस्या अपि गतेरगतिफलकत्वाच्च । भवदभिमतमुक्तिक्षेत्रभूतवैकुण्ठस्थयोर्जयविजययोस्सनकादिजीवसकाशादेव भयप्राप्तौ सत्यां कथं पुनरीश्वरान्मुक्तस्य भयाभावः, कथं नामेश्वरं प्रपन्नस्य सर्वभूतेभ्यो भयाभावः । तस्माद्भिन्नेश्वरज्ञानं भिन्नात्मज्ञानं च भयहेतुरेवेत्यद्वैतज्ञानमेवाभयहेतुरिति ॥

## द्वैतज्ञानस्य मोक्षफलकत्वाभावेन तच्छास्त्रस्य अप्रमाणत्वोपपत्तिः ।

**ननु** यद्यद्वैतमभविष्यत्तर्हि तद्ज्ञानं मोक्षहेतुर्भविष्यति, तदेव नास्ति- प्रत्यक्षानुमानागमप्रमाणवशाद्द्वैतस्यैव सिद्धत्वात्- जीवस्येश्वरेऽहमिति बुद्धिः, चैत्रस्य मैत्रेऽहमिति बुद्धिश्च नैव भवति, यदि

कथंचिद्भवति तर्हि सा भ्रमभूतैव- अतस्मिंस्तद्बुद्धित्वात्। तथा च तत्त्वज्ञानस्यैव मुक्तिहेतुत्वं न सम्प्रतिपन्नमिति कृत्वा प्रमाभूतं द्वैतज्ञानमेव मोक्षफलकत्वाच्छास्त्रप्रतिपाद्यं, भ्रमभूतमद्वैतज्ञानं त्वमोक्षफलकत्वाच्छास्त्राप्रतिपाद्यमेवेति शास्त्रमद्वैतपरं यद्यप्रमाणमेव भवेदिति, मैवम्—अनात्मान एव नाना-- आत्मात्वेक एव- आत्मनानात्वे मानाभावात्- 'स आत्मे'त्यादिश्रुतेः। नच जीवात्मानो नाना- परमात्मात्वेक एवेति वाच्यं, 'परमात्मेति चाप्युक्त' इति गीतावचनाज्जीवात्मन एव परमात्मत्वात्। नच 'जीव प्राणधारण' इत्यनुशासनात्प्राणधार्येव जीवात्मा, परमात्मा तु 'अप्राणो ह्यमनाश्शुभ्र' इति श्रुतेरप्राण एवेति वाच्यं, अन्तःकरणोपाधिप्रयुक्तमेव प्राणभृज्जीवत्वमात्मनो न स्वाभाविकमिति कृत्वा स्वतस्तस्याप्राणत्वमेवेति। नच परिच्छिन्नो जीवोऽपरिच्छिन्न ईश्वर इति वाच्यं, जीवस्याप्यपरिच्छिन्नत्वात्परिच्छिन्नत्वे सति घटवदनित्यत्वापत्तेः। नच नियाम्यो जीवो नियामक ईश्वर इति वाच्यं, 'अविकार्योयमुच्यत' इति गीतावचनादविकार्यस्य जीवस्य नियाम्यत्वायोगात्- नियाम्यं हि वस्तु विक्रियते। नच व्याप्यो जीवः व्यापक ईश्वर इति वाच्यं, जीवस्यापि व्यापकत्वदर्शनात्- 'येन सर्वमिदं तत'मिति हि भगवता गीतम्। नच शेषभूतो जीवश्शेषी त्वीश्वर इति वाच्यं, सर्वस्याप्यनात्मवर्गस्यात्मार्थं प्रियत्वेनात्मशेषत्वात्। नच सर्वं प्रति शेष्यपि जीव ईश्वरं प्रति शेष एवेति वाच्यं, आत्मार्थमेवात्मा प्रियो भवति न त्वीश्वरार्थमिति प्रत्यक्षात्, प्रत्युत यदीश्वर आत्मभिन्नस्स्यात्तर्हीश्वरोप्यात्मार्थमेव प्रियो भवति- पश्वादिवदितीश्वरस्यैवात्मशेषत्वं भवेत्। नच जीवो धार्य ईश्वरो धारक इति वाच्यं, जीवेनैव शरीरादेर्ध्रियमाणत्वात्, जीवस्य केनाप्यध्रियमाणत्वाच्च। नच व्यष्टिदेहधारी जीवस्समष्टिदेहधारक ईश्वर इति वाच्यं, समष्टिदेहवद्व्यष्टिदेहोप्यन्तर्भवतीति समष्टिदेहधार्येव व्यष्टिदेहधार्यपि भवतीति। अत एवोक्तं प्रह्लादेन- 'सर्वगत्वादनन्तस्य स एवाहमवस्थित' इति।

**एतेन**--ईश्वरस्य सर्वव्यापित्वादेव तस्मादभिन्नो जीव इति—**सिद्धम्**। नच जीवः किञ्चिद्ज्ञ ईश्वरस्तु सर्वज्ञ इति वाच्यं, ज्ञानकर्तृत्वस्य द्वयोरप्यसम्भवात्सर्वावभासकत्वस्य द्वयोरप्यविशेषाच्च। नच जीवः स्वसंसृष्टमेवावभासयति, ईश्वरस्तु सर्वमिति वाच्यं, असङ्गपुरुषस्य जीवस्य केनचित्सह संसर्गायोगात्। नच जीवस्संसारी ईश्वरस्तु नित्यमुक्त इति वाच्यं, अज्ञ एव जीवस्संसारी, नतु विज्ञ इति-- उक्तं हि भागवते—'योऽविद्यया युक्स तु नित्यबद्धो विद्यामयो यस्स तु नित्यमुक्त' इति। नच भीतिं प्राप्तो जीवः भीतिहेतुस्त्वीश्वर इति वाच्यं, अनात्मतादात्म्याध्यासादेव जीवस्य भीतिप्राप्तिस्स्वतस्तु अभय एवेति। एवमनात्मतादात्म्याध्यासवन्तं प्रत्येव भयहेतुरीश्वरः, स्वतस्तु अभय एवेति। नच अध्यासवान् जीवस्तद्रहित ईश्वर इति वाच्यं, अतत्त्वविज्जीवस्यानीश्वरत्वेपि तत्त्वविज्जीवस्येश्वरत्वात्। नह्यस्माभिरतत्त्वविद ईश्वराभेदः प्रतिपाद्यते, किंतु तत्त्वविदएव- तत्त्वविदेव हि अहं ब्रह्मास्मीति स्वस्येश्वराभेदं प्रत्येति। नचैक एव जीवः कथमीश्वराद्भिन्नोऽभिन्नश्च भवितुमर्हतीति वाच्यं, अविद्यादशायां भिन्नः, विद्यादशायां त्वभिन्न इत्यविरोधात्। यथा तव मतेपि एक एव जीवो ज्ञानोत्पत्तेः प्राग्देहतादात्म्याध्यासात्स्थूलः कृशश्च भवति, पश्चात्तु अस्थूलोऽकृशश्च तद्वदिति। **ननु मम मते ज्ञानोदया-**

प्रागपि जीवो स्थूलो कृशश्च भवत्येव, किंतु स्थूलोहं कृशोहमिति भ्रान्तिमात्रमेवेति चेद्धन्त! तर्हि ज्ञानोदयात्प्रागपि जीव ईश्वर एव, नाहमीश्वर इत्यज्ञप्रतीतिस्तु भ्रान्तिमात्रमेव । नचेश्वरादभिन्नस्य जीवस्य नाहमीश्वर इति प्रत्यक्षं कथमिति वाच्यं, देहाद्भिन्नस्य जीवस्य स्थूलोहमिति प्रतीतिवदिति । **ननु** यथा जीवस्य देहतादात्म्याध्यासात्स्थूलोहमिति प्रतीतिस्तथा ईश्वरतादात्म्याध्यासादेवेश्वरोहमित्यपि प्रतीतिः, स्वतस्तु जीवो नेश्वरो नापि देहः, किंतु तदुभयविलक्षण एव, चिदचिदीश्वराः खलु परस्परं विलक्षणा इति, **मैवम्**—सच्चिदानन्दरूपस्य जीवस्य सच्चिदानन्दरूपादेवेश्वराद्वैलक्षण्यस्य दुर्वचत्वात्--अचिद्वैलक्षण्यं तु भवत्येव । तथाच जीवस्य सच्चिदानन्दरूपे स्वस्मिन्नीश्वरबुद्धिः प्रमैव । ईश्वरस्यापि सच्चिदानन्दरूपत्वात् । किंच तत्त्वज्ञानात्प्रागेव जीवस्याध्यास इति कृत्वा तत्त्वज्ञानेन तन्निवृत्तौ कथं पुनरीश्वरतादात्म्याध्यासो जीवस्य भवितुमर्हति, किंतु ईश्वरतादात्म्यप्रमैव । नच यदि जीवेश्वरयोरैक्यं तर्हि 'अन्नं ब्रह्मेत्युपासीते'तिवदहंब्रह्मास्मीत्युपासना श्रुत्या किमिति विधीयेतेति वाच्यं, विसंवादिसंवादिभ्रमयोरिवानात्मब्रह्मोपासनात्मब्रह्मोपासनयोर्भेदात् । अनादिकालादारभ्य स्वस्मिन्वर्तमानां नाहं ब्रह्मेति भ्रान्तिं निर्मूलयितुमहंब्रह्मेत्युपासनस्य विहितत्वादिति । नचानन्दवल्ल्यां जीवानन्दस्य परिच्छेदश्रवणादीश्वरानन्दस्यापरिच्छिन्नत्वाच्च जीवेश्वरभेद इति वाच्यं, 'श्रोत्रियस्य चाकामहतस्ये'ति तत्त्वविज्जीवानन्दस्यापरिच्छिन्नत्वकथनादिति । नच विज्ञानमयो जीव, आनन्दमय ईश्वर इति वाच्यं, विज्ञानमयानन्दमययोः कोशत्वेन जीवत्वेश्वरत्वाभावात् । ज्ञानमानन्दं च खलु जीव ईश्वरश्च । नच वश्यमाय ईश्वरः, मायापरवशस्तु जीव इति वाच्यं, तत्त्वविज्जीवस्य मायापारवश्याभावात् । नच 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति गीतावचनान्मायातरणार्थं प्रपत्तव्य ईश्वरः, प्रपत्तिकृत्तु जीव इति वाच्यं, मायाकल्पितजीवेश्वरभेदस्यास्माभिरपि व्यवहारार्थमभ्युपेतत्वात् । स्वतस्तु न माया, नापि तत्तरणं, नापि तदर्थमीश्वरप्रपदनं चेति । **एतेन** नित्यमुक्तः ईश्वरो बद्धमुक्तस्तु जीव इति भेद इति—**परास्तम्**, बन्धमोक्षयोर्द्वयोरपि व्यावहारिकत्वेनापारमार्थिकत्वादिति । **किं बहुना** त्वं यं यं जीवेश्वरभेदप्रयोजकं धर्मं कल्पयसि, स सर्वोपि व्यावहारिकत्वेनापारमार्थिक एवेति वस्तुतो न जीवेश्वरभेदः, यावद्व्यवहारं तु अविद्यादशायां स भेदोस्माभिरभ्युपेत एवेति कृत्वा नास्ति वस्तुतो जीवेश्वरभेदसाधकं किमपि प्रमाणम् । एवमात्मभेदोप्यतात्त्विक एव- तथाहि न तावच्चैत्रस्य नाहं मैत्र इति प्रत्यक्षमात्मभेदे मानम्-- आत्मनि चैत्रत्वमैत्रत्वयोरयोगात्- अनामरूपः खल्वात्मा- देहस्य हि चैत्र इति मैत्र इति च नाम कृतम्- देहतादात्म्याध्यासाच्च जीवोऽहं चैत्र इति प्रत्येति । अहं मनुष्य इतिवत् । मृते चैत्रदेहे दग्धेपि चैत्रो दग्ध इत्येव लोकः प्रत्येति । तस्माद्देहस्यैव चैत्र इति मैत्र इति च नाम । नीलपीतादिरूपं च देहस्यैव, करचरणाद्यवयवसंस्थानविशेषश्च देहस्यैव । अतएव 'अशब्दमस्पर्शमरूपमव्ययमिति' श्रूयते । नच चैत्रस्य काणोहं मैत्रस्तु पटुदृष्टिरिति भेदप्रत्यक्षान्नात्मभेद इति वाच्यं, काणत्वदर्शनपटुत्वयोरिन्द्रियधर्मत्वेनात्मधर्मत्वाभावादन्यधर्मस्यान्यभेदप्रयोजकत्वाभावाच्च । नच सुख्ययं मैत्रो धन्यः धिङ्मां दुःखिनमिति चैत्रप्रत्यक्षादात्मभेद इति वाच्यं, सुखदुःखयुक्तान्तःकरणतादात्म्या-

ध्यासप्रयुक्तत्वात्तत्प्रत्यक्षं भ्रम एवेति । **ननु** एक एवात्मा सर्वव्यापी निरवयवश्च, तस्य नानान्तःकरणतादात्म्याध्यासान्नानाविकारवत्त्वमिति कृत्वा एकस्यैव चैत्रस्य युगपदेव सुखदुःखादिसर्वविकारप्रत्यक्षापत्तिरिति, **मैवम्**—सर्वव्यापिनस्सच्चिदानन्दलक्षणस्य कूटस्थस्यात्मनो नानात्मतादात्म्याध्यासो, नापि तत्प्रयुक्तसुखदुःखादिविकारजातम् । यस्त्वन्तःकरणतादात्म्याध्यासाद्विकारान्भजते स चिदाभास एव साभासाहङ्कारलक्षणः प्रमाता- चिदाभासश्च नैकः प्रत्यन्तःकरणमेकैकचिदाभाससत्त्वात् । अमी च चिदाभासास्संसरन्तो जीवा इत्युच्यन्ते । एते ईश्वराद्भिन्ना एव । एतेषां साक्षिभूतः कूटस्थ आत्मा तु ईश्वरादभिन्न इत्युच्यते, सचैक एवेति नात्मभेदावकाश इति । अवच्छेदवादे च, यस्मिन्नन्तःकरणे सुखं जायते तदन्तःकरणावच्छिन्नचैतन्येनैव तद्गृह्यते नान्यान्तःकरणावच्छिन्नचैतन्येनेति कृत्वा चैतन्यस्यात्मन एकत्वेपि तदवच्छेदकान्तःकरणनानात्वान्न सुखदुःखादिसाङ्कर्यमिति । वस्तुतस्तु एकस्यैव चैत्रस्येत्यप्ययुक्तम्- **चैत्रत्वादेव नात्मधर्मत्वेन** चैत्रस्यानात्मत्वादनात्मनां च नानात्वात् । चैत्रोहमित्यभिमन्यमानस्याज्ञस्य तादृशात्मत्वाभावात्- आत्मनः कूटस्थस्य सर्वावभासकत्वेन, युगपदेव सर्वविकारजातावभासकत्वरूपसर्वविकारजातप्रत्यक्षसत्त्वाच्च—इति । तस्मात्सर्वथाप्येक एवात्मा सत्यज्ञानानन्दानन्तलक्षणः तद्भेदस्त्वौपाधिक एवेति न वस्तुतोऽस्त्यात्मभेदः- नापि जीवेश्वरभेद इति स्थितमद्वैतम् ।

**ननु** एक एवात्मा सचेश्वर इत्यस्तु, तथापि आत्मानात्मभेदसत्त्वान्नाद्वैतसिद्धिरिति, **मैवम्**—किं वस्तुत आत्मानात्मभेदोस्तीति ब्रूषे ? यद्वा व्यवहारतः ? नाद्यः- वस्तुतोऽनात्मनोऽभावात् । द्वितीय इष्टएवेति । किंच आत्मनि कल्पितत्वादनात्माप्यात्माभिन्न एव, यथा शुक्तिकायां कल्पितं रजतं शुक्त्यभिन्नं तद्वत् । कल्पितं ह्यधिष्ठानादनतिरिक्तम् । एवमद्वैतस्यैव सत्यत्वाद्वैतस्य मिथ्यात्वादद्वैतज्ञानमेव तत्त्वज्ञानमिति कृत्वा तदेव मोक्षफलकमिति तत्प्रतिपादनादेव शास्त्रं प्रमाणं भवति । द्वैतज्ञानं त्वतत्त्वज्ञानमिति कृत्वा तन्नैव मोक्षफलकमिति तत्प्रतिपादनाच्छास्त्रमप्रमाणमेव भवेदिति **संक्षेपः** ॥

## ऐक्यश्रुतेरुपासनापरत्वनिराकरणम् ।

**यदुक्तमुपासनार्थं** श्रुतिभिर्जीवेश्वरयोरैक्यमुपदिष्टं, भेदस्तु तात्त्विक एवेति, **तदयुक्तम्**—उपास्योपासकयोरभेदोपदेशस्यायुक्तत्वात्— उपास्ययोस्तु अन्नब्रह्मणोर्मनोब्रह्मणोरभेद उपदिश्येत- किंच लोकविरुद्धश्चायमुपदेशः- लोके हि राजानमुपासमानः पुरुषः राजाहमिति नोपास्ते, किंतु कृपणोहमल्पः, राजा तु महाप्रभुरन्य इत्येवोपास्ते । तस्मादुपासनार्थं जीवेश्वरयोरैक्योपदेशो व्यर्थः प्रत्युतानर्थकश्चेति । नचाहमीश्वर इत्युपासनाज्जीवस्येश्वरसाम्यं भवति- 'निरञ्जनः परमं साम्यमुपैती'ति श्रुतेरिति वाच्यं, 'न तत्समश्चाभ्यधिकः कुतोन्य' इति श्रुत्या ईश्वरसमस्य वस्तुनोन्यस्याभावात् । यदि मुक्ता ईश्वरसमास्तर्हीतः प्रागनेकमुक्तजीवसत्त्वात्कथमुच्यते, न तत्सम इति । परमं साम्यमिति श्रुतौ च परमशब्दस्वारस्यात्परमं साम्यमभेदरूपमेव । यद्वा प्रत्ययस्याविवक्षितत्वात्साम्यं सर्वत्र समं परमं ब्रह्मोपैतीति श्रुत्यर्थः- 'निर्विशेषाय साम्याय नमो ज्ञानघनाय च' इति भागवते च साम्यशब्दो हि ब्रह्मविशेषणतया प्रयुक्तः । अन्यत्र च तत्साम्यमजमद्वयमिति- न हि समस्य कस्यचिद्भावस्साम्यं ब्रह्म भवितुमर्हति,

अस्याश्च श्रुतेरेवंपरत्वे 'ब्रह्मविद्ब्रह्मैव भवती'ति श्रुतिरेव प्रमाणम् । तत्र हि न ब्रह्मसाम्यप्राप्तिर्जीवस्योक्ता, किंतु ब्रह्मभावप्राप्तिरेव । नच ब्रह्मोपैतीति तत्रोक्तं ब्रह्मैव भवतीत्यत्रोक्तमिति कथमव्याहतिरिति वाच्यं, ब्रह्मोपैतीत्यस्य ब्रह्मैव भवतीत्येवार्थः- नित्याप्तस्य ब्रह्मणः पुनःप्राप्त्ययोगादिति । तस्मादुपासनार्थमेव जीवेश्वरभेदः कल्पितः- उपास्योपासकोपासनरूपत्रिपुट्या अभेदेऽयोगात् । अभेदस्तु तात्त्विकएव । भेदस्तु मिथ्याभूत एव, परमार्थदशायां भेदाभावात् । नच मुक्तावपि भेदोऽस्तीति वाच्यं, त्वदभिमत-वैकुण्ठलोकप्राप्तिरूपमुक्तावेव भेदसत्त्वं, नत्वस्मदुक्तनिर्विशेषब्रह्मभावापत्तिरूपमुक्ताविति ।

**ननु** निर्विशेषं ब्रह्म नास्त्येव यद्भावापत्तिस्तव मोक्षस्स्यात् । नच नेह नानेति श्रुत्या सर्व-विशेषप्रतिषेधान्निर्विशेषब्रह्मसिद्धिरिति वाच्यं, भेदनिषेधस्यैक्यविधिशेषत्वात्कार्यकारणभेदः स्वनिष्ठभेदश्च निषिध्यत इति श्रुत्यभिप्रायादिति, **मैवम्**—भेदमात्रनिषेधपरायाश्श्रुतेर्भेदद्वयनिषेधपरत्वेन संकोचन-स्यान्याय्यत्वात् । नच समानाधिकरणवाक्येनैक्यविधानाद्भिन्नविशेषणाभिधायिशब्दानामेकविशेष्यवृत्ति त्वस्य सामानाधिकरण्यरूपत्वात्प्रकारभेदे तिष्ठति सति कृत्स्नभेदनिषेधो नोपपद्यत इति वाच्यं, समा-नाधिकरणवाक्यं लक्षणया निर्विशेषवस्तुबोधकमित्युक्तत्वात् । नास्ति ब्रह्मणि केवले कश्चिदपि प्रकारभेद इति । **यच्चोक्तं** सामान्येनावगतो भेदनिषेधस्स्वतन्त्रवस्तुरूपभेदविशेषनिषेधे पर्यवस्यति छागपशुन्याये-नेति **तदप्ययुक्तम्**—सति बाधके भेदसामान्यनिषेधो भेदविशेषनिषेधे पर्यवस्यतु नाम, प्रकृते तु बाधकाभावान्न तथा पर्यवस्यतीति । नच भेदप्रत्यक्षमेव तद्बाधकमिति वाच्यं, भेदप्रत्यक्षस्य भ्रमत्व-स्योक्तत्वात् । नच जीवेश्वरभेदप्रतिपादकश्रुतयस्तद्बाधिका इति वाच्यं, व्यावहारिकजीवेश्वरभेदपरत्वा-त्तासां पारमार्थिकत्वाच्चाभेदस्य । नच परस्परविलक्षणयोर्जगद्ब्रह्मणोर्भेदस्तात्त्विक इति वाच्यं, जगत एवातात्त्विकत्वेन तत्प्रयुक्तभेदस्याप्यतात्त्विकत्वात् । नच जगत्तात्त्विकमेवेति वाच्यं, कृतकत्वेनानित्यस्य जगतस्तात्त्विकत्वायोगात्- अकृतकं नित्यं हि वस्तु तात्त्विकम् । नच नित्यमेवेदं जगत्- प्रलयेपि सूक्ष्मरूपेण सत्त्वादिति वाच्यं, सृष्टेः प्रागपि जगतस्सत्त्वे पुनर्जगतस्सृष्ट्ययोगात् । 'तत्तेजोऽसृजते'-त्यादिसृष्टिश्रुतिविरोधात् । नच बीजस्यान्तरिवांकुरो जगदिदं सृष्टेः प्रागव्यक्तं सत् स्थितं- तत्पुनरीश्व-रेण व्यक्तं कृतमिति न श्रुतिविरोध इति वाच्यं, तर्हि 'अव्यक्ताद्व्यक्तयस्सर्वाः प्रभवन्त्यहरागमे, रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञिते' इति गीतावचनात् । जगतोऽव्यक्ताज्जन्म तत्रैव लयश्च भवत इति कथं जन्मनाशवतो जगतो भवेन्नित्यत्वम् । नच कारणे कार्यं सूक्ष्मरूपेणानभिव्यक्तं सद्वर्तते तदेव स्थूलरूपे-णाभिव्यक्तं सत्कार्यं जातमित्युच्यते, तदेव भूयस्सूक्ष्मरूपेणानभिव्यक्तं सन्नष्टमित्युच्यत इति न कार्यस्य सर्वात्मना जन्मलयाविति वाच्यं, तथासति किं सूक्ष्मरूपमनभिव्यक्तं जगन्नित्यमित्युच्यते? यद्वा स्थूल-रूपमभिव्यक्तं जगत्? नाद्यः- तस्येदानीमभावान्नित्यस्य चाभावायोगात् । न द्वितीयः- तस्य प्रलयेऽ-भावादिति । नच यदेव सूक्ष्मरूपमनभिव्यक्तं तदेव स्थूलरूपमभिव्यक्तमिति न दोष इति वाच्यं, सूक्ष्मत्वानभिव्यक्तत्वयोस्स्थूलत्वाभिव्यक्तत्वयोश्च परस्परविरोधेन सामानाधिकरण्यायोगात् । नचै-कस्मिन्नेव वस्तुनि कालभेदात्सूक्ष्मत्वस्थूलत्वे, अभिव्यक्तत्वानभिव्यक्तत्वे च सम्भवत इति वाच्यं,

तथासति सूक्ष्मत्वादीनां विशेषणानां व्यभिचाराद्विशिष्टस्यापि व्यभिचारित्वेनानित्यत्वेपि विशेष्यांशोऽव्यभिचारी नित्य इत्युक्तं भवति । कोसौ विशेष्यांश इति अचिद्वस्त्वेव, **मैवम्**—यद्यचिद्वस्तु चिद्वस्त्विवाजमनन्तं नित्यं च तर्हि किंप्रति कारणं भवेद्ब्रह्म । नचाचित्परिणामभूतभूतजातं प्रतीति वाच्यं, तथासति मृत्परिणामभूतघटादिविकारजातं प्रति कुलालस्येव ब्रह्मणोपि निमित्तकारणत्वमेव भवेन्न तूपादानत्वमिति । नचेष्टापत्तिः- प्रकृतिश्चेति सूत्रविरोधात् । नचाचिद्विशिष्टं ब्रह्म जगदुपादानमिति वाच्यं, तथापि विशेषणभूताचिदंशस्यैव जगदुपादानत्वं, नतु विशेष्यभूतब्रह्मणः- उपादानोपादेययोस्सालक्षण्यनियमादिति । किंच 'मृत्तिकेत्येव सत्य'मिति श्रुतेः कारणसत्यत्वनिश्चयाज्जगच्छब्दवाच्यभूतभौतिकजातं प्रति कारणभूतमचिद्वस्त्वेव सत्यत्वान्नित्यं भवेन्न तु कार्यभूतं जगत्- तद्धयसत्यत्वादनित्यमेव न हि सत्यत्वनित्यत्वयोर्वैयधिकरण्यम् । नचैवं जगतोऽनित्यत्वेपि नित्यत्वादचिद्वस्तु तात्त्विकमेवेति तत्प्रयुक्तभेदस्तात्त्विक एवेति वाच्यं, अचिद्वस्तुनो दृश्यत्वेन रज्जुसर्पवन्मिथ्यात्वादनित्यत्वमिति- नहि मिथ्याभूतमचिद्वस्तु नित्यं भवितुमर्हति, नित्यत्वासत्यत्वयोस्सामानाधिकरण्यायोगात् । नच दृश्यो वल्मीकसर्पस्सत्य एवेति न दृश्यत्वं मिथ्यात्वप्रयोजकमिति वाच्यं, वल्मीकसर्पस्यापि मिथ्यात्वात् । नच दृश्यं ब्रह्म सत्यमिति वाच्यं, ब्रह्मणोऽदृश्यत्वात् । 'यत्तदद्रेश्यमग्राह्य'मिति श्रुतेः । नच चिद्वस्तुनस्सत्यत्वात्तत्प्रयुक्तभेदस्तात्त्विक इति वाच्यं, ब्रह्मण एव चिद्वस्तुत्वात् । नच चिदचिद्विलक्षणं ब्रह्मेति वाच्यं, ज्ञानस्वरूपस्य ब्रह्मणश्चिद्वैलक्षण्यस्य दुर्वचत्वात् । नच ब्रह्म न ज्ञानस्वरूपमिति त्वयोक्तमिति वाच्यं, तथासति जीवोपि न ज्ञानस्वरूप इत्युक्तमेवेति- जीवब्रह्मभेदासिद्धेः । **ननु** जीवब्रह्मणोस्सच्चिदानन्दलक्षणत्वादस्त्वभेदः- कथं पुनरचिद्ब्रह्मणोरन्योन्यविरुद्धलक्षणयोरभेद इति, **उच्यते**—विलक्षणयोरप्यधिष्ठानारोप्ययोरभेदस्सम्भवतीत्युक्तमेवेति । नच जगदधिष्ठानं न ब्रह्मेति वाच्यं, ब्रह्मण्येवेदं वर्तत इति त्वयाप्युक्तत्वात् । 'तज्जला'निति श्रुतेश्च, कार्यस्य कारणे स्थितिदर्शनाच्च । नच जगत्कारणमव्यक्तमिति त्वयोक्तमिति वाच्यं, तस्याप्यव्यक्तस्य ब्रह्मण्येव स्थितत्वादव्यक्तस्थमपि जगद्ब्रह्मण्येव स्थितमिति । नचाव्यक्तं ब्रह्माकार्यमिति वाच्यं, ब्रह्मकार्यमव्यक्तमिति स्थापितत्वात् । नच निरवयवे ब्रह्मणि कथं जगत्स्थितमिति वाच्यं, वल्मीकवन्नीरन्ध्रायामपि रज्जौ यथा सर्पस्तिष्ठति तथैवेति । नच रज्जौ वस्तुतस्सर्पो नास्त्येव, किंतु तत्र सर्पप्रतीतिर्भ्रान्तिरेवेति वाच्यं, तथैव ब्रह्मण्यपि वस्तुतो जगन्नास्त्येव, किंतु तत्र जगत्प्रतीतिर्भ्रान्तिरेवेति तुल्यत्वात् । नच रज्जुसर्पयोरिव ब्रह्मजगतोस्सादृश्याभावात्कथं ब्रह्मणि जगद्भ्रान्तिरिति वाच्यं, गगनेपि नीलभ्रान्तिदर्शनात् । नहि गगननीलयोरस्ति सादृश्यम् । **ननु** अधिष्ठानसामान्यज्ञानादधिष्ठानविशेषज्ञानाभावाच्च रज्ज्वादौ सर्पादिभ्रान्तिर्भवतु नाम, कथं पुनर्निर्विशेषे ब्रह्मणि जगद्भ्रान्तिर्भवितुमर्हति निर्विशेषत्वादेवाधिष्ठानब्रह्मणस्तत्सामान्यज्ञानसद्भावस्य तद्विशेषज्ञानासद्भावस्य चायोगादिति, **मैवम्**—अध्यस्तमाये सविशेष एव ब्रह्मणि जगदध्यास इति । नच निर्विशेषे ब्रह्मणि कथं मायाध्यास इति वाच्यं, यावन्मुक्ति सविशेषमेव ब्रह्मेति । नच मायाध्यासात्प्राक्कथं ब्रह्मणस्सविशेषत्वमिति वाच्यं, मायाध्यासस्यानादित्वेन तस्मात्प्रागिति वक्तुमयुक्तत्वादिति । तस्मान्न

चिता नाप्यचितास्ति ब्रह्मणो मनागपि भेदः । **ननु** एवं ब्रह्मणस्सजातीयविजातीयभेदाभावेपि स्वगतभेदोस्त्येव- स्रष्टृत्वहर्तृत्वभर्तृत्वादिविशेषसत्त्वाद्ब्रह्मण इति, **मैवम्**—स्रष्टव्यहर्तव्यभर्तव्यादिरूपवस्तुनो वस्तुतोऽभावात्कथं वस्तुतो ब्रह्मणस्सविशेषत्वमिति । **तस्मान्निर्विशेषमेव ब्रह्मेति भेदोऽतात्त्विक एव** ॥

## 'एकमेवेति' श्रुतेः रामानुजाभिमतार्थनिराकरणम् ।

**यदुक्तं** कार्यनानात्वस्य प्रकारनानात्वस्य च विहितत्वात्कारणं प्रकारि च ब्रह्मैकमेवेति 'एकमेवाद्वितीयं ब्रह्मे'तिश्रुत्यर्थ इति **तदयुक्तम्**—कुतर्कसिद्धः कार्यकारणभेद इति वदता त्वया कार्यनानात्वेऽभ्युपगते सति, कारणनानात्वमप्युक्तप्रायमेवेति कथं कारणैक्यसिद्धिः । नच कार्याणां घटादीनां परस्परं भेदेपि स्वकारणेन मृदा सहाऽभेद एवेति कृत्वा कार्यनानात्वेपि कारणैकत्वमुक्तमिति वाच्यं, तथा सति- मृदतिरिक्तघाटादिविकाराभावाद्यथा मृत्तिकैव, नतु घटादिप्रयुक्तं मृदो नानात्वं तद्वज्जगत्कारणभूतब्रह्मातिरिक्तजगद्रूपकार्याभावादेकमेव ब्रह्म, नतु जगत्प्रयुक्तं ब्रह्मणो नानात्वमित्यभ्युपेयम् । अभ्युपेते च तथा- कथं तव स्वाभीष्टभेदसिद्धिरिति । नच मृदि घटादिविकारवद्ब्रह्मणि जगदस्तीति न निर्विशेषब्रह्मसिद्धिस्तवेति वाच्यं, मृदतिरिक्तघटादिपदार्थवद्रज्ज्वतिरिक्तसर्पादिपदार्थवच्च ब्रह्मातिरिक्तजगत्पदार्थाभावान्न जगता ब्रह्मणस्सद्वितीयत्वमिति । एवं कारणब्रह्मातिरिक्तकार्यजगदभावादेव तत्प्रयुक्तसर्वज्ञत्वादिप्रकारभेदस्याप्यभावात्कथं प्रकारनानात्वमुच्यते- प्रकारस्य चाभावे कार्यस्य कारणातिरेकेण चाभावे कथं प्रकारि कारणं च ब्रह्मैकमिति वक्तुं शक्यते, तस्मादकारणमकार्यं निष्प्रकारं च ब्रह्मेति निर्विशेषब्रह्मसिद्धिः ॥

## 'नेह नानास्ति किंच' नेति श्रुत्यर्थविचारः ।

**यदुक्तं रामानुजेन**—प्रत्यक्षादिसकलप्रमाणानवगतं नानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य तदेव बाध्यत इत्युपहास्यमिदमिति, **तदसत्**—भ्रमप्रत्यक्षसिद्धमसच्छास्त्रादिसिद्धं च ब्रह्मणो नानात्वमनूद्य श्रुत्या निषिध्यत इत्यदोषात् । **यच्चोक्तम्**—'तज्जलानिति शान्त उपासी'तेति श्रुतेर्ब्रह्मनानात्वानुसन्धानं शान्तिहेतुरिति, **तत्तुच्छम्**—तज्जत्वात्तल्लत्वात्तदनत्वाच्च सर्वमिदं ब्रह्मेत्यनुसन्दधानस्य शान्तिश्श्रुत्युक्ता, तद्धि न ब्रह्मणो नानात्वानुसन्धानं, किंतु जगतो ब्रह्मत्वानुसन्धानमेव, तदस्माकमिष्टमेव, तदेव च शान्तिहेतुः- यथा सर्पस्य रज्जुजातत्वाद्रज्जुस्थितत्वाद्रज्जुलीनत्वाच्च रज्जुत्वानुसन्धानं सर्पभ्रमनिवर्तकत्वेन तज्जन्यभयकम्पादिनिवर्तकत्वाच्छान्तिहेतुः, तथा ब्रह्मजातत्वाद्ब्रह्मस्थितत्वाद्ब्रह्मलीनत्वाच्च जगतो ब्रह्मत्वानुसन्धानं जगद्भ्रमनिवर्तकत्वेन तज्जन्यसंसारनिवर्तकत्वाच्छान्तिहेतुरेवेति । **ननु** यथा मृद्द्रव्यमेकमेव घटादिरूपेण नानात्वं प्राप्तं तथा ब्रह्मैकमेव जगद्रूपेण नानात्वं प्राप्तमिति ब्रह्मणो नानात्वानुसन्धानं कर्तव्यमेवेति, **मैवम्**—कूटस्थब्रह्मणो जगद्रूपपरिणामानुपपत्तेरुक्तत्वात् । नच ब्रह्म मायया जगद्रूपेण परिणतमित्यनुसन्धेयमिति वाच्यं, तथासति तव स्वमतभङ्गप्रसङ्गात् । यदि त्वस्मदीय इदं पृच्छति तर्हि **ब्रूमः**—ब्रह्मणो मायया जातं यन्नानात्वं तन्नानुसन्धेयं- संसारहेतुत्वात्- 'मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्य'तीति श्रुतेः, जीवस्यानादिकालादारभ्य तदनुसन्धानस्य सत्त्वेन विधेयत्वा-

भावाच्च। किंतु मायया नानात्वेन प्रतीयमानस्य ब्रह्मण एकत्वमेवानुसन्धेयम्। एकत्वदर्शनस्यैवाभयहेतुत्वात्- यथावस्थितवस्तुदर्शनं ह्यभयहेतुः। अतएवोक्तम्- 'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता चे'ति। एकं समं सत्यं ब्रह्माहमिति ज्ञानेन समं वित्तं ब्राह्मणस्य नास्तीत्यर्थः। तस्माद्ब्रह्मणि निर्विशेषे मायया कल्पितमिदं द्वैतं। वस्तुतस्तु ब्रह्मैकमेवाद्वितीयमित्यनुसन्धानं कर्तव्यं मुमुक्षुणा। नच ब्रह्मणो नानात्वं न मायिकं किंतु तात्त्विकमेवेति वाच्यं, सच्चिदानन्दलक्षणस्य ब्रह्मणो सदचिद्दुःखलक्षणजगद्रूपत्वं कथं तात्त्विकं भवितुमर्हति। नच जगदपि सच्चिदानन्दलक्षणमेवेति वाच्यं, 'विज्ञानमानन्दं ब्रह्म', 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति ब्रह्मलक्षणस्य जगत्यतिव्याप्तिप्रसङ्गात्, जगदचिदिति स्वाभ्युपगमविरोधश्च। नच विचित्रशक्तिकत्वाद्ब्रह्म सच्चिदानन्दमपि स्वभिन्नलक्षणजगद्रूपेण परिणतमिति वाच्यं, तस्यास्मन्मत एव पर्यवसानादर्थस्य- माया खलु ब्रह्मणो विचित्रशक्तिः। नच वस्तुत एव परिणतमित्युच्यत इति वाच्यं, निर्विकारस्य परिणामायोगाद्ब्रह्मणः। नहि दृष्टविपरीतकल्पनमुचितं- नहि लोके परिणामिवस्तुनो निर्विकारत्वं दृष्टं, परिणामपरिणामिनोर्वैलक्षण्यं वा। नच चिदचिद्विशिष्टस्य ब्रह्मणो नानात्वं तात्त्विकमिति वाच्यं, ब्रह्मणश्चिदचिद्वैशिष्ट्यस्यैव नानात्वरूपत्वात्तस्यैवातात्त्विकत्वाच्च। नच ब्रह्मणस्सूक्ष्मचिदचिद्वैशिष्ट्यमेकत्वं स्थूलचिदचिद्वैशिष्ट्यं नानात्वमिति वाच्यं, विशिष्टस्यैकत्वं व्याहतमिति- येन यद्विशिष्टं तेन तद्भवति ह्यनेकम्। नच ब्रह्मद्वयाभावादेकं ब्रह्मेत्युच्यते, नतु ब्रह्मणश्चिदचिद्वैशिष्ट्याभावादिति वाच्यं, ब्रह्मणश्चिदचिद्वैशिष्ट्ये सति जीवादप्यधिकसंसारित्वापत्तेः। बद्धमुक्तजीवस्यैव प्रकृतिविनिर्मुक्तत्वे स्वाभ्युपगते सति नित्यमुक्तस्य ब्रह्मणः प्रकृतिशब्दवाच्याचिद्विशिष्टत्वस्य दुर्वचत्वाच्च। अनञ्जनत्वशुद्धत्वप्रतिपादकश्रुतिविरोधश्च- नहि विशिष्टं शुद्धं भवति। किंच यद्येन विशिष्टमित्युच्यते तत्तेन कदाचिदविशिष्टमेव भवेत्- विशिष्टत्वस्य जन्यधर्मत्वेन नित्यत्वाभावात्-- संयोगो हि विशिष्टत्वं, संयोगस्य च विप्रयोगोऽन्त एव- 'संयोगा विप्रयोगान्ता' इति न्यायात्- आदिश्च स एव- वियुक्तयोरेव संयोगो न त्ववियुक्तयोरिति। अपि च 'असङ्गो ह्ययं पुरुष' इति श्रुतेरसङ्गस्य कथं वैशिष्ट्यम्। नच जीव एवासङ्ग इति वाच्यं, संसारिजीवस्य कथमसङ्गत्वम्। नच मुक्तजीवोऽसङ्ग इति वाच्यं, नित्यमुक्तब्रह्मण एवासङ्गत्वे कथं मुक्तजीवस्यासङ्गत्वं भवेत्। नच नित्यमुक्तं ब्रह्मेति वाच्यं, तर्हि किं बद्धमुक्तं न, न बद्धं नापि मुक्तमिति। **ननु** यदि मुक्तजीववद्ब्रह्म प्रकृतिविनिर्मुक्तं न भवति, तर्हि बद्धजीववत्प्रकृतिसंसृष्टमेवेति कृत्वा कथं ब्रह्म बद्धं न भवतीति **चेन्नैवम्**— प्रकृतिसंसर्गमात्रं न बन्धावहं किंतु प्रकृतिपारवश्यमेव। तथा च ब्रह्मणः प्रकृतिसंसर्गसत्त्वेपि प्रकृतिपारवश्याभावान्न बन्धः। हन्त तर्हि मुक्तजीवस्यापि प्रकृतिपारवश्याभावादेव मोक्ष इति वक्तव्यं, किमिति प्रकृतिसंसर्गाभावादित्युच्यते। नच मुक्तस्य प्रकृतिविनिर्मुक्तत्वान्नास्ति तत्संसर्ग इति वाच्यं, किं मुक्तस्य ब्रह्मणा सह संसर्गोस्ति? उत न? आद्ये- प्रकृतिसंसृष्टब्रह्मसंसर्गान्मुक्तस्यापि प्रकृतिसंसर्गोस्त्येव। द्वितीये- कथं चिद्वैशिष्ट्यं ब्रह्मणः। नचाशुद्धप्रकृतिविनिर्मुक्तिरेव जीवस्य मुक्तिः, शुद्धप्रकृतिसंसर्गस्तु जीवस्य मुक्तावप्यस्तीति वाच्यं, तर्हि किं ब्रह्म शुद्धप्रकृतिविशिष्टम्? यद्वाऽशुद्ध-

प्रकृतिविशिष्टम्? उत शुद्धाशुद्धप्रकृतिद्वयविशिष्टम्? आद्ये- नित्यमुक्तमेव ब्रह्म भवेत्। द्वितीये बद्धमेव भवेत्। तृतीयस्तु- न सम्भवति- एकस्मिन्नेव वस्तुनि विरुद्धप्रकृतिद्वयवैशिष्ट्यायोगात्। किंच यदि शुद्धा अशुद्धा वा प्रकृतिर्ब्रह्मणा युक्ता न भवेत्तर्हि ब्रह्मणस्सर्वव्याप्तिस्सर्वान्तरत्वं च न सिद्ध्येत्। प्रकृतिद्वयवैशिष्ट्यं त्वसम्भवदोषग्रस्तम्। नच ब्रह्मण एको भागश्शुद्धप्रकृतिविशिष्टोऽन्यस्त्वशुद्धप्रकृतिविशिष्ट इति वाच्यं, निरंशे ब्रह्मणि भागकल्पनायोगात्। कल्पिते च भागद्वये अशुद्धमेकं शुद्धमन्यच्चेति ब्रह्मद्वयं स्यादेव शुद्धाशुद्धब्रह्मणोरेकत्वायोगात्। किंच चिदचिद्विशिष्टं ब्रह्मेत्युक्तं तत्र चिदचितोर्भेदात्- यत्र ब्रह्मप्रदेशे चिद्वैशिष्ट्यमस्ति तत्र नाचिद्वैशिष्ट्यमिति कृत्वा चिद्विशिष्टं ब्रह्मैकं, अचिद्विशिष्टं ब्रह्मान्यदित्यपि ब्रह्मद्वयं भवेत्, तथा चिन्नानात्वाच्चैत्रचिद्विशिष्टं ब्रह्मैकं, मैत्रचिद्विशिष्टं ब्रह्मान्यदित्यप्यनन्तानि ब्रह्माणि भवेयुः। तस्माद्यदि ब्रह्मैकमेवेति मतं तर्हि तदविशिष्टमेवेत्यकामेनाप्यवश्यमभ्युपेयं, सति वैशिष्ट्ये ब्रह्मानेकत्वप्रसङ्गात् इति। एवमेकस्य ब्रह्मणो नानात्वायोगाद्ब्रह्मणः प्रतीयमानं नानात्वमतात्त्विकमेव- मायिकत्वादिति कृत्वा मिथ्याभूतब्रह्मनानात्वानुसन्धानस्य मोक्षाहेतुत्वात्प्रत्युत भयहेतुत्वाच्चाकर्तव्यत्वमिति स्थितम्। अत एव 'य उदरमन्तरं कुरुते, अथ तस्य भयं भव'तीति ब्रह्मणि जीवेश्वरादिभेददर्शिनो भयप्राप्तिश्श्रूयते।

**ननु** तस्याश्श्रुतेर्न त्वदुक्तोर्थः, किंतु ब्रह्मध्यानस्य मनागपि व्यवधानं यः कुरुते, तस्य भयं भवतीत्यर्थः। तथा च सर्वदापि मुमुक्षुणा ब्रह्म ध्यातव्यमिति फलितम्। अतएव 'यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते। सा हानिस्तन्महच्छिद्रं सा भ्रान्तिस्सा च विक्रिये'ति- स्मर्यत इति **रामानुजः**, **तन्मन्दम्**—'यन्मनसा न मनुते येनाहुर्मनो मतं, तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति श्रुतेर्यन्मनसा चिन्त्यते तद्वस्तु ब्रह्म न भवत्येवेति कथं ब्रह्मध्यानसिद्धिः। स्मृतिस्तु विरोधाधिकरणन्यायेन श्रुतिविरोधादन्यथा नेया- तथाहि—यस्साङ्ख्येऽनधिकृतोल्पबुद्धिस्तेन योगोनुष्ठेयः, स च योगोऽहंब्रह्मास्मीत्युपासनात्मकः, तस्य च मध्ये विच्छेदे सति मनुष्योहमित्याद्यनात्मतादात्म्याध्यासप्राप्तिर्भवति। स चाध्यासस्संसारहेतुत्वान्न कर्तव्यः, तस्माद्योगिना निरन्तरं ब्रह्मध्यानं कर्तव्यमिति स्मृत्यर्थः। यद्यपि य उदरमिति श्रुतेरेवंपरत्वेपि नास्माकं कापि क्षतिः- तदापि प्रकरणादिवशाद्भेददर्शिनो भयप्राप्तिरर्थ इत्युक्तमिति वेद्यम्। नच ब्रह्मध्यानमेवाभयहेतुर्न तु ब्रह्मज्ञानमात्रमिति वाच्यं, यस्याहं ब्रह्मास्मीति सत्तानिश्चयरूपमपरोक्षज्ञानं नास्ति तस्य ब्रह्मध्यानमेवाभयहेतुः, यस्य तु तदस्ति सकिमित्यहंब्रह्मास्मीति प्रत्ययावृत्तिरूपं ध्यानं विदध्यात्। नचाहं मनुष्य इत्यादिविपरीतज्ञानानुदयार्थमिति वाच्यं, तादृशविपरीतज्ञानं बाधित्वैव तस्याहंब्रह्मास्मीति निश्चयज्ञानस्य जातत्वादिति। नच ब्रह्मविदापि ब्रह्म ध्यातव्यमेव, स्वस्मादुत्कृष्टत्वाद्ब्रह्मण इति वाच्यं, ब्रह्मविदएव ब्रह्मत्वात्- 'ब्रह्मविद्ब्रह्मैव भव'तीति हि श्रूयते। नच परमानन्दत्वाद्ब्रह्म ध्यातव्यं ब्रह्मविदेति वाच्यं, 'विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयतां। साक्ष्यहं किञ्चिदप्यत्र न कुर्वे नापि कारये' इति वचनाद्या ब्रह्म ध्यायति सा धीरेव, ब्रह्मविदस्तु साक्ष्येवेति कथं कूटस्थस्य साक्षिणः ब्रह्मचिन्तनं सम्भवेत्- चिन्तनं हि विकारः। अत एव

'ध्यायतीव लेलायतीवे'ति श्रूयते । बुद्धौ ध्यायन्त्यामात्मा ध्यायतीव तस्यां चलन्त्यामात्मा चलतीव भाति, नतु वस्तुतो ध्यानं चलनं वा भवत्यात्मन इति श्रुत्यर्थः । एवं ब्रह्मविदः कर्तव्याभावादेव कृतकृत्यत्वं स्मर्यते- 'एतद्बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भार'तेति । किंच निरन्तरब्रह्मचिन्तनादभयप्राप्तिरिति मतेपि ब्रह्मभिन्नचिन्तनं भयहेतुरिति सिद्धत्वेन ब्रह्मणो नानात्वानुसन्धानेन कर्तव्यमेवेति सिद्धमिति कृत्वा प्रकृतिस्मृत्युदाहरणं रामानुजस्य बुद्धिदौर्बल्यप्रयुक्तमेव । नच ब्रह्मचिन्तनं नाम ब्रह्म जगद्रूपमभवदिति चिन्तनमिति वाच्यं, तस्य ज्ञानत्वात् । नच ब्रह्म जगद्रूपमभवदित्येतदेवासकृदावर्तितं सद्ध्यानं भवतीति वाच्यं, तादृशध्यानस्य कर्तव्यत्वानुपदेशात् । नच सर्वं ब्रह्मेत्युपासीतेति तद्ध्यानं विहितमेवेति वाच्यं, तत्रापि सर्वस्य ब्रह्मत्वमेव ध्यातव्यं, नतु ब्रह्मणस्सर्वत्वमिति । तस्मात् अहं ब्रह्मास्मीति सर्वं ब्रह्मेति वा ब्रह्मैव प्राधान्येन ध्येयं न त्वन्यत् । अपिच सविकल्पसमाधावेव 'अहं ब्रह्मास्मीति' 'सर्वं ब्रह्मेति' 'प्रज्ञानं ब्रह्मेति' वा वृत्तिसद्भावः, निर्विकल्पकसमाधौ तु अखण्डब्रह्माकारैव वृत्तिः- चित्तं हि भावनावशाद्ध्येयाकारं प्राप्नोति । यथा विष्णुमूर्तिं ध्यायदपि चित्तं क्रमेण परिपक्वं सद्विष्णुमूर्त्यभिन्नमेव भवति भ्रमरकीटन्यायात्- तद्वत् । नच ब्रह्मणो निराकारत्वाच्चित्तस्य ब्रह्माकारावृत्तिर्दुर्लभेति वाच्यं, निराकारगगनाकारचित्तवृत्तिदर्शनात् । अपिच चित्तस्य लयविक्षेपराहित्यमेव दुर्लभं, तद्धि लब्धे ब्रह्माकारता स्वयमेव भवति । नतु ब्रह्माकारत्वसम्पादने चित्तस्य कोप्यस्ति प्रयासः । तथाचोक्तम्- 'यदोपरामो मनसो नामरूपरूपस्य दृष्टस्मृतिसम्प्रमोषात् । य ईयते केवलया स्वसंस्थया हंसाय तस्मै शुचिषद्मने नम' इति- तस्मान्मुमुक्षुश्चित्तस्यानात्माकारतामेव नापादयेत् । अयं च योगमार्ग एव । आत्मानात्मविचारस्तु साङ्ख्यमार्गः, स सूक्ष्मबुद्धिविषयः । इदं च मार्गद्वयं, ब्रह्मसाक्षात्कारद्वारा मुक्तिहेतुरेव- 'तत्कारणं साङ्ख्ययोगाभिपन्न'मिति श्रुतेः- 'यत्साङ्ख्यैर्गम्यते स्थानं तद्योगैरपि गम्यत' इति गीतायाश्चेति **संक्षेपः** ॥

## 'यत्र हि द्वैतमिव भव'तीति श्रुत्यर्थविचारः ।

**अथ यदुक्तं** सुदर्शनेन—'यत्र हि द्वैतमिव भवती'ति श्रुतेरयमर्थः- ज्ञातृज्ञेयज्ञानसाधनेषु किञ्चिदपि स्वनिष्ठं नास्तीति- तथा च लौकिकप्रतीतौ द्रष्टृदृश्यादिकं प्रकारिभूतपरमात्माप्रतिपत्तेस्तत्सामानाधिकरण्यमन्तरेण स्वनिष्ठतया भाति- योगदशायां तु प्रकारिणः प्रतीयमानत्वात्परमात्मनः- अहंशब्दवाच्यपरमात्मा सामानाधिकरण्येन प्रकाशत इति वैषम्यं, नतु द्रष्टृदृश्यादिनिवृत्तिरित्यभ्युपगन्तव्यम् । अन्यथा 'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्य'श्चेति वामदेवादिदर्शनस्य भ्रान्तित्वप्रसङ्गादिति, **तदयुक्तम्**—परमात्मानं साक्षात्कुर्वतापि वामदेवेन जीवेन प्रयुक्तस्य अहं मनुरभवमिति वाक्यगतस्याहंशब्दस्य परमात्मवाचकत्वायोगात् । परमात्मसाक्षात्कारदशायां वाक्प्रयोगायोगाच्च ।

नच वामदेवेन तदा अहंमनुरभवमिति वाक्प्रयुक्ता, किंतु अहंमनुरभवमिति ज्ञानं तस्य जातमिति वाच्यं, तथापि वामदेवस्य जीवस्यैव परमात्मानं साक्षात्कुर्वतो अहं मनुरभवमिति ज्ञानं जातमिति कृत्वा तत्राहंशब्दस्य जीववाचकत्वमेव युक्तं, नतु परमात्मवाचकत्वमिति । किंच परमात्मसाक्षा-

त्कारदशायां कथं वामदेवस्य तद्भिन्नस्य स्वस्य मनुसूर्यादेर्वा साक्षात्कारोपपत्तिः । नच मन्वादिशरीरकस्यैव परमात्मनस्साक्षात्कारो जात इति वाच्यं, तथासति स साक्षात्कारो मन्वादिशरीरसाक्षात्कार एव, नतु परमात्मसाक्षात्कारः, तस्य च योगं विनैव सम्भवाद्व्यर्थ एव योग इति । नच योगे मन्वादिशरीरकपरमात्मसाक्षात्कारः, अयोगे तु मन्वादिसाक्षात्कार इति वाच्यं, अयोगे योगे वा मन्वादिजीवसाक्षात्कार एव न भवतीति कृत्वा कथं मन्वादिजीवशरीरकपरमात्मसाक्षात्कारः- मन्वादिजीवाधिष्ठितशरीराणि हि साक्षात्कर्तुं योग्यानि योगिनोऽयोगिनो वा, अतीतान्यनागतानि च मन्वादिशरीराणि योगी पश्यति, वर्तमानान्येव सन्निहितान्ययोगी पश्यतीत्येतावानेव विशेषः । मन्वादिशरीरगतजीवांस्तु न कोपि पश्यति । न ह्यस्मदादिभिर्दृश्यमानादेवदत्तादयो भवन्ति जीवाः, किंतु देहा एव । नहि जीवस्य जीवान्तरसाक्षात्कारो भवति । अत एव जीवो द्रष्टैव, नतु दृश्य इत्युक्तम् । एवं स्वभिन्नजीवसाक्षात्कारस्यैवाभावे कथं स्वभिन्नजीवशरीरकपरमात्मसाक्षात्कारो भवितुमर्हति । नच श्रुतिप्रामाण्याद्भवतीत्यभ्युपेयमिति वाच्यं, तच्छ्रुतेरन्यार्थत्वात्सचान्यार्थोनुपदमेव वक्ष्यते । **ननु** विद्वान्घटं पश्यन् घटशरीरकोयं परमात्मेति वेत्ति, अविद्वांस्तु घटोयमिति वेत्ति, ततः लौकिकप्रतीत्यपेक्षया योगिप्रतीतिर्भिन्नैवेति **चेन्मैवम्**—विद्वान् घटं पश्यन्नपि नायं घटः किंतु ब्रह्मेत्येव पश्यति, ब्रह्मणि घटनामरूपयोः कल्पितत्वात् । सर्वं ब्रह्मेत्यादिश्रुतेश्च । भवतुनाम ब्रह्मणस्सर्वान्तरत्वात्परमात्मनश्शरीरभूतोयं घट इति ज्ञानं विदुषस्तथापि न तवेष्टसिद्धिः । घटदर्शनसमय एव तद्ज्ञानोदयः, नतु योगदशायामिति । एवं सूर्यचन्द्रादिदर्शनसमये सूर्योऽयं परमात्मशरीरं चन्द्रोयं परमात्मशरीरमिति ज्ञानोदयः, नतु योगदशायाम् । यदि योगदशायामप्येतद्ज्ञानस्यैवोदयस्तर्हि व्यर्थ एव योगः । नच योगे सर्वजगच्छरीरकपरमात्मसाक्षात्कारो भवति न त्वयोग इति वाच्यं, तत्रापि किं परमात्मशरीरभूतसर्वजगत्साक्षात्कारः ? उत सर्वजगदन्तर्यामिपरमात्मसाक्षात्कारः? आद्ये- स साक्षात्कारो परमात्मशरीरसाक्षात्कार एव, नतु परमात्मसाक्षात्कारः- परमात्मशरीरस्य विश्वस्य परमात्मत्वायोगात् । अन्यथा जीवात्मशरीरस्य मनुष्यादेरपि जीवात्मत्वं भवेत् । नतु द्वितीयः- अन्तर्यामिणस्साक्षात्कर्तुमयोग्यत्वात्- 'नान्योतोस्ति द्रष्टेति श्रुतेरर्थवर्णनसमये रामानुजेनैव नास्त्यन्तर्यामिणो द्रष्टेत्युक्तत्वात् । अन्तर्यामिण ईश्वरस्य धर्मादिवत्पारोक्ष्यैकस्वभावत्वाच्च । यथा जीवः स्वानुभवसिद्धसुखदुःखवशान्मया सुखहेतुर्धर्मः प्राकृतः दुःखहेतुरधर्मः प्राकृत इत्युनुमिनोति, तथा पराधीनया स्वप्रवृत्त्या आस्तिकोपि मत्प्रेरक ईश्वरोन्तर्यामीत्यनुमिनोति, नतु तं साक्षात्पश्यतीति । अतएव 'सर्वं पुमान्वेदगुणांश्च तद्ज्ञो न वेद सर्वज्ञमनन्तमीडे' इति भागवतमुपपद्यते । नहि भृत्येन स्वप्रेरको राजेव केनापि स्वप्रेरकोन्तर्यामी दृष्टः । नच भक्तैर्वासुदेवो दृष्ट एवेति वाच्यं, तत्रापि शङ्खचक्रादिधारी विष्णुदेह एव दृष्टो नतु तदन्तर्गतः परमात्मेति । एवं सर्वज्ञेश्वरस्य नित्यपरोक्षत्वात्किंचिद्ज्ञजीवस्य नित्यापरोक्षत्वाच्चैक्यायोगादेव तत्त्वमसीत्यादौ भागत्यागलक्षणा स्वीकृता ।

**ननु** मास्तु जीवस्य जीवान्तरसाक्षात्कार ईश्वरसाक्षात्कारश्च, तथापि योगी सर्वं परमात्मनिष्ठं पश्यति- अयोगी तु स्वनिष्ठमिति **चेत्सत्यम्**—तथापि योगिषु तरतमभावो वर्तते- तथाहि कश्चि-

योगवित् ब्रह्मणि जगदस्ति, जगति च ब्रह्मास्तीति पश्यति; कश्चिद्योगवित्तरस्तु जगदिदं ब्रह्मैवेति पश्यति; योगवित्तमस्तु जगन्नैव पश्यति, किंतु ब्रह्मैव भवति । नच योगवित्तमो ब्रह्मैव पश्यतीति वाच्यं, तस्यैव ब्रह्मत्वेन स्वस्मिन्कर्मकर्तृभावविरोधात् इति ।

**ननु** अहंशब्दवाच्यः परमात्मा नेति यदुक्तं त्वया तदयुक्तम्—अपृथक्स्थितविशेषणवाचिशब्दानां विशेष्यपर्यन्तत्वनियमाच्चिदचितोर्ब्रह्मणो पृथक्सिद्धविशेषणत्वाच्च चिच्छरीरकपरमात्मावाच्यैवाहंशब्द इति, **मैवम्**—अहं मनुरभवमित्यत्र अहमित्यस्य मच्छरीरकः परमात्मेति, मनुरित्यस्य मनुशरीरकः परमात्मेति चार्थवर्णनेपि अभवमित्युत्तमपुरुषक्रियान्वयायोगात् । अभवदिति हि प्रयोक्तव्यं स्यात्तद्विवक्षायां । नचाहमित्यस्य परमात्मशरीरभूत इत्यर्थ इति वाच्यं, तथासति परमात्मशरीरस्य वामदेवजीवस्य कथं परमात्मशरीरमन्वभेदः- शरीरिण एकत्वेपि शरीरनानात्वं हि तवापि सम्मतम् । **ननु** अहंशब्दसामानाधिकरण्यादभवमित्युत्तमपुरुषप्रयोगेपि प्रथमपुरुषार्थ एव, **मैवम्**—अहं गच्छामीत्यस्य मच्छरीरकः परमात्मा गच्छतीत्यर्थवर्णनस्योपहास्यत्वात् । उपहास्यत्वेपि परमात्मनः पूर्णस्याचलस्य गत्यसम्भवेनायुक्तत्वाच्च । नच परमात्मशरीरिकोऽहं गच्छामीति तदर्थ इति वाच्यं, जीवस्यापि स्वतो गमनासम्भवात् । नच परमात्मशरीरिकजीवशरीरं गच्छतीत्यर्थ इति वाच्यं, एतादृशार्थस्य केनाप्यविवक्षितत्वात् । नचाविवक्षितत्वेपि स एवार्थो योग्यत्वाद्ग्राह्य इति वाच्यं, योग्यत्वेप्यनुभवविरुद्धत्वात् । नच परमात्मशरीरभूतस्य जीवस्य शरीरे गच्छतिसति तत्तादात्म्याध्यासादहं गच्छामीति जीवस्यानुभव इति वाच्यं, गच्छता स्वशरीरेण सह तादात्म्याध्यासादेव तादृशेऽनुभवे सिद्धे परमात्मशरीरभूतस्वशरीरेणेति विशेषणवैयर्थ्यात् । नच स्वस्य परमात्मशरीरत्वात्परमात्मनो पृथक्सिद्धविशेषणत्वाच्च व्यर्थमपि स्वरूपप्रदर्शनार्थं स्वशब्दस्य परमात्मशरीरत्वविशेषणं देयमिति वाच्यं, यदीश्वरस्य जीवो पृथक्सिद्धविशेषणं तर्हि जीवस्यापीश्वरो पृथक्सिद्धविशेषणमेव भवेदिति । नचेश्वरशरीरत्वाज्जीव एवेश्वरस्यापृथक्सिद्धविशेषणमिति वाच्यं, जीवशरीरित्वादीश्वर एव जीवस्यापृथक्सिद्धविशेषणमिति वक्तव्यत्वात् । नच शरीराच्छरीरी पृथक्सिद्ध्यत्येव, शरीरं तु न शरीरिणः पृथक्सिद्ध्यतीति वाच्यं, शरीराच्छरीरिणि पृथक्कृते सति शरीरत्वमेवापैतीति कृत्वा न शरीराच्छरीरिणः पृथक्सिद्धिः- प्रत्युत शरीरिणि जीवे शरीरादपगतेपि शरीरं तस्मात्पृथगवतिष्ठत एवेति शरीरिणश्शरीरमेव पृथक्सिद्धं भवतीति । विशेषणाधीना हि विशिष्टस्य स्थितिः, विशेषणज्ञानाधीनं च विशिष्टज्ञानमिति ।

**ननु** जीवात्पृथग्देहस्सिद्ध्यतुनाम निर्जीवदेहदर्शनात्- ईश्वरात्पृथक्तु न जीवस्सिद्ध्यति, नापि देहस्सिद्ध्यति, निरीश्वरस्य जीवस्य देहस्य वाऽभावादिति कृत्वा ईश्वरस्यापृथक्सिद्धविशेषणभूतावेव जीवदेहौ चिदचिच्छब्दवाच्याविति, **मैवम्**—चिदचिदविशिष्टस्येश्वरस्यैवाभावेन चिदचिद्भ्यां पृथगीश्वरस्याप्यसिद्धेः- विशेषणभूतचिदचिदधीनैव विशिष्टेश्वरसिद्धिरिति । नच विशेषणस्यास्वतन्त्रत्वाद्विशेष्यस्य च स्वतन्त्रत्वादीश्वरादपृथक्सिद्धमेव चिदचिद्द्वयमिति वाच्यं, अस्वातन्त्र्यस्यापृथक्सिद्धत्वाप्रयोजकत्वात् । अस्वतन्त्रोपि भृत्यस्स्वामिनः पृथक्सिद्धो हि । अचेतनत्वादस्वतन्त्रश्च वास्यादिस्तक्षकादेः पृथक्सिद्ध

द्योगवित् ब्रह्मणि जगदस्ति, जगति च ब्रह्मास्तीति पश्यति; कश्चिद्योगवित्तरस्तु जगदिदं ब्रह्मैवेति पश्यति; योगवित्तमस्तु जगन्नैव पश्यति, किंतु ब्रह्मैव भवति । नच योगवित्तमो ब्रह्मैव पश्यतीति वाच्यं, तस्यैव ब्रह्मत्वेन स्वस्मिन्कर्मकर्तृभावविरोधात् इति ।

**ननु** अहंशब्दवाच्यः परमात्मा नेति यदुक्तं त्वया तदयुक्तम्—अपृथक्स्थितविशेषणवाचिशब्दानां विशेष्यपर्यन्तत्वनियमाच्चिदचितोर्ब्रह्मणो पृथक्सिद्धविशेषणत्वाच्च चिच्छरीरकपरमात्मावाच्येवाहंशब्द इति, **मैवम्**—अहं मनुरभवमित्यत्र अहमित्यस्य मच्छरीरकः परमात्मेति, मनुरित्यस्य मनुशरीरकः परमात्मेति चार्थवर्णनेपि अभवमित्युत्तमपुरुषक्रियान्वयायोगात् । अभवदिति हि प्रयोक्तव्यं स्यात् तद्विवक्षायां । नचाहमित्यस्य परमात्मशरीरभूत इत्यर्थ इति वाच्यं, तथासति परमात्मशरीरस्य वामदेवजीवस्य कथं परमात्मशरीरमन्वभेदः- शरीरिण एकत्वेपि शरीरनानात्वं हि तवापि सम्मतम् । **ननु** अहंशब्दसामानाधिकरण्यादभवमित्युत्तमपुरुषप्रयोगेपि प्रथमपुरुषार्थ एव, **मैवम्**—अहं गच्छामीत्यस्य मच्छरीरकः परमात्मा गच्छतीत्यर्थवर्णनस्योपहास्यत्वात् । उपहास्यत्वेपि परमात्मनः पूर्णस्याचलस्य गत्यसम्भवेनायुक्तत्वाच्च । नच परमात्मशरीरिकोऽहं गच्छामीति तदर्थ इति वाच्यं, जीवस्यापि स्वतो गमनासम्भवात् । नच परमात्मशरीरिकजीवशरीरं गच्छतीत्यर्थ इति वाच्यं, एतादृशार्थस्य केनाप्यविवक्षितत्वात् । नचाविवक्षितत्वेपि स एवार्थो योग्यत्वाद्ग्राह्य इति वाच्यं, योग्यत्वेप्यनुभवविरुद्धत्वात् । नच परमात्मशरीरभूतस्य जीवस्य शरीरे गच्छतिसति तत्तादात्म्याध्यासादहं गच्छामीति जीवस्यानुभव इति वाच्यं, गच्छता स्वशरीरेण सह तादात्म्याध्यासादेव तादृशेऽनुभवे सिद्धे परमात्मशरीरभूतस्वशरीरेणेति विशेषणवैयर्थ्यात् । नच स्वस्य परमात्मशरीरत्वात्परमात्मनो पृथक्सिद्धविशेषणत्वाच्च व्यर्थमपि स्वरूपप्रदर्शनार्थं स्वशब्दस्य परमात्मशरीरत्वविशेषणं देयमिति वाच्यं, यदीश्वरस्य जीवो पृथक्सिद्धविशेषणं तर्हि जीवस्यापीश्वरो पृथक्सिद्धविशेषणमेव भवेदिति । नचेश्वरशरीरत्वाज्जीव एवेश्वरस्यापृथक्सिद्धविशेषणमिति वाच्यं, जीवशरीरित्वादीश्वर एव जीवस्यापृथक्सिद्धविशेषणमिति वक्तव्यत्वात् । नच शरीराच्छरीरी पृथक्सिद्ध्यत्येव, शरीरं तु न शरीरिणः पृथक्सिद्ध्यतीति वाच्यं, शरीराच्छरीरिणि पृथक्कृते सति शरीरत्वमेवापैतीति कृत्वा न शरीराच्छरीरिणः पृथक्सिद्धिः- प्रत्युत शरीरिणि जीवे शरीरादपगतेपि शरीरं तस्मात्पृथगवतिष्ठत एवेति शरीरिणश्शरीरमेव पृथक्सिद्धं भवतीति । विशेषणाधीना हि विशिष्टस्य स्थितिः, विशेषणज्ञानाधीनं च विशिष्टज्ञानमिति ।

**ननु** जीवात्पृथग्देहस्सिद्ध्यतुनाम निर्जीवदेहदर्शनात्- ईश्वरात्पृथक्तु न जीवस्सिद्ध्यति, नापि देहस्सिद्ध्यति, निरीश्वरस्य जीवस्य देहस्य वाऽभावादिति कृत्वा ईश्वरस्यापृथक्सिद्धविशेषणभूतावेव जीवदेहौ चिदचिच्छब्दवाच्याविति, **मैवम्**—चिदचिदविशिष्टस्येश्वरस्यैवाभावेन चिदचिद्भ्यां पृथगीश्वरस्याप्यसिद्धेः- विशेषणभूतचिदचिदधीनैव विशिष्टेश्वरसिद्धिरिति । नच विशेषणस्यास्वतन्त्रत्वाद्विशेष्यस्य च स्वतन्त्रत्वादीश्वरादपृथक्सिद्धमेव चिदचिद्द्वयमिति वाच्यं, अस्वातन्त्र्यस्यापृथक्सिद्धत्वाप्रयोजकत्वात् । अस्वतन्त्रोपि भृत्यस्स्वामिनः पृथक्सिद्धो हि । अचेतनत्वादस्वतन्त्रश्च वास्यादिस्तक्षकादेः पृथक्सिद्ध

प्रत्यगभिन्नं ब्रह्म साक्षात्कृत्य ब्रह्मण एव सर्वत्वात्स्वस्यैव ब्रह्मत्वाच्च सर्वमहमिति प्रतिपेदे इति । नच कथं ब्रह्मणस्सर्वत्वमिति वाच्यं, माययेत्युक्तत्वात् । एवं माययैव ब्रह्मणि द्रष्टृदृश्यदर्शनात्मकसर्वजगतः कल्पितत्वाद्वस्तुतो ब्रह्मणि द्रष्टृदृश्यादीनि न सन्त्येवेति सिद्धमेकमेवाद्वितीयं ब्रह्म । नहि यथाश्रुतार्थं विहाय लाक्षणिकापार्थकल्पनं न्याय्यमसत्यामनुपपत्तौ । एवं च नेह नानेति श्रुत्यापि भेदमात्रस्य मुखत एव निषिद्धत्वात्स्वनिष्ठादिभेदविशेषो निषिद्ध इति वादोऽयुक्त एव ॥

## तैत्तिरीयश्रुत्यन्तर्गत 'अदृश्ये' इति पदार्थविचारः ।

**यदुक्तम्**—अदृश्य इत्यचिद्व्यावृत्तिरिति **तदसत्**—तव मते चिदीश्वरयोरपि दृश्यत्वेन अदृश्य इत्येनानाचिद्व्यावृत्त्यभावात् । तथा अनात्म्य इत्यनेन बद्धव्यावृत्तिस्स हि परमात्मना व्याप्य इत्यप्युक्तम्—मुक्तनित्यजीवयोः परमात्मान्याप्यत्वे परमात्मनस्सर्वव्याप्तिभङ्गप्रसङ्गात् । तथा अनात्म्य इत्यस्य कर्मकृतशरीररहित इत्यर्थवर्णनमप्ययुक्तम्- विद्यादशायां जीवस्यैवाशरीरत्वे कथं सर्वज्ञेश्वरस्याकर्मकृतस्यापि शरीरस्य सद्भावः- सर्वजगच्छरीरकस्य परमात्मनः कथं वा कर्मकृतशरीरराहित्यं- जीवकर्मकृतमनुष्यादिशरीराण्यपीश्वरशरीराण्येव खलु ॥

## अनिरुक्तपदार्थविचारः ।

**तथा अनिरुक्त** इति मुक्तव्यावृत्तिरित्यप्ययुक्तम्—मुक्तस्यापि तव मते सशरीरत्वेन निर्वाच्यत्वात्- दिव्यं हि मुक्तस्य शरीरं- यथा देवमनुष्यादिशरीरसद्भावाद्बद्धो देवमनुष्यादिशब्दनिर्वाच्यः, तथा दिव्यशरीरसद्भावान्मुक्तोपि दिव्य इति, अप्राकृत इति, वैष्णव इति वा निर्वक्तुं शक्यत एवेति । **अनिलयन इति** नित्यमुक्तव्यावृत्तिः, तेषां हि भगवानाधार **इत्यप्ययुक्तम्**—ईश्वरादन्यस्य नित्यमुक्तस्यैवाभावात् । नच अनादिकालादारभ्य ये वैकुण्ठलोके वसन्ति अनन्तगरुडविष्वक्सेनादयस्ते नित्यमुक्ता इति वाच्यं, ते किं स शरीराः? उताशरीराः? आद्ये- न ते मुक्ताः- प्रियाप्रियस्पर्शाभावो हि मुक्तत्वं- अशरीरस्यैव तदभावः- 'अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशत' इति श्रुतेः । न द्वितीयः-- शरीराभावे अनन्तगरुडादिनामरूपभेदायोगात् । नच भगवानिवाप्राकृतदिव्यमङ्गलविग्रहविशिष्टा अनन्तादय इति वाच्यं, ब्रह्मभिन्नस्य सर्वस्यापि प्राकृतत्वेनाप्राकृतवस्तुन एवाभावात्, अनन्तगरुडादीनां सर्पपक्ष्यादिजातीयत्वेनाप्राकृतत्वस्य दुर्वचत्वाच्च । यदि वैकुण्ठलोकस्था नित्यमुक्तास्तर्हि ब्रह्मरुद्रादिलोकस्था अपि नित्यमुक्ता एव भवेयुर्लोकस्थत्वाविशेषात, लोकातीतं हि वस्तु नित्यमुक्तम् । किंच नित्यमुक्तास्ते किं भगवति स्थिताः? यद्वा भगवल्लोके? नाद्यः- सर्वस्यापि जीववर्गस्य भगवत्येन स्थितत्वेन तदविशेषात् । द्वितीये- भगवल्लोक एव तेषामाधारः, नतु भगवान् भगवतश्च स एव लोक आधारः, तत्रैव लोके भगवतश्शङ्खचक्रादिधारिणश्श्रीमहाविष्णोस्स्थितत्वादिति न नित्यमुक्तानां भगवानाधारः । अपि च यदि भगवान्नित्यमुक्तानामाधारस्तर्हि नित्यमुक्ता भगवत आधेया इति नित्यमुक्तव्याप्य एव भगवान्भवेत् । नच नित्यमुक्तानां भगवदाधारकत्वं नाम न भगवति स्थितत्वं किंतु राजा प्रजानामाधार इतिवद्भगवत्पोष्यत्वमिति वाच्यं, क्षुत्पिपासाजन्ममरणसुखदुःखभयादिलक्षणसंसाराभावेन तेषां

पोष्यत्वाभावादिति । नच परमानन्दसागरे भगवति निर्मग्नास्सन्तो नित्यमुक्ता वर्तन्त इति कृत्वा तेषां भगवानाधार इत्युक्तमिति वाच्यं, भगवानपि परमानन्दसागरे आत्मनि निर्मग्न एवेति भगवतोपि नित्यमुक्त आत्मा भवत्येवाधार इति । नच भगवान्स्वानन्द एव निर्मग्न इति वाच्यं, मुक्तोपि तथैवेति । नच मुक्तस्य स्वापेक्षया भगवानेव परमप्रेमास्पदभूत इति भगवत्येव मुक्तो मज्जतीति वाच्यं, भगवतोपि मुक्त एव परमप्रेमास्पदभूत इति तुल्यत्वात्- 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय' इति गीतावचनात् । नच ज्ञानिन एव तथात्वं नतु मुक्तस्येति वाच्यं, मुक्तस्याज्ञत्वायोगात् । ज्ञानिन एव तथात्वे ज्ञानफलं मुक्तिं प्राप्तस्य तथात्वं किंपुनर्वाच्यमिति कैमुत्यन्यायाच्च । तस्मान्नित्यमुक्तो भगवानीश्वर एव, स एव मायया बद्ध इव भवन्मुक्त इव भवतीति मुक्तोपि स एव- तस्य च भगवतो भगवानेवाधारो न त्वन्यः- 'स्वे महिम्नि व्यवस्थित' इति श्रुतेरिति । नच बद्धो मुक्तश्च जीवो ब्रह्मभिन्न एवेति वाच्यं, अनार्तस्य सत्यस्य जीवस्य ब्रह्मभिन्नत्वायोगात् । 'तत्सत्यमतोन्यदार्त'मिति श्रुतेर्ब्रह्मभिन्नस्यार्तत्वेनासत्यत्वात् । नच सर्वमपि ब्रह्मैवेति ब्रह्मभिन्नं किमपि वस्तु नास्त्येवेति वाच्यं, असच्चिदानन्दस्य सर्वस्य सच्चिदानन्दब्रह्मत्वायोगात् । नच सर्वं चिदचिद्विशिष्टब्रह्मैवेति वाच्यं, चिदचिद्विशिष्टब्रह्मातिरिक्तस्य सर्वपदवाच्यस्याभावात् । नच स्थूलचिदचिद्विशिष्टं ब्रह्म सर्वपदवाच्यं, तस्य च सूक्ष्मचिदचिद्विशिष्टब्रह्माभेद उच्यत इति वाच्यं, ब्रह्मणो ब्रह्माभेदवचनस्य व्यर्थत्वात् । नच ब्रह्मान्तर्यामिकत्वात्सर्वं ब्रह्मैवेति वाच्यं, तथासति सर्वस्यान्तर्यामि ब्रह्मैव सत्यं, तदन्तर्यामिकं सर्वं त्वसत्यमेव भवेत्-- 'एष त आत्मान्तर्याम्यमृतः', 'अतोऽन्यदार्त'मिति श्रुतेः । नचेष्टापत्तिः- जीवस्यान्तर्यामिभिन्नत्वे सत्यार्तत्वप्रसङ्गात् । नच भवत्वार्तत्वं जीवस्येति वाच्यं, 'अजो नित्य' इति श्रुतिविरोधात् । नच जीवान्तर्यामी कथं जीवो भवेदिति वाच्यं, जीवस्यात्मैवान्तर्यामीति । 'एष त आत्मान्तर्या'मीति श्रुतेः । नच जीवस्यात्मा न जीव इति वाच्यं, स्वरूपवाचित्वादात्मशब्दस्य जीवस्य स्वरूपं च सच्चिदानन्दं तदेवान्तर्यामि ब्रह्मणोपीति कृत्वा प्रत्यगात्मैवान्तर्यामी सत्यत्वात् । अन्तर्यामिभिन्नत्वेसति प्रतीच आर्तत्वप्रसङ्गात् । तथा च अन्तर्यामि ब्रह्मैव सत्यं, विशिष्टं ब्रह्म त्वसत्यमेव- महाकाशस्य नित्यत्वेपि घटाकाशस्यानित्यत्वात् । तस्माद्ब्रह्मणो विशिष्टत्ववादः, जीवस्य ब्रह्मान्तर्यामिकत्ववादश्च जीवब्रह्मणोरार्तत्वापादक एवेति त्याज्य एव । जीव एवान्तर्यामी ब्रह्म चेत्यभेदवाद एव स्वीकार्यः- तस्याभयप्राप्तिहेतुत्वात् । भेदवादस्तु भयजनकत्वाद्दूरतस्त्याज्य एव- तथा च श्रुतिः- 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति, यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति ।' (आनन्दवल्ल्यां द्वितीयाध्याये सप्तमानुवाकः) ।

## 'अभयं प्रतिष्ठां विंदते' इत्यादिश्रुत्यर्थविचारः ।

ननु 'रसो वै सः रसँ ह्येवायं लब्ध्वाऽनन्दी भवति, कोह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् , एषह्येवानन्दयाति'- इति, 'भीषाऽस्माद्वातः पवते, भीषोदेति सूर्यः, भीषास्मादग्निश्चेन्द्रश्च, मृत्युर्धावति पञ्चम' इति च पूर्वोत्तरवाक्ययोर्भेदस्यैव प्रतिपादितत्वान्मध्यवाक्ये भेदनिषेधो

न युक्त इति, **मैवम्**—जीव ईश्वरमात्मत्वेन लब्ध्वा आनन्दी भवति सचेश्वरो जीवेनात्मत्वेन विदितस्सन् जीवमानन्दयतीति पूर्ववाक्यार्थः। कुतोयमानन्दयतीत्यत्राह-- यदाहीति द्वितीयवाक्यं, निर्विशेषे ब्रह्मणि यदायं जीवो निर्भयं यथातथा आत्मत्वेन स्थितिं प्राप्नोति तदाऽभयं गतो भवति। निर्विकल्पकसमाधावभयेपि केचिद्भयं पश्यन्ति, अभये भयदर्शन इत्युक्तत्वात्। यस्तथा भयमपश्यन् सन् स्वात्मभूते ब्रह्मणि तिष्ठति सोऽभयं गतो भवति। एवं ब्रह्मनिष्ठाया अभयप्राप्तिहेतुत्वाद्ब्रह्मण आनन्दयितृत्वम्। अभयं गतो ह्यानन्दः। नच ब्रह्मणि तिष्ठतीति जीवब्रह्मणोराधाराधेयभावदर्शनात्कथमभेद इति वाच्यं, स्वे महिम्नि व्यवस्थित इति वत्तदुपपत्तेः। अनन्याधार इति हि तदर्थः। एवं ब्रह्मण्यात्मत्वेन स्थितस्याभयप्राप्तिमुक्त्वा अथ तद्भेददर्शिनो भयप्राप्तिं वदति- यदाहीति। एष एतस्मिन् प्रकृते अदृश्यत्वादिगुणके ब्रह्मणि अरमुदल्पमप्यन्तरं भेदं कुरुते यदा तथा तस्य भयं भवति, अहं ब्रह्मणोन्यः मत्तोन्यद्ब्रह्मेति भेददर्शिनो भयप्राप्तिर्भवतीत्यर्थः। ब्रह्मात्मनोरभेददर्शी अभयं प्राप्नोतीत्यस्यार्थस्य स्थिरीकरणाय भेददर्शिनोऽभयप्राप्तिरुक्ता। अभेददर्शने सत्यभयप्राप्तिस्तदभावे तदभाव इति, भेददर्शने सति भयप्राप्तिस्तदभावे तदभाव इति चान्वयव्यतिरेकन्यायातिदि भावः। कस्माद्भेददर्शिनो भयमित्यत आह- 'भीषास्मा'दिति, आत्मभिन्नत्वेन विदितस्सन्नीश्वरो जीवस्य भयहेतुर्भवति, आत्मत्वेन विदितस्संस्तु अभयहेतुरानन्दकारी भवतीति फलितार्थः। नच भयहेतुत्वेन प्रसिद्धस्येश्वरस्य कथमात्मत्वेन दर्शनमात्रादभयहेतुत्वं स्यादिति वाच्यं, वस्तुतो जीवस्यात्मैव भवन्नपीश्वरोऽज्ञानादात्मभिन्नत्वेन विदितस्सन्भयहेतुरासीत्- सच भयहेतुरीश्वरो जीवस्याज्ञानापाये पुनरात्मैव भवन्न भयहेतुर्भवति। आत्मा हि सर्वस्याभयहेतुः। नह्यात्मानं दृष्ट्वा कोपि बिभेति। एवं जीवस्य भयाभयहेतुत्वं प्रतीश्वरस्य परोक्षत्वापरोक्षत्वप्रयोजकानात्मत्वात्मत्वे एव साधके भवत इति कृत्वा अभयं यियासुर्जीव ईश्वरमात्मत्वेनैव पश्येदिति **स्थितम्**।

**ननु** अत्रापि पक्षे निरन्तरमपि जीव ईश्वरेऽवतिष्ठेत, नतु कदाचिदपीश्वरादन्यत्रेति कृत्वाप्रतिष्ठाया विच्छेदो न कर्तव्य एवेति, **मैवम्**—किमविदुषा जीवेन सर्वदापीश्वरे प्रतिष्ठा कार्येत्युच्यते? किं वा विदुषा? नाद्यः- अविदुष ईश्वरे आत्मत्वेन स्थातुमशक्यत्वात्- अविद्वान् खलु नो जानात्यहं ब्रह्मास्मीति। नान्त्यः- तस्य विदुषः कदाचिदपीश्वर आत्मभिन्नो न भवत्येवेति तं प्रतीश्वरे सर्वदा प्रतिष्ठा कार्येत्युपदेशायोगात्- विद्वानात्मा हीश्वर एवेति स सर्वदा स्वमहिमस्थित एवेति च। तस्मादभयमानन्दं च जिगमिषुः पुरुष ईश्वरमात्मत्वेनैव पश्येन्नत्वेवमनागप्यात्मेश्वरयोरन्तरं पश्येदात्मेश्वरभेददर्शनस्य भयहेतुत्वादित्येव प्रकरणसिद्धः श्रुत्यर्थोऽनवद्यइति।

**ननु** अन्तरं कुरुत इति प्रयुक्तं न त्वन्तरं पश्यतीति, तथा च अन्तरशब्दस्यात्र विच्छेद एवार्थः- विच्छेदो हि कर्तुं शक्यते, भेदस्तु ज्ञातुमेव न कर्तुमिति तस्मादन्तरं कुरुत इत्यस्य विच्छेदं कुरुत इत्येवार्थः। कस्य विच्छेद इत्याकांक्षायां सन्निहितत्वात्प्रतिष्ठाया इत्येवेति, **मैवम्**—प्रतिष्ठाया इत्यस्याध्याहारादिकं विनैवान्वयसिद्धौ तत्कल्पनस्यायुक्तत्वात्। द्वैधीभावलक्षणस्य भेदस्य कर्तुं शक्यत्वात्।

जीवेश्वरभेदवादिना हि एकधावस्थित एवात्मा जीवेश्वररूपेण द्विधा क्रियते । यद्वा धातूनामनेकार्थत्वात्करोतिः अत्र दर्शनार्थकः । अथवा अन्तरमित्यस्य भेदज्ञानमित्यर्थः । **ननु** प्रतिष्ठाया इत्यस्याध्याहारादिकं विनाप्यस्मत्पक्षस्सिद्ध्यत्येव-- एतस्मिन्नित्यस्य लिङ्गविभक्तिविपरिणामेनैतस्याः प्रतिष्ठाया इत्यर्थादिति, **मैवम्**—पूर्वोक्तादृश्यत्वादिगुणकनिर्विशेषब्रह्मपरामर्शार्थमेतस्मिन्निति पदस्यावश्यकत्वादिति ।

**ननु** यदायं ब्रह्मणि प्रतिष्ठां लभते तदा प्राप्नोत्यभयमित्यन्वयमुखेनोक्तार्थस्य यदायं ब्रह्मणि प्रतिष्ठां न लभते, तदा नाभयं प्राप्नोतीति व्यतिरेकमुखेन दार्ढ्यं कर्तव्यम्- तथा च अन्तरं कुरुत इत्यस्य प्रतिष्ठां न लभत इत्यर्थो वाच्यः- भयं भवतीत्यनेन अभयं न प्राप्नोतीत्यस्योक्तत्वात्- अभयप्राप्त्यभावो हि भयप्राप्तिः, प्रतिष्ठाया अलाभश्च विच्छेद एव- स्थितिविच्छेदो हि स्थित्यलाभः । तस्मादन्तरं कुरुत इत्यस्य स्थितिविच्छेदं कुरुत इत्यर्थवर्णनमेव न्याय्यमिति, **मैवम्**— जीवस्सर्वदापि ब्रह्मण्येव स्थितस्सर्वाधारत्वाद्ब्रह्मण इति कृत्वा जीवो यदा ब्रह्मणि प्रतिष्ठां विन्दत इति वचनं व्यर्थं प्रतिष्ठायाः स्थितिमात्रपरत्वे, यदि तु प्रकृष्टा स्थितिः प्रतिष्ठा सा च ब्रह्मण्यभेदेनावस्थानरूपेति विवक्ष्यते तर्हि तद्वचनं सार्थकमेव भवति- तथा च ब्रह्मणि प्रतिष्ठामयं यदा लभत इति वाक्येनान्वयमुखेनोक्तस्य ब्रह्मात्मैक्यदर्शी अभयं प्राप्नोतीत्यस्यार्थस्य तद्भेददर्शि नाऽभयं प्राप्नोतीति व्यतिरेकमुखेन स्थापनस्य कार्यत्वाद्ब्रह्मण्यन्तरं कुरुत इत्यस्य ब्रह्मात्मभेददर्शीत्येवार्थो वाच्य इति । नच दृढसम्बन्ध एव प्रतिष्ठा- राज्ये प्रतिष्ठित इति प्रयोगादिति वाच्यं, येन विना यन्न भवति तत्तस्मिन्प्रतिष्ठितमित्युच्यते- यथा मृदं विना घटाभावान्मृदि घटः प्रतिष्ठित इति, तथाच कारणे कार्यं प्रतिष्ठितमिति सिद्धम् । अतएव पृथिव्यप्सु प्रतिष्ठितेत्यादिस्सङ्गच्छते । एवं च सर्वस्यापि ब्रह्मकार्यत्वात्सर्वमपि साक्षात्परम्परया वा ब्रह्मण्येव प्रतिष्ठितं भवति । तच्च ब्रह्म कस्यचिदकार्यमिति कृत्वा स्वस्मिन्नेव प्रतिष्ठितमित्युच्यते- 'स्वे महिम्नि प्रतिष्ठित'मिति श्रुतेः । जीवश्च ब्रह्मव्यतिरेकेणाभावाद्ब्रह्मण्येव प्रतिष्ठित इत्युच्यते । नच जीवस्य ब्रह्माकार्यत्वाद्ब्रह्मणि कथं प्रतिष्ठितत्वमिति वाच्यं, ब्रह्मस्वरूपत्वादेवेति । राज्ये प्रतिष्ठित इत्यत्रापि किं राजा प्रतिष्ठितः ? उतान्यः ? आद्ये- अप्रतिष्ठितराज्यस्य कथं राजत्वम् । द्वितीये राजेतरस्य कथं राज्यप्रतिष्ठितत्वम् । तथा च चक्रवर्मा राज्ये स्थापित इत्येवार्थः । भवतु वा दृढसम्बन्धोपि प्रतिष्ठा, तथापि नास्माकं कापि क्षतिः- यथा ब्रह्मणः स्वमहिम्ना सह दृढसम्बन्धः, यथा च कार्यस्य कारणेन सह दृढसम्बन्धः तथा जीवस्य स्वात्मभूतेन ब्रह्मणा सह दृढसम्बन्ध इति । तस्माज्जीवस्याहंब्रह्मास्मीति स्वस्य ब्रह्माभेदानुसन्धानमेव ब्रह्मणि प्रतिष्ठा, नतु स्वस्माद्भिन्ने वस्तुनि चित्तस्य स्थापनमिति बोध्यम् । **यदुक्तं** प्रतिष्ठाशब्दस्यैक्यार्थपरत्वे मुख्यार्थहानिरिति, **तत्सत्यम्**—नह्यस्माभिरैक्यमित्युक्तं किंतु एकत्वेनावस्थानमित्युक्तम्- तच्च धात्वर्थानुगमान्मुख्यार्थ एवेति । **एतेन** एतस्मिन्निति सप्तम्यस्वरसा, तृतीयापञ्चमीषष्ठीनामेव स्वारस्यमित्यपि **प्रत्युक्तम्** । स्थित्यपेक्षया अधिकरणे सप्तम्या एव विधेयत्वादिति- प्रतिष्ठापदस्याभेदस्थितिपरत्वेसति, तत्प्रतियोगिभूतान्तरपदस्य भेदस्थितिपरत्वादिति । यद्वा अन्तरं कुरुत इत्यस्य भेदं कुरुत इत्यर्थेपि भेदेन स्थितिं कुरुत इत्यर्थात्सिद्ध्यति ।

**वस्तुतस्तु** एतस्मिन्निति विषयसप्तमीति नास्वारस्यम् । अदृश्य इति वाक्ये त्वधिकरणसप्तमीति विवेकः । यद्यपि शास्त्रदृष्ट्या विषयसप्तम्यप्यधिकरणसप्तम्येव, तथापि लोकदृष्ट्येदमुक्तम् । अथवा भेदप्रतियोगित्वादिविवक्षया तृतीयादिस्वारस्येपि भेदाधिकरणत्वविवक्षया सप्तमी स्वरसैवेति बोध्यम् । **यदुक्तं** गुणविशिष्टब्रह्मवेदनस्याभयहेतुत्वकथनाद्भेदनिषेधस्याभयहेतुत्वकथनमयुक्तमिति, **तदयुक्तम्**—अदृश्यत्वादिविशेषणैर्निर्विशेषब्रह्मवेदनस्यैवाभयहेतुत्वस्योक्तत्वात्- नहि सविशेषं ब्रह्मादृश्यमनिरुक्तं च भवति । नच 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्च'नेति सविशेषं ब्रह्मोक्तमिति वाच्यं, ब्रह्मणः स्वरूपभूतमानन्दं विद्वानिति तदर्थो नतु गुणभूतमित्युक्तत्वात् । **यच्चोक्तम्**—ब्रह्मविदाप्नोतीति विध्युपक्रमाच्च ब्रह्मणि प्रतिष्ठावेदनमेव न त्वैक्यमिति, **तदयुक्तम्**—यदुपक्रान्तं ब्रह्मवेदनं तत्किं परोक्षमुतापरोक्षम्? नाद्यः- परोक्षब्रह्मज्ञानस्य ब्रह्मप्राप्त्यहेतुत्वात् । द्वितीये- यो परोक्षब्रह्मवित्स ब्रह्मैवेति कृत्वा तस्य स्वात्मभूते ब्रह्मण्येव प्रतिष्ठा सम्भवति, न त्वन्यत्रेति कथं वेदनं प्रतिष्ठा स्यात् । किंतु ब्रह्मण्येकत्वेन स्थितिरेव प्रतिष्ठा । नच ब्रह्मण्येकत्वेन स्थितिर्नामैक्यमेवेति फलितमिति वाच्यं, तस्य चैक्यस्य ब्रह्मेत्येव फलितमिति । नहि ब्रह्मविद्यथा ब्रह्मणि न तिष्ठति तथा ब्रह्मैक्यमपि गच्छति, किंतु ब्रह्मैव भवति- 'ब्रह्मविद्ब्रह्मैव भव'तीति श्रुतेरिति- स्वपक्षे च दृढसम्बन्धवाचिनः प्रतिष्ठाशब्दस्य विद्ध्युपक्रमाननुगुण्यं स्पष्टमेव । प्रतिष्ठाशब्दस्योपासनार्थपरत्वं च लाक्षणिकमेवेति दुष्ट एव रामानुजोक्तार्थः । किंच यदा ब्रह्मोपासनरूपब्रह्मप्रतिष्ठाया विच्छेदस्तदा भयमित्युक्तौ तदनुरोधेन सर्वदा ब्रह्मप्रतिष्ठाकृदेवाभयं प्राप्नोतीति वक्तव्ये यदेत्युक्तिरयुक्ता- नहि यदा ब्रह्मण्यस्य प्रतिष्ठा तदैवास्याभयप्राप्तिस्तथासति प्रतिष्ठानैरन्तर्यस्यानावश्यकत्वादिति बोध्यम् ।

**अथ** यानि रामानुजेनोपन्यस्तानि सविशेषब्रह्मपराणि स्मृतिवाक्यानि पुराणवाक्यानि च तानि मायया सविशेषं ब्रह्मेति वदतामस्माकं नैव विरुद्धानि- वस्तुतो निर्विशेषं ब्रह्मेति वादस्याविरोधित्वात्तेषाम् । तथापि तत्र तत्र यत्किंचिद्विचारयामः ॥

## गीतास्मृतेः निर्विशेषब्रह्मपरत्वोपपत्तिः ।

'यो मामजमनादिं च वेत्ति लोकमहेश्वर'मिति गीतावचनमीश्वरस्य त्रिविधचेतनवर्गादचितश्च वैलक्षण्यं दर्शयतीति **परोक्तमयुक्तम्**—ईश्वर एव नित्यमुक्तो नतु जीव इति चेतनवर्गत्रैविध्यस्यैवाभावात्- बद्धादेव विलक्षण ईश्वरो नतु मुक्तादितीश्वरस्य मुक्तवैलक्षण्यस्याप्यभावात् । नच मुक्तस्य जगद्व्यापारो नास्ति, ईश्वरस्य तु सोस्तीति वैलक्षण्यमिति वाच्यं, ईश्वरसायुज्यं प्राप्तस्य मुक्तस्यापि तत्सद्भावात् । नच 'जगद्व्यापारवर्ज'मिति सूत्रविरोधः- तस्य हिरण्यगर्भलोकप्राप्तमुक्तपरत्वात् । यद्वा माययैवेश्वरस्य जगद्व्यापारो न तु वस्तुत इति न तत्प्रयुक्तं मुक्तेश्वरयोर्वैलक्षण्यम् । मुक्तस्येश्वरस्य च ब्रह्मत्वाविशेषात् । नच मुक्तस्य न ब्रह्मसायुज्यमिति वाच्यं, 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भव'तीत्यादिश्रुतेः । तथा बद्धस्यापि ब्रह्मत्वाद्बद्धवैलक्षण्यमपीश्वरस्य दुर्वचम् । नच बद्धस्संसार्येव नतु ब्रह्मेति वाच्यं, ब्रह्मण एव मायया बद्धत्वात् । न चेदमप्रमाणमिति वाच्यं, 'ब्रह्मैव सन्ब्रह्माप्ये'तीति

श्रुतेः, ब्रह्मण एव देहे जीवरूपेणानुप्रवेशश्रवणाच्च । किंच किं ब्रह्म चिद्रूपमुत न? आद्ये- कथं चिद्विलक्षण्यं ब्रह्मणः । द्वितीये- कथं सत्यज्ञानमित्यादिश्रुत्युपपत्तिः । तस्मादचिद्विलक्षण एवेश्वरः ।

**यदुक्तं** सुदर्शनेन—अजमित्यनेन बद्धजीवव्यावृत्तिरिति **तदसत्**—बद्धस्यापि जीवस्य जन्माभावात् । नच देहसम्बन्धाज्जन्म तस्येति वाच्यं, तर्हीश्वरस्यापि देहसम्बन्धोऽस्त्येवेति कथमजत्वम् । अनादिमित्यनेन मुक्तव्यावृत्तिः, मुक्तस्याजत्वं ह्यादिमदित्यप्ययुक्तम्— अजत्वस्याप्यादिमत्वेसति तस्यादिमत्त्वस्याप्यादिमत्त्वं स्यादित्यनवस्थादोषात् । न ह्यजत्वं जायते, जायमानं वा भवत्यजम् । लोकमहेश्वरमिति नित्यमुक्तव्यावृत्तिरित्यप्ययुक्तम्—मुक्तस्यानीश्वरत्वमिति व्याघातात् । यदि बद्धवन्मुक्तोपीश्वरपरतन्त्रस्तर्हि बन्धतुल्यैव मुक्तिरपि स्यात्- पारतन्त्र्यमेव बन्धः, नहि पारतन्त्र्यादन्यः कश्चिद्बन्धो विद्यते- पारतन्त्र्यमेव दुःखहेतुः- बन्धश्च दुःखहेतुरिति न बन्धपारतन्त्र्ययोर्भेदः । नच स्वतन्त्रस्यापि सार्वभौमस्यास्ति बन्ध इति वाच्यं, तस्य स्वपाल्यविषय एव स्वातन्त्र्यं नतु रोगजरामरणादिष्विति । किंच वस्तुतस्स्वतन्त्रोपि नित्यनिरवयवात्मा देहाद्यनात्मतादात्म्याध्यासान्मायाप्रयुक्तात्परतन्त्र इवाभवत्- ज्ञानेन तदज्ञाने नाशिते तु पुनः स्वाभाविकस्वातन्त्र्यमेव प्रपद्यत इति कथं मुक्तस्यात्मनः पारतन्त्र्यं, येन मुक्तानां परमात्मा महेश्वरो भवेत् । नच न मुक्तानामीश्वरः स्वामी किंतु लोकस्यैव, मुक्तस्तु न लोकस्येश्वर इति वैलक्षण्यमिति वाच्यं, यदि मुक्तानां परमात्मा न भवतीश्वरस्तर्हीश्वरस्य सर्वेश्वरत्वमेव लुप्येत । यदि च मुक्तस्य नेश्वरभावापत्तिस्तर्हि जीवन्मुक्तः- 'मत्तस्सर्वमहं सर्वं मयि सर्वं सनातन' इति न प्रतिपद्येत । जीवन्मुक्तस्यैवेश्वरभावापत्तौ किं पुनर्मुक्तस्येत्यभिप्रायः ।

**किंच** लोके स्वतन्त्रं वस्त्वेकमेव भवितुमर्हति, नतु नाना- बहूनां स्वातन्त्र्यायोगात् । यद्धि स्वतन्त्रं वस्तु तस्य सर्वमपि स्वभिन्नं परतन्त्रमेवेति कृत्वा कथं स्वतन्त्रस्य मुक्तस्य सर्वलोकमहेश्वरत्वाभावः । तस्माद्दुष्ट एव प्रकृतगीतायास्त्वदुक्तार्थः । **अनवद्यस्त्वर्थः कथ्यते मया श्रुणु**—यः सर्वस्यापि लोक्यत इति लोकः दृश्यः प्रपञ्चः, तस्य महेश्वरं अनादिमादिः कारणं यस्य न विद्यते सोनादिः तं- अत एवाजं- जन्मरहितं मां परामात्मानं वेत्ति प्रत्यगभिन्नत्वेन साक्षात्करोति- प्रत्यग्भेदे सति परमात्मन ईश्वरस्य परोक्षत्वप्रसङ्गादिति भावः—**इति** । नच यो मां वेत्तीति वेत्तुरात्मनः परमात्मा वेद्यो भिन्न एव- घटद्रष्टुर्घटवदिति वाच्यं, तथासति तद्वदेव परमात्मनो जडत्वप्रसङ्गात् । परमात्मा हि सर्वं पश्यतीति द्रष्टैव नतु दृश्यः- 'वेदाहं समतीतानि वर्तमानानि चार्जुन । भविष्याणि च भूतानि मां तु वेद न कश्च'नेति गीतावचनादेव, नचैवं परमात्मनो द्रष्टुस्सकाशाद्दृश्य आत्मा भवति भिन्न इति वाच्यं, दृश्यत्वे सत्यात्मनो घटवज्जडत्वप्रसङ्गात्, द्रष्टृत्वस्यात्मनस्सर्वानुभवसिद्धत्वाच्च । तस्माद्द्रष्टुरात्मनस्सकाशद्द्रष्टुः परमात्मनो नास्ति भेदः । अत एव- 'एकं एव द्रष्टा, 'नान्योतोस्ति द्र'ष्टेति श्रुतम् । **ननु** यद्यात्मपरमात्मनोरभेदस्तर्हि यो मां वेत्तीत्यस्य य आत्मानं वेत्तीत्यर्थस्सिद्धः-- सचायुक्तः- स्वात्मनि क्रियाया योगात्कर्मकर्तृभावव्याघाताच्चेति, **मैवम्**—आत्मन्यवभासके आत्मावभासनलक्षणक्रियाया एवायोगो नतु आत्माकारान्तःकरणवृत्तिलक्षणक्रियाया इति । कथमन्यथा- 'सर्व-

भूतस्थमात्मानं सर्वभूतानि चात्मनि । ईक्षते योगयुक्तात्मा सर्वत्र समदर्शिन' इति गीतावचनं सङ्गच्छेत । अनेनैव गीतावचनेन जीवस्याणुत्ववादः—परास्तः । सर्वभूतस्थमिति सर्वव्यापित्वस्योक्तत्वात्- आत्मन एव सर्वाधारत्वं चोक्तं, ततश्च सर्वव्यापी सर्वाधारश्चात्मैव परमात्मा, नतु ततोन्य इत्यद्वैतं सिद्धम् । एतेन--'मत्स्थानि सर्वभूता'नीति सर्वभूतधारक ईश्वरो जीवाद्भिलक्षण--इत्यपास्तम् । नच 'मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थित' इति वचनेन तु परमात्मनः प्रत्यगभिन्नस्य सर्वभूताधारत्वं सर्वभूतान्तस्स्थत्वं च मायिकमेव, नतु तात्त्विकमित्युक्तं भवति; अन्यथा पूर्वोत्तरव्याघातात् । नच 'पश्य मे योगमैश्वरमित्युक्तत्वात् मम भ्रान्तिं पश्येत्यनुक्तत्वाद्धारकत्वं पारमार्थिकमेवेति वाच्यं, ईश्वरस्यासाधारणशक्तियोगमिति त्वदुक्तार्थस्वीकारेपि मायिकमेवेति सिद्धत्वादीश्वरस्य ह्यसाधारणशक्तिर्माया । यदुक्तं- 'ममात्मा भूतभावन' इत्यत्रात्मशब्दो बुद्धिवाचित्वात्सङ्कल्परूपज्ञानवाचीति, तदसत्--बुद्धिवाचिन आत्मशब्दस्य बुद्धिगुणसङ्कल्पवाचित्वायोगात्-- 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किंचिदस्ति धनंजय' इति वचनं जीवेश्वरद्वैतवादिनस्स्वस्य कण्ठपाशायितमेव; तथाहि- आकाशादिभूतानां मनुष्यादिभौतिकानां च जगच्छब्दवाच्यानां भूतानां परमात्मकार्यत्वात्कार्यस्य च कारणव्यतिरेकेणाभावादीश्वरात्परतरमचिद्वस्तु मास्तुनाम- कथं पुनश्चिद्वस्तुनोऽजस्य नित्यस्य परमात्माकारस्य भवेदभावः- तस्माज्जीवस्येश्वराभिन्नत्वाज्जगतश्चेश्वरकार्यत्वेनेश्वरात्पृथगभावात्- 'मत्तः परतरं नान्यत्किंचिद'स्तीति भगवदुक्तं सङ्गच्छते । किंचेदमेव वचनं निर्विशेषब्रह्मस्थापकमपि भवति- सर्वस्य जगत ईश्वरे कल्पितत्वेन मिथ्यात्वादीश्वरव्यतिरिक्तस्य कस्यापि वस्तुनोऽभावान्निर्विशेषमेव ब्रह्मेति । सति हीश्वरात्पृथग्वस्तुनि तत्प्रयुक्तो विशेष ईश्वरस्य भवेदिति । मयि सर्वमिदं प्रोतमिति वाक्यमपि मायया परमात्मनि जगत्कल्पितमिति परमात्मातिरेकेण जगदभावमेव प्रतिपादयति- यथा तन्तुवोतः प्रोतश्च पटस्तन्तुव्यतिरेकेण नास्ति तद्वदिति । नच 'सूत्रे मणिगणा इ'वेति दृष्टान्तानुरोधादस्ति जगदीश्वराद्भिन्नमिति वाच्यं, तथासति तदनुरोधादेव सूत्रवदीश्वरस्य जगदन्तर्व्याप्तिरेव भवेन्न तु जगद्बहिर्व्याप्तिः । नचेष्टापत्तिः- ईश्वरस्य सर्वव्याप्तिभङ्गप्रसङ्गात्- 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग'- दिति वाक्यमपि परमात्मनो निरवयवस्य निरवकाशस्य निरंशस्य माययैव जगदात्मकैकांशवत्त्वं नतु वस्तुत इति निर्विशेषपरमेव । नच एकांशेनेत्यस्य सङ्कल्पैकदेशेनेत्यर्थ इति वाच्यं, सङ्कल्पपदाभावात् । अहमिदमवष्टभ्य तिष्ठेयमिति सङ्कल्पस्यैव तादृशस्थितिहेतुत्वेन सङ्कल्पैकदेशस्य तद्धेतुत्वायोगाच्च । किंतु सङ्कल्पेन विष्टभ्येत्युक्तौ भगवत्सङ्कल्प एव जगद्विष्टभ्य स्थितं नतु भगवत्स्वरूपमित्यप्यर्थस्स्यात्- यथा जीवो धर्मभूतज्ञानेन सर्वं व्याप्य स्थित इत्यत्रेति- 'क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति वाक्यमपि जीवेश्वराभेदप्रतिपादकमेव- अक्षरशब्दस्याव्यक्ताख्यजगत्कारणप्रकृतिवाचित्वात्, क्षराक्षरशब्दवाच्यसर्वदृश्यविलक्षणत्वाच्च प्रत्यगभिन्नपरमात्मनः । नच क्षराक्षराभ्यां जगज्जीवाभ्यामन्यो विलक्षणः परमात्मेति वाच्यं, जीवस्यैव परमात्मत्वात्- 'परमात्मेति चाप्युक्तो देहेस्मिन् पुरुषः पर' इति वचनानुरोधात् । देहादयो ह्यनात्मानस्सन्तोप्यविद्यावशादात्मत्वेन प्रतिपन्ना इत्यात्माभासाः

जीवस्त्वात्मैवेति नात्माभास इति परमात्मा । ईश्वरश्चात्मैव- 'स आत्मे'ति श्रुतेः, 'अहमात्मा गुडाकेश' इति गीतावचनाच्च । यदि क्षराक्षरशब्दौ बद्धमुक्तजीवपरौ तर्हि तृतीयस्य नित्यमुक्तजीवस्य का गतिः-- कथं पुरुषोत्तमस्य बद्धमुक्ताभ्यामिव नित्यमुक्तादपि सिद्धस्य वैलक्षण्यस्येहाकथनम् ।

**यदुक्तं** नारायणानुवाकोत्र संगृहीतः- सच जीवेश्वरभेदप्रतिपादनपर इति, **तदसत्**—'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः, स ब्रह्म स शिवः स हरिस्सेन्द्रः सोक्षरः परमः स्वरा'डिति परमात्मनो ब्रह्माद्यभेदस्य प्रतिपादितत्वात् । नहि तत्र जीवा ब्रह्मादयः परमात्मनियम्या इत्युक्तम् । किंच एकस्यैव मायिन ईश्वरस्य मायागुणभूतसत्त्वादिभेदेन विष्ण्वादिनामभेद इति श्रुत्यादिप्रसिद्धत्वात्कथं ब्रह्मशिवौ जीवौ, कथं वा तत्सहपठितो हरिरीश्वरः, कथं वा त्रिमूर्तिमध्ये मूर्तिद्वयस्य जीवत्वमेकमूर्तेरीश्वरत्वं, कथं नु 'अहं ब्रह्मा च शर्वश्च जगत. कारणं पर'मिति जगत्कारणयोर्ब्रह्मशर्वयोर्जीवत्वम् ।

**यदुक्तं** 'विश्वमेवेदं पुरुष' इति, सामानाधिकरण्यं 'पतिं विश्वस्यात्मेश्वरं', 'व्याप्यनारायणस्स्थित' इति नियन्तृत्वनियाम्यत्वव्याप्यत्वव्यापकत्वादिनिबन्धनमिति, **तदसत्**—कार्यकारणभावप्रयुक्तमैक्यरूपमेव जगदीश्वरयोस्सामानाधिकरण्यम्- परमात्मनस्सर्वजगत्कारणत्वात्कार्यकारणयोश्चाभेदस्य तवापि सम्मतत्वात् । विश्वेश्वरयोः कार्यकारणभावाभावे ईश्वरस्य विश्वस्यान्तर्बहिर्व्याप्त्ययोगात् । कारणं हि कार्यमन्तर्बहिश्च व्याप्य वर्तते मृद् घटमिव- तच्च कार्यस्य कारणेन सर्वात्मना व्याप्तत्वं कारणातिरेकेणाभावादेव । ततश्च 'विश्वमेवेदं पुरुष' इति सामानाधिकरण्यं घट एवायं मृदितिवदैक्यरूपमेव । नच विलक्षणयोर्जगदीश्वरयोः कथमैक्यमिति वाच्यं, यथा कार्यकारणभावस्तथैवेति- विश्वस्यात्मत्वादीश्वरो जीवाभिन्न एव- आत्माचासावीश्वरश्चात्मेश्वर इति समासात् । नचेश्वरो विश्वस्य नात्मेति वाच्यं, 'स आत्मे'ति श्रुतेः । नचात्मनां जीवानामीश्वर आत्मेश्वर इति समास इति वाच्यं, नित्यस्यात्मनः पारतन्त्र्यायोगादिति । **तस्मान्नारायणानुवाकोऽप्यद्वैतपर एव ।**

'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर' इति वचनं चेश्वरस्य चिदचिद्वैलक्षण्यं न प्रतिपादयति, किं त्वचिद्वैलक्षण्यमेव- भगवान्हि जीवरूपेणान्तःप्रविश्य लोकत्रयं बिभर्ति, लोकशब्दश्च भुवनवाचीसन् लक्षणया तद्गतजनमभिधत्ते- 'लोकस्तु भुवने जने' इत्यनुशासनात् । सच लोकत्रयवर्ती जनः कार्यकरणसङ्घातरूप एव- सच सङ्घातः स्थावर इति, जङ्गम इति च द्विविधः- एवं द्विविधस्यापि देहस्य जीवधार्यत्वमनुभवसिद्धम् । जीवे उत्क्रान्तेसति शरीरस्य मरणोत्पातदर्शनात् । अत एव देहस्य भरणाद्धेतोर्जीवस्य देहभृदिति देहीति च व्यवहारः । एवं सर्वव्यापकस्सर्वेश्वर एक एव तत्तदन्तःकरणभेदान्नानाजीवभावं प्रपन्नस्सन् लोकत्रयं बिभर्तीति न जीवेश्वरभेदः । अतएव- 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारते'ति भगवता गीतम् । 'भगवानेक एवैष सर्वक्षेत्रेष्ववस्थित' इति च भागवते व्यासेनोक्तम् । नच जीवस्य नास्तीश्वरसंज्ञेति वाच्यं, 'शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वर' इति गीतावचनात् । तस्मादीश्वरस्यैवाविद्यया प्राणधारणाज्जीव इति संज्ञेति नेश्वरातिरिक्तोस्ति कश्चिज्जीव इति । 'न तदस्ति विना यत्स्यान्मया भूतचराचर'मिति वचनमपि भगवदतिरिक्तवस्त्वभावपरमेव । 'मत्तः

परतरं नान्यत्किञ्चिदस्ति धनञ्जये'ति वचनानुगुण्यात् । नच विनाशब्दस्य सम्बन्धविरहपरत्वाद्भगवदविनाभूतं भगवदसङ्गतं वस्त्विति तदर्थ इति वाच्यं, 'असङ्गो न हि सज्यत' इति श्रुतेरसङ्गभगवत्सङ्गतं वस्त्वन्तरं कथं सिद्ध्येत् । नच भगवदसङ्गतंनाम भगवदव्याप्तमित्यर्थ इति वाच्यं, तथापि व्याप्येन व्यापकस्य कथमसङ्गः । नच घटेनासङ्गतमेव गगनमिति वाच्यं, घटधर्मैरेवासङ्गो गगनस्य नतु घटेनेति । नच मृदो घटेनेव परमात्मनो जगता सम्बन्ध इति वाच्यं, मृदतिरिक्तघटाभावेन मृदो घटेन सह सम्बन्धाभावात्- वस्तुद्वयनिष्ठो हि सम्बन्धः । नच मृदो घटनामरूपाभ्यां सह सम्बन्धो यथा, तथा परमात्मनो नामरूपाभ्यामिति वाच्यं, मृदि घटनामरूपयोरसत्यत्वेन ब्रह्मणि जगन्नामरूपयोरप्यसत्यत्वात्--वाचारम्भणश्रुतेः । तस्माद्भगवदविनाभूतं जगन्मिथ्यैव, यथा मृदविनाभूतो घटो मिथ्या तद्वदिति ।

## पुरुषवचनानां निर्विशेषब्रह्मपरत्वोपपत्तिः ।

अथ 'स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः । अपेतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले' इति पुराणवचनमपि निर्विशेषब्रह्मपरमेव; तथाहि- स परमात्मा अपेतसर्वावरणः- प्रकृत्यादिसर्वावरणरहितः, तत्र हेतुः- सर्वभूतप्रकृतिं प्रधानं विकारान् महदादींस्तत्कार्यभूतान् गुणान् दयाक्षमादीन्, यद्वा नीलपीतादीन्, यद्वा सत्त्वादीन्, आदिशब्दात्कर्मादिग्रहणम्- दोषांश्च विशेषेणातीतोऽव्यतीत इति । एवं वस्तुतो निर्विशेषोपि मायया भवति सर्वात्मेत्याह- अखिलात्मेति, तत्र हेतुमाह-- तेनेति, भुवनान्तराले लोके यत्किञ्चिद्वस्त्वस्ति तत्सर्वं तेन परमात्मना आस्तृतमासमन्ताद्व्याप्तमिति समस्तकल्याणगुणात्मक इति श्लोकस्तु मायिनं परमात्मानं वर्णयतीति नास्माकं कापि क्षतिः। स ईश्वरो व्यष्टिसमष्टिरूप इति तु व्यष्टिशरीराभिमानिनां जीवानां समष्टिशरीराभिमानिहिरण्यगर्भजीवस्य च, ईश्वराभेदं प्रतिपादयतीत्यद्वैतपरमेव । नच रूपशब्दोत्र शरीरवाचीति वाच्यं, तथापि व्यष्टिदेहा मनुष्यपश्वादयस्समष्टिदेहो ब्रह्माण्डात्मकश्च भगवतश्शरीरमिति पूर्वोक्तार्थ एवास्यापि पर्यवसानम् । नच व्यष्टिसमष्टिजीवशरीर इत्यर्थ इति वाच्यं, जीव ईश्वरस्य स्वरूपमेव नतु शरीरमिति प्रागेव साधितत्वादिति । अव्यक्तमतीन्द्रियत्वादगोचरं स्वरूपं यस्य सोऽव्यक्तस्वरूपः, नैतावता शून्यं तदिति मन्तव्यमित्याह- प्रकटस्वरूप इति । विदुषामस्य स्वरूपं प्रत्यक्षमिति प्रकटमेव, आत्मत्वादित्यभिप्रायः । संज्ञायत इति श्लोकोप्यस्मदनुकूल एव । अस्तदोषं शुद्धं परं निर्मलमेकरूपमित्यनेन निर्विशेषस्य ब्रह्मण उक्तत्वात् । नहि सविशेषं ब्रह्मैकरूपं भवितुमर्हति, नापि मायावि ब्रह्म शुद्धं निर्मलमस्तदोषं च भवितुमर्हति- ब्रह्मणि माया हि प्रथमो दोषः- तज्जन्यत्वादतिरिक्तसर्वदोषाणाम् । नापि सगुणं वस्तु शुद्धं भवति, येनेदं निर्विशेषं ब्रह्म ज्ञायते, तदेव ज्ञानमन्यत्वज्ञानमेवेत्युदपाद्यद्वयार्थः । नच निर्विशेषस्य कथं ज्ञेयत्वमिति वाच्यं, निर्विशेषे ब्रह्मणि ज्ञेयत्वस्य कल्पितत्वात्, निर्विशेषब्रह्माकारान्तःकरणवृत्तिसद्भावेन निर्विशेषब्रह्मणो ज्ञेयत्वसम्भवाच्च--इति ।

**यदुक्तम्**—शुद्ध इत्यनेन सकलचेतनव्यावृत्तिः नित्यशुद्धानामपि शुद्धत्वस्य भगवन्नित्येच्छायत्तत्वादिति **तदसत्**—यदि नित्यमुक्तानां शुद्धत्वमीश्वरायत्तं तर्हि तदनित्यमेवेति कृत्वा नित्यशुद्धत्व-

रहितास्ते नित्यमुक्ता नैव भवेयुः, येषां शुद्धत्वं नित्यं तेषामेव मुक्तत्वं नित्यं शुद्धत्वमुक्तत्वयोस्सामानाधिकरण्यात् । यश्शुद्धस्स एव मुक्तः, यो मुक्तस्स एव शुद्ध इति । नहि कस्यचिदायत्तं वस्तु नित्यं भवितुमर्हति- स्वतन्त्रस्यैव नित्यत्वात् । यज्जन्यं तद्धि परतन्त्रमनित्यं, यदि त्वीश्वरेच्छाधीनं तत्तर्ह्यनित्यमेव भवेत् । नचेश्वरनित्येच्छाधीनत्वान्नित्यं तदिति वाच्यं, सा किमीश्वरेच्छाजन्या ? उताजन्या ? आद्ये- नैव नित्या; न द्वितीयः- अजन्यानामिच्छादीनामभावात्- भावे वा अनेकपरस्परविरुद्धनित्येच्छानां युगपदेकस्मिन्नीश्वरे स्थित्ययोगात् । नच इमे अनन्तगरुडादयो नित्यं मुक्ता एव सन्तु, इतीश्वरेच्छावशात्ते नित्यमुक्ता इति वाच्यं, तादृशेच्छायाः प्राक्कि ते मुक्ता उत न ? आद्ये-- व्यर्थैवेच्छा । द्वितीये- न ते नित्यमुक्ताः, किंतु मुक्ता एव । अपि च मुक्ता अपि 'ईश्वरानुग्रहादेव पुंसामद्वैतवास'नेति भगवदिच्छावशादेव मुक्ता इति न मुक्तेभ्यो नित्यमुक्ता विलक्षणा भवितुमर्हन्ति । नच मुक्ता भगवदिच्छावशात् पुनर्बन्धं प्राप्तुमर्हन्ति, नित्यमुक्तास्तु न तथेति वाच्यं, आस्तमस्य भगवतो बद्धमोचकस्य मुक्तबन्धकस्वरूपनृशंसत्वकल्पनायोगात् । नित्यमुक्तत्वेनाभिमतगरुडादीनामपि विनतातनूजत्वादिजन्मादिविकारदर्शनाच्च । नच नित्यमुक्तानामपीश्वरस्येवेश्वरेच्छावशाज्जन्मादिविकारा लीलया भवितुमर्हन्तीति वाच्यं, तर्हि न तेषां मुक्तत्वं नित्यं, किंत्वनित्यमेव, अपि च 'न पुनरावर्तत' इति श्रुतेः । 'अपुनरावृत्तिश्शब्दा'दिति सूत्राच्च । यदि मुक्ता अपि पुनरावर्तन्ते तर्हि सा मुक्तिस्स्वर्गादितुल्यैवेति मुक्तिरेव न भवेत् । नच लीलया सर्वानुपपत्तिपरिहार इति वाच्यं, लीलयापीश्वरस्यानीश्वरत्वं, मुक्तस्य बद्धत्वं च नैव सम्भवतीति । किंच 'ब्रह्मन् कथं भगवतश्चिन्मात्रस्याविकारिणः । लीलया वापि युज्येरन्निर्गुणस्य गुणाः क्रियाः ॥ क्रीडायामुद्यमोर्भस्य कामश्चिक्रीडिषाऽन्यतः । स्वतस्तृप्तस्य च कथं निवृत्तस्य सदाऽन्यत' इति कथं नित्यतृप्तस्य निष्कामस्य भगवतो लीलोदयः । नच तव मते कथमीश्वरस्य जन्मादिकमिति वाच्यं, 'मायागुणाननुगतो हि तथा विभा'तीति मन्मते कथितत्वादुपपत्तेः । तस्मादेक एवेश्वरो नित्यशुद्धबुद्धमुक्तस्वभावो मायया श्रीरामादिरूपेणावतीर्ण इव यथा प्रतिभाति, तथैव नानाजीवरूपेण संसरन्निव च भातीति न जीवेश्वरभेदावकाश इति । अथ वस्त्वपरिच्छेद इत्यस्य नित्यत्वविभुत्वव्यतिरिक्तगुणैस्समाभ्यधिकरहितत्वमिति योर्थ उपवर्णितस्सुदर्शनेन स विदुषां हासायैव भवति- स्वसमाधिकवस्तुभ्यामिव स्वन्यूनवस्तुतोपि स्वस्य परिच्छेदसत्त्वात्, नित्यत्वविभुत्वव्यतिरिक्तगुणैरिति च स्वकपोलकल्पितत्वेनाप्रमाणत्वात् । किंच नित्यत्वविभुत्वगुणाभ्यां स्वसमाधिकवस्तुसत्त्वेपि नेश्वरस्य तत्कृतपरिच्छेद इति कथमभ्युपगन्तुं पार्यते- नापीश्वरादन्यो नित्यत्वविभुत्वगुणद्वयवानस्ति कश्चिदर्थः । नचाकाशोस्तीति वाच्यं, तस्यानित्यत्वात् । नापि जीवोस्तीति वाच्यं, तस्य तव मतेऽणुत्वात् । नापि कालोस्तीति वाच्यं, तस्य नित्यस्य कालस्येश्वरानन्यत्वाज्जन्यस्य च कालस्यानित्यत्वात् । नापि प्रकृतिर्विभ्वनित्या चेति वाच्यं, विभुत्वं व्यापकत्वं, तद्धि कारणस्यैव सम्भवति, कारणं हि स्वकार्यव्यापकं, तच्च कारणमीश्वर एवेति तस्यैव सर्वव्यापकत्वं न प्रकृतेः । नच प्रकृतिर्जगदुपादानमिति वाच्यं, 'प्रकृति'श्चेति सूत्रविरोधात्, तव मतविरोधाच्च । नचेश्वराधिष्ठित-

प्रकृतिर्जगदुपादानमिति वाच्यं, तथासति प्रकृतिरीश्वरेण व्याप्तैवेति न विभ्वी । नच ईश्वरातिरिक्त-सर्वव्यापित्वाद्विभ्वीति वाच्यं, प्रकृतेस्स्वाकार्यजीवव्यापित्वाभावात् । नच जीवेश्वरातिरिक्तसर्वव्यापित्वा-द्विभ्वीति वाच्यं, तथापि घटादिसर्वविकारजातव्यापकत्वान्मृत्तिकापि विभ्वी भवेदेव- कतिपयपदार्थव्या-पित्वाविशेषात् । तस्मात्सर्वव्यापको जीवाभिन्न ईश्वर एकएव विभुः विभुत्वात्स एव नित्य इति कृत्वा कथमुक्तं नित्यत्वविभुत्वव्यतिरिक्तगुणैस्समाभ्यधिकरहितत्वं वस्त्वपरिच्छेद इति ।

अथ यदुक्तम्—इदमिदं न भवतीति वस्त्वपरिच्छेद इति, तद्युक्तमेव । परन्तु तत्स्वमते न सम्भवति- प्रकृतिपुरुषयोरीश्वराद्भिन्नत्वेन प्रकृतिरीश्वर इति पुरुष ईश्वर इति वक्तुमशक्यत्वात् । नच ईश्वरशरीरत्वात्प्रकृतिपुरुषयोरीश्वरत्वमिति वाच्यं, तथासति जीवशरीरत्वान्मनुष्यादिदेहोपि जीव एव भवेदिति । यच्चोक्तं स्वनिष्ठवस्त्वन्तराभावो वस्त्वपरिच्छेद इति, तदप्ययुक्तम्—स्वस्मिन्वस्त्वन्तर-सत्त्वस्यैव वस्तुपरिच्छेदत्वात्-- गृहे घटोऽस्ति चेत्तेन घटेन गृहं परिच्छिन्नमेवेति । किंच यद्यस्वनिष्ठमपि जगत्परमात्मनि भवेत्तर्वि बहुहेयवत्त्वात्तद्ब्रह्म शुद्धं नैव भवेत्, तस्मान्निर्विशेषस्यैव ब्रह्मणो वस्त्वपरिच्छेदः, निर्विशेषे ब्रह्मणि मायया कल्पिताः खलु सर्वे विशेषा ब्रह्ममात्रमेव कल्पितस्याधिष्ठानानतिरेकात् इति । रूपवर्णादिनिर्देशविशेषणविवर्जित इति वचनं तु निर्विशेषब्रह्मपरमिति मतिमतां विदितमेव । कर्मकृत-रूपादिरहित इत्यर्थवर्णनं तु परस्य गत्यभावप्रयुक्तमेव । ननु यस्सदास्तीति केवलं वक्तुं शक्यत इति वाक्यादस्तित्वविशेषसत्त्वान्न ब्रह्म निर्विशेषमिति, मैवम्—'अस्तीत्येवोपलब्धव्य' इति श्रुतिमाश्रित्य तथोक्तं । ततश्च ब्रह्मणि सत्तातिरिक्तास्सर्वे विशेषाः परिहृता भवन्ति । एवं सन्मात्रब्रह्मावशेषे सति 'न सत्तन्नासदुच्यत' इति सत्ताया अपि निषेधस्सुकर इति तदाशयः । नच 'असद्ब्रह्मेति वेदचेदसन्नेव स भवे'दिति वाच्यं, नायमसद्ब्रह्मेति वेत्ति, किंतु ब्रह्मसन्न भवत्यसन्नपि न भवतीति वेत्तीति । नचास्ति ब्रह्मेति योवेत्ति तमेव सन्तं विदुरिति वाच्यं, सन्तमसन्तं वा ब्रह्मविदं मा विदन्तु इति । यदुक्तमनि-त्यत्वव्यापकं कर्म कृतं रूपादिमत्त्वं ब्रह्मणि नास्तीति तदयुक्तम्—कर्मकृतरूपादिमतोपि जीवस्य नित्य-त्वसत्त्वात्, जीवस्यानित्यत्वे प्रवाहनित्यकर्माश्रयत्वायोगाच्च, 'अजो नित्य' इत्यादिशास्त्रविरोधाच्च, कृत-हानाकृताभ्यागमरूपदोषप्रसङ्गाच्च । नच जीवकर्मकृतदेहस्यानित्यत्वादनित्यो जीव इति वाच्यं, तथासति रामकृष्णादिदेहस्यानित्यत्वादीश्वरोप्यनित्य एव भवेदिति- 'प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनी'ति वचनं तु प्रकृतिपुरुषयोर्नित्यत्ववादिनस्स्वस्य कण्ठपाशायितमेव । किंच कार्यस्यैव कारणे लय इति कृत्वा अजयोः प्रकृतिपुरुषयोः परमात्माकार्यत्वात्परमात्मनि लयश्चा-नुपपन्नः । अस्मन्मते तु प्रकृतेरनित्यत्वाभ्युपगमात्परमात्मन्यध्यस्तत्वाभ्युपगमाच्च परमात्मनि लय उप-पद्यते- पुरुषस्य परमात्मनि लयो नाम परमात्माभेदापत्तिरेव, नतु नाश इति न नित्यत्वहानिरिति जीवपरयोर्विभेदजनकेऽज्ञाने ज्ञानान्नाशं गते सति जीवः पर एव भवतीति भावः । यदिदं वचनं न युक्तिपरं, किंतु महाप्रलयपरं तर्हि पुरुषोपाध्यन्तःकरणस्य प्रकृतौ निलीनत्वात्तस्याश्च प्रकृतेर्ब्रह्मणि स्थित-त्वादुभयोः परमात्मनि निलीनत्वोक्तिरिति बोध्यं, अयं च परमात्मा न ब्रह्मविष्णुरुद्रादिष्वन्यतमः, किंतु

मायी महेश्वर एवेति । 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति श्रुतेः कार्यं शरीरं हि नेश्वरस्योपाधिः, ईश्वरस्य तु बृहत्वाद्बृंहणाच्चैव ब्रह्मेति आनन्दरूपत्वाच्छिव इति व्यापकत्वाद्विष्णुरिति परमेश्वरत्वादिन्द्र इति च नामानि । अतएव विष्णुनामेत्युक्तमिहैवेति ।

## सत्यं ज्ञानेति श्रुतौ अनन्तपदस्य अर्थविचारः ।

**यदुक्तं** सत्यं ज्ञानमनन्तमिति वाक्ये यो वेदेत्युक्तत्वादनन्तमिति द्वितीयान्तपुंलिङ्गशब्दो विष्णुदेवतावाचीति **तदयुक्तम्**—विशेष्यस्य ब्रह्मशब्दस्य क्लीबत्वेन तद्विशेषणस्यानन्तशब्दस्य च क्लीबत्वेन भाव्यत्वात् । नच ब्रह्मेति विशेषणमिति वाच्यं, तर्हि अनन्तमित्यस्य विशेष्यत्वे ब्रह्माणमित्येव तद्विशेषणं भवितव्यं, नतु ब्रह्मेति । नच परब्रह्मवाचिब्रह्मशब्दस्य क्लीबत्वाद्ब्रह्म ब्रह्मभूतमित्यर्थः- वेदाः प्रमाणमितिवदिति वाच्यं, ब्रह्मभूतमिति समस्तपदगतो ब्रह्मशब्दः किं विशेष्यमुत विशेषणम् ? आद्ये- विशेष्यस्य तस्यैव ब्रह्मशब्दस्य कस्मादिह विशेषणत्वेन ग्रहणम् । नतु द्वितीयः- विशेषणत्वाभावात् । किंच मृत्युञ्जयश्शिव इतिवद्विशेष्यस्य पुनर्विशेष्ये सति विशेषणत्वमेव भवेदिति न्यायादनन्तं ब्रह्मेत्यत्र अनन्तपदं विशेष्यभूतमपि सति ब्रह्मेति विशेष्ये विशेषणमेव भवेत् । ततश्च अन्तरहितमित्येवार्थो न त्वन्तरहितविष्णुरिति । यत्तु 'अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जग'दिति वचनस्य मुक्तस्वरूपक्षमरं, बद्धस्वरूपं क्षरमित्यर्थवर्णनं, **तदसङ्गतमेव**--परं ब्रह्मेति साक्षात्परमात्मवाचिपदस्य मुक्तस्वरूपमित्यर्थवर्णनायोगात् । किंच यथामुक्तस्यात्मनश्चैतन्यलक्षणं परं ब्रह्म स्वरूपं तथा बद्धस्यात्मनोपीति न बद्धस्य स्वरूपं क्षरमिति वक्तुं शक्यते । अपिच यदनित्यं तत् क्षरति नश्यतीति क्षरमित्युच्यते- यथा मुक्तस्तथा बद्धश्च जीवो भवति नित्य एवेति कथं बद्धस्य स्वरूपं क्षरं भवेत् । अपि च य इदानीं बद्धस्स एव कालान्तरे ज्ञानान्मुक्तो भविष्यतीति बद्धस्यैव मुक्तत्वात्कथं बद्धस्य स्वरूपं क्षरं- तस्यैव मुक्तस्य स्वरूपमक्षरं भवेत् । नच जीवस्य बन्धः क्षरो मोक्षस्त्वक्षर इति कृत्वा बद्धः क्षरो मुक्तस्त्वक्षर इत्युच्यत इति वाच्यं, तथासति बद्धस्य स्वरूपं क्षरमिति वक्तुमयुक्तत्वात्किन्तर्हि बद्धस्य स्वभावः क्षर इति वक्तव्यम् । नहि बद्धस्य बन्धः स्वरूपम् । तस्मान्नित्यं परं ब्रह्म प्रत्यगभिन्नमेकमेवाक्षरं तद्भिन्नं सर्वं जगत्प्रकृतिमहत्कालादिरूपमनित्यं क्षरमेवेति श्लोकस्यार्थः । तथाच ब्रह्मैकमेवाक्षरं नित्यं सत्यमन्यत्सर्वं क्षरमनित्यमसत्यं मिथ्यैवेति सिद्धमद्वैतम् ॥

## 'एकदेशस्थितस्याग्नेः' इति श्लोकार्थविचारः ।

**अथ** 'एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणश्शक्तिस्तथेदमखिलं जग'दिति श्लोकस्यार्थो विचार्यते—जोत्स्नाशब्दस्वारस्यादत्राग्निशब्दश्चन्द्रपरः । यद्वा अग्निशब्दस्वारस्याज्ज्योत्स्नाशब्दः प्रभापरः । यथा एकदेशस्थितस्याप्यग्नेः प्रभा विस्तारिणी सर्वजगदभिव्यापिनी, तथा परस्य ब्रह्मणश्शक्तिर्माया इदमखिलं जगद्विस्तारिणी भवति । प्रभावतस्सूर्यस्य चन्द्रस्याग्नेश्च प्रभा यथा सर्वमभिव्याप्य स्थिता तथा शक्तिमतः परब्रह्मणश्शक्तिस्सर्वमभिव्याप्य स्थितेत्यर्थः । अत्र अग्निज्योत्स्ना ब्रह्मशक्त्योर्व्यापित्वांश एव दृष्टान्तदार्ष्टान्तिकभावः । अग्निब्रह्मणोश्च ज्योत्स्नावत्त्वशक्तिमत्वांशप्रयुक्त

एवेति वेद्यम् । अन्यथा सर्वव्यापिनः परमात्मनः कथमेकदेशस्थिताग्निसाम्यं, कथं वा सर्वजगदुपादानभूताया ब्रह्मशक्तेरतथाभूताग्निज्ज्योत्स्नातौल्यमिति । किंच अग्नेर्ज्योत्स्ना स्वरूपमेव नतु शक्तिः, ब्रह्मणस्तु शक्तिरेव माया, नतु स्वरूपमिति नाग्निज्योत्स्नाब्रह्मशक्त्योस्समीचीनो दृष्टान्तदार्ष्टान्तिकभावः । नच ज्योत्स्नाशब्देन शक्तिरेव ग्राह्येति वाच्यं, अग्निशक्तेर्विस्तारित्वाभावात् । नचाग्निप्रभा सर्वामभिव्याप्याग्निशक्तिरस्यैवेति शक्तिरपि प्रभेव विस्तारिण्येवेति वाच्यं, अग्निज्वालायामेव दाहस्फोटजननादिशक्तिरस्ति, नतु प्रभायामिति । नच ब्रह्मणश्शक्तिरपि अग्नेर्ज्योत्स्नेव स्वरूपमेव नतु शक्तिरिति वाच्यं, ब्रह्मशक्तिर्ब्रह्मणो न शक्तिरिति व्याघातात् ।

**ननु** चन्द्रस्य चन्द्रिका भार्यैव नतु स्वरूपं नापि शक्तिः, तद्वद्ब्रह्मणो मायापि शक्तिशब्दवाच्या भार्यैव नतु स्वरूपं नापि शक्तिः- 'ह्रीश्च ते लक्ष्मीश्च पत्न्या'विति श्रुतेः लक्ष्म्या एव मायात्वाच्चेति, **मैवम्**—भर्तृत्वभार्यात्वे देहधर्मावेव नात्मधर्माविति । भगकुचादिस्त्रीलिङ्गवान्देह एव शिश्नादिपुंलिङ्गवतो देहस्य भार्या भवति, तस्य च स भर्ता भवतीति आत्मा तु न कस्यचिद्भार्या, नापि भर्ता- तस्य स्त्रीपुंलिङ्गाभावात् । अतएव 'न स्त्री न षण्डो न पुमान्न जन्तु'रिति स्मर्यते । अहं पुरुषोहं नारीति प्रत्ययस्तु स्त्रीपुंदेहतादात्म्याध्यासप्रयुक्त एव मनुष्योहमित्यादिवत् । श्रुतिस्तु विष्णोर्देहस्यैव शङ्खचक्रादिमतो भर्तुर्लक्ष्मीः कमलादिधारिणी स्त्री व्यञ्जनवती तनुर्भार्येत्येवंपरा । चन्द्रचन्द्रिकयोर्भर्तृभार्याभावस्तु पुंवाचकस्त्रीवाचकशब्दप्रयुक्त एव, नदीसमुद्रयोरिव । यद्वा परिदृश्यमानचन्द्रमण्डलाधिष्ठाता कश्चिच्चन्द्रनामा पुरुषदेहोऽस्ति, तस्य च भार्याभूतश्चन्द्रिकानामा कश्चित्स्त्रीदेहोस्तीति बोध्यम् । **ननु** चन्द्रस्य चन्द्रिका धर्म एव, नतु स्वरूपं, तथा ब्रह्मणश्शक्तिर्मायापि धर्म एवेति, **मैवम्**—ब्रह्मणश्शक्तिर्धर्मो भवतु नाम--चन्द्रस्य चन्द्रिका तु न धर्मः- निस्तत्त्वं कार्यगम्यं हि धर्मः- यथा स्फोटादिकार्यगम्यं, निस्तत्वमौष्ण्यमग्निधर्मः- चन्द्रिका तु न कार्यगम्या, किंतु स्वरूपसत्येव । तस्मादग्निज्योत्स्नाब्रह्मशक्त्योर्विस्तारित्वांश एव दृष्टान्तदार्ष्टान्तिकभावो न त्वन्यत्रेति कृत्वा नायं समीचीनो दृष्टान्तः । इदमखिलं जगत्परब्रह्मणश्शक्तिरेवेति व्याख्याने तु सुतरां दृष्टान्तदार्ष्टान्तिकभावानुपपत्तिः- शक्तिकार्यत्वेन जगतश्शक्तिशब्दवाच्यत्वं तूपपद्यत एव ।

**ननु** ज्योत्स्नाया विशीर्णावयवत्वेनाग्निकार्यत्वाज्जगतश्च ब्रह्मकार्यत्वादग्निज्योत्स्नाब्रह्मशक्त्योर्दृष्टान्तदार्ष्टान्तिकभावस्समीचीन एवेति, **मैवम्**—निबिडावयवपुञ्जोऽग्निर्विरलावयवपुञ्जः प्रभेति सिद्धान्तान्नाग्नेः कार्यं ज्योत्स्ना, किंच जगतो ब्रह्मकार्यत्वेपि न शक्तेस्तत्कार्यत्वमिति । नच जगदाकारपरिणतशक्तिस्तत्कार्यमिति वाच्यं, तदानीमपि कार्यत्वस्य विशेषणांश एव पतितत्वादिति । **ननु** शक्तिश्शक्तादपृथग्भूतं कार्योपयोगिशक्तस्य विशेषणं वस्तु- ज्योत्स्ना च अग्नेरपृथग्भूतविशेषणमेवेति अग्निज्योत्स्नाब्रह्मशक्त्योस्समीचीन एव दृष्टान्तदार्ष्टान्तिकभाव इति, **मैवम्**—शक्तेश्शक्तादपृथग्भूतत्वं नाम शक्तात्पृथगनुपलभ्यमानत्वं; यथा वह्नेश्शक्तिर्दाहादिजननलक्षणा न ततः पृथगुपलभ्यते तद्वत् । ज्योत्स्ना तु ज्योत्स्नावतोऽग्नेः पृथगुपलभ्यत एवेति न शक्तितुल्येति । नचापृथक्स्थितत्वं नामावियुज्यावस्थितमिति

वाच्यं, तथासति गगनमवियुज्यैव सर्वमवतिष्ठत इति सर्वमपि गगनस्यापृथक्स्थितविशेषणं स्यात् । तस्मा-द्ब्रह्मणश्शक्तिर्नाग्नेर्ज्योत्स्नातुल्या । यदुक्तं सुदर्शनेन कार्यं न कारणस्यापृथग्भूतं विशेषणं- कार्यकार-णयोरनन्यत्वादिति, तदसत्—कार्यकारणयोस्सुतरामनन्यत्वे कार्यमिदं कारणन्त्विदमिति भेदव्यवहारस्यैव लोपप्रसङ्गात्, कारणव्यतिरेकेण कार्यस्यानुपलम्भेपि कार्यव्यतिरेकेण कारणस्योपलम्भाच्च, कारणस्या-पृथक्सिद्धविशेषणमेव कार्यमिति ।

अथ 'विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा । अविद्या कर्मसंज्ञान्या तृतीया शक्ति-रिष्यते' इति श्लोकवशान्नाद्वैतसिद्धिरिति यदुच्यते, तदयुक्तम्—परपक्षप्रतिक्षेपणार्थमिदं वचनमुदा-हृतवता भवता स्वपक्ष एव निर्मूलित इत्याहो वैदुषी ! परस्य ब्रह्मणः परा शक्तिर्विष्णुरपरा शक्तिर्जीवोऽन्या शक्तिरविद्येत्यभ्युपगमे परं ब्रह्मैव विष्णुरिति स्वमतस्य नष्टत्वात् । नच परब्रह्मणश्शक्तिर्विशिष्णुः परब्रह्मणोऽनन्य एवेति वाच्यं, तथासति परब्रह्मणश्शक्तिर्जीवोऽविद्या च ततोऽनन्य एवेति वक्तव्यत्वात् । नचेष्टापत्तिः- विष्णुरेव परमात्मा, नतु ब्रह्मरुद्रादय इति स्वमतस्य दग्धत्वात् । अस्मन्मते तु न का-प्यनुपपत्तिः- परमात्मनो या मायाख्या शक्तिस्तदवच्छिन्नस्यैवेश्वरत्वेन मायाया एवेश्वरत्वादीश्वरो विष्णुः परब्रह्मणश्शक्तिरेव । तथा परमात्मनो या अविद्याख्या शक्तिस्तदवच्छिन्नस्यैव जीवत्वेन अविद्याया एव जीवत्वाज्जीवः क्षेत्रज्ञोपि परब्रह्मणश्शक्तिरेव । शुद्धसत्त्वप्रधाना प्रकृतिर्माया, मलिनसत्त्वप्रधाना प्रकृति-स्त्वविद्येति विवेकः । कर्मापि परब्रह्मणश्शक्तिरेव क्रियत इति कर्मेति व्युत्पत्त्या कर्म जगत्- तद्धेतुभूता तामसी प्रकृतिश्चोपचारात्कर्मेत्युच्यते । नच जीवादृष्टं कर्मेति वाच्यं, तस्याविद्यान्तःपातित्वादिति । एवं यावद्व्यवहारं परब्रह्मणस्तिस्रश्शक्तयस्सन्ति, परमार्थतस्तु निर्विशेषमेव परं ब्रह्मेति । ननु विष्णुशक्ति-रित्यत्र विष्णोश्शक्तिरिति षष्ठीसमासः- 'शक्तिस्सापि तथा विष्णो'रित्युत्तरवाक्यानुरोधात्तथा च नास्माकं मतस्य कापि क्षतिरिति, मैवम्—का सा विष्णोश्शक्तिरिति प्रश्नस्य श्लोकाक्षरैस्समाधानाभावात्— क्षेत्रज्ञस्य शक्तित्वेन विष्णोरपि शक्तित्वव्यपदेशौचित्याच्च । वस्तुतस्तु श्लोकस्यायमर्थः- विष्णुशब्दः परमात्मवाची- परमात्मनः क्षेत्रज्ञः पराशक्तिः, अविद्या त्वपरा शक्तिः, शक्तिश्च प्रकृतिः- 'महाभूतान्यह-ङ्कारो बुद्धिरव्यक्तमेव च । अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥ जीवभूतां महाबाहो ययेदं धार्यते जग'दिति गीतावचनानुरोधात् । यद्यपि कर्माविद्या चेत्युभयमेकैव प्रकृतिस्तथापि अवान्तरभेद-माश्रित्य द्वेधा निर्दिष्टमिति बोध्यम् । नचैवमीश्वरस्य शक्तिरेव जीवो न त्वीश्वर इति सिद्धं द्वैतमिति वाच्यं, ईश्वरस्य स्वरूपभूता या चिच्छक्तिस्सैव जीवः, स्वभावभूता त्वचिच्छक्तिरविद्येति कृत्वा अविद्येश्वरयोर्भेदेपि जीवेश्वरयोरभेदात् । ननु यदि जीव एव विष्णुशक्तिस्तर्हि विष्णुशक्त्या प्रधानपुरुषौ वृतावित्युत्तरवाक्यानन्वय इति, मैवम्—तत्र गत्यन्तरस्य वक्ष्यमाणत्वात् ॥

## 'यया क्षेत्रज्ञशक्ति'रिति श्लोकार्थविचारः ।

अथ 'यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्व'गेति श्लोकार्थश्च परस्य कण्ठपाशायित एव- विष्णोः पराशक्तिः क्षेत्रज्ञाख्या सर्वगतेति जीवस्य विभुत्वस्योक्तत्वेन स्वाभिमताणुत्वस्यासिद्धेः, जीवभूत-चिच्छक्तेरेकत्ववचनेन जीवानेकत्वासिद्धेश्च- इति ॥

## 'तया तिरोहितत्वा'दित्यादिश्लोकार्थविचारः ।

**तथा** 'तया तिरोहितत्वाच्च शक्तेः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्तत' इति श्लोकश्च एकस्यैव क्षेत्रज्ञस्याविद्यावेष्टनवशात्सर्वभूतेषु तरतमभावेन स्थितिरिति जीवैकत्वमेव बोधयति । अन्यथा हि क्षेत्रज्ञास्तारतम्येन स्वस्वनियतदेहेषु वर्तन्त इति वक्तव्यं स्यात् ॥

## अथ 'प्रधान'मित्यादिश्लोकार्थविचारः ।

**अथ** 'प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया । विष्णुशक्त्या महाबुद्धे वृतौ संश्रयधर्मिणौ ॥ तयोस्सैव पृथग्भावकारणं संश्रयस्य च । यथासक्तं जले वातो बिभर्ति कणिकाशतम् ॥ शक्तिस्सापि तथा विष्णोः प्रधानपुरुषात्मनः' इति श्लोकार्थविचारः क्रियते—सर्वेषां भूतानामात्मभूतेयं विष्णुशक्तिर्न विष्णोश्शक्तिर्माया- तस्यास्सर्वात्मत्वाभावात् । नहि निस्तत्त्वा माया कस्यचिदात्मा भवितुमर्हति, किंतु ब्रह्मैव सर्वस्यात्मा 'स आत्मे'ति श्रुतेः । 'आत्मत्वात्सर्वभूताना'मिति भागवताच्च । ब्रह्म च न विष्णोश्शक्तिः, किंतु विष्णुरेव- तथा च विष्णुशक्तिर्नाम सर्वव्यापिनी चिच्छक्तिरेव । तया च प्रधानपुरुषौ व्याप्तौ- प्रधानस्य चित्यध्यस्तत्वात्, पुरुषस्य च चित्प्रतिबिम्बत्वादिति । विष्णुश्चासौ शक्तिश्च विष्णुशक्तिस्तया विष्णुशक्त्येति समासः । विष्णोश्शक्तिरिति विग्रहेपि विष्णोस्स्वरूपभूतशक्तिरित्येवार्थः । सैव सर्वभूतात्मभूता सर्वव्यापिनी चिच्छक्तिः प्रधानपुरुषयोः- पृथग्भावे कारणं पुरुषस्य ज्ञातृत्वं चिदधीनमिति कृत्वा चिच्छक्तिः पुरुषं ज्ञातारं निधाय, ज्ञेयात्प्रधानात्तं पृथग्भूतमकरोदित्यर्थः । संश्रयस्यापि सैव कारणं- पुरुषो हि चिच्छक्त्या प्रधानमिदं मम भोग्यमिति ज्ञात्वा तत्संश्रयत इति । **यद्वा** सर्वभूतानामात्मनि परब्रह्मणि भूतया स्वत एवोदितया विष्णुशक्त्या मायया प्रधानपुरुषौ वृतौ । तया मोहितत्वादेव पुरुषः प्रधानं संश्रयते । एवमन्योन्यतादात्म्याध्यासेन क्षीरनीरवदन्योन्याविवेकं गतयोः प्रधानपुरुषयोः पुनः परस्परं पृथग्भावे च मायैव कारणं, विद्याया अपि मायाकार्यत्वादिति भावः- इति । यथा जले सक्तं कणिकाशतं वातो बिभर्ति तथा सा प्रधानपुरुषात्मनः प्रधानपुरुषयोरात्मभूतस्य विष्णोश्शक्तिश्चिच्छक्तिरथ वा मायापि जगदिति कर्मणश्शेषः बिभर्तीति । **ननु** मायाव्यतिरिक्तं किमिदं प्रधानशब्दवाच्यं वस्तु- नच साङ्ख्याभिमतमिति वाच्यं, तस्याशब्दत्वेन प्रत्युक्तत्वाद्व्यासेनैवेति, **उच्यते**—परमात्मनः प्रकृतिरेव तमोमयी वियदादिप्रपञ्चोपादानं प्रधानमिति मलिनसत्त्वमयी जीवोपाधिभूता अविद्येति, शुद्धसत्त्वमयी ईश्वरोपाधिभूता मायेति चोच्यत इति । ईश्वरानधिष्ठितं प्रधानं जगत्कारणमिति साङ्ख्यवादस्तु व्यासेन पराकृत इति न किञ्चिदवद्यमिति ॥

## 'तदेतदक्षय'मित्यादिश्लोकार्थविचारः ।

**अथ** 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलं । आविर्भावतिरोभावजन्मनाशविकल्पव'दिति श्लोको जगत्सत्यमिति प्रतिपादयतीत्यप्ययुक्तम्—आविर्भावतिरोभावजन्मनाशविकल्पवतो जगतोऽक्षयत्वनित्यत्वायोगात् । श्लोकस्य त्वयमर्थः—तदेतत्प्रत्यगभिन्नं परब्रह्म अक्षयं, क्षय इत्युपलक्षणं जन्मादिविकाराणां; निर्विकारमित्यर्थः । अतएव नित्यं भवति- तद्भिन्नमखिलं जगत्तु आविर्भावतिरोभावजन्मनाशविकल्पव-

द्भवति तस्मादनित्यमनित्यत्वादेवासत्यं चेत्यर्थः । यदि तु वाक्यभेदो निर्दिष्टस्तर्हि- स्वत आविर्भावादिमदखिलं जगत्कारणात्मना त्वक्षयं नित्यमित्यन्वयो वेद्यः । यथा घटस्स्वतोऽनित्योपि मृद्रूपेण नित्यस्तद्वदिति भावः । **एतेन**- मिथ्या हि बाध्यत्वेनानित्यं नित्यत्वात्तु जगदबाध्यं सत्यमेवेति सुदर्शनोक्तं **प्रत्युक्तम्** । जन्मनाशवत्त्वस्यैव बाध्यत्वलक्षणत्वात्तद्वज्जगदिदं बाध्यत्वान्मिथ्यैवेति । नच जगतो जन्मनाशौ न स्त इति वाच्यं, प्राक्तवाक्यस्यैव तत्र प्रामाण्यात् । 'यतो वा इमानि भूतानि जायन्ते' 'आत्मन आकाशस्सम्भूत' इत्यादिश्रुतिप्रामाण्याच्च ।

**ननु** सत्कार्यवादिनामस्माकं मते सत एव वस्तुनोऽवस्थान्तरस्वीकारपरिहारावेव जन्मनाशौ न त्वतिरिक्ताविति कृत्वा न प्रागविद्यमानं जगज्जायते, नापि विद्यमानं जगत्पश्चान्नंक्ष्यतीति, **मैवम्**—नामरूपातिरिक्तजगत्पदार्थाभावान्नामरूपयोश्चेश्वरेण कृतत्वश्रवणादस्त्येव जगतो जन्म- सति च जन्मनि नाशोऽवश्यम्भाव्येव- यथा नामरूपातिरिक्तघटपदार्थाभावान्नामरूपयोश्च कुलालेन कृतत्वदर्शनादस्त्येव घटस्य जन्म तत्पूर्वको नाशश्च तद्वत् । पिण्डावस्थास्थितायां मृदि अविद्यमानैव घटावस्था जायते नश्यति चेति न ते सत्कार्यवादसिद्धिः । नच तदानीमपि घटावस्था विद्यत इति वाच्यं, विरोधात्-- पिण्डावस्थां परित्यज्य हि मृद्घटावस्थां भजत इति । **ननु** घटवज्जगदिदं भूतभौतिकात्मकमनित्यमस्तुनाम, मृद्वदचिद्वस्तु तु भवत्येव नित्यमिति कथमबाध्यस्याचिद्वस्तुनो मिथ्यात्वं, जगच्च वस्तुतो चिदेव, यथा घटो वस्तुतो मृदेव । अत एव जगदक्षयं नित्यमिति पराशरेणोक्तमिति, **मैवम्**—चित्परतन्त्रस्याचिद्वस्तुनो नित्यत्वायोगात् । यन्नित्यं तद्ध्यपरतन्त्रं- लोके परतन्त्रस्यानित्यत्वदर्शनात् । ज्ञानमेकमेव स्वतन्त्रत्वान्नित्यं- तस्यापि परतन्त्रत्वेऽनवस्थादोषात् । अत एव- 'ज्ञानं यथा सत्यमसत्यमन्य'दिति पराशरेणैवोक्तम् । नच ज्ञानं ज्ञातृतन्त्रमिति वाच्यं, ज्ञातुः स्वरूपमेव ज्ञानं नान्यदिति । किंचेदमचिद्वस्त्ववस्थावत्त्वेन विकारित्वादेव मृद्वदनित्यं, नहि विकारिणो भवति नित्यत्वम् । नच कालत्रयबाध्यत्वमनित्यत्वं, तच्च नास्त्यचिद्वस्तुनः प्रलयेपि तस्य सत्त्वादिति वाच्यं, ज्ञानोत्तरकाले तस्यासत्त्वात् । तदानीमपि तत्सत्त्वे जीवस्यानिर्मोक्षप्रसङ्गात् । अचित्संसर्गमुक्तत्वं हि मुक्तत्वं जीवस्य तवापि सम्मतम् । नच मुक्तावचिदस्ति, तत्संसर्ग एव जीवस्य नास्तीति वाच्यं, जीवसंसर्गप्रयुक्त एवाचितस्सत्तालाभ इति कृत्वा जीवासंसृष्टाचिद्वस्तुसत्त्वायोगात् । तस्माद्बाध्यत्वादिदं जगन्मिथ्यैव । अत एव रङ्गरामानुजेनोपनिषद्भाष्ये जगतो बाध्यत्वलक्षणं मिथ्यात्वमभ्युपेतमिति **संक्षेपः** ॥

## रामानुजाभिमतक्षेत्रज्ञस्वरूपनिर्वचननिराकरणम् ।

**यदुक्तं रामानुजेन**—चिद्वस्त्वचिद्वस्तुमिश्रितं सत् क्षेत्रज्ञरूपं भवतीति **तदसत्**—ज्ञानज्ञेययोश्चिदचितोर्मिश्रणायोगात् । ज्ञातैव चिदिति पक्षेपि ज्ञातृज्ञेययोस्तयोर्मिश्रणं न सम्भवत्येव- नहि घटदेवदत्तौ मिश्रितावन्योन्यं भवतः । नच क्षेत्रयुक्त एव जीवः क्षेत्रं जानन् सन् क्षेत्रज्ञो भवतीति वाच्यं, क्षेत्रात्पृथगवस्थितस्सन्नेव क्षेत्रं जानाति जीव इति न जीवस्य क्षेत्रमिश्रणम् । नच जीवः क्षेत्रे स्थित इति भवति तयोर्मिश्रणमिति वाच्यं, घटे तिष्ठतोपि गगनस्य घटमिश्रणादर्शनात् । अत एवासङ्गत्वं

जीवस्य श्रूयते । नच मुक्त एवासङ्गो नतु बद्ध इति वाच्यं, बद्धस्यैव मुक्तत्वात् । सदैकरूपे जीवे कदाचित्ससङ्गत्वस्य कदाचिदसङ्गत्वस्य च भावायोगात् । बद्धस्यापि जीवस्य निरवयवत्वेन केनचित्सङ्गायोगाच्च । नच 'क्षेत्रक्षेत्रज्ञसंयोगा'दिति गीतावचनादस्ति जीवस्याचित्संयोग इति वाच्यं, गीतोक्तस्स संयोगो भवत्याध्यासिक एव, नतु तात्त्विक इति । अन्यथा श्रुतिस्मृतिन्यायविरोधादप्रमाणमेव गीतावचनं भवेत् । तस्माच्चिद्वस्तु सर्वदाप्यचिदमिश्रितत्वाच्छुद्धमेव । यदप्युक्तं क्षेत्रज्ञावस्थायां चिद्वस्तु पुण्यपापात्मककर्मरूपाविद्यावेष्टितमिति, तदप्यसत्—तव मते मुक्तस्य सर्वज्ञत्वेन क्षेत्रज्ञावस्था वर्तत एव, क्षेत्रत्वात्सर्वस्य । ततः कथं क्षेत्रज्ञावस्थायां कर्मवेष्टनसम्भवः । नच क्षेत्रज्ञावस्थानाम बद्धावस्थेति वाच्यं, तत्पदात्तदर्थालाभात् । नच क्षेत्रमात्रज्ञः क्षेत्रज्ञः, मुक्तस्तु न क्षेत्रमात्रज्ञः, किंतु सर्वज्ञ इति वाच्यं, सर्वस्यापि जगतः क्षेत्रमात्रत्वस्य गीतास्वेव प्रतिपादितत्वात् । नच क्षेत्रमात्मत्वेन जानातीति क्षेत्रज्ञो बद्ध एवेति वाच्यं, नाहं क्षेत्रं किंतु क्षेत्रादन्यः कर्ता भोक्ता संसारीति जानतो मुक्तत्वप्रसङ्गात्, नच क्षेत्रमात्मीयत्वेन यो जानाति स क्षेत्रज्ञो बद्ध एवेति वाच्यं, क्षेत्रमिदं सर्वं जगदात्मीयत्वेन जानत ईश्वरस्यापि क्षेत्रज्ञस्य बद्धत्वप्रसङ्गात् । नच व्यष्टिदेहलक्षणं क्षेत्रमात्मत्वेनात्मीयत्वेन वा यो जानाति स क्षेत्रज्ञो बद्ध इति वाच्यं, सुप्तजीवस्य बद्धत्वाभावप्रसङ्गात्, प्रलये बद्धजीवाभावप्रसङ्गाच्च, तस्माद्यः क्षेत्रं दृश्यमवभासयति स एव क्षेत्रज्ञः । 'यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भार'तेति गीतावचनात् । सच क्षेत्रज्ञ ईश्वर एव- 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' इति गीतावचनात् । ईश्वरश्च यावद्व्यवहारं क्षेत्रज्ञः, परमार्थतस्तु क्षेत्रस्यैवाभावान्न क्षेत्रज्ञः, किंतु निर्विशेषं ब्रह्मैवेति सिद्धं निर्विशेषं ब्रह्म इति ।

**यदप्युक्तं** शरीरगतभेदरहितत्वादात्मनस्स्वरूपं प्रत्यस्तमितभेदमिति, **तदसत्**—तथात्वे घटपटादिगतभेदरहितत्वाच्छरीरमपि प्रत्यस्तमितभेदं भवेदेवेति । नहि भेदसामान्यवाचिभेदशब्दस्य कतिपयभेदविशेषपरत्ववर्णनं न्याय्यं- तथा संकोचे मानाभावात् । तस्मात्सर्वविशेषनिषेधावशिष्टमात्मस्वरूपं निर्विशेषमेवेति ॥

## आत्मनः स्वसंवेद्यतानिराकरणम् ।

**यच्चोक्तं** ज्ञानसत्तैकलक्षणं स्वसंवेद्यमात्मवस्तुस्वरूपमिति, **तदप्यसत्**—युगपदेकत्र ग्राह्यत्वग्राहकत्वयोरयोगेन स्वसंवेद्यत्वाभावादात्मनः कर्मकर्तृभावो हि विरुद्धः- ज्ञानस्य ज्ञेयत्वं चायुक्तं, तथासति ज्ञानज्ञेययोस्साङ्कर्यप्रसङ्गादनवस्थाप्रसङ्गाच्च । किंच परमात्मज्ञेयस्यात्मनः कथं तव मते स्वसंवेद्यत्वं, स्वेनैव संवेद्यं हि स्वसंवेद्यम् । अपि च तव मते ज्ञातृत्वादात्मनः कथं ज्ञानसत्तैकलक्षणत्वं- न ह्यात्मा ज्ञानत्वेनैव सन्, किंतु ज्ञातृत्वेनापीति तव मतात् । किंच ज्ञानत्वेन सत्ता यद्यात्मलक्षणं तर्हि तल्लक्षणं धर्मभूतज्ञानेऽतिव्याप्तमेव, तस्यापि ज्ञानत्वेन सत्तावत्त्वादिति । आत्मसंवेद्यमिति मूलपदं तु अनन्यवेद्यमात्मस्वरूपमित्येतत्परमिति वेद्यम् ॥

## 'प्रत्यस्तमितभेद'मिति पुराणवचनस्य प्रपञ्चनिषेधपरत्वप्रतिपादनम् ।

**यदप्युक्तं** प्रत्यस्तमितभेदमिति न प्रपञ्चापलाप इति, **तदप्ययुक्तम्**—'प्रपञ्चोपशमं शान्त'मित्यादिश्रुत्यनुरोधेन पुराणवचनस्य नेयत्वादन्यथा श्रुतिविरोधात्पुराणस्याप्रमाणत्वप्रसङ्गात् । नच सत्यस्य प्रपञ्चस्यापलापो न युक्त इति वाच्यं, 'ततस्त्यमतोन्यदार्त'मिति श्रुत्यैवार्तत्वं प्रपञ्चस्योक्तमिति । नच ब्रह्मभिन्नत्वेन प्रपञ्चस्यासत्यत्वेपि ब्रह्मात्मना सत्यत्वमेवेति वाच्यं, तर्हि सर्पोपि रज्ज्वात्मना सत्य एव, घटोपि मृदात्मना सत्य एव । नचेष्टापत्तिः- रज्जुसर्पो मिथ्येति लोकव्यवहारस्य वाचारम्भणश्रुतेश्च दत्तजलाञ्जलित्वापत्तेः, कारणात्मना कार्यं सत्यमिति वचनस्य स्वात्मना कार्यं मिथ्येत्यत्रैव पर्यवसानाच्च- इति ।

## मूर्तामूर्तपदार्थविचारः ।

**यदुक्तं** मूर्तममूर्तमविद्या चेति विष्णोरस्ति शक्तित्रयं, तत्र मूर्तं क्षरं बद्धजीवः, अमूर्तमक्षरं मुक्तजीवः, अविद्या तु कर्मेति, **तदयुक्तम्**—यदि बद्धमुक्तौ विष्णुशक्ती तर्हि नित्यमुक्तः किं विष्णुरुत तच्छक्तिः ? नाद्यः जीवेश्वराभेदानङ्गीकारात्तव । न द्वितीयः- अनुक्तत्वादिह तदर्थस्य । तथा- चितः कर्मणश्च विष्णुशक्तित्वे कर्मातिरिक्तमचिद्वस्तु किं विष्णुरुत तच्छक्तिः ? नाद्यः विष्णोरचित्त्वायोगात् । न द्वितीयः- तथाऽनुक्तत्वात् । नच नित्यमुक्ता अचिद्वस्तूनि च न विष्णुर्नापि तच्छक्तिः, किं त्वतिरिक्ता एव पदार्था इति वाच्यं, तथासति अविष्ण्वात्मकस्वतन्त्रपदार्थानां सिद्धत्वात्तत्सिद्धेस्तवानिष्टत्वाच्च । किंच अमूर्तस्याक्षरस्य जीवस्य बन्धावस्थायामपि मूर्तत्वक्षरत्वे दुर्वचे एव । **ननु** 'द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च । क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते' इति वचनान्मूर्तं क्षरं बद्धजीवः, अमूर्तमक्षरं मुक्तजीव इति, **मैवम्**—'अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जग'दिति मूलकत्रैव व्याख्यातत्वात्क्षराक्षरपदयोः । नच परं ब्रह्म मुक्तजीव एवेति वाच्यं, जीवेश्वरभेदवादिना त्वया तथा वक्तुमशक्यत्वात् । नच परंब्रह्मशब्दोपि मुक्तपर एवेति वाच्यं, किं लक्षणया परंब्रह्मशब्दो मुक्तं बोधयति ? यद्वा अभिधया ? आद्ये सम्भवति मुख्यार्थे कथमिह लाक्षणिकार्थाश्रयणं, न द्वितीयः- परंब्रह्मशब्दः परं ब्रह्म नाभिधया प्रतिपादयति, किंतु मुक्तजीवमित्यस्य व्याहतत्वात् । किंच जीवब्रह्मभेदात्कथं बद्धमुक्तौ ब्रह्मणो रूपे भवितुमर्हतः । नचात्र रूपशब्दश्शरीरवाचीति वाच्यं, रूपशब्दस्य शरीरवाचित्वाभावात्, चिद्रूपं ब्रह्मेत्यादौ तथाऽनङ्गीकारात् । अङ्गीकारेपि बद्धमुक्तौ द्वौ जीवावेव न ब्रह्मणश्शरीरे, किंतु नित्योपि शरीरमेव । तथा प्रकृतिरपि शरीरमेवेति कृत्वा कथं द्वे रूपे ब्रह्मण इति निर्देशः कृतो मुनिना । अपिच बद्धस्य मुक्तस्य चाणोर्जीवस्य कथं सर्वभूतस्थितिरुपपद्यते । उक्तं हि सर्वभूतेषु च स्थिते इति- तस्मान्नासौ श्लोकस्यार्थः । किंतु- ब्रह्मणो द्वे रूपे स्तः- तत्रैकं मूर्तं क्षरं मायिकं जगत्, अन्यत्त्वमूर्तमक्षरं तात्त्विकं चैतन्यमेवेति श्लोकस्यार्थः । परमेव हि ब्रह्म मायया जगद्रूपेण प्रतीयत इति जगदपि परब्रह्मणस्स्वरूपमेव, चैतन्यं तु परं ब्रह्मणस्स्वरूपमेव- चैतन्यस्यैव परब्रह्मत्वात् ।

**ननु** ब्रह्मणस्स्वरूपमक्षरं, तच्चाक्षरं ब्रह्मेति वचनमसङ्गतार्थकमिति, **मैवम्**—ब्रह्मणस्स्वरूपं ब्रह्मैव न त्वन्यदिति वचनस्य सुसङ्गतार्थकत्वादिति । नच षष्ठीस्वारस्यद्ब्रह्मभिन्नमेवेहाक्षरमिति वाच्यं, घटस्य स्वरूपं कम्बुग्रीवादिमत्त्वमित्यत्रापि षष्ठीस्वारस्याद्घटभिन्नमेव कम्बुग्रीवादिमत्त्वमिति वक्तव्यत्वापत्तेः । नहि स्वरूपं स्वस्मादतिरिच्यते इति । क्षरस्य मूर्तत्वं च नामरूपवत्त्वं, तदभाव एवाक्षरस्यामूर्तत्वम्--नामरूपात्मकं हि जगत् जन्मनाशोपेतत्वात्क्षरं, नामरूपरहितं तु परं ब्रह्म जन्माद्यभावादक्षरं- तथा च क्षरं दृश्यमिदं सर्वमेकः पदार्थः, अक्षरं दृक्तु अन्यः पदार्थ इति द्वावेव पदार्थौ स्थः । अतएव 'द्वे रूपे ब्रह्मणस्तस्ये'त्युक्तम् । तत्र दृग्रूपं ब्रह्मैव मायया दृश्यं भवतीति परमार्थसत्यं दृग्रूपं ब्रह्मैवेति सिद्धमद्वैतम् । **नन्वेवं** चेत्सर्वभूतेषु च स्थिते इत्यनुपपन्नं- ब्रह्मरूपस्यैव सर्वभूतशब्दार्थत्वादिति, **मैवम्**—यद्ब्रह्मणस्स्वाभाविकमक्षरं रूपं चैतन्यं तत्सर्वव्यापित्वात्सर्वभूतेषु स्थितमेव । यत्तु मायिकं क्षरं रूपं तद्व्यक्ताव्यक्तभेदेन द्विविधं, तत्राव्यक्तं व्यक्तेषु सर्वभूतेषु तिष्ठति, अव्यक्तोपादेयत्वाद्व्यक्तस्येति । तस्मादक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगदित्युत्तरवाक्यानुरोधात् । 'क्षरं प्रधानममृताक्षरं हर' इति श्रुत्यनुरोधात् । नामरूपात्मकमूर्तिसद्भावासद्भावाभ्यां च ब्रह्मणः पारमार्थिकं स्वरूपं चैतन्यमेवामूर्तमक्षरं, मायिकं तु मूर्तं क्षरं जगदित्येव श्लोकस्यार्थः । जगच्छब्दश्च कार्यकारणरूपावस्थितप्रकृतिपर इति कृत्वा जगत्कारणमव्यक्तं प्रधानं तत्कार्यं व्यक्तं जगच्चेत्युभयमपि मूर्तं क्षरमेव । नचाव्यक्तस्य नाशाभावान्न क्षरत्वमिति वाच्यं, 'अव्यक्तमक्षरे लीयते' इति श्रुतेः; 'एतदमृतमेतदभय'मिति श्रुतेर्ब्रह्मण एकस्यैवामृतत्वेनाक्षरत्वात् । नच मुक्तजीवोऽक्षर इति वाच्यं, बद्धजीवस्याप्यक्षरत्वात्, ब्रह्मैवाविद्यया बद्धमिव विद्यया मुक्तमिव च भवतीति सिद्धान्तात्—इति ॥

## योगस्य सगुणब्रह्मैकविषयत्वेन तत्प्रकरणस्थश्लोकानां न निर्विशेषपरत्वमिति रामानुजशङ्का- तन्निरासश्च ।

**यदुक्तं रामानुजेन**—योगस्संसारैकभेषजं, तदवयवधारणा च शुभाश्रये भगवद्रूपे कर्तव्या, बद्धात्मनस्स्वरूपमशुभाश्रयभूतं, मुक्तात्मनस्स्वरूपं तु स्वतश्शुद्धिविरहं, योगप्रकरणस्थत्वात्प्रकृतश्लोको न निर्विशेषपर इति, **तदयुक्तम्**—ज्ञानमेव संसारैकभेषजं- साक्षात्संसारनिवर्तकत्वात् । योगस्तु ज्ञानद्वारेति न संसारैकभेषजम् । यदि तु साङ्ख्यवद्योगतोपि ब्रह्मात्मसाक्षात्कारजननद्वारा संसारैकभेषजमित्युच्यते, तर्हि योगस्संसारैकभेषजमिति वक्तुं कथं शक्यते, किंतु योगस्संसारभेषजमित्येव वक्तव्यं - संसारभेषजस्य योगादन्यस्य सांख्यस्य सत्त्वात् । तथा भगवद्रूपं शुभाश्रयमित्यप्ययुक्तं- भगवद्रूपस्य शुभत्वेन शुभाश्रयत्वाभावात् । नच भगवत्स्वरूपस्य शुभत्वेपि तद्विग्रहस्य शुभाश्रयत्वमिति वाच्यं, अशरीरत्वाद्भगवतः । अन्तर्यामिणश्च सर्वशरीरकत्वेन सर्वमपि जगद्भगवच्छरीरमेवेति कृत्वा अशुभाश्रयश्शुनकादिरपि भगवद्विग्रह एव भवेत् । **ननु** यद्यपि विराट्पुरुषस्य सर्वमपि जगच्छरीरमेव, तथापि लीलया तस्य केचिच्छुभाश्रया विग्रहा भवन्ति- रामकृष्णादयः, तत्र धारणा चेतसः कर्तव्या योगिनेति, **मैवम्**—आत्मैव ध्येयो न त्वनात्मा-- ईश्वरश्च सर्वस्यात्मेतीश्वरे चित्तप्रणिधानात्मको योगः कर्तव्यः, ईश्वरविग्रहस्तु त्वदुक्तो नात्मैव ततो नात्मनीश्वरविग्रहे चेतःप्रणिधानमयोगत्वान्नैव कर्तव्यमिति ।

**ननु** प्रक्रान्तयोगस्यादावेवात्मनि चेतःप्रणिधानस्य दुष्करत्वाद्योगाभ्यासं चिकीर्षुरादौ विश्वरूपे चेतःप्रणिधानं कुर्यात्, पश्चाद्रामकृष्णादिरूपे, तदनन्तरं तु भगवत्यान्तनीति, **मैवम्**—आत्मानात्मविवेकविधुरस्य मन्दमतेरेवमस्तु योगाभ्यासः, यस्तु देहादन्य एवात्मा न तु देह आत्मेति वेत्ति तस्य तु रामकृष्णादयो देहा अनात्मानो नैव ध्येयाः किं त्वात्मैव ध्येयः। अत एव- 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रूयते। तदेवात्मध्यानं योग इत्युच्यते- ईश्वरप्रणिधानस्य योगत्वादीश्वरस्य चात्मत्वात्। स एव योगोऽभ्यसनीय इति कृत्वा योगाभ्यासं चिकीर्षुरपि परिशुद्धमात्मस्वरूपमेव शान्तं शिवमद्वैतं परिचिन्तयेत्। नच दुष्करस्स इति वाच्यं, सुकरत्वात्तस्य- चित्तस्य लयविक्षेपयोर्निरोधे हि आत्मस्वरूपं स्फुरति। अत एव 'योगश्चित्तवृत्तिनिरोध' इत्यप्युक्तम्। चित्तवृत्तिनिरोधेश्वरप्रणिधानयोरेकार्थत्वादिति। यस्यैवमात्मध्यानं दुष्करं स पुनर्ब्रह्माहमस्मीत्येव चित्तवृत्तिमावर्तयेत् 'अहं ब्रह्मास्मीत्युपासी'तेति श्रुतेः। त्वदुक्तविग्रहध्यानं तु विग्रहार्चनवदिति मूढविषयमेवेति सन्तुष्टो भव। **यदुक्तं** बद्धात्मस्वरूपमशुभाश्रयभूतमिति **तदसत्**— यद्यशुभदेहाश्रयत्वेन बद्धात्मनस्स्वरूपमशुभाश्रयभूतं, तर्हि सर्वव्यापीश्वरस्यापि स्वरूपमशुभदेहाश्रयत्वेनाशुभाश्रयभूतं भवेदेव। यदि तु अशुभदेहतादात्म्याध्याससत्त्वाद्बद्धात्मनस्स्वरूपं तथाभूतमित्युच्यते, तर्हि यस्य तत्तादात्म्याध्यासोस्ति तस्य भवत्वशुभाश्रयत्वं- आत्मस्वरूपस्य तु तदध्यासाभावात्कथमशुभाश्रयत्वम्। आत्मस्वरूपं तु सत्यं ज्ञानमानन्दमेवेति कथं तस्याशुभाश्रयत्वम्। मुक्तात्मनस्स्वरूपं स्वतश्शुद्धिविरहमित्यप्ययुक्तं- आत्मस्वरूपं स्वतश्शुद्धमेवाविकारित्वेन नित्यत्वात्। बद्धस्तु भ्रान्त्या अशुद्धोहमिति प्रत्येति- 'पापोहं पापकर्माहं पापात्मा पापसम्भव' इति वचनात्। विद्वांस्तु स्वतस्सिद्धशुद्धबुद्धमुक्तपरिपूर्णज्ञानानन्दब्रह्माभिन्नोहमिति प्रत्येतीति कृत्वा विदुष एवात्मत्वादात्मा स्वतश्शुद्ध एव। नच उपाधिपरित्यागान्मुक्तात्मा भवति शुद्ध इति वाच्यं, परिपूर्णेन निष्क्रियेण चात्मना नेतःप्रागुपाधिः कश्चन स्वीकृतो, नेदानीं त्यज्यते च। किंच तव मते मुक्तस्यापि नित्यमुक्तगरुडादिवदस्त्येवोपाधिरिति कथं उपाधिपरित्यागः। नच मलिनोपाधिपरित्यागादात्मा भवति शुद्ध इति वाच्यं, तर्हि परमात्मनस्सर्वदापि मलिनोपाधिसम्बन्धसत्त्वादशुद्धत्वमेव भवेत्। परमात्मा हि चिदचिद्विशिष्टः- तस्माद्य एवेतःप्राग्बद्धस्स एवेदानीं मुक्त इति न बद्धमुक्तयोस्वरूपभेदः। तच्च स्वरूपमीश्वर एवेति न जीवेश्वरभेदः। तस्य चेश्वरस्य ध्यानमिह विहितमिति न प्रकरणविरोधः- योगप्रकरणे निर्विशेषस्यैवेश्वरस्य वक्तव्यत्वात्। नच निर्विशेषं ब्रह्मैव न त्वीश्वर इति वाच्यं, ब्रह्मण एवेश्वरत्वादीश्वरस्य स्वरूपं हि ब्रह्म। नच निर्विशेषं ब्रह्म निष्पन्नयोगिध्येयमेव, नतु प्रक्रान्तयोगिध्येयमिति वाच्यं, प्रक्रान्तयोगेनापि निर्विशेषं ब्रह्माहमस्मीति ध्यातुं शक्यत्वात्। यद्वा 'ओमित्यात्मानं युञ्जीते'त्याद्युक्तरीत्या निर्गुणब्रह्मध्यानात्मको योगस्सुकर एवेति। अत्र परिशुद्धात्मस्वरूपस्य शुभाश्रयतानर्हतां वक्तुं 'प्रत्यस्तमितभेदं यदि'त्युच्यत इति **यत्तदसत्**— यथा परिशुद्धमपि परमात्मस्वरूपं सकलकल्याणगुणाश्रयत्वेन शुभाश्रयस्तथा परिशुद्धमप्यात्मस्वरूपं किमिति शुभाश्रयो न स्यात्- नहि कल्याणगुणानां शुभत्वं नास्तीति वक्तुं शक्यते। नच निर्गुणमेवात्मस्वरूपमिति वाच्यं,

सत्यज्ञानादिगुणसत्त्वादात्मनः। न ह्यात्मनो निर्गुणत्वे ततोप्यान्तरः परमात्मा सगुणो भवेत्, किंच आत्मस्वरूपस्य परिशुद्धत्वं नाम वैशिष्ट्याभावः- विशिष्टं ह्यशुद्धं- येन यद्विशिष्टं तेन तद्ध्यशुद्धम्। तथासति सदापि चिदचिद्विशिष्टत्वादपरिशुद्ध एव परमात्मा, तस्यैवाशुद्धत्वे कथं तदुपासनया जीवात्मनः परिशुद्धिस्स्यात्। जीवोप्यान्तरेण चिद्वस्तुना बाह्येनाचिद्वस्तुना च विशिष्ट एव। नच जीवान्तर ईश्वर एव नतु चिद्वस्त्विति वाच्यं, ईश्वरस्य ज्ञानस्वरूपत्वेन चिद्वस्तुत्वात्। अथवा अन्तरेणेश्वरेण विशिष्टत्वाज्जीवो शुद्ध इति वक्तव्यम्। **ननु** विशिष्टत्वमात्रं नाशुद्धत्वं, किंतु अशुद्धविशिष्टत्वमशुद्धत्वं, तथाच ईश्वरस्य परिशुद्धत्वात्तद्विशिष्टो जीवश्शुद्ध एव, अचिद्वैशिष्ट्यं तु न मुक्तजीवस्यास्ति तस्य देवादिदेहवियुक्तत्वादिति, **मैवम्**—संसार्यशुद्धचिदचिद्विशिष्टत्वेनाशुद्धस्येश्वरस्य परिशुद्धत्वाभावात्, मुक्तजीवस्यापि देहेन्द्रियादिसद्भावेनाचिद्विशिष्टत्वसत्त्वाच्च। **एतेन**- देवमनुष्यादिदेहभेदाभावो मुक्तात्मन इति **प्रत्युक्तं**- दिव्यदेहभेदसत्त्वात्- यथा पशुपक्षिमनुष्यादयो बद्धजीवाः परस्परं भिन्नाः तथा मुक्ता अपि शुकवामदेवादयो वैकुण्ठलोकस्था भिन्ना एवेति। **ननु** देवमनुष्यादयो देहभेदा एव, नात्मभेदा इति कृत्वा देहेषु परस्परं भिन्नेष्वपि नात्मा भिद्यत इति प्रत्यस्तमितभेदमित्युच्यते आत्मस्वरूपमिति, **मैवम्**---आत्माभेदानभ्युपगमात्तव। देहानामात्मभेदकत्वाभावे आत्मभेदकाभावेनात्मभेदसिद्धेश्च। न चात्मानः परस्परं भिन्नास्सुखदुःखादिवैचित्र्योपलम्भादिति वाच्यं, सुखदुःखादिवैचित्र्यस्यान्तकरणाख्यसूक्ष्मदेहगतत्वेनात्मभेदकत्वाभावात्। नचाकारभेद आत्मभेदक इति वाच्यं, ज्ञानैकाकारत्वादात्मनः। अत एव नात्मपरमात्मभेदोपि।

**ननु** यथा प्रकाशैकाकारा अपि प्रदीपाः परस्परं भिन्नास्तथा ज्ञानैकाकारा अप्यात्मानः परस्परं भिन्ना इति, **मैवम्**—वर्त्यादिभेदप्रयुक्त एव प्रदीपभेदो नतु प्रकाशभेदप्रयुक्त इति। नच ज्ञानानि स्वत एव भिन्नानीति वाच्यं, जन्यज्ञानान्येव वृत्तिलक्षणानि भिन्नानि, न त्वजन्यं नित्यं ज्ञानमिति। नच नास्ति नित्यमजन्यं ज्ञानमिति वाच्यं, आत्मनो ज्ञानस्वरूपस्य नित्यत्वाभ्युपगमाज्जीवस्य धर्मभूतं ज्ञानं नित्यमिति तव मताच्च। नच नित्यमपि ज्ञानं नैकमिति वाच्यं, नित्यस्य ज्ञानस्य भेद्यत्वायोगेन नानात्वायोगात्। नहि देशतः कालतो वस्तुतश्च भिन्नं वस्तु नित्यं भवितुमर्हति- अनन्तस्यैव नित्यत्वात्, त्रिविधपरिच्छेदरहितस्यैवानन्तत्वाच्च; तस्मान्निर्भेदमेव ज्ञानं तदेवात्मेति **सिद्धमद्वैतम्**। **ननु** ज्ञानमपि ज्ञेयाज्जडाद्भिन्नमेवेति कृत्वा कथं तस्य वस्त्वपरिच्छेद इति, **मैवम्**—मरीचिकोदकेन भूमेः पंकिलत्वमिव, ज्ञेयेन ज्ञानस्य नास्ति परिच्छिन्नत्वमिति। नच ज्ञेयं सत्यमेवेति वाच्यं, 'ज्ञानं यथा सत्यमसत्यमन्य'दिति विष्णुपुराणवचनादेव ज्ञेयस्यासत्यत्वावगमात्। नच सतो ज्ञेयस्य कथमसत्यत्वमिति वाच्यं, असत्त्वादेव ज्ञेयस्य। सत्त्वं तु भ्रान्तिप्रयुक्तमेव। तत्र च विष्णुपुराणवचनमेव मानम्- 'तस्मान्न विज्ञानमृतेस्ति किंचित्क्वचित्कदाचिद्द्विज वस्तुजात'मिति अस्य चान्यार्थवचनमप्रामाणिकमेव। तस्मात्- यद्यात्मा ज्ञानाकारः यदि च नित्योऽनन्तः तर्हि निर्विशेषमेवात्मस्वरूपम्- तदेव प्रत्यस्तमितभेदं यदित्युच्यत इति—**स्थितम्**॥

## 'ज्ञानस्वरूपमखिलम्' इत्यादिश्लोकस्यापि प्रपञ्चमिथ्यात्वपरत्वप्रतिपादनम् ।

**अथ** 'ज्ञानस्वरूपमखिलं जगदेकत्वबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसम्प्लवे' इति श्लोकस्य ज्ञानस्वरूपस्यात्मनो देवमनुष्याद्यर्थाकारेणावभासो भ्रान्तिरित्येतावन्मात्रमर्थ इति **यत्तदसत्**— ज्ञानस्वरूपमात्मानमिति श्लोके अनुक्तत्वात् । नच जगच्छब्दस्य आत्मेत्यर्थ इति वाच्यं, जगतो नात्मत्वात् । नच चिदचिदात्मकं जगत्तत्र चिज्जगदात्मैवेति वाच्यं, अखिलं जगदित्यनेन चिदचिदुभयात्मकस्यैव जगत उक्तत्वात्, जगतश्चित्यध्यस्तत्वेनैव चिदात्मकत्वं; स्वतस्तु अचिद्रूपत्वमेवेति सिद्धान्ताच्च । नच चेतनाचेतनात्मकं जगत्, तत्र चेतन आत्मेति वाच्यं, जगदन्तर्गतचेतनपदस्य प्राण्यर्थकत्वेन आत्मार्थकत्वाभावात् । नच प्राण्येवात्मेति वाच्यं, 'अप्राणो ह्यमनाश्शुभ्र' इति श्रुतेः । तस्मादिहाखिलं जगदात्मभिन्नं सर्वमनात्मवस्त्वेवेति नास्य श्लोकस्य त्वदुक्तार्थपरत्वं सम्भावयितुं शक्यम् ।

**ननु** ज्ञानस्वरूपे परब्रह्मणि जगदध्यस्तमविद्ययेत्यतो मिथ्येति यदुच्यते त्वया तदयुक्तम्— निर्दोषे ब्रह्मण्यविद्याख्यदोषायोगात्- विहितस्य च जगतो परमार्थत्वायोगादिति, **मैवम्**—कौशिकेनातपे तम इव ब्रह्मण्यज्ञेनाविद्यास्तीति कल्पितमिति कृत्वा वस्तुतो ब्रह्मण्यविद्याऽभावान्न काचिदनुपपत्तिः । एवं ब्रह्मणोऽविद्याभावादेव ब्रह्म भ्रान्तमिति नोक्तं, किंतु भ्राम्यन्ते जन्तव इत्युक्तम् । नच ब्रह्मैव जीव इति कृत्वा जन्तवो भ्रान्ता इत्युक्तेपि ब्रह्मैव भ्रान्तमिति सिद्धमिति वाच्यं, अभ्रान्तस्य ब्रह्मविद एव जीवस्य ब्रह्मत्वमुच्यते- 'ब्रह्मविद्ब्रह्मैव भव'तीति नतु भ्रान्तजीवस्येति । नच भ्रान्तोपि जीवो वस्तुतो ब्रह्मैवेति वाच्यं, तथासति भ्रान्तस्यापि जीवस्य वस्तुतो भ्रान्तिरेव नास्तीति- तस्मादब्रह्मविद एवाविद्यायोगो नतु ब्रह्मविदो, नापि ब्रह्मण इति निर्दोषमेव ब्रह्म । **यदुक्तं** विहितत्वात्परमार्थभूतमेव जगदिति **तदयुक्तम्**— प्रत्यक्षस्य जगतो विध्ययोगात् । नच जगतः प्रत्यक्षत्वेपि तस्य भगवद्विभूतित्वं प्रत्यक्षं नेति कृत्वा जगतो भगवद्विभूतित्वस्य विहितत्वान्नापरमार्थतेति वाच्यं, जगदपरमार्थ इत्यस्माभिरुच्यते, नतु जगतो भगवद्विभूतित्वमपरमार्थ इति- भगवान्हि मायया जगद्रूपेण विविधो भवतीत्यस्माभिरुच्यते । अयं चार्थो वक्तव्य एव शास्त्रेण गुरुणा वा स्वतो ज्ञातुमशक्यत्वादतोस्य कथनमावश्यकमेव- नैवं कथनमात्राज्जगतः पारमार्थ्यसिद्धिः, किंतु मिथ्यात्वसिद्धिरेव- कथं पुनर्मिथ्यात्वं जगतः प्रत्यक्षस्येत्यत उक्तं श्रुत्या यतो वेत्यादिना ब्रह्मणो जगत्कारणत्वं; लोके कारणं सत्यं कार्यं हि मिथ्येति स्थितम्-- मृत्सत्या घटो मिथ्येति दर्शनात् ।

**एवं** विष्णुपुराणेपि जगद्ब्रह्मणो विभूतिरिति वर्णनेन जगन्मिथ्यात्वमेव प्रतिपादितम् । अत **एव** यन्मयं जगदिति प्रश्नस्य जगच्च स इत्युत्तरं दत्तमित्युक्तं- मायया ब्रह्मैव जगद्रूपेण भातीति कृत्वा वस्तुतो जगद्ब्रह्मैवेति प्रतिवचनार्थः- यथा रजतं शुक्तिरेवेति ।

## 'सोह'मित्यदिविष्णुपुराणवचनानां जगन्मिथ्यात्वपरत्वोपपत्तिः ।

**ननु** जगद्ब्रह्मणोस्सामानाधिकरण्येनैक्यप्रतिपादनं बाधासहमविरुद्धं च, तथाहि- 'सोहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत् । बभूव भूयश्च यथा महाभाग भविष्यति ॥ यन्मयं च जगद्ब्रह्मन् यतश्चैत-

च्चराचरम् । लीनमासीद्यथा यत्र लयमेष्यति यत्र चे'त्यादिना, अत्र ब्रह्मस्वरूपविशेषतद्विभूतिभेदप्रकार-तदाराधनस्वरूपफलविशेषाश्च पृष्टाः- ब्रह्मस्वरूपविशेषप्रश्नेषु यतश्चैतच्चराचरमिति निमित्तोपादानयोः पृष्टत्वाद्यन्मयमित्यनेन सृष्टिस्थितिलयकर्मभूतं जगत्किमात्मकमिति पृष्टं, तस्य चोत्तरं जगच्च स इति । इदं च तादात्म्यमन्तर्यामिरूपेणात्मतया व्याप्तिकृतं, नतु व्याप्यव्यापकयोर्वस्त्वैक्यकृतम्- यन्मयमिति प्रश्नस्योत्तरत्वाज्जगच्च स इति सामानाधिकरण्यस्य । यन्मयमिति मयडत्र न विकारार्थः- पृथक्प्रश्नवैयर्थ्यात्, नापि प्राणमयादिवत्स्वार्थिकः- जगच्च स इत्युत्तरानुपपत्तेः- तदा हि विष्णुरेवेत्युत्तरमभविष्यत्, अतः प्राचुर्यार्थ एव- तत्प्रकृतवचने मयडिति मयट् कृत्स्नं च तच्छरीरतया तत्प्रचुरमेव तस्माद्यन्मयमित्यस्य प्रतिवचनं जगच्च स इति सामानाधिकरण्यं जगद्ब्रह्मणोश्शरीरात्मभावनिबन्धनमिति निश्चीयत इति, **मैवम्**—यन्मयमिति स्वार्थिक एव मयट्; यद्रूपमित्यर्थः । अतएव जगच्च स इत्युत्तरं; स एव जगदित्यर्थः । चकार एवार्थकः- विष्णुस्वरूपं जगदिति फलितार्थः । तथा च विष्णुरेवेत्युत्तरस्योक्तत्वाद्यन्मयमित्यत्र स्वार्थिक एव मयट् । यद्वा यन्मयमिति विकारार्थे मयट्- यद्विकारभूतं जगदित्यर्थः । अतएव जगच्च स इत्युत्तरं- विष्णुमयमेव जगदिति तदर्थः- यथा घटो मृदेवेत्युक्ते मृण्मयो घट इति सिद्ध्यत्यर्थस्तद्वत् । अतएव 'सर्वं विष्णुमयं जग'दिति स्मृत्यन्तरसंवादः । अत्रापि पक्षे विष्णुविकारत्वादिदं जगद्विष्णुरूपमेव- यथा मृद्विकारत्वाद्घटो मृद्रूप एव तद्वदिति पूर्वोक्त एव भावस्सिद्ध्यति । नच निमित्तोपादानयोः पृष्टत्वात्पृथक्प्रश्नवैयर्थ्यमिति वाच्यं, यतो बभूव भविष्यतीत्यनेन पृष्टस्यैवार्थस्य यतो लीनमासील्लयमेष्यति चेति पुनः पृष्टत्वात्- यद्यस्माज्जायते तत्तस्मिन्नेव हि लीयते, यथा मृदो जातो घटो मृदि लीनस्तद्वदिति । नच यदेव यस्य जन्मकारणं तदेव तस्य लयकारणमिति व्याप्तिमविदुषोयं प्रश्नो न व्यर्थ इति वाच्यं, तथासति यस्य यदुपादानं तस्य तदेव स्वरूपमिति व्याप्तिविदुषोयं प्रश्न इति तुल्यत्वात्समाधानस्य । किंच जगतो विष्णुरुपादानमेव घटस्य मृदिव नतु कुलालवन्निमित्तमिति यद्युच्यते, तर्हि विष्णुस्वरूपं जगदिति सुज्ञेयमेव, नतु तथोच्यते- किंतु जगतो विष्णुरभिन्ननिमित्तोपादानमित्युच्यते- अतोयं प्रश्नस्सार्थक एव- कार्ये निमित्ताभिन्नोपादानस्वरूपमित्यस्यार्थस्याविदितत्वादिति । सर्वदापि जगज्जन्मस्थितिलयकारणं किमित्येकः प्रश्नः, जगतस्स्वरूपं किमित्यन्यः प्रश्नः, अतएव प्रश्नानुरूपमुत्तरं जगच्च स इति । जगतः स्वरूपं विष्णुरेवेत्युत्तरार्थः । इदं चोत्तरं जगन्मिथ्यात्वे पर्यवसितं- कार्यस्य कारणमेव स्वरूपं, घटस्य मृदिवेति कृत्वा कारणातिरिक्तकार्याभावात् । अतएव 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मिति कार्यमिथ्यात्वं कारणसत्यत्वं च श्रुतमिति । अथवा बभूव भविष्यति लीनमासील्लयमेष्यतीति च प्रश्नवशादिदं जगत्सृष्टेः प्राक्किं रूपं, लयात्पश्चाच्च किं रूपमिति सिद्धम् । स्थितिकालेपि तस्य स्वरूपं ज्ञातुं पृष्टं यन्मयं जगदिति । अत एव प्रश्नस्यानुरूपमुत्तरं जगच्च स इति- स्थितिकाले हि जगद्भवति-- यथा घटस्स्वकालेपि मृद्रूप एवं जगदपि स्वकालेपि विष्णुरूप एव- तथा च जगतः कालत्रयेपि विष्णुस्वरूपत्वान्मिथ्यात्वमेवेति **सिद्धम्** ।

**यदुक्तं** यन्मयमिति प्राचुर्यार्थे मयडिति **तदसत्**—यज्ञे अन्नस्य प्राचुर्येण सत्त्वादन्नमयो यज्ञ

इति प्राचुर्यार्थे मयड्भवति- जगति विष्णुस्तु न प्राचुर्येणास्तीति कथमत्र प्राचुर्यार्थे मयड्भवेत् । नच जगति विष्णुरपि प्राचुर्येणास्तीति वाच्यं, तर्हि जगति किं पुनरप्राचुर्येणास्ति- न ह्यन्यस्याप्राचुर्येण सत्त्वं विना एकस्य प्राचुर्येण सत्त्वं सम्भवति । यज्ञेपि अन्नभिन्नवस्तूनामप्राचुर्येण सत्त्वादेवान्नस्य प्राचुर्येण सत्त्वमभिप्रेत्य अन्नमयो यज्ञ इत्युच्यते । नच जगति विष्णोरन्यश्चेतनो जीवोस्तीति वाच्यं, तस्यापि जगदन्तःपातित्वात्- चेतनाचेतनात्मकं हि जगत् । नच प्रकृतिरस्तीति वाच्यं, तस्या अप्यचेतनत्वेन जगत्त्वात् । नच कालोस्तीति वाच्यं, तस्यापि जगत्त्वात्- चिदचिदीश्वराख्यो हि त्रीणि तत्त्वानि, तत्र चिदचित्पदार्थद्वयं जगदित्युच्यते, ईश्वरस्तु सर्वं जगद्व्याप्य तिष्ठत्येवेति न जगतीश्वरादन्यस्य कस्यचिदप्राचुर्येण सत्त्वमिति कथमीश्वरो जगति प्राचुर्येणास्तीति वक्तुं शक्यते । किंच यदीश्वरो जगति प्राचुर्येण स्यात्तर्हि कचित्कदाचिन्न स्यादेवेति भवेदीश्वरस्य सर्वव्यापकत्वाभावः- तच्चानिष्टम्-- 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इति श्रुतेः । यद्येवं प्राचुर्ये मयट् प्रश्ने स्यात्, तर्हि उत्तरमपि जगत्तत्प्रचुरमिति तन्मयमिति वा अभविष्यत्- नतु स इति- नहि तत्प्रचुरं वस्तु तदेव भवति-- नहि अन्नप्रचुरो यज्ञो अन्नमेव भवति- तद्रूपं तद्विकारभूतं वा वस्तु पुनस्तदेव भवति । नच अन्तर्यामिणा विष्णुना व्याप्तं जगद्विष्णुरेवेत्युच्यत इति वाच्यं, तर्हि जीवेन व्याप्तं शरीरमपि जीव एवेत्युच्यताम् । नचेष्टापत्तिः- बौद्ध एव भवान्भवेत् । तथा शरीरशरीरिणोर्जगद्विष्णोरैक्योपदेशोपि भ्रममूल एव भवेत्- अहं मनुष्य इतिवत्- किंच यद्यस्य शरीरं तत्तत्प्रचुरमिति व्याप्तिरपि लोके नास्ति, किंतु स्वकपोलकल्पितैवेत्यप्रामाणिक्येव । अपि च- कार्यकारणभावनिबन्धनं सामानाधिकरण्यं लोके दृश्यते, नतु शरीरात्मभावनिबन्धनमिति कथमप्रसिद्धस्याभ्युपगमः । नचाहं मनुष्य इति तदपि दृश्यत इति वाच्यं, तस्य भ्रान्तिभूतत्वात्, आत्मानात्मतादात्म्याध्यासप्रयुक्तो हि सः, शरीरात्मभावेऽभिप्रेते तु मम शरीरमित्येव प्रत्येति लोकः, शरीरे हि शरीरिणोऽहन्ताममते भवतः । तत्रातिमूढस्याहन्ता, किंचिन्मूढस्य तु ममतेति विवेकः । यद्येवं देहदेहिनोश्शरीरात्मभावनिबन्धनं सामानाधिकरण्यं प्रमाभूतं सम्भवेत्तर्हि गेहगेहिनोरपि स्वस्वामिभावादिनिबन्धनं सामानाधिकरण्यमपि सम्भवेदेव- गेहमयो गेहीति गेहिमयं गेहमिति वा । अपिच- यद्येवं शरीरात्मभावनिबन्धनं सामानाधिकरण्यमभ्रमभूतं सम्भवेत्तर्हि जगतो विष्ण्वभेद इव विष्णोर्जगदभेदश्च भवेत्, तच्चानिष्टं- विष्णोर्जडदुःखस्वरूपत्वप्रसङ्गात् । किंच कार्यकारणयोरभेदात्कार्यकारणाभावनिबन्धनं सामानाधिकरण्यं घटो मृत्तिकेत्यत्रेव जगच्च स इत्यत्रापि भवितुमर्हति- शरीरशरीरिणोस्तु भेदात्कथं शरीरशरीरिभावनिबन्धनं सामानाधिकरण्यं भवेत् । प्रत्युत वैयधिकरण्यमेव भवेत् । शरीरशरीरिणोरभेदप्रतीतिस्तु भ्रान्तिरिति सर्वास्तिकजनसम्मता । तद्भ्रान्तिप्रयुक्त एवायं संसार इति मुमुक्षुणा शरीरविलक्षणं शरीरिस्वरूपमेव ज्ञातव्यं, तद्भ्रान्त्यपगमायेति कृत्वा अनर्थकर एव भवेदयं शरीरशरीरिणोरभेदोपदेशः । नच जीवदेहयोरभेदोपदेशोऽनर्थकरो व्यर्थो भवतु नाम, जगदीश्वरयोरभेदोपदेशो न तथेति वाच्यं, शरीरविलक्षणात्मज्ञानमिव जगद्विलक्षणविष्णुज्ञानमेव परमपदप्रापकमिति । नच जगद्विष्णोश्शरीरमित्युक्ते जगद्विलक्षण एव विष्णुरिति सिद्ध्यतीति वाच्यं,

तर्हि वैलक्षण्यार्थं जगच्च स इति सामानाधिकरण्यं मैवोपदिश्यतां, विष्णुशरीरत्वाज्जगद्विष्णुरिति सामानाधिकरण्योपदेशस्य निष्फलत्वात्, भ्रान्तिप्रयुक्तत्वाच्चेति । नच जगद्विष्णुरिति ज्ञानादसकृदावर्तितान्मुक्तिर्भवेदिति वाच्यं, विष्णुशरीरे अनात्मनि विष्णुरात्मेति बुद्धेरप्रमात्वेन मुक्त्यप्रयोजकत्वात्, नह्यतत्त्वज्ञानान्मुक्तिर्भवेत् । यद्यपि सर्वं जगद्विष्णोश्शरीरमिति ज्ञानं प्रमा, तथापि सर्वं जगद्विष्णुरिति ज्ञानं तु भ्रम एव- अतस्मिंस्तद्बुद्धित्वात् । नच अन्नं ब्रह्मेत्युपासनाद्ब्रह्मप्राप्तिरिव, जगद्विष्णुरित्युपासनाद्विष्णुप्राप्तिर्भवतीति सफल एवायमुपदेश इति वाच्यं, तत्त्वज्ञानप्रकरणत्वादस्य- तत्त्वं ज्ञातुं हि पप्रच्छायं 'यन्मयं जग'दिति, तदेव तत्त्वं बोधयितुं प्रत्युवाच- 'जगच्च स' इति, नह्येतदुपासनाप्रकरणं- तत्त्वं च जगतो विष्णुशरीरत्वमेव, नतु विष्णुत्वमिति कृत्वा कथमुक्तं जगच्च स इति । नच जगच्च स इत्यस्य जगत्तस्य शरीरमित्यर्थ इति वाच्यं, बालानामपि परिहासपात्रत्वात्तद्वचनस्य । तस्मात्- जगच्च स इति सामानाधिकरण्यं कार्यकारणभावप्रयुक्तं, व्याप्यव्यापकयोर्वस्त्वैक्यकृतमेव, नतु शरीरात्मभावनिबन्धनमिति निश्चीयते ।

अथ यदुक्तं निर्विशेषवस्तुप्रतिपादनपरे शास्त्रेऽभ्युपगम्यमाने सर्वाण्येतानि प्रश्नप्रतिवचनानि न सङ्गच्छन्ते- तद्विवरणरूपं कृत्स्नं च शास्त्रं न सङ्गच्छते- तथाहि- सति प्रपञ्चभ्रमस्य किमधिष्ठानमित्येवंरूपस्यैकस्य प्रश्नस्य निर्विशेषज्ञानमात्रमित्येवंरूपमेकमेवोत्तरं स्यात् जगद्ब्रह्मणोरेकद्रव्यत्वपरे च सामानाधिकरण्ये सत्यसङ्कल्पत्वादिकल्याणगुणैकतानता निखिलहेयप्रत्यनीकता च बाध्येत- सर्वाशुभास्पदं च ब्रह्म भवेदिति, तदप्ययुक्तम्—'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपंच्यते' इति न्यायान्निर्विशेषवस्तुप्रतिपादनपरमपि शास्त्रं तावत्सविशेषवस्तुप्रतिपादकमेव भवति- प्रष्टुर्भ्रममात्रमिदं जगदिति ज्ञानाभावात्प्रपञ्चभ्रमस्य किमधिष्ठानमिति प्रश्नस्यानुदयः- यथाप्रश्नमुत्तरस्य वक्तव्यत्वान्नैकमेवोत्तरं- जगतो ब्रह्म विवर्तोपादानमिति वदतामस्माकं मते न जगद्ब्रह्मणोरेकद्रव्यत्वप्रसङ्गः, किंतु जगतो ब्रह्म परिणाम्युपादानमिति वदतो भवतो मत एव जगद्ब्रह्मणोरेकद्रव्यत्वप्रसङ्ग इति त्वद्दर्शितदोषास्त्वामेव बाधन्ते- यथा स्वकरगतदण्डः स्वनेत्रम् । प्रपञ्चितश्चायमर्थः प्रागेवेतीहोपरम्यते । तस्मात्कनकं कटकमकुटाद्यात्मनेव हरिरखिलजगदात्मना परिणत इति स्वपूर्ववादस्य जगद्ब्रह्मणोर्नैकद्रव्यत्वमित्याधुनिकवादस्य च व्याघाताद्दुष्टं रामानुजश्रीभाष्यम् ।

एवमत्यन्तदुष्टत्वादेवास्य श्रीभाष्यमिति व्यवहारः-- श्रीर्हि विषं; श्रीकण्ठ इत्यादिप्रयोगदर्शनात् । विषस्य दुष्टत्वं मोहतापमरणादिप्रदत्वेन प्रसिद्धमेव । प्रकृतभाष्यस्य च तथैव मोहतापादिप्रदत्वेन दुष्टत्वमिति कृत्वा श्रीरिव भाष्यं श्रीभाष्यमिति समासः । यद्वा श्रीप्रदं विषप्रदं भाष्यं श्रीभाष्यं- नेदममृतप्रदं; भिन्नात्मज्ञानस्यामृतप्रदत्वात्किं तु विषप्रदमेव- संसारहेतुत्वात्संसारस्य च तापत्रयहेतुत्वेन विषत्वादिति । तस्मात्प्रकृतप्रश्नप्रतिवचनवशादेव निर्विशेषवस्तुसिद्धिः । कथम् ? उच्यते—इदं जगद्विष्णोरुपादानान्निमित्ताच्च जातं विष्णावेव लीनं स्वयं च विष्णुरेवेति हि सिद्धः प्रश्नप्रतिवचनार्थः । यदि विष्णुर्ज्ञानानन्दादिभिः कैश्चिद्विशेषैर्विशिष्टस्तर्हि जडत्वादितद्विपरीतविशेषविशिष्टजगत्सामानाधिकरण्यं

तस्य न स्यादिति निर्विशेषब्रह्मैव विष्णुः । मायया तु तस्य सविशेषजगद्रूपत्वमिति तदाशयः । नच विष्णुरेव जगदिति नोक्तं, किंतु विणुप्रचुरं जगदित्युक्तमिति वाच्यं, जगच्च स इत्युक्तत्वात् । नच यन्मयमिति प्रश्नानुरोधादुत्तरस्य तस्य मदुक्तार्थ इति वाच्यं, प्रश्नस्याप्यन्यार्थकत्वात् । कोसावन्यार्थः ? उक्त एव यद्रूपमित्यर्थ इति- स्वार्थिको हि मयट् । नच तर्हि मयटो वैयर्थ्यमिति वाच्यं, वायसराक्षसादिवद्व्यर्थस्याप्यत्यन्तस्वार्थिकस्य प्रत्ययस्याभ्युपगमात् । एवं यन्मयमित्यस्य य एवेत्यर्थस्याभ्युपगमे सति 'यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वय'मिति भागवतमप्यनुसृतं भवति । नच जगद्रूपस्य ज्ञातत्वाद्यद्रूपं जगदिति प्रश्नो व्यर्थ इति वाच्यं, नामरूपयोरेव जगच्छब्दार्थत्वात्तयोश्च ब्रह्मणि कल्पितत्वात्कल्पितस्य चाधिष्ठानातिरिक्तस्वरूपाभावाज्जगदधिष्ठानब्रह्मस्वरूपस्याज्ञातत्वाज्जगतस्स्वरूपमज्ञातमेवेति न प्रश्नस्य वैयर्थ्यम्-- नहि नीलपीतादिकं जगतस्स्वरूपं, येन ज्ञातत्वात्तस्य प्रश्नो व्यर्थस्स्यादिति । किंतु नीलपीतादिरूपादन्यदेव जगतस्स्वरूपम् । नात्र रूपशब्दो नीलपीतादिरूपवाची, किंतु स्वरूपवाची । अतएव स्वार्थिकमयिट्प्रयोगः । स्वमेव हि स्वरूपं नीलपीतादिरूपं तु न स्वं, किंतु स्वकीयम् । जगतः कार्यत्वेन तत्स्वरूपं तु कारणमेव-- यथा घटस्य मृत्तिका- तस्मादज्ञातजगत्स्वरूपज्ञानार्थं यन्मयमिति प्रश्नस्सफल एव- यत्स्वरूपमिति तदर्थात् । अतएव तदनुरूपमुत्तरं जगच्च स इति । विष्णुस्वरूपमेव जगदिति तदर्थः । यदि मयटोऽर्थवत्त्वसम्पादनाय प्राचुर्ये मयडाश्रीयते, तर्हि प्राचुर्यस्येहासङ्गतत्वान्मूलस्यैवाप्रामाण्यं भवेत् । तस्मात् यन्मयमिति स्वार्थिक एव मयट् ।

**यदुक्तं** सुदर्शनेन---शुक्लगुणस्याश्रयः क इति प्रश्नस्य शुक्लः पट ,इत्युत्तरवद्यन्मयमिति प्रश्नस्य जगच्च स इत्युत्तरमिति, **तदसत्**---गुणगुणिनोरिव शरीरशरीरिणोर्जगद्ब्रह्मणोस्तादात्म्यायोगात् । अन्यथा यदि शरीरशरीरिणोस्तादात्म्यं, तर्हि गुणगुणिनोरिव शरीरशरीरिणोर्वियोग एव माभूत् । नहि गुणवद्द्रव्यं विहायान्यत्र गुणो वर्तते- शरीरिणं विहाय तु शरीरं वर्तत एव- निर्जीवशरीरोपलम्भात् । एवं शरीरशरीरिणोस्तादात्म्यायोगादेवाहंमनुष्य इति तादात्म्यमध्यास इत्युच्यते । तस्माज्जगच्च स इत्यस्य जगदन्तर्यामी स इत्सर्थवर्णनमयुक्तमेव- नहि जगदन्तर्यामी जगदभिन्नो भवितुमर्हति, येन जगच्च स इत्युच्येत- नहि सम्भवति सामानाधिकरण्ये वैयधिकरण्याश्रयणं न्याय्यम् । नच जगद्ब्रह्मणोस्सामानाधिकरण्यं दुर्लभमिति वाच्यं, यद्रजतं सा शुक्तिरिति रजतशुक्तिकयोरिव यज्जगत्तद्ब्रह्मेति जगद्ब्रह्मणोस्सामानाधिकरण्यसम्भवात् । नचैवमपि जगदधिष्ठानमेव ब्रह्म नतु जगद्ब्रह्म- यथा रजताधिष्ठानमेव ब्रह्म, नतु रजतं तद्वत् , तथाच न जगद्ब्रह्मणोस्सामानाधिकरण्यमिति वाच्यं, कल्पितस्याधिष्ठानानतिरेकित्वेन जगतो ब्रह्मानतिरिक्तत्वादिति । नचैवं ब्रह्माभिन्नं जगत्कथं मिथ्येति वाच्यं, जगज्जगत्त्वेन मिथ्या ब्रह्मत्वेन तु सत्यमेवेति । शुक्तिकायां प्रतीतं रजतमपि रजतत्वेनैव मिथ्या, शुक्तित्वेन तु सत्यमेवेति । नच सर्पस्य वल्मीकस्थस्य सर्पत्वेनैव जगतो जगत्त्वेन सत्यत्वमेव- नतु मिथ्यात्वमिति वाच्यं, तस्यापि सर्पस्य ब्रह्मत्वेनैव सत्यत्वमस्मदिष्टमिति । नच वल्मीकसर्परज्जुसर्पयोरविशेष इति वाच्यं, व्यवहारार्थं कल्पितविशेषस्य सत्त्वादिति । नच यदि जगज्जगत्त्वेन मिथ्या तर्हि ब्रह्मापि ब्रह्मत्वेन मिथ्यैवेति वाच्यं,

ब्रह्मणः कुत्रचिदकल्पितत्वेन सत्यत्वादिति । नच तदपि कल्पितमेवेति वाच्यं, अनवस्थादोषात् । निरधिष्ठानविभ्रान्त्ययोगेन कस्यचित्सत्यस्याधिष्ठानस्य वक्तव्यत्वाच्च । नचैवं सत्यासत्ययोर्ब्रह्मजगतोस्सामानाधिकरण्यमयुक्तमिति वाच्यं, मृद्घट इति दर्शनात् । नच घटोपि सत्य एवेति वाच्यं, श्रुत्यैव तदसत्यत्वस्योक्तत्वात् । सर्वत्रापि सत्यासत्ययोरेव सामानाधिकरण्यं, नतु सत्ययोरिति- नहि मृत्तन्तुकनकादीनां सत्यानां सामानाधिकरण्यमस्ति मृत्तन्तुर्मृत्कनकं तन्तुः कनकमिति । तस्माज्जगच्च स इति सामानाधिकरण्यं मुख्यमेव; नतु शरीरशरीरिभावनिबन्धनं गौणमप्रामाणिकं वैयधिकरण्यपर्यवसायीति—**संक्षेपः** ।

**स्वेनैव** रूपेणावस्थितं नतु प्रकृत्यादिविशिष्टमित्यर्थ इति **यत्तदसत्**—तव मते प्रकृत्याद्यविशिष्टस्यैवाभावात् । प्रपञ्चदशायां प्रलयदशायां मुक्तिदशायां च चिदचिदीश्वरत्रयस्य सत्त्वात्तदापीश्वरश्चिदचिद्विशिष्ट एवेति । अत एव हि विशिष्टयोरद्वैतं विशिष्टाद्वैतं; सूक्ष्मचिदचिद्विशिष्टस्य स्थूलचिदचिद्विशिष्टस्य चेश्वरस्यैक्यमिति तदर्थः । यद्वा शरीरशरीरिभावविशिष्टमद्वैतं विशिष्टाद्वैतमिति । तथा च शरीरिण ईश्वरस्य सर्वदापि शरीरवैशिष्ट्यमस्त्यैवेति कथमविशिष्टेश्वरसिद्धिस्तव मते? यदि तु प्रकृत्याद्यविशिष्टः परिशुद्ध ईश्वरोस्ति, तर्हि सोऽद्वैत एव । किंच किमेक एवेश्वरः प्रकृत्याद्यविशिष्टस्तद्विशिष्टश्च भवति? यद्वा द्वावीश्वरौ? आद्ये- किं कालभेदादुत युगपत्? न द्वितीयः- व्याघातात् । नाद्यः- अस्मिन् काले ईश्वरः प्रकृत्यादिविशिष्टः, पुनरस्मिन् काले नेति वक्तुं तवाशक्यत्वात् । यदि त्वविद्यादशायां विशिष्टः विद्यादशायां पुनरविशिष्ट इत्युच्यते, तर्ह्यस्मन्मतप्रवेशस्ते स्वमतप्रच्युतिश्च । न द्वावीश्वराविति विकल्पस्समीचीनः- ईश्वरत्वस्यानेकनिष्ठत्वायोगात्, अनेकेश्वरसत्त्वे सृष्ट्यादिनियमायोगाच्च । एक एवेश्वरो नारायण इति तवाप्यभ्युपगमाच्च । तस्माद्यदि प्रकृत्याद्यविशिष्टः स्वरूपेण स्थित ईश्वरस्तर्हि सिद्धमेवाद्वैतं- वैशिष्ट्यस्य मिथ्यात्वादिति । **ननु** प्रकृत्यादयस्सर्वदापि सन्त्येवेति नाद्वैतसिद्धिः, किंतु सद्भिरपि प्रकृत्यादिभिरीश्वरः कदाचिदविशिष्टस्सन् स्वरूपेण स्थितो भवतीति, **मैवम्**—यदीश्वरः कदाचित्स्वरूपेण स्थितः, कदाचित्पुनः पररूपेण स्थितस्तर्हि विकार्येव भवेत्- विकारिणश्चानित्यत्वं प्रसिद्धम् । नित्यस्त्वीश्वरः । किंच रज्जोस्सर्परूपेण स्थितेर्भ्रान्तिमूलत्वाद्वस्तुनः पररूपेण स्थितिर्मिथ्यैव । तथाच ईश्वरस्य पररूपेण स्थितिर्मिथ्यैवेति सर्वदापि स्वरूपेणैव स्थित ईश्वरः । तच्चेश्वरस्य स्वरूपं प्रकृत्याद्यविशिष्टमिति त्वयैवोक्तमिति कथं विशिष्टेश्वरस्य सत्यस्य सिद्धिः । अपि च 'असङ्गो नहि सज्यत' इति श्रुतेः कथमसङ्गस्येश्वरस्य प्रकृत्यादिवैशिष्ट्यं सम्भवेत्, कथं वा ईश्वरवियुक्तानां प्रकृत्यादीनां सिद्धिः, ईश्वरस्यापृथक्सिद्धविशेषणभूता हि प्रकृतिपुरुषकालादयः । यदीश्वरः प्रकृत्याद्यविशिष्टस्तर्हि प्रकृत्यादय ईश्वरस्यापृथक्सिद्धविशेषणं नैव भवेयुः । तस्माद्व्याहतमेवेदं परस्य वचनमिति ॥

## 'अविकाराय शुद्धाय' इत्यादिश्लोकस्यापि निर्विशेषब्रह्मपरत्वोपपत्तिः ।

**अथ** 'अविकाराय शुद्धाय नित्याय परमात्मने । सदैकरूपरूपाय विष्णवे सर्वजिष्णवे' इति श्लोकस्यार्थो विचार्यते— तथाहि- स्वयं कस्य चित्कार्यं न भवतीत्यविकार इति **यत्तदसत्**—**स्वयं**

कस्यचित्कारणमपि न भवत्येव परमात्मेति कथं कार्यमेव न भवतीत्युच्यते- 'न तस्य कार्यं करणं च विद्यत' इति हि श्रुतम् । नच यतो वेति श्रुतेर्जगत्तस्य कार्यमेवेति वाच्यं, किमव्यक्तं जगत्परमात्मनः कार्यमित्युच्यते ? यद्वा व्यक्तम् ? नाद्यः- तस्याकार्यत्वादव्यक्तं प्रधानप्रकृत्यादिपदवाच्यं ह्यजं 'मूल प्रकृतिरविकृति'रिति वचनात् । न द्वितीयः- व्यक्तस्य महदहङ्कारादिलक्षणस्याव्यक्तकार्यत्वेन परमात्मा-कार्यत्वात् । त्वयाप्युक्तमविकारायेति कार्यकारणरूपोभयावस्थाविद्याव्यावृत्तिरिति । नच न विद्यते विकारः कार्यं यस्य सोऽविकार इति बहुव्रीहिसमासस्याप्याश्रयणात्परमात्मा कस्यचित्कारणमपि न भवती त्युच्यत इति वाच्यं, यद्येवं परमात्मा कस्यचित्कारणं च न भवति, अत एव कार्यकारणोभयावस्था--विद्यावृत्तं च भवति, तर्हि 'एकमेवाद्वितीयं ब्रह्मे'ति वाक्यव्याख्यानसमये त्वयैव एकमेवेत्यविभक्तनामरूपं कारणावस्थं ब्रह्मोच्यत इति पूर्वमुक्तं कथम् ? कथं वा रामानुजेनापि सच्छब्दवाच्यस्य ब्रह्मणो जगदुपा-दानत्वं जगन्निमित्तत्वं चेत्युक्तम् ? तथा बहुस्यामिति सङ्कल्प्य परमात्मैव जगदभूदिति कृत्वा कार्यावस्थ-मपि ब्रह्मैवेति कथं प्रागुक्तं त्वयैव ? नच चिदचिद्विशिष्टं ब्रह्मैव कार्यकारणोभयावस्थं, नतु शुद्धं ब्रह्मेति वाच्यं, तव मते शुद्धब्रह्मण एवाभावात्प्रकृतिपुरुषाभ्यां नित्याभ्यां नित्यं हि ब्रह्म सदापि विशिष्टमेवेति। नच नित्येनापि नित्यं कदाचिदविशिष्टं भवेदिति वाच्यं, सर्वव्यापि नित्येश्वरस्य कदाचित्केनचि-द्वैशिष्ट्याभावस्य दुर्वचत्वात् । नच सर्वव्यापि नित्यगगनस्य घटेनेव नेश्वरस्य प्रकृत्यादिवैशिष्ट्यमिति वाच्यं, तर्हि गगनवदीश्वरोपि सर्वदापि प्रकृत्याद्यविशिष्ट एव भवेत्- नहि गगनं कदाचिद्घटेन विशिष्टं कदाचित्पुनरविशिष्टं भवति- यदि गगनवदीश्वरस्सर्वदा सर्वेणाविशिष्ट इत्यभ्युपैषि, तदा तव कथं विशिष्टाद्वैतसिद्धिरिति । यतो वेति श्रुतिस्तु मायया ब्रह्म जगज्जन्मादिकारणमित्येवंपरा । अविकारायेति पदं तु ब्रह्मणस्सर्वविधविकारविधुरत्वप्रतिपादनपरं, नतु ज्ञातृत्वादिकविषयविकारसद्भावप्रतिपादनपरं- तथा संकोचने मानाभावादिति । तथा **शुद्धायेति** बद्धव्यावृत्तिरित्यप्यसत्—बद्धस्यापि शुद्धत्वात्- नहि संसारदशायामशुद्धो जीवो मुक्तिदशायां शुद्धो भवति, तथासति विकारित्वापत्तेः- 'अविकार्योयमुच्यत' इति हि गीतं भगवता । नचैवं बद्धस्यापि शुद्धत्वे कथं संसारित्वमिति वाच्यं, शुद्धेप्यात्मनि संसारित्वं भ्रमप्रयुक्तमेवेति । अनात्मतादात्म्याध्यासेन हि भवत्यात्माऽशुद्ध इव । नच मलेनादर्श इव प्रकृत्या जीवो विशिष्टस्सन्नशुद्धो भवतीति वाच्यं, निरवयवासङ्गजीवस्य प्रकृतिसङ्गायोगात् । आदर्शो हि सावयवस्ससङ्गश्च । यदि तु शुद्धायेत्यनेनाध्यासिकाशुद्धिरहितायेत्युच्यते तथाच बद्धव्यावृत्तिस्सिद्धे-त्युच्यते, तर्हीष्टापत्तिरेव । **नित्यायेति** मुक्तव्यावृत्तिरिति **यत्तदप्यसत्**—मुक्तस्य च नित्यत्वात् । नच शुद्धत्वेन नित्यायेत्यर्थान्मुक्तव्यावृत्तिसिद्धिरिति वाच्यं, मुक्तस्यापि नित्यं शुद्धत्वात् । नच मुक्तो मुक्तेः प्रागशुद्ध इति वाच्यं, मुक्तेः प्राङ्मुक्तस्यैवाभावात् । नच य इदानीं मुक्तस्स इतः प्रागशुद्ध इति वाच्यं, त्वद्दृष्ट्या तस्य तदा तथात्वेपि तद्दृष्ट्या स तथाविधो नैवेति । आत्मस्वरूपं साक्षा-त्कृतवान्हि मन्यते सदाप्यहं नित्यशुद्धबुद्धमुक्तस्वभाव एव, बद्धत्वं तु भ्रान्तिप्रयुक्तमेव ममेति ।

अथ परमात्मन इति न नित्यमुक्तव्यावृत्तिः- परमात्मनो नित्यमुक्तत्वात् । नच यस्मात्परो

नास्ति स परम आत्मा परमात्मा; नित्यमुक्तास्तु न परमाः- तदपेक्षया परस्येश्वरस्य सत्त्वादिति वाच्यं, ईश्वरस्यैव नित्यमुक्तत्वात्तदन्यस्य नित्यमुक्तस्यैवाभावात्त्वदभिप्रेतानन्तगरुडादीनां नित्यमुक्तत्वाभावाच्च । अशरीरो हि नित्यमुक्तः, यस्सशरीरस्स नैव मुक्तः, 'सह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती'ति श्रुतेः प्रियाप्रियापहतेरेव मुक्तित्वाच्च । **एतेन** सशरीरस्य विष्णोरीश्वरत्वमित्यपि **परास्तम्**—ब्रह्मादिवद्विष्णोरपि देवताविशेषत्वस्य स्वाभ्युपेतत्वात् । देवत्वं हि मनुष्यत्वादिवज्जातिः, जातिश्च देहधर्म एव, नात्मधर्मः, अजस्यात्मनो जात्ययोगात् । प्रकृतश्लोकस्थविष्णुपदं सर्वव्यापिपरं विश्वं वेवेष्टि व्याप्नोतीति विष्णुरिति व्युत्पत्तेः । सर्वव्यापिन एव परमात्मत्वाच्च न वैकुण्ठैकदेशस्थो विष्णुदेवः परमात्मा भवितुमर्हति । विलक्षणविग्रहवत्तयापि समस्तवैलक्षण्यमाह-- **सदैकरूपरूपायेति, यत्तदसत्**--अशरीरस्य परमात्मनो विलक्षणविग्रहायोगात्, विलक्षणविग्रहवतः परिच्छिन्नत्वेन परमात्मत्वायोगाच्च । मायया सर्वव्यापि परमात्मभिन्नस्य परमात्मशरीरत्वेन परमात्मनो विलक्षणविग्रहवैशिष्ट्यायोगाच्च । नच मनुष्यादिजीवशरीरापेक्षया विष्ण्वाख्यं परमात्मशरीरं विलक्षणमिति वाच्यं, विष्णुशरीरवन्मनुष्यादिशरीराणामपि परमात्मशरीरत्वात् । नच मनुष्यादय ईश्वरशरीराण्यपि जीवशरीराणि च भवन्ति विष्णुस्तु ईश्वरशरीरमेव नतु जीवशरीरमिति विष्णोरीश्वरविलक्षणविग्रहत्वमिति वाच्यं, किं विष्णुशरीरं सप्राणमुताप्राणम्? आद्ये यो विष्णुशरीरे प्राणभृदस्ति स जीव एव- 'जीवत्वं प्राणधारणा'दिति स्मरणात् । न द्वितीयः-- मृतत्वापत्तेः । तस्माद्ब्रह्मरुद्रादिविलक्षणविग्रहेष्वहमित्यभिमन्यमाना यथा जीवा स्तथा विष्ण्वाख्यविलक्षणविग्रहेष्यहमित्यभिमन्यमानो जीव एव- 'कर्योपाधिरयं जीवः कारणोपाधिरीश्वर' इति श्रुतेः । शरीरेन्द्रियादिकं हि कार्यं, कारणं तु मायैव । नच कर्मजन्यशरीरवानेव जीवः, मायामयशरीरवांस्त्वीश्वर एवेति वाच्यं, मायामयमीश्वरशरीरमित्यस्य कोर्थः- किं मायाजन्यमित्यर्थः? यद्वा मायैवेति? नाद्यः-- जीवशरीरस्यापि मायाजन्यत्वात् । द्वितीय इष्ट एव । तस्मान्माययैवेश्वरश्शरीरीव भाति, नतु वस्तुत इति कृत्वा नास्ति विलक्षणः कोपि विग्रह ईश्वरस्य । किंच ईश्वरस्य विलक्षणविग्रहाभ्युपगमेपि न स विग्रहस्सदैकरूपः- मत्स्यकूर्मवराहनरसिंहादिभेदेन नानारूपत्वात् । नच विष्णुविग्रहस्सदैकरूप इति वाच्यं, तस्याप्यनित्यत्वेन सदैकरूपत्वाभावात् । नच स नित्य एवेति वाच्यं, 'कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु पालेषु च सर्वहेतुषु । तमस्तदासीद्गहनं गभीरं यस्तस्य पारेऽभिविराजते विभु'रिति भागवतात् । नच स विभुर्विष्णुविग्रह एवेति वाच्यं, तस्य भौतिकस्य तमःपारविराजमानत्वायोगात् । नाचाभौतिकस्स इति वाच्यं, रूपादिमतस्तस्याभौतिकत्वायोगात् । नचादित्यवर्णस्स इति वाच्यं, नीलस्य विष्णोरादित्यवर्णत्वायोगात् । रक्तत्वेपि तस्य तैजसत्वेन भौतिकत्वात् । नचाग्न्यादेरपि तेजःप्रदत्वेन न स भौतिक इति वाच्यं, स्वयंतेजोवान् सन्नेवाग्न्यादेरपि तेजःप्रदो भवतीति कृत्वा कथं तेजोवतस्तस्य रूपिणो भवेदभौतिकत्वम् । भवतु नाम तस्याभौतिकत्वं तथापि तेजोमयत्वं दुर्वारम्- तेजश्च भूतमेवेति कथं तमश्शेषदशायां तेजोभूतसत्त्वं । किंच यदि विष्णुस्तेजोमयस्तर्हि तस्य कथं तमसः पारे विराजमानत्वं- नहि तेजसि सति तमस्स्थितं स्यात् । तस्माद्ज्ञानस्वरूपः परमात्मैव विभुः । आकाशादिभूता-

नामेवाभावे कथं रूपवतो विष्णुविग्रहस्य सत्वमिति । किंच विष्णुविग्रहस्य सदैकरूपत्वमपि दुर्वचं, पद्मोत्पत्तिपद्मजोत्पत्तिजगदुत्पत्त्यादिभिर्बहुरूपत्वात्तस्य । तस्मात्परमात्मनस्स्वरूपं सदाप्येकरूपमेवेति तदर्थः ।

**यदुक्तं 'विष्णवे सर्वजिष्णव'** इति नृपनभोव्यावृत्तिरिति **तदयुक्तम्**--विष्णोस्सर्वजीवसंरक्षकत्वेन नृपत्वात्तद्व्यावृत्तिरयुक्तैवेति । नभोव्यावृत्तिस्तु नित्यायेत्यनेनैव सिद्धेति । अत्र श्लोके एकैकमेव विशेषणं सकलेतरव्यावृत्तं परब्रह्म बोधयति—तथाहि **अविकाराय** आत्मैक एवाविक्रियः, अन्यस्त्वनात्मा सर्वोपि विक्रियावानेव- प्रकृतिमहदादीनां महदहङ्कारादिरूपेण विक्रियमाणत्वदर्शनात् । नच जीवोप्यविकार एवेति वाच्यं, जीवस्यैव ब्रह्मत्वेन ब्रह्मविशेषणस्य जीवे प्रसङ्ग इष्ट एवेति । तथा **शुद्धाय** आत्मैक एव शुद्धः गुणदोषरहितत्वात्, अन्यस्त्वनात्मा अशुद्ध एव तद्वत्त्वादिति । तथा **नित्याय**-- आत्मैक एव सत्यत्वेन नित्यः, अन्यस्त्वनात्मा- आर्तत्वेनानित्य एवेति । तथा **परमात्मने**- आत्मैक एव परम आत्मा अन्यस्त्वनात्मा अपरमात्मैव- अनात्मस्वात्मत्वस्य कल्पितत्वेनापरमत्वादात्मन्यात्मत्वस्याकल्पितत्वेन परमत्वाच्चेति । **सदैकरूपरूपायेति**- सच्चिदानन्दलक्षणमात्मस्वरूपमेकमेव सदाप्येकरूपं तद्भिन्नस्यानात्मनस्स्वरूपं तु नानारूपमिति । **विष्णव इति**- आत्मैक एव परिपूर्णत्वात्सर्वव्यापी, तदन्यस्त्वनात्मा परिच्छिन्नत्वादविष्णुरेवेति । **सर्वजिष्णव इति**- आत्मैक एव नित्यनिरवयवत्वात्स्वतन्त्रस्सर्वश्चानात्मा तत्परतन्त्र इति सर्वजिष्णुरात्मैव, अनात्मा तु तत्परतन्त्रस्तज्जित एवेति । एवं विकाराभावाशुद्धयभावानित्यत्वाभावापरमात्मत्वाभावासदैकरूपरूपत्वाभावाविष्णुत्वाभावासर्वजिष्णुत्वाभावैर्निर्विशेषं ब्रह्मापि लक्षितमेव श्लोकेनेति **संक्षेपः** ॥

## ब्रह्मरुद्रविष्णुपदानामर्थविचारः ।

**यदुक्तं** विष्ण्वाख्यावतारविग्रहद्वारा भगवत्पर्यन्तो हरिशब्दः, हिरण्यगर्भशङ्करशब्दौ तु जीवद्वारा भगवत्पर्यन्ताविति **तदयुक्तम्**—यद्यवतारविग्रहस्य विष्णुरिति नाम तर्हि तड्डित्थडवित्थादिशब्दवदव्युत्पन्नमेव भवेत्- नहि वैकुण्ठलोकैकदेशस्थो विष्णुविग्रहस्सर्वव्यापित्वलक्षणावयवार्थवान्भवितुमर्हति- यथा हरिशब्दस्तथा विष्णुशब्दोपि भगवद्वाच्येव- हरिशब्दश्च हरतीति हरिरिति व्युत्पत्त्या साक्षादेव परमात्मवाची, नतु शङ्खचक्रादिमद्विग्रहविशेषवाची । यदि तु चतुर्भुजत्वाद्युपलक्षितविग्रहविशेषवाच्येव विष्णुशब्द इत्याग्रहः, तर्हि चतुर्मुखत्वाद्युपलक्षितविग्रहविशेषवाच्येव हिरण्यगर्भशब्दः, त्रिलोचनत्वाद्युपलक्षितविग्रहविशेषवाच्येव शङ्करशब्दश्चेति तुल्यमेव । यदि तु हिरण्यगर्भशङ्करशब्दौ चतुर्मुखत्वत्रिलोचनत्वादिविशेषविशिष्टविग्रहयुक्तजीवद्वारा भगवत्पर्यन्ताविस्युच्यते, तर्हि हरिशब्दश्च चतुर्भुजत्वादिविशेषविशिष्टविग्रहयुक्तजीवद्वारा भगवत्पर्यन्त इति तुल्यमेव । नच विष्णुशरीरविशिष्ट ईश्वरः, हिरण्यगर्भशङ्करशरीरविशिष्टौ तु जीवाविति वाच्यं, यो यच्छरीरविशिष्टस्स स ईश्वरो न भवत्येवेति व्याप्तेर्विष्णुशरीरविशिष्टोपि जीव एवेति । तस्माद्ब्रह्मविष्णुरुद्राख्यमूर्तित्रयं समानसम्पत्कमेव । अतएव 'ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तय' इत्युक्तम्--

ब्रह्मणः परमात्मन ईशनशक्तयो हि ब्रह्मविष्णुरुद्रास्त्रयः । **अत्रेदं बोध्यम्**—मायावच्छिन्नं चैतन्यमीश्वरः स चैकोपि मायानिष्ठसत्त्वादिगुणत्रयभेदाद्विष्ण्वादिशब्दत्रयप्रतिपाद्यो भवति- तत्र ब्रह्मणो या निर्माणशक्तिस्सा ब्रह्मेति, या रक्षणशक्तिस्सा विष्णुरिति, या संहरणशक्तिस्सा रुद्र इति चोच्यते-- तासां च शक्तीनामुपासनार्थं मूर्तित्रयं कल्पितमिति । यदित्वकल्पितमेव मूर्तित्रयमस्तीत्याग्रहस्तर्हि ता एव ब्रह्मशक्तय एतन्मूर्तित्रयं स्वीकृत्य तिष्ठन्तीति मन्तव्यम् । अथापि यद्यसन्तोषस्तर्हि ब्रह्मविष्ण्वादिमूर्तित्रयवन्तस्त्रयस्ते जीवा ब्रह्मण ईश्वरस्य शक्तय इति विज्ञेयम्- ईश्वरस्य चिच्छक्तिर्हि जीवः, जीवेषु च तेषां त्रयाणां प्रधानत्वादुक्तं प्रधाना ब्रह्मशक्तय इति । तस्माद्यदि विष्णुरीश्वरस्तर्हि ब्रह्मरुद्रावपीश्वरावेव । यदि विष्णुर्जीवप्रधानस्तर्हि ब्रह्मरुद्रावपि जीवप्रधानावेवेति न ब्रह्मरुद्रापेक्षया विष्णोरुत्कृष्टत्वं स्वप्नेपि सम्भावयितुं शक्यते ।

**ननु** विष्णुः पिता ब्रह्मा तत्पुत्रः शर्वस्तु तत्पौत्र इति पुत्रपौत्रापेक्षया विष्णुरुत्कृष्ट इति, **मैवम्**—मूर्तित्रयस्य परस्पराजन्यत्वात् । अन्यथा शिवः पिता ब्रह्मा पुत्रः विष्णुः पौत्रः, ब्रह्मा पिता रुद्रः पुत्रः विष्णुः पौत्र इत्यादिप्रतिपादनपुराणान्तरविरोधात् । भवतुनाम पुत्रपौत्रदेहापेक्षया पितृदेहस्योत्कृष्टत्वं, तदवच्छिन्नं चैतन्यमीश्वराख्यमेकमेवेति नात्रातिशङ्कनीय**मित्यलम्** । **यदुक्तं** ज्ञानस्वरूपमिति श्लोकः क्षेत्रज्ञव्यष्टयात्मना स्थितस्य परमात्मनस्स्वभावमाहेति **तदयुक्तम्**—क्षेत्रज्ञविलक्षणद्रव्यस्य परमात्मनः क्षेत्रज्ञात्मना स्थित्ययोगात्- नहि मृद्घटात्मना तिष्ठतीतिवत्तन्तुर्घटात्मना तिष्ठतीति वक्तुं शक्यते- इति ॥

## शास्त्रस्य निर्विशेषब्रह्मपरत्वे 'निर्गुणस्याप्रमेय'स्येत्यादिश्लोकोक्तप्रश्नप्रतिवचनानुपपत्तिशङ्का- तन्निरासश्च ।

**यदुक्तं** यदि निर्विशेषज्ञानरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रं तर्हि- श्लो॥ 'निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः । कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते॥'इति चोद्यम्- श्लो॥ शक्तयस्सर्वभावानामचिन्त्यज्ञानगोचराः । यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥ भवन्ति तपतां श्रेष्ठ ! पावकस्य यथोष्ण'तेति परिहारश्च न घटते, इति **तदप्यसत्**—प्रकृतप्रश्नप्रतिवचनाभ्यां शास्त्रस्य निर्विशेषज्ञानरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरत्वमेव निश्चीयत इति- तथाहि- जगत्सर्गस्थितिलयकर्तृत्वं रजस्सत्त्वतमोगुणवत एव सम्भवति न तु निर्गुणस्य- रज आदिगुणकार्यत्वात्सर्गादीनाम् । ब्रह्म तु निर्गुणमित्युक्तं, कथं तस्य सर्गादिकर्तृत्वाभ्युपगमः ? तथा यत्प्रमेयं तत्स्रष्टृत्वादिधर्मयुक्तं भवतु नाम- ब्रह्मत्वप्रमेयमिति कथं तस्य सर्गादिकर्तृत्वाभ्युपगमः ? तथा यद्विकारि तत्स्रष्टृत्वादिविकारवद्भवेत्, ब्रह्मत्वविकारि शुद्धमिति कथं तस्य सर्गादिकर्तृत्वाभ्युपगमः ? कथं ब्रह्म शुद्धमत आह-- अमलात्मन इति; निर्मलस्वरूपस्येत्यर्थः । नच निर्गुणस्येत्यनेनैवालमप्रमेयस्येत्यादिविशेषणान्तराणि व्यर्थानीति वाच्यं, निर्गुणमपि ब्रह्म सर्गादिकर्तृ न भवति किं पुनरप्रमेयमपीत्येवंपरत्वाद्विशेषणान्तरप्रयोगस्य । यद्वा निर्गुणं ब्रह्मेत्युक्तं; निर्गुणत्वे हेतुरप्रमेयत्वमप्रमेयत्वे हेतुरशुद्धत्वं, शुद्धत्वे हेतुरमलात्मत्वमिति वक्तुमनेकविशेषणोपन्यासः । अथवा ब्रह्म निर्गुणं निर्गुणत्वादेवाप्रमेयमप्रमेयत्वादेव शुद्धं शुद्धत्वादेवामलात्मेति वक्तुमिति । सर्वथापि निर्विशेष-

चिन्मात्रस्य ब्रह्मणः कथं सर्गादिकर्तृत्वमभ्युपगम्यत इत्येव प्रश्नार्थः । एवमेव भागवतेपि विदुरेणायमेव मैत्रेयः पृष्टः-- श्लो॥ 'ब्रह्मन् कथं भगवतश्चिन्मात्रस्याविकारिणः । लीलया वापि युज्येरन्निर्गुणस्य गुणाः क्रिया' इति । यदि ब्रह्म त्वदुक्तविधया सगुणं प्रमेयं च, तर्हि तस्य सर्गादिकर्तृत्वं सम्भवत्येवेति कृत्वा प्रश्नस्यैवानवसरग्रस्ततेति । **अयंपुनः प्रतिवचनश्लोकार्थः**—लोके तत्तद्वस्तूनां तास्ताश्शक्तयः पृथक्पृथक्सन्ति- ताश्च वस्तुशक्तयः कार्यलिङ्गकानुमानगम्या एव नतु चिन्तयितुं शक्याः- यथा पावकस्य उष्णता, जलस्य शीतता, यथा च मृदो घटजननशक्तिस्तन्तोः पटजननशक्तिश्च, यथा वा भेषजस्य रोगहरणशक्तिरन्नस्य क्षुन्निवारणशक्तिरिति । एवं ब्रह्मणश्च जगन्निर्माणशक्तिर्जगद्रक्षणशक्तिर्जगद्धननशक्तिश्चेति शक्तित्रयमस्ति- अवशिष्टाश्शक्तयोऽत्रैवान्तर्भूताः । यद्यप्येकैव ब्रह्मशक्तिर्माया, तथापि सत्त्वादिगुणप्रयुक्तरक्षादिकार्यभेदादेकापि मायाशक्तिश्शक्तित्रयमिति व्यवहृता । अतएव 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'मिति मायैक्यम् । 'इन्द्रो मायाभिः पुरुरूप ईयत' इति मायानेकत्वं च श्रुत्युक्तमविरुद्धं भवति । तथाच- त्वदुक्तविधया न निर्विशेषं चिन्मात्रं ब्रह्म जगत्कर्तृ भवति, किंतु मायावीश्वराख्यं सविशेषं ब्रह्मैवेति प्रतिवचनश्लोकार्थः । ततश्च निर्विशेषमपि ब्रह्म मायया सविशेषमिव भूत्वा सर्गादिकर्त्रिव भवति; वस्तुतस्तु निर्विशेषमेवेति न सर्गादिकर्त्रिति भावः ।

**ननु** किं सविशेषब्रह्मणि मायास्ति? उत निर्विशेषे? आद्ये- कथं निर्विशेषं ब्रह्म मायया सविशेषं भवेत्- नहि निर्विशेषे ब्रह्मणि मायास्ति; न द्वितीयः- निर्विशेषे मायेति व्याघातादिति, **मैवम्**—माया किं मायिनि वर्तते? उत निर्माये? नाद्यः- मायास्थितेः प्राक्तस्य मायित्वस्यैवायोगात्। नान्त्यः व्याघातादिति । **ननु** शिष्योहमस्मि भोस्तव सदुत्तरमुच्यताम्! शृणु सोम्य! तर्हि वच्मि-- यत्र गन्धस्सा पृथिवी; पृथिवी च गन्धवतीतिवत् । यत्र माया तद्ब्रह्म- ब्रह्म च सविशेषमिति तच्च ब्रह्मणस्सविशेषत्वं माययैव, नतु वस्तुत इति निर्विशेषब्रह्मसिद्धिरिति ।

**कोत्र** मायाशब्दार्थ इति? उच्यते- व्यवहार इति- वस्तुत इत्यस्य प्रतियोगित्वात्- माया हि व्यावहारिकी कार्यगम्यत्वात्कार्यस्य च व्यावहारिकत्वादतो माययैवेत्यस्य व्यवहारत एवेत्यर्थः । मायिनमित्यत्र तु मायाशब्दश्शक्तिवाचीति विवेकः । तस्मान्निर्गुणब्रह्मणो जगत्कर्तृत्वाद्ययोगेपि मायिन ईश्वराख्यस्य सगुणब्रह्मणस्तद्योग उचित एवेति प्रतिवचनाभिप्राय इति ॥

## मायाया ब्रह्मशक्तित्वोपपत्तिः ।

**ननु** यदि ब्रह्म सशक्तिकं तर्हि सदापि सशक्तिकमेव, नतु कदाचित्सशक्तिकं, कदाचित्पुनरशक्तिकमिति वक्तुं शक्यते; नहि वह्निः कदाचिद्दाहस्फोटादिजननसमर्थः, कदाचित्तु नेति वक्तुं शक्यमिति, **मैवम्**—दाहस्फोटादिजनने शक्तोपि वह्निः कदाचिन्मणिमन्त्रादिसमवधानेसति भवत्येवाशक्त इति । नच शक्तः कदाचिदशक्तो भवतुनाम- अशक्तः पुनश्शक्तस्तु न भवत्येवेति वाच्यं, दारुगतो वह्निरशक्तोपि मथनाद्दारुप्रभूतस्सन् शक्तो भवतीति दर्शनात् । किंच सृष्टिकाले लयकरणाशक्तमपि ब्रह्म लयकाले तच्छक्तमेव भवति । नच सृष्टिकालेपि लयकरणशक्तमेव ब्रह्मेति वाच्यं, तदानीमपि

तच्छक्तत्वे लयप्रसङ्गात् । नच सृष्टिशक्तिप्रतिबद्धासती लब्धशक्तिस्सृष्टिकाले ब्रह्मणि वर्तेत इति वाच्यं, प्रतिबद्धायास्तस्यास्सत्त्वे मानाभावात् । नच वह्नौ मण्यादिसमवधानप्रतिबद्धः दाहादिजननशक्तिरस्त्येव तथेति वाच्यं, तत्सत्त्वस्याप्यनभ्युपेयत्वात्- शक्तिर्हि कार्यगम्या कार्याभावे शक्त्यभाव एवेति । तस्मान्मण्यादिसमवधानदशायां वह्नौ शक्तिर्नास्त्येव । अत एव तदा वह्निर्दाहस्फोटादिजननासमर्थो भवति । सामर्थ्यं हि शक्तिः सामर्थ्याभावस्तु शक्त्यभाव एवेति । एवं च तत्तत्काले सा सा शक्तिरस्ति ब्रह्मणि नतु सर्वदापि सर्वाश्शक्तय इति कृत्वा यथा तत्तच्छक्तिरहिते ब्रह्मणि तत्तत्काले सा सा शक्तिरुदेति, तथा सर्वशक्तिरहितेपि ब्रह्मणि शक्तिरुदेत्येव । अत एव 'माया चाविद्या च स्वयमेव भव'तीति श्रूयते । एवं जन्मवत्त्वादेव मायाया नाशोप्यस्ति- 'जातस्य हि ध्रुवो मृत्यु'रिति गीतावचनात् । एवं जन्मनाशवत्त्वादेव माया भवत्यनित्या, एवमनित्यत्वादेवासत्या- यदनित्यं तद्ध्यसत्यं रज्जुसर्पवत् । एवं मायाया मिथ्यात्वादेव तत्कार्यमिदमखिलमपि जगन्मिथ्यैव- नहि मिथ्यावस्तुनस्सकाशात्सत्यं वस्तु भवति । एवं ब्रह्मभिन्नस्य सर्वस्य मिथ्यात्वादेव ब्रह्मैकं निर्विशेषं सत्यमिति निर्विशेषब्रह्मसिद्धिः- इति । नच तथासति निर्गुणस्य ब्रह्मणः कथं सर्गादिकर्तृत्वमिति प्रश्नस्य न ब्रह्मणः पारमार्थिकस्सर्गः, अपि तु भ्रान्तिपरिकल्पित एवेत्युत्तरं स्यादिति वाच्यं, निर्गुणब्रह्मणो भ्रान्तिपरिकल्पितसर्गस्याप्ययोगेन तदुत्तरस्यायुक्तत्वात्- नहि निर्गुणब्रह्मणो व्यावहारिकसर्गादिकर्तृत्वमप्यस्ति । पारमार्थिकसर्गादिकर्तृत्वं कस्यापि नास्त्येव- पारमार्थिकसर्गस्यैवाभावात् । व्यावहारिकसर्गादिकर्तृत्वं तु न निर्गुणब्रह्मणोस्ति - व्याघातात् , किंतु सगुणब्रह्मण एवेति समीचीनमेवोत्तरमुक्तमिति । **यदुक्तं**- उत्पत्त्यादिकार्यं सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्येषु दृष्टमिति, सत्त्वादिगुणरहितस्य परिपूर्णस्याकर्मवश्यस्य कथं सर्गादिकर्तृत्वमभ्युपगम्यत इति बोध्यं, दृष्टसकलविसजातीयस्य ब्रह्मणो यथोदितस्वभावस्यैव जलादिविसजातीयस्याग्न्यादेरौष्ण्यादिशक्तियोगवत्सर्वशक्तियोगो न विरुध्यत इति परिहार इति, **तदयुक्तम्**— रजस्सत्त्वतमोगुणत्रयमेव सृष्टिस्थितिलयशक्तित्रयमिति कथं गुणत्रयरहितस्य शक्तित्रययोगः । नच प्रकृतिगुणा एव सत्त्वादयो, नतु शक्तय इति वाच्यं, सत्त्वादीनां गुणत्वं पारिभाषिकमेवेति न नीलपीतादिवत्सत्त्वादयो गुणाः, किंतु प्रकृतिपरिणामत्वेन शक्तय एव । प्रकृतिर्हि शक्तिः- सत्त्वादीनां गुणत्वाभ्युपगमेपि प्रकृतेरीश्वरशक्तित्वात्प्रकृतिगुणास्ते ईश्वरगुणा एवेति कथमीश्वरस्य निर्गुणत्वम् । नच प्रकृतिर्नेश्वरशक्तिरिति वाच्यं, प्रधानपुरुषयोरीश्वरशक्तित्वस्य त्वयैवोक्तत्वात् । यदि तु प्रकृतेरेव सत्त्वादयो गुणा नेश्वरस्येति मतं, तर्हि प्रकृतेरेव सर्गादिक्रिया नेश्वरस्य, नापि जीवस्येति सर्गादिक्रियाणामकर्त्रैवेश्वरो जीवश्च । नच प्रकृतिसंसर्गाज्जीवो निर्गुणोपि सगुणो भवतीति वाच्यं, तर्हि तथैवेश्वरोपि भवत्येव । नचेश्वरस्य नास्ति प्रकृतिसंसर्ग इति वाच्यं, 'यदृच्छयैवोपगतामभ्यपद्यत लील' येति भागवतादीश्वरोपि प्रकृतिं स्वीकृतवानेव, त्वयापि चिदचिद्विशिष्टं ब्रह्मेत्युच्यते । अचिद्वस्तु हि प्रकृतिः । तथाच जीववदीश्वरोपि प्रकृतिसंसृष्टत्वात्सगुण एव । यदि तु प्रकृतिविविक्त ईश्वरो निर्गुण एवेत्युच्यते तर्हि प्रकृतिविविक्तो जीवोपि निर्गुण एव । नच जीवस्य प्रकृतिविवेको दुर्लभ

इति वाच्यं, अज्ञानात्प्रकृत्यविवेकमापन्नः खलु जीवः प्रकृतिविवेकं प्राप्नोत्येव, ज्ञानात्कथमन्यथा तस्य मुक्तिसिद्धिः- प्रकृतिविनिर्मुक्तमात्मस्वरूपमिति त्वयापि ह्युच्यते । देहाद्याकारपरिणतप्रकृत्यविवेकेन, अविद्यारूपप्रकृत्यविवेकेन च मनुष्योहं स्थूलोहं काणोहं बधिरोहं मूकोहं सुख्यहं दुःख्यहमज्ञोहमित्यभिमन्यमानो हि जीवस्तद्विवेके सति देहेन्द्रियादिविलक्षणस्सच्चिदानन्द आत्माहमिति प्रत्येति। प्रत्युत ईश्वरस्यैव प्रकृतिविवेको दुर्लभः- नहीश्वरस्याज्ञानादितःप्राक्प्रकृत्यविवेकः प्राप्तः, येनेदानीं तस्य ज्ञानात्प्रकृतिविवेको भवतीति वक्तुं शक्यते- सर्वज्ञस्सन्नेव हीश्वरः प्रकृतिसंसृष्टः । किंच सत्त्वं विष्णोर्गुणो रजो ब्रह्मगुणस्तमो रुद्रस्य गुणः ।

**एवं** गुणविवेकात्सत्त्वस्य सर्वोत्कृष्टत्वाद्विष्णुस्सत्त्वगुणवान्सर्वोत्कृष्ट इति वदतस्तव कथमीश्वरस्य गुणाभावः । नच विष्णोस्सत्त्वं शुद्धमप्राकृतमिति वाच्यं, अप्राकृतसत्त्वस्यैवाभावाद्गगनारविन्दवत् । प्रकृतिगुणत्वेन प्राकृतमेव हि सत्त्वम्- रजस्तमोभ्यामनभिभूतसत्त्वं विष्णोरस्तीति हि शुद्धसत्त्वो विष्णुरित्युच्यते । किंच न विष्णोस्सत्त्वमेकमेवास्तीति वक्तुं न शक्यते- दैत्यान्तकस्य हिरण्यगर्भोत्पादकस्य च तस्य तमोरजोगुणवत्त्वेनापि भाव्यत्वात् । नहि सत्त्वात् सृष्टिप्रलयौ भवतः- विष्णुश्च सृष्टिस्थित्यन्तकारणमिति कथं तद्धेतुगुणत्रयरहितः नहि कारणं विना कार्यं भवति 'स्थितिसंयमकर्तासौ जगतोस्ये'ति हि पराशरेणोक्तम् । तस्माद्यदि विष्णुस्सर्गादिकर्ता तर्हि तद्धेतुभूतगुणत्रयवान् गुणत्रयात्मिकप्रकृतिवानिति वा भवत्येवेति न सत्त्वादिगुणत्रयरहितस्य तस्य सर्गादिशक्तियोग इति ।

**यदुक्त**मप्रमेयस्य परिपूर्णस्येश्वरस्यैव सर्वशक्तियोगो, नतु प्रमेयस्यापरिपूर्णस्य जीवस्येति, **तदसत्**—जीवस्यापरिपूर्णत्वे सति परिच्छिन्नत्वेनानित्यत्वप्रसङ्गात् । नचान्तःकरणोपहितो जीवो भवति- परिच्छिन्न एवान्तःकरणस्य परिच्छिन्नत्वादिति वाच्यं, तर्हि अन्तःकरणस्यानित्यत्वात्सोप्यनित्य एव भवतीति तुल्यम् । किंच परिपूर्णश्शक्तियुक्त इत्यप्ययुक्तम्- येनायं युक्तः तस्यानेनाव्याप्तत्वेन परिपूर्णत्वाभावात् । तस्मान्निर्विशेषं ब्रह्मैव परिपूर्णं, सविशेषब्रह्मणः परिपूर्णत्वं त्वौपचारिकमेव गगनवदिति ।

## 'परमार्थस्त्वमेवैक' इत्यनेनापि जगतः अपारमार्थ्यत्वोपपत्तिः ।

**यदुक्तं** परमार्थस्त्वमेवैक इत्याद्यपि न कृत्स्नस्यापारमार्थ्यं वदति, अपितु कृत्स्नस्य तदात्मकतया तद्व्यतिरेकेणावस्थितस्यापारमार्थ्यमिति, **तदसत्**—परमात्मैक एव परमार्थ इत्यनेन परमात्मशरीरभूतस्य जगतोऽपारमार्थ्यस्योक्तत्वात् । यदि तु जगदपि परमार्थः परमात्मवत्तर्हि त्वमेक एवेत्यवधारणमयुक्तं स्यात् । नच परमात्मव्यतिरेकेणावस्थितमेव जगदपारमार्थः, परमात्मात्मकं जगत्तु परमार्थ एवेति वाच्यं, परमात्मव्यतिरेकेण स्थितमेकं जगत् , तदव्यतिरेकेण स्थितमन्यज्जगदिति यदि जगद्द्वयं स्यात्तर्हि तत्रैकं परमार्थभूतमन्यदपरमार्थभूतमिति वक्तुं शक्यते- नतु तद्द्वयमस्तीति । नच परमात्मात्मकमेव जगदस्ति, न तु परमात्मानात्मकं जगदस्तीति तदर्थ इति वाच्यं, परमार्थस्त्वमेवैक इत्युक्तं नतु परमार्थः परमात्मात्मकं जगदिति । नच परमात्मनः परमार्थत्वादेव तदात्मकं जगदपि परमार्थ एवेति वाच्यं, तथासति परमात्मनस्सच्चिदानन्दरूपत्वात्तदात्मकं जगदपि सच्चिदानन्दरूपमिति वक्तव्यत्वात् । तथा नित्यत्वा-

दात्मनस्तच्छरीरत्वेन तदात्मकं शरीरमपि स्थूलं पाञ्चभौतिकं नित्यमिति वक्तव्यत्वाच्च । तस्माज्जीवस्य नित्यत्वेपि तद्देहस्यानित्यत्ववत्परमात्मनः परमार्थत्वेपि तच्छरीरस्य जगतोऽपरमार्थत्वमेव । नच देहस्यानित्यत्वे विप्रतिपत्तिः- तस्य जन्मनाशप्रत्यक्षेणानित्यत्वे विप्रतिपत्त्यभावात्- जन्मनाशवत्त्वं ह्यनित्यत्वम् । एवं परमात्मशरीरतया परमात्मात्मकस्य जगतो परमार्थत्वादेव परमार्थस्त्वमेवैको नान्योस्तीत्युक्तम् । यदि जगदपि परमात्मवत्परमार्थस्तर्हि जगत्परमात्मातिरिक्तपदार्थस्यैवाभावात्परमार्थस्त्वमेवैक इति निष्कर्षो न स्यात , नहि कोपि चेतनाचेतनात्मकादखिलाज्जगजस्तत्कारणात्परमात्मनश्चान्यः कश्चित्पदार्थोस्तीति मन्यते, येन तन्निषेधार्थमिदं वचनं स्यात्- चिदचिदीश्वरास्त्रयस्सन्ति, नतु तदतिरिक्तं किञ्चिदस्तीति-- नहि परमात्मानं प्रति त्वमेवैकः परमार्थ इत्युक्तेन वचनेन चिदचिदीश्वरास्त्रयः परमार्था इति प्रतिपादितमिति कोप्यनुन्मत्तः प्रत्येति । नच चिदचिच्छरीरकस्त्वमेव परमार्थ इति प्रतिपादितमिति वाच्यं, तथाऽनुक्तत्वात् , अपरमार्थस्यान्यस्याभावेन तन्निषेधायोगाच्चेति । किंच तद्व्यतिरेकेण किमपि नास्तीत्यप्ययुक्तम्- परमात्मजगतोरन्योन्यविलक्षणत्वेन सत्त्वाद्व्यतिरेकस्य । शरीरशरीरिणौ हि परस्परं व्यतिरिक्तौ- अविवेकिनस्तु तयोरव्यतिरेकं पश्यन्ति, विवेकिनस्तु शरीरव्यतिरिक्तमेव शरीरिणं, शरीरिव्यतिरिक्तं च शरीरं पश्यन्ति- आत्मानात्मविवेक एव खलु विवेकः ।

## 'तवैष महिमा' इत्यादिविष्णुपुराणान्तर्गतश्लोकानां जगन्मिथ्यात्वपरत्ववर्णनम् ।

**ननु** 'तवैष महिमा येन व्याप्तमेतच्चराचर'मिति जगतः परमात्मव्याप्तत्वात्परमात्मव्यतिरेकेणाभाव एवेति, **मैवम्**—किं परमात्मा स्वमेव व्याप्तवानुत स्वव्यतिरिक्तं वस्तु ? नाद्यः- स्वस्य स्वव्यापकत्वायोगात्- नहि गगनं गगनमेव व्याप्नोति । द्वितीये कथं परमात्मव्यतिरेकेण जगदभावः- परमात्मव्याप्तत्वेन परमात्मव्यतिरिक्तत्त्वाज्जगतः । किंच आत्मतया परमात्मना जगद्व्याप्तमिति त्वयोच्यते- तथाच आत्मतया जीवेन व्याप्तं शरीरं किमात्मव्यतिरेकेण नास्तीति वक्तुं शक्यते, येन परमात्मना आत्मतया व्याप्तं जगत्परमात्मव्यतिरेकेण नास्तीत्युच्येत । तस्मात्परमार्थस्त्वमेवैक इत्यनेन परमात्मशरीरस्य परमात्मव्याप्यस्य वा जगतो पारमार्थ्यमेवोच्यते । **ननु** जगच्छरीरकः, जगद्व्यापकश्च परमात्मेति त्वयाप्यभ्युपेतं, तथाच जगतोऽसत्यत्वे तच्छरीरकस्य तद्व्यापकस्य च परमात्मनः कथं सत्यत्वमिति, **उच्यते**— अनित्यत्वाज्जगतोऽसत्यत्वेपि नित्यत्वात्परमात्मा तु सत्य एवेति । शरीरत्वाद्व्याप्यत्वाच्च जगदनित्यं- शरीरं ह्यनित्यं, व्याप्यश्च घटादिरनित्य एवेति । अतएव नित्यो जीवो नेश्वरस्य शरीरं, नापीश्वरेण व्याप्तः, किं त्वीश्वर एवेत्युच्यते । अन्यथा हि जीवस्यानित्यत्वं स्यादिति । एवं नित्यत्वात्परमात्मन एकस्यैव 'परमार्थस्त्वमेवैको नान्योस्ति जगतः पते' इत्युक्तम् । **एतेन** 'त्वदात्मकमिदं सर्व'मिति, त्वदन्यः कोपि नास्ति सर्वात्मतया त्वमेव परमार्थ इति श्लोकस्यार्थ इति **प्रत्युक्तम्** । यदीदं सर्वं जगन्न परमात्मा, किंतु परमात्मशरीरतया परमात्मात्मकं, तर्हि परमात्मनोऽन्यदेव जगदिति कथं वक्तुं शक्यते- त्वदन्यः कोपि नास्तीति- सर्वात्मतया त्वमेव परमार्थ इति वचनं तु स्वाभिप्रायेणायुक्तमपि वस्तुतस्समीचीनमेव । सर्वस्यात्मनि कल्पितत्वेन सर्वस्यापि परब्रह्मैव स्वरूपमिति कृत्वा परमात्मनस्सर्वात्मतया पारमार्थ्यसूचित-

मेवेति- सर्वस्यान्तरात्मतया त्वमेव परमार्थ इत्यर्थवर्णनेपि सर्वान्तरात्मतया परमात्मैक एव सत्यः, अन्यत्सर्वं त्वसत्यमेव- 'एष त आत्मान्तर्याम्यमृतः', 'अतोन्यदार्त'मिति श्रुतेः- अमृतो हि नित्यत्वात्सत्यः, आर्तं त्वनित्यत्वादसत्यम् । तस्मात्सर्वस्यात्मा परमात्मैव परमार्थः । तदन्यत्सर्वं त्वपरमार्थ एवेति । अत एवोक्तं 'परमार्थस्त्वमेवैक' इति ।

**ननु** हे भूपते! त्वदन्यः कोपि नास्तीत्युक्ते न भुवो मिथ्यात्वं, किंतु तत्तुल्यराजान्तरस्यैव, तद्वद्धे जगतःपते! त्वदन्यः कोपि नास्तीत्युक्ते न जगतो मिथ्यात्वं, किंतु तत्तुल्यवस्त्वन्तरस्यैवेति, **मैवम्**—दृष्टान्तवाक्ये अन्यशब्दस्य तुल्यार्थकत्वादन्यथा तद्वाक्यस्यैवाप्रमाणत्वादिति । यद्वा शेषपूरणेन वाक्यस्यान्वयः- त्वदन्यः कोपि मद्रक्षको नास्तीति । **ननु** जगतःपते! त्वमेव परमार्थ इति वचनान्न जगतो पारमार्थ्यं, तथासति जगतःपते! इति सम्बुद्धिरयुक्ता स्यादिति, **मैवम्**—नहि जगन्नरविषाणतुल्यं, किंतु व्यवहारक्षममेव- तथा च जगत्पतित्वमीश्वरस्य यावद्व्यवहारमस्त्येवेति कृत्वा हेजगतःपते! इति सम्बोधनं कृतम् । परमार्थदशायां जगदभावं तु नान्योस्तीत्यनेनोक्तमिति । **यदुक्तम्**—एकशब्दः प्राधान्यपरः, तथाच परमात्मैव प्राधान्येनास्ति, अप्राधान्येन तु जगदस्तीति तद्वचनार्थ इति **तदसत्**- किं त्वमेवैकः परमार्थ इत्यन्वयः ? यद्वा एकस्त्वमेव परमार्थ इति ? आद्ये- जगतोऽमुख्यमेव पारमार्थ्यमिति व्यावहारिकत्वमेव सिद्धम् । द्वितीये- प्रधानस्य परमात्मन एव पारमार्थ्यमिति कृत्वा अप्रधानस्य जगतोऽपारमार्थ्यमेव सिद्धमिति । **यदुक्तं** जगतस्सत्यत्वे 'तवैष महिमा येन व्याप्तमेतच्चराचर'मिति न वक्तव्यं, किंतु तवैषा भ्रान्तिरिति वक्तव्यमिति, **तदप्ययुक्तम्**—ईश्वरस्य भ्रान्त्ययोगात्- ईश्वरश्चराचरं व्याप्तवानिति भ्रान्ता मन्यन्ते न त्वीश्वरः, भ्रान्तदृष्ट्यैवमुक्तमिति । यद्वा विद्वांसोपि व्यवहारदशायामीश्वरं चराचरं व्याप्तवन्तमेव मन्यन्त इति तद्दृष्ट्येदमुक्तमिति । **यच्चोक्तं** लीलया महीमुद्धरतो वराहस्य स्तुतिप्रकरणविरोध इति, **तदप्यसत्**—सगुणस्यापीश्वरस्य वस्तुतो निर्गुणत्वात्सगुणेश्वरस्तुतौ निर्गुणब्रह्मयाथार्थ्यकथनमुचितमेवेति । भगवन्तं स्तुतवन्तो हि भक्ता विद्वांसस्स्वस्तुतिषु भगवते अपारमार्थिकं व्यावहारिकं च रूपं प्रथितवन्तः- यथा भागवते दक्षः- 'स वै ममाशेषविशेषमायानिषेधनिर्वाणसुखानुभूतिः । स सर्वनामा सच विश्वरूपः प्रसीदतामनिरुक्तात्मशक्तिः' इति । गजेन्द्रश्च- 'न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुणदोष एव वा । तथापि लोकाप्ययसम्भवाय स्वमायया तान्यनुकूलमृच्छति' इति ।

**अथ** 'यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव । भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिन' इत्यस्य श्लोकस्य यतः कृत्स्नं जगज्ज्ञानात्मना त्वया आत्मतया व्याप्तत्वेन तव मूर्तं तस्मात्त्वदात्मकत्वानुभवसाधनयोगविरहिण एतत्केवलदेवमनुष्यादिरूपमिति भ्रान्तिज्ञानेन पश्यन्तीत्यर्थ इति **यत्तदसत्**—श्लोकाक्षरेभ्यस्त्वदुक्तार्थासिद्धेः- यथाश्रुतार्थं विहायापार्थकल्पनस्यायुक्तत्वात् । श्लोकस्य त्वयं यथाश्रुतार्थः- तथाहि- यदेतन्मूर्तं मूर्तिविशिष्टं भूतभौतिकात्मकं वस्तु दृश्यते तदेतत्सर्वं ज्ञानात्मनस्तव रूपं स्वरूपमेव- अयोगिनस्तु भ्रान्तिज्ञानेन जगत्पश्यन्ति- 'इदं सर्वं यदयमात्मा, ऐतदात्म्यमिदं सर्वं, सर्वं खल्विदं ब्रह्म, वासुदेवस्सर्व'मित्यादिश्रुतिस्मृतिवशाद्दृश्यमिदं सर्वं त्वमेव- त्वं च ज्ञानस्वरूप एव । अयोगिनस्तु

ब्रह्मेदमित्यविदित्वा जगदिदमिति पश्यन्ति- विज्ञास्तु सर्वं ब्रह्मेत्येव पश्यन्तीति तदाशयः- रज्जौ सर्पज्ञानमिव ब्रह्मणि जगद्ज्ञानं भ्रान्तिज्ञानमेव, नतु प्रमेति फलितार्थः इति । **यदुक्तं** न केवलं वस्तुतस्त्वदात्मकं जगद्देवमनुष्याद्यात्मकमिति दर्शनमेव भ्रमः, किंतु ज्ञानाकाराणामात्मनां देवमनुष्याद्यर्थाकारत्वदर्शनमपि भ्रम एवेत्याह- 'ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहविप्लवे' इति, **तदप्यसत्**—परमात्मशरीरत्वेन परमात्मात्मकस्य जगतो देवमनुष्यादिदेहरूपत्वेन देवमनुष्याद्यात्मकत्वदर्शनमपि प्रमैव, नतु भ्रमः । नच जीवशरीरत्वदर्शनं भ्रम इति वाच्यं, देवमनुष्यपश्वादीनां जीवशरीरत्वेन तद्दर्शनस्यापि प्रमात्वात् । तथा ज्ञानस्वरूपमखिलं जगदित्यस्य ज्ञानाकारा आत्मान इत्यर्थवर्णनं चायुक्तम्—सर्वस्यानात्मवर्गस्याखिलं जगदिति कण्ठत एवोक्तत्वात् । **ननु** 'त्रिभिर्गुणमयैर्भावैरेभिस्सर्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यः परमव्यय'मिति गीतावचनादत्र जगच्छब्दश्चेतनवाची- चिदचिदात्मकं हि जगदिति, **मैवम्**—गीतायां मोहितं नाभिजानातीति सत्त्वादचेतनस्य ज्ञानप्रसक्त्यभावेन ज्ञाननिषेधायोगान्मुख्यार्थानुपपत्त्या जगच्छब्देन लोकवाचिना तद्गतो जनो लक्ष्यते, अत्र तु तादृशानुपपत्त्यभावान्न जगच्छब्दस्य चेतनलक्षकत्वमिति । नच जडस्वरूपस्य जगतोऽनात्मनः ज्ञानस्वरूपत्वानुपपत्तिसत्त्वादत्रापि लक्षणया जगच्छब्दश्चेतनपर इति वाच्यं, ज्ञानेऽध्यस्तस्य जगतो वस्तुतो ज्ञानस्वरूपत्वेनानुपपत्त्यभावात् । **यच्चोक्तं** देहात्मभ्रमस्संसर्गकृतो जलमुष्णमितिवदिति, **तदयुक्तम्**—असङ्गस्यात्मनो देहेनसह संसर्गायोगात्किं तर्हि तादात्म्याध्यासकृत एवेति । **यदप्युक्तम्**—येतु ज्ञानस्वरूपात्मविदः ते देवमनुष्यादिप्रकृतिपरिणामविशेषशरीररूपमिदमखिलं जगत् शरीरातिरिक्तज्ञानस्वरूपात्मकं त्वच्छरीरं च पश्यन्तीत्याह- 'येतु ज्ञानविदश्शुद्धचेतसस्तेऽखिलं जगत् । ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर !' इति, **तदप्यसत्**—ज्ञानस्वरूपमिति श्लोकोक्तभ्रान्तिदर्शनविपरीतमिदं दर्शनं प्रमाभूतं प्रकृतश्लोकोक्तम् । तथाच पूर्वश्लोके अखिलं जगदित्यनेन यदुक्तं तदेवेहाप्यखिलं जगदित्यनेनानूदितं, न तु तद्भिन्नमिति कृत्वा पूर्वश्लोके अखिलं जगदित्यस्य सर्वे आत्मान इत्यर्थमुपवर्ण्य अस्मिन् श्लोके तस्यैव देवमनुष्यादिशरीररूपमित्यर्थस्य वर्णनं व्याहतमिति । तस्माद्ज्ञानस्वरूपमखिलं जगत्परमात्मरूपं ये पश्यन्ति ते तत्त्वविद इत्येव प्रकृतश्लोकस्य यथाश्रुतार्थः- ज्ञानस्वरूपमखिलं जगदर्थरूपं ये पश्यन्ति ते भ्रान्ता इति पूर्वश्लोकेनोक्तत्वात् । नच ज्ञानस्वरूपस्य जगतोऽर्थस्वरूपत्वदर्शनमिव परमात्मस्वरूपत्वदर्शनमपि भ्रान्तिरेवेति वाच्यं, परमात्मनो ज्ञानस्वरूपत्वादिति ।

**ननु** ज्ञानात्मकमखिलं जगदिति प्रकृतश्लोकपदानामपि ज्ञानस्वरूपास्सर्वे आत्मान इत्येवार्थः, तेषां च परमात्मशरीरत्वदर्शनमभ्रान्तिरित्यव्याहतोऽर्थ इति, **मैवम्**—अर्थस्वरूपं पश्यन्त इत्यस्य प्रतियोगित्वेन त्वद्रूपं प्रपश्यन्तीत्युक्तत्वात्त्वद्रूपमित्यस्य परमात्मस्वरूपमित्येवार्थः । **एतेन** त्वच्छरीरं च पश्यन्तीति **प्रत्युक्तम्** । तथा पूर्वश्लोकस्थज्ञानस्वरूपपदसमानार्थकतयेह ज्ञानात्मकपदस्य प्रयुक्तत्वात्तदनुरोधेनेहापि ज्ञानस्वरूपमित्येवार्थो वर्णनीय इति कृत्वा ज्ञानस्वरूपजीवशरीरकमित्यर्थवर्णनं च व्याहतमेव-- तस्माद्दुष्ट एव रामानुजीयः पक्षः ।

## विशिष्टाद्वैतापेक्षयाऽद्वैतस्य दुष्टत्वशङ्का - तन्निरासश्च ।

**ननु** कृत्स्नापारमार्थ्यं विवक्षितमिति तव पक्षोपि दुष्ट एव- श्लोकानां पौनरुक्त्यं, पदानां लक्षणा, अर्थविरोधः, प्रकरणविरोधः, शास्त्रतात्पर्यविरोधश्चास्तीति- तथाहि ज्ञानस्वरूपमत्यन्तेति, यदेतद्दृश्यत इति, ज्ञानस्वरूपमखिलमिति च श्लोकत्रयेण यद्येकैव भ्रान्तिरुक्ता, तर्हि पौनरुक्त्यं; मन्मते तु यदेतदिति श्लोकेन स्वातन्त्र्यभ्रम., ज्ञानात्मकमिति श्लोकेन देहात्मभ्रमश्चेति न पौनरुक्त्यम् । परमेश्वर, जगतःपते, तव महिमा, त्वमित्यादिशब्दानां लक्षणा- प्रत्यक्षादिभिरबाध्यत्वेन सिध्यतो जगतोऽसत्यत्वे प्रमाणविरोध- स्तिरोधानानुपपत्त्यादिस्तर्कविरोध इत्यर्थविरोधः, प्रकरणविरोधः स्तुतिविरोधः- 'रोमान्तरस्था मुनयः स्तुवन्ती'ति हि प्रकृतम्- स्तोतॄणामद्वैतज्ञानवत्त्वे स्तुत्यनुपपत्तिः, तदभावे च नितरामिति, उपक्रमोप- संहारादिविरोधाच्छास्त्रतात्पर्यविरोधश्चेति, **मैवम्**—श्लोकत्रयेण भ्रान्तिद्वयस्य वचनेपि तत्रैकभ्रान्तिः पुनरुक्तैवेति न पौनरुक्त्यदोषातिपातस्तवापि- अर्थस्य दुर्बोधत्वादौपनिषदस्य उक्तमेवार्थं पुनःपुनर्वदन्ति प्रायेण मुनयः स्पष्टश्चायमर्थो गीतायां । तत एकस्या अपि भ्रान्तेश्श्लोकत्रयेण प्रतिपादनं न दुष्टं । नच भ्रन्तिद्वयं श्लोकत्रयेणोक्तं नैका भ्रान्तिरिति वाच्यं, प्रमाया एकेनैव श्लोकेनैकस्या एवोक्तत्वा- द्भ्रान्तिरप्येकैवेति- ज्ञानस्वरूपस्य जगतोऽर्थस्वरूपेण दर्शनं भ्रान्तिः, ज्ञानस्वरूपस्य जगतो ज्ञानस्वरूपेण दर्शनं प्रमेति हि सिद्धोर्थः श्लोकचतुष्टयस्य । अथ पदानां च लक्षणादोष.— परमेश्वरादिशब्दा याव- द्व्यवहारं सविशेषमेव ब्रह्म बोधयन्तीति लक्षणानवकाशात्- ब्रह्म हि व्यवहारदशायां परमेश्वरत्वजगत्पति- त्वादिगुणविशिष्टमेवेति । नापि प्रमाणविरोधादयः- प्रत्यक्षादिप्रमाणानां- व्यावहारिकजगद्विषयकत्वेनोप- क्षीणत्वात्- चक्षुरादीनि हि व्यावहारिकं जगद्ग्राहयन्ति, नतु स्वग्राह्यस्य जगतः पारमार्थ्यमावेदयन्ति— नहि चक्षुर्ग्राह्यो घट. पारमार्थिक इति वक्तुं शक्यते- चक्षुष एवापारमार्थिकत्वात्- तिरोधानं चासत्य- स्यापि जगत उपपद्यत एव भ्रान्त्या सत्यत्वाज्जगतः- अत्यन्तासतो हि शशशृङ्गादेस्तिरोधानानुपपत्तिः तव । तत एव नित्यस्य जगतस्तिरोधानानुपपत्तिरुत्पत्त्यनुपपत्तिश्चेति प्रकरणविरोधः परिहृत एव । नच स्तोतॄ- णामद्वैतज्ञानवत्त्वे स्तुत्यनुपपत्तिरिति वाच्यं, जीवेश्वरयोः पारमार्थिकमेवाद्वैतं, व्यवहारतस्तु द्वैतमेवेति कृत्वा व्यवहारदशायां तत्त्वविदामपीश्वरस्तुतिरुपपद्यत एव- यथा देहातिरिक्तात्मज्ञानवतोपि तव गन्तृत्व- वक्तृत्वाद्युपपत्तिस्तद्वदिति । निर्विशेषं ब्रह्मैवोपक्रान्तमुपसंहृतं चेति न शास्त्रतात्पर्यविरोधोपीति ।

## विष्णुपुराणस्य षड्विधतात्पर्यलिङ्गैर्निर्विशेषब्रह्मपरत्वप्रतिपादनम् ।

**तथाहि**- 'परः पराणां परमः परमात्माऽऽत्मसंस्थितः । रूपवर्णादिनिर्देशविशेषणविवर्जितः' इति विष्णुपुराणप्रारम्भश्लोकः- १ अंशे २ अध्याये १० आदिशब्देन क्रियाद्रव्ये गृह्येते, निर्देश- स्संज्ञाजातिगुणक्रियाद्रव्यनामाख्यैःकल्पनाहेतुभिर्विषणैर्विवर्जित, इति विष्णुचित्तीयव्याख्या । अनेन निर्विशेषं ब्रह्मोपक्रान्तमिति सुस्थम् । विशेषोहि विशेषणम्- 'अहं ममेत्यविद्येयं व्यवहारस्तथाऽनयोः । परमार्थस्त्वसंलाप्यो गोचरो वचसां न यः ।। ६-७-१०० इत्युपसंहृतम् । वचसामगोचरो हि निर्वि- शेषं ब्रह्म- सविशेषस्य ब्रह्मणो वचोऽगोचरत्वायोगादिति । तथा- 'विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च

स्थितम् । स्थितिसंयमकर्तासौ जगतोस्य जगच्च सः ॥' (१-१-३१) इति वक्ष्यमाणपुराणार्थसंग्रह एक-श्लोकेन संक्षिप्य दर्शितः प्रथमतः । 'इति विविधमजस्य यस्य रूपं प्रकृतिपरात्ममयं सनातनस्य। प्रदिशतु भगवानशेषपुंसां हरिरपजन्मजरादिकां स सिद्धिम्'-(३-८-६४) इति ग्रन्थान्ते मङ्गलश्लोकेन चोक्त-पुराणार्थसंग्रहस्संक्षिप्य दर्शितः । तथाचेदमुक्तं भवति-- प्रकृतिपुरुषेश्वरात्मकं सर्वं जगत्परमात्मैव--सर्वस्य परमात्मन्यध्यस्तत्वात् । नतु ततोरिक्तं किञ्चिदपि वस्त्वस्ति- एवं वस्त्वन्तराभावादेव- एकमेवा-द्वितीयं ब्रह्म सजातीयविजातीयस्वगतभेदशून्यत्वात्तस्माद्ब्रह्म निर्विशेषमेव- विशेषस्य भेदत्वाद्भेदस्य चाभावादिति । एवमुपक्रमोपसंहारैकरूप्यं लिङ्गं दर्शितम् ।

अथ लिङ्गान्तराण्यपि प्रदर्श्यन्ते- 'परमार्थस्त्वमेवैको नान्योस्ति जगतःपते । तवैव महिमा येन व्याप्तमेतच्चराचरम् ॥ यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव। भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥ ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥ येतु ज्ञानविदः शुद्ध-चेतसस्तेऽखिलं जगत् । ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥' इति प्रथमांशे चतुर्थाध्याये श्लोकचतुष्कं पूर्वमेव व्याख्यातम् । 'न स्थूलं नच सूक्ष्मं यन्न विशेषणगोचरम् । तत्पदं परमं विष्णोः प्रणमाम सदाऽमलम् ॥ (१-७-५२) आद्यो यज्ञः पुमानिज्यो यः पूर्वेषां च पूर्वजः । तं नतास्स्म जगत्स्रष्टुः स्रष्टारमविशेषणम् ॥६१॥' मायायास्स्रष्टृत्वादिविशेषणयुक्तमपि वस्तुतोऽविशेषणमित्यर्थः । 'नमो नमो विशेषस्त्वं त्वं ब्रह्मा त्वं पिनाकधृत् । इन्द्रस्त्वमग्निः पवनो वरुणस्सविता यमः ॥६७॥' स्वतस्त्वविशेषः, मायया तु ब्रह्मादिरूपधृदित्यर्थः । 'शुद्धस्संलक्ष्यते भ्रान्त्या गुणवानिव योऽगुणः । तमात्मरूपिणं देवं नतास्स्म पुरुषोत्तमम् ॥ (११-१४-३७) अविकारमजं शुद्धं निर्गुणं यन्निरञ्जनम् । नतास्स्म तत्पदं ब्रह्म विष्णोर्यत्परमं पदम् ॥३८॥ अदीर्घह्रस्वमस्थूलमनण्वश्यामलोहितम् । अस्नेह-च्छायमतनुमसक्तमशरीरिणम् ॥३९॥ अनाकाशमसंस्पर्शमगन्धमरसं च यत् । अचक्षुश्श्रोत्रमचलु-मवाक्पाणिममानसम् ॥४०॥ अनामगोत्रमसुखमतेजस्कमहेतुकम् । अभयं भ्रान्तिरहितमनिद्रमजरा-मरम् ॥४१॥ अरजोऽशब्दममृतमप्लुतं यदसंवृतम्। पूर्वापरे न वै यस्मिन् तद्विष्णोः परमं पदम् ॥'४२॥ एभिश्श्लोकैस्सर्वविशेषरहितं ब्रह्मेत्युक्तम् । 'तस्माच्च सूक्ष्मादिविशेषणानामगोचरे यत्परमार्थरूपम् । किमप्यचिन्त्यं तव रूपमस्ति तस्मै नमस्ते पुरुषोत्तमाय॥ (१-१७-७५) याऽतीतगोचरा वाचां मनसां चाविशेषणा । ज्ञानिज्ञानपरिच्छेद्या तां वन्दे चेश्वरीं पराम् ॥ ७७॥' ज्ञानी जीवः, ज्ञानं बुद्धिः, ते परिच्छेद्ये यस्यास्सा ज्ञानिज्ञानपरिच्छेद्या । 'ओं नमो वासुदेवाय तस्मै भगवते सदा । व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः ॥७८॥ नमस्तस्मै नमस्तस्मै नमस्तस्मै महात्मने । नामरूपं न यस्यास्ति योऽस्तित्वेनोपलभ्यते ॥७९॥' नचास्तित्वं ब्रह्मणो विशेषणमेवेति वाच्यं, निर्विशेषसामान्य-रूपायास्सत्ताया विशेषणत्वाभावाद्ब्रह्मस्वरूपत्वाच्चेति । 'नित्यानित्यप्रपञ्चात्मन्निष्प्रपञ्चामलाश्रित । एकानेक नमस्तुभ्यं वासुदेवादिकारणम् ॥' (१-२०-१२) वस्तुतो निष्प्रपञ्चोपि मायया प्रपञ्चरूप इत्यर्थः । 'निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम् । आत्मसम्बोधविषयं सत्तामात्रमलक्षणम् ॥ (१-२२-५०)

प्रशान्तमभयं शुद्धं दुर्विभाव्यमसंश्रयम् । विष्णोर्ज्ञानमयस्योक्तं तद्ज्ञानं ब्रह्मसंज्ञितम् ॥५१॥ एवं प्रकारममलं नित्यं व्यापकमक्षयम् । समस्तभेदरहितं विष्ण्वाख्यं परमं पदम् ॥'५३॥ समस्तभेदरहितं सजातीयविजातीयस्वगतभेदशून्यमनाख्येयं वक्तुमशक्यं दुर्विभाव्यं मनसोप्यगोचरमलक्षणं लक्षणरहितं सत्तामात्रं सत्यज्ञानानन्दादिविशेषशून्यं ब्रह्मेत्यर्थः । 'अहं हरिस्सर्वमिदं जनार्दनो नान्यत्ततः कारण-कार्यजातम् । ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ति ॥' प्रथमांशस्योपसंहारश्लोकोऽयं-- अत्राद्वितीयब्रह्मात्मज्ञानिनस्संसारमोक्षरूपं फलमभिहितमिति वेद्यम् । एवं प्रथमांशे अभ्यासफले दर्शिते । 'तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम् । मनसः परिणामोयं सुखदुःखादिलक्षणः ॥ (२-६-४९) ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय चेष्यते । ज्ञानात्मकमिदं सर्वं न ज्ञानाद्विद्यते परम् ॥५०॥' अत्र ज्ञानातिरिक्तं किमपि नास्तीति ब्रह्मणो निर्विशेषत्वं सिद्धं- ब्रह्मैव हि ज्ञानं-सुखदुःखयोरनात्मधर्मत्वं च सिद्धम् । रामानुजेन हि तयोरात्मधर्मत्वमुच्यते । 'तद्ब्रह्म परमं धाम सदसत्तत्परं पदम् । यस्य सर्वमभेदेन जगदेतच्चराचरम् ॥ (२-७-४१) स एव मूलप्रकृतिर्व्यक्तरूपी जगच्च सः । तस्मिन्नेव लयं सर्वं याति तत्र च तिष्ठति ॥४२॥ कर्ता क्रियाणां स स इज्यते क्रतुस्स एव तत्कर्मफलं च तस्य । स्रगादियत्साधनमप्यशेषं हरेर्न किञ्चिद्व्यतिरिक्तमस्ति ॥४३॥' अत्र सर्वं ब्रह्मैव ब्रह्मभिन्नं किमपि नास्तीति ब्रह्मणोऽद्वितीयत्वमुक्तं- मायया च ब्रह्मणस्सविशेषत्वमिति । 'ज्योतींषि विष्णुर्भुवनानि विष्णु-र्वनानि विष्णुर्गिरयो दिशश्च । नद्यस्समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥ (२-१२-३८) ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः । ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥३७॥ यदा तु शुद्धं निजरूपि सर्वं कर्मक्षये ज्ञानमपास्तदोषम् । तदाहि सङ्कल्प-तरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥४०॥ वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं च सदैक-रूपम् । यच्चान्यथा त्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् ॥४१॥ मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः । जनैस्स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥४२॥ तस्मान्न विज्ञानमृतेस्ति किञ्चित्क्वचित्कथंचिद्द्विज वस्तुजातम् । विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहु-धाऽभ्युपेतम् ॥४३॥ ज्ञानं विशुद्धं विमलं च नित्यमशेषशोकादिनिरस्तसङ्गम् । एकस्सदैकं परमः परेशस्स वासुदेवो न यतोऽन्यदस्ति ॥४४॥ सद्भाव एषो भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् । एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥४५॥' अत्र ज्ञानस्वरूपं ब्रह्मैकमेव परमार्थसत्यं, सर्वः प्रपञ्चस्तत्र मायाकल्पितत्वादपरमार्थ एव । विशुद्धज्ञानिनः प्रपञ्चभेदप्रतीतिर्न भवत्येव- यत्सदैक-रूपं तदेव वस्तु- यत्तु परिणमते तद्वस्तु न भवत्येव- तच्च सदैकरूपं वस्तु विज्ञानमेव- तदन्यत्सर्वमवस्त्वेव, भ्रान्तास्तु एकमेव तद्वस्तु ब्रह्म नानात्वेन गृह्णन्ति, तच्च ब्रह्म अवाङ्मनसगोचरत्वादव्यवहार्यमेव- मायामयं ब्रह्म तु सप्रपञ्चत्वात्संव्यवहार्यमिति निर्विशेषं ब्रह्म परमार्थसत्यं, व्यवहारतस्तु तदेव सविशेषमिव भाति माययेति—**सिद्धम्** ।

'विष्ण्वाधारं यथा चैतत्त्रैलोक्यं समवस्थितं । परमार्थश्च मे प्रोक्तो यथाज्ञानं प्रधानतः ॥'

(२-१३-२) अत्र ज्ञानमेकमेव परमार्थसत्यं तदन्यन्मिथ्येति स्फुटम् । 'एवं न परमार्थोस्ति जगत्यत्र न-चाधिप (२-१४-१३) परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम ॥२८॥ एको व्यापी समश्शुद्धो निर्गुणः प्रकृतेः परः । जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ॥ २९॥ परमज्ञानमयो सद्भिर्नामजात्यादिभि-र्विभुः । न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यते ॥ ३०॥ तस्यात्मपरदेहेषु सतोप्येकमयं हि यत् । विज्ञानं परमार्थो वा द्वैतिनो तथ्यदर्शिनः ॥ ३१॥ वेणुरन्ध्रविभेदेन भेदष्षड्जादिसंज्ञितः । अभेद-व्यापिनो वायोस्तथा तस्य महात्मनः ॥ ३२॥ एकत्वं रूपभेदस्तु बाह्यकर्मप्रवृत्तिजः । देवादिभेदेऽप-ध्वस्ते नास्त्येवावरणे हि सः ॥' ३३॥ अत्र ब्रह्मैकमेव परमार्थः, तदन्यत्सर्वं जगदपरमार्थएव । तच्चैकं निर्गुणं ज्ञानात्मकमात्मभूतं नामजात्यादिविशेषरहितं निर्भेदम् । एवंसति ये द्वैतं पश्यन्ति ते मिथ्या-ज्ञानिन एवेति प्रतिपादितम् । 'पुमान् सर्वगतो व्यापी आकाशवदयं यतः । कुतः कुत्र क्व गन्तासी-त्येतदस्यार्थवत्कथम् ॥ (२-१५-२८) सोहं न गन्ता नागन्ता नैकदेशनिकेतनः । त्वं चान्ये च नच त्वं च त्वं नान्येनाहमप्यहम् ॥' २५॥ अत्र रामानुजाभिमतमात्मनोऽणुत्वं पराकृतम्- अत्मन आकाश-वत्सर्वगतत्वव्यापित्वयोरुक्तत्वात् । नच पुनरुक्तिः- वायुवत्क्रमेण सर्वगतत्वं व्यावर्तयितुं व्यापीत्युक्तत्वात् । यद्वा सर्वान्तर्व्यापित्वं, सर्वगतत्वं, सर्वबहिर्व्यापित्वं तु व्यापित्वमिति न पुनरुक्तिः । त्वं चेत्यस्यायमर्थः-- न केवलमहमेवैवं भूतः, किंतु त्वं चान्ये च सर्वेपि । **ननु** मम तवान्येषां च परिच्छेदगमनादिप्रतीतेः कथं प्रत्यक्षविरुद्धमुच्यते, **तत्राह**- न च त्वमिति; यस्त्वं लौकिकः परिच्छिन्नः प्रतीयसे स एष त्वं न भवसि, येनान्ये प्रादेशिकाः प्रतीयन्ते तथाविधास्ते अन्ये न भवन्ति, अहमपि यादृशस्त्वया दृष्टो न तादृशोहं, किंतु अहमित्यादिव्यवहारगोचरः परमात्मैव- 'आत्मैवेदं सर्व'मिति श्रुतेः । अतो न प्रत्यक्षविरोधः- देहाद्युपाधिभेदादेव त्वमहमादिभेदप्रतीतिर्नात्मभेदात् । आत्मा त्वेकमेवाद्वितीयं ब्रह्मेति **परमार्थः** । 'एकमेवमिदं विद्धि न भेदि सकलं जगत् । वासुदेवाभिधेयस्य स्वरूपं परमा त्मनः ॥' (२-१५-३५) इदं सकलं जगदेकमेव परमात्मस्वरूपभूतं विद्धि- भेदि भिन्नं तु न इति प्रति-पादितमद्वैतमेवात्र। 'तदेतदुपदिष्टं ते संक्षेपेण महामते। परार्थसारभूतं यत्तदद्वैतमशेषतः॥(२-१६-१८) एवमुक्त्वा ययौ विद्वान्निदाघं स ऋभुर्गुरुः । निदाघोप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥१९॥ सर्वभूता-न्यभेदेन ददर्श स तदाऽऽत्मनः । तथा ब्रह्मपरो मुक्तिमवाप परमां द्विजः ॥' २०॥ अत्र अद्वैतं ब्रह्मैव परमार्थः, तद्दर्शनादेव मुक्तिरिति स्फुटमित्यभ्यासः फलं च दर्शितं । 'सितनीलादिभेदेन यथैकं दृश्यते नभः । भ्रान्तदृष्टिभिरात्मापि तथैकस्सन् पृथक्कृतः ॥ १२॥ एकस्समस्तं यदिहास्ति किञ्चित्तदच्युतो नास्ति परं ततोन्यत् । सोहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥ २३॥ इतीरित-स्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः । सचापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप ॥'२४॥ अत्र एक एवात्मा आत्मनानात्वमात्मपरमात्मभेदश्च भ्रान्तिसिद्ध एव, जीवो जगच्च सर्वं ब्रह्मैव ब्रह्मणो-न्यत्किमपि नास्ति ततो भ्रान्तिसिद्धो भेदमोहस्त्यक्तव्य इत्यद्वितीयं ब्रह्म प्रतिपादितम् । तादृशाद्वैतज्ञाना-न्मुक्तिश्च फलमिति द्वितीयांशोपि निर्विशेषब्रह्मपर एव । 'एवमेष जगत्सर्वं करोति परिपाति च । हन्ति

चान्तेप्यनन्तात्मा नास्त्यस्माद्व्यतिरेकि यत् ॥ (३-२-६०) ज्ञातमेतन्मया त्वत्तो यथा सर्वमिदं जगत् । विष्णुर्विष्णौ विष्णुतश्च न परं विद्यते ततः ॥' (३-३-१) अत्र विष्ण्वतिरिक्तवस्त्वन्तराभाववचनाद्‌द्वितीयं ब्रह्मेति सिद्धम् । 'एतद्ब्रह्म त्रिधा भेदमभेदमपि स प्रभुः । सर्वभूतेष्वभेदोसौ भिद्यते भिन्नबुद्धिभिः ॥' २९॥ अत्र वस्तुतो निर्भेदमपि ब्रह्म भ्रान्त्या भिन्नमिव प्रतीयत इति स्फुटम् । 'कटकमकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम् । सुरपशुमनुजादिकल्पनाभिर्हरिरखिलाभिरुदीर्यते तथैकः ॥' (३-७-१६) अत्र एकमेवाद्वितीयं ब्रह्म कनकवत्सत्यम् । तत्र द्वैतं तु कटकादिवत्कल्पितत्वेनासत्यमिति प्रतिपादितम् । 'सकलमिदमहं च वासुदेवः परमपुमान् परमेश्वरस्स एकः । इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान्विहाय दूरात् ॥' (३-७-३२) अत्र जीवजगतोर्ब्रह्माऽभिन्नत्वादेकमेवाद्वितीयं ब्रह्मेति प्रतिपादितम् । एवं ज्ञानिनो न यमभटाकर्षणमिति फलं चोक्तम् । 'भूतानि सर्वाणि तथाऽन्नमेतदहं च विष्णुर्न यतोन्यदस्ति । तस्मादहं भूतनिकायभूतमन्नं प्रयच्छामि भवाय तेषाम्'(३-११-५४) अत्र सर्वस्यापि विष्णुत्वेन विष्ण्वतिरिक्ताभावादद्वितीयं ब्रह्मेति स्फुटम् । 'शुक्लादिदीर्घादिघनादिहीनमगोचरं यच्च विशेषणानाम् । शुद्धातिशुद्धं परमर्षिदृश्यं रूपाय तस्मै भगवन्नतास्स्मः ॥ (३-१७-३२) यन्नश्शरीरेषु यदन्यदेहेष्वशेषवस्तुष्वजमव्ययं यत् । यस्माच्च नान्यद्व्यतिरिक्तमस्ति ब्रह्मस्वरूपाय नतास्स तस्मै ॥' ३३॥ अत्र निर्विशेषमेकमेवाद्वितीयं ब्रह्मेति स्फुटम्- इति । तृतीयांशोपि निर्विशेषब्रह्मपर एव- 'यस्सृज्यते सर्गकृदात्मनैव यः पाल्यते पालयिता च देवः । विश्वात्मना संह्रियतेन्तकारी पृथक्त्रयस्यास्य च योऽव्ययात्मा ॥ (४-२-८९) यस्मिन् जगद्यो जगदेतदाद्यो यश्चाश्रितोस्मिन् जगति स्वयम्भूः ॥' ९०॥ अत्र सर्वस्य ब्रह्मत्वमुक्तमिति ब्रह्मभिन्नस्य मिथ्यात्वेन ब्रह्माद्वितीयमिति प्रतीयते । 'ग्रहर्क्षतारकाचित्रगगनाग्निजलानिलाः । अहं च विषयाश्चैव सर्वं विष्णुमयं जगत् ॥' (५-१-२०) अहं भूमिः- 'त्वमव्यक्तमनिर्देश्यमचिन्त्यानामवर्णवत् । अपाणिपादरूपं च शुद्धं नित्यं परात्परम् ॥ (५-१-४०) एकं तवाग्र्यं परमं पदं यत् पश्यन्ति त्वां सूरयो ज्ञानदृश्यम् । त्वत्तो नान्यत्किञ्चिदस्ति स्वरूपं यद्वा भूतं यच्च भव्यं परात्मन् ॥' (५-१-४६) अत्र निर्विशेषं ब्रह्माद्वितीयमिति स्फुटम् । 'सन्मात्ररूपिणेऽचिन्त्यमहिम्ने परमात्मने । व्यापिने नैकरूपैकस्वरूपाय नमोनमः ॥ (५-१८-४८) भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् । आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ॥५०॥ न यत्र नाथ विद्यन्ते नामजात्यादिकल्पनाः । तद्ब्रह्म परमं नित्यमविकारि भवानज॥५३॥ अनाख्येयस्वरूपात्मन्ननाख्येयप्रयोजन । अनाख्येयाभिधानं त्वां नतोस्मि परमेश्वर ॥५२॥ न कल्पनामृतेऽर्थस्य सर्वस्याधिगमो यतः । ततः कृष्णाच्युतानन्तविष्णुसंज्ञाभिरीड्यते ॥५४॥ सर्वार्थास्त्वमजविकल्पनाभिरेतैर्देवाद्यैर्भवति हि यैरनन्तविश्वम् । विश्वात्मा त्वमिति विकारहीनमेतत्सर्वस्मिन्नहि भवतोस्ति किञ्चिदन्यत् ॥' ५५॥ अत्र एकमेव परं ब्रह्म मायया पञ्चधाऽवस्थितम् । तच्च सन्मात्ररूपं, नामजात्यादिविकल्परहितत्वान्निर्विशेषम्- ततो वाचामगोचरम् सर्वं जगत्काल्पनिकमेव- ब्रह्मणोन्यत्किमपि नास्तीति एकमेवाद्वितीयं निर्विशेषं ब्रह्म स्फुटं प्रतिपादितम् । 'मूर्तामूर्तं तथा चापि स्थूलं सूक्ष्मतरं

तथा । तत्सर्वं त्वं जगत्कर्ता नास्ति किञ्चित्त्वया विना ॥ (५-२३-३७) अत्रापि सर्वं ब्रह्मेति प्रतिपादितम् । 'सितदीर्घादिनिश्शेषकल्पनापरिवर्जित । जन्मादिभिरसंस्पृष्टस्वप्नादिपरिवर्जित॥' (५-२९-८) अत्र निर्विकल्पं ब्रह्मेति स्फुटम् । 'योऽहं सत्त्वं जगच्चेदं सदेवासुरमानुषं । मत्तो नान्यदशेषं यत्तत्त्वं ज्ञातुमिहार्हसि ॥ (५-३३-४८) अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः । वदन्ति भेदं पश्यन्ति चावयोरन्तरं हर ॥४९॥' कृष्णवाक्यमिदम्- अत्र एकमेवाद्वितीयं ब्रह्म अविद्यया तु भिन्नमिव प्रतिभातीति स्फुटम् । 'निष्प्रपञ्चे महाभाग संयोज्यात्मानमात्मनि । तुर्यावस्थस्सलीलं च शेते स्म पुरुषोत्तमः ॥' (५-३७-६९) अत्र निष्प्रपञ्चत्वान्निर्विशेषं ब्रह्मेति स्फुटम् । 'गते तस्मिन् स भगवान् संयोज्यात्मानमात्मनि । ब्रह्मभूतेऽव्ययेऽचिन्त्ये वासुदेवमयेऽमले ॥ अजन्मन्यमले विष्णावप्रमेयेऽखिलात्मनि । तत्याज मानुषं देहमतीत्य त्रिविधां गतिम् ॥' (५-३७-७४-७५) अत्र अचिन्त्यमप्रमेयं च निर्विशेषं ब्रह्मेति स्थितम्- इति पञ्चमांशोपि निर्विशेषब्रह्मप्रतिपादनपर एव । 'न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः । सत्तामात्रात्मिके ज्ञेये ज्ञानात्मन्यात्मनः परे ॥' (६-४-३७) अत्र निर्विकल्पकं सन्मात्रं ज्ञानस्वरूपं ब्रह्मेति स्फुटम् । 'ह्रस्वदीर्घप्लुतैर्यत्तु किञ्चिद्वस्त्वभिधीयते । यच्च वाचामविषयं तत्सर्वं विष्णुरव्ययः ॥' (६-४-४४) अत्र एकमेवाद्वितीयं ब्रह्मेति प्रतिपादितम् । 'यत्तदव्यक्तमजरमचिन्त्यमजमव्ययं । अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम् ॥ (६-५-६६) विभु सर्वगतं नित्यं भूतयोनिरकारणम् । व्याप्यव्याप्तं यतस्सर्वं यद्वै पश्यन्ति सूरयः ॥६७॥ तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकांक्षिभिः ॥६८॥ अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज । पूजायां भगवच्छब्दः क्रियते ह्युपचारतः ॥७१॥' अत्र अवाङ्मनसगोचरं निर्विशेषं ब्रह्मेति प्रतिपादितम् । 'संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् । संदृश्यते वाप्यवगम्य ते वा तद्ज्ञानमज्ञानमतोन्यदुक्तम् ॥७८॥' अत्र निर्विशेषब्रह्मज्ञानमेव ज्ञानं; अन्यत्तु सविशेषब्रह्मज्ञानमज्ञानमेवेति प्रतीतम् । 'अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु । विश्वमेतत्परं चान्यद्भेदभिन्नदृशां नृणाम् ॥ (६-७-५२) प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तद्ज्ञानं ब्रह्मसंज्ञितम् ॥५३॥ तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम् । विश्वस्वरूपवैरूप्यलक्षणं परमात्मनः ॥५४॥' अत्र भ्रान्तानामेव ब्रह्मणोन्यद्विश्वमिति भेदप्रतीतिः, ज्ञानिनस्तु निर्भेदं वागगोचरं सत्तामात्रं ज्ञानस्वरूपं ब्रह्मेति पश्यन्ति,तदेव परमात्मनो नीरूपं परं स्वरूपमिति सिद्धमद्वैतम्। किं चात्र ब्रह्मणोस्ति रूपत्रयं- तत्रैकं विश्वमयं, अन्यद्ज्ञानस्वरूपं, अपरं त्वरूपमिति प्रतीयते- तथा चोक्तं ज्ञानवाशिष्ठे— 'आद्यं हि मायामयदिव्यगात्रं द्वितीयमानन्दचिदेकरूपम् । तृतीयमत्यन्तमरूपमेवं क्रमेण शंभुं त्रिविधं प्रपद्ये' इति । अतएव सत्यज्ञानानन्दानिर्विशेषं ब्रह्म लक्षयन्तीति मयोक्तं प्राक् । नचैवमरूपे ब्रह्मणि सत्ताया अप्यभावे शशशृङ्गकल्पमेव तत्स्यादिति वाच्यं, तद्वदसत्ताया अप्यभावात्— असत्खलु शशशृङ्गम्- अरूपं तु ब्रह्म असद्विलक्षणं सद्विलक्षणं च । अतएव तदस्तीति नास्तीति च वक्तुं न शक्यते, तथापि अस्तीत्येव तत्प्रतिपत्तव्यम्-- तदुक्तं ज्ञानवाशिष्ठे- 'अतोस्यालक्षणत्वेन सदसत्परतास्त्यपि । शशशृङ्गसमानत्वं निदाघाशक्यमीरितुम् ॥ विशेषसत्ताभावेपि सत्तासामान्यता यतः ।

निर्द्वन्द्वत्वेन संसिद्धा ततस्सत्तादिकं भवेत् ॥ बहुश्रुत्यन्तगदितं सर्वातीतमरूपकम् । तद्ब्रह्मान्यत्कथं नास्तीत्यहं ब्रूयां विधे वद' इति, 'तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् । मनसा ध्याननिष्पाद्यं समाधिस्सोभिधीयते ॥' (६-७-९२) अत्र ब्रह्मणः स्वरूपं निर्विकल्पमित्युक्तं भवति । 'तद्भावभावमापन्नस्ततोसौ परमात्मना । भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥९५॥ विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तः कः करिष्यति ॥९६॥' अत्र आत्मपरमात्मनोरैक्यमेव, तद्भेदस्त्वज्ञानप्रयुक्त एव, तस्मिंश्चाज्ञाने विज्ञानेन नष्टे सति अद्वैतमेव सिद्ध्यतीति स्फुटम् । अनेन च अज्ञानस्य सकार्यस्य नाशाज्जीवात्मपरमात्मनोरैक्याद्ब्रह्मणस्सजातीयविजातीयस्वगतभेदाभावान्निर्विशेषत्वं सिद्धम् । 'विष्ण्वाख्ये निर्मले ब्रह्मण्यवाप नृपतिर्लयम् ॥१०८॥ आत्यन्तिको विमुक्तिर्यो लयो ब्रह्मणि शाश्वते' (६-८-१) अत्र जीवस्य ब्रह्मणि लयो मोक्ष इत्युक्तत्वेन सायुज्यं मुक्तिरिति सिद्धम् । कार्यस्य कारणे लयो नाम कारणसायुज्यं हि, इदं च सायुज्यं रामानुजेनानभ्युपगतमिति तन्मतं दुष्टमेव । नचाकार्यस्य जीवस्य कथं ब्रह्म कारणमिति वाच्यं, स्वतो जीवस्य ब्रह्मत्वेन ब्रह्माकार्यत्वेपि यदुपाधेर्ब्रह्मकार्यत्वादिति- यथा घटे नष्टे सति घटाकाशो महाकाशे लीयते, एवमज्ञानान्तःकरणोपाधिनाशेसति जीवो ब्रह्मणि लीयते- ब्रह्मांशो हि जीवः घटाकाश इव महाकाशस्यांशः । **एतेन** मोक्षदशायां जीवस्यैव नाशात्कस्य मुक्तिरिति **प्रत्युक्तम्**—जीवस्य ब्रह्मात्मनावस्थितिरेव न नाशो मुक्ताविति । 'त्वत्प्रसादान्मया ज्ञातं ज्ञेयमन्यैरलं द्विज । यदेतदखिलं विष्णोर्जगन्न व्यतिरिच्यते ॥' (६-८-८) अत्र विष्णुरेव जगन्न तु ततोन्यदिति सिद्धमद्वितीयं ब्रह्म । 'स सर्वस्सर्ववित्सर्वस्वरूपो रूपवर्जितः ॥२७॥' अत्र वस्तुतोऽरूपमपि ब्रह्म मायया सर्वस्वरूपमिति स्फुटम् । कथमन्यथा सर्वस्वरूपत्वारूपत्वयोस्सामानाधिकरण्यं भवेत् । 'यज्ञैर्यज्ञविदो यजन्ति सततं यज्ञेश्वरं कर्मिणो यं वै ब्रह्ममयं परापरमयं ध्यायन्ति च ज्ञानिनः । यं संचिन्त्य न जायते न म्रियते नो वर्धते हीयते नैवासन्नच सद्भवत्यपि ततः किं वा हरे श्रूयताम् ॥५८॥' अत्र सदसद्भावनिर्मुक्तं ब्रह्म निर्विशेषमिति स्फुटम् । 'इति विविधमजस्य यस्य रूपं प्रकृतिपरात्ममयं सनातनस्य । प्रदिशतु भगवानशेषपुंसां हरिरपजन्मजरादिकां स सिद्धिम् ॥६४॥' पुराणचरमश्लोकोयमाशीर्वादात्मकः- अत्र सच्चिदानन्दात्मकं यस्य स्वरूपमेकमेवाद्वितीयं ब्रह्मापि मायया जगज्जीवेश्वरमयं विविधमिव प्रतिभाति- रज्जुस्सर्पदण्डभूच्छिद्रादिमयीवेति स्फुटमवगम्यते । नहि प्रकृत्याद्यतीतं ब्रह्म प्रकृत्यादिस्वरूपं भवितुमर्हति मायां विना । नच ब्रह्मैव जगदादिरूपेण परिणतमिति न मायावादाश्रय इति वाच्यं, परिणामित्वेसति विकारित्वेनानित्यत्वापत्तेर्ब्रह्मणः- अविकारि ब्रह्मेत्यत्रैव पुराणे बहुश उक्तत्वात् ।

एवमविकारित्वेन नित्यत्वादेव ब्रह्म परमार्थ इत्युच्यते । 'अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यत' इति । तस्माद्यदि ब्रह्म परिणमत इत्येव तवाग्रहस्तर्हि मायाद्वारेति विद्धि । एवमभ्यासफले दर्शिते— तथा च षष्ठांशोपि निर्विशेषब्रह्मपर एव । एवं पुराणं सर्वमपि निर्विशेषब्रह्मपरमेवेति सिद्धम् । नच 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥' इति लिङ्गषट्कमध्ये

लिङ्गत्रयमेव दर्शितमिति वाच्यं, अतिरिक्तमपि लिङ्गत्रयं प्रदर्श्यत एव- सर्वस्य तर्कादिशास्त्रस्य च द्वैतपरत्वादद्वैतमपूर्वमेवेति सिद्धैव तावदपूर्वता । निदाघखाण्डिक्यकेशिध्वजभरतादिचरित्रवर्णनादर्थवादश्चोक्त एव । ब्रह्मणो देशादिपरिच्छेदाभावादिरूपा उपपत्तिश्चोक्तैवेति । **तस्मात्प्रमाणतया सम्प्रतिपन्नं विष्णुपुराणं निर्विशेषब्रह्मपरमेव** । एवं पुराणान्तराण्यप्येतत्पराण्येव । नच तान्यप्रमाणानीति वाच्यं, सर्वेषां पुराणानां व्यासकर्तृकत्वेनाप्रामाण्यायोगात्- 'अष्टादशपुराणानां कर्ता सत्यवतीसुत' इति स्मरणात् । 'प्रमाणानां प्रमाणं स्याद्व्यासवाक्यं जगत्त्रये । प्रामाणिकेषु सर्वेषु व्यासस्यैव महामतेः ॥ प्रामाणिकत्वं सुतरां सर्वदा निश्चितं मया ।' इति ज्ञानवाशिष्ठे स्मरणात् । नच विष्णुपुराणं पराशरेण कृतं नतु व्यासेनेति वाच्यं, अष्टादशपुराणान्तर्गतत्वादस्य । किंतु पराशरमैत्रेयसंवादरूपतया व्यासेनैव ग्रथितमिति कृत्वा पराशरसंहितेत्युच्यते विष्णुपुराणं- यथा सूतशौनकसंवादरूपतया व्यासेनैव ग्रथितः- स्कान्दपुराणैकदेशस्सूतसंहितेत्युच्यते- तद्वत् । साच सूतसंहिता सर्वा निर्विशेषब्रह्मपरैव । तच्च परस्तात्प्रदर्शयिष्यते । अधुना तु श्रीभाष्ये रामानुजेन कृतस्य कोलाहलस्य खण्डनमेवानुस्रियते ॥

## श्रीभाष्ये अद्वैतमतविरुद्धांशखण्डनम् ।

तथाहि- **यदुक्तं रामानुजेन**—'तस्यात्मपरदेहेषु सतोप्येकमय'मित्यत्र सर्वेष्वात्मसु ज्ञानैकाकारतया समानेषु सत्सु देवमनुष्यादिप्रकृतिपरिणामविशेषरूपपिण्डसंसर्गकृतमात्मसु देवाद्याकारेण द्वैतदर्शनमतथ्यमित्युच्यते- पिण्डगतमात्मगतमपि द्वैतं न प्रतिषिध्यते- देवमनुष्यादिविविधविचित्रपिण्डेषु वर्तमानं सर्वमात्मवस्तु सममित्यर्थः । यथोक्तं भगवता- 'शुनि चैव श्वपाके च पण्डिताः समदर्शिन' इति 'निर्दोषं हि समं ब्रह्मे'ति च । तस्यात्मपरदेहेषु सतोपीति देहातिरिक्ते वस्तुनि स्वपरविभागस्योक्तत्वादिति, **तदसत्**—एको व्यापीति पूर्वश्लोके आत्मन एकत्वस्य कण्ठोक्तत्वात्- आत्मपरदेहेषु सतस्तस्यैकमयं यद्विज्ञानं तत्परमार्थ इत्यात्मैक्यज्ञानस्य परमार्थत्वेन द्वैतिनोऽतथ्यदर्शिन इति द्वैतज्ञानस्यापरमार्थत्वेन चोक्तत्वात् । य एवमात्मैक्यं जानाति स तथ्यदर्श्यपि प्रमातैव, प्रमातारश्च भिन्ना इति प्रमातृदृष्ट्या स्वपरविभाग उक्तो न त्वात्मदृष्ट्या- आत्मन एकस्योपक्रान्तत्वादेकत्वमित्युपसंहृतत्वाच्च । इहाप्यात्मपरदेहेषु सतस्तस्येत्यात्मन एकत्वमेव निर्दिष्टं, तदुपाधिदेहानामेव नानात्वमिति नात्मभेदसिद्धिः । यदि मूलकर्तुरियं विवक्षा तर्हि- 'तेषामात्मान्यदेहेषु सतामेकमयं हि यत्' इत्येव श्लोकः क्रियेत, भगवता च समदर्शित्वंनाम एकात्मदर्शित्वमेवाभिमतं- एकस्यैवात्मनः ब्रह्माभिन्नत्वात्- निर्दोषं हि समं ब्रह्मेत्युक्तम् । तस्मादनेकपिण्डावस्थितिप्रयुक्तमात्मनानात्वमेव निषिध्यत इति सिद्धमात्मैकत्वम् । न चात्मैकत्वं प्रकाराद्वैतमिति वाच्यं, आत्मनस्स्वतन्त्रस्य सर्वशेषिणः कस्यचित्प्रकारत्वायोगात् । नच ब्रह्मणः प्रकारिणः प्रकारभूत आत्मेति वाच्यं, ब्रह्मणो निर्गुणस्य प्रकारित्वाभावाद्ब्रह्मात्मनोरभेदश्रवणाच्च । **एतेन**- प्रकार्यद्वैतं ब्रह्माद्वैतमिति **प्रत्युक्तम्**—आत्मब्रह्माभेदस्यैव ब्रह्माद्वैतत्वात् । नच नानात्मनां कथमेकब्रह्माभेद इति वाच्यं, आत्मन एकत्वात्- एको व्यापीति ह्युक्तम् । नच जात्येकत्वं तत्र विवक्षितमिति वाच्यं, सिद्धे आत्मनानात्वे जात्येकत्वं विवक्षितमिति वक्तुं शक्यं, नतु तदेवाधुनापि

सिद्धमिति । नच त्वमहमयमिति भेदप्रत्यक्षादात्मनानात्वसिद्धिरिति वाच्यं, तस्योपाधिगतत्वात्- तच्चोक्तं हि विष्णुपुराण एव- 'त्वं चान्ये च नच त्वं च त्वं नान्ये नाहमप्यह'मिति । लोको हि देहादिसङ्घात-मात्मत्वेन प्रतिपद्य स्वसङ्घातमहमिति स्वपुरोवर्तिनं त्वमिति तदुभयव्यतिरिक्तमयमिति च प्रत्येति, तथा च सङ्घातविषय एव त्वमहमादिभेदप्रत्यक्षानुभवो नतु तदतिरिक्तशुद्धात्मविषय इति । नच सुखदु.खादि-भेदप्रत्यक्षादात्मभेदसिद्धिरिति वाच्यं, तस्याप्यन्तःकरणविषयत्वात् । अन्तःकरणपरिणामो हि सुखदुःखे तच्च विष्णुपुराण एवोक्तम्- 'मनसः परिणामोयं सुखदु.खादिलक्षण' इति । अन्तःकरणं चानेकमिति सुखदुःखव्यवस्थासिद्धिः । किंच लोकसिद्धमेव यदि जीवनानात्वं, शास्त्रं वदेत्तर्ह्यज्ञातार्थप्रतिपादकत्वा-भावाच्छास्त्रमनर्थकत्वेनाप्रमाणं भवेत् । नच औपाधिकजीवनानात्वस्य लोकसिद्धत्वेपि निरुपाधिकपरि-शुद्धात्मनानात्वस्य तदसिद्धत्वात्तत्प्रतिपादनेन शास्त्रमर्थवदिति वाच्यं, निरुपाधिकात्मनानात्वस्य शास्त्र-तात्पर्याविषयत्वस्य दर्शितत्वात् । नच 'नित्यो(ऽ)नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामा'निति श्रुत्या तदुक्तमिति वाच्यं, कामिनो चेतनानां सोपाधिकात्मत्वेन निरुपाधिकात्मत्वाभावात् । कामो ह्यन्तःकरणधर्मः- 'कामस्सङ्कल्प' इति प्रकृत्य 'सर्वं मन ए'वेति श्रुतेः । नच सोपाधिकानां जीवानां कथं नित्यत्वमिति वाच्यं, अनित्यानामिति पदविभागात् । यद्वा देहापेक्षया नित्यानामिति । **यदुक्तम्**—एकमयमित्यत्र प्राचुर्यार्थे मयट्- एकशब्दश्च भावप्रधान इति ऐक्यप्रचुरमित्यर्थ इति श्रुत-प्रकाशिकायां, **तदयुक्तम्**—भावार्थबोधकप्रत्ययाभावात् । ऐक्यानैक्ययोः प्रचुर्याप्राचुर्याभ्यामात्मनि स्थितेः क्वाप्यप्रतिपादनात् । विरुद्धधर्मयोस्तयोरेकत्र स्थित्ययोगाच्च । **यच्चोक्त**मेकशब्दस्समानवाचीति **तदप्ययुक्तम्**—एको व्यापी सम इति एकत्वस्य समत्वात्पृथगुक्तत्वात् ।

**यदुक्तं** 'द्वैतिनोऽतथ्यदर्शिन' इति सामान्येनोक्ते द्वैतनिषेधे कथमात्मद्वैतनिषेधसिद्धिरिति **तदसत्**—तस्यात्मपरदेहेषु सत इत्यात्मन एव प्रकृतत्वात् । नच प्रामाणिकस्यात्मद्वैतस्य कथं निषेध इति वाच्यं, अप्रामाणिकत्वादात्मद्वैतस्य- नहि प्रत्यक्षादय आत्मद्वैते प्रमाणानि भवन्ति- तेषामनात्मद्वैते पर्यवसन्नत्वात्- प्रत्युतात्मैक्यमेव प्रामाणिकं त्वदभिमतविष्णुपुराण एव तस्योक्तत्वात् ।

**यदुक्तं रामानुजेन**—'यद्यन्योस्ति परः कोपि मत्तः पार्थिवसत्तम' इत्यत्र परशब्दान्यशब्दयोः प्रयोगायोगान्नात्मैक्यं प्रतीयत इति, **तदसत्**—सजातीयविजातीयपरत्वेन शब्दद्वयप्रयोगात् । न चात्मन एकत्वेन सजातीयभेदाभावेपि देहादेर्विजातीयस्य सत्त्वात्कथं विजातीयभेदाभाव इति वाच्यं, विजा-तीयवस्तुन आत्मनि कल्पितत्वेन कल्पितस्याधिष्ठानानतिरिक्तत्वादिति । एवं भेदद्वयाभेदेनाद्वैते प्रति-पादितेपि श्रोतुस्तत्र निष्ठाऽनुदयात्पुनस्सजातीयाभावं प्रतिपादयति, यदेति- 'यदा समस्तदेहेषु पुमानेको व्यवस्थित' इति सत्यपि देहभेदे नात्मभेद इत्यर्थः । एवं पुरुषैकत्वस्य कण्ठोक्तत्वादात्मैक्यं न प्रतीयत इत्ययुक्तमेव । यद्वा मत्तोन्यः अहमिव प्रकृतेः परश्च कोपि पुमान्यद्यस्तीति तदर्थः । अथवा 'अव्यक्तात्पुरुषः पर' इति, 'पुरुषान्न परं किञ्चि'दिति च श्रुतेः किञ्चित्प्रत्यपरत्वरहितस्सर्वं प्रति परत्व-वांश्च पुरुषः पर इत्युच्यते, तथाच- मत्तोन्यः कोपि परः पुरुषो यद्यस्तीति तदर्थः । अस्मिन् पक्षे यदीति

पूर्वश्लोकस्य, यदेत्युत्तरश्लोकस्य च सङ्गतिस्समीचीना । तथाच- समस्तदेहेषु ममैकस्यैव पुरुषस्यावस्थितत्वेन मत्तोन्यस्य पुरुषस्याभावादयमहमन्य इति वक्तुमशक्यत्वेन को भवान् सोहमित्येतद्वचो विफलमिति श्लोकद्वयस्यार्थः सम्प्रतिपन्न इति सिद्धमात्मैकत्वम् । नच प्रतिशरीरमेकैकः पुरुषोस्तीति तात्पर्यमिति वाच्यं, तस्य सर्वैर्विदितत्वेन वक्तव्यत्वाभावात् । पुरुषभेदे सति को भवान् सोहमिति च सफलत्वेन विफलत्वाभावाच्च । किं च समस्तदेहेषु पुमानेक इति कण्ठोक्तस्य देहनानात्वस्य जीवैकत्वस्य वा कथमन्यथात्वं वक्तुं शक्यमनुन्मत्तस्य । नच य इदानीं मनुष्यदेहे स्थितस्स इतः प्राग्गोदेहे, ततः प्राक्तु महिषदेहे इत्येवं सर्वदेहेष्वेक एवात्मा स्थित इत्युच्यत इति वाच्यं, सर्वास्तिकजनविदितत्वेनास्यार्थस्यावक्तव्यत्वात् । आस्तिको हि देहव्यतिरिक्तमात्मानं मन्यते । किंच वर्तमानकालाभिप्रायेणैव व्यवस्थित इत्युक्तं, नतु कालत्रयापेक्षया- यदा तदेत्येककालस्यैवोक्तत्वात् । अपिचैवं वर्णने समस्तशब्दस्वारस्यं च भज्येत । सर्वेषु देवशरीरेषु सर्वेषु मनुष्यशरीरेषु सर्वेषु पशुशरीरेष्वित्येवं समस्तेषु देहेष्वेक आत्मास्तीति वर्णने हि समस्तशब्दस्वारस्यं सिद्ध्यति- अन्यथा तु एकस्मिन्नेव देवशरीरे एकस्मिन्नेव मनुष्यशरीरे एकस्मिन्नेव पशुशरीरे चैक आत्मास्तीति वर्णने समस्तशब्दो स्वरसो भवेत्तस्मादात्मैक्यं सिद्धमेवैतच्छ्लोकद्वयेनेति स्यादेतत् ।

**ननु** आत्मनानात्वेपि को भवान् सोहमिति प्रश्नप्रतिवचने व्यर्थे एव- सर्वेषामप्यात्मात्मत्वादिति, **चेन्मैवम्**—तथासति देहात्मवादेपि ते व्यर्थे एव- सर्वेषामपि देहत्वात् । यद्वा मनुष्यलोके सर्वेषामपि मनुष्यत्वात् । नच नामजात्यादिविशेषसत्त्वाद्देहात्मवादे प्रश्नप्रतिवचने युज्येते इति वाच्यं, देहातिरिक्तात्मवादिनामपि असौ नामाहमिति व्यवहारदर्शनात् । केवलदेहस्य नामजात्याद्यभावाच्च । नहि मृते देवदत्तदेहे भुवि वर्तमाने सति देवदत्तो वर्तत इति कोपि प्रत्येति, किंतु देवदत्तो मृत इत्येव प्रत्येति । तस्माद्देवदत्तादिनामब्राह्मणत्वादिजातिः ब्रह्मचारित्वाद्याश्रमश्च देह्यात्मगत एवेति कृत्वा आत्मनानात्वे सत्येव देवदत्तोहं ब्राह्मणोहं यज्ञदत्तोयं क्षत्रियोयमित्यादिव्यवहारस्सम्भवतीति को भवान् सोहमिति प्रश्नप्रतिवचने युज्येते, आत्मैकत्वे तु नैवेति कृत्वा प्रश्नप्रतिवचनानर्थक्यनिरूपणेनापि सिद्धमेवात्मैकत्वमिति ।

**यदुक्तं सुदर्शनेन**—पुमानेक इत्यत्रैकशब्द आकारैक्यपर इति **तदसत्**—तथासति पुमांस एकाकारा इति वक्तव्यत्वात् । त्वदुक्तस्यायथाश्रुतार्थत्वाच्च । एवं यथाश्रुतार्थं विहायापार्थं कल्पयतस्तव कश्शास्ता वैवस्वतादृते । किंच सर्वेषामप्यात्मनां ज्ञानैकाकारत्वे सति व्यावर्तकदेवाद्याकाराभावे च सति किं प्रयुक्त आत्मभेदः ? नच व्यक्तिभेदप्रयुक्त इति वाच्यं, व्यक्तिभेदप्रयोजकात्माकारभेदाभावात्, सिद्धे व्यक्तिभेदे आत्मभेदसिद्धिः, सिद्धे आत्मभेदे व्यक्तिभेदसिद्धिरित्यन्योन्याश्रयाच्च इति । **यदुक्तं रामानुजेन** वेणुरन्ध्रविभेदे सत्यत्रापि आत्मस्वरूपैक्यमुक्तं, नत्वात्मैक्यम्- दृष्टान्ते च वाय्वंशानां स्वरूपैक्यमुक्तं, नत्वंशैक्यमिति, **तत्तुच्छम्**—अभेदव्यापिनो वायोरिति वायोरेव ग्रहणेन वाय्वंशानामग्रहणात्- वेणुरन्ध्राणां नानात्वेपि तद्व्यापिनो वायोरभेदो यथा तथा देहानां नानात्वेपि तद्व्यापिन आत्मनोऽभेद

इति हि यथाश्रुतार्थः- तत्परित्यागोस्त्यायुक्त एव । यद्यपि वायुस्सावयवत्वात्सांश एव, तथापि तद्गतं सांशत्वं नेह गृहीतं, किंतु अभेदव्यापित्वमेव- अभेदव्यापिन इति कण्ठोक्तत्वात् । क्वचिदेवांशे हि कश्चिदर्थः कस्य चिद्दृष्टान्तीक्रियते- सर्वांशसाम्ये दृष्टान्तदार्ष्टान्तिकभावासिद्धेः- वायोरभेदव्यापित्वं गीतास्वप्युक्तम्- 'वायुस्सर्वत्रगो महा'निति । **एतेन** स्वत एकाकाराणामुपाधिवशादवान्तरभेदसद्भावे दृष्टान्तोपन्यास इति **प्रत्युक्तम्**—एकस्यैव वायोरुक्तत्वेन बहूनां वाय्वंशानामनुक्तत्वादिति । **यदुक्तं सुदर्शनेन**—'सितनीलादिभेदेन यथैकं दृश्यते नभः । भ्रान्तदृष्टिभिरात्मापि तथैकस्सन् पृथक्पृथ'गित्यत्रापि नभसः प्रदेशभेदाङ्गीकारेणात्मभेद एवोक्त इति, **तत्तुच्छम्**—नभो विभु निरवयवं चेति नैयायिकादिमतमाश्रित्य निरवयवस्य व्यापकस्यात्मनो नभोदृष्टान्तोपन्यासात् । अन्यथा दृष्टान्तानुरोधान्नभ इवात्मापि सावयव एव भवेत् । भवतु वा नभस्सावयवमात्मा निरवयवः, तथापि नात्मैक्ये काचित्क्षतिः-- सावयवस्यापि नभस एकत्वात् । एकमपि नभो यथा भ्रान्तदृष्टिभिरनेकत्वेन गृह्यते, तथा एक एवात्मापीति विवक्षितत्वात् । नहि नभोवदात्मनस्सावयवत्वं, निरवयवत्वं वेह विवक्षितं, किं त्वेकत्वमेव- तच्च नभसस्सम्प्रतिपन्नम् । अतएव विप्रतिपन्ने आत्मैकत्वार्थे तद्दृष्टान्ततयोपन्यस्तम् । तस्माद्वायुवन्नभोवच्चाभेदव्याप्येक एवात्मेति सुस्थम् । **यदुक्तं** 'घटध्वंसे घटाकाशो न भिन्नो नभसो यथा । ब्रह्मणा हेयविध्वंसे विष्ण्वाख्येन तथा पुमा'निति शौनकवचनमपि नभस्यंशभेदाभिप्रायेण जीवस्य परस्मादात्मन औपाधिकवैषम्यविरहे दृष्टान्तसमर्पणपरं वेदितव्यमिति, **तदसत्**—यो नभसः प्रदेशो घटेऽवस्थितस्सन् घटाकाश इति व्यवह्रियते- सः घटे ध्वस्तेसति किं स्वस्मादेवाभिन्नो भवति ? यद्वा परस्मान्नभःप्रदेशात् ? उत प्रदेशिनो नभसः ? नाद्यः घटध्वंसात्प्रागपि स्वस्मादभिन्नत्वस्य सत्त्वात् । न द्वितीयः-- भिन्नप्रदेशयोरैक्यायोगात् । न तृतीयः- ध्वंसात्प्रागपि तस्य सत्त्वात् - नहि प्रदेशिनस्सकाशात्प्रदेशो भिद्यते । नच घटस्य वक्त्रेपि हिते सति प्रदेशिनो नभसस्सकाशात्प्रदेशो भिद्यते- घटान्तर्गतनभःप्रदेशस्य घटबहिर्गतप्रदेशिनभस्सम्बन्धाभावादिति वाच्यं, यदि घटान्तर्गतं नभः प्रदेशि न भवति किंतु प्रदेश एव तर्हि घटबहिस्सन्निहितमपि नभः प्रदेशि न भवेदेव- तस्यापि नभःप्रदेशत्वाविशेषादिति । नचेष्टापत्तिः- ध्वस्तेपि घटे तत्प्रदेशाकाशस्य प्रदेशिनभ ऐक्यासिद्धेः । तस्माद्दर्शितशौनकवचनं नभस्यंशभेदाभिप्रायप्रयुक्तं न, किंतु अपरिच्छिन्नं नभ इत्यभिप्रायकृतमेव- घटे ध्वस्ते सति घटपरिच्छिन्नं नभः परिच्छेदकाभावेनापरिच्छिन्नं महाकाशमेव भवतीति तदाशयात् । एवमन्तःकरणाद्युपाधौ नष्टेसति तत्परिच्छिन्नं चैतन्यं जीवसंज्ञं परिच्छेदकाभावेनापरिच्छिन्नं परमात्मचैतन्यमेव भवतीति सिद्धम् । मुक्तिदशायां जीवब्रह्मणोस्सायुज्यं शौनकवचनादेव । नच मुक्तिदशायां भवतु व्यवहारदशायां तु जीवब्रह्मभेद एवेति वाच्यं, व्यवहारदशायामपि जीवब्रह्माभेद एव- नहि घटे सत्यपि घटाकाशो महाकाशादतिरिच्यते । एवमन्तःकरणाद्यवच्छिन्नमपि चैतन्यं न पूर्णचैतन्यादतिरिच्यते, तदतिरिक्तत्वप्रतीतिस्तु, भ्रान्तिप्रयुक्तेति तद्भ्रान्तिनिरासाय तद्भ्रान्तिप्रयोजकाज्ञाननिरासाय तदज्ञानकृतान्तःकरणादिनिरासाय च ब्रह्मजिज्ञासा कर्तव्यैवेति न ब्रह्ममीमांसाया आनर्थक्यम् ।

**यदुक्तम्**—'यथाग्निरग्नौ संक्षिप्तस्समानत्वमनुव्रजे'दिति साम्यस्योक्तत्वान्न जीवब्रह्मणोस्सायुज्यमिति, **तदप्यसत्**—तत्र समानत्वमित्यस्यैकत्वमित्यर्थात्- नह्यग्निरग्नौ निक्षेपात्प्रागग्न्यसमानः, येन निक्षेपादग्निसमानत्वमग्नेरुच्येत । नच समानपदस्यैक्यार्थवर्णनमयुक्तमिति वाच्यं, 'तत्पुरुषस्समानाधिकरणः कर्मधारय' इत्याद्यनुशासनानुरोधात् । सामानाधिकरण्यमित्यत्र समानपदस्य एकमित्येवार्थात् । जले जलनिक्षेपाद्युदाहरणान्तरानुरोधाच्च । **यदुक्तं** रामानुजेन—'सोहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोह'मित्यत्र स इति अहमिति त्वमिति सर्वमिति च भेदनिर्देशान्नात्मैक्यमिति **तदसत्**—व्यावहारिकभेदमनूद्य पारमार्थिकाभेदस्योक्तत्वात् यद्रजतं सा शुक्तिरितिवत् । नच परमार्थोपदेशसमये व्यावहारिकभेदानुवादोऽयुक्त इति वाच्यं, भेदानुवादाभावे अभेदोपदेशायोगात्- भेदज्ञानपूर्वकं ह्यभेदज्ञानं- इयं मृदयं घट इति भेदज्ञाने सत्येव मृदभिन्नो घटइत्युपदेष्टुं गुरोर्ज्ञातुं च शिष्यस्य शक्यते । **यदुक्तं** भेदमोहमित्यस्य देवाद्याकारप्रयुक्तात्मभेदभ्रान्तिरिति, **तदसत्**—विशेषवाचिपदाभावात् । ऐतदात्म्यमिदं सर्वमिति प्रक्रान्ताभेदविरुद्धस्यैव भेदस्येह त्यक्तव्यत्वेनोपदेष्टव्यत्वाच्च । तत्र मम सर्वस्य चैकात्मस्वरूपत्वेनाभेदात्त्वमहमिदमिति भेदमोहं त्यजेति यथाश्रुतार्थप्रहाणस्यायुक्तत्वाच्चेति । सच यथोपदेशमकरोदित्याह- तत्याज भेदं परमार्थदृष्टिरिति । परमार्थश्चोक्त एव परमार्थस्त्वमेवैको नान्योस्तीति एकमयं विज्ञानं परमार्थ इति । एको व्यापी समश्शुद्ध आत्मा परमार्थ इति । 'परमार्थस्त्वसंलाप्यो गोचरो वचसां न य' इति, 'परमार्थश्च मे प्रोक्तो यथाज्ञानं प्रधानत' इति । तस्मात्सच्चिदानन्दलक्षणं प्रत्यगभिन्नं ब्रह्मैव परमार्थ इति तद्ज्ञानमेव परमार्थदर्शनं, तदन्यद्भेदज्ञानं तु भ्रान्तिज्ञानमेव । नचात्मसु देवमनुष्यादिभेदं तत्याजेत्यर्थ इति वाच्यं, भेदान्तरात्त्यागस्यानुक्तत्वात् । सति विशेषाभावे सामान्ये एव शब्दस्य पक्षपातात् । नच देवादिभेदेऽपध्वस्ते इति भेदविशेष उक्त एवान्यत्रेति वाच्यं, 'रूपभेदस्तु बाह्यकर्मप्रवृत्तिजः । देवादिभेदेऽपध्वस्ते नास्त्येवावरणे हि स' इति श्लोकस्य देवादिभेदे देवादिभेदहेतौ आवरणे अहङ्कारे अपध्वस्ते सुषुप्त्यादौ नष्टेसति बाह्यकर्मप्रवृत्तिजः स रूपभेदः देवादिभेदो नास्त्येवेत्यर्थः । तथा च बाह्यकर्मप्रवृत्तिज इति विशेषणात्तत्र रूपभेदो देवादिभेदमात्रपर एवास्तु । नहि वयमात्मनो देवादिरूपभेदाभावं व्यासेधामः- आकाशवद्वायुवच्चाभेदव्यापित्वादात्मनस्स्वत एकत्वमस्तु नाम घटादिवेणुरन्ध्राद्युपाधिवशादाकाशवद्वायुवच्चात्मनोपि देवादिशरीरोपाधिवशादनेकत्वं भवेदिति शंकोत्तरत्वेनोक्तोयं श्लोकः- तथा च उपाधिकृतस्य भेदस्य उपाधिनाशेऽभावादौपाधिकस्स भेदोऽकिञ्चित्कर एवेति कृत्वा निर्भेद एवात्मेति सिद्धम् । तदेव ह्युपक्रान्तं- एको व्यापीति, तदेव चोपसंहृतं एकत्वमिति च । तस्मादन्यत्र देवादिभेदविशेषाभावस्योक्तत्वेपीह भेदसामान्याभाव एवोक्त इति नात्र तस्यैव ग्रहणमुचितं- नहीह भेदविशेषाभाव उक्तः, किंतु भेदमात्रस्यैवाभावः । तथाहि- 'परमार्थस्तवोदितः । एकमेवमिदं विद्धि न भेदि सकलं जगत् ॥ परार्थसारभूतं यत्तदद्वैतमशेषतः । निदाघोप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥ सर्वभूतान्यभेदेन ददर्श स तदात्मन' इति । नच सर्वभूतानि सर्वानात्मनः सुरनरत्वादिभेदराहित्येन स्वात्मनोऽभेदेन समत्वेनापश्यत्- नत्वेकत्वेन- तथासति सर्वभूतान्यात्मन इति

पदवैयर्थ्यप्रसङ्ग इति वाच्यं, भवन्तीति भूतानीति व्युत्पत्त्या भूतशब्दः प्राणिपरः, नतु शुद्धात्मपरः— तस्य भूतत्वाभावात् । नहि शुद्ध आत्मा कस्यचित्कार्यं भवति- 'अजो नित्य' इति शास्त्रात् । 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ती'ति श्रुतावपि भूतशब्दः प्राणिपर एव । प्राणिनश्च ब्रह्माद्यास्तम्बपर्यन्ताः प्रसिद्धाः । ते सर्वे सर्वभूतानीत्युच्यन्ते- तानीमानि सर्वाणि भूतानि सच्चिदानन्दलक्षणे परिपूर्णे आत्मनि मायया कल्पितत्वात्कल्पितस्य चाधिष्ठानानतिरेकादात्मनोऽभिन्नान्येव । यद्वा सर्वभूतानामात्मकार्यत्वात्कार्यस्य च कारणाभिन्नत्वात्सर्वभूतान्यात्माभिन्नान्येवेत्यात्माभेदेनापश्यदित्युक्तम् । नच ब्रह्मण्येव सर्वभूतानि कल्पितानि नात्मनीति वाच्यं, ब्रह्मण एवात्मत्वात् । **एतेन**- ब्रह्म चात्मनोऽभेदेन तादात्म्येनापश्यदिति **प्रत्युक्तम्**— अभेदेनेत्यस्य तादात्म्येनेत्यर्थवर्णनस्यायुक्तत्वात् । किंच ब्रह्मात्मनोस्तादात्म्यं न सम्भवत्येव तव मते- भिन्नद्रव्यत्वादुभयोः- चिदचिदीश्वरा हि परस्परविलक्षणं द्रव्यत्रयं, न ह्येकद्रव्यस्यान्यद्रव्यतादात्म्यं भवितुमर्हति । 'मिथ्येतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यत' इति विष्णुपुराणात् । नच जीवेश्वरावुभावपि चिद्द्रव्यमेवेति वाच्यं, स्वमतभङ्गप्रसङ्गात् । तथासत्यभेदसम्भवाच्च । नच जीवेश्वरयोर्भिन्नद्रव्यत्वेपि कार्यकारणभावसत्त्वात्तादात्म्यसिद्धिरिति वाच्यं, जीवस्याजत्वेन कार्यत्वाभावात्, परिणामवादिनस्तव मते भिन्नद्रव्ययोः कार्यकारणभावस्यैवायोगात्— एकद्रव्ययोर्हि घटमृत्तिकयोः कार्यकारणभावायोगः- कारणं हि कार्यात्मना परिणमते । तस्मात्कार्यकारणयोरेकद्रव्यत्वे सत्येव कार्यस्य कारणात्मकत्वं सिद्धमिति न भिन्नद्रव्ययोर्जीवेशयोस्तादात्म्ययोगः । नच भिन्नद्रव्ययोरप्याकाशवाय्वोः कार्यकारणभावोस्तीति वाच्यं, द्वयोरप्यचिद्द्रव्यत्वेनैकद्रव्यत्वात् । चिदिति अचिदिति ईश्वर इति च द्रव्यत्रयमेव हि तव मते । येतु नैयायिकादयो नवद्रव्यवादिनस्ते आकाशाद्वायुर्जात इति न वदन्ति, किंतु आकाशवाय्वादीनि नवापि द्रव्याण्यजानि नित्यानि चेति सङ्गिरन्ते । तस्माच्चिदचिदीश्वराणां नान्योन्यतादात्म्यसिद्धिः । नच मनुष्योहमिति चिदचितोस्तादात्म्यं प्रत्यक्षं दृश्यत इति वाच्यं, तस्य भ्रान्तिप्रयुक्तत्वात्- अनात्मनि देहादावात्मेति विपरीतप्रत्ययो हि भ्रान्तिरिति सम्प्रतिपन्नम् । नचैवं जीवस्य ब्रह्माहमिति ब्रह्मतादात्म्यबुद्धिश्च भ्रान्तिरेवास्त्विति वाच्यं, भ्रान्तिज्ञानस्य मोक्षाहेतुत्वात्- सम्यग्ज्ञानाद्धि मोक्षः- नहि ऋभूपदिष्टतत्त्वज्ञानो निदाघो भ्रान्त्या ब्रह्माहमिति सर्वभूतान्यहमिति च मेने- किंतु तत्त्वतएव । नापि- 'मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने' इति मतिमान् प्रह्लादो वा अज्ञ इति वक्तुं शक्यते । तस्माच्चिदीश्वरयोरेकद्रव्यत्वादभेद एव, नतु तादात्म्यम्- तद्भेदस्योपाधिप्रयुक्तत्वादुपाधेश्च नष्टत्वात्- तदुक्तम्- 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति' इति । **ननु** 'पिण्डः पृथग्यतः पुंसश्शिरःपाण्यादिलक्षण' इति प्रक्रमाद्देहात्मविवेकविषयोयमुपदेशः, नतु जीवब्रह्मैक्यविषयः, नाप्यात्मैक्यविषय इति **चेन्मैवम्**— आत्मतत्त्वोपदेशपरत्वात्प्रकरणस्य- तच्चात्मतत्त्वं न पिण्डाद्व्यतिरिक्तत्वमात्रस्वरूपं, किंतु एकत्वरूपमपि । अत एव पिण्डः पृथगिति श्लोकेन देहादात्मा विवेचितः । 'यद्यन्योस्ति, यदा समस्तदेहे'ष्विति श्लोकाभ्यां तु तदेकत्वं निरूपितमिति । अत एवोक्तमत्रैव प्रकरणे परमार्थो न भेदवानिति । एवमभे-

दस्य परमार्थत्वादेव भेदस्यापरमार्थत्वं सिद्धं, तच्च स्फुटमाह- 'एवं न परमार्थोस्ति जगत्यत्र नराधिपे'ति । **ननु न** जीवब्रह्मणोरैक्यमत्र प्रकरणे प्रोक्तं, प्रत्युत तद्भेद एवोक्तः- 'परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यत' इति स्मरणात्, **मैवम्** —– ये द्वैतिनः परमात्मात्मनोरैक्योपासनया तादात्म्यलक्षणो योगः परमार्थ इतीच्छन्ति तन्मतमपि मिथ्यैव—तथाहि तयोर्भिन्नयोरभिन्नयोर्वा योगस्स्यात्- भिन्नत्वे गवाश्वयोरिव नैक्यसम्भवः । अभिन्नत्वे च बिम्बप्रतिबिम्बयोरिव उपाधिव्युदासमात्रं विना योगशब्दार्थो नास्तीत्यर्थ इति तदर्थस्य श्रीधरस्वामिभिरुक्तत्वात् । मया तु परमात्मात्मनोस्तादात्म्यं न सम्भवतीति पूर्वमेव प्रतिपादितम् । एवं तादात्म्यासम्भवादेव परमात्मात्मनोरभेद एव परमार्थः, उभयोश्चिद्रूपत्वेनैकद्रव्यत्वादुभयोश्चिद्रूपत्वं च पूर्वं बहुशः प्रपञ्चितमितीदानीमुपरम्यते ।

**यदुक्तं रामानुजेन**—विभेदजनक इति श्लोकेन परस्माद्ब्रह्मण आत्मनो देवमनुष्यादिविविधभेदस्य नष्टस्य पुनरावृत्तिं कः करिष्यतीत्युच्यत इति, **तदसत्**—आत्मनो देवमनुष्यादिभेदं कः करिष्यतीत्यनेनैवेष्टसिद्धौ ब्रह्मण इति व्यर्थत्वादनन्वितत्वाच्च- भेदं प्रत्यनुयोगिप्रतियोगिनोरात्मब्रह्मणोरुक्तयोस्सतोस्तदतिरिक्तदेवादिकल्पनस्यायुक्तत्वाच्च ॥

## जीवब्रह्मभेदपरत्वेन रामानुजाभिमतानां श्रुतीनामर्थविचारः ।

**अथ** जीवब्रह्मैक्यमप्रमाणमित्यस्मिन्नर्थे यानि श्रुत्यादीनि रामानुजेन प्रदर्शितानि तानि **विचार्यन्ते—तथाहि**- 'द्वासुपर्णा सयुजा सखाया' इति मन्त्रो जीवब्रह्मभेदपर इति, **तथा** 'ऋतं पिबन्ता'-विति मन्त्रः, **एवं** 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मे'ति मन्त्रश्चेति रामानुजः, **तदयुक्तम्**—एषां मन्त्राणां जीवेश्वरभेदपरत्वेपि जीवब्रह्मभेदपरत्वाभावात् । नचेश्वर एव ब्रह्मेति वाच्यं, तर्हि किं जीवो न ब्रह्म ? सोपि ब्रह्मैव । **नच शोकादिदुर्गुणवान्जीवः** कथं ब्रह्म भवेदिति वाच्यं, सत्यकामत्वादिसद्गुणवानीश्वरो वा कथं ब्रह्म भवेदिति तुल्यत्वात्- निर्गुणं हि ब्रह्म 'साक्षी चेता केवलो निर्गुण'श्चेति श्रुतेः । विष्णुपुराणेपि निर्गुणं ब्रह्मेत्यसकृदुक्तत्वाच्च । नच हेयगुणरहितमिति तदर्थ इति वाच्यं, ग्राह्यगुणरहितमिति तदर्थ इति वक्तुं शक्यत्वात्- गुणमात्ररहितमिति शब्दस्वभावसिद्धस्यार्थस्य परित्यागस्यायुक्तत्वाच्च । तस्मादन्तःकरणमायोपहितयोर्व्यावहारिकयोर्जीवेश्वरयोरन्योन्यं भेदेपि सोपाधिकनिरुपाधिकचैतन्ययोर्जीवब्रह्मणोर्जीवेश्वरयोर्वा नैव भेदः- घटाकाशमहाकाशवन्मठाकाशमहाकाशवच्चेति । यद्यपि घटाकाशमहाकाशयोरपि वस्तुतो महाकाशत्वेनैक्यमेव, तथापि यावद्व्यवहारं द्वैतमेव, एवं जीवेश्वरयोरपीति बोध्यम् । एवं व्यावहारिकजीवेश्वरभेदानुवादिन एते मन्त्रा न पारमार्थिकं प्रत्यग्ब्रह्माद्वैतं बाधितुं शक्नुवन्ति । विभेदजनक इति श्लोकेन च पारमार्थिकमद्वैतमुक्तम्- अज्ञाने नाशमात्यन्तिकं गत इत्युक्तत्वात् । अज्ञाननाशो हि परमार्थदशा- नह्यज्ञानेऽत्यन्तं नष्टे जीवेश्वरादिव्यवहारस्सम्भवति । अज्ञाने निष्कार्यत्वेन बीजमात्रात्मना स्थिते सत्येव सुषुप्तौ न कोपि व्यवहार इति कृत्वा किं पुनर्निश्शेषमज्ञाने नष्टे व्यवहाराभावो वक्तव्य इति ।

**यद्वा-** प्रमातृप्रत्यगात्मपरास्ते मन्त्राः- अन्तःकरणावच्छिन्नत्वेन सगुणः कर्ता भोक्ता च प्रमाता, तत्साक्षित्वेन निर्गुणोऽकर्ताऽभोक्ता च प्रत्यगात्मा- तत्र प्रमातैव सामासान्तःकरणं सत्त्वमित्युच्यते- प्रत्यगात्मैव क्षेत्रज्ञ इति । अतएव पैङ्गिरहस्यब्राह्मणेनैवं व्याख्यातो द्वासुपर्णेति मन्त्रः—तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्- अनश्नन्नन्योऽभिचाकशीतीति ज्ञः- तावेतौ सत्त्वक्षेत्रज्ञाविति । नचान्तःकरणस्य करणत्वाद्भोक्तृत्वं न सम्भवति- भोक्ता हि कर्तेति वाच्यं, सामासान्तःकरणस्य अहङ्कारात्मकस्य प्रमातुः कर्तृत्वेन करणत्वाभावाद्भोक्तृत्वं सम्भवत्येवेति । नच क्षेत्रज्ञः परमात्मैवेति वाच्यं, इष्टापत्तेः । नहि वयं परमात्मनस्सकाशात्क्षेत्रज्ञं भिन्नं ब्रूमः, किं त्वभिन्नमेव- 'क्षेत्रज्ञं चापि मां विद्धी'ति गीतावचनात् । नचान्तःकरणोपहितस्य जीवसाक्षिणः परिच्छिन्नस्य कथमपरिच्छिन्नपरमात्मत्वमिति वाच्यं, अज्ञानादेव क्षेत्रज्ञस्यान्तःकरणपरिच्छिन्नत्वं, नतु स्वत इति । अत एवोक्तं 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गत' इति ।

**यच्चोक्तं** अस्मिन्नपि शास्त्रे- 'स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः । अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥ समस्तकल्याणगुणात्मकोसौ परः पराणां सकला न यत्र । क्लेशादयस्सन्ति परापरेशे, अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगे'ति भेदव्यपदेशादिति **तदप्ययुक्तम्**— यावत्पर्यन्तमविद्यावेष्टितः क्षेत्रज्ञस्तावत्पर्यन्तं सावरणत्वेन तस्य सर्वात्मत्वनिर्दोषत्वक्लेशरहितत्वाद्यभावेपि अविद्यानाशानन्तरं तत्सर्वसत्त्वेन तस्येश्वरैक्यसिद्धेरिति । नह्यज्ञाने आत्यन्तिकं नाशं गतेसति जीवस्य सावरणत्वं वक्तुं शक्यत इति । **यदप्युक्तम्**—'उभयेपि हि भेदेनैनमधीयेते- 'भेदव्यपदेशाच्चान्यः' 'अधिकं तु भेदनिर्देशा'दिति सूत्रेषु जीवेश्वरभेद उक्त इति तदस्माकं न विरुद्धम्— व्यावहारिकजीवेश्वरभेदस्यास्माभिरभ्युपगतत्वात् । **एतेन** य आत्मनि तिष्ठन्नित्यादिषु नियाम्यनियामकत्वाभ्यां जीवेश्वरयोर्भेद उक्त इति प्रत्युक्तम् । नियाम्यनियामकत्वयोर्व्यावहारिकत्वेन वस्तुतस्तदभावात् । अज्ञ एव जीव ईश्वरेण नियम्यते, नष्टे त्वज्ञाने जीवो नास्तीश्वरो नास्तीति किमाश्रयस्स्यादयं नियाम्यनियामकभावः । नच निर्मुक्ताविद्यस्यापि जीवस्य परेण स्वरूपैक्यं न सम्भवति- अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासम्भवादिति वाच्यं, अविद्याया विष्णुशक्तित्वेनेहैवोक्तत्वाच्छक्तेश्च शक्ताश्रयत्वाद्विष्णुमेवाश्रितवतीयमविद्येति कृत्वा विष्णोरविद्याश्रयत्वार्हत्वमेव नानर्हत्वमिति । नचाविद्यावेष्टितत्वयोग्यस्य तदनर्हत्वासम्भवादिति वाच्यं, मुक्तस्याविद्यावेष्टितत्वयोग्यत्वस्याप्यभावात् । सति तद्योग्यत्वे भवेदेव यदा कदापि पुनस्तद्वेष्टनमिति मुक्तस्यापि पुनरावृत्तिप्रसङ्ग इति । नच मुक्तस्य योग्यत्वमस्ति वेष्टनं तु न भविष्यतीति वाच्यं, तर्हि परमेश्वरस्यापि तद्योग्यत्वमस्तीति कल्पयितुं शक्यत्वात् । नहि कदाचिदपि वेष्टनासम्भवे तद्योग्यत्वसम्भवः कल्पयितुं शक्यते । नच मुक्तस्य मुक्तेः प्राक्तदस्तीति वाच्यं, मुक्तेः प्राङ्मुक्तस्यैवाभावात् ।

**वस्तुतस्तु** चित्त्वाविशेषाज्जीववदीश्वरोप्यविद्यावेष्टनार्ह एव, परं तु अविद्याविरोधिविद्याशक्तिसत्त्वादीश्वरस्य तदभावः । एवं मुक्तस्यापि विद्याशक्तिरस्त्येवेति तदभाव एव । नच जीवस्य चित्त्वे-

पीश्वरस्य न चित्त्वं नाप्यचित्त्वं, किं त्वीश्वरत्वमेवाचित्सकाशादिव चित्सकाशादपीश्वरस्य भिन्नद्रव्यत्वादिति वाच्यं, 'चेतनश्चेतनाना'मिति श्रुत्या जीवेश्वरयोर्द्वयोरपि चेतनत्वस्योक्तत्वेन चिद्द्रव्यत्वात् । नच चेतनोपीश्वरो जीवाद्भिन्न एवेति वाच्यं, चेतना अपि जीवा यथा परस्परं भिन्नास्तथा जीवेश्वरौ भिन्नौ भवतां नाम- यथा भिन्नानामपि जीवानां चेतनत्वेनैकद्रव्यत्वं तथा भिन्नयोरपि जीवेश्वरयोश्चेतनत्वेनैकद्रव्यत्वमेवेति । नच 'परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्येतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यत' इति स्मरणान्न तयोरेकद्रव्यत्वमिति वाच्यं, तत्र योग इत्यस्य सम्बन्धस्तादात्म्यलक्षण इत्यर्थस्य दर्शितत्वात् ।

**ननु** दर्शित एवार्थश्श्रीधरस्वामिभिस्तथापि स न युज्यते, तद्द्रव्यतामित्यनेन तदभेदस्योक्तत्वा-त्तदनुरोधेन योग इत्यस्याप्यभेद इत्येवार्थो वक्तव्यः । तथाच परमात्मात्मनोरभेदः परमार्थ इतीष्यत इति यत्तदेतन्मिथ्यैव यतोन्यद्द्रव्यं तद्द्रव्यतां नैतीति श्लोकस्यार्थस्साधीयान्सिद्ध्यति, ततश्च जीवेश्वरयोर्भिन्नद्रव्यत्वं सिद्धमिति, **मैवम्**—योगशब्दादभेदार्थासिद्धेः- तेन युक्तो भवतीति वाक्यस्य तदभिन्नो भवतीत्यर्थ इति नहि कोपि विद्वान्वक्ति । नच तद्द्रव्यतामित्यस्य तद्द्रव्यतादात्म्यमित्यर्थवर्णनमप्ययुक्त-मिति वाच्यं, तदभेदरूपार्थ इव तत्तादात्म्यरूपार्थेपि त्वतलोःप्रयोगदर्शनात् । यद्वा केचिद्भ्रमर-कीटन्यायमाश्रित्य जल्पन्ति, यथा अभ्रमरोपि कीटो भ्रमरेण गृहीतो भयेन भ्रमरं निरन्तरं चिन्तयन्भ्रम-रतां याति, तथा ईश्वराद्भिन्नोपि जीव ईश्वरं निरन्तरं ध्यायन्नीश्वरत्वं प्राप्नोतीति तदेतन्मतं प्रत्याख्यात-मनेन श्लोकेन- अत्र च पक्षे योग इत्यस्याभेद इत्येवार्थः । कीटस्य भ्रमराभेद इवात्मनः परमात्मा-भेदः परमार्थ इति कैश्चिदिष्यते तदेतन्मिथ्या- अन्यत्तुल्यम् । एतन्मतरीत्या जीवेश्वरयोर्भिन्नद्रव्यत्वा-दन्यद्रव्यस्य तद्द्रव्यत्वप्राप्त्ययोगान्न जीवस्येश्वरत्वप्राप्तिरिति कृत्वा जीवस्य परमात्माभेदः परमार्थ इत्येतन्मिथ्यैव । नच भिन्नजातीययोरपि कीटभ्रमरयोरभेदो दृष्ट इति वाच्यं, तत्रापि भ्रमरसारूप्यमेव कीटस्य न भ्रमरत्वमिति ।

**ननु** योगस्तादात्म्यमिति पक्षे अन्यद्रव्यस्य तद्द्रव्यत्वप्राप्तिरस्त्येव- कीटस्य भ्रमरतादात्म्यप्राप्ति-दर्शनादिति कृत्वा कथं तस्य मिथ्यात्वमिति **चेन्मैवम्**—कीटभ्रमरयोर्भिन्नजातीयत्वेपि भिन्नद्रव्यत्वा-भावात्- भिन्नद्रव्यत्वाभ्युपगमेपि न कीटस्य भ्रमरतादात्म्यप्राप्तिः, किंतु भ्रमरसारूप्यप्राप्तिरेवेति न कश्चिद्दोषः ।

**ननु** तादात्म्यताद्रूप्याभेदानां को विशेष इति **चेदुच्यते**—यत्र व्यवहारमात्राद्भेदप्रतीतिस्तत्र तादात्म्यं- तच्च कार्यकारणयोः । यत्र तु स्वरूपभेदेऽसत्यपि द्वावपि विविच्य गृहीतुं शक्येते तत्र ताद्रूप्यं-- तच्च समानाकारयोरेककारणकयोः कार्ययोः । यत्र तु मनागपि न भेदप्रतीतिस्तत्राभेदः- सच सोपाधिकनिरुपाधिकयोरुपाधिनाशेसति- इति ।

**यदि** परमात्मात्माभेदो परमार्थ इति मूलकर्तुर्विवक्षा- तर्हि 'परमात्मात्मनोरैक्यं परमार्थ इतीष्यते' इत्येव स श्लोकं कुर्यात्- यदि तथा श्लोकः क्रियेत तर्हि ग्रन्थकृदवैदिक एव भवेत्- वेदे हि

तत्त्वमसीत्यादिषु बहुस्थलेषु जीवब्रह्मणोरैक्यं श्रूयते । नच प्रकृतवाक्यविरोधात्तत्राप्यर्थान्तरं कल्प्यमिति वाच्यं, प्रकृतवाक्यस्याद्यापि द्वैतपरत्वनिश्चयानुदयात्, तदुदयेपि श्रुतिस्मृत्योर्विरोधे तु श्रुतिरेव बलीयसीति शास्त्रात्स्मृत्यनुरोधेन श्रुतेरर्थान्तरपरत्ववर्णनस्यायुक्तत्वात् । नच 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता' इति गीतावचनात्सायुज्यमप्रमाणकमिति वाच्यं, ब्रह्मविद्ब्रह्मैव भवतीत्यादिश्रुतिविरोधेन गीतावाक्यस्यैवाप्रमाणत्वात् ।

**वस्तुतस्तु** साधर्म्यमित्यस्य तत्राभेदमित्येवार्थः- 'मामुपेत्य तु कौन्ते'येत्यादिनैकार्थ्यात् । यद्वा तत्र साधर्म्यं सायुज्यं माभून्नाम- न तावता सायुज्याभावसिद्धिः- मामुपेत्येत्यादिषु सायुज्यस्य प्रतिपादितत्वादिति । नच मामुपेत्येत्यस्य मत्सालोक्यं मत्सारूप्यं मत्सामीप्यं वा प्राप्येत्यर्थ इति वाच्यं, तस्यायथाश्रुतार्थत्वेनाग्राह्यत्वादिति । नच 'आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुनिम् । विकार्यमात्मनश्शक्त्या लोहमाकर्षको यथा' इतीहापि मुक्तस्य भेदप्रतिपत्तिरुक्तेति वाच्यं, मुक्तपरत्वाभावादस्य श्लोकस्य- यथा आकर्षकोऽयस्कान्तमणिरात्मशक्त्या लोहमात्मभावमात्मप्राप्तिमात्मसंयोगमिति यावत्, नयति, तथा ब्रह्मापि ध्यायिनमेनं मुनिमात्मभावं नयति- लोहायस्कान्तयोरिव ध्यायिब्रह्मणोस्संयोगो भवतीत्यर्थः । तमेव संयोगमुत्तरश्लोकेन दर्शयति- 'आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः । तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते' इति । नच मनोगतेरेव ब्रह्मसंयोगो न जीवस्येति वाच्यं, मनोवच्छिन्नस्यैव जीवस्य स्वतः तन्मनसो ब्रह्मसंयोगे सति ध्यातुर्मुनेरपि स जात एवेति- मुक्तस्य ब्रह्मसायुज्यमिदं शास्त्रं साक्षादेव प्रत्यपादयत् । 'विष्ण्वाख्ये निर्मले ब्रह्मण्यवाप नृपतिर्लय'मिति, आत्यन्तिको विमुक्तिर्या लयो ब्रह्मणि शाश्वते' इति च । ब्रह्मणि जीवस्य लयो हि ब्रह्मसायुज्यप्राप्तिः । नच 'जगद्व्यापारवर्ज'मित्यादिसूत्रविरुद्धं मुक्तस्य ब्रह्मसायुज्यमिति वाच्यं, तत्सूत्राणां हिरण्यगर्भलोकरूपसगुणमुक्तिक्षेत्रगतजीवविषयत्वात् ।

**यदुक्तं** द्रविडभाष्यकारेण- देवतासायुज्यादशरीरस्यापि देवतावत्सर्वार्थसिद्धिरिति, **तत्सत्यमेव** -- हिरण्यगर्भलोकं गतस्य तथैवेति । 'य इहात्मान'मिति श्रुतिश्च सगुणमुक्तिविषयैव- 'ब्रह्मविदाप्नोति पर'मिति श्रुतिर्विचारितपूर्वैव । 'एतमानन्दमय'मिति श्रुतिश्च न मुक्तपरा । 'स तत्र पर्ये'तीति श्रुतिश्च सगुणमुक्तपरा । 'रसं ह्येवाय'मिति श्रुतिश्च समाधिनिष्ठपरा- नतु मुक्तपरा । 'यथा नद्य' इति श्रुतिस्सायुज्यमेव प्रतिपादयति । तथापि द्वाविति श्रुतिरपि तथैव । परमं साम्यमित्यस्य सायुज्यमर्थ इति पूर्वमेव निर्णीतत्वात् । **ननु** 'पुरुषमुपैति दिव्य'मिति कर्मकर्तृभावप्रतीतेर्न भेदनिवृत्तिं 'यथा नद्य' इति श्रुतिः प्रतिपादयतीति **चेन्मैवम्**—नदीसागरदृष्टान्तानुरोधेन परमात्मनि जीवनिलयनस्यैव पुरुषप्राप्तिरूपत्वेन कर्मकर्तृभावाभावात् ।

**ननु** परमं साम्यमिति नाभेद उच्यते, किंतु तत्समतापत्तिरेवेति, **मैवम्**—यथा नद्य इति दृष्टान्ताननुरोधात्- नहि समुद्रं गता नद्यस्समुद्रसाम्यं प्रपद्यन्ते, किंतु तदभेदमेव । नच मधुरजला नद्यस्समुद्रं प्राप्य क्षारजला भवन्ति समुद्रवदिति वाच्यं, यदि समुद्रं प्रविष्टासु सतीषु नदीषु इदं नदीजलमिदं तु

समुद्रजलमिति पृथक्प्रतीतिस्तर्हि नदीजलस्य समुद्रजलसाम्यं वक्तुं शक्यते, नतु सास्तीति नह्यपृथक्प्रतीत्योस्साम्यं, क्वचिद्दृष्टमुपपन्नं वा । **एतेन** यदुक्तं लयशब्दो न स्वरूपैक्यपर इति **तत्प्रत्युक्तम्** । अस्तं गच्छन्तीत्यस्य लयपरत्वात्समुद्रे नदीनामस्तंगमनरूपस्य लयस्य समुद्रस्वरूपैक्यपरत्वस्योक्तत्वात् । नच नित्यनैमित्तिकमहाप्रलयेषु लयशब्दप्रयोगो दृश्यते- सच लयो न स्वरूपैक्यम्- अन्यथा तेषु ज्ञानं विनैव सर्वमुक्तिप्रसङ्गादिति वाच्यं, ऐक्यमेव लयशब्दस्य मुख्यार्थः । अत एव मोक्षस्यात्यन्तिकलयत्वेन व्यवहारः- 'आत्यन्तिकोपि मुक्तिर्या लये ब्रह्मणि शाश्वत' इति विष्णुपुराणात् । लयो हि चतुर्विधं नित्यादिषु तेषु लयशब्दप्रयोग औपचारिकः । श्रूयते हि सुषुप्तं प्रति प्रलीन इव भवतीति । घटादिकार्यं च स्वकारणमृद्द्रव्यभूतचूर्णपुञ्जेनैक्यं प्रपन्नं सदेव नष्टमित्युच्यते । नाशो हि लयः- नहि नष्टो घटो मृदैक्यमप्राप्य मृत्समस्सन् दृश्यते- मृदिति घट इति च सति पदार्थद्वये तयोस्साम्यं वक्तुं शक्यते-- नहि घटनाशानन्तरं घटपदार्थोस्ति- विरोधात् । तथा च आत्यन्तिकप्रलये स्थूलसूक्ष्मात्मकं सर्वं जगत्स्वकारणेनाज्ञानेन सह विनष्टमेवेति कृत्वा तस्य परमकारणे ब्रह्मणि मुख्यो लय उपपद्यते । नित्यादिषु तु न सूक्ष्मप्रपञ्चनाश इति न तस्य ब्रह्मणि लयः । नच आत्यन्तिकप्रलये जीवस्यैव लय इत्युक्तमिति वाच्यं, जीवस्य नित्यस्य लयायोगात्- जीवोपाध्योस्सूक्ष्मकारणयोर्लयेन जीवलयव्यपदेशात्- जीवो हि मुक्तौ सूक्ष्माद्युपाधिद्वयं परित्यज्य केवलब्रह्मात्मनाऽवतिष्ठते । तस्माज्जीवोपाधेर्जीवस्य वा मुक्तौ न साम्येन स्थितिर्ब्रह्मणि, किं त्वभेदेनैव- जीवोपाधेः प्रध्वंसाभावाज्जीवस्य च ब्रह्मभेदकोपाध्यभावेन ब्रह्मणः पृथक्स्थित्यभावाच्च । तदेव ह्युक्तम्—'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते' इति । यथा आरम्भकवादे परिणामवादे चाकार्यस्य कारणे लयो नाम कारणस्वरूपैक्यं, तथा विवर्तवादेपीति कृत्वा रज्जुसर्पवत्प्रपञ्चोप्यज्ञानेऽपगते सति रज्जुना- ब्रह्मणा स्वरूपैक्यमेव प्रतिपद्यते । नतु तत्साम्यम्- नहि रज्जुं दृष्ट्वा सर्प इति भ्रान्तः पुरुष आप्तोपदेशादिना रज्जुरियमिति ज्ञात्वापि रज्जुसमस्सन् सर्पोत्र वर्तत इति मन्यते, किंतु सर्पो रज्जुरेव भवतीति । नच कालत्रयेपि सर्प एवात्र नास्तीति प्रत्येतीति वाच्यं, इष्टापत्तेः- कारणस्वरूपातिरिक्तं नास्ति हि कार्यस्य किञ्चित्स्वरूपं यस्मिन् कस्मिन्नपि वादे । एवं कार्यस्य मिथ्यात्वादेव ब्रह्मण्यात्यन्तिकलय उपपद्यते-- नहि सत्यस्य लयस्सम्भवति- सत्यत्वादेव, नाप्यसत्यस्यासत्यत्वादेव- किंतु मिथ्याभूतस्यैव । नचैवं ब्रह्मणि जीवस्य लयश्रवणाज्जीवो मिथ्यैवेति वाच्यं, इष्टापत्तेः- 'जीव ईशो जगच्चे'ति सर्वं हि मिथ्या ब्रह्मभिन्नत्वात् । जीवस्वरूपस्य सत्यत्वेपि जीवोपाधेर्मिथ्यात्वान्न काप्यनुपपत्तिः । तस्माल्लयो नाम कार्यस्य कारणेनैक्यप्राप्तिरेव । जीवस्य च सोपाधिकस्य ब्रह्मकार्यत्वाद्ब्रह्मणैक्यप्राप्तिरेव लयः । तच्च जीवस्य ब्रह्मैक्यमुपाधिपरित्यागमात्रमेव, नत्वपूर्वमिति सिद्धम् ।

**ननु** कार्यस्य कारणैक्यं न लयशब्दार्थः, किंतु विसदृशावस्थाप्रहाणेन कारणत्वधर्मिणा द्रव्येण विभागस्यापादानभूतेन संश्लेषो लय इति, **मैवम्**—कार्यस्य निमित्तकारणेन सह संयोगविभागसत्त्वेपि उपादानकारणेन सह तदभावात्- नहि मृदा वियुक्तस्सन् घटो दृश्यते, येन मृदा संश्लिष्टो घटो नष्ट इत्युच्येत । नच पत्रस्य वृक्ष इव घटस्य मृदपादानं दृश्यते, नहि वृक्षात्पत्रमिव मृदस्सकाशाद्घटः पतति ।

यद्यपीदं पत्रमयं वृक्ष इतिवदियं मृदयं घट इति घटाकारपरिणतमृदतिरिक्तमृदः पृथक्त्वेन घटो विविच्य गृहीतुं शक्यते, तथापि घटाकारपरिणतमृदस्सकाशान्न शक्यत इति कृत्वा कथं मृद्घटयोस्संयोगवियोगभावः । किंच यदि घटः विसदृशां कम्बुग्रीवाद्यवस्थां प्रजह्यात्तर्हि मृत्स्वरूपपरस्स्यादिति कृत्वा घटस्यैवाभावात्कस्य कारणेन सह संश्लेषः, सतोर्हि वस्तुनोर्द्वयोस्संश्लेषः । कपिवृक्षयोरिव सम्भवति न त्वन्यतरासत्त्वे । अपिच सत्कार्यवादिना त्वया सतो द्रव्यस्य पूर्वावस्थाप्रहाणेनोत्तरावस्थास्वीकारःकार्योदयः, तत्परित्यागेन पुनरवस्थान्तरस्वीकारः कार्यनाश इत्युक्तं प्राक्, तदिदानीं विरुध्यते कार्यकारणपदार्थद्वयाभ्युपगमात् । नहि तस्यैव द्रव्यस्य तदेवापादानं भवति, तदेव तेन च संश्लिष्टं भवति । **ननु** महत्या मृदस्सकाशात्कियतीं मृदं विच्छिद्यादाय कुलालो घटमकरोदिति कृत्वा कारणभूतादपादानान्महतो मृद्द्रव्यात्सकाशाद्विभक्त एव विसदृशावस्थो मृण्मयो घटः- सच मुद्गरेण विध्वस्तस्सन् मृद्विसदृशावस्थां परित्यज्य अपादानभूतेन मृद्द्रव्येण महता संश्लिष्टस्सन्नष्ट इत्युच्यत इति कृत्वा कार्यस्य कारणेन संश्लेष एव लयो न त्वैक्यमिति, **मैवम्**—यां कियतीं मृदं विच्छिद्यादाय कुलालो घटमकरोत्सैव मृद्घटस्योपादानतया कारणं भवति, नतु तदतिरिक्ता महती मृत्- अतिरिक्ताया घटस्यारम्भकत्वाभावात्परिणामित्वाभावाच्च । तथाच घटस्य नामरूपप्रहाणे सति स्वोपादानमृदंशेनैक्यमेव । यद्यपि घटोपादानमृदंशस्य तदितरमृदा संश्लेषस्सम्भवति, तथापि न तयोः कार्यकारणभाव इति । **यदुक्तमाकाश**स्यापि प्रदेशभेदाभ्युपगमाद्घटाकाशादिदृष्टान्तोपन्यासश्चौपाधिकवैषम्याभावनिबन्धन इति, **तदप्यसत्**-निरवयवं गगनमिति लोकप्रसिद्धिमाश्रित्य तद्दृष्टान्तोपन्यासात्- यथा समुद्रवदपारमिति नहि समुद्रस्य पाराभावोस्ति, परं तु लोकस्समुद्रमपारं मन्यते- तद्वदिति । तस्माद्घटे नष्टे सति घटाकाशो महाकाशेनेव- समुद्रप्रवेशे सति नदी समुद्रेणेव अज्ञाने नष्टे सति जीवो ब्रह्मणा सायुज्यापरपर्यायमैक्यमेव प्रपद्यते । तदेव परमं साम्यमित्युच्यते । सायुज्यप्रतिपादकश्रुत्यैकार्थ्यात्परमत्वविशेषणाच्च साम्यस्येति ।

**ननु** सायुज्यं नाम नाऽभेदः, किंतु समानगुणयोग एव- समानगुणयुक् सयुक्; तस्य भावस्सायुज्यमिति व्युत्पत्तेः । सच समानगुणयोगस्सत्येव भेदे सम्भवतीति नाभेदसिद्धिरिति, **मैवम्**—समानगुणयोगस्य सार्ष्टितारूपत्वेन सायुज्यस्यैक्यपरत्वात् । सालोक्यं सारूप्यं सामीप्यं सार्ष्टित्वं सायुज्यमिति पञ्चविधा हि मुक्तयः, तत्र समानलोकवासित्वं सालोक्यं, यस्मिन् लोके सेव्योस्ति तस्मिन्लोकेनेव कस्यापि सत्त्वं सालोक्यमित्यर्थः । समानलोकत्वं ह्यभिन्नलोकत्वं, नतु तुल्यलोकत्वं- नहि विष्णुमुपासीना वैष्णवा विष्णुलोकाद्वैकुण्ठादन्यं तत्तुल्यलोकं गच्छन्ति, किंतु तमेवेति । **एतेन** समानशब्दो नैक्यपर इति **प्रत्युक्तम्**—यद्यपि समानशब्दस्य तुल्यत्वं मुख्यार्थस्तथाप्यैक्यमपि क्वचित्स्वीकर्तव्यमेवेति **बोध्यम्**, समानरूपत्वं सारूप्यं- सेव्यतुल्यरूपत्वमित्यर्थः । सेव्यसमीपवर्तित्वं सामीप्यं- सेव्यसमानैश्वर्यत्वं सार्ष्टित्वं एताश्चतस्रोपि मुक्तयस्सगुणपरा एव- सायुज्यमुक्तिस्तु निर्गुणपरा- तच्च सायुज्यमभेद एव- दर्शितप्रकारचतुष्टयातिरिक्तत्वात्- समानस्थितियुक् सयुक् तस्य भावस्सायुज्यमभेदेनावस्थानमित्यर्थः । समानभावयुक् सयुगिति वा ब्रह्मणा सहाभेदेन युक्ते तिष्ठतीति वा सयुक् धातूनामनेकार्थत्वात्- इयं च सायुज्यमुक्तिः

स्फुटं प्रतिपादिता सूतसंहितायाम्- 'अन्या सायुज्यरूपोक्ता सत्यविज्ञानरूपिणी । केवलं ब्रह्मरूपोक्ता सर्वदा सुखलक्षणा ॥ सर्वेषां प्राणिनां साक्षादात्मभूता स्वयंप्रभे'ति । नच तत्र सार्ष्टित्वस्यानुक्तत्वात्सार्ष्टित्वमेव सायुज्यमिति वाच्यं, सार्ष्टित्वस्य दर्शितसायुज्यलक्षणाभावात् । तत्र सामीप्यसार्ष्टित्वयोरेकत्वेन गृहीतत्वाच्चेति । **एतेन**- अज्ञादिसायुज्यं **प्रत्याख्यातम्** । निर्गुणब्रह्मप्राप्तेरेव सायुज्यत्वात् । अत एव- 'काश्चिच्छङ्करसारूप्यरूपाः प्रोक्ता विमुक्तय' इत्यादिना सारूप्यसालोक्यसामीप्यमुक्तय एव विष्ण्वादीनां प्रतिपादिता नतु सायुज्यरूपाः । **ननु** एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतामाप्नोतीति सगुणमुक्तिरपि सायुज्यरूपा श्रूयते, **मैवम्**—तत्र सायुज्यमित्यस्य समीप्यादर्थान्तरपरत्वात् । तस्माद्यथा नद्य इति श्रुतौ परमं साम्यं नामाभेद एव ।

**यदुक्तं रामानुजेन**—परविद्यासु सर्वासु सगुणं ब्रह्मैवोपास्यमिति कृत्वा तदेव मुक्तैः प्राप्यमिति निर्गुणब्रह्मप्राप्तिविषया काचिदपि श्रुतिर्नास्तीति **तदयुक्तम्**—'अथ परा यया तदक्षरमधिगम्यत' इत्यादिना निर्गुणब्रह्मविषयाया एव परविद्यायाः प्रतिपादितत्वात् । नच निर्गुणं ब्रह्मापि ज्ञानानन्दादिगुणवत्त्वेन सगुणमेवेति वाच्यं, ज्ञानानन्दयोरात्मस्वरूपत्वेन तद्गुणत्वाभावस्य पूर्वं बहुश उक्तत्वात् । सगुणब्रह्मोपासकानां चार्चिरादिक्रमेण ब्रह्मलोकावाप्तिरेव, नतु सायुज्यमिति कृत्वा तेषां मुक्तौ भेदश्रवणं युक्तमेव । संयद्वामत्वसत्यकामत्वादिभिर्ब्रह्मणस्सगुणत्वं भवति- ज्ञानानन्दादिभिस्तु न ब्रह्मणो निर्गुणत्वहानिः तेषां ब्रह्मधर्मत्वात् । तदुक्तम्- 'आनन्दादयः प्रधानस्य, प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे, इतरे त्वर्थसामान्या'दिति सूत्रत्रयस्यायमर्थः- ब्रह्मस्वरूपप्रतिपादनपरासु श्रुतिषु ब्रह्मण आनन्दरूपत्वं, विज्ञानघनत्वं, सर्वगतत्वं, सर्वात्मकत्वमित्येवंजातीयका धर्माः क्वचित्केचिच्छ्रूयन्ते, ते सर्वे सर्वत्र प्रतिपत्तव्याः- सर्वाभेदादेव सर्वत्र हि तदेवैकं प्रधानं विशेष्यं ब्रह्म न भिद्यते- प्रियशिरस्त्वादीनां तु नास्त्यन्यत्र प्राप्तिः- तेषां कोशधर्मत्वेनाब्रह्मधर्मत्वादुपचितापचितरूपाहिते उपचयापचयौ च भेदे सति सम्भवतः-- ब्रह्म च निर्भेदम्- 'एकमेवाद्वितीयं ब्रह्मे'ति श्रुतेः । इतरेत्वानन्दादयो धर्मा ब्रह्मस्वरूपप्रतिपादनार्थेबोध्यमाना अर्थसामान्यात्प्रतिपाद्यस्य ब्रह्मण एकत्वात्सर्वे सर्वत्र प्रतीयेरन्निति वैषम्यं प्रतिपत्तिमात्रप्रयोजनाहिते- इति ।

**यदुक्तं** 'ब्रह्म वेद ब्रह्मैव भव'तीत्यत्रापि- 'नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्'- 'निरञ्जनः परमं साम्यमुपैति'- 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इत्यादिभिरैकार्थ्यात्प्राकृतनामरूपाभ्यां विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया ब्रह्मप्रकारतोच्यते । प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव, यथा सेयं गौरिति, **तत्तुच्छम्**—'पुरुषमुपैती'त्यनेन सायुज्यस्यैवोक्तत्वात् । नच सामीप्यादिकमुक्तमिति वाच्यं, पुरुषसामीप्यमुपैतीत्यादेरनुक्तत्वात् । पुरुषशब्दस्य पुरुषसामीप्याद्यर्थवर्णनस्य लाक्षणिकत्वेनायुक्तत्वात् । नच पुरुषप्राप्तिर्नाम पुरुषसंयोग इति वाच्यं, निरवयवेन निष्क्रियेण च परमात्मना सह तथाविधस्यैवात्मनस्संयोगायोगात् । एवं निरञ्जनश्रुतिरपि सायुज्यपरैव । तथा परंज्योतिरिति श्रुतिः पुरुषः परंज्योतिः परंब्रह्मोपसम्पद्य सम्प्राप्य स्वेन रूपेण सच्चिदानन्दात्मना अभिनिष्पद्यते

अवतिष्ठत इति तदर्थात् । तथा च दर्शितश्रुतिसमन्वयाद्ब्रह्म वेदेति श्रुतिरपि यथा श्रुतार्थैव, नतु लाक्षणिकार्थपरा । ब्रह्मैव भवतीत्यस्य ब्रह्मतुल्यो भवतीति, ब्रह्मप्रकारत्ववर्णनं खलु लाक्षणिकम् । किंच सेय गौरिति प्रत्यभिज्ञायामपि तदिदन्तयोर्विरुद्धयोः प्रहाणाद्गौरित्यखण्डार्थ एव प्रतीयते- 'ब्रह्म वेद ब्रह्मैव भव'तीति तु न प्रत्यभिज्ञेति, न तदिह दृष्टान्तीकरणीयम् । आकारसाम्यप्रयुक्तस्तु तत्त्वव्यवहारो भ्रान्तिप्रयुक्त एव । देवदत्तयज्ञदत्तयोः खलु सोदरयोराकारसाम्ये सति देवदत्तं दृष्ट्वा यज्ञदत्त इति कश्चित्प्रत्येति, सा हि प्रतीतिर्भ्रान्तिः । एवं ब्रह्मब्रह्मविदोराकारसाम्यप्रयुक्ता हि ब्रह्मविदि ब्रह्मप्रतीतिर्भ्रान्तिरेव भवेत् सा च भ्रान्तिर्भगवत्या उपनिषदो भवतीति वक्तुं न शक्यते । तस्मान्मुक्तस्य ब्रह्माभेद एव- भेदकोपाध्यभावात् । नच अप्राकृतनामरूपात्मकभेदकोपाधिरस्तीति वाच्यं, नामरूपात्मकसर्वद्वैतस्य प्राकृतत्वेन अप्राकृतनामरूपसत्त्वे मानाभावात् । नच वैकुण्ठलोकोऽप्राकृत इति तद्गतनामरूपे अप्राकृते इति वाच्यं, तस्यापि दृश्यत्वेन मायामयत्वात् । नच शुद्धसत्त्वमयत्वात्तस्याप्राकृतत्वमिति वाच्यं, मलिनस्येव शुद्धस्यापि सत्त्वस्य प्रकृतिपरिणामत्वाविशेषात् । यद्यपि मर्त्यलोकापेक्षया देवलोकस्य, देवलोकापेक्षया ब्रह्मलोकस्य च सुखरूपाल्पत्वानल्पत्वप्रयुक्तं तारतम्यमस्ति, तथापि प्राकृतत्वाप्राकृतत्वात्मकस्तु भेदो नास्त्येव- सर्वस्यापि प्राकृतत्वात् । नच 'तद्विष्णोः परमं पद'मप्राकृतमिति वाच्यं, इष्टापत्तेः । नच तत्पदं वैकुण्ठलोक एवेति वाच्यं, स्वरूपवाचित्वात्तत्र पदशब्दस्य । तच्च स्वरूपं सच्चिदानन्दलक्षणं ब्रह्मैव । तदेव जीवस्यापि स्वरूपम् । अज्ञानात्तु तदविदित्वा मनुष्योहमित्याद्यध्यासं प्राप्य संसारी भवति ज्ञानात्तु तद्विदित्वा अध्यासं विहाय स्वरूपेणैव तिष्ठतीति सिद्धं मुक्तौ जीवब्रह्माद्वैतम् । सगुणमुक्तौ तु जीवब्रह्मभेदोस्त्येव ।

**यच्चोक्तं रामानुजेन**—अत्रापि- 'विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव । प्रापणीयस्तदैवात्मा प्रक्षीणाशेषभावनः ॥' कर्मभावना, ब्रह्मभावना, उभयभावनेति, भावनात्रयरहितः प्रापणीय इत्यभिधाय, 'क्षेत्रज्ञः करणी ज्ञानं करणं तस्य तेन तत् । निष्पाद्य मुक्तिकार्यं हि कृतकृत्यं निवर्तते ॥' इति करणस्य परब्रह्मध्यानरूपस्य प्रक्षीणाशेषभावनात्मस्वरूपप्राप्त्या कृतकृत्यत्वेन निवृत्तिवचनाद्यावत्सिद्ध्यनुष्ठेयमित्युक्त्वा । 'तद्भावभावमापन्नस्तदासौ परमात्मना । भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवे'दिति मुक्तस्य स्वरूपमाह- तद्भावो ब्रह्मणो भावः; स्वभावः । नतु स्वरूपैक्यम् । तद्भावभावमापन्न इति द्वितीयभावशब्दानन्वयात् । पूर्वोक्तार्थविरोधाच्च । यद्ब्रह्मणः प्रक्षीणाशेषभावनत्वं तदापत्तिस्तद्भावभावापत्तिः- यदैवमापन्नस्तदासौ परमात्मना अभेदी भेदरहितो भवति, तस्य भेदो देवादिरूपः- कर्मरूपाज्ञानमूलः, नतु स्वरूपकृतः इति, **तदप्यसारम्**—विज्ञानमात्मानं ब्रह्म नयतीति ममेष्टमेव- ज्ञानादेव कैवल्यमिति वादिनः ज्ञानमेव मुक्तिरूपं कार्यं निष्पाद्य कृतकृत्यं सन्निवर्तत इत्येतदुक्त्यैव कैवल्यं न तु ज्ञानादिति वादिनस्तवानिष्टमेव- ज्ञानादज्ञानस्य सकार्यस्य निवृत्त्या, तस्य च ज्ञानस्य वृत्तिरूपस्य स्वत एव निवृत्त्या, सिद्धमेकमेवाद्वितीयं ब्रह्मेति न द्वैतावकाशः । यावत्पर्यन्तं विज्ञानं वर्तते तावत्पर्यन्तं प्राप्यप्रापकप्रापणीयरूपः द्वैतमस्तुनाम, नतु विज्ञाननिवृत्त्यनन्तरं तत्सत्त्वम् । नच प्रापकज्ञानाभावेपि

प्राप्यप्रापणीयद्वयमस्तीति वाच्यं, प्रापकस्यैवाभावे कथं प्राप्यप्रापणीययोस्सत्त्वमिति । प्रापकं हि यच्च-त्प्रापयति तत्प्राप्यं, तच्च प्रापणीयं भवति । किं च प्रापकं हि प्राप्यं प्रापणीयं प्रापय्यैव निवर्तत इति कृत्वा प्रापणीयः प्राप्येणैवयं प्राप्त एव । नच प्राप्येण संयोगमेव गत इति वाच्यं, संयोगायोगस्योक्त-त्वादेवात्मनः ज्ञानेन प्रापितं ब्रह्मैक्यमाह- परमात्मनाऽभेदी भवतीति । ज्ञानात्कथमात्मब्रह्मणोरभेदसिद्धिः? तत्राह भेदश्चेति- तस्य जीवस्य परमात्मना सह भेदः अज्ञानकृतः । यत एवं ततो भेदजनकस्याज्ञानस्य ज्ञानेन सति नाशे अभेदस्सिद्ध्यत्येव । एवं यथाश्रुतार्थं विहाय देवादिभेद इत्यपार्थकल्पनमयुक्तमेव । परमात्मना अभेदीति अभेदं प्रति यः प्रतियोगितया निर्दिष्टस्तस्यैव प्रकृतस्य सन्निहितस्यैव परमात्मनः भेदं प्रत्यपि प्रतियोगितया ग्रहणस्य युक्तत्वात्, परमात्मप्रतियोगिकात्मानुयोगिकाभेदसिद्धेः, परमात्म-प्रतियोगिकात्मानुयोगिकभेदनाशपूर्वकत्वाच्च । नच तद्भावभावमापन्न इति द्वितीयभावशब्दानन्वयान्नात्रा-भेदोर्थ इति वाच्यं, तव मतेपि तद्भावमापन्न इत्यनेनैव विवक्षितार्थसिद्धौ द्वितीयभावशब्दस्य वैयर्थ्यात् । नच तद्भावः परमात्मधर्मस्तस्य भावः प्राप्तिस्तमापन्न इत्यर्थ इति वाच्यं, परमात्मधर्ममापन्न इत्यनेनैवेष्ट-सिद्धौ परमात्मधर्मप्राप्तिमापन्न इति पुनरुक्तत्वात् । नच द्वितीयभावस्य सत्ताऽर्थ इति वाच्यं, तथापि वैयर्थ्यस्य तदवस्थत्वात् । तर्हि मतद्वयं दुष्टमस्त्विति चेन्नैवं, मम मतस्य निर्दुष्टत्वात् । **कथं? उच्यते**--तद्भावभावमापन्नः तस्य परमात्मनो भावस्सत्यः यो भावः सच्चिदानन्दलक्षणं स्वरूपं तमापन्न इति । अस्ति हि परमात्मनः स्वरूपद्वयं सत्यमसत्यं चेति, तत्र सत्यं सच्चिदानन्दमसत्यं तु मायामयम् । तत्र यत्सत्यं तदधिगत इत्यर्थः । तस्माद्यथाश्रुतस्य परमात्मना भवत्यभेदीत्यस्य वाक्यस्य परमात्मैक्यलक्षणार्थस्य महाणमन्यार्थकल्पनं च रामानुजस्य दुष्टमेव ।

**यदप्युक्तं** मुक्तस्य देवादिरूपो भेदो नास्तीति तदप्यस्य दुर्वचमेव । एतन्मते मुक्तस्य विग्रह-वत्त्वेन तत्प्रयुक्तस्यापि भेदस्य सत्त्वात् । नहि मुक्तानामात्मनां स्वरूपकृत एव भेदः, येन स्वरूपभेदा-तिरिक्तो देवादिभेदो नास्तीत्युच्येत । नच 'देवतिर्यङ्मनुष्याख्यस्तथैव नृप नारकः । चतुर्विधोपि भेदोयं मिथ्याज्ञाननिबन्धन' इति शौनकवचनान्मुक्तस्य च चतुर्विधभेदो नास्तीति वाच्यं, अनात्म-न्यात्मबुद्धिरनात्मीये आत्मीयबुद्धिश्चातस्मिंस्तद्बुद्धित्वान्मिथ्याज्ञानमिति सम्प्रतिपन्नम् । तन्निबन्धनश्च भेदश्चतुर्विध एवेति नियन्तुं न शक्यते । तदतिरिक्तक्रिमिपक्षिस्थावरादिभेदानामपि सत्त्वात् । वैकुण्ठ-लोकस्थानामप्यनन्तगरुडविष्वक्सेनादिनित्यसूरिणां तल्लोकगतानां च मुक्तानां सशरीराणां 'सहस्रानन-श्शेषोहं, कनकपक्षो गरुडोह'मित्यादिमिथ्याज्ञाननिबन्धनभेदसत्त्वात्कथं मुक्तानां स्वरूपभेदातिरिक्त-भेदाभावः । किंच शेषस्सर्पः, गरुत्मान्पक्षीति कथं चतुर्विधस्यापि भेदस्याभावः । अपिच ब्रह्मविष्णु-रुद्रलोकस्थाः प्राणिनो देवा एव । ब्रह्मणस्सुरज्येष्ठ इति, विष्णोर्वासुदेव इति, रुद्रस्य महादेव इति च व्यपदेशसत्त्वात्- अपितु वस्वाद्यपेक्षया इन्द्रादय इव इन्द्राद्यपेक्षया ब्रह्मादय उत्कृष्टा भवन्ति । नैतावता ब्रह्मादीनां देवत्वमपैति अनिमेषत्वास्वप्नत्वादिदेवधर्मसत्त्वात् । तथा च ब्रह्मादयस्तत्तल्लोकस्थाश्च देव-जातीया एवेति कृत्वा कथं चतुर्विधभेदाभावस्तेषाम् । यदितु ते देवत्वजातेरुत्कृष्टया कया चिद्ब्रह्मत्व-

वैष्णवत्वादिरूपया जात्या आलिङ्गिता इत्युच्यन्ते, तर्हि ब्राह्मवैष्णवादिभेदान्तरसत्त्वेन देवादिरूपश्चतुर्विध एव भेद इति नियन्तुं न शक्यते- साच ब्राह्मोहं वैष्णवोहं शैवोहमिति मतिर्देवोहं मनुष्योहं नारकोहमिति मतिवन्मिथ्याज्ञानमेवातस्मिंस्तद्बुद्धित्वादनात्मनि हि ब्राह्मादिदेहे अहमित्यात्ममतिस्सा । नच तल्लोकस्थानां देहेऽहंमतिर्नास्तीति वाच्यं, तथापि ब्रह्मलोकस्थाः प्राणिनो ब्राह्मा इन्द्रलोकस्था देवा भूलोकस्था मनुष्या इत्यादिप्रतीतेरस्माकं सत्त्वात्तदन्यथानुपपत्त्यापि चतुर्विधभेदनियमो न सिद्ध्यत्येवेति । किंच विष्णुलोकस्थप्राणिनां स्त्रीपुरुषभेदोस्ति वा? नवा? आद्ये अहं स्त्री अहं पुरुष इति प्रतीतिस्तेषामस्त्यैवेति न मिथ्याज्ञानस्यापायः, मिथ्याज्ञानप्रयुक्तो हि तद्भेदः । न द्वितीयः- विष्णुः पुरुषः तत्पत्नी लक्ष्मीः स्त्री इति प्रसिद्धिविरोधात्- 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति श्रुतिविरोधाच्च । नचैवं तावुभावेव स्त्रीपुरुषाविति वाच्यं, अन्येषां प्राणिनां नपुंसकत्वे मानाभावात् । विष्वक्सेनादीनां सस्त्रीकत्वदर्शनाच्च पुराणेषु । नच स्त्रीपुरुषभेदो न मिथ्याज्ञाननिबन्धन इति वाच्यं, देहधर्मत्वात्तस्य- न ह्यात्मा देहातिरिक्तः स्त्री पुरुषो नपुंसको वा भवति- 'न स्त्री न षण्डो न पुमान्न जन्तु'रिति स्मरणात्- स्त्रीपुरुषादिचिह्नानां भगशिश्नादीनां देहावयवत्वाच्च । तस्मान्मुक्तस्य विष्णुलोकं गतस्य देवादिभेदः, तदन्तर्गतवैष्णवादिभेदः, तदन्तर्गतस्त्रीपुरुषादिभेदः, तदन्तर्गतभार्याभर्तृपुत्रादिभेदश्चेति बहुविधो भेदोस्त्येवेति कृत्वा न मिथ्याज्ञानस्यापाय इति कथं मुक्तत्वं तस्य? कथं वा मुक्तस्य स्वरूपभेदातिरिक्तभेदाभाव इति त्वया निर्णीयेत । नच 'एकस्वरूपभेदस्तु बाह्यकर्मप्रवृत्तिजः । देवादिभेदेऽपध्वस्ते नास्त्येवावरणे हि स' इति विष्णुपुराणान्मुक्तस्य स्वरूपभेदातिरिक्तदेवादिभेदाभाव इति वाच्यं, आत्मनः स्वरूपं तावदेकमेव- ज्ञानस्यैवात्मस्वरूपत्वात्तस्य चैकत्वात् । 'सत्यं ज्ञानमनन्तं ब्रह्म', 'एकमेवाद्वितीयं ब्रह्मे'ति श्रुतेः, 'तत्सत्यं स आत्मेति' श्रुतेश्च । तद्भेदस्तु बाह्यकर्मावृतिप्रजः, बाह्यमात्मन आन्तरत्वात्तदपेक्षया बाह्यं कर्म जीवादृष्टं लक्षणया तदाश्रितमज्ञानं कर्मेत्युच्यते तत्कृतमावरणं बाह्यकर्मावृतिः, ततः प्रकर्षेण जायत इति तत्प्रजः । अज्ञानेनात्मस्वरूपस्यावृतत्वादात्मभेदभ्रमो जात इत्यर्थः । उक्तं हि गीतासु-- 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव' इति । एवमज्ञानावरणजन्य आत्मभेदस्तदावरणनाशान्नश्यतीत्याह- देवादीति- देवादिभेदे देवादिभेदहोतावावरणे अज्ञानावरणे अपध्वस्ते सति प्रत्यगभिन्नब्रह्मज्ञानादज्ञाननाशे सति तदावरणमपि नश्यतीत्यर्थः । स आत्मभेदो नास्त्येव देवादिभेदोनाम देवमनुष्यतिर्यङ्नारकाख्यचतुर्विधभेद इति न- तस्यात्राप्रकृतत्वात् । किं तु देवमनुष्यादिलक्षणः स्त्रीपुंसादिलक्षणः जीवेश्वरलक्षणः चेतनाचेतनलक्षणः भूतभौतिकलक्षणः त्वमहमित्यादिलक्षणः घटपटादिलक्षणः देवदत्तयज्ञदत्तादिलक्षणः नीलपीतादिलक्षणश्च- किं बहुना सर्वविधोपि भेद उच्यते- आदिपदस्वारस्यात् । भेदमात्रं ह्यज्ञानकृतं तत्कथमज्ञाननाशे तिष्ठेत् । तस्मान्नास्ति मुक्तस्य स्वरूपभेदः । किं च मुक्तस्य स्वरूपभेदोस्तीति वादिनं त्वामहं पृच्छामि- किं मुक्तस्य स्वरूपमेव भेदः? उत स्वरूपातिरिक्तं कश्चिद्भेदपदार्थः? आद्ये इष्टापत्तिरेव- मुक्तस्य स्वरूपं यत्सच्चिदानन्दलक्षणमेकमेवाद्वितीयं ब्रह्म तदेव भेदशब्देन व्यवह्रियत इति भेदस्य ब्रह्मपर्यायत्वापत्तेः । न द्वितीयः- स्वरूपातिरिक्तस्य भेदस्य दुर्निरूपत्वात्- नहि मुक्तस्वरूपातिरिक्तः

कश्चिद्भेद इति पदार्थोऽस्ति । **ननु** किं मुक्तो बद्धाद्भिन्न? उताभिन्नः? आद्ये- सिद्ध एव भेदः । द्वितीये बन्धमुक्तिव्यवस्थाऽसिद्धिः- मुक्त्यर्थोपायानुष्ठानवैयर्थ्याच्छास्त्रवैयर्थ्यं च, **मैवम्**—परमार्थदशायां मुक्तौ बद्धस्यैवाभावेन तत्प्रतियोगिकभेदाभेदविकल्पकरणायोगात् । व्यवहारदशायां तु अज्ञानावरण-सत्त्वात्त्वं ब्रवीषि शुको मुक्तो वामदेवो मुक्तो बद्धोहमिति यावद्व्यवहारमात्मन्यज्ञानकल्पितो हि मिथ्या-भूतोस्ति भेदः । **ननु** किमिदानीं मुक्तः पूर्वं मुक्ताद्भिन्न उताभिन्न.? आद्ये भेदस्सिद्धः । द्वितीये प्रागुक्तदोष इति, **मैवम्**—अज्ञानावृतत्वद्दृष्ट्यैव कालादिसत्त्वं न तु मुक्तदृष्ट्येति । तदुक्तं 'न विरोधो नचोत्पत्तिर्न बद्धो नच साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थ'तेति । **एतेन** किं मुक्तो मोचकाद्भिन्नः? उताभिन्नः? अद्ये भेदसिद्धिः । द्वितीये दर्शित एव दोष इत्यपि **प्रत्युक्तम्** । पर-मार्थतो मुक्तमोचकयोरभावादात्मन एकस्यैव सत्त्वादिति । तस्मादात्मभेदस्याज्ञानकृतत्वादज्ञाननाशे सति मुक्तिदशायां नात्मभेद इति सिद्धमद्वैतम् । अत एवोक्तम्––'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्य'तीति । असन्तमिति कारणनाशान्नष्टमित्यर्थः । यद्वा अज्ञान-प्रयुक्तत्वान्मिथ्याभूतमित्यर्थः । **यदुक्तं सुदर्शनेन**—असन्तमनित्यमित्यर्थः- तथाच नित्यभेदोस्त्येवेति, **तदसत्**—यद्यात्मब्रह्मणोर्नित्योऽनित्यश्चेति भेदद्वयमस्ति तर्हि अनित्यं भेदं कः करिष्यतीत्यनेन नित्यं भेदं सर्वोपि करिष्यत्येवेति गम्यते- तच्चायुक्तं नित्यं क्रियत इति हि विप्रतिषिद्धं- यत्कृतकं तदनित्य-मिति व्याप्तेः । किं च विभेदजनक इति सामान्येनोपात्तस्यानित्यभेदजनक इति विशेषार्थवर्णनं चायुक्तं । अपि च यदि मूलकर्तुरियं विवक्षा तर्हि अनित्यं कः करिष्यतीत्येव ब्रूयात् । किं च यो ब्रह्मात्मनो-र्नित्यो भेद इत्युच्यते- त्वया स किं ब्रह्मभिन्नः? उताभिन्नः? आद्ये- 'ततस्सत्यमतोन्यदार्त'मिति श्रुतेर्न तस्य नित्यत्वम्- द्वितीये ब्रह्मात्मनोस्स्वरूपमेव भेद इति सिद्धमिति कृत्वा चैतन्यपर्यायो भेदशब्द इत्या-पतितम् । ब्रह्मात्मनोस्स्वरूपं हि चैतन्यम्- तच्चेष्टमेव चैतन्यमेकमेवाद्वितीयं ब्रह्मेति आत्मेति चास्म-दभ्युपगमात्तस्यैव नित्यत्वाच्च सिद्धमद्वैतमिति ।

**यदुक्त**मनेन- अयं श्लोको मृषावादिनामत्यन्तास्वरसः तथाहि- विभेदजनक इत्यत्र जनकशब्द उत्पादके स्वरसः न त्वध्यासहेतौ- अज्ञानशब्दस्यानिर्वचनीयपरत्वं लोकतश्शास्त्रतश्चाप्युत्पन्नं कर्मवाचित्व-व्युत्पत्तिरस्मिन् प्रबन्ध एव दर्शिता अविद्याकर्मसंज्ञेति- नाशशब्दस्य बाधवाचित्वमुख्यं- असन्तमिति पदंच व्यवच्छेद्याभावादफलं- सतो भेदस्यानभ्युपगमात् । तदभ्युपगमे हि तत्साफल्यं करिष्यतीति पदम-प्यस्वरसमध्यासवाचित्वाभावादिति, **तच्चासत्**—भेदाध्यासस्याज्ञानजन्यत्वेन तद्धेतोरज्ञानस्य विभेदजन-कत्वं स्वरससिद्धमेव । अध्यासहेतुः खल्वध्यासोत्पादकः- अज्ञानस्य सदसदनिर्वाच्यत्वेन अज्ञानशब्द-स्यानिर्वचनीयपरत्वं शास्त्रसिद्धमेव । अज्ञानं च कर्माश्रयान्तःकरणोपादानमेव, नतु कर्म- 'अविद्या कर्मसंज्ञान्ये'ति श्लोकस्य च अविद्यायाः कर्मेति संज्ञेति नार्थः, किंतु अविद्येति कर्मेति च द्विविधा तृतीया-शक्तिरित्यर्थः । नाशोऽदर्शनम्- 'नाश अदर्शन' इति स्मरणात् । तच्चादर्शनं बाधितस्यैव- रज्जुज्ञान-बाधितस्यैव सर्पस्य नाशदर्शनात् । तस्मान्नाशशब्दस्य बाधो मुख्यार्थ एव । असन्तमिति पदं च यदि

कश्चिद्भेद इति पदार्थोस्ति । **ननु** किं मुक्तो बद्धाद्भिन्न ? उताभिन्नः ? आद्ये- सिद्ध एव भेदः । द्वितीये बन्धमुक्तिव्यवस्थाऽसिद्धिः- मुक्त्यर्थोपायानुष्ठानवैयर्थ्याच्छास्त्रवैयर्थ्यं च, **मैवम्**—परमार्थदशायां मुक्तौ बद्धस्यैवाभावेन तत्प्रतियोगिकभेदाभेदविकल्पकरणायोगात् । व्यवहारदशायां तु अज्ञानावरण-सत्त्वात्त्वं ब्रवीषि शुको मुक्तो वामदेवो मुक्तो बद्धोहमिति यावद्व्यवहारमात्मन्यज्ञानकल्पितो हि मिथ्या-भूतोस्ति भेदः । **ननु** किमिदानीं मुक्तः पूर्वं मुक्ताद्भिन्न उताभिन्न. ? आद्ये भेदस्सिद्धः । द्वितीये प्रागुक्तदोष इति, **मैवम्**—अज्ञानावृतत्वदृष्ट्यैव कालादिसत्त्वं न तु मुक्तदृष्ट्येति । तदुक्तं 'न विरोधो नचोत्पत्तिर्न बद्धो नच साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थ'तेति । **एतेन** किं मुक्तो मोचकाद्भिन्नः ? उताभिन्नः ? अद्ये भेदसिद्धिः । द्वितीये दर्शित एव दोष इत्यपि **प्रत्युक्तम्** । पर-मार्थतो मुक्तमोचकयोरभावादात्मन एकस्यैव सत्त्वादिति । तस्मादात्मभेदस्याज्ञानकृतत्वादज्ञाननाशे सति मुक्तिदशायां नात्मभेद इति सिद्धमद्वैतम् । अत एवोक्तम्—'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्य'तीति । असन्तमिति कारणनाशान्नष्टमित्यर्थः । यद्वा अज्ञान-प्रयुक्तत्वान्मिथ्याभूतमित्यर्थः । **यदुक्तं सुदर्शनेन**—असन्तमनित्यमित्यर्थः- तथाच नित्यभेदोस्त्येवेति, **तदसत्**—यद्यात्मब्रह्मणोर्नित्योऽनित्यश्चेति भेदद्वयमस्ति तर्हि अनित्यं भेदं कः करिष्यतीत्यनेन नित्यं भेदं सर्वोपि करिष्यत्येवेति गम्यते- तच्चायुक्तं नित्यं क्रियत इति हि विप्रतिषिद्धं- यत्कृतकं तदनित्य-मिति व्याप्तेः । किं च विभेदजनक इति सामान्येनोपात्तस्यानित्यभेदजनक इति विशेषार्थवर्णनं चायुक्तं । अपि च यदि मूलकर्तुरियं विवक्षा तर्हि अनित्यं कः करिष्यतीत्येव ब्रूयात् । किं च यो ब्रह्मात्मनो-र्नित्यो भेद इत्युच्यते- त्वया स किं ब्रह्मभिन्नः? उताभिन्नः ? आद्ये- 'ततस्त्यमतोन्यदार्त'मिति श्रुतेर्न तस्य नित्यत्वम्- द्वितीये ब्रह्मात्मनोस्स्वरूपमेव भेद इति सिद्धमिति कृत्वा चैतन्यपर्यायो भेदशब्द इत्या-पतितम् । ब्रह्मात्मनोस्स्वरूपं हि चैतन्यम्- तच्चेष्टमेव चैतन्यमेकमेवाद्वितीयं ब्रह्मेति आत्मेति चास्म-दभ्युपगमात्तस्यैव नित्यत्वाच्च सिद्धमद्वैतमिति ।

**यदुक्त**मनेन- अयं श्लोको मृषावादिनामत्यन्तास्वरसः तथाहि- विभेदजनक इत्यत्र जनकशब्द उत्पादके स्वरसः न त्वध्यासहेतौ- अज्ञानशब्दस्यानिर्वचनीयपरत्वं लोकतश्शास्त्रतश्चाप्युत्पन्नं कर्मवाचित्व-व्युत्पत्तिरस्मिन् प्रबन्ध एव दर्शिता अविद्याकर्मसंज्ञेति- नाशशब्दस्य बाधवाचित्वमुख्यं- असन्तमिति पदंच व्यवच्छेद्याभावादफलं- सतो भेदस्यानभ्युपगमात् । तदभ्युपगमे हि तत्साफल्यं करिष्यतीति पदम-प्यस्वरसमध्यासवाचित्वाभावादिति, **तच्चासत्**—भेदाध्यासस्याज्ञानजन्यत्वेन तद्धेतोरज्ञानस्य विभेदजन-कत्वं स्वरससिद्धमेव । अध्यासहेतुः खल्वध्यासोत्पादकः- अज्ञानस्य सदसदनिर्वाच्यत्वेन अज्ञानशब्द-स्यानिर्वचनीयपरत्वं शास्त्रसिद्धमेव । अज्ञानं च कर्माश्रयान्तःकरणोपादानमेव, नतु कर्म- 'अविद्या कर्मसंज्ञान्ये'ति श्लोकस्य च अविद्यायाः कर्मेति संज्ञेति नार्थः, किंतु अविद्येति कर्मेति च द्विविधा तृतीया-शक्तिरित्यर्थः । नाशोऽदर्शनम्- 'नाश अदर्शन' इति स्मरणात् । तच्चादर्शनं बाधितस्यैव- रज्जुज्ञान-बाधितस्यैव सर्पस्य नाशदर्शनात् । तस्मान्नाशशब्दस्य बाधो मुख्यार्थ एव । असन्तमिति पदं च यदि

'विभेदजननेऽज्ञाने नष्टे ज्ञानबलान्मुने । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥' ६०. स्पष्टोऽर्थः ।

'आत्मैवेदं जगत्सर्वमिति जानन्ति पण्डिताः । अज्ञानेनावृता मर्त्या न विजानन्ति शङ्करम् ॥' (१६-६१) अत्र ऐतदात्म्यमिदं सर्वमित्यद्वैतं स्फुटम् ।

'देहाद्यात्ममतिं विद्वां स्समाकृष्य समाहितः । आत्मनाऽऽत्मनि निर्द्वन्द्वे निर्विकल्पे निरोधयेत्॥' (१७-१६) अत्र निर्विकल्पकमद्वितीयं ब्रह्म प्रत्यगभिन्नमिति स्फुटम् ।

'इदंतया न देवेशमभिध्यायेन्मनागपि । ब्रह्मणस्साक्षिरूपत्वान्नेदं यदिति हि श्रुतिः ॥' (१९-३०) अत्र प्रत्यग्ब्रह्माभेदः स्फुटः ।

'यदि जीवात्पराद्भिन्नः कार्यतामेति सुव्रत। अचित्त्वं च प्रसज्येत घटवत्पण्डितोत्तम ॥ (२० २) विनाशित्वं भयं च स्याद्द्वितीयाद्वा इति श्रुतिः । नित्यस्सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ॥ एकस्सन् भिद्यते भ्रान्त्या मायया न स्वभावतः । तस्मादद्वैतमेवास्ति न प्रपञ्चो न संसृतिः ॥ यथाऽऽकाशो घटाकाशो मठाकाश इतीरितः । तथा भ्रान्त्या द्विधा प्रोक्तो ह्यात्मा जीवेश्वरात्मना ॥' (५) अत्र आत्मा स्वाभाविकभेदशून्य इति द्वैतमसत्यमिति अद्वैतमेव सत्यमिति च स्फुटम् ।

'यथा फेनतरङ्गादिसमुद्रादुत्थितं पुनः । समुद्रे लीयते तद्वज्जगन्मय्येव लीयते ॥ तस्मान्मत्तः पृथङ्नास्ति जगन्माया च सर्वदा । इति बुद्धिस्समाधिस्स्यात्सा समाधिरिति श्रुतिः ॥ यस्यैवं परमात्मायं प्रत्यग्भूतं प्रकाशितः । स याति परमं भावं स्वयं साक्षात्परामृतम् ॥ यदा मनसि चैतन्यं भाति सर्वत्रगं सदा । योगिनोऽव्यवधानेन ब्रह्म सम्पद्यते तदा ॥ यदा सर्वाणि भूतानि स्वात्मन्येवाभिपश्यति । सर्वभूतेषु चात्मानं ब्रह्म सम्पद्यते स्वयम् ॥ यदा सर्वाणि भूतानि समाधिस्थो न पश्यति । एकीभूतः परेणासौ तदा भवति केवलः ॥' (२०-२५) एषु जीवेश्वराभेदः स्फुटः ।

'यथा सर्पेदमंशस्य तत्त्वं दण्डादि केवलम् । अस्य संसारिणस्तत्त्वं तथा ब्रह्मैव केवलम् ॥' (३-३-१०) अत्र एकमेवाद्वितीयं ब्रह्म सत्यं जीवस्तु तत्र कल्पितत्वान्मिथ्यैवेति सिद्धमद्वैतम् ।

'चण्डालदेहे पश्वादिशरीरे ब्रह्मविग्रहे । अन्येषु तारतम्येन स्थितेषु पुरुषोत्तम ॥ व्योमवत्सर्वदा व्याप्तस्सर्वसम्बन्धवर्जितः । एकरूपो महादेवः स्थितस्सोऽहं परामृतः ॥ इति यो वेद वेदान्तैः सोतिवर्णाश्रमी भवेत् ।' (५-२६) अत्र एक एवाद्वितीय आत्मा ब्रह्माभिन्न इति स्फुटम् ।

'न देहो नेन्द्रियप्राणो न मनोबुध्यहंकृतिः । न चित्तं नैव माया च न च व्योमादिकं जगत् ॥ न कर्ता नैव भोक्ता च नैव भोजयिता तथा । केवलं सच्चिदानन्दब्रह्मैवात्मा यथार्थतः ॥ जलस्य चलनादेव चञ्चलत्वं यथा रवेः । तथाऽहङ्कारसम्बन्धादेव संसार आत्मनः ॥' (३४) एषु निष्प्रपञ्चब्रह्माभिन्नः प्रत्यगात्मेति स्फुटम् ।

'एवमात्मानमद्वन्द्वं निर्विकल्पं निरञ्जनम् । नित्यं शुद्धं निराभासं चिन्मात्रं च परामृतम् ॥' (४०) अत्र निर्विशेषं प्रत्यगभिन्नं ब्रह्मेति स्फुटम् ।

'संसारित्वेन भासोऽहं स एव परमेश्वरः । सोऽहमेव न संदेहः स्वानुभूतिप्रमाणतः ।। (४७ १२) चिच्छेषत्वं च नास्त्येव चितश्चिन्न हि भिद्यते । भिद्यते भेदचिच्चित्स्याच्चितो चित्त्वं विरुध्यते ।। (२८) पूर्णोऽहं सर्वसाक्षित्वात्सर्वदा परमार्थतः । संसारवर्जितस्साक्षात्सर्वदा परमेश्वरः ।। अहं संसारसाक्षित्वात्सदा संसारवर्जितः ।।' (२३) एषु चिद्रूपं पूर्णमसंसारि प्रत्यगभिन्नं ब्रह्मेत्यद्वैतं स्फुटम् ।

'तस्माच्छिवस्य पूर्णस्य प्रणवो वाचकः स्मृतः । वाच्यवाचकभावाच्च लक्ष्यलक्षणतापि च ।। अन्योन्यतापि नास्त्येव परमार्थनिरूपणे । अभावादेव सर्वस्य शिवादन्यस्य सर्वदा ।। अस्ति नास्ति मृषा भाति न भातीत्यादि मायया । कल्पितं चित्सुखानन्दे परमार्थे शिवात्मनि ।। माया तत्कार्यमप्यस्माच्छिवात्सत्यादिलक्षणात् । प्रत्यक्षसिद्धान्नास्त्येव परमार्थनिरूपणे ।। अथ किं बहुनोक्तेन शिवादन्यं न विद्यते । शिवस्वरूपमेवाहुर्जगदेतद्विचक्षणाः ।। सर्वस्वरूपमज्ञानाद्दृश्यते नच वस्तुनः । एष एव हि मन्त्रार्थस्सत्यं सत्यं न चान्यथा ।।' (८-२२) एषु एकमेवाद्वितीयं ब्रह्म तत्सत्यमिति स्फुटम् ।

वेदास्सर्वे पुराणानि स्मृतयो भारतं तथा । अन्यान्यपि च शास्त्राणि तथा तर्काश्च सर्वशः ।। शैवागमाश्च विविधा आगमा वैष्णवा अपि । अन्यागमाश्च विदुषामनुभूतिस्तथैव च ।। अस्मिन्नर्थे स्वसंवेद्ये पर्यवस्यन्ति नान्यथा ।' (२४) अत्र सर्वेषामपि वेदपुराणादीनां निर्विशेषब्रह्मपरत्वमेवेति स्फुटं प्रतिपादितम् ।

'भेदाभावाच्च भेदस्य भ्रमत्वादेव वस्तुतः ।' (९-३) अत्र भेदस्य मिथ्यात्वादभेदस्सत्य इति स्फुटम् ।

'प्रत्यग्भूतश्शिवो ज्ञातुं न शक्यस्सर्वजन्मभिः । प्रत्यगात्मा शिवस्साक्षान्न परागर्थ आस्तिकाः ।। (१०-३४) अत्र प्रत्यग्ब्रह्माभेदः स्फुटः- शिवस्य ब्रह्मत्वात् ।

'आत्मभेदस्तथैवात्मब्रह्मभेदश्च सुव्रताः । उपाधिनैव क्रियते न स्वतो मुनिपुङ्गवाः ।। घटाद्युपाधिसम्पर्कादाकाशस्य यथा भिदा ।' अत्र स्वाभाविको ब्रह्मात्मभेद आत्मभेदश्च नास्तीति स्फुटम् ।

'आत्मनोपि स्वतो भेदमाहुः केचिन्मुनीश्वराः । तन्न सङ्गतमेव स्यादात्मभेदस्य साधकः ।। भेदसाक्षी शिवोह्यात्मा कथं भिन्नो भवेद्द्विजाः । अत आत्मनि भेदस्तु भ्रान्तिसिद्धो न वस्तुतः ।।' (४७) अत्रात्मनस्स्वाभाविकभेदो भ्रान्तिप्रयुक्त एवेत्युपपादितम् ।

'स्वरूपत्वेन वा विप्रा धर्मत्वेनैव वा भिदा । अपि वर्षशतेनापि वस्तुतो न निरूप्यते ।। अन्यतोन्यस्य भेदस्यान्नैकस्यैव सदा खलु । अन्यत्वं वस्तुतो भेदे सिद्धे सिद्ध्यति यौक्तिकम् ।। एकमेवाद्वितीयं स्यादित्याह श्रुतिरादरात् । मायामात्रमिदं द्वैतमिति चाहापरा श्रुतिः ।। एकत्वं पश्यतो मोहः कश्शोक इति चाह हि । द्वितीयाद्वै भयं नाल्पे सुखमित्यपि चाह हि ।। अतस्तर्कप्रमाणाभ्यां वस्त्वेकत्वं सुनिश्चितम् । वस्त्वेकत्वं महावाक्यादेव जानन्ति ये जनाः ।। ते मुच्यन्ते हि संसाराद्यथा स्वप्नप्रबोधनात् । भेददर्शनमास्थाय मुक्तिं वांछन्ति ये नराः ।। ते महाघोरसंसारे पतन्त्येव न संशयः ।' (५९) अत्र एकमेवाद्वितीयं ब्रह्म तत्सत्यं तद्ज्ञानादेव मुक्तिः भेदज्ञानात्संसारपात एवेति स्फुटम् ।

'उक्तलक्षणमात्मानमुक्तलक्षणमीश्वरम् । एकं पश्यन्ति ये विप्रास्तर्कतश्च प्रमाणतः ॥' (११-३६) अत्र जीवेश्वरैक्यं स्फुटम् ।

'ब्रह्मसत्यपरानन्दप्रकाशानन्दलक्षणम् । अप्रच्युतात्मभावेन संस्थितं सर्वदैव तु ॥ आत्मशक्तिसमायोगादनाद्यन्तादतर्कितात् । अप्रतीतमिवाभाति स्वयं भातमपि द्विजाः ॥ सदप्यसदिव प्राज्ञो सदैकमपि भिन्नवत् । तादृशाकारमापन्नः संसारीवावभासते ॥' (१२-४) अत्र ब्रह्मैव मायया जीवत्वं प्राप्तमिव भवतीति जीवब्रह्माद्वैतं स्फुटम् ।

'अतश्च संक्षेपमिमं शृणुध्वं जगत्समस्तं चिदचिद्विभिन्नम् । स्वशक्तिक्लृप्तं शिवमात्रमेव न देवदेवात्पृथगस्ति किञ्चित् ॥' अत्र एकमेवाद्वितीयं ब्रह्मेति स्फुटम् ।

स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः । न सन्ति नास्ति माया च तद्धि शुद्धात्मवेदनम् ॥ स्वपूर्णात्मशिवानन्दनिष्ठामासाद्य मानवः । तथैव लभते मुक्तिं स्वपूर्णात्मशिवात्मकम् ॥' (३-४६) अत्र एकमेवाद्वितीयं ब्रह्मेति तत्सायुज्यमेव मुक्तिरिति च स्फुटम् ।

'वैदिको लौकिकश्चापि व्यवहारस्तु कल्पितः । भेदविज्ञानिनो मोहाद्भासते न तु योगिनः ॥ (५३) अत्र व्यावहारिकभेदज्ञानं भ्रान्तिरिति स्फुटम् ।

'निर्भेदे निर्मले नित्ये निराधारे निरञ्जने । दासस्सोहमहं सोपीत्यात्मन्येव कथं भवेत् ॥ (१४-३८) अत्र जीवेशयोस्सेव्यसेवकभावो भ्रान्तिसिद्ध एव- एकमेव निर्विशेषं ब्रह्मेति स्फुटम् ।

'शिवस्समस्तं परमार्थतस्तथा शिवस्समस्तं व्यवहारतोपि च । इति प्रजातं यदि वेदनं नृणां तरन्ति संसारमहोदधिं तु ते ॥' (६१) अत्र एकमेवाद्वितीयं ब्रह्मेति तद्ज्ञानादेव मुक्तिरिति च स्पष्टम् ।

'तस्मात्सत्ताऽतिरेकेण विशेषार्थो न विद्यते । विशेषार्थप्रतीतिस्तु भ्रान्तिसिद्धा न संशयः ॥' (१५-७) अत्र निर्विशेषं सत्तामात्रं ब्रह्मेति स्पष्टम् ।

'भूतानि शम्भुर्भुवनानि शम्भुर्वनानि शम्भुर्गिरयश्च शम्भुः । स एव सर्वं न ततोतिरिक्तं ततस्स एकः परमार्थमेतत् ॥ (१८) सर्पादिभावेन विभासमाना रज्जुर्न सर्पादि सदैव रज्जुः । तद्वत्प्रपञ्चात्मतया विभाति शिवो न विध्वंसिन एव सत्यम् ॥' (२७) अत्र एकमेवाद्वितीयं ब्रह्म सत्यं तत्र कल्पितं तद्भिन्नं सर्वमपि मिथ्येति स्पष्टम् ।

'तस्माज्ज्ञातं विजानाति विमुक्तश्च विमुच्यते । निवर्तते निवृत्तिश्च श्रुत्यर्थस्यैष संग्रहः ॥ (१६-४६) अत्र ब्रह्म प्रत्यगभिन्नमेवेति कृत्वा प्रतीचो मुक्त्यादयो न परमार्था इति स्पष्टम् ।

'प्रत्यग्ब्रह्मैकताऽज्ञानाद्द्वैतवस्तुसमुद्गतम् ।' (१७-२) अत्र प्रत्यग्ब्रह्मैक्यं स्वाभाविकमिति स्पष्टम् ।

'आत्मनस्तु स्वरूपं हि सुखं नान्यद्विचारतः ।' (७०) अनेन सुखमात्मनो धर्म इति रामानुजमतं परास्तम् ।

'साक्षिमात्रतया भेदाभावेप्यस्यैव साक्षिणः । विशेषाकारतो भेदं वदन्ति भुवि मानवाः ॥ ते महामोहसर्पेण दष्टा एव न संशयः । विशेषरूपं चिद्रूपं जडरूपं तु वा भवेत् ॥ न रूपान्तरमेव स्या-

तादृशस्यानिरूपणात् । चिद्रूपं साक्षिमात्रं स्यान्नचान्यत्परमार्थतः । जडरूपं तु नास्त्येव साक्षिणः परमार्थतः ॥ चिद्रूपस्य जडाकारो विरोधान्नैव सिद्ध्यति । प्रकाशस्य तमोरूपं यथा लोके न सिद्ध्यति ॥ अतो विशेषाकारेण भेदं ये सर्वसाक्षिणः । वदन्ति ते महाभ्रान्ता निमग्नाश्च भवार्णवे ॥ आत्मनस्सर्वसाक्षित्वमेकत्वं च तथैव च । नित्यत्वं चैव शुद्धत्वं भूमानन्दत्वमेव च । ब्रह्मत्वं च द्विजा वेदा वदन्ति श्रद्धया सह ॥ स्मृतयश्च पुराणानि भारतादीनि चास्तिकाः ।, (१९-२६) एषु आत्मनो निर्विशेषत्वमेकत्वं ब्रह्मत्वं सर्वेषां पुराणादीनामेतत्परत्वं च स्पष्टम् ।

'वेदान्ताश्शङ्करं साक्षान्निर्विशेषाद्वयात्मना । वक्तुं मार्गान्तरान्नैवं ततो विद्या तु वेदजा ॥ अपोमार्गान्तराज्ज्ञाता मतयो मुनिसत्तम । अविद्या नैव विद्यास्स्युरिति सम्यङ्निरूपणम् ॥' (२२-१८) अत्र निर्विशेषब्रह्मप्रतिपादनपरैव विद्या, अन्या अविद्या एवेति स्पष्टम् ।

एकरूपा परा मुक्तिस्ततस्तद्विषया मतिः । एकरूपा भवेन्नैव नानारूपा भविष्यति ॥' (१७) अत्र मुक्तौ निर्विशेषत्वं ब्रह्मणः तद्विषयज्ञानस्य च निर्विशेषत्वं स्फुटम् ।

'व्यावहारिकदृष्ट्यायं विभागः परिकीर्तितः । प्रमाणदृष्ट्या वस्त्वेकं नित्यमेव न संशयः ॥' (२७-१८) अत्र निर्विशेषं ब्रह्मैव परमार्थ इति स्फुटम् ।

'विकल्परहितं तत्त्वं ज्ञानमानन्दमद्वयम् । ये पश्यन्ति विमुक्तास्ते जीवन्तोपि न संशयः ॥ (२५) नच नामानि रूपाणि शिवस्य परमात्मनः । तथापि मायया तस्य नामरूपे प्रकल्पिते ॥' (२८) अत्र नामरूपात्मकं सर्वं द्वैतं मायामयमेव निर्विकल्पकं ब्रह्मैकमेव सत्यमिति स्पष्टम् ।

'चिद्रूपं हि सदा सत्यं नाचिद्रूपं कदाचन । असत्यत्वस्य दृष्टत्वादचिद्रूपस्य वस्तुनः ॥ शुक्तिकारजतादीनामसत्यत्वं हि सम्मतम् । अचेतनानामन्येषामसत्यत्वे निदर्शनम् ॥ (२८-२५) शुक्तिकारजतं विप्रास्सत्य एव ततश्शिवः ॥' (२६) अत्र ब्रह्मभिन्नं सर्वं मिथ्येति स्पष्टम् ।

'जीवब्रह्मैक्यविज्ञानं विशुद्धं वेदसम्भवम् । देवदेवस्य विप्रेन्द्रा महाप्रीतिकरं सदा ॥' (३२-२) अत्र जीवब्रह्माद्वैतं स्पष्टम् ।

'यस्य विज्ञानसम्पन्नाः प्रत्यग्ज्योतिषि संस्थिताः । तमेव प्रत्यगात्मानं वन्देऽहन्ताविवर्जितम् ॥' (३८-६८) अत्र प्रत्यग्ब्रह्माभेदः स्पष्टः प्रतीचोऽहंरूपत्वाभावश्च ।

'तस्मादुक्तप्रकारेण मुक्तिस्सायुज्यरूपिणी । ज्ञानलभ्या क्रियामात्रान्न लभ्या न समुच्चयात् ॥' (९८) अत्र ब्रह्मसायुज्यं मुक्तिर्न तु ब्रह्मसामीप्यादिकमिति तद्धेतुश्च ज्ञानमेव न कर्मादिकमिति च स्पष्टम् ।

'सत्यमेव सदाऽद्वैतमसत्यं द्वैतमास्तिकाः । द्वैतस्यापि च सत्यत्वं वर्णयन्तीह केचन ॥ तदसङ्गत-मध्यस्तं द्वैतं यस्मात्परात्मनि । अध्यस्तं हि सदा द्वैतं दृश्यत्वाच्छुक्तिरूप्यवत् ॥ दृश्यत्वं द्वैतजातस्य सम्मतं सर्वदेहिनाम् ।' (३९-५) अत्र एकमेवाद्वितीयं ब्रह्म सत्यं तद्भिन्नं सर्वं द्वैतमसत्यमिति स्पष्टम् ।

'प्रत्यक्षादेरगम्यत्वादद्वैतस्य तु सर्वदा । तत्रैवार्थवती साक्षादद्वैतश्श्रुतिरास्तिकाः ॥ अन्तरेण श्रुतिं भेदो लोकसिद्धस्सदैव हि । तेन नार्थवती तत्र श्रुतिर्मानातिगामिनी ॥ प्रमाणान्तरसंवादापेक्षा नास्ति श्रुतेस्सदा ।' (१७) अत्र श्रुतेरर्थवत्त्वाय अद्वैतमेवाभ्युपेयमिति स्पष्टम् ।

'अतः प्रयोजनाभावाद्द्वैतं न प्रतिपाद्यते । अनूद्य द्वैतमद्वैतं प्रतिपादयति श्रुतिः ॥' (२२) अत्र अद्वैतपरैव श्रुतिरिति स्पष्टम् ।

'स्मृतीनां च पुराणानां भारतादेस्तथैव च । अद्वैतनिष्ठतैवोक्ता न द्वैतपरता सदा ॥' (२४) अत्र वेदोपबृंहणपुराणेतिहासयोरप्यद्वैतपरत्वमेवेति स्पष्टम् ।

'केनचित्साधनेनैव मुक्तौ शिवसमो भवेत् । इत्येवं केचिदिच्छन्ति वादिनो मुनिपुङ्गवाः ॥ वार्तामात्रमिदं प्रोक्तं सर्वदा न तदर्थवत् । एकदेशेन वा जीवः किं वा सर्वात्मना समः ॥ एकदेशेन चेत्सर्वे शिवास्संसारवर्तिनः । एकदेशेन सर्वेषामस्ति साम्यं शिवेन हि ॥ सर्वात्मना चेत्साम्यं तत्सर्वदा शिव एव सः । भेदकारणशून्यत्वाद्भेदाभावाच्च वस्तुतः ॥ किं च मुक्तौ शिवेनैव समो जीवो भवेद्यदि । किञ्चित्कालं हि तत्साम्यमागतं खलु गच्छति ॥ तस्माज्जीवः स्वतस्साक्षाच्छिवस्सत्यादिलक्षणः । अप्रच्युतात्मभावेन स्थितस्सन् परविद्यया ॥ स्वाज्ञानं तत्प्रसूतं च संसारं स्वात्मना ग्रसन् । सम्पूर्णशिवरूपेण स्वयमेवावशिष्यते ॥ शुक्तिकाकलधौतं तु शुक्तिकावेदनेन तु । शुक्तिकामात्ररूपेण यथा लोकेऽवशिष्यते ॥' अत्र मुक्तस्य ब्रह्मसाम्यमिति पक्षो निरस्तः ब्रह्माऽभेदो जीवस्य स्थापितश्चेति स्पष्टम् ।

'एकत्वबोधकस्यास्य वेदवाक्यस्य सुव्रताः । वाक्यान्तराणि सर्वाणि शेषभूतानि सन्ततम् ॥' (६०) अत्र अद्वैतवाक्यमेव शेषि द्वैतवाक्यानि तु तच्छेषभूतानीति स्पष्टम् ।

'वेदान्तवाक्यजं ज्ञानं ब्रह्मात्मैकत्वगोचरम् । बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत् ॥ सर्वसाक्षिणमात्मानं सर्वहीनं तु वस्तुतः । आत्मानमीश्वरं पश्यन् कथं बध्येत कर्मणा ॥ (४२-२०) अत्र ब्रह्मात्मैक्यमात्मनो निर्विशेषत्वं च स्पष्टम् ।

'अतो जीवेश्वरैकत्वज्ञानादेवात्मवस्तुनः । विशुद्धिः परमा प्रोक्ता कर्मणा न कथञ्चन ॥' (४४-२१) अत्र जीवेश्वराद्वैतं स्पष्टम् ।

'चिद्रूपस्यात्मनस्साक्षाद्ब्रह्मतामाह हि श्रुतिः ।' (४७-५०) अत्र प्रत्यग्ब्रह्माभेदः स्पष्टः ।

'आत्मा तु परमात्मापि कर्मभिर्बध्यतेऽवशः । कर्मभिर्व्यवहारे तु बद्धोपि स्वीयमायया ॥ वस्तुतः परमात्मायं खलु तैर्न हि बध्यते ।' अत्र जीव एव पर इति स्पष्टम् ।

'परमार्थो द्विधा प्रोक्तो मया हे स्वर्गवासिनः । एकस्स्वभावतस्साक्षात् परमार्थस्सदैव तु ॥ स शिवस्सत्यचैतन्यसुखानन्तस्वलक्षणः । अपरः कल्पितस्साक्षाद्ब्रह्मण्यध्यस्तमायया ॥ कल्पितानामवस्तूनां मध्ये केचन मायया । परमार्थतया कॢप्ता व्यवहारे सुरर्षभाः ॥ व्यवहारे तु संकॢप्ताः केचनापरमार्थतः । आकाशादिजगच्छुक्तिरूप्याद्याः कथिता मया ॥' ब्रह्मगीतायां २ अध्याये २० श्लोकः । अत्र पारमार्थिकं ब्रह्म व्यावहारिकं जगत् प्रातिभासिकं शुक्तिरूप्यादीति स्पष्टम् ।

चैतन्यापेक्षया चेत्यं व्योमादिसकलं जगत् । असत्यं सत्यरूपं तत्कुम्भकुड्याद्यपेक्षया ॥ कुम्भकुड्यादयो भावा अपि व्योमाद्यपेक्षया । असत्यास्सत्यरूपास्ते शुक्तिरूपाद्यपेक्षया ॥' (२६) अत्र ब्रह्मभिन्नं सर्वमसत्यमिति स्पष्टम् ।

'यदा ह्येवैष एतस्मिन्नदृश्यत्वादिलक्षणे । निर्भेदं परमेकत्वं विन्दते सुरसत्तमाः ॥ तथैवाभय-मत्यन्तं कल्याणं परमामृतम् । स्वात्मभूतं परं ब्रह्म स याति स्वर्गवासिनः ॥' (२-५२) अत्र जीव-ब्रह्माभेदः स्पष्टः ।

'यतो वाचो निवर्तन्ते निमित्तानामभावतः । निर्विशेषे शिवे शब्दः कथं देवाः प्रवर्तते ॥' (६-५) अत्र निर्विशेषमशब्दगोचरं ब्रह्मेति स्पष्टम् ।

'तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् । विदित्वा स्वात्मरूपेण न बिभेति कुतश्चन ॥'(६८) अत्र प्रत्यगभिन्नं निर्गुणं ब्रह्मेति स्पष्टम् ।

'एवमात्मानमद्वैतमात्मना वेद यः स्थिरम् ।' (१०७) अत्र आत्माऽद्वैत इति स्पष्टम् ।

'वेत्तापि विद्यासम्बन्धात्सविशेषो भवेद्ध्रुवम् । निर्विशेषं परं ब्रह्म ततो विद्वान्न चात्मवित् ॥' (४-२४) अत्र निर्विशेषं ब्रह्मेति स्पष्टम् ।

'व्यावहारिकदृष्ट्येयं विद्याऽविद्या च नान्यथा । तत्त्वदृष्ट्या तु नास्त्येव तत्त्वमेवास्ति केवलम् ॥' (३०) अत्र अद्वितीयं ब्रह्मैव परमार्थ इति स्फुटम् ।

'बद्धो मुक्तो महाविद्वानज्ञ इत्यादिभेदतः । एक एव सदा भाति नानेव स्वप्नवत्स्वयम् ॥' (४७) अत्र आत्मैक्यं स्पष्टम् ।

'ब्रह्मणोन्यत्सदा नास्ति वस्तुतोऽवस्तुतोपि च ।' (५५) अत्र अद्वितीयं ब्रह्मेति स्पष्टम् ।

'भेदस्सर्वत्र मिथ्यैव धर्म्यादेरनिरूपणात् । भेदानिरूपणादेव धर्म्यादेरनिरूपणम् ॥ भेदे ज्ञाते हि धर्म्यादिविभागस्य च वेदनम् । विभेदेनैव धर्म्यादौ विज्ञाते भेदवेदनम् ॥' (२९) अत्र भेदस्य मिथ्यात्वं स्पष्टम् ।

'चिद्रूपस्य तु सत्यत्वं युक्तमेवास्तिकास्सदा । अचिद्रूपा हि रज्ज्वादेर्मृषात्वं सम्मतं खलु ॥' (३६) अत्र जगन्मिथ्यात्वं स्पष्टम् ।

'तस्मादज्ञानमज्ञानकार्यं च सुरपुङ्गवाः । एतद्ब्रह्मैव नैवान्यदिति मे निश्चिता मतिः ॥' (९९) अत्र ब्रह्मण्यध्यस्तं सर्वं ब्रह्मैवेति निर्विशेषं ब्रह्म सिद्धम् ।

'शिव एवास्ति नैवान्यदिति यो निश्चयः स्थिरः । सदा स एव सिद्धान्तः पूर्वपक्षस्तथा परः ॥' (१२७) अत्र ब्रह्म सदिति ज्ञानमेव सिद्धान्त इति ब्रह्मैकमेव सदिति स्पष्टम् ।

'द्वौ सुपर्णौ शरीरेस्मिन् जीवेशाख्यौ व्यवस्थितौ । तयोर्जीवः फलं भुंक्ते कर्मणो न महेश्वरः ॥ केवलं साक्षिरूपेण विना भोगं महेश्वरः । प्रकाशते स्वयम्भेदः कल्पितो मायया तयोः ॥ यथाऽऽ-काशो घटाकाशमहाकाशप्रभेदतः । कल्पितः परचिज्जीवः शिवरूपेण कल्पितः ॥ तत्त्वतश्चिच्छिव-स्साक्षाच्चिज्जीवश्च स्वतस्सदा । चिच्चिदाकारतोऽभिन्ना न भिन्ना चित्त्वहानितः ॥ चितश्चिन्नचिदाकारा-द्भिद्यते जडरूपतः । भिद्यते चेज्जडे भेदश्चिदेका सर्वदा खलु ॥ तर्कतश्च प्रमाणाच्च चिदेकत्वे व्यव-स्थिते । अपि पापवतां पुंसां विपरीता मतिर्भवेत् ॥ श्रौतस्मार्तसदाचारैर्विशुद्धस्य महात्मनः । प्रसा-

दादेव रुद्रस्य चिदेकत्वे मतिर्भवेत् ॥ चिदेकत्वपरिज्ञानान्न शोचति न मुह्यति । अद्वैतं परमानन्दं शिवं याति तु केवलम् ॥' (७-५६) एषु चैतन्यमेकं तदेव जीव ईशश्चेति स्पष्टमद्वैतम् ।

'चिन्मात्रं हि सदारूपमुभयोश्शिवजीवयोः । तथासति कथं साम्यं चिन्मात्रे भेदवर्जिते । अतस्साम्यं तयोस्साक्षादैक्यमेव न चेतरत् ।' (७३) अत्र जीवेश्वरयोरैक्यं प्रतिपादितम् ।

'आकाशमेकं सम्पूर्णं कुत्रचिन्नैव गच्छति । तद्वत्स्वात्मविभुत्वज्ञः कुत्रचिन्नैव गच्छति ॥' (८०) अत्र एको विभुश्चात्मा न तस्य गतिः क्वापीति ब्रह्मविदस्सगुणब्रह्मलोकप्राप्त्यभावः स्फुटः ।

'स न जीवश्शिवादन्यो यो भुंक्ते कर्मणां फलम् । भेदाभावाच्चितश्चेत्थं न कर्मफलमर्हति ॥' (८-२७) अत्र बद्धजीवोपि शिव एवेत्यद्वैतं प्रतिपादितम् ।

'जीवरूप इव स्थित्वा यः क्रीडति पुरत्रये । स न जीवस्सदा शम्भुस्सत्यमेव मयोदितम् ॥' (३५) अत्र ईश्वरस्यैव जीवत्वं मायया जातमिति स्पष्टम् ।

'स जीवो जीववद्भाति साक्षाद्ब्रह्मैव केवलम् । अज्ञानाज्जीवरूपेण भासते न स्वभावतः॥' (३८) अत्र ब्रह्मैव जीव इति स्पष्टम् ।

'स्वतस्सिद्धैकताऽज्ञानं व्युदस्य श्रुतिरादरात् । स्वभावसिद्धमेकत्वं बोधयत्यधिकारिणः ॥' (४३) अत्र जीवेश्वरयोरभेद एव स्वाभाविक इति स्पष्टम् । रामानुजादेरत्रानधिकारित्वादेव तत्त्वमस्यादिश्रुतेर्नाद्वैतबोधो जात इति च प्रतीयते—'एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् । समस्तभासं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् ॥' (५३) अत्र ब्रह्मविदो निर्विशेषब्रह्मप्राप्तिः स्फुटा ।

'प्रत्यग्रूपश्शिवस्साक्षात्परमानन्दलक्षणः ।' (९-१) अत्र प्रत्यग्ब्रह्माभेदस्स्पष्टः ।

'परमाद्वैतविज्ञानात्संसारः प्रविनश्यति । स्वतस्सिद्धाद्वयानन्दस्स्वयमेव विभाति च ॥' (१९) अत्र अद्वैतज्ञानान्मुक्तिरिति स्पष्टम् ।

निर्विकल्पे परे तत्त्वे विद्यया बुद्धिविश्रमः । सहि संसारविच्छित्तिर्नापरा पुरुषाधिकाः॥' (२३) अत्र निर्विशेषं ब्रह्म स्पष्टम् ।

'श्रुतिस्मृतिपुराणानि प्राहुरेकत्वमात्मनः । तथापि परमाद्वैतं नैव वांछन्ति मानवाः ॥' (३९) अत्र आत्मैक इति स्फुटम् ।

'द्वैतमेव हि सर्वत्र प्रवदन्ति हि केचन । इमे मनुष्याः कीटाश्च पतङ्गाश्च घटाहि ते ॥' (४७) अत्र द्वैतवादिनिन्दा स्फुटा ।

'अस्ति सर्वान्तरस्साक्षी प्रत्यगात्मा स्वयंप्रभः । तदेव ब्रह्म सम्पूर्णमपरोक्षतमं सुराः ॥' (१०-१) अत्र प्रत्यग्ब्रह्माद्वैतं स्पष्टम् ।

'योयमात्मा स्वयं भाति सत्तयान्यविवर्जितः । स एव साक्षात्सर्वेषामन्तर्यामी नचापरः ॥' (२०) अत्र प्रत्यगात्मैवान्तर्यामीति स्पष्टम् ।

'तस्मादध्यस्तमज्ञानं तत्कार्यं चात्मरूपतः । एकधैव महायासाद्द्रष्टव्यो हि मुमुक्षुभिः ॥' (३६) अत्र सर्वं ब्रह्मणि कल्पितत्वाद्ब्रह्मानतिरिक्तमेवेति सिद्धमद्वितीयं ब्रह्म ।

'शरीरभृत्कर्मफलं भुंक्ते भोजयिता शिवः । प्रतीतितो विरुद्धौ तौ भेदस्त्वौपाधिकस्तयोः ॥, (११-१५) अत्र जीवेश्वरयोस्स्वाभाविकभेदाभावस्स्पष्टः ।

'क्षरं माया चाक्षरं जीवरूपं क्षरात्मना भिद्यते जीव एकः ।' (६१) अत्र आत्मैक्यं स्पष्टम् ।

'अस्ति तावदहं शब्दप्रत्ययालम्बनं सुराः । सर्वेषां नः परं ज्ञानं स एवात्मा न संशयः ॥ सोयं स्वाविद्यया साक्षाच्छिवस्सन्नपि वस्तुतः । स्वशिवत्वमविज्ञाय संसारीवावभासते ॥' (१२-२) अत्र ईश्वर एव जीवो जात इत्यद्वैतं स्पष्टम् ।

'ब्रह्मैव केवलं शुद्धं विद्यते तत्त्वदर्शने । नच विद्या नचाविद्या न जगच्च नचापरम् ॥' (१२-१९) अत्र निर्विशेषं ब्रह्मैवास्तीति स्पष्टम् ।

'वेदार्थं परमाद्वैतं नेतरत्सुरपुङ्गवाः ।' (५२) स्फुटोर्थः ।

'ऐश्वरं परमानन्दमनन्तं सत्यचिद्घनम् । आत्मत्वेनैव पश्यन्तं निस्तरङ्गसमुद्रवत् ॥ निर्विकल्पं सुसम्पूर्णम् ।' सूतगीतायाम्- १ अध्याये १ श्लोकः- अत्र निर्विशेषब्रह्माभिन्न आत्मेति स्पष्टम् ।

'देहेन्द्रियादिसङ्घातवासनाभेदभेदिता । अविद्या जीवभेदस्य हेतुर्नान्यः प्रकीर्तितः ॥ घटाकाशमहाकाशविभागः कल्पितो यथा । तथैव कल्पितो भेदो जीवात्मपरमात्मनोः ॥' (२-१०) अत्र जीवभेदः जीवेश्वरभेदश्च न स्वाभाविक इति स्पष्टम् ।

'शिवादन्यतया भातं शिव एव न संशयः ।' (७२) अत्र अद्वितीयं ब्रह्मेति स्फुटम् ।

'अथवा देवदेवस्य सर्वदुर्घटकारिणी । शक्तिरस्ति तया सर्वं घटते माययाऽनघाः ॥' (३-२७) अत्र अद्वैतेपि ब्रह्मणि मायावशाद्द्वैतं सम्भवतीति प्रतीयते ।

'परमाद्वैतविज्ञानमेव ग्राह्यं यथास्थितम् । नान्यतर्कैश्च हन्तव्यमिदमाम्नायवाक्यजम् ॥' (५४) अत्राद्वैतज्ञानमेव सम्पादनीयमिति स्फुटम् ।

'तस्मान्नास्तीश्वरादन्यत्किञ्चिदप्यास्तिकोत्तमाः ।' (५७) अत्र निर्विशेषमेकमेव ब्रह्मेति स्पष्टम् ।

'एकत्वमेव वाक्यार्थो नापरः परमास्तिकाः ।' (६१) अत्र अद्वैतमेव वाक्यार्थ इति स्फुटम् ।

'भोक्तारः पशवस्सर्वे शिवो भोजयिता परः । सुखदुःखादिसंसारो भोगस्सर्वमिदं बुधाः ॥ स्वप्नवद्देवदेवस्य माययैव विनिर्मितम् । मायया निर्मितं सर्वं मायैव हि निरूपणे ॥ कारणव्यतिरेकेण कार्यं नेतीह दर्शनम् । मायापि कारणत्वेन कल्पिता मुनिपुङ्गवाः ॥ अधिष्ठानातिरेकेण नास्ति तत्त्वनिरूपणे । व्यवहारदशा माया कल्पिता नतु वस्तुतः ॥ वस्तुतः परमाद्वैतं ब्रह्मैवास्ति न चेतरत् । मायारूपतया साक्षाद्ब्रह्मैव प्रतिभासते ॥ जगज्जीवादिरूपेणाप्यहो देवस्य वैभवम् ।' (४-३६) एषु ब्रह्मातिरिक्तं सर्वं कल्पितत्वान्मिथ्या एकमेवाद्वितीयं ब्रह्म सत्यमिति स्पष्टम् ।

'एकत्वेपि पृथक्त्वेन व्यपदेशोपि युज्यते । अन्तःकरणभेदेन साक्षिणः प्रत्यगात्मनः ॥ आत्माहं-

प्रत्ययाकारसम्बन्धभ्रान्तिमात्रतः । कर्ता भोक्ता सुखी दुःखी ज्ञायते प्रतिभासतः ॥' (५-२५) अत्र आत्मभेद आत्मसंसारश्चौपाधिक एवेति स्पष्टम् ।

'अतोयं प्रत्यगात्मैव स्वानुभूत्येकगोचरः । शास्त्रसिद्धं परं ब्रह्म नापरं परमार्थतः ॥' (४८) अत्र प्रत्यग्ब्रह्मैक्यं स्पष्टम् ।

'नित्यमुक्तस्य संसारो भ्रान्तिसिद्धस्सदा खलु । तस्माद्ज्ञानेन नाशस्स्यात्संसारस्य न कर्मणा ॥, (५-७३) अत्र अनन्तगरुडादयो नित्यमुक्ता वयं तु बद्धा इति रामानुजमतं प्रत्युक्तमिति स्फुटम् ।

'परतत्त्वं परं ब्रह्म जीवात्मपरमात्मनोः । औपाधिकेन भेदेन द्विधाभूतमिव स्थितम् ॥' (६-१५) अत्र जीवेश्वरयोस्स्वाभाविकभेदभावः प्रत्युक्तः ।

'स्वदेहे परदेहे वा न कुर्यादङ्कनं नरः । यदि कुर्यात्तु चक्राद्यैः पतत्येव न संशयः ॥ अतश्च भोगमोक्षार्थी शरीरं देवतामयम् । स्वकीयं परकीयं च पूजयेत्तु विशेषतः ॥' (७-२८) अत्र रामानुजाभिमतं तप्तचक्राङ्कनं प्रत्युक्तम् ।

'तत्त्वज्ञानेन मायाया बाधो नान्येन कर्मणा । ज्ञानं वेदान्तवाक्योत्थं ब्रह्मात्मैकत्वगोचरम् ॥' (८-६) अत्र प्रत्यगभिन्नब्रह्मज्ञानादेव संसारकारणाज्ञाननिवृत्तिरिति स्फुटम् ।

## भागवतस्याप्यद्वैतपरत्वप्रतिपादनम् ।

एवं भागवतपुराणमप्यद्वैतपरमेव—तथाहि- 'सम्पद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले । सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये ॥' अत्र भीष्मस्य जीवस्य निष्कलब्रह्मसम्पत्तिरूपं सायुज्यमुक्तमिति स्फुटमद्वैतम् ।

'स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि ।' अत्र निर्विशेषं ब्रह्मेति स्फुटम् ।

'तदिदं भगवन्राजन्नेक आत्माऽऽत्मनां स्वदृक् । अन्तरोऽनन्तरो भाति पश्य त्वं माययोरुधा ।' इति आत्मैक्यं स्फुटम् ।

'विशुद्धं केवलं ज्ञानं प्रत्यक्सम्यगवस्थितम् । सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम् ॥' अत्र प्रत्यगात्मनः पूर्णत्वैकत्वादिकमुक्तम् ।

'शश्वत्प्रशान्तमभयं प्रतिबोधमात्रं शुद्धं समं सदसतः परमात्मतत्त्वम् । शब्दो न यत्र पुरुकारकवान् क्रियार्थो मायापरैत्यभिमुखे च विलज्जमाना ॥' अत्र मायातत्कार्यसर्वविशेषरहितं चिन्मात्रं ब्रह्म प्रत्यक्तत्त्वमिति स्फुटम् ।

'अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् । पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि । तद्विद्यादात्मनो मायां यथा भासो यथा तमः ॥ यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु । प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥ एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनाऽऽत्मनः । अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ॥' इति चतुश्श्लोकात्मकं भागवतमिदं ब्रह्मैव त्रिकालसत्यं जगन्मायामयमिति प्रतिपादयति । इदं च विस्तरेण मया व्याख्यातमन्यत्र ।

'ब्रह्मन् कथं भगवतश्चिन्मात्रस्याविकारिणः । लीलया वापि युज्येरन्निर्गुणस्य गुणाः क्रियाः ।' अत्र निर्गुणं निष्क्रियं च चिन्मात्रं ब्रह्मेति स्पष्टम् ।

'भगवानेक एवैष सर्वक्षेत्रेष्ववस्थितः । अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः ॥' अत्र ईश्वर एव जीव इति स्पष्टम् ।

'सेयं भगवतो माया यन्नयेन विरुध्यते । ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम ॥' अत्र ईश्वरस्य जीवत्वं मायामयमिति स्पष्टम् ।

'यथार्थेन विना पुंसो मृषैवात्मविपर्ययः । प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिना ॥ यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः । दृश्यते सन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः ॥' अत्र ईश्वरस्य जीवत्वं मिथ्यैवेति स्फुटमुदाहरणप्रदर्शनपूर्वकमुक्तम् ।

'तथा पुरुष आत्मानं केवलं प्रकृतेः परम् । निरन्तरं स्वयंज्योतिरणिमानमखण्डितम् ॥' अत्र परिपूर्णः केवलं प्रत्यगात्मेति स्पष्टम् ।

'अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः । प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥' अत्र विश्वव्यापको निर्गुणश्च प्रत्यगात्मेति स्फुटम् ।

'न जायते न म्रियते सहदेहाद्युपाधिभिः । निमित्तैरात्मतद्धर्मा यथा स्वप्ने तदीक्षिता ॥ तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतम् । भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥' अत्र ईश्वरस्यैवोपाधिवशात्संसारादिकमित्युक्तम् ।

'सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि । ईक्षिताऽनन्यभावेन भूतेष्वपि तदात्मताम् ॥' अत्र आत्मैक्यं स्पष्टम् ।

'आत्मा हि केवलं ज्ञानमर्थो देहाद्यसज्जडः । सुखदुःखादयो भावा न देहस्य न चात्मनः ॥' अत्र ज्ञानस्वरूप एवात्मा नतु सुखदुःखज्ञानगुणक इति स्पष्टम् ।

'ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् । दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते ॥' अत्र चिन्मात्रं ब्रह्मैकमेव जीव ईश्वरो जगच्चेति स्फुटमद्वैतम् ।

'शुद्धं स्वधाम्न्युपरताखिलबुद्ध्यवस्थं चिन्मात्रमेकमभयं प्रतिषिध्य मायाम् । तिष्ठंस्तयैव पुरुषत्वमुपेत्य तस्यामास्ते भवानपरिशुद्ध इवात्मतन्त्रः ॥' अत्र चिन्मात्रस्य ब्रह्मण एव पुरुषत्वं मायावशाज्जातमिति स्पष्टम् ।

'विशेषबुद्धेर्विवरं मनाक्च पश्यामि यन्न व्यवहारतोऽन्यत् । क ईश्वरस्तत्र किमीशितव्यमथापि राजन् करवाम किं ते ॥' अत्र वस्तुतो निर्विशेषं ब्रह्मैवेति प्रतीतम् ।

'यथाऽनिलः स्थावरजङ्गमानामात्मस्वरूपेण निविष्ट ईशेत् । एवं परो भगवान्वासुदेवः क्षेत्रज्ञ आत्मेदमनुप्रविष्टः ॥' अत्र ईश्वर एव जीव इति स्पष्टम् ।

'ज्ञानं विशुद्धं परमार्थमेकमनन्तरं त्वबहिर्ब्रह्म सत्यम् । प्रत्यक्प्रशान्तं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयो वदन्ति ॥' अत्र प्रत्यगभिन्नं ब्रह्म चिन्मात्रं सत्यमिति स्फुटम् ।

'नित्य आत्माऽव्ययश्शुद्धस्सर्वगस्सर्ववित्परः । धत्तेऽसावात्मनो लिङ्गं मायया विसृजन् गुणान् ॥' अत्र व्यापी सर्वज्ञश्चात्मेत्युक्तम् ॥

'प्रत्यगात्मस्वरूपेण दृश्यरूपेण च स्वयम् । व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्यो विकल्पितः ॥' अत्र निर्विकल्पं ब्रह्मैव जीवजगद्रूपेण विकल्पितमिति स्फुटम् ।

'केवलानुभवानन्दस्वरूपः परमेश्वरः । माययान्तर्हितैश्वर्य ईयते गुणसर्गया ॥' अत्र चिदानन्दरूप एव परमात्मा, नतु चिदानन्दगुणवान् स एव मायया जीवोऽभवदिति स्फुटम ।

'आत्मा नित्योऽव्ययश्शुद्धो ह्येकः क्षेत्रज्ञ आश्रयः । अविक्रियः स्वदृग्धेतुः व्यापकोऽसङ्ग्यनावृतः ॥' अत्र आत्मैक्यमात्मविभुत्वं च स्फुटम् ।

'मनोमयत्वात्सर्वेऽर्थास्स्वप्नजागरयोस्समाः । दृष्टा नष्टा अपि ध्यातुश्शोकमोहभयप्रदाः ॥' अत्र जगन्मिथ्येति स्फुटम् ।

'अहम्भवान्नचान्यस्त्वं त्वमेवाहं विचक्ष्व भो । न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि ॥' इति जीवं प्रतीश्वरवचनम्- अत्र जीवेश्वराभेदः स्फुटः ।

'तस्मिंस्तदा लब्धरुचेर्महामते प्रियश्रवस्य स्खलिता मतिर्मम । यया ममैतत्सदसत्स्वमायया पश्ये मयि ब्रह्मणि कल्पितं परे ॥' अत्र प्रत्यगभिन्नं ब्रह्मेति स्पष्टम् ।

'न नामरूपे गुणकर्मजन्मभिर्निरूपितव्ये तव तस्य साक्षिणः ।' अत्र निर्विशेषं ब्रह्मेति स्पष्टम् ।

'रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् । सत्तामात्रं निर्विशेषं निरीहं सत्त्वं साक्षाद्विष्णुरध्यात्मदीपः ॥' अत्र निर्विशेषं ब्रह्मेति स्पष्टम् ।

'तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् । त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत्सदिवावभाति ॥ एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनन्त आद्यः ।' अत्र जगदसत्यमिति प्रत्यगभिन्नं ब्रह्मैकमेव सत्यमिति च स्पष्टम् ।

'प्रपञ्चं निष्प्रपञ्चोपि विडम्बयसि मायया ।' अत्र निष्प्रपञ्चं ब्रह्म वस्तुत इति स्पष्टम् ।

'वस्तुतो जानतामत्र कृत्स्नं स्थास्नु चरिष्णु च । भगवद्रूपमखिलं नान्यद्वस्त्वस्ति किञ्चन ॥' अत्राद्वितीयं ब्रह्मेति स्पष्टम् ।

'आत्माह्येकः स्वयंज्योतिर्नित्योऽन्यो निर्गुणो गुणैः । आत्मसृष्टैस्तत्कृतेषु देहेषु बहुधेयते ॥' अत्र आत्मैक्यं स्पष्टम् ।

'ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः । कथं चरन्ति श्रुतयः साक्षात्सदसतःपरे ॥' अत्र निर्विशेषं ब्रह्मेति स्पष्टम् ।

'निर्गुणे केवले साक्षादात्मनो यद्विपर्ययः । सैषा भगवतो माया ययेदं निर्ममे विभुः ॥' अत्र वस्तुतो निर्गुणमद्वितीयमपि ब्रह्म मायया सगुणं सद्वितीयमिव भवतीति प्रतिपादितम् ।

'नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथानिलमर्चिषः स्वाः । शब्दोपि बोधकनिषेधतयात्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धिः ॥' अत्र सर्वनिषेधावधिभूतत्वेन निर्विशेषं ब्रह्म सिद्धम् ।

'वस्तुनो यदनानात्वमात्मनः प्रश्न ईदृशः । कथं घटेत वो विप्रा वक्तुर्वामेक आश्रयः ।' अत्र वस्त्वैक्यं स्पष्टम् ।

'आत्मा यदि स्यात्सुखदुःखहेतुः किमन्यतस्तत्र निजस्वभावः । नह्यात्मनोऽन्यद्यदि तन्मृषा स्यात्क्रुध्येत कस्मान्न सुखं न दुःखम् ॥' आत्मैक एव सत्यं तदन्यत्सर्वं मृषेति स्पष्टमत्रोक्तम् ।

'तन्मायाफलरूपेण केवलं निर्विकल्पकम् । वाङ्मनोऽगोचरं नित्यं द्विधा समभवद्बृहत् ।' अत्र निर्विकल्पकं ब्रह्म स्पष्टम् ।

'यस्तु यस्यादिरन्तो वै स वै मध्यं च तस्य तत् । विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥' अत्र जगत्कारणमेव सत्यं जगत्तु व्यवहारमात्रत्वान्मिथ्येति स्पष्टम् ।

'किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् । वाचोदितं तदनृतं मनसा ध्यातमेव च ॥' अत्र वाङ्मनसगोचरं सर्वं द्वैतमसत्यं, तदगोचरं ब्रह्मैकमेवाद्वैतं सत्यमिति स्पष्टम् ।

'समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम् । न यत्पुरस्तादुत यन्न पश्चान्मध्येऽपि तन्न व्यपदेशमात्रम् ॥' अत्रापि पूर्ववदेव ।

'एतावानात्मसम्मोहो यद्विकल्पस्तु केवले ।' अत्र निर्विकल्पे आत्मनि विकल्पो भ्रान्तिसिद्ध इति स्पष्टम् ।

'विसृज्य स्मयमानान् स्वान् दृशं व्रीडां च दैहिकीम् । प्रणमेद्दण्डवद्भूमावाश्वचण्डालगोखरम् ॥ ईश्वरो जीवकलया प्रविष्टो भगवानिति ।' अत्र ईश्वर एव जीव इति स्फुटम् ।

'सुषुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ।' अत्र निर्विशेषं ब्रह्मेति स्फुटम् ।

'मायामात्रमिदं राजन्नानात्वं प्रत्यगात्मनि ।' अत्र आत्मैक्यं स्पष्टम् ।

'घटे भिन्ने यथाऽऽकाश आकाशस्स्याद्यथा पुरा । एवं देहे मृते जीवो ब्रह्म सम्पद्यते पुनः ॥' अत्र प्रत्यग्ब्रह्मैक्यं स्पष्टम् ।

एवं पुराणान्तराण्यप्यद्वैतपराण्येव- अलमतिविस्तरेण तत्तत्पुराणश्लोकोदाहरणेन ।

## अविद्याया निर्विशेषब्रह्माश्रयत्वे रामानुजाक्षेपः, तत्परिहारश्च ।

**यदुक्तं रामानुजेन**—ननु निर्विशेषे स्वयं प्रकाशे वस्तुनि मायावशाज्जीवेश्वरजगद्भ्रम इति यदुच्यतेऽद्वैतिभिस्तन्नोपपद्यते, तथाहि- माया किमाश्रित्य भ्रमं जनयति- न तावज्जीवमाश्रित्य- अविद्यापरिकल्पितत्वाज्जीवभावस्य । नापि ब्रह्माश्रित्य- तस्य स्वप्रकाशज्ञानस्वरूपत्वेनाविद्याविरोधित्वात् । साहि ज्ञानबाध्याऽभिमता- ब्रह्मणः स्वरूपभूतं ज्ञानं नाविद्याविरोधि, किंतु ज्ञानस्वरूपं ब्रह्मेति ज्ञानमित्यपि न वाच्यं, उभयोरपि ब्रह्मस्वरूपप्रकाशे सत्यन्यतरस्याविद्याविरोधित्वमन्यतरस्य नेति विशेषानवगमात् । ज्ञानस्वरूपं ब्रह्मेत्यनेन ज्ञानेन ब्रह्मणि यस्स्वभावोऽवगम्यते स ब्रह्मणः स्वयम्प्रकाशत्वेन स्वयमेवावभासत इत्यविद्याविरोधित्वेन न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोः । किंच अनुभवस्वरूपस्य ब्रह्मणोऽनुभवान्तराननुभाव्यत्वेन भवतो न तद्विषयं ज्ञानमस्ति- अतो ज्ञानमज्ञानविरोधि चेत्स्वयमेव

विरोधि भवतीति नास्य ब्रह्माश्रयत्वसम्भवः । शुक्त्यादयस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्था स्वाज्ञाना-विरोधिनस्तन्निवर्तने ज्ञानान्तरमपेक्षन्ते, ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञानविरोध्येव । तत एव निवर्तकान्तरं च नापेक्षते ।

**अथो**च्येत- ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानमज्ञानविरोधीति, न- इदं ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं किं ब्रह्मयाथात्म्याज्ञानविरोधि ? उत प्रपञ्चसत्यत्वरूपाज्ञानविरोधीति विवेचनीयम्-- न तावद्ब्रह्मयाथा-त्म्याज्ञानविरोधि- अतद्विषयत्वात्- ज्ञानाज्ञानयोरेकविषयत्वेन हि विरोधः- प्रपञ्चमिथ्यात्वज्ञानं तत्सत्यत्व-रूपाज्ञानेन विरुध्यते- तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितमिति ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव । ब्रह्मस्वरू-पाज्ञानं नाम तस्य सद्वितीयत्वमेव । तत्तु तद्व्यतिरिक्तस्य मिथ्यात्वज्ञानेन निवृत्तं स्वरूपं तु स्वानुभव-सिद्धमिति, **चेत्- न**-- ब्रह्मणोऽद्वितीयत्वं स्वरूपं स्वानुभवसिद्धमिति तद्विरोधि सद्वितीयत्वरूपाज्ञानं तद्बाधश्च न स्याताम् । अद्वितीयत्वं धर्म इति चेत् , न- अनुभवस्वरूपस्य ब्रह्मणोऽनुभाव्यधर्मविरहस्य भवतैव प्रतिपादितत्वात् । अतो ज्ञानरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम्- इति ।

**अत्रोच्यते**--अविद्या हि ब्रह्मशक्तित्वाच्छक्तं ब्रह्माश्रित्यैव भ्रमं प्रमां च जनयति- अतस्मिंस्तद्बुद्धि-र्भ्रमः तस्मिंस्तद्बुद्धिस्तु प्रमा द्वयमपीदं वृत्तिरूपमेव । वृत्तिर्नामान्तःकरणपरिणामः- सच वस्तुतो जडोपि चित्प्रतिफलनवशादजडो भवति । तथा च घटादिविषयाकारपरिणता वृत्तिर्घटादिविषयमवभासयन्ती सत्यपि स्वयं चैतन्येनावभास्यते । एवं वृत्तिरिव वृत्तिमदन्तःकरणं तत्परिणाम्युपादानमविद्या च चैतन्येनावभास्येते । एवं ब्रह्मव्यतिरिक्तस्य सर्वस्यापि मायातत्कार्यरूपद्वैतस्य ब्रह्मणाऽवभास्यमानत्वादेव ब्रह्म सर्वावभासक-मित्युच्यते-- 'तस्य भासा सर्वमिदं विभा'तीति श्रुतेः । तत्तु ब्रह्म नान्येन भास्यते- अनवस्थादोषात् । किं तु स्वयमेव भासते । अत एव ब्रह्म स्वयम्प्रकाशमित्युच्यते । स्वपरव्यवहारहेतुप्रकाशत्वं स्वयम्प्रका-शत्वम् । एवमविद्याया ब्रह्मावभास्यत्वान्न ब्रह्माविद्याविरोधि । नच ब्रह्म स्वानुभवसिद्धस्वयाथात्म्यमि-त्यविद्याविरोध्येवेति वाच्यं, निर्विशेषज्ञानस्वरूपं ब्रह्मेति पूर्वमसकृत्सिद्धान्तितत्वेन तस्य स्वयाथात्म्यानु-भवरूपविशेषायोगात । किं च ब्रह्मण एवानुभवत्वात्तस्य कथं पुनर्याथात्म्यानुभवरूपमनुभवान्तरमनवस्था-दोषात् । नहि ब्रह्म ज्ञात्रिति वयमभ्युपगच्छामः- येन ब्रह्मात्मयाथात्म्यमनुभवतीति वक्तुं शक्येत- यथा शुक्तियाथात्म्यानुभवस्तथा ब्रह्मयाथात्म्यानुभवश्च प्रमैव- साचान्तःकरणवृत्तिरेवेति प्रमातुरेवायमनुभवो, नतु साक्षिब्रह्मणः । नचानुभवरूपं ब्रह्म कथं प्रमात्रानुभूयेतेति वाच्यं, प्रमात्रा ब्रह्मयाथात्म्यमेवानुभूयते, नतु ब्रह्मेति । प्रमाता हि सच्चिदानन्दं प्रत्यगभिन्नं ब्रह्मेति जानाति श्रवणादिवशात् । नच समाहितस्य विदुषो ब्रह्मानुभवोप्यस्तीति वाच्यं, विदुष आत्मन एव ब्रह्मत्वेन कथं स्वस्य स्वानुभवः- कर्मकर्तृभाव-विरोधात् । परन्तु विद्वान् समाधौ द्वैतानुभवाभावात्केवलं ब्रह्मरूपेण तिष्ठतीति कृत्वा ब्रह्मानुभवतीति व्यपदिश्यते । एवं मुक्तावपि । नह्यद्वैते ब्रह्मणि अनुभवित्रादित्रिपुटीसद्भावः- 'यत्र त्वस्य सर्वमात्मैवाभूत्त-त्केन कं पश्येत्'दित्यादिश्रुतेः । तस्मान्नास्त्यनुभवरूपस्य ब्रह्मणोऽनुभवान्तरम् । नच ब्रह्मणो याथात्म्यं नाम सत्यत्वाद्वितीयत्वपूर्णत्वादिकं, तच्च स्वरूपमेव । निर्धर्मकस्य ब्रह्मणो धर्मायोगात् । तथाच- ब्रह्मयाथा-

त्स्यानुभवाभ्युपगमे ब्रह्मानुभवोप्यभ्युपगत एवेति वाच्यं, निर्धर्मकेपि ब्रह्मणि व्यवहारतः पूर्णत्वाद्वितीयत्वादिधर्मसद्भावादिति । परमार्थतो हि निर्धर्मकं ब्रह्मेत्युक्तमस्माभिः । **यदुक्तं** ब्रह्मणः स्वभावस्स्वयमेव प्रकाशते- स्वयम्प्रकाशत्वादिति, **तदसत्**—ब्रह्मस्वरूपस्याविद्याऽऽवृतत्वेन तत्स्वभावस्याप्रतीयमानत्वात् । नच स्वयम्प्रकाशस्य कथमावृतत्वमिति वाच्यं, ब्रह्माविद्ययोरविरोधस्योक्तत्वात् । नच विरोध एवेति वाच्यं, तस्याद्याप्यसिद्धत्वात् । तस्माद्ब्रह्मणः स्वरूपभूतं ज्ञानमज्ञानाविरोध्येव, किं पुनस्तद्विरोधीतिचेदुच्यते--यद्विषयं यदज्ञानं तद्विषयं तद्ज्ञानं तद्विरोधीति- यथा घटाज्ञानस्य घटज्ञानम् । नच ब्रह्मस्वरूपतद्विषयज्ञानयोरविद्याविरोधित्वे न कश्चिद्विशेष इति वाच्यं, विषयज्ञानत्वस्यैव विशेषत्वमिति । तद्विषयज्ञानं हि तद्विषयाज्ञानं निवर्तयति । नच तत्स्वरूपज्ञानमपि तत्स्वरूपाज्ञानं निवर्तयेदिति वाच्यं, तत्रापि तत्स्वरूपविषयज्ञानमेव तत्स्वरूपविषयाज्ञानं निवर्तयतीति कृत्वा न स्वरूपभूतज्ञानस्य स्वरूपविषयाज्ञाननिवर्तकत्वमिति । तस्मादखण्डब्रह्माकारवृत्तिज्ञानमेव ब्रह्मावरकाज्ञाननाशकं, नतु ब्रह्मस्वरूपभूतं ज्ञानम् । **ननु** यदेव चैतन्यं स्वत एवाज्ञानं न नाशयेत्कथं तद्वृत्त्युपारूढं सत्तन्नाशयितुं शक्नुयादिति **चेदुच्यते**—यथा सूर्यप्रकाशः स्वयं तृणपूगं शुष्कं नाशयितुमशक्नुवानोपि दर्पणविशेषमारूढस्सन् तं दहति तद्वदिति । **नन्वेवं** प्रमारूपाद्वृत्तिज्ञानाद्भ्रमरूपस्य वृत्तिज्ञानस्य निवृत्तिर्भवतुनाम, कथम्पुनरज्ञानस्य स्वकारणस्य ? यद्यनिवृत्तिरज्ञानस्य तर्हि वृत्तिज्ञानस्य कथमविद्याविरोधित्वमिति, **मैवम्**—कार्यादपि कारणस्य नाशो भवेदेव- अग्निकार्याज्जलादग्निनाशदर्शनात् । काष्ठजन्यादग्नेः काष्ठनाशदर्शनाच्च । ब्रह्म नास्ति न भातीत्यनुभवसिद्धं ब्रह्माज्ञानं ब्रह्माहमस्मीत्यनुभवेन बाध्यत एव- ज्ञानाज्ञानयोस्समानविषयत्वस्य विरोधप्रयोजकत्वात् । नच समानाश्रयत्वेसति समानविषयत्वमेव तन्त्रमिति वाच्यं, इष्टापत्तेः । नच जीवस्य कथमज्ञानाश्रयत्वमज्ञानकार्यस्येति वाच्यं, मूलाज्ञानस्य ब्रह्माश्रयत्वेपि दर्शिततूलाज्ञानस्य जीवाश्रयत्वात् । नचैवमहं ब्रह्मास्मीत्यनुभवेन दर्शिततूलाज्ञानस्यैव निवृत्तिर्न मूलाज्ञानस्येति वाच्यं, इष्टापत्तेः । अत एव नैकमुक्तौ सर्वमुक्तिप्रसङ्गः । व्यष्ट्यज्ञानानि तूलाज्ञानपदवाच्यानि, समष्ट्यज्ञानं तु मूलाज्ञानमिति विवेकः । नचैवं कथमात्मैक्यसिद्धिरिति वाच्यं, तत्तदज्ञानोपाधिभेदादेवात्मभेदो नतु स्वत इति । तस्मात् प्रत्यगभिन्नब्रह्मस्वरूपावरकाज्ञानस्य तत्प्रयुक्तस्याहमज्ञस्संसारीत्यादिभ्रमस्य च ब्रह्माहमस्मीति वृत्तिज्ञानं विरोधि ।

**ननु** वृत्तिज्ञानस्य नाशकाभावात्तत्सत्यमेवेति तेन ब्रह्मणो द्वैतं स्यादिति, **मैवम्**—वृत्त्युपादाननाशेन वृत्तेरपि नाशादिति । **ननु** देवदत्तं प्रति ब्रह्मस्वरूपावरकाज्ञानस्य देवदत्तान्तःकरणपरिणामभूतया ब्रह्मास्मीति प्रमया बाधितत्वेपि यज्ञदत्तं प्रति ब्रह्मावरकाज्ञानस्य सत्त्वेन तेन द्वैतं स्याद्ब्रह्मण इति, **मैवम्**—विद्वद्दृष्ट्या ब्रह्माद्वैतमेव ब्रह्मण्यज्ञानतत्कार्ययोरभावात् । अविद्वद्दृष्ट्या तु ब्रह्म सद्वैतमेव तद्भावादिति ।

**ननु** यदा विदुषो ब्रह्मात्मसाक्षात्कारस्तदैव विदेहकैवल्यं स्यादिति नास्ति जीवन्मुक्तिरिति, **मैवम्**—ब्रह्माश्रिताविद्याया आवरणशक्तिरिति विक्षेपशक्तिरिति च शक्तिद्वयमस्ति । तत्र आवरणशक्ते-

ब्रह्मसाक्षात्कारसमये नाशे सत्यपि विक्षेपशक्तिर्यावत्प्रारब्धं वर्तत एवेति न तदैव विदेहकैवल्यमिति न जीवन्मुक्त्यनुपपत्तिः- 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये' इति श्रुतेः । नच कथं ज्ञानादज्ञानस्यैकांशेन निवृत्तिरन्यांशेनानिवृत्तिरिति वाच्यं, यथा मेहवातात्मकस्यैकस्यैव रोगस्य भेषजेन मेहांशनिवृत्तावपि न वातांशनिवृत्तिस्तद्वदिति । नच विक्षेपशक्तेर्ज्ञानादेवानिवृत्तौ कथं प्रारब्धनाशात्तन्निवृत्तिरिति वाच्यं, प्रारब्धनाशसचिवादज्ञानादेव तन्निवृत्तिरिति । तस्माद्ब्रह्मस्वरूपावरकमज्ञानं ब्रह्मस्वरूपविषयवृत्तिज्ञानबाध्यमिति सुस्थम् ।

नच ब्रह्मण एव ज्ञानत्वात् कथं तस्य पुनर्ज्ञानमिति वाच्यं, नित्यज्ञानस्य ब्रह्मणोऽनित्यवृत्तिज्ञानसद्भावात्- नच ज्ञानमेकमिति तव मतमिति वाच्यं, एकं नित्यमपि ज्ञानं वृत्तिवशादनेकमनित्यं च भवतीति वृत्तयो ह्यनित्या अनेकाश्च । ननु ज्ञेयाकारा वृत्तिर्भवतु नाम- कथं पुनर्ज्ञानाकारेति चेदुच्यते-- सर्वस्यापि ज्ञानमेवाकारो न केवलं वृत्तिरेव । एवं ज्ञानस्वरूपं सन्तमपि सर्वमर्थस्वरूपं मन्यन्ते भ्रान्ताः तदुक्तं विष्णुपुराणे—'ज्ञानस्वरूपममलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहविप्लवे ॥' इति । तस्माद्वृत्तिः स्वत एव ज्ञानाकारा, तस्या अर्थाकारत्वं तु भ्रान्तिप्रयुक्तमेव । यदुक्तं ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानात् ब्रह्मरूपाज्ञानं तिष्ठत्येवेति तदसत्—ब्रह्मस्वरूपज्ञानाद्ब्रह्मस्वरूपाज्ञानं नश्यति- यथा रज्जुस्वरूपज्ञानाद्रज्जुस्वरूपाज्ञानम् । ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानं च ब्रह्मव्यतिरिक्तत्वज्ञानाधीनं- ब्रह्मव्यतिरिक्तज्ञानं च ब्रह्मस्वरूपज्ञानाधीनं- नहि ब्रह्मस्वरूपमजानानः पुरुष इदं ब्रह्मव्यतिरिक्तमिति जानीयात्- तस्माद्ब्रह्मव्यतिरिक्तस्य मिथ्यात्वज्ञानं ब्रह्मस्वरूपाज्ञानबाधकमेव । वस्तुतस्तु अहं ब्रह्मास्मीति ज्ञानमेव ब्रह्मस्वरूपाज्ञानविरोधि । नचेदं ब्रह्मेति ज्ञानमिति वाच्यं, ब्रह्मण इदंप्रत्ययाविषयत्वात्- 'तदेव ब्रह्म त्वं विद्धि नेद'मिति श्रुतेः । इदम्प्रत्ययविषयस्य घटादेर्जडत्वदर्शनेन ब्रह्मणोपीदंप्रत्ययविषयत्वे जाड्यप्रसक्तेश्च । नच 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति ज्ञानं ब्रह्मस्वरूपाज्ञानविरोधीति वाच्यं, वस्त्वावरकमज्ञानं द्विविधम्- असत्त्वापादकमभानापादकं चेति । तत्र असत्त्वावरणान्नास्तीति, अभानावरणात्तु न भातीति च प्रतीतिर्लोकस्य । एवं सति 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति ज्ञानाद्ब्रह्मणो सत्त्वावरणस्य निवृत्तावपि अभानावरणं न निवर्तते । तत्तु प्रत्यगभिन्नब्रह्मज्ञानादेव प्रत्यगभेदं विना ब्रह्मणः पारोक्ष्यानाशात्- प्रत्यगात्मा ह्यपरोक्षः- तदभेदादेव ब्रह्मणः प्रत्यक्षत्वं श्रूयते- 'यत्साक्षादपरोक्षाद्ब्रह्मे'ति । ननु घटवदात्मनो ब्रह्मापि प्रत्यक्षं स्यादिति वाच्यं, तर्हि घटवदेव ब्रह्मापि जडं भवेदेवेति । तस्माद्ब्रह्मस्वरूपविषयज्ञानाद्ब्रह्मस्वरूपावरकाज्ञानस्य बाधो भवत्येवेति कृत्वा ब्रह्मविषयज्ञानमेव ब्रह्माज्ञानविरोधि, नतु ब्रह्मणः स्वरूपभूतं ज्ञानमिति ।

नन्वविद्यया प्रकाशरूपं ब्रह्म तिरोहितमिति वदता ब्रह्मणः स्वरूपनाश एवोक्तस्स्यात्- प्रकाशतिरोधानं हि प्रकाशनाशः प्रकाशश्च ब्रह्मैवेति, मैवम्—ब्रह्मणस्तिरोधानं नाम अस्ति भातीति व्यवहाराविषयत्वापत्तिः- अस्ति भातीति व्यवहाराविषयो हि घटादिरज्ञानावृत इत्युच्यते । एवं ब्रह्माप्यस्ति

भातीति व्यवहाराविषयत्वादज्ञानावृतमित्युच्यते । ततः अविद्यावरणाद्घटवद्ब्रह्मणोऽपि न स्वरूपनाशः । नच घटस्य जडत्वान्मास्तु, ततो नाशः- ब्रह्मणस्तु प्रकाशत्वाद्भवेदिति वाच्यं, ब्रह्मस्वरूपज्ञानस्याविद्यायाश्च विरोधाभावस्योक्तत्वात् । अत एव'ाज्ञानेनावृतं ज्ञान'मित्युक्तं, नतु नाशितमिति । वस्तुतस्तु घटाद्यावरणस्थलेऽपि घटाद्यवच्छिन्नं ब्रह्मैवावृतं, नतु घटादि, स्वत एवासतो जडस्य च घटादेरस्ति भातीति व्यवहाराविषयत्वसिद्ध्या तदर्थमज्ञानावरणाभ्युपगमायोगादिति । वस्तुतस्सच्चिद्रूपं ब्रह्म न सर्वत्र सर्वदाप्यस्ति भातीति व्यवहारविषयो भवतीति यतो व्यवह्रियते ततो ब्रह्माज्ञानावृतमित्युच्यते- अज्ञानावरणवशाद्ब्रह्मणो न स्वरूपनाशः, किंतु अस्तिभातीतिव्यवहारयोग्यत्वनाशः । इदं च व्यवहारदृष्टिमाश्रित्योक्तम् । परमार्थतस्तु नाज्ञानं, नापि तत्कृतावरणं, नापि तन्नाश इति बोध्यम् ।

**नन्वे**तावता अविद्यादशायामज्ञानावरणसत्त्वादेव ब्रह्म न स्फुरतीति सिद्धम्- तथा च अज्ञानावृतत्वाद्ब्रह्मणः स्फुरणाभाव इति कृत्वा स्फुरणरूपस्य ब्रह्मणः स्वरूपनाश एव प्राप्त इति, **मैवम्**—अज्ञानावरणापगमप्रयुक्तं ब्रह्मास्ति भातीतिव्यवहारात्मकं स्फुरणं न ब्रह्मस्वरूपचैतन्यं, किंतु तस्मादन्यदेव-दर्शितव्यवहारहेतुप्रकाशत्वाद्ब्रह्मणः । ननु तथापि स्वपरव्यवहारहेतुप्रकाशत्वं स्वप्रकाशत्वं ब्रह्मण इति कृत्वा कथं ब्रह्मणः स्वरूपनाशं विना ब्रह्मास्ति भातीति व्यवहाराभाव इतिचेत् **मैवम्**—ब्रह्मास्ति भातीति व्यवहारस्येव ब्रह्म नास्ति न भातीति व्यवहारस्यापि ब्रह्मणो हेतुत्वं वक्तव्यम् । तथा च ब्रह्मस्वरूपभूतप्रकाशप्रलयस्य ब्रह्म नास्ति न भातीति व्यवहारस्य, जगदस्ति भातीति व्यवहारस्य च सत्त्वात्कथं ब्रह्मस्वरूपनाशः । नच सुषुप्तौ यस्यकस्यापि व्यवहारस्याभावाद्ब्रह्मस्वरूपनाश इति वाच्यं, सुषुप्तौ यस्य कस्यापि वा व्यवहारस्याभावो ब्रह्मणैव भास्यत इति कृत्वा भास्यस्य सत्त्वान्न भासकस्य स्वरूपनाशः । नचैवं मुक्तौ भास्यस्याभावाद्भासकस्य स्वरूपनाश इति वाच्यं, भास्याभावस्ससाक्षिः ? उतासाक्षिकः ? आद्ये- यस्याभावस्य साक्षि ब्रह्म कथं तन्नाशः । द्वितीये- असाक्षिकस्य तस्य कथमभ्युपगमः । तस्मादविद्यावरणावभासकस्य ब्रह्मस्वरूपप्रकाशस्य नाविद्यावरणान्नाशः ।

**नन्वेवं**- सर्वावभासकं ब्रह्म स्वमपि भासयेदेवेति किं वृत्तिज्ञानेनेति ? **उच्यते**—यदज्ञानं यच्चाज्ञानेन विषयीकृतं यद्वृत्तिज्ञानं यच्च तेन विषयीकृतं तत्सर्वं वस्तुसामान्येन ब्रह्मावभासयत्येव । अत एवोक्तं ज्ञातमज्ञातमपि सर्वं वस्तु साक्षिचैतन्यस्य विषय इति । साक्षिचैतन्यं हि ब्रह्म- तत्र अज्ञातं वस्तु ब्रह्मणाऽवभासितमपि भातीति व्यवहाराविषयत्वादभासितमित्येव व्यपदिश्यते । तस्य भातीति व्यवहारविषयत्वं तु ज्ञानेन विषयीकृतत्वेसति सम्भवति । एवं सति वृत्त्युपारूढं सद्यद्वस्तु ब्रह्मस्वरूपचैतन्यं विशेषाकारेण भासयति तदेव भातमित्युच्यते । वृत्त्यनुपारूढं सद्यद्वस्तु भास्याकारेण भासयति तदभातमित्येवोच्यते । सामान्येन सर्वावभासकमपि ब्रह्म वृत्तिज्ञानभास्यं चेति कृत्वा सामान्येन स्वपरावभासकस्यापि ब्रह्मणः विशेषेण स्वपरावभासनार्थं वृत्तिज्ञानमावश्यकमिति । तस्माद्ब्रह्मणः स्वरूपभूतात्प्रकाशादन्यदेवेदं व्यवहारात्मकं स्फुरणमिति न कश्चिद्दोषः ।

## ज्ञानस्वरूपं ब्रह्मस्वरूपातिरेकेण सङ्कोचविकासात्मकावस्थाद्वयशालीति सुदर्शनमतं-तन्निराकरणं च ।

**यदुक्तं सुदर्शनेन** ज्ञानं हि नित्यं द्रव्यं, तस्य स्वरूपातिरेकेण संकोचविकासात्मकमवस्थाद्वयमभ्युपेतं, ततस्तत्तिरोधानं कर्मणा संकोचः, तन्निवृत्तिस्तु प्रसरः, स एव प्रकाशः- स चानित्यः- अवस्थाद्वयस्यागमापायित्वाद्द्रव्यं नित्यमेवेति, **तदसत्**—अवस्थावतो द्रव्यस्य ज्ञानस्य मृदादेरिव नित्यत्वायोगात् । अवस्था हि विकारः- विकारि चानित्यमिति । तस्माद्यदि ज्ञानस्य संकोचविकासौ स्यातां, तर्हि भवेदेवानित्यत्वं यथा संकोचविकासवतः घटस्य । किं च यदि ज्ञानं निरवयवं तर्हि संकोच विकासानुपपत्तिः, यदि सावयवं तर्हि नित्यत्वानुपपत्तिः- सावयवस्य घटादेरनित्यत्वदर्शनात्- इति ।

## निर्विषया निराश्रया च अनुभूतिस्स्वाश्रयदोषादनन्ताश्रया अनन्तविषया भवतीति रामानुजमतं-तत्खण्डनं च ।

**यदुक्तं रामानुजेन**—अपि च निर्विषया निराश्रया स्वप्रकाशा चेयमनुभूतिः स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवतीति, अत्र किमयं स्वाश्रयदोषः- परमार्थभूतः ? उतापरमार्थभूतः ? इति विवेचनीयम्—न तावत्परमार्थः- अनभ्युपगमात् । नाप्यपरमार्थः- तथा सति हि द्रष्टृत्वेन वा दृश्यत्वेन वा दृशित्वेन वाऽभ्युपगमनीयः । नतावद्दृशिः- दृशिस्वरूपभेदानभ्युपगमात् । भ्रमाधिष्ठानभूतायास्तु साक्षाद्दृशेर्माध्यमिकपक्षप्रसङ्गेनापारमार्थ्यानभ्युपगमाच्च । द्रष्टृदृश्ययोस्तदवच्छिन्नायाश्च दृशेः काल्पनिकत्वेन मूलदोषान्तरापेक्षयाऽनवस्था स्यात् । अथैतत्परिजिहीर्षया परमार्थसती अनुभूतिरेव ब्रह्मरूपा दोष इति चेत्, ब्रह्मैव चेद्दोषः प्रपञ्चदर्शनस्यैव तन्मूलं स्यात् । किं प्रपञ्चतुल्याविद्यान्तरपरिकल्पनेन— ब्रह्मणो दोषत्वे सति तस्य नित्यत्वेनानिर्मोक्षश्च स्यात् । अतो यावद्ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमः- न तावद्भ्रान्तिरुपपादिता भवति- इति, **अत्रोच्यते**—न वयं निराश्रया निर्विषया चानुभूतिराश्रयदोषात्साश्रयं सविषयं चात्मानमनुभवतीति ब्रूमः- निराश्रयानुभूतेराश्रयदोषायोगात् । किं तर्हि अज्ञानान्तःकरणावच्छिन्नचैतन्यलक्षणः प्रमाता स्वाश्रयाज्ञानदोषान्निराश्रयां निर्विषयामप्यनुभूतिमनन्ताश्रयामनन्तविषयां च प्रतिपद्यत इति ब्रूमः- इदं चाज्ञानं प्रमातृदृश्यत्वेन प्रमातृस्वरूपभूतायामनुभूतौ स्वत एवाध्यस्तं- 'माया चाविद्या च स्वयमेव भव'तीति श्रुतेः । अतो नानवस्थादोषः । नच दोषस्य स्वतस्सिद्धत्वे सति ब्रह्मवन्नित्यत्वं स्यादिति वाच्यं, जन्यत्वेन जडत्वेन च दोषस्य स्वतस्सिद्धत्वाभावात्- अजन्यं ज्ञानं हि स्वतस्सिद्धम् । अत एवायमविद्यादोषोऽपरमार्थः । यदि ब्रह्मवदयं पारमार्थिकस्स्यात्तर्हि तद्वदेवास्य नित्यत्वादनिर्मोक्ष एव स्यात् । अविद्यानिवृत्तिर्हि मोक्षः । नहि नित्यं क्वचिन्निवर्तते- तस्माद्ब्रह्मातिरिक्ते पारमार्थिके दोषे अभ्युपगतेसति मोक्षस्यैवासिद्धेस्सर्वमपि मोक्षशास्त्रं व्यर्थमेव भवेत् । अतएव ब्रह्मातिरिक्तस्य सर्वस्याप्यसत्यत्वमाह श्रुतिः- 'सत्सत्यम्'- 'अतोन्यदार्त'-मिति । नचाविद्याया अपारमार्थिकत्वे भ्रान्त्यनुपपत्तिर्नेति वाच्यं, तस्या अपारमार्थिकत्वादेव तज्जन्यप्रपञ्चस्य भ्रान्तित्वोपपत्तिरिति ।

**प्रपञ्चस्याविद्याकल्पितत्वपक्षे सुदर्शनोद्भाटितदोषस्तन्निराकरणं, तस्य तत्कल्पितत्वनिरूपणं च ।**

**ननु** यदि ब्रह्मण्यविद्यया प्रपञ्चः कल्पितः, तर्हि सापि केनचिदन्येन कल्पितैव, अकल्पितत्वे पारमार्थ्यप्रसङ्गात्तस्याः- स चाविद्याकल्पकः पदार्थः पुनरन्येन कल्पित एवेत्यनवस्था- जीवाज्ञानवादिना बीजांकुरन्यायादविद्यया जीवो जीवादविद्येति प्रवाहानादित्वेन परिहृता । अस्मिन्पक्षे जीवनित्यत्व-श्रुतिभि, अकृताभ्यागमकृतविप्रणाशादिरूपश्रुत्यर्थापत्त्या च आमोक्षाज्जीवस्य स्थायित्वमिष्टं हीयेतेत्यरुचि-मभिप्रेत्य, ब्रह्माज्ञानवादिना अविद्यायाः स्वरूपादित्वं स्वीकृत्य दर्शितानवस्था परिहृता- इदमप्ययुक्तमेव— स्वरूपानादित्वेपि मूलदोषापेक्षायास्सत्त्वात्- जीवस्यानादित्वेप्यविद्यापरिकल्पितत्वस्य भवद्भिरङ्गीकृतत्वात् । नचैवं दुर्घटत्वादेवाविद्याया नानवस्थेति वाच्यं, दुर्घटत्वस्यानुपपन्नत्वात्, दुर्घटत्वं नामोपपत्तिनिरपेक्षत्वं - तदपारमार्थ्यसाधकं चेदपरमार्थस्य प्रपञ्चस्य दुर्घटत्वेन उपपत्तिनिरपेक्षत्वान्मूलदोषापेक्षा च न स्यात्-- निवर्तकज्ञाने सत्यपि साऽवतिष्ठेत । विरोधान्न तिष्ठतीतिचेत् तर्ह्युपपत्त्यनुवर्तिन्यविद्या स्यादिति । किंच अविद्याया दुर्घटत्वं चेन्मुक्तान्परब्रह्म चाश्रयेदविद्या शुद्धस्वरूपं ब्रह्म, अशुद्धस्वरूपा अविद्या नाश्रयति विरोधादिति चेत्, तर्ह्युपपत्तिमत्यविद्या । अपि च मोक्षेपि ब्रह्माश्रयेदविद्या- बाधकज्ञाने सत्यपरमार्थ-भूता अविद्या न तिष्ठतीति चेत्, तर्हि बाधकसन्निधौ न बाध्यसिद्धिरित्येवंरूपोपपत्तिमत्येवाविद्या । तस्मान्नानवस्थापरिहार इति सुदर्शनः, **अत्रोच्यते**—अविद्या कर्मेति तव मतेपि जीवाश्रययोः कर्म-देहादिप्रपञ्चयोर्बीजांकुरयोरिवान्योन्यकार्यकारणभावात्प्रवाहानादित्वमभ्युपेयमेव- नहि कर्माभावे देहादि-सम्भवः, देहाद्यभावे वा कर्मसम्भवः- जीवो हि देहादिमान् सन् सुकृतं दुष्कृतं च कर्म कुरुते, सुकृत-दुष्कृतकर्मवशाच्च मनुष्यपश्वादिदेहवान्भवति- अतो न देहकर्मणोरन्यतरस्यानादित्वं वक्तुं शक्यते- यथा बीजांकुरयोः । यद्ययमन्योन्याश्रयदोषस्तव प्रवाहानादित्वाभ्युपगमेन निवृत्तस्तर्हि जीवाज्ञानवादिमतेपि जीवादविद्या अविद्यातो जीव इत्यन्योन्याश्रयदोषः प्रवाहानादित्वाभ्युपगमात्कुतो न निवर्तेत । नच जीवस्यानित्यत्वं श्रुत्यादिविरुद्धमिति वाच्यं, अविद्याजन्यस्य जीवस्यानित्यत्वं श्रुत्याद्यभिमतमेवेति । यज्जीवस्य तत्त्वं चैतन्यं, तद्धि नित्यमिति श्रुत्यादिभिरुच्यते । नच जीवस्यानित्यत्वेऽकृतागमकृतविप्र-णाशादिदोषास्स्युरिति वाच्यं, यावद्व्यवहारं नित्यत्वाज्जीवस्य परमार्थतो जीवस्य दर्शितदोषाणां चासत्त्वात् । तस्मात्कर्मणो देहो, देहात्कर्मेतिवदविद्यातो जीवो जीवादविद्येति युक्तमुक्तम् । अयं त्वत्र विशेषः-- कर्माणि देहाश्च नाना- अविद्याजीवौ तु द्वावेव- अतः अविद्यातो जीवः जीवादविद्या च एकदैवाभूतां, न तु अविद्यातो जीवः जीवादविद्या, तस्याः पुनर्जीवस्तस्मात्पुनरविद्येति सम्प्रदायाविच्छेदः- यथा कर्म-देहयोर्यथा च बीजांकुरयोरिति । एवमविद्याजीवयोरसकृदितरेतरकार्यकारणभावाभावात्प्रवाहानादित्व-मप्यौपचारिकमेव । वस्तुतस्तु यस्य देहस्य यत्कर्म कारणं तदेव कर्म तस्माद्देहात्पुनर्न जायते, किंतु कर्मान्तरमेव । यस्य कर्मणो यो देहः कारणं स एव देहस्तस्मात्कर्मणः पुनर्न जायते, किंतु देहान्तर-मेव । एवं- यस्य वृक्षस्य यद्बीजं कारणं तदेव बीजं तस्माद्वृक्षान्न जायते, किंतु बीजान्तरमेव । यस्य बीजस्य च यो वृक्षः कारणं स एव वृक्षस्तस्माद्बीजान्न जायते, किंतु वृक्षान्तरमेव । तथा च

बीजांकुरस्थले कर्मदेहस्थले च द्वयोरेवान्योन्यं कार्यकारणभावः- यथा जीवाविद्ययोः। तत्र च किमादौ बीजादंकुरं जातं, यद्वा अंकुराद्बीजं जातम्? किमादौ कर्मणो देहो जातः, यद्वा देहात्कर्म जातम्? किमादौ जीवादविद्या जाता, यद्वा अविद्याया जीवो जातः? इति प्रश्ना निरुत्तराः। अनयोरिदमादौ जातमिति निरूपयितुमशक्यत्वात्। अत एव द्वयोरप्यनादित्वमिष्यते। श्रुतिरप्याह- 'अजो ह्येक' इति, 'अजामेका'मिति च द्वयोरनादित्वम्। अजत्वं ह्यनादित्वम्। नच सुतरां जन्माभावोऽजत्वमिति भ्रमितव्यं, तथासत्यनन्तत्वापत्तेः। यस्यादिरस्ति तस्यैव ह्यन्तः। तस्मादन्योन्यकार्यकारणभूतावपि अविद्याजीवावामोक्षं स्थायिनावेवेति न जीवाज्ञानवादिमते कश्चिद्दोषः। ब्रह्माज्ञानवादिमतमपि निर्दुष्टमेव- जीवस्याविद्याकार्यत्वेप्यविद्याया जीवकार्यत्वानुक्त्या अन्योन्याश्रयदोषाभावात्। एवमविद्याजन्योपि जीवोऽनादिरेव जन्मकालनिर्वचनासम्भवात्। न ह्यस्मिन्काले एतदविद्यावशादेष जीव असीदिति निरूपयितुं शक्यते। साचाविद्या ब्रह्मणि स्वत एवासीदिति न मूलदोषापेक्षा। अतीन्द्रियार्थे आस्तिकानामस्माकं श्रुतिरेव मानं साच- 'माया चाविद्या च स्वयमेव भव'तीति वक्ति--ततो नानवस्थेति। **एतेन**—ब्रह्मैव प्रपञ्चस्य हेतुरस्तु, किमविद्यापरिकल्पनेनेति **प्रत्युक्तम्**। श्रुत्यैवाविद्याया उक्तत्वेनास्माभिरपरिकल्पितत्वात्। नच मोक्षेपि ब्रह्मण्यविद्या स्यादिति वाच्यं, विद्यया तस्या निवर्तितत्वात्। नच कारणदोषं विना स्वत एवोदेतुं क्षमायास्तस्याः कथं मोक्षे पुनरनुदय इति वाच्यं, अविद्याप्रागभावस्य सान्तत्वेन ब्रह्मणि तावदविद्या जाता- अविद्याप्रध्वंसाभावस्य त्वनन्तत्वेन न पुनरविद्योदयावकाशो मोक्ष इति। नच या नष्टाऽविद्या सैव पुनर्मा जायतां नाम अविद्यान्तरं तु जायतैव मोक्षे इति वाच्यं, अविद्यान्तरप्रागभावस्य ब्रह्मण्यभावात्। नच तत्कथं त्वया विदितमिति वाच्यं, 'न स पुनरावर्तते', 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यत' इत्यादिश्रुत्यान्मुक्तस्य पुनरावृत्त्यभावदर्शनादिति।

**ननु** यदि मुक्तौ ब्रह्मण्यविद्याप्रध्वंसाभावोस्ति तर्हि तेन सद्वितीयत्वं स्याद्ब्रह्मण इति, **मैवम्**—तथासति द्वैताभावेनापि ब्रह्म सद्वैतं स्यादिति। नचेष्टापत्तिः- द्वैतेन सहितं सद्वैतं भवतुनाम कथम्पुनर्द्वैतेन रहितमपि सद्वैतं भवेत्। नहि घटेन सहित इव घटेन रहितोपि सघटो भवेत्। तस्माद्भावेनैव भावस्य सद्वैतत्वं नाभावेनेति। वस्तुतस्तु दृश्यस्य प्रपञ्चस्य कार्यत्वान्यथानुपपत्त्या तत्कारणं वस्तु किञ्चिदभ्युपेयम्- तच्च कारणं वस्तु साज्ञानमेव भवितुमर्हति- समाध्यादौ ज्ञानेनाज्ञानस्य नाशेसति प्रपञ्चानुपलम्भात्। एवं ज्ञानबाधितत्वादेवाज्ञानमध्यस्तमित्यभ्युपेयम्। तथाच प्रपञ्चरूपकार्यलिङ्गादध्यस्ताज्ञानस्यैव ब्रह्मणः कारणस्य सिद्धिः। यद्वा- तच्च कारणं वस्तु शक्तमेव भवितुमर्हति- नाशक्तिकम्- अशक्तस्य लोके कारणत्वादर्शनात्। सा च कारणनिष्ठा शक्तिः कार्यगम्येति कृत्वा कार्याभावे शक्त्यभाव एव। एवमभावप्रतियोगित्वाच्छक्तिरनित्यैवेत्यध्यस्तैव। लोके अध्यस्तसर्पादेरनित्यत्वदर्शनात्। तथा च प्रपञ्चरूपकार्यलिङ्गादध्यस्तशक्तिकस्यैव ब्रह्मणः कारणस्य सिद्धिः- 'मायी सृजते विश्वमेतत्'- 'देवात्मशक्तिं स्वगुणैर्निगूढा'मित्यादिश्रुतयोत्र मानम्। **एतेन** ब्रह्मणश्शक्तिरेवाज्ञानमिति मायेति अविद्येति प्रकृतिरिति चोच्यत इति **सिद्धम्**।

एवमज्ञानावच्छिन्नं शक्तमेव ब्रह्म प्रपञ्चहेतुरिति कृत्वा ब्रह्मैव प्रपञ्चहेतुरस्तु- किमविद्यापरिकल्पनेनेति **प्रत्युक्तम्** । नच प्रपञ्चरूपकार्येण शक्तिरिव शक्तिरूपकार्येण ब्रह्मणि कारणान्तरं कल्प्यतामिति वाच्यं, अनवस्थादोषात् । किंच दाहस्फोटादिकार्येणाग्नौ शक्तिः कल्प्यते- तस्या अपि शक्तेः किं कारणान्तरं कल्प्यते । **ननु** यदि ब्रह्मशक्तिरविद्या तर्हि ब्रह्मवत्सा नित्यैव भवेदिति न निर्मोक्षः, **मैवम्**—अविद्याया ब्रह्मणि जाताया ब्रह्मण्येव लयश्रवणात् । 'तमः परे देव एकीभव'तीति । मृदि जातो घटो हि मृद्येव लीयते । नचाग्निशक्तिरग्नौ न निलीयतं इति वाच्यं, तस्या अपि स्वकारणाग्नावेव लयदर्शनात्- कार्याग्निज्वालागता हि शक्तिः कारणाग्नौ लीयते ज्वालयासह । काष्ठादिष्वभिव्यक्तस्सन् स्थितो वह्निः कारणाग्निः, मथनादिनाऽभिव्यक्तस्तु कार्याग्निरिति विवेकः । नचैवं नष्टापि शक्तिः पुनरुदीयादिति वाच्यं, निश्शेषमनाशितैव शक्तिः पुनरुदेति मूर्छाद्यपगमेषु- नतु निश्शेषं नाशितेति । तस्मात् ज्ञानाग्निदग्धशक्तिकं ब्रह्मबीजं पुनः प्रपञ्चवृक्षप्ररोहाय नार्हतीति न मुक्तस्य पुनस्संसारः । नचैवमेकमुक्तौ सर्वमुक्तिप्रसङ्गः- एकजीववादे जीवान्तरस्यैवाभावेन प्रकृतचोद्यानवकाशात् । नानाजीववादे च विद्वद्दृष्ट्या सर्वेषामपि मुक्तत्वेन बद्धस्यैवाभावाच्च, अविद्वद्दृष्ट्या ब्रह्मशक्तेरदग्धत्वेन सत्त्वाच्चेति । वस्तुतस्तु सच्चिदानन्दे केवले अद्वितीये ब्रह्मणि जीव इति ईश्वर इति बद्ध इति मुक्त इति जगदिति च दुर्घटमेव भ्रममविद्या जनयति- तदुक्तं—'मायादुर्घटकारिणी'ति । ऐन्द्रजालिकमायापि लोके दुर्घटमेव गगनगन्धर्वनगरादिभ्रमं जनयतीति प्रत्यक्षं- किम्पुनर्ब्रह्ममायेति । साच माया ब्रह्मणि दुर्घटैव वस्तुतो निर्विशेषत्वाद्ब्रह्मणः । अतएव या मा सा मायेति निरुक्तं मायेतिपदमभियुक्तैः । नहि निर्विशेषे ब्रह्मणि मायाख्यः कश्चिद्विशेषो वस्तुतो भवितुमर्हति । **एतेना**विद्याया दुर्घटत्वमनुपपन्नमिति **प्रत्युक्तम्** । अविद्यायास्तत्कार्याणां जीवेश्वरजगतां च निर्विशेषे ब्रह्मणि स्थित्ययोगादिति । नच दुर्घटत्वं नामोपपत्तिशून्यत्वं तदविद्याया न सम्भवति- उपपत्तिमत्त्वादुपपत्तीनां च दर्शितत्वादिति वाच्यं, तथासत्यनुपपत्तिरप्युपपत्तिमती भवेदेवेति । नचेष्टापत्तिः- व्याघातात्- अनुपपत्तेरुपपत्तिमत्त्वं हि व्याहतम् । न वयमविद्याया ब्रह्मज्ञानबाध्यत्वं प्रपञ्चाध्यासहेतुत्वमपारमार्थिकत्वं वा दुर्घटमिति ब्रूमः, किं तु अविद्याया अनृतजडदुःखात्मिकायाः त्रिगुणात्मिकाया अनन्तविशेषायास्सच्चिदानन्दे निर्गुणे निर्विशेषे ब्रह्मण्यवस्थानं, तस्य च जीवेश्वरजगद्भावापादनं च दुर्घटमिति ब्रूमः- यदीदं सुघटमिति मतं ते तर्हि ब्रूहि तत्रोपपत्तिम् । नचैवं दुर्घटेयमविद्या मुक्तावपि ब्रह्मणि तिष्ठेदिति वाच्यं, प्रतीतिसमये एव अविद्यायास्तत्कार्यस्य वा दुर्घटत्वं, नाप्रतीतिसमये- तदानीं तस्याश्शशशृङ्गवदत्यन्तासत्त्वात् । मुक्तौ च सकार्याया अविद्याया न प्रतीतिरिति शशशृङ्गवदत्यन्तासत्त्वेवेति कथं सा दुर्घटा स्यात्कथं वा मुक्तौ ब्रह्मणि तिष्ठेदिति । निर्विशेषेपि ब्रह्मणि सकार्याया अविद्यायाः प्रतीत्यन्यथानुपपत्त्या हि दुर्घटमप्यवस्थानमभ्युपगच्छामः- यदि तस्या न प्रतीतिस्तर्हि कुतस्तदभ्युपगमः । तस्मान्निवृत्ताविद्यस्य मुक्तस्य न पुनरविद्यासम्बन्धः ।

**ननु** यथा ब्रह्मण्यविद्या दुर्घटा तथा जगदपि दुर्घटमेवेति कृत्वा दुर्घटत्वादेव जगदपरमार्थ इत्युच्यतां, किम्पुनर्जगतोऽविद्याकार्यत्वकल्पनेनेति, **मैवम्**—न वयं जगतोऽपरमार्थत्वायाविद्याकार्यत्वं

ब्रूमः, किं तर्हि जगतो दुर्घटत्वादेव । अविद्या हि दुर्घटमपि कार्यं घटयति । नचैवं दुर्घटजगद्घटनायाऽविद्येव दुर्घटाविद्याघटनाय दोषान्तरं कल्प्यतामिति वाच्यं, अनवस्थादोषात् । ततोऽविद्यैव दुर्घटमप्यात्मानं घटयति, स्वपरनिर्वाहकत्वात्तस्याः । नच जगदेव दुर्घटमात्मानं घटयत्विति वाच्यं, जगतः स्थूलस्य वृक्षस्येव केनचित्सूक्ष्मेण बीजेन कारणेन भवितव्यमिति कृत्वा तच्च जगत्कारणं सूक्ष्मं बीजस्थानीयं त्रिगुणात्मकमव्यक्ताद्यपरपर्यायमज्ञानमेवेति तत एव जगदुपपत्तिर्न तु स्वत इति । अत्र च न केवलं तर्कः, किंतु श्रुतिरपि मानम्- 'अव्यक्तान्महानिति, महतः परमव्यक्त'मिति च । नचैवमव्यक्तशब्दवाच्या प्रकृतिः तत्कार्यं जगच्च परमार्थ एवेति वाच्यं, प्रकृतेर्जगतश्च परमात्मन्यवस्थानस्य दुर्घटत्वस्य दर्शितत्वेन तत्र तत्प्रतीतेरपरमार्थत्वात् । गगने दुर्घटस्य गन्धर्वनगरस्य प्रतीतिः खल्वपरमार्था । नच प्रतीतेरपरमार्थत्वेपि विषयस्य परमार्थत्वमेवेति वाच्यं, विषयस्य प्रतीतिमात्रशरीरत्वेन प्रतीतेर्मिथ्यात्वे तद्विषयोपि मिथ्यैवेति । विषयस्य दुर्घटत्वादेव विषयप्रतीतेर्मिथ्यात्वमिति कृत्वा दुर्घटत्वेन विषयस्य मिथ्यात्वमेवेति च ।

## प्रपञ्चस्य सत्यत्वाक्षेपपूर्वकं - तन्निराकरणम् ।

**नन्वविद्या** ब्रह्मशक्तिरित्युक्तम्- तथात्वे तस्याः कथं ब्रह्मण्यवस्थानं दुर्घटम्- किमग्नावग्निशक्तेरवस्थानं दुर्घटं भवति, **मैवम्**—किं निर्विशेषब्रह्मशक्तिरविद्या ? यद्वा सविशेषब्रह्मशक्तिः ? नाद्यः- निर्विशेषब्रह्मणश्शक्तिरूपविशेषायोगात् । द्वितीये- सविशेषब्रह्मणि शक्त्यवस्थानं तत्कार्यजगदवस्थानं च सुघटमेव । नचाविद्यावस्थितेः प्राक्कथं ब्रह्मणस्सविशेषत्वमिति वाच्यं, कालस्याविद्याजन्यत्वेनाविद्यावस्थितेः प्रागिति प्रश्नस्यायुक्तत्वात् । अतएवानादिरविद्येत्युच्यते । **नन्वनाद्यविद्यया** सविशेषं ब्रह्म सविशेषब्रह्मशक्तिरनाद्यविद्येत्यन्योन्याश्रय इति, **मैवम्**—अतएव ब्रह्मणस्सविशेषत्वं दुर्घटं मिथ्येत्युच्यते- एवं ब्रह्मभिन्नस्य सर्वस्याप्यविद्यातत्कार्यलक्षणस्य द्वैतस्य मिथ्यात्वादेव एकमेवाद्वितीयं ब्रह्म 'तत्सत्यम्' 'अतोन्यदार्त'मिति श्रुतिर्गर्जति । तस्मादविद्यावशादेव ब्रह्मण्यविद्यायाः प्रपञ्चस्य च प्रतीतिरिति स्वपरनिर्वाहकोऽविद्याख्यदोष इति । नचाधिष्ठानमेव स्वपरनिर्वाहकं भवतु, किं दोषकल्पनेनेति वाच्यं, केवलादधिष्ठानाद्दोषाद्वा लोके भ्रमोदयादर्शनात्- नहि रज्जुमात्रं दोषमात्रं वा सर्पभ्रमहेतुर्भवति- किंतु दोषसहितमधिष्ठानमधिष्ठानसम्प्रयुक्तो दोषो वा भ्रमहेतुर्भवति- निरधिष्ठानस्य निर्हेतुकस्य वा विभ्रमस्यायोगात् । नचाविद्याध्यासस्येव प्रपञ्चाध्यासस्याप्यधिष्ठानमेव हेतुरस्तु, किं प्रपञ्चाध्यासं प्रत्यविद्याया हेतुत्वकल्पनेनेति वाच्यं, अविद्याध्यासं प्रत्यप्यविद्या हेतुरेवेत्युक्तत्वात् । तस्मादविद्यायास्तत्कार्यस्य जगतो वा ब्रह्मण्यध्यासो नाविद्यामन्तरेणोपपद्यत इति कृत्वा अविद्यैव स्वपरनिर्वाहिका, न त्वधिष्ठानं ब्रह्म । अतएव मुक्तौ अविद्याया अभावाद्ब्रह्मण्यध्यासानुदय इति मुक्तस्यापुनरावृत्तिस्सम्भवतीति । तस्माद्ब्रह्मणि प्रपञ्चभ्रान्तिहेतुरपारमार्थिकोऽविद्याख्यो दोष एव- स्यादेतत् ।

**ननु** अतस्मिंस्तद्बुद्धिर्भ्रान्तिः तस्या हेतुरविद्येत्यस्तु- प्रपञ्चबुद्धिस्तु न भ्रान्तिः प्रपञ्चे एव प्रपञ्चबुद्धिदर्शनात् । घटादिप्रपञ्चं हि घटादिप्रपञ्चाकारेण प्रत्येति लोकः । घटोयं पटोयमिति । एवं प्रपञ्च-

बुद्धेर्भ्रान्तित्वाभावादेव न तद्धेतुत्वमविद्यायाः । या तु शुक्तिरज्ज्वादौ रजतसर्पादिबुद्धिस्तस्या भ्रान्तित्वात्तद्धेतुत्वमविद्यायास्सम्भवति । एवं प्रपञ्चप्रतीतेरभ्रान्तित्वात्तद्विषयः प्रपञ्चोऽपि न मिथ्येति न प्रपञ्चस्य रज्जुसर्पादिवदविद्याकार्यत्वं, किंतु ब्रह्माश्रितपारमार्थिकप्रकृतिकार्यत्वमेवेति सत्य एव प्रपञ्च इति, **मैवम्**—'अपूर्वमनपरमनन्तरमबाह्य'मित्यादिश्रुतेः । 'तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्' 'हरेर्न किञ्चिद्व्यतिरिक्तमस्ती'त्यादिस्मृतेश्च । ब्रह्मैकमेवास्ति तत्र प्रपञ्चबुद्धिस्तु अतस्मिंस्तद्बुद्धित्वाद्भ्रान्तिरेव । रज्जुसर्पादिबुद्ध्यपेक्षा रज्ज्वादिबुद्धेस्सत्यत्वात्प्रमात्वेन व्यवहारमात्रमेव । तथा च ब्रह्मणि प्रपञ्चभ्रमस्य हेतुरविद्यैवेत्यसत्य एव प्रपञ्चः- अविद्याया एव प्रकृतिपदार्थत्वेन तस्या अपारमार्थिकत्वेन च, तत्कार्यस्य प्रपञ्चस्य मिथ्यात्वादिति । नच प्रकृतिपुरुषेश्वरास्त्रयोऽपि सत्या एवेति वाच्यं, चिद्भिन्नस्य सर्वस्याप्यसत्यत्वात्- 'ज्ञानं यथा सत्यमसत्यमन्य'दिति विष्णुपुराणवचनात् । चिद्रूपस्य ब्रह्मण एव 'तत्सत्य'मिति सत्यत्वश्रवणाच्च । **एतेन** यदीश्वरश्चिद्भिन्नस्स्यात्तर्हि प्रकृतिवदसत्य एव स्यादिति- **सिद्धम्** । एवं चिद्रूपत्वादेव जीवेश्वरयोरद्वैतम् । अचिद्रूपत्वात्प्रकृतेर्मिथ्यात्वम् । जीवेशयोश्चिद्रूपत्वं प्रकृतेरचिद्रूपत्वं च सम्प्रतिपन्नम् । तस्मात्प्रकृतिरपरमार्था- अचित्त्वाद्रज्जुसर्पवत् । नच ब्रह्मापरमार्थं- चित्त्वाद्रज्जुसर्पप्रत्ययवदिति वाच्यं, दर्शितश्रुतिस्मृतिविरोधेनैतदनुमानस्य पराहतत्वात् । रज्जुसर्पस्य मिथ्यात्वेऽपि तत्प्रत्ययस्सत्य एवेति त्वदभिमतेः, सर्पोऽयमिति भ्रमगतसर्पांशस्यासत्यत्वेऽपि सर्पभ्रमप्रमानुगतचिन्मात्रस्य सत्यत्वमस्माभिरभ्युपेतमिति हेतोश्च दृष्टान्तासम्प्रतिपत्तेरिति । किं च यत्साध्यं तन्मिथ्या- यथा रज्जुसर्पः । रज्जुसर्पो हि भ्रमात्प्रागसन् भ्रमसमये भ्रमेण साध्यते । यत्सिद्धं तत्सत्यं यथारज्जुरित्यनुमानाद्ज्ञानसाध्यस्य ज्ञेयस्य प्रकृतितत्कार्यलक्षणद्वैतस्यासत्यत्वम् । ज्ञानस्य तु स्वतस्सिद्धस्य सत्यत्वमिति ब्रह्मैकमेव ज्ञानरूपं सत्यम् । न केवलं जडत्वादिभिरेवाविद्याया मृषात्वं, किं तु अनिर्वचनीयत्वादपीति ।

### अविद्यायाः सदसद्विलक्षणत्वेन अनिर्वचनीयत्वोपपत्तिः ।

**ननु** किमत्रानिर्वचनीयत्वमभिप्रेतं- सदसद्विलक्षणत्वं चेत् तथाविधस्य वस्तुनः प्रमाणशून्यत्वेनानिर्वचनीयतैव स्यात्- सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यं- सर्वा च प्रतीतिस्सदसदाकारा- सदसदाकारायाः प्रतीतेस्सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने सर्वं सर्वप्रतीतेर्विषयः स्यादिति **रामानुजः**, **मैवम्**—सर्वं ज्ञेयवस्तुजातमेव प्रतीतिव्यवस्थाप्यं- ज्ञानसाध्यत्वाद्ज्ञेयस्य । ज्ञानं तु न प्रतीतिव्यवस्थाप्यं- ज्ञानस्य प्रतीतिपदवाच्यस्य स्वतस्सिद्धत्वात् । नच ज्ञानमपि परतः सिद्धमिति वाच्यं, किं तद्ज्ञानसाधकं परं किं ज्ञेयं, यद्वा ज्ञानम्? नाद्यः- ज्ञानाधीनसिद्धिकस्य ज्ञेयस्य ज्ञानसाधकत्वायोगात् । द्वितीये- किं तत्साध्याद्ज्ञानाद्भिन्नमुताभिन्नम्? आद्ये- तस्याप्यन्यत्साधकं ज्ञानं कल्प्यं तस्याः पुनरन्यदित्यनवस्था । द्वितीये- स्वत एव ज्ञानं सिद्धमिति न ज्ञानस्य परसाध्यत्वम् । तथाच- प्रतीतिरेव स्वतस्सिद्धत्वेन बाध्यत्वाभावात्सतीति निर्वचनिया । नच बाध्यत्ववदपि वस्तु सदिति निर्वचनीयमेवेति वाच्यं, 'नाऽसतो विद्यते भावो नाऽभावो विद्यते सत' इति गीताविरोधात् । अभावो हि बाधः, प्रतीतिविषयं वस्तु बाध्यत्ववत्त्वात्सदिति निर्वक्तुमशक्यं ज्ञेयस्य बाध्यत्वं च साध्यत्वादेव सिद्धम् ।

यत्साध्यं तद्बाध्यमिति व्याप्तेरुक्तत्वात् । साध्या हि घटादयो लोके बाध्यमाना दृश्यन्ते- सिद्धाया मृदस्तु न कोपि बाधः । अत एव- 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मिति श्रूयते । नचैवमसतीति निरुच्यतामविद्येति वाच्यं, यद्वस्तु प्रतीतिव्यवस्थाप्यं न भवति तदेवासदिति सिद्धान्तात् । नहि शशशृङ्गादिकं प्रतीतिव्यवस्थाप्यं भवति- अयं घट इतिवदिदं शशशृङ्गमिति प्रतीत्यभावात् । तस्माद्बाधप्रतीत्योस्सत्त्वात्सदसद्विलक्षणैवेयमविद्या । सतो ज्ञानादसतश्शशशृङ्गादेश्च विलक्षणत्वादिति । नच- 'नासत्प्रतीतेर्बाधाच्च न सदित्यपि यन्न तत् । प्रतीतेरेव सत्किं न बाधान्नासत्कुतो जग'दिति वचनात् अज्ञानं तत्कार्यं जगच्च प्रतीयमानत्वान्नासत्, बाध्यमानत्वान्न सदिति कृत्वा सदसद्विलक्षणमिति किमित्युच्येत- प्रतीयमानत्वात्सत्- बाध्यमानत्वादसदिति सदसदाकारमित्येव न वक्तव्यं किमिति, इति वाच्यं, यत्सत् तत्प्रतीयते इत्यत्र दृष्टान्ताभावात् । नच ब्रह्म दृष्टान्त इति वाच्यं, तस्य ज्ञानत्वेन ज्ञेयत्वाभावात् । नहि ज्ञानं ज्ञेयं भवति । नच घटादिर्दृष्टान्त इति वाच्यं, घटादिसत्यत्वस्यासम्प्रतिपन्नत्वात् । प्रत्युत यत्प्रतीयते तन्मिथ्या, यथा रज्जुरूर्प इति निरवद्यात्प्रयोगात्प्रतीयमानत्वादिदमज्ञानं जगच्च मिथ्यैवेति सिद्धम् । रज्जुसर्पस्य प्रतीयमानत्वं मिथ्यात्वं च सम्प्रतिपन्नमेव । तथा यद्बाध्यमानं तदसदिति प्रयोगो दुष्ट एव- अप्रतीयमानस्य बाध्यमानत्वायोगात् । न हि शशशृङ्गं केनचिद्बाध्यते- प्रतीयमानस्य हि रज्जुसर्पादेः रज्जुज्ञानादिना बाध्यमानत्वं- न ह्यप्रसक्तस्य निषेधस्सम्भवति- प्रत्युत यन्न प्रतीयते तदसत्- यथा शशशृङ्गमिति प्रयोगो निरवद्यस्सम्भवति- शशशृङ्गस्याप्रतीयमानत्वं हि सम्प्रतिपन्नं- नहि शशशृङ्गं प्रतीयत इति कोप्यनुन्मत्तो वक्ति- तस्मात् प्रतीयमानत्वाद्धेतोरज्ञानं नासत्, व्यतिरेकदृष्टान्तेन शशशृङ्गवत् । बाध्यमानत्वाद्धेतोर्न सत्- तेनैव दृष्टान्तेन ब्रह्मवदिति सिद्धं सदसद्वैलक्षण्यमज्ञानस्य । सदसदाकारत्वं तु नैव सेत्स्यति- एकस्य वस्तुनः विरुद्धोभयाकारायोगात् । सद्विरुद्धाकारमसत्, असद्विरुद्धाकारं हि सत्- यथा तेजोविरुद्धाकारं तमः, तमोविरुद्धाकारं तेजश्च तद्वत् । एवं तेजस्त्वतमस्त्वयोरिव सत्त्वासत्त्वयोरेकत्र स्थित्ययोगान्न सदसदाकारवस्तुसिद्धिरिति कृत्वा प्रमाणशून्यमेव सदसदाकारं वस्तु । नच सदसदाकारप्रतीत्या सदसदाकारवस्तुसिद्धिरिति वाच्यं, एकस्याः प्रतीतेस्सदसदाकारवत्त्वायोगात् । सदाकारप्रतीतेरन्यैवासदाकारप्रतीतिर्भवति, नत्वनन्या । एवं प्रतीतिद्वयस्य भिन्नत्वादेव नैकत्र समावेशः । नहि घटस्सन्निति प्रतीतिर्घटोऽसन्निति प्रतीतिश्चैकेति वक्तुं शक्यते । नवा घटस्सन्नासंश्चेत्येका प्रतीतिरुभयाकारा कदापि कस्यापि जायते । तस्मात्सदाकारा प्रतीतिरसदाकारा प्रतीतिश्च परस्परं भिन्ने एव । सदसदाकारा प्रतीतिस्त्वसम्भवदोषग्रस्तैव । एतत्प्रतीतिद्वयादपि भिन्नैव तृतीया प्रतीतिः सदसद्विलक्षणाकारा । नच सा प्रमाणशून्येति वाच्यं, मिथ्येति प्रतीतेस्सार्वजनीनत्वेन तथा वक्तुमशक्यत्वात् । सदसद्विलक्षणत्वं हि मिथ्यात्वम् । पामरोपि रज्जुसर्पं सतस्सर्पादसतो शशशृङ्गाच्च विलक्षणं मन्यते । तस्माद्रज्जुसर्पादेस्सदसद्वैलक्षण्यमस्तीति कृत्वा सदसद्विलक्षणं वस्तु न प्रमाणशून्यम् । प्रत्युत सदसदाकारं वस्त्वेव प्रमाणशून्यम् । **ननु** अज्ञानं सत्, जगत्सत्, आकाशस्सन्, घटस्सन्, पटस्सन् इत्येवं सदाकारप्रतीतिविषयत्वमेवाज्ञानादेरस्तीति कृत्वाऽसद्वैलक्षण्ये

सत्यपि न सद्वैलक्षण्यमिति, **मैवम्**— अज्ञानादेः पारमार्थिकसत्त्वाभावादस्माभिस्सद्वैलक्षण्यमुच्यते, नतु व्यावहारिकसत्त्वाभावादिति । यद्वा कारणब्रह्मसत्तायाः कार्येऽज्ञानादावनुगमादेवाज्ञानं सदित्यादिव्यवहारः स्वतस्त्वज्ञानादेरसत्त्वं नेति कृत्वा अज्ञानादेस्सद्वैलक्षण्यमुक्तमिति ।

**वस्तुतस्तु** ज्ञानमेकमेव सदिति कृत्वा अज्ञानादौ सद्बुद्धिर्भ्रान्तिरेव । नचैवमज्ञानादौ शशशृङ्गवदसद्बुद्धिस्सत्यैवेति कथमसद्वैलक्षण्यमज्ञानादेरिति वाच्यं, यद्यपि 'वन्ध्यापुत्रेण नागेन्द्रो मृतेश्च ज्जगदस्ति तत्' इति श्रुत्यैवाज्ञानादेश्शशशृङ्गवदसत्त्वमुक्तं, तथापि यावद्व्यवहारं जगद्भ्रमसत्त्वात्तदन्यथानुपपत्त्या अज्ञानादेश्शशशृङ्गाद्यसद्वैलक्षण्यमुक्तम् । श्रुतिस्तु परमार्थबोधनपरा, नहि परमार्थतः किमप्यस्ति ब्रह्मणि- 'नेह नानास्ति किञ्च'नेति श्रुतेः । तस्मात्परमार्थसतो ब्रह्मणः व्यवहारतोप्यसतश्शशशृङ्गादेश्च विलक्षणमेवेदमज्ञानं परमार्थतो सद्व्यवहारतश्च सदिति कृत्वा सदसद्विलक्षणत्वात्सदसच्छब्दाभ्यामनिर्वाच्यमेव । एवमनिर्वाच्यत्वादेवेदं मिथ्येति स्थितम् । नच व्यवहारतस्सत्त्वात्परमार्थतोऽसत्त्वाच्च सदसच्छब्दाभ्यां निर्वाच्यमेवेदं कुतो न स्यादिति वाच्यं, यत्सर्वदा सर्वथाप्यसत्त्वविधुरं तदेव सत , यत्सर्वदा सर्वथापि सत्त्वविधुरं तदेवासत् , इति सदसच्छब्दार्थनिर्णयात्- 'नाऽसतो विद्यते भावो नाऽभावो विद्यते सत' इति हि गीतं भगवता । अथापि यदि व्यवहारतस्सत्त्वात्परमार्थतोऽसत्त्वाच्च सदसच्छब्दानिर्वाच्यमज्ञानमित्यभिमानः तर्हि तत एवाज्ञानं मिथ्येति विद्धि । ब्रह्मभिन्नस्य मिथ्यात्वे एव खल्वस्माकमभिनिवेशः । नच व्यवहारतस्सतो मिथ्यात्वं न दृष्टमिति वाच्यं, रज्जुसर्पादेर्दृष्टत्वान्मिथ्यात्वस्य । नच प्रतिभासत एव रज्जुसर्पादिस्सन्नतु व्यवहारत इति वाच्यं, व्यवहारस्यापि प्रतिभासत्वात् । यदि तु व्यवहारप्रतिभासयोः स्थिरत्वास्थिरत्वलक्षणं भेदमाश्रित्य प्रतिभासतस्सत एव वस्तुनो मिथ्यात्वं, नतु व्यवहारतस्सतः, नापि परमार्थतस्सत इति तवाभिमतिः, तर्हि त्रिविधं वस्तु- पारमार्थिकसत् , व्यावहारिकसत् , प्रातिभासिकसदिति । तत्र आद्यं ब्रह्म, द्वितीयमज्ञानं तत्कार्यं जगच्च, तृतीयं रज्जुसर्पस्वप्नप्रपञ्चादिकमित्यभ्युपगतमेव भवता । नचेष्टापत्तिः- ब्रह्मव्यतिरिक्तस्य सर्वस्याप्यपारमार्थिकत्वेन ब्रह्मव्यतिरिक्तपारमार्थिकदोषोऽभ्युपगन्तव्य इति स्ववचनव्याघातः, ब्रह्मैकमेव सत्यं, ततोन्यदार्तमित्यस्मन्मतप्रवेशश्च । तस्मादज्ञानस्यार्तत्वान्न सत्त्वं प्रतीयमानत्वान्नासत्त्वमिति स्थितं सदसद्वैलक्षण्य- स्यादेतत् ।

**ननु** अस्तीति प्रत्ययविषयत्वं सत्त्वं, नास्तीति प्रत्ययविषयत्वमसत्त्वम्- अज्ञानादिकं च कदाचिदस्तीति प्रत्ययस्य कदाचिन्नास्तीति प्रत्ययस्य च विषयो भवतीति न सदसद्विलक्षणं, किंतु सदसदाकारमेवेति, **मैवम्**—कालभेदेनाकारद्वयलाभेपि युगपन्न तल्लाभ इति न सदसदाकारमज्ञानादिकं, किंतु सदसद्विलक्षणमेव । तच्च प्रागेवोपपादितमिति । नच कदाचिदस्तिप्रत्ययविषयं, कदाचिन्नास्तिप्रत्ययविषयं च कथं सदसद्विलक्षणं भवेदिति वाच्यं, अस्तिनास्तिप्रत्ययविषयत्वस्य कादाचित्कत्वादेव । यत्सदाप्यस्तिप्रत्ययविषयस्तत्सदेव स्यान्न तु सद्विलक्षणं, यच्च सदापि नास्तिप्रत्ययविषयस्तदसदेव स्यान्न त्वसद्विलक्षणं, तत्र यत्सदाप्यस्तिप्रत्ययविषयं तद्ब्रह्मैव । 'अस्तीत्येवोपलब्धव्य' इति श्रुतेः । घटोस्तीत्यादिष्वपि घटाद्यनुगतसन्मात्रस्यैवास्तिप्रत्ययविषयत्वमित्युक्तत्वाच्च । नच ब्रह्मापि ज्ञानात्प्राक् नास्तिप्रत्ययविषयमेवेति

वाच्यं, आत्मभिन्नत्वेनावगतस्यासत्यस्य ब्रह्मणो नास्तिप्रत्ययविषयत्वेपि आत्मस्वरूपस्य ब्रह्मणस्तथात्वाभावात् । नहि मूढोपि नाहमस्मीति प्रत्येति, येन ब्रह्मण आत्मभूतस्य कदाचिदसत्त्वं स्यात् । तस्मात्प्रत्यगभिन्नं ब्रह्मैकमेवास्तिप्रत्ययविषयस्सदापीति सत्, तद्विलक्षणमेवेदमज्ञानादिकं कदाचिदस्तिप्रत्ययविषयत्वात् । एवं यत्सदापि नास्तिप्रत्ययविषयं तच्छशशृङ्गादिकमसत्- तद्विलक्षणमेवेदं कदाचिन्नास्तिप्रत्ययविषयमिति सिद्धमज्ञानादेस्सदसद्विलक्षणत्वमिति । **एतेन** सतोपि ब्रह्मणस्सदसद्विलक्षणत्वमस्तीति ब्रह्मापि मिथ्या भवेदिति सुदर्शनोक्तिः **परास्ता**— सतो ब्रह्मणोऽसद्विलक्षणत्वे सत्यपि सद्विलक्षणत्वाभावात्, सद्विलक्षणत्वासद्विलक्षणत्वयोर्मिलितयोरेव सदसद्विलक्षणत्वशब्दार्थत्वात् । यदि तु सद्भिन्नमसद्भिन्नं च सदसदात्मकमेकं वस्तु स्यात्तर्हि तद्वैलक्षण्यं ब्रह्मणो भवेत । नच सद्भिन्नमसद्भिन्नं च मिथ्यावस्त्वस्तीति वाच्यं, तस्य सदसदात्मकत्वाभावात् । नहि सदसद्भिन्ने वस्तुनि सदसदात्मकत्वं सम्भवति । तस्माद्घटस्य घटपटवैलक्षण्यमिव सतो ब्रह्मणस्सदसद्वैलक्षण्यं सम्भवतीति वक्तुं न शक्यते- दृष्टान्ते घटपटविलक्षणस्य कटादेर्वस्तुनस्सत्त्वात् । वस्तुतस्तु दृष्टान्तेपि घटपटविलक्षणं घटपटोभयात्मकं च वस्तु नास्त्येवेति घटस्य पटवैलक्षण्यं च दुर्निरूपमेव । यदि तु सद्भिन्नमसद्भिन्नं च वस्तु सदसदात्मकमेव भवेदिति न नियमः, किं तु सदसद्विलक्षणमेव भवतु- तथाच घटस्य घटपटवैलक्षण्यमिव सतस्सदसद्वैलक्षण्यं सम्भवतीत्युच्यते, तर्हि यत्सदसद्विलक्षणं वस्तु तस्यैव सदसद्वैलक्षण्यं भवेत्तद्धर्मत्वात् । नतु सद्ब्रह्मणः इति विद्धि । **ननु** घटपटद्वयादेव घटो विलक्षणः- नतु तदतिरिक्तात्कटात्- एवं सदसद्वयादेव सद्विलक्षणं नतु सदसदतिरिक्तादिति कृत्वा ब्रह्मणस्सदसद्वैलक्षण्यं सिद्धमेवेति, **मैवम्**— अवयवातिरिक्तावयव्यभावेन घटपटरूपावयवातिरिक्तस्य द्वयरूपावयविनोऽभावात्तथा सदसद्रूपावयवातिरिक्तस्य द्वयस्याभावाच्च । नच घटपटाभ्यां घट इव सदसद्भ्यां सद्विलक्षणमित्युच्यत इति वाच्यं, द्वन्द्वस्योभयपदार्थप्रधानत्वाद्घटस्य पटवैलक्षण्ये सत्यपि घटवैलक्षण्यसत्त्वं विना घटपटवैलक्षण्यासिद्धेः । एवं दार्ष्टान्तिकेपि बोध्यम् । तस्मात्सद्रूपं ब्रह्म असद्रूपं शशशृङ्गादिकं वा न सदसद्विलक्षणं भवितुमर्हति- किं तु सदसद्रूपरहितमज्ञानादिकमेव । नच सदसदाकारमज्ञानादिकं सदसद्विलक्षणं भवेदिति वाच्यं, मिथो विरुद्धयोस्सदसदाकारयोरेकत्र समावेशायोगादित्युक्तत्वात् । **एतेन** एकस्यैव सत्त्वासत्त्वविरोधस्सदसद्विलक्षणत्वकल्पक **इत्यपास्तम्**— एकस्मिन् युगपदेव सत्त्वासत्त्वयोर्विरुद्धधर्मयोः स्थितिरेव न सम्भवतीति । नहि वयमज्ञानादौ सत्त्वासत्त्वे वर्तेते इति ब्रूमः, किं तु सत्त्वासत्त्वे न वर्तेते इति ब्रूमः । अतएवाज्ञानादेर्न सदसदाकारत्वम् । एवं सदसदाकाराभावादेव सदसद्विलक्षणत्वमिति सिद्धमज्ञानादेरनिर्वचनीयत्वम् ।

**ननु** अस्तीतिप्रत्ययविषयत्वेन प्रतीयमानत्वाद्ब्रह्म न सत्- प्रतीतिर्हि सतीति पूर्वं त्वयोक्तम्- अत एव नाप्यसदिति, सदसद्वैलक्षण्यं ब्रह्मणस्सिद्धमिति, **मैवम्**— प्रत्ययस्यैव ब्रह्मत्वाद्ब्रह्मणि ज्ञेयत्वस्य च यावद्व्यवहारमविद्यया कल्पितत्वाद्येन ब्रह्म प्रतीयत इति मतं तस्य प्रत्येतुरात्मन एव ब्रह्मत्वाद्ज्ञातुश्चात्मनो ज्ञानस्वरूपत्वाच्च । अतएव 'प्रज्ञानं ब्रह्मे'ति श्रूयते । नच ज्ञानमपि ब्रह्म ज्ञेयं भवत्येव- 'ज्ञेयं यत्तत्प्रवक्ष्यामी'ति गीतावचनादिति वाच्यं, किं ज्ञानं स्वेन ज्ञायते? उतान्येन? आद्ये- कर्मकर्तृभाव-

विरोधः । द्वितीये- किं तदन्यद्वस्तु ज्ञानमुत ज्ञेयं, यद्वा ज्ञाता ? नाद्यः अनवस्थादोषात् । न द्वितीयः-- असम्भवात् । न तृतीयः- ज्ञातृस्वरूपस्यैव ज्ञानत्वात् । तस्माद्ज्ञाने ब्रह्मणि ज्ञेयत्वं ज्ञातृत्वमिव कल्पितमेव । एवं ज्ञानस्यैव सत्त्वाद्ब्रह्मैकमेव सत् । तदन्यत्सर्वं मिथ्यैव । तत्र च यावद्व्यवहारं व्योमादिकं सत्यमिति कल्प्यत इति शिवम् ।

### ब्रह्मणि जगत्कल्पनायाः अन्यथाख्यातित्वशङ्का - तन्निरासश्च ।

**ननु** ब्रह्मणि जगत्कल्प्यते रज्जौ सर्पवदविद्ययेति यदुक्तं तदयुक्तम्—दृष्टान्तस्यासम्प्रतिपन्नत्वात्-- नहि रज्जौ दोषवशादपूर्वस्सर्पो जायते, किं तर्हि अन्यत्र सत एव सर्पस्यान्यत्र ख्यातत्वमित्यन्यथाख्यातिरेव । भ्रमापगमानन्तरं हि लोकः प्रत्येति 'रज्जुं दृष्ट्वा सर्पोयमित्यहं भ्रान्तोऽभवं न तु तत्र सर्प आसी'दिति- अतस्मिंस्तद्बुद्धिर्हि भ्रान्तिः । तथा च रज्जुसर्पप्रत्ययस्य भ्रान्तत्वाद्रज्ज्वेव सर्पबुद्धिर्जातेति कृत्वा नानिर्वचनीयख्यातिरभ्युपगन्तव्येति, **मैवम्**—इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति प्रत्यक्षभ्रमप्रमासाधारणं लक्षणमन्यथाख्यातिवादिभिरुक्तम्- तथाच वल्मीकादिस्थसर्पस्य गृहाङ्गणादेवदत्तचक्षुरिन्द्रियस्य च सन्निकर्षाभावेन रज्जौ सर्पोयमिति भ्रमस्योत्पत्त्ययोगात् न तत्र सर्प आसीदिति प्रत्ययस्य तु लौकिकपारमार्थिकत्वावच्छिन्नसर्पो विषयो न तु प्रातिभासिक सर्पः- प्रातिभासिकसर्पे व्यावहारिकसर्पबुद्धिस्तु अतस्मिंस्तद्बुद्धिरिति भ्रान्तिः- रज्जुसर्पप्रत्ययस्य तु रज्ज्वध्यस्तसर्प एव विषयो न तु केवलरज्जुः नापि देशान्तरस्थसर्पः- तस्मादन्यत्र सतोऽन्यत्र ख्यातत्वायोगान्नान्यथाख्यातिसिद्धिः, किंत्वनिर्वचनीयख्यातिरेवेति । एतेनान्यत्र सतोन्यत्र ख्यातत्वं दोषवशादिति सुदर्शनोक्तिः **परास्ता**—अर्थस्येन्द्रियसन्निकर्षाभावे ख्यातत्वायोगात् । नच दोषवशाद्व्यवहितेनाप्यर्थेनेन्द्रियं संयुज्यत इति वाच्यं, दोषशतवशादपि चक्षुरिन्द्रियस्यापुरोवर्तिविषयसंयोगायोगात्तत्कल्पनस्य चानुभवविरुद्धत्वात् । नच दोषवशादपि कथं रज्जौ सर्पस्योदय इति वाच्यं, लौकिकसर्पोदयस्यासम्भावितत्वेपि दुष्टसर्पोदयस्य सम्भावितत्वात् । निद्रादोषवशात्किमात्मनि रथगजादिप्रातिभासिकपदार्था नोत्पद्यन्ते । नच तत्राप्यन्यथाख्यातिरेवेति वाच्यं, 'अथ रथान् रथपथस्सृजत' इत्यादिश्रुतिविरोधात् । अन्यथाख्यातेरसिद्धत्वाच्च । **एतेन** दोषस्यानिर्वचनीयख्यातिहेतुत्वं न क्वचिद्दृष्टमिति सुदर्शनोक्तिः **प्रत्युक्ता**—स्वप्ने तद्दर्शनात् । नच स्वाप्नाः पदार्था ईश्वरेणैव सृष्टाः- नतु दोषवशादिति वाच्यं, ईश्वरेण सृष्टत्वेपि दोषवशादेव सृष्टा इति नहीश्वरः स्वतो जगत्सृजति, किं त्वविद्यादिदोषमवलम्ब्यैव- 'ययेदं निर्ममे विभु'रिति स्मरणात् । नचेश्वरसृष्टत्वाविशेषे दोषजन्यत्वाविशेषे च सति को भेदो जाग्रत्स्वाप्नप्रपञ्चयोरिति वाच्यं, निद्रादोषसंप्रयुक्ताविद्याजन्यः स्वाप्नप्रपञ्चः तदसंप्रयुक्ताविद्याजन्यस्तु जाग्रत इति भेदात् । तस्मादन्यदाख्यातिमतमवलंब्य रज्जौ सर्पाख्यातिबाधयोरुपपत्तिर्वक्तुं न शक्येति कृत्वा अनिर्वचनीयख्यातिरेव तदुपपत्तयेऽभ्युपगन्तव्या ।

### अख्यातिमतनिराकरणम् ।

**नचाख्यातिमते** तदुपपत्तिरस्तीति वाच्यं, स्मर्यमाणानुभूयमानयोस्सर्परज्ज्वोर्भेदाग्रहात्सर्पप्रतीतिः-- तद्भेदग्रहात्तु सर्पबाध इत्यख्यातिमतं, तच्च युक्तिशून्यमेव- सति रज्ज्वनुभवे सर्पभ्रमस्यैवानुदयप्रसङ्गात् ।

आन्तरस्य स्मर्यमाणस्य बाह्यस्य दृश्यमानस्य चाभेदग्रहायोगाच्च । रज्जुसर्पद्वये पुरोवर्तिनि सति तत्र रज्ज्वां सर्पाभेदग्रहस्सर्पे रज्ज्वभेदग्रहश्च साम्यात्सम्भवेदिति । नापि यथार्थख्यातिमते तदुपपत्तिः रज्जौ सत्येव सर्पः प्रतीयते रज्जुप्राचुर्यात्सर्पबाध इति तन्मतं, तच्चामतं- रज्जौ पूर्वं जातस्य सर्पभ्रमस्य पश्चाज्जातेन दण्डभ्रमेणापि बाधदर्शनात् । रज्जौ रज्जुप्राचुर्यस्य सर्पदण्डमूच्छिद्रादिदेशस्य च समादर्शनात् । नहि रज्जौ दिने सुचिरं चक्षुषि प्रणिहितेपि कुशलस्य सर्पादिलेशसाक्षात्कारो भवति- किंतु रज्ज्वारम्भकाणां तन्तूनामेव साक्षात्कारो भवति- सतो बाध इति च विप्रतिपन्नम् ।

## असत्ख्याति, आत्मख्यातिमतयोः निराकरणम् ।

नाप्यसत्ख्यातिमते तदुपपत्तिः- शशशृङ्गवदत्यन्तासतः ख्यात्ययोगात् । नाप्यात्मख्यातिमते तदुपपत्तिः- आन्तर एव सर्पो दोषवशाद्बाह्य इव प्रतिभातीत्येतन्मतं- एतच्चायुक्तम्-- वल्मीकादिस्थस्य सर्पस्यान्तस्सत्त्वे मानाभावात् । नच वासनारूपेण हृदयस्थ एव सर्प इति वाच्यं, यदि हृदयस्थ एव सर्पो बाह्यवदवभासेत तर्हि बाह्यरज्ज्वपेक्षा व्यर्थैवेति कृत्वा बाह्यरज्ज्वभावेपि सर्पभ्रमो जायेत । नच बाह्यरज्जुदर्शनसहकृत एवान्तरसर्पो बाह्यवदवभासत इति वाच्यं, सति बाह्यरज्जुदर्शने सर्पभ्रमस्यैवानुदयप्रसङ्गात् । नचान्तरं विज्ञानमेव बहिस्सर्पवदवभासत इति वाच्यं, सर्पवदेवेति कोयं नियमः रज्जुवदप्यवभासत एव- विज्ञानवादिमते सर्वस्याप्यान्तरत्वेन बाह्यार्थस्यैवाभावात्- इदं च मतं तव सुतरां प्राणान्तकं बाह्यार्थस्यैवापलापात् । नच तवापीदमेव मतमिति वाच्यं, न वयं बाह्यार्थमपलपामः, किंतु मिथ्येति प्रतिपादयाम इति । नच विज्ञानवादिभिरपि बाह्यार्थापलापो न क्रियते, किंतु विज्ञानमेव जगदाकारेण भातीत्युच्यते ततो यूयं तत्तुल्या एवेति वाच्यं, यदि पराशरो भवेत्तत्तुल्यो वयमपि भवाम एव- पराशरव्यासादिपारम्पर्यायातं हीदमद्वैतमतं नतु नाथमुनिना कल्पितं विशिष्टाद्वैतमतमिव । नचास्मन्मतमपि न नाथकल्पितमिति वाच्यं, 'नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैस्त्रातं सम्यग्यतीन्द्रैरिदमखिलतमःकर्मसन्दर्शनं नः' इति वेदान्तदेशिकेनैवोक्तत्वात् । नच पराशरो नैवमवोचदिति वाच्यं, 'ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहविप्लवे ॥' इति तेनैवोक्तत्वात् । 'तस्मान्न विज्ञानमृतेस्ति किञ्चि'दिति ज्ञानातिरिक्तवस्त्वभावस्याप्युक्तत्वात् । नचैवं विज्ञानवादिबौद्धेपु तव प्रद्वेषो व्यर्थ इति वाच्यं, तैर्विज्ञानं क्षणिकमित्युच्यत इति हेतोरेव तेष्वस्माकं प्रद्वेष इति । नहि क्षणिकं विज्ञानमाकल्पस्थायि- गगनादिजगद्रूपं भवितुं क्षमते, नापि मुक्त्यन्वयि जीवरूपं भवितुमर्हति, नापि त्रिकालाबाध्यमुक्तोपसृप्यब्रह्मरूपं भवितुं युज्यते । तस्माद्विज्ञानं सदिति वादिनः पराशरादयो वयं न बौद्धतुल्याः किं तर्हि दृश्यमानजगत्सत्यत्ववादिनो यूयमेव भाण्डाः । एवमनिर्वचनीयख्यात्याश्रयणं विना प्रतीतिबाधयोरुपपत्त्यसिद्धेस्तत्सिद्ध्यर्थ**मनिर्वचनीयख्यातिरवश्यमाश्रयणीया**- अभ्युपगतायां च तस्यां यथा रज्जौ दोषवशात्सर्पो जातस्तथा ब्रह्मणि दोषवशाज्जगज्जातमिति सिद्धम् । यथेदं जगत्तथाऽविद्यापि ब्रह्मण्यध्यस्तैवेति कृत्वा सदसद्विलक्षणत्वान्मिथ्यैव । अध्यस्तं हि वस्तु सद्विलक्षणमसद्विलक्षणं चेति सदसद्विलक्षणमिति ।

वाच्यं, मयि सति कथं मद्ज्ञानप्रागभाव इति । नच त्वयि सति त्वत्प्रागभावो माभून्नाम त्वद्ज्ञानप्रागभावस्स्यादेवेति वाच्यं, ज्ञातुर्ममैव सतः कथं मत्कर्मकज्ञानप्रागभावो भवेत् । नच ज्ञातुस्सतोपि तव तदा ज्ञानं नासीदिति वाच्यं, किं मत्कर्मकं ज्ञानं नासीदुतान्यकर्मकम्? नाद्यः असम्भवात् । नान्त्यः-- मामहं न जानामीति प्रत्यक्षे मदन्यस्याविषयत्वात् । अपि च मम मद्ज्ञानं नास्तीतीदं किं मद्ज्ञानमुतान्यज्ञानम्? आद्ये- कथं मम मद्ज्ञानप्रागभावः । न द्वितीयोऽन्यविषयानुल्लेखात् । तस्मान्मामहं न जानामीति स्वानुभवादेव स्वानुभवाभावस्य कल्पयितुमशक्यत्वात्स्वाज्ञानानुभवोऽवश्यमभ्युपेयः । नच स्वस्यैव कथं स्वाज्ञानानुभव इति वाच्यं, ज्ञानतदभावयोरिव ज्ञानाज्ञानयोरविरोधात् । किंच घटं न जानामीत्यनुभवेपि न घटज्ञानप्रागभावो विषयो, नापि घटप्रागभावः, किंतु घटाज्ञानमेव- नैयायिककुमतिपरिकल्पितस्य प्रागभावस्याप्रामाणिकत्वेनानभ्युपगम्यत्वात् । प्रागभावाभ्युपगमेपि न ज्ञानप्रागभावविषयं ज्ञानं भवितुमर्हति तस्मिन्नेव तदभावस्य विषयत्वायोगात् । नच ज्ञानान्तरे ज्ञानान्तरप्रागभवो विषयो भवेदिति वाच्यं, ज्ञानस्यैकत्वेन ज्ञानान्तराभावात् । नच वृत्तिज्ञानानि नानेति वाच्यं, तत्रापि विषयभेदप्रयुक्तमेव ज्ञाननानात्वं नतु स्वत इति । नच वृत्तीनां क्षणिकत्वेन वृत्तिज्ञानानि नानेति वाच्यं, वृत्तीनां क्षणिकत्वेपि तत्प्रतिफलितचैतन्यरूपज्ञानस्यैकत्वादिति । भवतु वा ज्ञानभेदः तथापि न तवेष्टसिद्धिः- ज्ञानस्वरूपे आत्मनि ज्ञानप्रागभावस्य स्थित्ययोगात्- नच चैतन्ये वृत्तिज्ञानप्रागभावस्तिष्ठेदेवेति वाच्यं, वृत्तिज्ञानानामसङ्ख्येयत्वात्परस्परविरुद्धत्वाच्च तत्प्रागभावा अपि तथाविधा एवेति प्रतिपत्तव्यं, तथा च एकस्मिन्नात्मनि परस्परविरुद्धासङ्ख्येयज्ञानप्रागभावसत्त्वकल्पनमयुक्तमप्रमाणं च । किंच भावरूपे आत्मन्यभावस्थितिरप्ययुक्ता । नच भावरूपे वायौ रूपाभावस्तिष्ठतीति वाच्यं, तत्र रूपं न तिष्ठतीत्येव प्रतिपत्तव्यं, नतु रूपाभावस्तिष्ठतीति- अभावस्य स्थितिक्रियाश्रयत्वायोगात- भावो हि क्रियाश्रयः । अपि च घटपटादिविषयासङ्ख्येयप्रागभावकल्पनापेक्षया घटपटादिसर्वविषयैकाज्ञानस्वीकारो ज्यायान्लाघवात् । नच ज्ञानप्रागभाववदज्ञानान्यपि नानेति वाच्यं, घटादिविषयनानात्वमेव नाज्ञाननानात्वमिति । नचैवं ज्ञानप्रागभावोप्येक एव तद्विषयाणामेव नानात्वमिति वाच्यं, अभावस्य प्रतियोग्यधीनसिद्धिकत्वेन ज्ञानप्रागभावप्रतियोगिज्ञाननानात्वेसति ज्ञानप्रागभावैकत्वस्य दुर्वचत्वात् । नच प्रतियोगिभूतं ज्ञानमप्येकमेवेति वाच्यं, तथासति ज्ञाने ज्ञानप्रागभावस्य विषयत्वं न सम्भवतीति प्रागुक्तदोषः प्राप्तएव । तस्मान्न जानामीत्यनुभवे अज्ञानमेव विषयो नतु ज्ञानाभावः । अत्राह **रामानुजः**— अहमज्ञो मामन्यं च न जानामीत्यत्र केवलेनोपपत्तिसहितेन च प्रत्यक्षेण न भावरूपमज्ञानं प्रतीयते ; यस्तु ज्ञानप्रागभावविषयत्वे विरोध उक्तः अहमज्ञ इत्यस्मिन्ननुभवे अहमित्यात्मनोऽभावधर्मितया ज्ञानस्य च प्रतियोगितया आत्मनोऽवगतिरस्ति वा ? नवा ? अस्तिचेद्विरोधादेव, न ज्ञानानुभवसम्भवः । नोचेद्धर्मिप्रतियोगिज्ञानसव्यपेक्षः ज्ञानाभावानुभवस्सुतरां न सम्भवति । ज्ञानाभावस्यानुमेयत्वे अभावाख्यप्रमाणविषयत्वे चेयमनुपपत्तिस्समानेति सोहि भावरूपाज्ञानेपि तुल्यः । तथाहि- विषयत्वेनाश्रयत्वेन चाज्ञानस्य व्यावर्तकतया प्रत्यगर्थः प्रतिपन्नो वा ? अप्रतिपन्नो वा ? प्रतिपन्नश्चेत्तत्स्वरूपज्ञाननिवर्त्यं तदज्ञानं तस्मिन् प्रतिपन्ने

कथमिव तिष्ठति । अप्रतिपन्नश्चेद्यावर्तकाश्रयविषयज्ञानशून्यमज्ञानं कथमनुभूयेत । अथ विशदस्वरूपावभासोऽज्ञानविरोधी अविशदस्वरूपं तु प्रतीयत इत्याश्रयविषयज्ञाने सत्यपि नाज्ञानानुभवविरोध इति, हन्त तर्हि ज्ञानप्रागभावोपि विशदस्वरूपविषयः- आश्रयप्रतियोगिज्ञानं त्वविशदस्वरूपविषयमिति न कश्चिद्विशेषोऽन्यत्राभिनिवेशात्- इति । आह च सुदर्शनः—अज्ञाननिवर्तकाभिमतप्रमाणज्ञानाभावस्तावत्त्वयाऽभ्युपगन्तव्यः- अन्यथा प्रमाणज्ञाननिवर्त्याज्ञानानुभवासम्भवात् । ततश्च त्वदभ्युपगतः प्रमाणज्ञानाभाव एव अहमज्ञ इति प्रतीतेर्विषयो भवितुमर्हतीति नाभावग्रहणानुपपत्त्या भावरूपत्वं कल्प्यमिति, तदिदमयुक्तम्—तथाहि- किमज्ञानमेवास्माभिः परिकल्पितमित्युच्यते ? यद्वा अनादिसिद्धस्याज्ञानस्याहमज्ञ इत्यनुभवविषयत्वं कल्पितमिति ? नाद्यः- श्रुतिस्मृतिपुराणादिसिद्धत्वादज्ञानस्य । न द्वितीयः- उक्तानुभवे अज्ञानमेव विषय इति स्थापितत्वात् । प्रत्युत त्वयैव ज्ञानप्रागभावः कल्पितः तस्य च दर्शितानुभवविषयत्वं कल्पितमिति । नच अज्ञाननिवर्तकाभिमतप्रमाणज्ञानाभावस्त्वयाऽप्यभ्युपगत इति वाच्यं, मया प्रमाणज्ञानस्यानुत्पत्तिरेवाभ्युपगता न तु तत्प्रागभाव इति । नच कार्यस्यानुत्पत्तिरेव प्रागभाव इति वाच्यं, तर्हि ज्ञानोत्पत्तिप्रागभाव एव न ज्ञानप्रागभाव इति ।

**ननु** कश्चित्कुतश्चित्किञ्चिदननुभूतपूर्वं विदित्वा ममेतः प्रागिदं ज्ञानं नासीदिति प्रत्येति ततो ज्ञानप्रागभावसिद्धिरितिचेदुच्यते- तर्हि स ज्ञानप्रागभावः किं कुतश्चिज्जन्यः ? उताजन्यः ? आद्ये- किं तद्ज्ञानप्रागभावजनकं ब्रह्म उतान्यत्- नाद्यः- ब्रह्मणः किञ्चित्प्रति अकारणत्वादकार्यत्वाच्च । 'न तस्य कार्यं करणं च विद्यत' इति, 'अपूर्वमनपर'मिति च श्रुतेः । द्वितीये- तदज्ञानमेव ज्ञानाज्ञानातिरिक्तपदार्थाभावात् । अजन्यत्वपक्षे अनादेस्तस्यानन्तत्वमेव भवेत् । नचेष्टापत्तिः- प्रमाणज्ञानप्रागभावे सति प्रमाणज्ञानोदयायोगेनानिर्मोक्षप्रसङ्गात् । प्रमाणज्ञानरूपकार्यानुदये प्रमाणज्ञानानुमेयप्रागभावासिद्धेश्च । तस्मादहमज्ञ इति ज्ञाने ज्ञानप्रागभावस्य विषयत्वेपि तद्धेतुत्वेनाज्ञानं सिध्यत्येवेति कृत्वा अहमज्ञ इत्यनुभवादप्यज्ञानसिद्धिर्भवत्येव । वस्तुतस्तु सत्कार्यवादिना त्वया प्रागभावो नाभ्युपगन्तव्य एव- कार्यस्योत्पत्तेः प्रागपि कारणात्मना सत्त्वेन कार्यप्रागभावायोगात् । नच कार्यस्य कार्यरूपेणासत्त्वमेव कार्यप्रागभाव इति वाच्यं, अपूर्वस्य कार्यरूपस्याप्युत्पत्त्यभ्युपगमे सत्कार्यवादासिद्धेः, अपूर्वकार्यरूपोत्पत्त्यभ्युपगमापेक्षया अपूर्वकार्योत्पत्तेरेवाभ्युपगन्तव्यत्वाच्च । यद्येवं ज्ञानमुत्पत्तेः प्राक्स्वकारणाज्ञानरूपेणावतिष्ठत इत्येवं रूपं सत्कार्यवादमपि स्वाभ्युपेतं परित्यज्य ज्ञानप्रागभावे एव बलवन्तं पक्षपातं भवानातनोति, तर्हि स ज्ञानप्रागभावोप्यज्ञानं विना न सिध्यतीति तुष्यतु भवान् । नच ज्ञानस्य ज्ञानाभावस्य वा कथमज्ञानकार्यत्वमिति वाच्यं, 'सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥' इति गीतावचनादज्ञानस्य च त्रिगुणात्मकत्वात्- 'दैवी ह्येषा गुणमयी मम माया दुरत्यये'ति हि गीतम् । मायैव ह्यज्ञानं- तस्मादज्ञानपरिणामभूतसत्त्वकार्यं ज्ञानम् । अज्ञानपरिणामभूततमःकार्यं ज्ञानाभावः ।

नच तत्राज्ञानशब्दो विपरीतज्ञानवाचीति वाच्यं, पुरुषस्य निद्रादिषु तमोभिभवे सति ज्ञानाभावस्यैव सम्भवेन विपरीतज्ञानानुदयात् । ज्ञानहीनस्सुप्तो हि तमोभिभूत इत्युच्यते । यदि तु तमःकार्यं

तदज्ञानं भावरूपमिति वदसि तर्हि तदेव भावरूपमज्ञानमहमज्ञ इत्युनुभवविषयो भवेदिति सिद्धमज्ञ इत्यनुभवाद्भावरूपमज्ञानम् । नच त्वया कारणभूतमेव वस्त्वज्ञानमित्युक्तमिति वाच्यं, अज्ञानं द्विविधं मूलाज्ञानं, तूलाज्ञानमिति; तत्र मूलाज्ञानमेव कारणभूतमेकं च तूलाज्ञानं त्वनेकविधं प्रतिपुरुषं निद्रादिभेदादिति । तस्मात्कार्यभूतं कारणभूतं चाज्ञानं भावरूपमेव नाभावरूपमभावस्य निरुपाख्यस्य कार्यत्वकारणत्वरूपधर्मायोगात् । नचैवमकार्यमकारणं चाभावो ब्रह्मैवेति वाच्यं, तर्हि शशशृङ्गादिकमपि ब्रह्म भवेत् । नचेष्टापत्तिः- सच्चिद्रूपस्य ब्रह्मणोऽभावत्वायोगात् । नचाभावोपि सच्चिद्रूप इति वाच्यं, अभावस्य सत्त्वचित्त्वयोरयोगात् । न ह्यभावः कस्यचित्सत्ताप्रदः स्फूर्तिप्रदो वा किमभावसम्बन्धात्किञ्चिद्वस्तु सत्ताशालि स्फुरणशालि वा दृष्टं- प्रत्युत सत्तास्फुरणशून्यमेव । तस्मान्नाभावस्सत्यज्ञानानन्तलक्षणं ब्रह्म भवति । **ननु** गुरूपदेशात्प्राक्तवाहं ब्रह्मास्मीति ज्ञानं किमस्ति ? उत नास्ति ? आद्ये- गुरूपदेशवैयर्थ्यं मोक्षशास्त्रवैयर्थ्यं च । द्वितीये- ज्ञानप्रागभावस्सिद्धः, **मैवम्**—गुरूपदेशात्प्राङ्मम नाहं ब्रह्मेत्यज्ञानमेवास्ति भावरूपं नतु ज्ञानप्रागभाव इति । ज्ञानं हि स्वोदयात्प्राक्स्वकारणाज्ञानरूपेणैव तिष्ठति न त्वभावरूपेण- यथा घटः स्वोदयात्प्राक्स्वकारणमृत्पिण्डरूपेणैव तिष्ठति, न त्वभावरूपेणेति । नच नाहं ब्रह्मास्मीत्येतदपि ज्ञानमेवेति वाच्यं, हन्त ! तर्हि इतः प्राङ्ममेदं ज्ञानं नासीदित्येतदपि ज्ञानमेवेति कथं ज्ञानाभावसिद्धिः । नच मदुक्तानुभवे ज्ञानाभावो विषय इति वाच्यं, मदुक्तानुभवे अज्ञानं विषय इति त्वदुक्तानुभवेप्यज्ञानं विषय इति च मयोच्यमानत्वात् । नच ज्ञानप्रागभावस्त्वयाऽभ्युपेत इति वाच्यं, प्रौढ्यैव नतु वस्तुत इति । तस्माद्यत्र यत्रानुभवे त्वं ज्ञानाभावो विषय इति ब्रूषे तत्र तत्राहं भावरूपाज्ञानमेव विषय इति ब्रवीमि- अनुभवस्य तु न ज्ञानाभावरूपत्वं विरोधात् । अज्ञानरूपत्वं तु सम्भवति- वृत्तिज्ञानरूपानुभवस्याज्ञानजन्यत्वात् । तस्मादहमज्ञः मामहं न जानामि अन्यमहं न जानामि नाहं ब्रह्मेत्यादिष्वनुभवेषु अज्ञानमेव विषयः तत्कारणं चाज्ञानमेवेति कृत्वा अहं ब्रह्मास्मीति प्रमाणज्ञाननिवर्त्यं नाहं ब्रह्मास्मीत्यज्ञानं भावरूपमेव, नतु अहं ब्रह्मास्मीति ज्ञाननिवर्त्यः कश्चिज्ज्ञानप्रागभावोऽस्ति । **एतेन** प्रमाणज्ञानाभावानभ्युपगमे प्रमाणज्ञाननिवर्त्याज्ञानानुभवासम्भव इति- **प्रत्युक्तम्**—नाहं ब्रह्मास्मीत्यनुभवसिद्धस्याज्ञानस्याहं ब्रह्मास्मीति प्रमाणज्ञाननिवर्त्यत्वसम्भवेन मध्ये प्रमाणज्ञानाभावाभ्युपगमस्य गौरवपराहतत्वात् । नच घटज्ञानादिनिवर्त्यानि घटाज्ञानादीन्यनेकानि कल्पनीयानि स्युरिति वाच्यं, परमतेपि घटज्ञानादिनिवर्त्यानि घटप्रागभावादीन्यनेकानि कल्पनीयानीति तुल्यत्वात् । घटादिविषयभेदेप्यज्ञानैक्यमेवेत्युपपादितत्वेन मन्मते तत्कल्पनानवकाशाच्च । तस्मादुभयसम्प्रतिपन्नभावरूपाज्ञानादेव सर्वेष्टसिद्धिस्सर्वानिष्टपरिहारश्च भवतीति कृत्वा ज्ञानप्रागभावकल्पनं तव व्यर्थमेव । माया तु स नैवाभ्युपेयते । नच भावरूपमज्ञानमस्माभिर्नाभ्युपेतमिति वाच्यं, शब्दान्तरेणाभ्युपेतत्वात् । अचिदिति अव्यक्तमिति प्रकृतिरिति मायेति च व्यवहरन्ति हि भवन्त इदमेवाज्ञानम् ।

**अथ यदुक्तम्**—अज्ञानस्य विषयत्वेनाश्रयत्वेन च प्रत्यगर्थस्य प्रतिपत्तौ तत्स्वरूपज्ञाननिवर्त्याज्ञानस्य कथं तत्र स्थितिरिति, **तत्रोच्यते**—इदमज्ञानं नात्मस्वरूपचैतन्यनिवर्त्यं- तयोरविरोधस्योक्त-

त्वात् । किं तर्हि ब्रह्माकारान्तःकरणवृत्तिप्रतिफलितचैतन्यरूपब्रह्मसाक्षात्कारनामकवृत्तिज्ञाननिवर्त्यं, तयोरेव विरोध इत्युक्तत्वादिति । **अथ यदुक्तं रामानुजेन**—भावरूपस्याज्ञानस्यापि ह्यज्ञानमिति सिध्यतः प्रागभावसिद्धाविव सापेक्षत्वमस्त्येव- तथाहि अज्ञानमिति ज्ञानाभावस्तदन्यस्तद्विरोधी वा त्रयाणामपि तत्स्वरूपज्ञानापेक्षाऽवश्याश्रयणीया । यद्यपि तमस्स्वरूपप्रतिपत्तौ प्रकाशापेक्षा न विद्यते, तथापि प्रकाशविरोधीत्यनेनाकारेण प्रतिपत्तौ प्रकाशप्रतिपत्त्यपेक्षास्त्येव, भवदभिमताज्ञानं न कदाचित्स्वरूपेण सिध्यति । अपि त्वज्ञानमित्येव । तथासति ज्ञानाभाववत्तदपेक्षत्वं समानम्- ज्ञानप्रागभावस्तु भवताप्यभ्युपगम्यते- प्रतीयते च तत उभयाभ्युपेतो ज्ञानप्रागभाव एव । अहमज्ञो मामन्यं च न जानामीत्यनुभूयत इत्यभ्युपगन्तव्यमिति, **तदयुक्तम्**—यथा ज्ञानप्रागभाव इति प्रागभावस्य ज्ञानसापेक्षत्वं, तथा ज्ञानादन्यदिति नाज्ञानस्य ज्ञानसापेक्षत्वम् । अज्ञानं हि तमः किमज्ञानमित्यनभिज्ञेन पृष्टोऽभिज्ञस्तमोऽज्ञानमिति वक्तीति न तस्य तद्वचने ज्ञानापेक्षा- किं ज्ञानप्रागभाव इत्यनभिज्ञेन पृष्टस्त्वभिज्ञः अयं ज्ञानप्रागभाव इति साक्षाद्वचनायोगादिदं ज्ञानमस्य प्रागभावो ज्ञानप्रागभाव इति वक्तुं ज्ञानमपेक्षेत । तस्माद्ज्ञानप्रागभावस्यैव ज्ञानसापेक्षत्वं- यथा घटप्रागभावस्य घटसापेक्षत्वम् । अज्ञानस्य तु न ज्ञानसापेक्षत्वं- यथाऽन्तःकरणादेरिति । यद्यपि तमसोऽज्ञानशब्दवाच्यत्वं कथमिति प्रश्ने अज्ञानशब्दावयवार्थं निर्वक्तुं ज्ञानापेक्षास्ति, तथापि इदमज्ञानमिति वक्तुं न ज्ञानसापेक्षत्वमिति बोध्यम् । नच ज्ञानविरोधीत्यनेनाकारेण ज्ञातुमज्ञानस्यापि ज्ञानसापेक्षत्वमस्तीति वाच्यं, तथासति सर्वस्यापि सर्वापेक्षा स्यात् । घटस्यापि पटभिन्नत्वाकारेण ज्ञातुं पटसापेक्षता स्यात् । चितोप्यज्ञानभिन्नत्वाकारेण ज्ञातुमज्ञानापेक्षा स्यात् । ईश्वरस्यापि जीवभिन्नत्वेन जीवाभिन्नत्वेन वा ज्ञातुं जीवापेक्षा स्यात् । नचेष्टापत्तिः- अभावस्यैव प्रतियोग्यधीनसिद्धिरिति सिद्धान्तव्याकोपात् । तस्माद्ज्ञानप्रागभाववदज्ञानस्यापि ज्ञानसापेक्षत्वमस्तीत्ययुक्तमुक्तम् । ज्ञानप्रागभावस्तु न मयाभ्युपेयते, नापि प्रतीयते- अभावस्य प्रतीयमानत्वायोगात् । प्रतीयमानत्वं हि भावधर्मः- नहि शशशृङ्गादिरभावः प्रतीयते । नहि प्रागभाव एवाभावश्शशशृङ्गादिस्तु नाभाव इति वक्तुं शक्यते, नापि शशशृङ्गादिरभावो न प्रतीयते प्रागभावस्तु प्रतीयत इति नियन्तुं शक्यते-- अभावत्वाविशेषात् । अपि च घटाभाववदनुपलब्धिरूपषष्ठप्रमाणगोचरस्य ज्ञानाभावस्य कथमहमज्ञ इति प्रत्यक्षविषयत्वम् । अहं सुखीतिवदहमज्ञ इति हि प्रत्यक्षम् । नच घटवद्घटाभावोपि प्रत्यक्ष इति वाच्यं, अभावस्य चक्षुस्सन्निकर्षायोगात् । नहि नीरूपेण चक्षुस्संयुज्यते । **एतेन** येनेन्द्रियेण यो भावो गृह्यते तेनैव तदभावोपीति **प्रत्युक्तम्- ननु** घटाभावस्तथाऽऽस्ताम्- ज्ञानाभावस्तु सुखाभाववद्दुःखाभाववच्च मानसप्रत्यक्षविषय इति, **मैवम्**—सुखाभावस्य दुःखत्वेन दुःखाभावस्य सुखत्वेन चाभावत्वाभावान्मानसप्रत्यक्षविषयत्वसम्भवेपि ज्ञानाभावो न तद्विषयः, किं च तत्रापि सुखप्रागभावो दुःखप्रागभावो वा न मानसप्रत्यक्षविषयः, किंतु तत्प्रध्वंसाभाव एव, सच दर्शितविधया भावरूप एवेति । नच ज्ञानाभावोपि ज्ञानान्तरस्वरूप एवेति वाच्यं, तथासति ज्ञानप्रागभाव एवासिद्ध इति । नच ज्ञानान्तरमेव ज्ञानप्रागभावशब्देनोच्यत इति वाच्यं, घटज्ञानस्य पटज्ञानप्रागभावशब्देनाव्यवह्रियमाणत्वात् । नच मृदेव

घटप्रागभावशब्देनोच्यते, भ्रान्तैर्यथा तथा मृद्ज्ञानमेव घटज्ञानप्रागभाव इत्युच्यत इति वाच्यं, मृद्घटयोरिव मृद्ज्ञानघटज्ञानयोर्नियतपौर्वापर्याभावात् । नहि घटोदयात्प्रागिव मृत् घटज्ञानोदयात्प्रागपि मृद्ज्ञानमेवास्तीति वक्तुं शक्यते, पटज्ञानानन्तरमपि घटज्ञानोदयदर्शनात् । तस्मादलं कुमतिमतिपरिकल्पितप्रागभावसाधनायासेन व्यर्थेन तव । नच प्रमाणज्ञानस्य प्रागभावाभावादनादित्वेन तन्निरसनीयभावरूपाज्ञानानुदयप्रसङ्गाद्ज्ञानप्रागभावस्त्वयाऽभ्युपगतप्राय एवेति व्यर्थ एवायं तव प्रागभावदूषणायास इति वाच्यं, प्रमाणज्ञानस्य प्रागभावाभावेपि जन्यत्वेन सादित्वान्निरसनीयभावरूपाज्ञानोदयस्सम्भवत्येवेति । नच प्रागसत एव जन्यत्वमिति कथं जन्यस्य प्रमाणज्ञानस्य प्रागभावाभाव इति वाच्यं, असतो जनिक्रियाश्रयत्वायोगात् । यद्यसदपि जायते तर्हि शशशृङ्गाद्यपि जायेत- असत्त्वाविशेषादिति । नच जन्मनः प्रागेव सतः कथं जन्यत्वमिति वाच्यं, तद्दोषस्येष्टत्वात् । नह्यस्माभिरसत्कार्यवाद इव सत्कार्यवादोऽप्यभ्युपगतः, वयं हि मिथ्याकार्यवादिनः । **एतेन** प्रागभावो भवताऽप्यभ्युपगत इति **प्रत्युक्तम्**—असत्कार्यवादिभिरेव तस्य कल्पितत्वात् । नचैवं सत्कार्यवादिभिरस्माभिरपि प्रागभावो नाभ्युपेत इति वाच्यं, भवताप्यभ्युपगम्यत इति उभयाभ्युपेत इति च भाष्ये कण्ठोक्तत्वात् । सम्प्रतिपत्नेन ज्ञानाभावेनेति सुदर्शनेनाप्युक्तत्वाच्च । **एतेन** न ह्युभयाभ्युपगत इत्युक्तं किं तु भवताप्यभ्युपगम्यत इत्युक्तम्- इति सुदर्शनव्याख्यानं स्वोक्तिविरोधाद्भाष्यविरोधाच्चापगङ्गतमिति **सिद्धम्** ।

**यदुक्तं सुदर्शनेन**—अभावशब्दवाच्यत्वेन कश्चिदर्थ उभाभ्यामप्यभ्युपगतः, सच भावरूपः तदतिरिक्त इतीयदेव विमतं, अत्र भावत्वेन यः स्वाभिमतः यश्च तदतिरिक्तत्वेन अभावशब्दवाच्यतया पराभिमतः तयोरन्यतरेणाहमज्ञ इति प्रतीत्युपपत्तेस्तदुभयातिरिक्तार्थकल्पनमनुपपन्नमित्युक्तं भवतीति भाष्याभिप्राय इति, **तदसत्**—उभयाभ्युपेतो ज्ञानप्रागभाव इति वाक्यादुक्ताभिप्रायासिद्धेः । तत्सिद्धौ वा सोभिप्रायो दुष्ट एव । तथाहि- अज्ञानशब्दवाच्यत्वेन कश्चिदर्थस्त्वया मयेत्युभाभ्यां, मया तार्किकेणेति द्वाभ्यां वा अभ्युपगतो न त्वभावशब्दवाच्यत्वेनेति । तत्र भावत्वेन मया योऽभिमतः अभावत्वेन त्वया तार्किकेण वाऽभिमतो यश्च तयोरन्यतरेणैवाहमज्ञ इति प्रतीत्युपपत्तिरुक्तेतःप्रागिति न तदतिरिक्तार्थकल्पनं कृतं त्वया मयाऽन्येन वेति । अहमज्ञ इति प्रतीतौ भावरूपमज्ञानं विषय इति मया ज्ञानप्रागभावो विषय इति त्वया च स्वाभिप्रायेण तर्कपिशाचग्रहपारवश्येन वा विवादः प्रवर्तित इतःप्रागिति कृत्वा कोत्रोभयातिरिक्तपदार्थकल्पकः । अहो ! सुदर्शन किमिदं दुर्दर्शनं ते । किंच स्वसत्कार्यवादस्थापनाय सुदर्शनेनैव शङ्कररामानुजोभयाभ्युपेतं ज्ञानज्ञानप्रागभावातिरिक्तः पदार्थः कल्पित इति । तत्कल्पनं तस्यायुक्तमेव । तथाहि- **आह सुदर्शनः—ननु** भावान्तरमभावमिच्छता त्वया ज्ञानप्रागभावशब्देन भावरूपाज्ञानमङ्गीकृतं स्यात्, **नैवम्**—सिद्धान्तद्वयानभिज्ञानकृतं हीदं चोद्यं- स्वयंप्रकाशस्यैव ज्ञानस्य संकोचरूपमवस्थान्तरं प्रागभावशब्दवाच्यतयाऽस्मदभिमतम् । स्वप्रकाशज्ञानव्यतिरेकेण भावरूपमज्ञानं पराभिमतम् । अतस्तयोः कथमैक्यमिति । अत भावरूपाज्ञानाद्ज्ञानप्रागभावाच्च भिन्नएव ज्ञानसंकोचरूपः पदार्थस्सुदर्शनेन परिकल्पित इति **स्फुटम्** । नच परिकल्पितत्वेपि युक्तमेवेदमिति वाच्यं, अयुक्तत्वात्-तथाहि यस्य

संकोचस्तदिदं ज्ञानं किं नित्यम्? यद्वाऽनित्यम्? आद्ये किं तत्सावयवम्? यद्वा निरवयवम्? न तावत्सावयं- सावयवस्य नित्यत्वायोगात् । सावयवं हि वस्तु स्वावयवोपचयापचयाभ्यां विक्रियते- विकारि खल्वनित्यम् । इदंच सावयवस्यानित्यत्वं रामानुजवेदान्तदेशिकादिभिरभ्युपगतमेवेति सम्प्रतिपन्नमेव । नापि निरवयवं-- निरवयवस्य वस्तुनस्संकोचाद्ययोगात् । सावयवस्य हि पटस्य संकोचविकासौ भवतः- स्वावयवसंहति-वैरल्यवशात् । तस्मान्नित्यज्ञानस्य संकोच इति विप्रतिषिद्धम् । ज्ञानमनित्यमिति पक्षे तु जन्यज्ञानस्य प्रागभावो भवतापि स्वीकर्तव्य एव । यदि स्वसत्कार्यवादापत्तिभयात्तदस्वीकारः, तर्हि तज्जन्यं ज्ञानं स्वोत्पत्तेःप्राक्सत्त्वरूपेण तिष्ठतीत्यज्ञानमभ्युपेयम् । अज्ञानपरिणामविशेषो हि सत्त्वम् । एवमज्ञानज्ञान-प्रागभावयोरन्यतरस्वीकारेणैवाहमज्ञ इत्यनुभवोपपत्तौ व्यर्थमप्रमाणमयुक्तं चेदं ज्ञानसंकोचपरिकल्पनमिति । किंच ज्ञानस्य संकोचस्तत्प्रतियोगिविकासो वा किं नित्यः? उतानित्यः? आद्ये- संकोचस्य विकासस्य वाऽनिवृत्तिरेव भवेत्; युगपदेकत्र संकोचविकासयोः स्थितिश्च विप्रतिषिद्धा । द्वितीये- तस्य संको-चस्य प्रागभावः कारणमज्ञानं वा स्वीकर्तव्यमेव त्वया । ननु मयेव त्वयापि ज्ञानमुत्पत्तेः प्राक्कारणरूपेण तिष्ठतीति सत्कार्यवाद एवाभ्युपगत इति कथं तव मिथ्याकार्यवादत्वमिति- उच्यते—कालत्रयेपि ज्ञानं वा कार्यान्तरं वा स्वकारणरूपेणैव तिष्ठति नतु पूर्वोत्तरकालयोरेव । तथाच- कार्यस्य कारणव्यतिरेके-णासत्त्वान्मिथ्यात्वम् । यद्धि यद्व्यतिरेकेण नास्ति तन्मिथ्या, यथा- रज्जुव्यतिरेकेणासन् सर्पः । एवं मृदादिकारणव्यतिरेकेण घटादिकार्यस्यासत्त्वादेव- 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मिति श्रूयते । एवं सर्वस्याप्याकाशादिप्रपञ्चस्य कार्यस्य स्वकारणाज्ञानव्यतिरेकेणासत्त्वान्मिथ्यात्वं, तस्य चाज्ञानस्य स्वकारणब्रह्मव्यतिरेकेणासत्त्वान्मिथ्यात्वं, तच्च ब्रह्म न कस्यापि कार्यमिति सत्यमेव । अतएव 'तत्सत्यं अतोन्यदार्त'मिति श्रूयते । नच ब्रह्मापि कस्यापि न कारणमिति पूर्वमुक्तमिति वाच्यं, परमार्थदृष्ट्योक्तत्वात्- परमार्थतो ब्रह्मव्यतिरिक्तस्याभावाद्ब्रह्म न कस्यापि कारणं, नापि कार्यमित्युक्तम् । व्यवहारतस्तु ब्रह्म सर्वकारणमेव- 'यतो वे'त्यादिश्रुतेः । यद्वा ब्रह्म परिणाम्युपादानकारणं न भवतीति न कस्यापि कारणमित्युक्तं, विवर्तोपादानकारणं भवतीतीह सर्वस्यापि कारणमित्युक्तमिति न विरोधः । तस्मात् यत्कार्यं तन्मिथ्या, कारणव्यतिरेकेणासत्त्वाद्यथा रज्जुसर्प इति मिथ्याकार्यवादसिद्धिः । अथ नित्यज्ञानस्य संकोचस्यासम्भावितस्याभ्युपगमेपि स संकोचः कस्माद्भवतीति निर्णेतव्यं- कर्मवशादिति चेत् तत्कर्म कस्माद्धेतोः कृतं- आत्मस्वरूपापरिज्ञानादिति चेत्तर्हि तत्संकोच एवेति कृत्वा संकोचा-त्कर्म, कर्मणस्संकोच इत्यन्योन्याश्रयः । इदानीं मनुष्योहं सोमं पीत्वा देवो भवेयमिति देहात्मभ्रमा-त्कर्म कृतमिति चेत्तर्हि, स भ्रमोपि ज्ञानसंकोचकृत एवेति चक्रकापत्तिः- संकोचाद्भ्रमः, भ्रमात्कर्म, कर्मणस्संकोच इति । भ्रमस्तमःप्रयुक्त इतिचेत्तर्हि तम एवाज्ञानमिति त्वयाप्यज्ञानमभ्युपेतम् । अभ्यु-पेते च तस्मिंस्तत एवाहमज्ञ इति प्रतीत्युपपत्तौ नित्यज्ञानसंकोचादिकल्पनं तव व्यर्थमप्रामाणिकं च । नच भाष्यकारैरेवोक्तमिदमिति वाच्यं, त्वमिव सोपि भण्ड एवेति । नच 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत' इत्यादिश्रुतिभिरुक्तमिति वाच्यं, आत्मस्वरूपभूतज्ञानस्य न लोप इति तदर्थात् । नच 'अप्राण-

वरसुस्वल्पा'सेत्यारभ्य, 'हिरण्यगर्भोतितरां पुंसश्शक्त्युपलक्षित' इत्यन्तस्मृतिसिद्धमिति वाच्यं, अन्तःकरण-धर्मभूतज्ञानतारतम्यप्रतिपादकत्वात्तस्मृतेः । नच भावरूपाज्ञानमपि कल्पितमप्रामाणिकमेवेति वाच्यं, तम आदिशब्दवाच्यस्याज्ञानस्य श्रुतिस्मृत्यादिसिद्धत्वात् । नच अज्ञानशब्दवाच्यत्वं तम आदिशब्द-वाच्यस्यार्थस्य नास्तीति वाच्यं, 'विभेदजनकेऽज्ञाने, विज्ञानमज्ञानभिदापमार्जनं, अज्ञानसाक्षिण्यरविन्द-लोचने, अज्ञानेनावृतं ज्ञानं, ज्ञानेन तु तदज्ञानं, येषां नाशितम्' इत्यादिप्रयोगानुरोधात् । नच सर्वत्रा-प्यज्ञानशब्देन ज्ञानप्रागभावो ज्ञानसंकोचो वाऽभिधीयते नतु भावरूपाज्ञानमिति वाच्यं, अभावस्य भेद-जनकत्वादिभावधर्मायोगात्- ज्ञानसंकोचस्य च ज्ञानावरकत्वायोगात् । तस्मात्सच्चिदानन्दे ब्रह्मणि अनृत-जडदुःखात्मकजगदध्यासानुपपत्तिसिद्धं श्रुतिस्मृत्यादिप्रमाणसिद्धं च भावरूपमज्ञानमेवाहमज्ञ इत्यनुभवे विषयो भवतीति कृत्वा ज्ञानप्रागभावस्य ज्ञानसंकोचस्य वा पदार्थस्य परिकल्पनं तार्किकस्य तव चाद्वैत-मतविद्वेषप्रयुक्तं, यद्वा बुद्धिजाड्यप्रयुक्तमिति **संक्षेपः** ॥

## स्वप्रकाशचैतन्यस्वरूपस्य ब्रह्मणः अज्ञानानुभवाभावनिरूपणं, ईश्वरस्य तु तत्प्रतिभास-रूपतत्साक्षित्वनिरूपणं च, जीवस्य अज्ञानानुभवत्वनिरूपणं च ।

**अथ यदुक्तं रामानुजेन**---नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च न सम्भ-वति- स्वानुभवस्वरूपत्वात्- स्वानुभवस्वरूपमपि तिरोहितस्वस्वरूपमज्ञानमनुभवतीति चेत् , किमिदं तिरो-हितस्वस्वरूपत्वम्- अप्रकाशितस्वरूपत्वमिति चेत्, स्वानुभवस्वरूपस्य कथमप्रकाशितस्वरूपत्वम् ? स्वानुभवस्वरूपस्याप्यन्यतो प्रकाशितस्वरूपत्वमापद्यत इतिचेत्, एवं तर्हि प्रकाशाख्यधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वादन्यतः स्वरूपनाश एव स्यादिति पूर्वमेवोक्तमिति, **तत्रोच्यते**---ब्रह्मणोऽज्ञानानु-भवस्सम्भवतीति केनोक्तं- ब्रह्मैव ह्यनुभवः- अनुभवस्य च नानुभवितृत्वं, नाप्यनुभाव्यत्वं- विरोधादि-त्युक्तम् । जीवस्य त्वज्ञानानुभवस्सम्भवति ज्ञातृत्वात्, अहमज्ञ इति प्रतीतेश्च । किंच जगद्रूपकार्य-लिङ्गगम्यमज्ञानं तच्च जगद्व्यावहारिकमेवेति व्यवहारदशायां बद्धस्यैव जीवस्याज्ञानानुभावित्वं न मुक्त-स्येति कृत्वा कथं नित्यमुक्तस्याज्ञानानुभवो ब्रह्मणः । नच जीवो ब्रह्मैवेति तव मतमिति वाच्यं, वस्तुत एव जीवो ब्रह्म नतु व्यवहारत इति । **ननु** मानाम भूद्ब्रह्मणोऽज्ञानानुभवः- ईश्वरस्य तु नित्यमुक्तस्याज्ञा-नानुभवोस्त्येव ज्ञातृत्वात्स च न सम्भवतीति, **चेन्मैवम्**---सर्वज्ञस्येश्वरस्याहमज्ञ इत्यज्ञानानुभवोस्तीति किं त्वं स्वदृष्टान्तेन कल्पयसि ? किं वा तवेश्वरानुभवसाक्षात्कारात् ? नाद्यः- किञ्चिद्ज्ञस्य तव सर्वज्ञ-स्येश्वरस्य च साम्यायोगात् । नान्त्यः- परहृदयस्याप्रत्यक्षत्वादीश्वरस्य च नित्यपरोक्षत्वात् । नचैव-मीश्वरस्यापि जीवः पर एवेति कृत्वा जीवहृदयज्ञानमीश्वरस्यापि नास्त्येवेति कथमीश्वरस्सर्वज्ञ इति वाच्यं, यद्यप्यज्ञजीवस्येश्वरः परस्तथापि प्राज्ञेश्वरस्य जीवो न परः, किं तु स्वयमेव ईश्वरांशस्यैव जीवत्वे-नांशांशिनोरभेदात् व्यष्टिजीवस्य समष्टिजीवभूतेश्वरानन्यत्वाच्च । किंच सर्वजीवबुद्धिवृत्तिवासनोपरक्ताज्ञा-नोपाधिकत्वादीश्वरस्य सर्वज्ञत्वसम्भवः- तदुक्तम्-- 'स सर्वधीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैक:' इति । तस्मादीश्वरस्याहमज्ञ इत्यनुभवोस्तीति वक्तुं न शक्यते । प्रत्युत सर्वज्ञोहमित्यनुभवोस्तीति

वक्तुं शक्यते- 'वेदाहं समतीतानि वर्तमानानि चार्जुन । भविष्याणि च भूतानि मां तु वेद न कश्चन' इति गीतावचनात् । 'स सर्वज्ञस्सर्ववि'दिति श्रुतेश्च ।

**ननु** यदीश्वरस्य अज्ञानानुभव एव नास्ति कथं सर्वज्ञत्वमिति, **चेन्मैवम्**—अहमज्ञ इत्याकारकाज्ञानानुभव ईश्वरस्य नास्तीत्युक्तं, न त्वज्ञानज्ञानरूपाज्ञानानुभवो नास्तीति । उक्तं ह्यध्यात्मरामायणे--'अज्ञानसाक्षिण्यरविन्दलोचने मायाश्रयत्वान्न हि मोहकारण'मिति । अज्ञानसाक्षित्वं ह्यज्ञानानुभवः । न केवलमज्ञानस्यैवेश्वरस्साक्षी किंतु तत्कार्यस्य सर्वस्यापि । अतएव 'अनश्नन्नन्योऽभिचाकशीति, साक्षी चेता केवल' इति च श्रूयते । तस्मादिदमज्ञानमित्यज्ञानानुभव ईश्वरस्यास्त्येव सोपाधिकत्वेन ज्ञातृत्वात् । निरुपाधिकचैतन्यरूपस्य ब्रह्मणस्तु येन केनापि रूपेण नाज्ञानानुभव इति । नचान्तःकरणपरिणामरूपस्येदमज्ञानमिति वृत्तिज्ञानस्य कथमन्तःकरणरहितेश्वराश्रयत्वमिति वाच्यं, ईश्वरोपाधिभूताज्ञानगुणविशेषसत्त्वपरिणामरूपत्वादीश्वरीयज्ञानस्य सुषुप्तौ जीवस्याप्यविद्यावृत्तिरूपज्ञानाङ्गीकाराच्चान्तःकरणस्येवाज्ञानस्यापि वृत्तिर्ज्ञानरूपास्त्येव ।

**ननु** प्रमाणज्ञानेनाज्ञानं निवर्त्यते न वा ? आद्ये किमीश्वरस्य प्रमाणज्ञानमस्ति न वा ? यद्यस्ति तर्हि कथमीश्वरस्याज्ञानानुभवः । यदि नास्ति तर्हि कथमीश्वरस्य सर्वज्ञत्वम् । द्वितीये- व्यर्थमेव शास्त्रमज्ञाननिवर्तकप्रमाणज्ञानजनकं मोक्षहेतुत्वादिति, **मैवम्**—प्रतिबन्धरहितमेव प्रमाणज्ञानं सर्वात्मनाऽज्ञानं निवर्तयति, सति तु प्रतिबन्धे प्रमाणज्ञानादज्ञानस्यैकदेशेनैव निवृत्तिः- तथाहि प्रमाणज्ञानं द्विविधं--परोक्षमपरोक्षं चेति । तन्निवर्त्यमज्ञानं च द्विविधमावरकं विक्षेपकं चेति । आवरकं च द्विविधं- सत्तावारकं, भानावरकं चेति । तत्र नास्ति ब्रह्मेत्यज्ञानं सत्ताऽऽवरकं, तदस्ति ब्रह्मेति परोक्षज्ञानान्निवर्तते । न भाति ब्रह्मेति भानावरकं, तदहं ब्रह्मेत्यपरोक्षज्ञानान्निवर्तते । अज्ञानतत्कार्यप्रतिभासजनकं विक्षेपकं तत्प्रारब्धरूपप्रतिबन्धरहितापरोक्षज्ञानान्निवर्तते । तत्र जीवन्मुक्तस्यावरकाज्ञानमात्रनिवृत्तिः । विदेहमुक्तस्य तु द्विविधाज्ञाननिवृत्तिः । तस्मात्प्रारब्धप्रतिबन्धरहितादेव प्रमाणज्ञानात्सर्वात्मनाऽज्ञाननिवृत्तिः । ईश्वरस्य तु प्रतिबन्धसत्त्वान्न सर्वात्मनाऽज्ञाननिवृत्तिरिति । नच कथमीश्वरस्यापि प्रारब्धप्रतिबन्ध इति वाच्यं, ईश्वरोपाधिभूताज्ञानात्मककारणदेहसत्त्वेन देहित्वादीश्वरस्यापि प्रारब्धप्रतिबन्ध इति ।

**ननु** देहारम्भकं कर्म प्रारब्धमित्युच्यते, कर्मकर्तृत्वात्तत्फलभोक्तृत्वाच्च जीवस्य प्रारब्धमस्तु, कथम्पुनरकर्तुरभोक्तुश्चेश्वरस्य प्रारब्धसत्त्वमिति, **उच्यते**—सृष्ट्यादिकर्तृत्वादीश्वरस्य तत्प्रयुक्तविलासफलभोक्तृत्वाच्चेति । नचाज्ञानाख्य ईश्वरदेहोऽनादित्वात्कर्मणाऽनारब्ध इति वाच्यं, जीवावरणशरीरस्यापि तथैव कर्मणाऽनारब्धत्वात् । तर्हि कः प्रतिबन्ध ईश्वराज्ञाननिवृत्तेरिति, **चेदुच्यते**—यथा जीवाज्ञाननिवृत्तेर्जीवस्थूलदेहारम्भकं कर्म प्रतिबन्धः, तथा ईश्वराज्ञाननिवृत्तेरपि सर्वजीवस्थूलदेहारम्भकाणि कर्माण्येव । तस्माद्यावत्सर्वजीवमुक्ति नेश्वरस्य विदेहकैवल्यसिद्धिः । जीवस्य तु स्वदेहारम्भककर्मनाशे सति ज्ञानाद्विदेहकैवल्यसिद्धिः- 'तस्य तावदेव चिर'मित्यादिश्रुतेः । नचैवमीश्वरापेक्षया जीव एवोत्कृष्टोऽचिरादेव मोक्षसिद्धेरिति वाच्यं, यथेन्द्रप्रजापतिब्रह्मादिदेवोत्तमापेक्ष-

यापि मनुष्यस्य ज्ञानिन उत्कृष्टत्वं तथैवेति । नहि ब्रह्मात्मापरोक्ष्यवन्तोपि ब्रह्मेन्द्रादयो यावत्स्वदेहपातं कैवल्यं प्राप्नुयुः । नच आधिकारिकपुरुषत्वात्तेषां तथैव न त्वीश्वरस्य स्वतन्त्रस्येति वाच्यं, ईश्वरस्यापि जीवानां तत्तत्कर्मानुरूपदेहादिसृष्ट्याद्यधिकारसत्त्वात् । नचेश्वरः केनात्राधिकृत इति वाच्यं, स्वेनैवेति। नच स्वाज्ञानं निर्मूलमुन्मूलयितुमशक्तः कथमीश्वरो भवेदिति वाच्यं, गगनारविन्दं स्रष्टुमशक्तः कथमीश्वरो भवेदिति वक्तव्यत्वात् । तस्मान्नित्यजीवन्मुक्तस्येश्वरस्य अज्ञानावरणाभावेपि अज्ञानविक्षेपसत्त्वादज्ञानादिप्रतिभासोस्त्येव- यथा जीवन्मुक्तस्य जीवस्य । **एतेन** नित्यमुक्तस्येश्वरस्य कथमज्ञानानुभव इति **प्रत्युक्तम्**—नित्यजीवन्मुक्त एवेश्वरो नतु नित्यविदेहमुक्त इति । नचेश्वरस्य जीवत्वाभावात्कथं जीवन्मुक्तिरिति वाच्यं, स्थूलसूक्ष्मशरीरद्वयसद्भावप्रयुक्तविश्वतैजसनामकजीवत्वाभावेपि कारणशरीरसद्भावप्रयुक्तप्राज्ञनामकजीवत्वसत्त्वात् । नच प्राज्ञजीव एवेश्वरोऽस्त्विति वाच्यं, आनन्दमयकोशोपाधिकस्य प्राज्ञस्य अज्ञानावरणसत्त्वाद्विक्षेपाभावाच्च नेश्वरत्वं- ईश्वरस्य हि नाज्ञानावरणं, किंतु तत्कृतविक्षेपदर्शनमेव । अतएवेश्वरस्याज्ञानसाक्षित्वमुक्तम् ।

**ननु** अज्ञानसाक्षात्कारतदनुभवयोरीश्वरजीवविषययोः को विशेष इति **चेदुच्यते**—इदमज्ञानमित्यज्ञानदर्शनमज्ञानसाक्षात्कारः, अहमज्ञ इत्यज्ञानदर्शनमज्ञानानुभव इति- सुखदुःखान्यतरोपहितं ज्ञानमनुभवस्तदनुपहितं तु साक्षात्कार इति विवेकः । अहमज्ञ इत्यज्ञानतादात्म्यानुभवे सति मनुष्योहमितिवत्तत्प्रयुक्तं सुखं दुःखं चात्मनस्स्यात् । **एतेन**- भावरूपस्यात्मनः ज्ञानाभावेन समं तादात्म्यायोगाच्च अहमज्ञ इत्यज्ञानानुभव एवेति **सिद्धम्** । अस्य चाज्ञानानुभवो जीवस्य अज्ञानेनात्मस्वरूपस्यावृतत्वादेव । ईश्वरस्य स्वरूपं तु नाज्ञानावृतं- तस्य स्वभावसिद्धप्रमाणज्ञानवत्त्वात्- तथाच श्रुतिः- 'स्वाभाविकी ज्ञानबलक्रिया'चेति । जीवस्य तु प्रमाणं ज्ञानं श्रवणाद्यनन्तरजन्यमिति न स्वाभाविकमतो जीवस्याज्ञानावरणं युज्यते । एवमज्ञानावरणाभावादेव नित्यमुक्त ईश्वर इति व्यपदिश्यते । नतु सुतरामज्ञानदर्शनाभावात् ।

**नन्वेकमेव** चैतन्यं निरवयवमित्युक्तं- तत्र जीवचैतन्यमज्ञानावृतमिति, ईश्वरचैतन्यं तदनावृतमिति, ब्रह्मचैतन्यं त्वज्ञानावरणविक्षेपशून्यमिति च भेदकल्पनमयुक्तमिति **चेन्मैवम्**—अज्ञानेनैव सर्वं कल्पितं न मया । 'जीवेशावाभासे न करो'तीति श्रुतेः । नच तत्र त्वयोपपत्तिर्वाच्येति वाच्यं, अज्ञानपरिकल्पितस्यार्थस्य सर्वस्याप्यनुपपन्नत्वेन तत्रोपपत्त्यपेक्षाऽभावात् । तदुक्तं- 'सेयं भगवतो माया यन्न येन विरुध्यते' इति । एवमज्ञानपरिकल्पितपदार्थस्याज्ञानस्य चानुपपन्नत्वात्खल्वस्माभिर्मिथ्यात्वमुच्यते । न चाज्ञानं तत्कृतोर्थश्च सन्नेव न मिथ्येति वाच्यं, 'यथार्थेन विना पुंसो मृषैवात्मविपर्ययः । प्रतीयत उपद्रष्टुः स्वशिरच्छेदनादिना ॥ यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः । दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुण' इति भागवतादसत एवार्थस्य मिथ्यामयी प्रतीतिर्न तु सत इति । तस्माद्वस्तुतो ब्रह्मण्यज्ञानं जीव ईशो जगच्चेति सर्वं नास्त्येव, व्यवहारतस्तु तत्सर्वमज्ञानपरिकल्पितमनुपपन्नमस्त्येव । अत एवोक्तं वशिष्ठेन- 'आख्यायिकासु भगबालजनोदितेव' इति । स्मर्यतेन्यत्रापि- 'मृगतृष्णाम्भसि

स्नातो खपुष्पकृतशेखरः । एष वन्ध्यासुतो याति शशशृङ्गधनुर्धर' इति । कल्पितां मिथ्याभूतामप्याख्यायिकां श्रुत्वा 'निश्चयं स ययौ बालो निर्विचारणया धिया ।' सुप्तोपि हि स्वप्ने अत्यन्तासम्भावितमप्यर्थं पश्यन् सत्यमेवेति मन्यते, प्रबुद्धस्संस्तु मया स्वप्ने दृष्टं मिथ्यैवेति प्रत्येति । एवमज्ञो जीवः ब्रह्मण्यज्ञानमस्ति तेन जीवेश्वरजगन्ति कल्पितानीति श्रुत्वा सत्योयमर्थ इति मन्यते- प्राज्ञस्तु न ब्रह्मण्यज्ञानं नापि जीवेश्वरजगन्तीति मिथ्यैवेयं कल्पनेति मन्यते । अत एव वस्तुस्थितिरुक्ता श्रुत्यैव— 'नेह नानास्ति किंचन' 'एकमेवाद्वितीयं ब्रह्मे'ति । तस्माद्ब्रह्मातिरिक्तस्सर्वोप्यर्थो मिथ्यात्वादनुपपन्न एव । न तत्र मिथ्यावादिना मयोपपत्तिर्वाच्या । जगत्सत्यत्ववादिना त्वयैवोपपत्तिर्वाच्या । यद्यस्ति शक्तिस्तर्हि ब्रूहि कथं निरवयवस्य ब्रह्मणः पादकल्पना श्रौती सङ्गच्छेत— 'पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी'ति ? कथं वा निरवयवेश्वरस्य जीवोंशो भवेत् ? जीवस्येशांशत्वं हि स्मर्यते 'ममैवांशो जीवभूत' इति । कथं नु नाम सर्वं विष्णुमयं जगदिति पौराणिकस्यार्थस्य भवेत्सिद्धिः ? अनृतजडदुःखात्मकस्य जगतस्सच्चिदानन्दविष्णुमयत्वायोगात् । इत्यलं विस्तरेण । **प्रकृतमनुसरामः- जीवस्यैव बद्धस्याज्ञानानुभवः- ईश्वरस्य त्वज्ञानसाक्षित्वमेव, ब्रह्मणस्तु नाज्ञानानुभवो, नापि तत्साक्षित्वं किंत्वनुभवरूपत्वमेवेति सिद्धान्तसंग्रहः । यदुक्तं** स्वानुभवरूपत्वाद्ब्रह्मणोऽज्ञानानुभवो न सम्भवतीति, **तदसत्**—अनुभवरूपत्वमेव ब्रह्मणो नतु स्वानुभवरूपत्वं नापि परानुभवरूपत्वमिति कृत्वा स्वपदविशेषणानर्थक्यात् । यः स्वस्यानुभवो यश्च परस्यानुभवस्तत्स्वपरविषयकानुभवद्वयं वृत्तिज्ञानमेव । तच्च न ब्रह्मणः स्वरूपमिति विरोधाच्च । नच स्वस्येति कर्तरिषष्ठीति वाच्यं, तथासत्यपि स्वकर्तृकानुभवः स्वानुभव इति वृत्तिज्ञानमेव सिद्धं, नतु चैतन्यं नापि स्वरूपभूतोऽनुभवः- स्वानुभावश्चैतन्यं, तत्स्वरूपत्वं, स्वानुभवरूपत्वमिति वाच्यं, स्वरूपभूतानुभवस्वरूपत्वमिति व्यर्थविशेषणात् । नहि स्वरूपभूतानुभवः स्वरूपेतरं भवति, नाप्यस्वरूपभूतानुभवः स्वरूपं भवति- येन यद्व्यावृत्त्यर्थं तथोच्येत । तस्मादनुभवस्वरूपत्वादिति चैतन्यस्वरूपत्वादिति वा वक्तव्यं नतु स्वानुभवस्वरूपत्वादिति । यदि तथैव वदामीत्युच्यते तर्हि तस्याज्ञानानुभवसम्भव इष्ट एवेत्युक्तमेव । **एतेन**- स्वानुभवस्वरूपमपि ब्रह्मतिरोहितस्वस्वरूपमज्ञानमनुभवतीति चेदिति शङ्का न कर्तव्यैवेति **सिद्धम् ।** अस्माभिर्ब्रह्मज्ञानमनुभवतीत्यस्यानुक्तत्वादर्थस्य । **ननु** ब्रह्मैव जीवभूतं सदज्ञानमनुभवतीति त्वयोक्तमिति **चेन्मैवम्**—अज्ञानकृत एव ब्रह्मणो जीवभावो नतु वास्तव इत्युक्तत्वात् । नचाज्ञानादपि कथं ब्रह्मणो जीवत्वमिति वाच्यं, अज्ञानान्मरुभूमिरप्यनूपं भवतीति । गगनमपि नीलं भवति, अच्छिन्नशिरा अपि विच्छिन्नशिरा भवति, असदपि सदिव प्रतिभाति । एवं ब्रह्मापि जीवो भवत्यज्ञानात् । अत्यल्पमिदमुक्तं जीवो भवतीति- जगदपि भवत्येवेति । तस्माद्यदा अज्ञानाज्जीवभूतं सद्ब्रह्माज्ञानमनुभवतीत्युच्यते तदा जीव एवाज्ञानमनुभवतीति सिद्धं, नतु ब्रह्मानुभवतीति । यथा तैजसस्सन्विश्वः स्वप्नमनुभवतीत्युक्ते तैजस एव स्वप्नमनुभवति, नतु विश्व इति सिध्यति तद्वत् । यथा वा देवदत्तो ब्रह्मराक्षसो भूत्वा मनुष्यान्भक्षयतीत्युक्ते ब्रह्मराक्षस एव मनुष्यभक्षको नतु देवदत्त इति सिध्यति तद्वच्च । जीवस्याज्ञानानुभवस्तु सम्भवत्येव- जीवस्वरूपस्याज्ञानावृतत्वादित्युक्तमेव ।

नन्वज्ञानावृतस्वरूपत्वाज्जीवोऽज्ञानमनुभवतीत्येतदपि न सम्भवति- स्वरूपावरणं नाम स्वरूपतिरोधानं तच्च स्वरूपाप्रकाशः, ब्रह्मणश्च प्रकाशाख्यधर्मो न भवद्भिरभ्युपेत इति प्रकाशस्यैव स्वरूपत्वादज्ञानात्स्वरूपनाश एव स्यादिति, **मैवम्**—जीवस्य स्वरूपं चैतन्यं ब्रह्मैव। यद्यपि तत्सर्वावभासकं, तथापि तत्स्वभास्येनाज्ञानेनावृतं सदज्ञातं भवति- प्रमाणज्ञानेन तदावरणाज्ञाननिवृत्तौ स्वत एव भासमानं सद्ज्ञातं भवति। एवं जडस्येव चैतन्यस्यापि ज्ञातताऽज्ञातते स्तः। इमे च चैतन्ये स्वप्रकाशे अज्ञानकल्पिते एव। ततो मिथ्याभूते तेनैव विचारक्षमे इति न तत्रातिशङ्कनीयम्। एवं च अज्ञातमपि चैतन्यमस्त्येवेति नाज्ञानवरणाच्चैतन्यस्वरूपनाशः- अज्ञानं हि चैतन्यमावृणोति मेघो गगनमिवेत्युक्तं ननु नाशयतीति। नचाज्ञातचैतन्यसद्भावे नास्ति प्रमाणमिति वाच्यं, चैतन्यानुग्रहादेव चैतन्यमज्ञानमिति व्यवहारसिद्धिर्न त्वन्यथा। नहि प्रकाशकचैतन्याभावे किंचित्क्वचित्कदाचित्प्रकाशेत।

**ननु** चैतन्यस्याज्ञातत्वं नाम अप्रकाशितत्वं तच्चाप्रकाश एव। चैतन्यं च प्रकाशः तथा च प्रकाशस्याप्रकाशः प्रकाशाभाव इति चैतन्यस्वरूपनाश इति, **मैवम्**—चैतन्यस्याज्ञातत्वं नाम नास्ति न भातीति व्यवहारविषयत्वं, अस्ति भातीति व्यवहाराविषयत्वं वा। ज्ञातत्वं तु अस्ति भातीति व्यवहारविषयत्वम्। व्यवहारश्चान्तःकरणधर्मः- वृत्तिज्ञानरूपत्वान्न तु ब्रह्मस्वरूपम्। तथा चैतन्यमस्ति भातीति व्यवहाराभावे चैतन्यं नास्ति न भातीति व्यवहारभावे वा न चैतन्यस्वरूपनाशः, चैतन्यातिरिक्तव्यवहाररूपप्रकाशगतत्वाद्भावाभावयोः। तस्माद्व्यवहाररूपप्रकाशस्य भावेऽभावे वा न चैतन्यस्वरूपनाश इति।

**ननु** माभूदज्ञानावरणाच्चैतन्यस्वरूपनाशः- चैतन्यस्याज्ञानावरणमेव न सम्भवति- ब्रह्मस्वरूपतिरोधानहेतुभूतमेतदज्ञानं स्वयमनुभूतं सद्ब्रह्म तिरस्करोति, ब्रह्म तिरस्कृत्य च स्वयं तदनुभवविषयो भवतीत्यन्योन्याश्रयणादिति, **मैवम्**—ब्रह्मावृत्य स्थितमेव तदज्ञानं जीवेनानुभूयत इत्यन्योन्याश्रयाभावात्। ब्रह्मावृत्य स्थितमज्ञानं ब्रह्मणा भास्यत इति वादेप्यदोषात्। **ननु** अवभासनात्प्राक्कथमज्ञानसिद्धिः- येन स्थितमज्ञानं भास्यत इति वक्तुं शक्येत, **नैष दोषः**—यदा ब्रह्मण्यज्ञानं स्थितं तदैव ब्रह्मणा भासितमिति स्थितिभासनयोस्समकालत्वस्य विवक्षितत्वात्। नच सत्ताधीनं भानं भानाधीना सत्तेत्यन्योन्याश्रय इति वाच्यं, बीजांकुरवददोषात्। तस्मादज्ञानावरणसम्भवाच्चैतन्यस्य अज्ञानावृतं जीवचैतन्यमेवाज्ञानमनुभवतीति सिद्धम्। **एतेन** यद्यतिरोहितस्वरूपमेव ब्रह्मज्ञानमनुभवति तदा तिरोधानकल्पनाऽज्ञानस्वरूपकल्पना च निष्प्रयोजना स्यादिति **प्रत्युक्तम्**।

### ब्रह्मणः अज्ञानसाक्षित्वाक्षेपः तत्परिहारश्च ।

**ननु** जीवस्याज्ञानानुभवस्सम्भवतु नाम, ब्रह्मणः पुनरज्ञानसाक्षित्वं न सम्भवत्येव- तथाहि ब्रह्मणोऽज्ञानानुभवः किं स्वतोऽन्यतो वा? स्वतश्चेदज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेनानिर्मोक्षस्स्यात्, अनुभूतिस्वरूपस्य ब्रह्मणोऽज्ञानानुभवस्वरूपत्वेन मिथ्यारजतबाधकज्ञानेन रजतानुभवस्यापि निवृत्तिवत्। निवर्तकज्ञानेनाज्ञानानुभूतिरूपब्रह्मस्वरूपनिवृत्तिर्वा स्यात्। अन्यतश्चेत्- किं तदन्यत्- अज्ञानान्तरमिति चेदनवस्था स्यात्। ब्रह्म तिरस्कृत्यैव स्वयमनुभवविषयो भवतीति चेत्- तथासतीदमज्ञानं काचादिव-

स्वसत्तया ब्रह्म तिरस्करोतीति ज्ञानबाध्यत्वमज्ञानस्य न स्यात् । अथेदमज्ञानं स्वयमनादि ब्रह्मणस्स्वसाक्षित्वं, ब्रह्मस्वरूपतिरस्कृतिं च युगपदेव करोतीति नानवस्थादयो दोषा इति, नैतत्—स्वानुभवस्वरूपस्य ब्रह्मणः स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनायोगात् । हेत्वन्तरेण तिरस्कृतमितिचेत्- तर्ह्यस्यानादित्वमपास्तम् । अनवस्था च पूर्वोक्ता । अतिरस्कृतस्वरूपस्यैव साक्षित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यादिति **रामानुजः, मैवम्**—किमत्र ब्रह्मशब्देन मायावीश्वराख्यं चैतन्यमभिप्रेतं ? यद्वा निरुपाधिकम् ? आद्ये- स ईश्वरो जीववदज्ञानोपहित एवेति कृत्वा नानुभूतिमात्रस्वरूपः । यद्यपि जीवस्येश्वरस्य वा वस्तुतश्चैतन्यमेव स्वरूपं, तथापि व्यहारतो न चैतन्यमात्ररूपत्वमुपाधिसत्त्वादिति वेद्यम् । द्वितीये- न तस्याज्ञानसाक्षित्वरूपोप्यज्ञानानुभव इति पूर्वमेवोक्तम् । अथ ईश्वरस्याज्ञानसाक्षित्वं च स्वत एव । तदज्ञानसाक्षित्वं न बन्धकमिति नेश्वरस्य नित्यमुक्तव्याहतिः जीवस्यैवाज्ञानसाक्षित्वेन मुक्तत्वे किं पुनरीश्वरस्य । नच जीवो नाज्ञानसाक्षीति वाच्यं, अज्ञजीवस्याज्ञानभोक्तृत्वेपि प्राज्ञजीवस्य तत्साक्षित्वात् । अज्ञो हि जीवोऽज्ञानतत्कार्यदेहादितादात्म्याध्यासाद्भोक्ता भवति, प्राज्ञस्तु तदभावात्साक्षी भवति । अत एव प्रतीचस्साक्षित्वं श्रूयते । विद्वान्जीवो हि प्रत्यगात्मा- विदुषः प्रत्यगात्मन्येव देहादिविलक्षणे अहम्बुद्धिसत्त्वात् । अहमर्थो ह्यात्मा । अविदुषस्तु देहादावहम्बुद्धिरस्ति स चानात्मेति अविद्वान् जीवो न प्रत्यगात्मा, किंतु भोक्तैव । तस्मादज्ञानतत्कार्यसर्वसाक्षित्वादेवेश्वरस्य न नित्यमुक्त्यनुपपत्तिः । जीवोपि स्वरूपचैतन्येनैवाज्ञानं साक्षात्पश्यति विद्यादशायामिति जीवस्यापि नानिर्मोक्षप्रसङ्गः । **यदुक्त**मनुभूतिस्वरूपत्वाद्ब्रह्म अज्ञानानुभवस्वरूपमिति **तत्तुच्छम्**—चैतन्यस्वरूपमेव ब्रह्म न वृत्तिज्ञानस्वरूपं वृत्तिज्ञानं चाज्ञानानुभव इति । **ननु** स्वरूपचैतन्येनैवेश्वरोऽज्ञानमनुभवतीत्युक्तत्वादीश्वरीयोऽज्ञानानुभवश्चैतन्यमेव, नतु वृत्तिज्ञानमिति, **मैवम्**—अज्ञानाकारवृत्तिप्रतिफलितस्वरूपचैतन्येनैवेश्वरस्य विदुषो जीवस्य वा अज्ञानानुभवः, नहि वृत्तिं विना चैतन्येनार्थस्यावभासनं स्वरूपचैतन्येनार्थानुभव इत्युच्यते, किंतु वृत्तिनिर्गमं विना । अत एव सुखादेरन्तरस्य पदार्थस्य साक्षिभास्यत्वमुच्यते । यदि तु वृत्तिज्ञानानुगतं चैतन्यमनुभव एवेति कृत्वा अज्ञानानुभवरूपं ब्रह्मेत्युच्यते तर्हि अज्ञानानुभवनिवर्तकप्रमाणज्ञानेपि तदनुगतं सद्वर्तत एवेति कथं चैतन्यनिवृत्तिः- शुक्तिज्ञानेनापि रजतज्ञानमेव निवर्तते नतु तदुभयानुगतं ज्ञानसामान्यमिति । तस्मान्न ब्रह्मस्वरूपनिवृत्तिरज्ञानानुभव निवृत्त्येति । **एवमीश्वरः स्वत एवाज्ञानमनुभवतीति पक्षस्य साधितत्वादन्यतोऽनुभवतीति पक्षसाधनं मम मन्दप्रयोजनमेव, तथापि साधयामि विदुषां प्रमदाय- ईश्वरोऽज्ञानमज्ञानेनैवानुभवति अज्ञानोपाध्यभावे** ईश्वरस्य शुद्धब्रह्मरूपत्वेन साक्षित्वस्यैवाभावत् । जीवस्य भोक्तृत्वमिव ईश्वरस्य सक्षित्वमप्यज्ञानोपाधिप्रयुक्तमेव । तथाच अज्ञानोपहित ईश्वरः अज्ञानवृत्त्युपारूढचैतन्येनैवाज्ञानं जानातीति नान्यत इति पक्षेपि कश्चिद्दोषः । नचानवस्थादोषः- तेनैवाज्ञानेन तदेवाज्ञानमनुभवतीति । नचैकस्यामेव जानातिक्रियायामज्ञानमेकमेव करणं कर्म च कथं भवेदिति वाच्यं, वृत्त्यात्मना परिणतमज्ञानं करणं तथाऽपरिणतं तु कर्मेति भेदात् । नच निरवयवस्याज्ञानस्य कथं युगपत्परिणामतदभावसम्भव इति वाच्यं, सावयवत्वा-

दज्ञानस्य- कथमन्यथा तस्य जगदात्मना परिणामोपि भवेत् । एवं सावयवत्वादेवेदमज्ञानमनित्यमिति । **ननु** यद्वस्तु यद्रूपं तस्य तद्भिन्नरूपेण स्थितिः परिणामः, यथा पिण्डरूपेण स्थिताया मृदो घटरूपेण स्थितिः । एवं सति अज्ञानस्य व्योमाद्याकारेण सुखाद्याकारेण वा परिणामोस्तु नाम कथं पुनरज्ञानाकारेणैवेति, **उच्यते**—ईश्वरोपाधिभूतस्य शुद्धसत्त्वप्रधानस्याज्ञानस्य मलिनसत्त्वप्रधानाविद्यादिरूपेण परिणामो भवेदिति ।

**नन्वेवमीश्वरस्य** शुद्धसत्त्वप्रधानमायासाक्षात्कारः कथं तदाकारवृत्त्यभावादिति **चेन्मैवम्**— तदज्ञानं यदा आकारान्तरशून्यं सद्वर्तते तदा स्वाकारेणैव तिष्ठतीति तदेव स्वाकारेणावस्थानमज्ञानस्य वृत्तिरित्युपचर्यत इति । नचैवं करणकर्मभावविरोधः- स्वेनैव स्वं वेत्सीत्यादौ तदविरोधदर्शनात् । यद्वा वृत्त्याकारवृत्त्यन्तरानभ्युपगमादनवस्थादोषेण यथा वृत्तिः स्वोपहितचैतन्येनैव भास्यते, एवमज्ञानाकाराज्ञानवृत्त्यभावेपि पराकाररहितं तदज्ञानं स्वोपहितचैतन्येनैव भास्येत । अथवा अज्ञानस्याप्यज्ञानाकारादौ चिद्वृत्तिरस्तु, यथा चैतन्यस्यापि चैतन्याकारः प्रतिबिम्बः, यथा च सूर्यस्यापि सूर्याकारः प्रतिबिम्बः । तस्माज्जीववदीश्वरोपि सर्वं वृत्तिज्ञानेनैव पश्यतीति **सिद्धम्** । **ननु** यद्येवं जीवस्येवेश्वरस्यापि ज्ञानं वृत्त्यधीनत्वेन व्यवहितं तर्हि जीववदीश्वरोपि ज्ञातैव भवेन्न तु साक्षी साक्षाद्द्रष्टृत्वं हि साक्षित्वं 'साक्षाद्द्रष्टरि संज्ञाया'मित्यनुशासनादिति, **मैवम्**---सत्यप्यविद्यावृत्तिव्यवधाने अन्तःकरणवृत्तिव्यवधानाभावेन साक्षित्वमीश्वरस्य व्यपदिश्यत इति । श्रूयतेहि- 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुस्स शृणोत्यकर्ण' इति । नचैवं जीववदीश्वरस्यापि ज्ञातृत्वेसति भोक्तृत्वमपि स्यादिति वाच्यं, जीववद्भोग्यतादात्म्याध्यास प्रयुक्तयोर्भोग्यविषयाहंममाभिमानयोरभावेनेश्वरस्याभोक्तृत्वात् । न च जीववदीश्वरस्याप्यज्ञाने सति कथं तदभाव इति वाच्यं, जीववदीश्वरस्याज्ञानावरणाभावात् । अत एवोश्वरो वश्यमाय इति, जीवो मयावश इति च व्यवह्रियते । **ननु** यदीश्वस्य साक्षित्वं व्यपदिश्यते तर्हि मुख्यः साक्षी क इति, **उच्यते**-- प्रत्यागात्मैव साक्षीति तेन हि सर्वं वस्तु ज्ञातमज्ञातमपि स्वरूपचैतन्येन भास्यते- नहि तदभासितस्य कस्यचिदपि वस्तुनस्सिद्धिः- तस्य हि सर्वावभासने विषये वृत्त्यपेक्षा नास्ति । एवं तस्य साक्षादेव सर्वावभासकत्वात्साक्षित्वं मुख्यमिति । **नन्वन्तःकरणोपहितत्वात्परिच्छिन्नस्य** जीवसाक्षिणः प्रतीचः कथं सर्वावभासकत्वं, किंतु अज्ञानोपहितस्य ईश्वरसाक्षिणो ब्रह्मण एवेति, **मैवम्**—नित्यस्य प्रतीचः परिच्छिन्नत्वायोगात् । साक्षिभेदस्याप्रामाणिकत्वात्प्रत्यगात्मैवाज्ञानोपहितो जीवेश्वरयोस्साक्षी, तस्यैव ब्रह्मेति नाम । प्रत्यग्ब्रह्मणोर्हि नाममात्रभेदः । अन्तःकरणे प्रतीच उपलम्भादन्तःकरणोपहितत्वव्यवहारः । वस्तुतस्त्वज्ञानोपहित एव- सर्वगतत्वात्प्रतीचः- 'येन सर्वमिदं तत'मिति हि गीतं भगवता प्रत्यगात्मानमुद्दिश्य- अज्ञानं ह्यपरिच्छिन्नत्वात्सर्वगतं- साक्षिण एकत्वं च श्रुतिस्मृत्यादिसिद्धम् । तस्मात्प्रत्यगभिन्नं ब्रह्मैव साक्षि न जीवो, नापीश्वरः । तच्च सर्वं स्वत एवावभासयति न त्वन्यतः । इदं च सर्वावभासकत्वं प्रतीचो न ज्ञातृत्वं, किंतु सर्वस्याप्यस्ति भातीति व्यवहारविषयत्वापादकत्वं, नास्ति न भातीति व्यवहारविषयत्वापादकत्वं वा । अत एवेदं साक्षिचैतन्यं स्वप्रकाशमित्युच्यते- सर्वव्यवहारहेतुप्रकाशत्वं

हि स्वप्रकाशत्वम् । इदं च साक्षिचैतन्यमज्ञानोपहितत्वान्नास्ति न भातीति जीवानुभवविषयत्वाच्चाज्ञानावृतमिति व्यपदिश्यते, नतु वस्तुतस्तस्यावरणं, तथासति जगदान्ध्यप्रसङ्गात् । अहमज्ञ इत्यनुभवबलाज्जीवचैतन्यमेवाज्ञानावृतं न त्वीश्वरचैतन्यं, नापि साक्षिचैतन्यं, जीवदृष्ट्या तु तत्सर्वमावृतमिव भवति, यथा बालदृष्ट्या गगनं नीलमिव भवति तद्वत् । **एतेनाज्ञानं** ब्रह्म तिरस्कुरुते इत्यपास्तम्- ब्रह्मणोऽज्ञानतिरस्काराभावात् ।

## अज्ञानस्य ज्ञाननिवर्त्यत्वोपपत्तिः ।

**यदुक्तमज्ञानस्य** काचादेरिव ज्ञानबाध्यत्वं न स्यादिति, **तदसत्**—दृष्टान्तासम्प्रतिपत्तेः-- जाग्रदनुभवसिद्धः, काचादिदोषः स्वप्नानुभवेन, स्वप्नानुभवसिद्धश्च जाग्रदनुभवेन बाध्यत एवेति । नच जाग्रति काचादिदोषो न ज्ञानेन बाध्यते, किंतु भेषजसेवादिरूपकर्मणैवेति वाच्यं, कर्मणा दोषो निवृत्त इति ज्ञानं जायते, तेन ज्ञानेन न दोषो बाध्यत इति, नच कर्मणा दोषे निवृत्ते सत्येव तद्ज्ञानं जायत इति वाच्यं, ज्ञानाधीनसिद्धिकस्य ज्ञेयस्य ज्ञानात्प्राक्स्थित्ययोगात् । नहि केनाप्यज्ञातं वस्त्वस्तीति प्रतिपत्तुं शक्यते- तस्माद्ज्ञेयस्य यदा प्रतीतिस्तदैव सत्त्वं, यथा रज्जुसर्पस्य- जाग्रति ज्ञेयस्य प्रतीतिसत्त्वादेव सत्त्वं सुषुप्तौ प्रतीत्यभावादेवासत्त्वम् । **ननु** यदा घटप्रतीतिस्तदा घटसत्त्वं यदा तत्प्रतीतिनाशस्तदा घटनाश इति, प्रतिदिनमनन्ता घटा जायेरन्नश्येयुश्च । नचेष्टापत्तिः- सोयं घट इति प्रत्यभिज्ञाविरोधादिति, **मैवम्**—अतिसादृश्यात्प्रत्यभिज्ञासिद्धिः- सेयं दीपज्वालेतिवदिति । **ननु** अन्तःकरणस्य चक्षुर्घटसन्निकर्षाद्घटाकारवृत्तिर्जायते, ततो घटज्ञानं जायत इति कृत्वा ज्ञानात्प्राग्घटस्य सत्त्वं वाच्यमिति, **मैवम्**—यथा भ्रमस्थले युगपदेवाविद्याज्ञानाकारेणार्थाकारेण च परिणमते तथैव प्रमास्थलेप्यन्तःकरणमिति । तस्मात्सर्वं ज्ञेयं प्रातीतिकमेव रज्जुसर्पवत् । भवतु वा काचादिदोषस्य कर्मणा निवृत्तिः- न तावता अज्ञानस्य ज्ञानान्निवृत्तौ काचिदनुपपत्तिः- नहि क्वचित्कश्चिद्दोषः कर्मणा निवृत्त इति सर्वत्र सर्वे दोषाः कर्मणैव निवर्त्या इत्यस्ति राजाज्ञा । नच सत्यदोषः कर्मणैव निवर्त्यत इति वाच्यं, सत्यस्य निवृत्त्ययोगात् । नहि सत्यं ब्रह्म केनापि निवर्त्यते- निवर्त्यमानो वा रज्जुसर्पवदसत्यो भवति ।

**ननु** प्रातिभासिकदोषस्य ज्ञानान्निवृत्तावपि व्यावहारिकदोषस्य न ज्ञानान्निवृत्तिः, किंतु कर्मण एवेति, **मैवम्**—व्यावहारिकदोषाणामपि कामक्रोधादीनां ज्ञानान्निवृत्तिदर्शनात् । नचान्तरदोषाणां ज्ञानान्निवृत्तावपि बाह्यदोषाणां ततो निवृत्तिरिति वाच्यं, अज्ञानस्याप्यान्तरदोषत्वात् । आन्तरं तमोह्यज्ञानम् । नच दोषाणां कामक्रोधादीनां गुणैरेव शमदमादिभिर्निवृत्तिर्न तु ज्ञानेनेति वाच्यं, दोषस्याज्ञानस्य गुणेनैव ज्ञानेन निवृत्तिरिति तुल्यत्वात् । ज्ञानं ह्यन्तःकरणपरिणामत्वादन्तःकरणगुणः । नच ज्ञानं द्रव्यमेव न गुण इति वाच्यं, तर्हि अज्ञानमपि द्रव्यमेव न तु दोष इति । नच द्रव्यस्य कर्मणैव निवृत्तिर्न तु द्रव्येणेति वाच्यं, द्रव्यस्य काष्ठस्य द्रव्येणाग्निना निवृत्तिदर्शनात् । नचाग्निसंयोगक्रिययैव तत्र काष्ठनाश इति वाच्यं, अत्रापि ज्ञानसंयोगक्रिययैवाज्ञाननिवृत्तिरिति । नच ज्ञानतत्प्रागभावयोरेव

विरोधो न तु ज्ञानाज्ञानयोरिति कृत्वा विरोधाभावेन न ज्ञानादज्ञाननिवृत्तिरिति वाच्यं, अज्ञानकर्मणोरप्यविरोधस्य तुल्यत्वात् । अज्ञानप्रयुक्तं हि कर्म, प्रत्युत ज्ञानकर्मणोरेव विरोधः- 'ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने'ति गीतावचनात् । नचापवित्रकर्मणोऽज्ञानानिवर्तकत्वेपि पवित्रं कर्म तन्निवर्तकमेवेति वाच्यं, 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यत' इति परमपवित्रस्य ज्ञानस्यैवाज्ञाननिवर्तकत्वमिति । प्रत्युत पवित्रकर्मणोपि देवादिपवित्रशरीरहेतुत्वेनाज्ञानप्रवर्तकत्वमेव । नच परमपुरुषाराधनरूपं कर्म देवादिशरीराहेतुत्वादज्ञानाप्रवर्तकमिति वाच्यं, तस्यापि वैष्णवशरीरहेतुत्वात् । विष्णुमाराधितवन्तो हि वैकुण्ठं प्राप्य वैष्णवं देहं प्रतिपद्यन्ते । नच तच्छरीरमज्ञानाप्रभवमिति वाच्यं, त्रिगुणात्मकत्वेन सत्त्वमयत्वेन वा तस्याप्यज्ञानप्रभवत्वादिति । किंच शुद्धात्कर्मणोऽशुद्धं कर्म निवर्ततांनाम तच्च शुद्धं कर्म कुतो निवर्तते । यदि फलभोगात्तर्हि सशरीरस्यैव कर्मफलभोगः 'अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशत' इति अशरीरस्य सत्कर्मफलभूतप्रियभोगायोगात् । यदि सशरीरत्वं जीवस्य तर्हि विष्णुलोके सत्कर्मफलं सुखमनुभूय कर्मक्षये पुनस्तत आवर्तत एव । सत्कर्मक्षयेसति दिव्यदेहस्थित्ययोगात् । नच तत्कर्म तज्जन्यं शरीरं तत्कृतप्रियफलानुभवश्चेत्येतत्त्रयं नित्यमिति वाच्यं, कृतकस्य कर्मणो जन्ययोश्शरीरफलयोश्च नित्यत्वायोगात् । तस्मात्सत्कर्मणा दुष्कर्मनिवृत्तावपि जन्मादिलक्षणसंसारानिवृत्तेस्तत्कारणाज्ञानस्याप्यनिवृत्तिरेवेति कृत्वा ज्ञानादेवाज्ञानस्य सकार्यस्य निश्शेषनिवृत्तिः । तथाच प्रयोगः-- अज्ञानं ज्ञानान्निवर्तते- अध्यस्तत्वात् रज्जुसर्पवदिति । नच दृष्टान्ते प्रमाज्ञानाद्भ्रमज्ञानस्यैव निवृत्तिर्नतु कस्यचिदर्थस्यासत्त्वादिति वाच्यं, दार्ष्टान्तिकेपि तथैवेति । नहि भ्रान्तिं विना ब्रह्मण्यज्ञानमिति कश्चित्पदार्थोस्ति । नच ज्ञानादज्ञानं निवर्तत इत्यत्र नास्ति मानमिति वाच्यं- 'तरति शोकमात्मवित्' 'ज्ञात्वा मां शान्तिमृच्छती'त्यादिश्रुतिस्मृतिप्रामाण्यात् । 'घटाज्ञानं घटज्ञानाद्यथा लोके विनश्यति। तथाऽत्मज्ञानमात्रेण नश्यत्यज्ञानमात्मनः ॥ रज्ज्वज्ञानविनाशेन रज्जुसर्पो विनश्यति । तथाऽऽत्माज्ञाननाशेन संसारस्स विनश्यति' इति पुराणाच्च । कर्मणोऽज्ञानाबाधकत्वं च पुराणे स्फुटमुक्तम् । 'अज्ञानबाधकं कर्म न भवेदम्बुजेक्षण' इति ।

**ननु** सर्वत्रापि ज्ञानादज्ञानस्य ज्ञानाभावरूपस्यैव निवृत्तिरुक्ता तयोरेव विरोधात्- कर्मणा च तस्यैवानिवृत्तिरुक्ता तयोरविरोधात्- संसारश्चात्मस्वरूपापरिज्ञानमूलकस्तस्य ज्ञानान्निवृत्तिरुचितैव- ज्ञानाद्ज्ञानाभावे नष्टे सति तत्कार्यस्य स्थित्ययोगात् । तस्माद्भावरूपाज्ञानस्य न ज्ञानान्निवृत्तिरिति, **मैवम्**- किं कुतोयमात्मस्वरूपज्ञानाभावो यस्संसारस्य मूलं- यद्यशुद्धकर्मकृतस्तर्हि शुद्धकर्मणा तन्निवृत्तिर्भवेदिति कथं कर्मणो मुक्त्यहेतुत्वम् । नच कर्मणो मुक्त्यहेतुत्वं क्वापि नोक्तमिति वाच्यं, 'न कर्मणा न प्रजया धनेन, नास्त्यकृतः कृतेन, तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय, ज्ञानादेव तु कैवल्यं, 'ज्ञानमेव महाविष्णो मोक्षसाधनमुच्यते । आत्मनः परमा मुक्तिर्ज्ञानादेव न कर्मणा ॥ तस्मान्न कर्मणा मुक्तिः कल्पकोटिशतैरपि । संसारदुःखतप्तानामात्मज्ञानामृताम्भसा॥ तापशान्तिर्नचान्येन सत्यमेव न संशयः । तस्य सायुज्यरूपाया मुक्तेस्साक्षात्तु साधनं ॥ सम्यग्ज्ञानं न कर्मोक्तं न तयोश्च समुच्चयः' इति । **एतेन** कर्म-

ज्ञानसमुच्चयान्मुक्तिरित्यपि प्रत्युक्तम् । यदि तु प्रकृतिकृतस्तर्हि किं सा प्रकृतिस्सत्या उतासत्या ? आद्ये- प्रकृतेरनिवृत्तेरनिर्मोक्ष एव । द्वितीये- भावरूपमज्ञानमभ्युपेतमेव त्वया, असत्या प्रकृतिर्हि तत् । तस्याश्च न कर्मणा निवृत्तिरविरोधात् । नचाशुद्धायाः प्रकृतेश्शुद्धं कर्म विरोध्येवेति वाच्यं, कर्मणाऽशुद्धप्रकृतिनिवृत्तावपि शुद्धप्रकृत्यनिवृत्तेः । नच संसारस्याशुद्धप्रकृतिकृतत्वात्कर्मणा तन्नाशे संसारनाश एवेति वाच्यं, अशुद्धप्रकृत्यतिरिक्तशुद्धप्रकृतेरभावात् । नचास्ति शुद्धप्रकृतिर्दिव्यदेहादिहेतुरिति वाच्यं, तर्हि संसारोप्यस्त्येव । देहवतः प्रियाप्रियापहतिलक्षणमुक्त्यभावश्श्रुत्युक्तः खलु । ननु शुद्धप्रकृतिरीश्वरस्याप्यस्ति शुद्धसत्त्वप्रधानमायाया एव शुद्धप्रकृतित्वात्स च नित्यमुक्त इति कथं शुद्धप्रकृतिलाभे जीवस्य मुक्त्यलाभ इति, मैवम्—ईश्वरस्यापि सायुज्यमुक्तिर्नास्तीति । नचैवं प्रियाप्रियाभ्यामपहतस्येश्वरत्वं कथमिति वाच्यं, ईश्वरस्य देहवत्त्वाभावादशरीरो हीश्वरः । नचेश्वरो विष्णुर्दिव्यमङ्गलविग्रह एवेति वाच्यं, तस्य विग्रहिणोऽनीश्वरत्वात् । नचैवमीश्वरवज्जीवोपि देहं विनैव शुद्धप्रकृत्युपहितो वर्तते मुक्ताविति वाच्यं, तर्हि सा परमा मुक्तिर्नैव भवति, निरुपाधिकब्रह्मस्वरूपेणावस्थितिर्हि सायुज्यलक्षणा परमा मुक्तिः, साच शुद्धप्रकृतिनिवृत्तिं विना न सम्भवति शुद्धप्रकृतेश्च शुद्धेनाशुद्धेन वा कर्मणा न निवृत्तिरिति, ज्ञानादेव तन्निवृत्तिः । अतएवोक्तं 'विदेहजननेऽज्ञाने ज्ञानान्नाशमुपागते' इति । नच शुद्धप्रकृतेस्सत्यत्वाद्ज्ञानेन कर्मणा वा न निवृत्तिरिति वाच्यं, यदि सा ब्रह्मभिन्ना तर्ह्यसत्यैव । यदि ब्रह्माभिन्ना तर्हि तदनिवृत्तावपि न कैवल्यानुपपत्तिरिति । किंच अशुद्धप्रकृतेरपि न शुद्धकर्मणा निवृत्तिः अशुद्धप्रकृतिर्नाम मलिनसत्त्वप्रधाना । अविद्या अहमज्ञ इत्यनुभवसिद्धा- तस्याश्च भ्रमहेतुत्वेन प्रमाणज्ञानेनैव निवृत्तिः, प्रमाणज्ञानं हि भ्रमं, तदुपादानमज्ञानं च निवर्तयति- यथा रज्जुज्ञानं प्रमाणजनितं निवर्तयति सर्पभ्रमं तद्धेतुमज्ञानं च । नहि कर्मणा भ्रमनिवृत्तिः- भ्रमस्यानिवृत्तौ तद्धेतोरज्ञानस्य वा निवृत्तिः- तस्माद्ज्ञानमेव भावरूपाज्ञानस्य निवर्तकं, नतु कर्मेति स्थितम् ।

## अज्ञाननिवृत्तिरेव मुक्तिः नतु वैकुण्ठलोकप्राप्तिरित्युपपादनम् ।

ननु जीवस्य अशुद्धप्रकृतिसंसर्ग एव बन्धः शुद्धप्रकृतिसंसर्ग एव मोक्षः । तत्र देवादिचतुर्विधदेहाकारपरिणता प्रकृतिरशुद्धा- सा ब्रह्माण्डे वर्तते । वैष्णवदेहाकारपरिणतप्रकृतिश्शुद्धा, सा ब्रह्माण्डादुपरि विष्णुलोके वैकुण्ठे वर्तते । शुद्धप्रकृतिप्राप्तिश्च विष्ण्वाराधनरूपकर्मणस्सम्भवति । वैकुण्ठं प्राप्तश्च न पुनरावर्तते- 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोर्जुन'ेति गीतावचनादपुनरावृत्तिश्शब्दादिति सूत्राच्च । तस्मात्कर्मैव परमपदप्रापकं, नतु ज्ञानमिति, मैवम्—देवदेहाकारपरिणतप्रकृतिश्शुद्धा, मनुष्याद्याकारपरिणतप्रकृतिरशुद्धा, सा मर्त्यपाताललोकयोरस्ति स्वर्गेतु शुद्धा, ब्रह्माण्डादुपरि किमपि नास्ति । सर्वेषां लोकानां ब्रह्माण्डान्तःपातित्वात् । सच स्वर्गलोको ज्योतिष्टोमादिविहितकर्मणा प्राप्यत इति मीमांसका एव जयिनो भवेयुः । यदि विष्णुलोक इन्द्रलोकवत्कर्मणा प्राप्यते, तर्हि सोऽनित्य एव भवेत्- 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयत' इति श्रुतेः । तस्मात्कर्मक्षये सति तं तं लोकं गतास्ततस्ततः पुनरावर्तन्त एव । 'आब्रह्मभुवना'दिति गीतं हि ब्रह्मलोकएव

ब्रह्मविष्णुरुद्रनामकत्रिमूर्तिनिवासस्थानम् । तद्गतस्यापुनरावृत्तिस्तु ज्ञानात्कैवल्यप्राप्तौ सत्येव, यथास्मिन् लोके विदुषः । अतएवापुनरावृत्तिश्शब्दादिति स्मर्यते- सर्वाहि गतिरागतिफलितैव । नचैवं ब्रह्म प्राप्तोपि पुनरावर्ततेति वाच्यं, सर्वव्यापिनो ब्रह्मणस्सकाशादागत्ययोगात् । नचैवं ब्रह्मप्राप्तिरपि दुर्वचैवेति वाच्यं, इष्टापत्तेः । अज्ञानादप्राप्तमिव स्थितं ब्रह्मज्ञानात्प्राप्तमिव भवतीति मुख्यप्राप्त्यभावात् । अतएव ज्ञानात्प्राप्यमाणस्य कैवल्यस्य नानित्यत्वदोषः- कैवल्यसत्त्वे प्रमाणादीनि च दर्शितानि ।

**यद्यपि** त्वदुक्तविधया वैकुण्ठप्रापकं कर्मैव, तथापि न तत्प्राप्तिर्मुक्तिः- अज्ञानान्मुक्तेरेव मुक्तित्वाद्वैकुण्ठे च शुद्धप्रकृतिरूपाज्ञानसत्त्वात्तन्निवृत्तेः कर्मणाऽजातत्वादिति । नच ज्ञानाभाव एवाज्ञानं, स वैकुण्ठे नास्तीति वाच्यं, किं वैकुण्ठगतानां लक्ष्मीविष्णुगरुडादिविषयकविशेषज्ञानानि सन्ति उत न ? आद्ये तत्तद्ज्ञानप्रागभावाभावे कथं तत्तद्ज्ञानोदयसिद्धिः । नच तानि नित्यज्ञानानीति वाच्यं, युगपदेकस्मिन्नेव पुरुषे नानाविषयकज्ञानस्थित्ययोगात् । इश्वरेपि तादृशनित्यज्ञानसत्त्वस्य विप्रतिपन्नत्वात् । नच ज्ञानसंकोचरूपज्ञानप्रागभावोस्ति मुक्ताविति वाच्यं, ज्ञानसंकोचस्य मुक्तावभाव एव भवद्भिः प्रतिपादित इति तद्विरोधात् । तस्माद्ज्ञानप्रागभावनिवृत्तिरपि कैवल्यं प्राप्तस्यैवेत्यलं शाखाचंक्रमणेन । तस्माद्व्यावहारिकसत्यस्याज्ञानस्य निवृत्तिर्व्यावहारिकसत्यात्प्रमाणज्ञानाद्भवति- यथा व्यावहारिकसत्याग्निनिवृत्तिर्व्यावहारिकसत्यजलादिति ॥

## चिद्रूपस्य ब्रह्मणः अज्ञानेन स्वरूपतिरस्कृत्यभावनिरूपणम् ।

**अथ यदुक्तं** स्वानुभवस्वरूपस्य ब्रह्मणः स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनायोगात् अतिरस्कृतस्वरूपस्यैवासाक्षित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यादिति, **तदसत्**—अज्ञानानुपहितस्य अज्ञानावृतस्य च ब्रह्मणः साक्षित्वायोगः- अज्ञानोपहितमज्ञानानावृतं तु प्रत्यग्रूपं ब्रह्म साक्ष्येवेति । सच सर्वावभासकः प्रत्यगात्मा अनुभवरूप एव- अनुभवेनैव सर्वस्य भास्यमानत्वात्- स्वानुभवेत्यत्र स्वपदं तु प्रागेव **प्रत्युक्तम्** । **अथ यदुक्तं** अपिच अविद्यया ब्रह्मणि तिरोहिते तद्ब्रह्म न किञ्चिदपि प्रकाशते ? उत किंचित्प्रकाशते ? आद्ये- प्रकाशमात्रस्वरूपस्य ब्रह्मणो प्रकाशे तुच्छतापत्तिरसकृदुक्ता । द्वितीये-- सच्चिदानन्दैकरसे ब्रह्मणि कोयमंशस्तिरस्क्रियते, को वा प्रकाशते, निरंशे निर्विशेषे प्रकाशमात्रे वस्तुन्याकारद्वयासम्भवेन तिरस्कारः प्रकाशस्य युगपन्न सङ्गच्छेते इति, **तदप्यसत्**—ब्रह्म प्रकाशते न वेति विकल्प एव तावद्दुष्करः- प्रकाशरूपत्वाद्ब्रह्मणः । नह्यनुन्मत्तः कोपि प्रकाशः प्रकाशते वा नवेति विकल्पयति, तथा निर्विशेषं ब्रह्म अज्ञानावृतं सत्किञ्चिदपि प्रकाशते नवेति विकल्पोप्ययुक्तः, निर्विशेषस्याज्ञानावृतत्वस्यैवासम्भवात् । निर्विशेषं ब्रह्माज्ञानावृतमिति हि विप्रतिषिद्धम् । तथा निरंशे ब्रह्मणि कोंशस्तिरस्कृतः, कश्चांशः प्रकाशते इति विकल्पनमप्ययुक्तं- ब्रह्मणो निरंशत्वादेव । नहि निरंशं निर्विशेषं प्रकाशमात्रं च ब्रह्माज्ञानावृतमित्यस्माभिरुक्तं, येन त्वमेवमस्मान् प्रष्टुमर्हसि, परं तु यावद्व्यवहारं सविशेषमेव । ब्रह्म साज्ञानत्वाद्वस्तुतस्तु निर्विशेषमज्ञानाभावादित्युक्तम् । सविशेषस्य च ब्रह्मणः कचित्कस्यचिद्विशेषस्य प्रकाशः कस्यचित्तिरस्कारश्च भवेतां युगपदेव । यदा यस्य विशेषस्य

ब्रह्मविष्णुरुद्रनामकत्रिमूर्तिनिवासस्थानम् । तद्गतस्यापुनरावृत्तिस्तु ज्ञानात्कैवल्यप्राप्तौ सत्येव, यथास्मिन् लोके विदुषः । अतएवापुनरावृत्तिश्शब्दादिति स्मर्यते- सर्वाहि गतिरागतिफलितैव । नचैवं ब्रह्म प्राप्तोपि पुनरावर्ततेति वाच्यं, सर्वव्यापिनो ब्रह्मणस्सकाशादागत्ययोगात् । नचैवं ब्रह्मप्राप्तिरपि दुर्वचैवेति वाच्यं, इष्टापत्तेः । अज्ञानादप्राप्तमिव स्थितं ब्रह्मज्ञानात्प्राप्तमिव भवतीति मुख्यप्राप्त्यभावात् । अतएव ज्ञाना-त्प्राप्यमाणस्य कैवल्यस्य नानित्यत्वदोषः- कैवल्यसत्त्वे प्रमाणादीनि च दर्शितानि ।

**यद्यपि** त्वदुक्तविधया वैकुण्ठप्रापकं कर्मैव, तथापि न तत्प्राप्तिर्मुक्तिः- अज्ञानान्मुक्तेरेव मुक्तित्वा-द्वैकुण्ठे च शुद्धप्रकृतिरूपाज्ञानसत्त्वात्तन्निवृत्तेः कर्मणाऽजातत्वादिति । नच ज्ञानाभाव एवाज्ञानं, स वैकुण्ठे नास्तीति वाच्यं, किं वैकुण्ठगतानां लक्ष्मीविष्णुगरुडादिविषयकविशेषज्ञानानि सन्ति उत न ? आद्ये तत्तद्ज्ञानप्रागभावाभावे कथं तत्तद्ज्ञानोदयसिद्धिः । नच तानि नित्यज्ञानानीति वाच्यं, युगपदेकस्मिन्नेव पुरुषे नानाविषयकज्ञानस्थित्ययोगात् । ईश्वरेपि तादृशनित्यज्ञानसत्त्वस्य विप्रतिपन्न-त्वात् । नच ज्ञानसंकोचरूपज्ञानप्रागभावोस्ति मुक्ताविति वाच्यं, ज्ञानसंकोचस्य मुक्तावभाव एव भवद्भिः प्रतिपादित इति तद्विरोधात् । तस्माद्ज्ञानप्रागभावनिवृत्तिरपि कैवल्यं प्राप्तस्यैवेत्यलं शाखाचंक्रमणेन । तस्माद्व्यावहारिकसत्यस्याज्ञानस्य निवृत्तिर्व्यावहारिकसत्यात्प्रमाणज्ञानाद्भवति- यथा व्यावहारिकसत्याग्नि-निवृत्तिर्व्यावहारिकसत्यजलादिति ॥

## चिद्रूपस्य ब्रह्मणः अज्ञानेन स्वरूपतिरस्कृत्यभावनिरूपणम् ।

**अथ यदुक्तं** स्वानुभवस्वरूपस्य ब्रह्मणः स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनायोगात् अतिर-स्कृतस्वरूपस्यैवासाक्षित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यादिति, **तदसत्**—अज्ञानानुपहितस्य अज्ञानावृतस्य च ब्रह्मणः साक्षित्वायोगः- अज्ञानोपहितमज्ञानानावृतं तु प्रत्यग्रूपं ब्रह्म साक्ष्येवेति । सच सर्वावभासकः प्रत्यगात्मा अनुभवरूप एव- अनुभवेनैव सर्वस्य भास्यमानत्वात्- स्वानुभवेत्यत्र स्वपदं तु प्रागेव **प्रत्युक्तम्** । **अथ यदुक्तं** अपिच अविद्यया ब्रह्मणि तिरोहिते तद्ब्रह्म न किञ्चिदपि प्रकाशते ? उत किंचित्प्रकाशते ? आद्ये- प्रकाशमात्रस्वरूपस्य ब्रह्मणो प्रकाशे तुच्छतापत्तिरसकृदुक्ता । द्वितीये-- सच्चिदानन्दैकरसे ब्रह्मणि कोयमंशस्तिरस्क्रियते, को वा प्रकाशते, निरंशे निर्विशेषे प्रकाशमात्रे वस्तु-न्याकारद्वयासम्भवेन तिरस्कारः प्रकाशस्य युगपन्न सङ्गच्छेते इति, **तदप्यसत्**—ब्रह्म प्रकाशते न वेति विकल्प एव तावद्दुष्करः- प्रकाशरूपत्वाद्ब्रह्मणः । नह्यनुन्मत्तः कोपि प्रकाशः प्रकाशते वा नवेति विकल्पयति, तथा निर्विशेषं ब्रह्म अज्ञानावृतं सत्किञ्चिदपि प्रकाशते नवेति विकल्पोप्ययुक्तः, निर्वि-शेषस्याज्ञानावृतत्वस्यैवासम्भवात् । निर्विशेषं ब्रह्माज्ञानावृतमिति हि विप्रतिषिद्धम् । तथा निरंशे ब्रह्मणि कोंशस्तिरस्कृतः, कश्चांशः प्रकाशते इति विकल्पनमप्ययुक्तं- ब्रह्मणो निरंशत्वादेव । नहि निरंशं निर्विशेषं प्रकाशमात्रं च ब्रह्माज्ञानावृतमित्यस्माभिरुक्तं, येन त्वमेवमस्मान् प्रष्टुमर्हसि, परं तु यावद्व्यवहारं सविशेषमेव । ब्रह्म साज्ञानत्वाद्वस्तुतस्तु निर्विशेषमज्ञानाभावादित्युक्तम् । सविशेषस्य च ब्रह्मणः कचित्कस्यचिद्विशेषस्य प्रकाशः कस्यचित्तिरस्कारश्च भवेतां युगपदेव । यदा यस्य विशेषस्य

अपरमार्थयोरपि दोषदोषाश्रयत्वयोस्सतोरेव भ्रमोपपत्तिरिति कृत्वा दोषदोषाश्रयत्वाभाववदधिष्ठानाभावेपि भ्रम उपपद्यत इति वक्तुं न शक्यते । नच पारमार्थिकाधिष्ठानाभावेपि भ्रमस्सम्भवति- पारमार्थिकदोष-दोषाश्रयत्वाभाववदिति वदाम इति वाच्यं, इष्टापत्तेः- नहि वयमधिष्ठाने पारमार्थिके सत्येव भ्रमस्सम्भव-तीति ब्रूमः- अपारमार्थिकरज्ज्वाद्यधिष्ठाने सर्पविभ्रमोदयदर्शनात् । किं तु निरधिष्ठाना विभ्रान्तिर्न सिध्यतीति ब्रूमः- नहि रज्ज्वाद्यधिष्ठानाभावे सर्पादिभ्रमस्सम्भति, तस्मान्निरधिष्ठानभ्रमासम्भवस्सूपपाद एवास्माकम् ।

**ननु** सर्पाध्यासाधिष्ठानरज्जोरिव अज्ञानाध्यासाधिष्ठानब्रह्मणोप्यपारमार्थ्यमेव भवेदध्यासाधिष्ठा-नत्वाविशेषात् । ततश्च सर्वशून्यत्वमेव स्याद्ब्रह्मणा सह सर्वस्याप्यपरमार्थत्वेनासत्यत्वादिति, **मैवम्**— अधिष्ठानसत्तयैवारोप्यस्य सत्तालाभो नतु स्वतः- तथाचारोप्यस्य ज्ञानादेर्जगतः प्रतीयमाना सत्ता अज्ञानं सत्- जगत्सत्- जीवस्सन् ईश्वरस्सन्नित्येवंरूपा अधिष्ठानब्रह्म सत्तैव- ब्रह्मणश्च सा सत्ता स्वाभाविकी-- ब्रह्मणोन्यत्राध्यस्तत्वस्याश्रवणात् , अनवस्थादोषेणासम्भवाच्च । तस्मादधिष्ठानस्य ब्रह्मणः पारमार्थिकस्य सद्रूपस्य परिशेषान्न सर्वशून्यत्वप्रसङ्गः । नच शून्यमेवाज्ञानादेरधिष्ठानमस्त्विति वाच्यं, शून्यस्य शश-शृङ्गादेः कमप्यध्यासं प्रत्यधिष्ठानत्वादर्शनात् , अधिष्ठानत्वस्य भावधर्मत्वाच्छून्यस्य चाभावरूपत्वादिति । यद्यसद्रूपं शून्यमेवाधिष्ठानं भवेत्तर्हि असदित्येवाध्यस्तं प्रतीयेत, नतु सदिति । नचाधिष्ठानस्यासत्त्वे-प्यध्यस्तं सद्भवेदिति वाच्यं, तथा लोकेऽदर्शनात् । नचाध्यस्तस्य मिथ्यात्वमपि लोके न दृष्टमिति वाच्यं, रज्जुसर्पादेरध्यस्तस्य मिथ्यात्वं सम्प्रतिपन्नमेवेति । नच सन् सर्प इति प्रतीयमानस्य रज्जुसर्पस्य कथं मिथ्यात्वमिति वाच्य, नायं सर्प इति ज्ञानेन तस्य बाधसद्भावादेवेति । नचैवं जगतो ज्ञानेन बाधा-दर्शनात्कथं मिथ्यात्वमिति वाच्यं, अद्वैतब्रह्मसाक्षात्कारेण जगद्बाधदर्शनात् । तथा च श्रुतं- 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये'दिति । समाधौ विदुषामनुभवसिद्धोह्ययमर्थः । तस्माद्विद्यादशायां ब्रह्मण एकस्यैव सत्त्वात्तद्भिन्नस्याभावाच्च, ब्रह्मैकमेव पारमार्थिकं सदिति न शून्यवादसिद्धिः, नापि द्वैतवादसिद्धिः ।

**यदत्रोक्तं सुदर्शनेन**— दोषदोषाश्रयत्वयोरपारमार्थ्ये न भ्रमोपपत्तिरिति, **तदसत्**— रज्जुसर्पादौ तयोरपारमार्थ्येपि भ्रमदर्शनात्- नहि रज्जुसर्पजनकाविद्यादिदोषाः परमार्थाः । नचाधिष्ठानमप्यपरमार्थ एवेति वाच्यं, रज्जुमात्रं न सर्पाध्यासाधिष्ठानं, किंतु रज्ज्ववच्छिन्नं चैतन्यम् । तत्र विशेषणस्यापार-मार्थ्येपि विशेष्यं परमार्थ एवेति कृत्वा सर्वत्राप्यध्यासेष्वधिष्ठानं परमार्थ एवेति- चैतन्यस्यैवाधिष्ठानत्वात् । तच्च सर्पाध्यासाधिष्ठानं चैतन्यमज्ञानोपहितमेव- निर्विशेषस्याधिष्ठानत्वायोगात् । तस्माज्जगद्रूपकार्याध्यासा-न्यथानुपपत्त्यापि साज्ञानमधिष्ठानं ब्रह्म सिद्धमित्यज्ञानस्य **भावरूपस्य सिद्धिः ।**

## 'न किंचिदवेदिष'मिति सुप्तोत्थितपरामर्शादपि भावरूपाज्ञानसिद्धिरिति निरूपणम् ।

**किंच** सुप्तोत्थितस्य न किंञ्चिदवेदिषमिति परामर्शादपि भावरूपाज्ञानसिद्धिः- तथाहि- अवेदिष-मिति भूते लुङ्प्रयोगान्नेदं ज्ञानमनुभवः, किं तु अद्राक्षमिति वत्स्मरणमेव- स्मरणेचानुभूत एवार्थो विषयो भवति, नत्वननुभूतः- अनुभवजन्यसंस्कारजन्यत्वनियमात्स्मृतेः । नचानुभूतोर्थोऽज्ञानं भावरूपमेव

तस्यैव स्मर्यमाणत्वात् । नच ज्ञानाभाव एवेति वाच्यं, अज्ञानानुभवरूपज्ञानसत्त्वेन ज्ञानाभावस्थित्ययोगात् । नचाज्ञाने सत्यपि ज्ञानस्थितिरयुक्तेति वाच्यं, किं चैतन्यरूपज्ञानस्थितिरयुक्ता ? यद्वा वृत्तिरूपज्ञानस्थितिः ? नाद्यः- चैतन्याज्ञानयोरविरोधस्योक्तत्वात् । द्वितीये- किमविद्यावृत्तिस्थितिरयुक्ता ? यद्वा अन्तःकरणवृत्तिस्थितिः ? नाद्य.- अविद्यावृत्त्यविद्ययोरविरोधात् । द्वितीये- किमन्तःकरणस्य प्रत्यगभिन्नब्रह्माकारावृत्तिर्न स्थातुमर्हा ? यद्वा अज्ञानाकारा ? उत अज्ञानजन्ययत्किञ्चिद्विषयाकारा ? नाद्यः— तद्वृत्तौ सत्यामज्ञानमेव न स्थातुमर्हमिति । न द्वितीयतृतीयावविरोधात् । सुप्तौ चान्तःकरणवृत्तिर्नास्त्येव । अविद्यावृत्तिरेवास्ति तस्याश्चाज्ञाने सत्येव स्थितिर्युक्तेति । अज्ञानस्य चानुभविता तदवच्छिन्नः प्राज्ञएव, प्राज्ञस्य चोपाधिरन्त.करणसंस्कारविशिष्टमज्ञानं, सच संस्कारात्मतां विहाय पुनः स्वस्वभावं प्राप्तेनान्तःकरणेन विशिष्टमज्ञानमुपाधीकृत्य विश्वस्सन् सुप्तौ स्वानुभूतमज्ञानं स्मरतीति न स्मरणानुपपत्ति । सौषुप्तिकाज्ञानानुभवस्य निर्विकल्पकत्वं च तदा त्रिपुट्या स्फुटमप्रतिभानादेव । वस्तुतो निर्विकल्पकं ज्ञानं चैतन्यमेवेति प्रागेवोक्तम् । **एतेन** निर्विकल्पकस्य कथं प्रतिसन्धान**मित्यपास्तम्** ।

**ननु** सुप्तौ अज्ञानविषयकं ज्ञानमिव ज्ञानाभावविषयकं ज्ञानमपि सम्भवति, विशेषज्ञानाभावविषयकसामान्यज्ञानसम्भवादिति, **मैवम्**—विशेषज्ञानाभावस्य ज्ञानविशेषरूपप्रतियोगिसापेक्षत्वात्प्रतियोगिनश्च सुप्तौ सत्त्वे सुप्तिव्याघातादिति । नचैवमज्ञानमपि प्रतियोगिसापेक्षमिति वाच्यं, घटादिविशेषाज्ञानस्य प्रतियोगिसापेक्षत्वेपि अज्ञानसामान्यस्यातथात्वात् । **यदुक्तं सुदर्शनेन**—अज्ञानस्य ज्ञानान्यत्वाद्ज्ञानसापेक्षत्वमिति, **तत्प्रागेव प्रत्युक्तम्**-- अज्ञानशब्दव्युत्पत्तेर्ज्ञानसापेक्षत्वेपि तदर्थस्य न तदिति । तस्मात्र किञ्चिदवेदिषमिति स्मरणादपि भावरूपाज्ञानसिद्धिः । **यदत्रोक्तं सुदर्शनेन**—न किञ्चिदवेदिषमिति ज्ञानं न स्मरणं, किं तु अस्मरणलिङ्गकं ज्ञानाभावविषयमनुमितिरूपम् । नचास्मरणस्याननुभवव्याप्यत्वाभावात्पथि गच्छता स्पृष्टतृणाद्यस्मरणे न व्यभिचार इति वाच्यं, अन्यव्यासङ्गादिसंस्कारविरोध्यभावविशेषितस्यास्मरणस्य व्यभिचाराभावात्- 'तदन्यधीरतात्पर्यं पटुत्वविरहो धियः । दु.खातितीव्रमुन्मादो नाभ्यासो दीर्घकालता ॥ एतैश्चादृष्टवैगुण्यं कल्प्यं संस्काररोधिषु । एतेष्वसत्स्वस्मरणाद्ज्ञानाभावोऽनुमीयते ॥' इति, **नैतद्युक्तम्**—घटमहमद्राक्षमित्यस्येव न किञ्चिदहमवेदिषमित्यस्य च ज्ञानस्यानुमितिरूपत्वाभावात् । व्याप्तिज्ञानजन्यं ज्ञानं ह्यनुभवः- नात्र किञ्चिद्व्याप्तिज्ञानं दृश्यते स्मर्यते वा, नहि सुप्तोत्थितः सुप्तौ मम यस्य कस्यापि विषयस्यानुभवो नासीदस्मरणादित्यनुमिनोति, किं तर्हि न किञ्चिदवेदिषमित्येव प्रत्येति । नच सुप्तोत्थितो स्मरणाल्लिङ्गादेव सुप्तौ न किञ्चिदहमवेदिषमिति प्रत्येतीति कृत्वा अनुमितिरेवेयमिति वाच्यं, अनुभूतस्यैव संस्कारविरोधिसत्त्वादस्मरणं, नत्वननुभूतस्येति नियमासिद्ध्या अस्मरणस्यानुमितिलिङ्गत्वाभावात् । नच संस्कारविरोध्यभावविशेषितमस्मरणमनुभूतस्यैवेति वाच्यं, अननुभूतस्याप्यर्थस्य संस्कारविरोध्यभावविशेषितमस्मरणमस्त्येवेति । नचाननुभूतार्थस्य संस्कारस्यैवाभावो न तु संस्कारविरोध्यभाव इति वाच्यं, संस्कारस्यैवाभावे कुतः पुनस्तद्विरोध्यभावाभाव इति । भवतुनाम अनुभूतस्यैवास्मरणं स्मरणजनकस्यानुभवजन्यस्य संस्कारस्य व्यासङ्गादिना

प्रतिबद्धत्वात्तथापि न तवेष्टसिद्धिः- ज्ञानं नासीदित्यनुमितिगम्यस्य ज्ञानाभावानुभवस्य सुप्तौ सत्त्वात् । तदभावे ज्ञानाभावस्याननुभूतत्वादेवास्मरणमिति कृत्वा अस्मरणलिङ्गेन ज्ञानाभावोऽनुमातुमशक्य एव । ज्ञानाभावानुभवस्य सत्त्वाभ्युपगमे तु न सुप्तौ ज्ञानाभावसिद्धिः- ज्ञानाभावानुभवस्य ज्ञानत्वात् । नच सुप्तौ सामान्यज्ञानसत्त्वेपि विशेषज्ञानस्यासत्त्वाद्विशेषज्ञानाभावोऽनुभूतोस्त्येवेति वाच्यं, किं सर्वेषां विशेषज्ञानानां प्रागभावास्सर्वेपि सुप्तावनुभूताः ? उत कतिपयविशेषज्ञानप्रागभावा एव ? नाद्यः- असर्वज्ञस्य जीवस्य सर्वानुभवायोगात् । द्वितीये- के ते कतिपये ? यानि विशेषज्ञानानि यस्य जीवस्य भवितुमर्हन्ति भूतपूर्वाणि च तस्य जीवस्य तेषां प्रागभावाः कतिपये इतिचेत्तर्हि विविधप्रागभावगोचराणि तानि विशेषज्ञानान्येवेति कथं सुप्तौ विशेषज्ञानाभावोऽनुमातुं शक्यते । किं च सुप्तौ विशेषज्ञानप्रागभावा एव सन्तीति कथं वक्तुं शक्यते । विशेषज्ञानप्रध्वंसाभावाश्च सन्त्येव- प्रध्वंसाभावाः खलु नित्याः । एवं विविधप्रध्वंसाभावगोचराण्यपि विशेषज्ञानानि सुप्तौ सन्ति । एवं ज्ञानप्रागभावज्ञानप्रध्वंसाभावविषयनानाविधविशेषज्ञानसत्त्वे सुप्तेरेव व्याघातः- सर्वेषामप्यभावानामभावत्वादेकत्वमितिचेत्तर्हि सर्वेषां ज्ञानानां ज्ञानत्वादेकत्वं किं न स्यात्, यदि ज्ञानाभावसत्त्वेपि न तद्विषयज्ञानसत्त्वमित्युच्यते तर्हि ज्ञानाभावस्यासत्त्वमेव भवेत् । नह्यज्ञायमानं वस्तु अस्तीति प्रतिपत्तुं शक्यं, तथासति शशशृङ्गमप्यस्तीति प्रतिपत्तुं शक्येत । किंच जाग्रत्यपि प्रागभावस्य कार्यलिङ्गगम्यत्वेनानुभावाविषयत्वे कथं सुषुप्तौ ज्ञानप्रागभावानुभवस्स्यात् । अनुभूतस्य हि ज्ञानाभावस्यास्मरणलिङ्गेनानुमितिस्सम्भवतीत्युक्तम् । नच ज्ञानप्रध्वंसाभावो जाग्रत्यनुभवविषय एवेति कृत्वा स एव सुषुप्तावनुभूत इत्युच्यत इति वाच्यं, जाग्रति मम घटज्ञानं नष्टमिति प्रतीत्या ज्ञानप्रध्वंसस्यानुभूतत्वं वक्तुं शक्यतां नाम सुषुप्तौ तु तादृशप्रतीत्यभावात्तत्सत्त्वे सुषुप्तिव्याघातान्न ज्ञानप्रध्वंसाभावोऽनुभूत इति वक्तुं शक्यते । नच ज्ञानं नष्टमिति सामान्यप्रतीतिरस्तीति वाच्यं, ज्ञानं नष्टमिति ज्ञानस्यापि सत्त्वे सुषुप्तौ ज्ञानाभावासिद्धेः । तस्मादस्मरणात्सुप्तौ ज्ञानाभावोऽनुमातुं न शक्यते ।

**ननु** तर्हि सुप्त्यपगमक्षणोदितज्ञानरूपकार्यलिङ्गेन सुप्तौ ज्ञानाभावोऽनुमीयते, नतु सुप्तावनुभूत इत्युच्यते, अनुभवित्रनुभाव्यानुभवरूपत्रिपुटीसत्त्वे सुप्तिव्याघातादिति । **नैतदपि युक्तम्**—न किंचिदवेदिषमिति ज्ञानेन सुप्त्यपगमक्षणोदितेन कार्येण लिङ्गेन तद्ज्ञानप्रागभावोऽनुमीयतांनाम कथंपुनस्सर्वेषां ज्ञानानां प्रागभावानुमानमिति । किंच न किंचिदहं जानामीत्येव ज्ञानमुदेतुमर्हं नत्ववेदिषमिति- अनुभवस्य तत्कालीनत्वेन भूतकालवाचिधातुप्रयोगायोगात् । तस्मात्सुप्तावज्ञानानुभवोस्ति- स एवोत्थितेन प्रत्यभिज्ञायते न किंचिदवेदिषमित्येवमवश्यमभ्युपेयमकामेनापि गत्यन्तराभावात् । नच सुप्तावनुभवसत्त्वे सुप्तिव्याघात इति वाच्यं, सुखाज्ञानातिरिक्तविषयानुभवसत्त्व एव सुप्तिव्याघातः, नतु सुखाकाराज्ञानाकारसामान्यानुभवसत्त्व इति । किंच अनुभवितुरहङ्कारस्य सत्त्व एव सुप्तिव्याघातो नतु प्राज्ञस्य सत्त्वे । नच प्राज्ञोप्यनुभवितैवेति वाच्यं, अनुभवितैव प्राज्ञः परंतु न तस्याहंग्रहः । अत एवाहमज्ञानमनुभवामीत्यनुभवसमये प्रतीत्यभावः । **एतेनानुभवसमये** एवाविदितस्याज्ञानस्य कथं स्मरणमिति **प्रत्युक्तम्** । तस्मा-

स्सुषुप्तौ प्राज्ञेनानुभूतत्वादेवाज्ञानस्य सुप्त्यपगमे विश्वेन न किंचिदवेदिषमिति स्मरणोपपत्तिः- अननुभूतार्थस्य स्मरणायोगात्, ज्ञानाभावस्यानुभूतत्वानुपपत्त्या स्मरणायोगाच्चेति सिद्धमनुभवबलाद्भावरूपमज्ञानम् ॥

## भावरूपाज्ञाने अनुमानस्यापि प्रमाणत्वोपपादनम् ।

न केवलमनुभवादेव, किंतु अनुमानादपि भावरूपमज्ञानं सिध्यत्येव तथाहि- प्रमाणज्ञानं स्वविषयावरणस्वनिवर्त्यवस्त्वन्तरपूर्वकं- अप्रकाशितार्थप्रकाशकत्वादन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति । नचैतदनुमानेनाज्ञानस्य न सिद्धिः, किंतु प्रागभावस्यैवेति वाच्यं, प्रागभावस्य परपरिकल्पितस्य विषयावारकत्वायोगात्, अभावत्वेन शशशृङ्गवदवस्तुत्वाच्च इति । ननु दुष्टमिदमनुमानं- अज्ञानेप्यनभिमताज्ञानान्तरसाधनेन विरुद्धत्वाद्धेतोः । तत्राज्ञानान्तरासाधने हेतोरनैकान्त्यं, साधने च तदज्ञानमज्ञानसाक्षित्वं निवारयति- ततश्चाज्ञानकल्पना निष्फला स्यात् । दृष्टान्तश्च साधनविकलः- दीपप्रभाया अप्रकाशितार्थप्रकाशकत्वाभावात्- सर्वत्र ज्ञानस्यैव हि प्रकाशकत्वमिति, **मैवम्**—अज्ञानेनावृतत्वादन्धकारेणेव घटो न प्रकाशते । दीपेनान्धकारस्येव ज्ञानेनाज्ञानस्य नाशे सति तु प्रकाशते । अज्ञानं तु नैवं केनचिदावृतत्वान्न प्रकाशते, किंतु स्वाभाविक एव तस्याप्रकाशः । यथा अन्धकारोऽन्येनावृतोपि स्वत एव न प्रकाशते- नहि घटोऽन्धकारेणेवान्धकारोऽन्येनावृत इति वक्तुं शक्यते । यद्यप्यन्धकारोप्यज्ञानेनावृत एव तथापि लोकदृष्ट्येदमुक्तमिति बोध्यम् । किंच चैतन्याज्ञानयोरविरोधेपि प्रमाणज्ञानाज्ञानयोर्विरोधात्प्रमाणज्ञानमज्ञानप्रकाशकमित्यप्ययुक्तम् । यदि प्रमाणज्ञानमप्रकाशिताज्ञानप्रकाशकं स्यात्तर्हि तदज्ञानावरणमज्ञानान्तरं कल्प्येत । किंतु प्रमाणज्ञानमज्ञाननाशकमेव । पूर्वं दर्शितोऽज्ञानानुभवस्तु अविद्यावृत्तिज्ञानकृत एव । अहमज्ञ इत्यनुभवोपि अविद्यावृत्तिकृत एव । यद्वा अविद्याकारपरिणतान्तःकरणवृत्तिकृतो भवतु, तथाप्यप्रमाणज्ञानमेव । अत एव न तस्मादज्ञाननिवृत्तिः । नह्यज्ञानस्य निवृत्तावहमज्ञ इति प्रतीतिरुपपद्येत । तस्मात् प्रदीपप्रभयान्धकारदर्शनमिव प्रमाणज्ञानान्नाज्ञानानुभवस्सम्भवति । किंतु यथान्धकाराकारपरिणतचक्षुर्वृत्त्या अन्धकारानुभवः, तथा अज्ञानाकारपरिणताविद्यावृत्त्याऽज्ञानानुभवः । **एतेनान्धकारः** प्रभां विना यथा चक्षुषैव भास्यते, तथाऽज्ञानमपि प्रमाणज्ञानं विना साक्षिणैव भास्यत इति **सिद्धम्** । नचैवमप्रकाशितार्थप्रकाशकत्वादिति हेतुस्साक्षिण्यतिव्याप्तमिति वाच्यं, भास्यत्वे सतीति हेतोर्विशेषणात् । नचान्धकारेन भास्यत्वमिति वाच्यं, ज्ञेयत्वादन्धकारस्य । नच साक्ष्यपि प्रमाणज्ञानेन वेद्यत इति वाच्यं, स्वयम्भानरूपस्य साक्षिणो भास्यत्वायोगात् । नच प्रमाणज्ञानमप्यभास्यमेवेति वाच्यं, तस्य साक्षिभास्यत्वादिति । यद्वा विशेषतो प्रकाशितार्थप्रकाशकत्वादिति हेतुर्विवक्षितं, साक्षी हि सर्वं सामान्यतोऽवभासयति । नच दृष्टान्ते हेत्वनन्वयः- अन्धकारस्थघटस्यापि सामान्येन साक्षिणा भासितत्वात् । वस्तुतस्तु अप्रकाशितार्थस्यैव प्रकाशकत्वमिति हेत्वर्थः । तथाच प्रकाशितार्थस्यापि प्रकाशके साक्षिणि नातिव्याप्तिः- ज्ञातमज्ञातमपि वस्तु साक्षिचैतन्यस्य विषयो हि । नचाज्ञातमपि साक्षिचैतन्यप्रकाशितमेव वस्तु प्रकाशयति प्रमाणज्ञानमिति वाच्यं, ज्ञातत्वस्यैवेह प्रकाशितत्वेन विवक्षितत्वात् । एवं प्रकाशकत्वमपि ज्ञानजनकत्वमेवेति कृत्वा अज्ञातार्थज्ञापकत्वस्य चैतन्येऽसत्त्वान्न तत्र हेतोरतिव्याप्तिः ।

नच दृष्टान्तस्साधनविकल इति वाच्यं, तत्रापि प्रमाणज्ञानजननद्वारा अज्ञातार्थज्ञापकत्वस्य सत्त्वात् । तथाहि प्रमाणज्ञानं प्रमेयं प्रकाशयतीति सम्प्रतिपन्नम् । तत्र किं प्रमाणज्ञानं? कोवा तत्कृतः प्रमेयप्रकाशः? इति विवेचनीयम्- प्रमाकरणं प्रमाणमिति सम्प्रतिपन्नं-तत्र किं प्रमाणं च तद्ज्ञानं प्रमाणज्ञानं ? किं वा प्रमाणजन्यं ज्ञानं प्रमाणज्ञानम् । प्रकाशश्च किं धात्वर्थवाच्या क्रिया? यद्वा फलमिति विचारबीजं संशयः-- तत्र प्रमाणं च तद्ज्ञानमिति पक्षे आलोकस्थस्य घटस्य चक्षुस्सन्निकर्षे सति चक्षुरिन्द्रियद्वारा बहिर्निर्गता साभासा यान्तःकरणवृत्तिस्सा प्रमाणज्ञानमित्युच्यते । प्रमाणजन्यं ज्ञानमिति पक्षे तु प्रदीपचक्षुरादिसहकृत-मन्तःकरणं प्रमाणं, तत्परिणामत्वेन तज्जन्यावृत्तिः प्रमाणज्ञानम् । पक्षद्वयेपि चक्षुरादिवत्प्रदीपप्रभाया अपि ज्ञानसाधनत्वमस्त्येव- प्रकाशश्च फलमेव- दर्शितान्तःकरणवृत्तेरेव क्रियात्वादिति निर्णयः । तस्मादन्ध-कारस्याप्यज्ञातार्थज्ञापकत्वमस्त्येव । नचैवं ज्ञानस्यार्थप्रकाशकत्वे ज्ञानद्वाराऽर्थप्रकाशकस्यैव प्रदीपस्य दृष्टान्ततयोपन्यसनमयुक्तमिति वाच्यं, दृष्टान्तान्तरस्याभावात्- आलोकादेवास्माकं घटादिपदार्थज्ञानं जायत इति लोकप्रसिद्धेश्च । अतएव 'यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥' इति गीतं भगवता । नहि सूर्यकृतो लोकस्य प्रकाशोनाम प्रज्वलनं गृहादे-रग्निकृत इव प्रकाशः, किं तु ज्ञानमेव- सूर्ये उदिते हि सर्वो लोकः स्वं स्वं व्यवहारमनुतिष्ठति, अयं घटोयं पट इति प्रत्येति । तस्माद्व्यवहारजनकत्वमेव सूर्यस्य प्रकाशकत्वम् । **एतेन** प्रदीपस्य प्रकाश-कत्वं गीताप्रसिद्धमिति नात्र कुचोद्यावकाश इति **सिद्धम्** ।

**यदुक्तं** अज्ञानान्तरेणावृतं तदज्ञानमावृतत्वाद्ब्रह्मणा न साक्षात्क्रियत इति, ब्रह्मणोऽज्ञानसाक्षित्वं न स्यादिति **तत्प्रत्युक्तम्**—अज्ञानान्तरानभ्युपगमात् । अभ्युपगमेप्यज्ञानान्तरावृतमज्ञानं ब्रह्मणा भास्यत एवेति, न ब्रह्मणस्साक्षित्वभङ्गः- अज्ञानावृता हि घटादयस्साक्षिणा भास्यन्ते । अतएव घटो नास्ति न भातीति प्रतीतिः । एवमज्ञानान्तरावृतमप्यज्ञानं साक्षिणा भास्यतैवेति । तस्मात् अज्ञानावृतत्वेन हेतुना विशेषाकारेणानवभासमानं सर्वमप्यर्थजातं तदज्ञानावरणनिवारणद्वारा विशेषतः प्रकाशयति प्रमाणज्ञानम् । अन्धकारे विशेषाकारेणानवभासमानं सर्वमप्यर्थजातं तदन्धकारनिरसनद्वारा विशेषतः प्रकाशयति- प्रदीपप्रभा यथा तथेति निरवद्यमनुमानम् । नचान्धकारे सामान्यतोप्यर्था न भान्तीति वाच्यं, केचनार्था इह सन्तीत्यन्धकारेपि लोकस्य सामान्यज्ञानसत्त्वादिति ।

**अत्र रामानुजः**—दीपस्याप्रकाशितार्थप्रकाशकत्वाभावादिति वदन्नेव प्रकाशकज्ञानोत्पत्तौ व्याप्रि-यमाणचक्षुरिन्द्रियोपकारकहेतुत्वमपेक्ष्य दीपस्य प्रकाशकत्वव्यवहार, **इत्यवोचदित्यहो ! अस्य विप्र-लम्भकता**--यदपेक्ष्य त्वया दीपस्याप्रकाशितार्थप्रकाशकत्वमुच्यते, तदपेक्ष्य तस्य तत्सिद्धवत्कृत्य मया दीपो दृष्टान्ततयोपनिबद्ध इति ।

## अज्ञानं न चिद्रूपब्रह्माश्रयमपि तु ज्ञात्राश्रयमित्यादिरामानुजाभ्युपगतप्रतिप्रयोगदूषणम् ।

**अथ रामानुजदर्शिताः प्रतिप्रयोगा दूष्यन्ते**—तथाहि- विवादाध्यासितमज्ञानं न ज्ञानमात्र-ब्रह्माश्रयमज्ञानत्वाच्छुक्तिकाद्यज्ञानवद्ज्ञात्राश्रयं हि तदिति, **नैतद्युक्तम्**—शुक्तिकाद्यज्ञानस्यापि शुक्तिका-

त्रवच्छिन्नब्रह्माश्रयत्वेन दृष्टान्तासम्प्रतिपत्तेः । नचाज्ञानस्य ज्ञानाश्रयत्वविरोधः- तस्य परिहृतत्वात् । नच ज्ञात्राश्रयं शुक्तिकाऽज्ञानं- शुक्तिकाया अज्ञानं शुक्तिकाऽज्ञानमिति षष्ठीसमासवशादज्ञानाश्रयत्वं शुक्तिकाया एव न ज्ञातुरिति । नच शुक्त्यज्ञानंनाम शुक्तिज्ञानाभाव इति कृत्वा स ज्ञात्राश्रय एवेति वाच्यं, ज्ञानाभावोऽज्ञानमित्यस्य प्रत्युक्तत्वात् । नच नाहं शुक्तिं जानामीति प्रतीतेश्शुक्तिविषयं तदज्ञानं ज्ञात्राश्रयमेव- यथा शुक्तिमहं जानामीति ज्ञानस्य ज्ञात्राश्रयत्वं तद्वत्- ज्ञानाज्ञानयोर्हि समानविषयाश्रयत्वं नियममन्यथा बाध्यबाधकभावायोगादिति वाच्यं, प्रमेयावच्छिन्नब्रह्माश्रयमज्ञानं प्रमात्रवच्छिन्नब्रह्माश्रयं ज्ञानमिति कृत्वा ब्रह्मैव ज्ञानाज्ञानोभयाश्रितमिति । एतेन ज्ञात्राश्रयमज्ञानमिति पक्षेपि ज्ञात्रवच्छिन्नब्रह्माश्रयमेवेति कृत्वा सिद्धमेवाज्ञानस्य ब्रह्माश्रयत्वं- नाहं शुक्तिं जानामीति प्रतीतौ तु शुक्त्यज्ञानमेव विषयः, नहि शुक्तिविषयं तदज्ञानं- नाहं शुक्तिं जानामीति प्रतीतेर्ज्ञानत्वेनाज्ञानत्वायोगात्, तादृशप्रतीतिविषयत्वेन शुक्तेरज्ञानविषयत्वायोगाच्च । नच शुक्तिं जानामीति प्रतीताविव शुक्तिं न जानामीति प्रतीतावपि शुक्तिरेव विषयो न तु शुक्त्यज्ञानमिति वाच्यं, नञो वैयर्थ्यप्रसङ्गात् । यथा शुक्तिं जानामीति वाक्याच्छुक्तिज्ञानवानिति बोधस्तथा शुक्तिं न जानामीति वाक्याच्छुक्त्यज्ञानवानित्येव बोधस्सम्भवति । नच शुक्तिज्ञानाभाववानिति बोधो भवेदिति वाच्यं, ज्ञानाभावस्य प्रत्युक्तत्वादसकृत्प्राक् । तस्माच्छुक्त्यज्ञानं शुक्त्याश्रयमेव न ज्ञात्राश्रयम् । यथा देवदत्ताज्ञानं देवदत्ताश्रयमेव, न यज्ञदत्ताश्रयमिति ।

अथ अज्ञानं न ज्ञानमात्रब्रह्मावरणमज्ञानत्वाच्छुक्तिकाद्यज्ञानवत् विषयावरणं हि तत् , नैतदपि युक्तम्— दृष्टान्तासम्प्रतिपत्तेः- शुक्तिकाद्यज्ञानमपि न शुक्तिकाद्यावरणं जडे शुक्तिकादावावरणकृत्याभावेनावरणकल्पनस्य व्यर्थत्वात् । किं तर्हि शुक्तिकाद्यवच्छिन्नब्रह्मावरणमेव । नच विषयावरणस्याज्ञानस्य ब्रह्मावरणत्वमयुक्तमिति वाच्यं, अज्ञानावृतस्य ब्रह्मण एव विषयत्वात् । नच ज्ञानस्याज्ञानावरणमसम्भावितमिति वाच्यं, तयोरविरोधस्योक्तत्वादिति ।

अथ अज्ञानं न ज्ञाननिवर्त्यं ज्ञानविषयानावरणत्वात्- यत् ज्ञाननिवर्त्यमज्ञानं तत् ज्ञानविषयावरणं, यथा शुक्तिकाद्यज्ञानं, नैवम्—पक्षे हेत्वसिद्धेः- ज्ञानविषयस्य ज्ञेयस्याज्ञानेनावृतत्वात् । नापि दृष्टान्तसिद्धिः- पक्षविपक्षयोरैक्यात्- शुक्तिकाद्यज्ञानमप्यज्ञानं हि । नच ब्रह्माज्ञानं पक्ष इति वाच्यं, तस्य ब्रह्मावरकत्वाद्ब्रह्मणश्च ज्ञानविषयत्वादज्ञानविषयानावरणत्वं नास्त्यज्ञानस्येति हेत्वसिद्धिरेव पक्षे । नच ज्ञानमेव ब्रह्म न ज्ञानविषय इति वाच्यं, चैतन्यमपि ब्रह्म वृत्तिज्ञानविषय एवेति । नच चैतन्यमज्ञानानावृतमिति वाच्यं, चैतन्यं न भातीति प्रतीत्या तस्याप्यज्ञानावरणमस्तीत्युक्तत्वात् । अतएव ब्रह्मावरकाज्ञाननिवृत्त्यर्थं ब्रह्माकारान्तःकरणवृत्तिरूपप्रमाणज्ञानमावश्यकं, निवृत्तेत्वावरणे ब्रह्म स्वत एव भाति न त्वन्येन भास्यते- घटादिस्तु आवरणनिवृत्तावन्येन भास्यत इत्येतावान्विशेषः ।

अथ ब्रह्म नाज्ञानास्पदं ज्ञातृत्वविरहाद्घटादिवदिति, ब्रह्म नाज्ञानावरणं ज्ञानाविषयत्वात्- यदज्ञानावरणं तदज्ञानविषयभूतं यथा शुक्तिकादि, ब्रह्म न ज्ञाननिवर्त्याज्ञानं- ज्ञानाविषयत्वात्- यद्ज्ञान-

निवर्त्याज्ञानं तदज्ञानविषयभूतं- यथा शुक्तिकादि, इति **प्रयोगत्रयमप्ययुक्तम्**—घटादेर्ज्ञातृत्वविरहे सत्यपि जडत्वस्य सत्त्वादज्ञानानास्पदत्वं- घटाद्यवच्छिन्नं ब्रह्मैवाज्ञानास्पदं नतु घटादीत्युक्तत्वात् । तथाच सपक्षे साध्यं साधयितुं हेतोरपुष्कलत्वाद्दुष्टं प्रथमानुमानम् । ब्रह्माज्ञानास्पदं ज्ञातृत्वजडत्वविरहाद्व्यतिरेकेण घटादिवदिति प्रतिप्रयोगप्रहतं च ज्ञानविषयत्वं ब्रह्मणस्साधितमिति कृत्वा द्वितीयानुमानं पक्षे हेत्वसिद्ध्या दुष्टम् । तथैव तृतीयमपीति ।

अथ प्रमाणज्ञानं स्वप्रागभावातिरिक्ताज्ञानपूर्वकं न भवति प्रमाणज्ञानत्वात्- भवदभिमताज्ञानसाधनप्रमाणज्ञानवदिति, ज्ञानं न वस्तुनो विनाशकं शक्तिविशेषोपबृंहणविरहेसति ज्ञानत्वात्- यद्वस्तुनो विनाशकं तच्छक्तिविशेषोपबृंहितं ज्ञानमज्ञानं च दृष्टं- यथेश्वरयोगिप्रभृतिज्ञानं, यथा च मुद्गरादिभावरूपमज्ञानं न ज्ञानविनाश्यं भावरूपत्वाद्घटादिवदिति, **एतत्प्रयोगत्रयमप्यसत्**—आद्ये दृष्टान्तासम्प्रतिपत्तिः- प्रमाणज्ञानेनाज्ञानं साध्यत इत्यस्माभिरनुक्तत्वात् । ज्ञानप्रागभवस्य च त्वया मयाप्यनभ्युपगतत्वेन स्वप्रागभावातिरिक्तेति विशेषणमयुक्तम् । यदि ज्ञानसंकोचात्मकः प्रागभावो मयाभ्युपगत इत्युच्यते, तर्हि स च मयाभ्युपगत इति तद्विशेषणमयुक्तमेव । किंच प्रमाणज्ञानं प्रमाणज्ञानसंकोचपूर्वकं भवतीति दुर्वचम् । कथं तस्यैव ज्ञानस्य तद्ज्ञानसंकोच एव पूर्वः स्यात्- नह्यनुत्पन्नस्य ज्ञानस्य संकोचस्सम्भवति- उत्पन्नस्य हि पटादेस्संकोचो विकासो वा, नहि पटसंकोचपूर्वकः पट इति वक्तुं शक्यते। नापि ज्ञानं ज्ञानान्तरसंकोचपूर्वकमिति वाच्यं, स्वप्रागभावेपि स्वपदेन विशेषणात्, पटस्य पटान्तरसंकोचपूर्वकत्वादर्शनाच्च । नच पूर्वोत्पन्नस्य घटज्ञानस्य संकोचे सत्येव पश्चात्पटज्ञानमुत्पद्यत इति वाच्यं, पटज्ञाने जातेपि घटज्ञानं संकुचितं सत्तिष्ठतीत्यत्र मानाभावात्, वृत्तिज्ञानस्यास्थिरत्वाच्च । **ननु** प्रमाणज्ञानंनाम प्रमाणज्ञानविकासः, स च प्रमाणज्ञानसंकोचपूर्वको भवितुमर्हतीति, **मैवम्**—स च संकोचः किं सपूर्वः? उतापूर्वः? आद्ये किं विकाशपूर्वकः? उत संकोचपूर्वकः? विकासपूर्वक इति पक्षे स विकासः किं प्रथम एव? उत तद्भिन्नः? यदि प्रथमस्तर्हि अन्योन्याश्रयः, यदि तद्भिन्नस्तर्ह्यनवस्था । एवं संकोचपूर्वक इति पक्षेपि बोध्यम् । द्वितीये अनादेस्संकोचस्यानन्तत्वमेव भवेदिति न विकासोदयप्रसङ्गः । तस्मात्प्रमाणज्ञानं ज्ञानसंकोचपूर्वकं न भवत्येव ।

**यदुक्तम्**—ज्ञानं न वस्तुनो विनाशकमिति, **तदसत्**—रज्जुज्ञानस्य सर्पवस्तुविनाशकत्वदर्शनात् । नच तत्र सर्पो नास्त्येवेति वाच्यं, भ्रमसमये सर्पस्य सत्त्वात्, प्रबोधज्ञानस्य स्वप्नार्थविनाशकत्वदर्शनाच्च । स्वाप्नाः पदार्था ईश्वरेणैव निर्मितास्सत्या इति हि तव मतम् । नच ज्ञानं प्रतिभासिकवस्तुन एव नाशकं, नतु व्यावहारिकवस्तुन इति वदाम इति वाच्यं, स्वप्नसुषुप्तिसमाधिज्ञानानां व्यावहारिकवस्तुनाशकत्वस्यापि दर्शनात् । नच देवदत्ते सुप्ते समाहिते मृते मूर्छिते वा नाकाशादिप्रपञ्चस्य नाश इति वाच्यं, अन्यदृष्ट्याऽनाशेपि देवदत्तदृष्ट्या नाश एवेति । नच स एव सुप्तोत्थितः पुनस्तमेव प्रपञ्चं पश्यतीति वाच्यं, अन्य एवायं प्रपञ्चसादृश्यात्तु प्रत्यभिज्ञेति । तस्मादधिष्ठानज्ञानमारोप्यवस्तुविनाशकं भवति- अधिष्ठानज्ञानत्वाद्रज्ज्वधिष्ठानज्ञानवदिति प्रतिप्रयोगपराहतं द्वितीयानुमानम् । नच

पक्षसपक्षैक्यं- सपक्षातिरिक्तस्यैव पक्षत्वेन ग्रहणात्, सामान्यविशेषयोः पक्षसपक्षभावौचित्याच्च। नच स्वप्नपदार्थानामधिष्ठानज्ञानं विनैव नाशात्तत्राव्याप्तिरिति वाच्यं, तत्रापि स्वस्मिन्नेवाधिष्ठाने कल्पितानां स्वप्नार्थानां स्वज्ञानादेव निवृत्तिरिति। नच सुप्तोत्थितस्य नास्त्यात्मज्ञानमिति वाच्यं, ब्रह्माभिन्नात्मज्ञानाभावेपि ब्राह्मणत्वादिविशिष्टात्मज्ञानमस्त्येवेति- नहि स्वप्ने ब्राह्मणोहं, धनिकोहं, देवदत्तोहमिति यथार्थज्ञाने सति क्षत्रियोहं, दरिद्रोहं, यज्ञदत्तोहमित्यादिविपरीतज्ञानं भवितुमर्हति- तस्य चाध्यासस्य स्वप्ननिवृत्तौ पुनर्यथार्थज्ञानोदये निवृत्तिर्भवत्येवेति। नच भ्रममात्रमेव स्वप्ने न वस्तुस्थितिरिति वाच्यं, वस्तुस्थितिं विना भ्रमोदयायोगात्- स्वप्ने रथादीन् साक्षात्पश्यति हि पुरुषः। तस्मात् ब्राह्मणे धनिके देवदत्ते; स्वप्ने क्षत्रियो दरिद्रो यज्ञदत्तो जातो रज्जाविव सर्पः। नचात्र विस्मयः कार्यः- रथगजादिस्वाप्नप्रपञ्चस्य सर्वस्यापि तस्मिन्नेव जातत्वात्। नहि तदतिरिक्तं किञ्चिदधिष्ठानं तत्रास्ति। नचैवं स्वस्मिन्नेव सर्वस्मिन् जाते सर्वत्राप्यहम्बुद्धिस्स्यादिति वाच्यं, अहमाकारसंस्कारसचिवाविद्याकार्येष्वेवाहंबुद्धिरिदमाकारसंस्कारसचिवाविद्याकार्येषु त्विदम्बुद्धिरेवेति। तस्मादधिष्ठानज्ञानमेवारोप्यवस्तुनो निर्मूलमुन्मूलकम्। दण्डेन ताडितोपि रज्जुसर्पो न निर्मूलं नश्यति, किंतु मृत इव प्रतिभाति, एवमीश्वरेण नाशितोपि प्रपञ्चो न निर्मूलं नश्यति, किंतु सूक्ष्मरूपेणास्त्येव- अधिष्ठानरज्जुज्ञानेन तु सर्पस्य निर्मूलं नाशः। अधिष्ठानब्रह्मसाक्षात्कारेण तु प्रपञ्चस्य निर्मूलं नाश इति। अन्यथाख्यातिमतेपि वस्तुतो रज्जुरप्यज्ञानात्सर्पाकारेणेव वस्तुतो ब्रह्माप्यज्ञानाज्जगदाकारेण प्रतिभातीति कृत्वा रज्जुज्ञानमिव ब्रह्मज्ञानमेव सकार्यस्याज्ञानस्य नाशकमिति ज्ञानस्य न वस्तुविनाशकत्वानुपपत्तिः।

वस्तुतस्तु ज्ञानादज्ञानात्केवलाद्विशिष्टात्कर्मणो वा न वस्तुनो नाशस्सम्भवति- वस्तुनो नाशो हि विप्रतिषिद्धं- सत्यं हि वस्तु- यन्नश्यति तदवस्त्वेव- सत्यस्य नाशायोगात्। नच मुद्गरादिना घटादिवस्तुनाशो भवतीति वाच्यं, घटादेरवस्तुन एव मुद्गरादिना नाशो नतु वस्तुनो मृद्द्रव्यस्येति। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मिति हि श्रुतं- तदपि मृद्द्रव्यं परमार्थतोऽसदेवेत्यवस्त्वेव। अतएव तस्यापि ज्ञानान्नाशस्सम्भवति। नचेश्वरसङ्कल्पादेव भूतानां लय इति वाच्यं, स सङ्कल्पोपि ज्ञानादनतिरिक्त एवेति। तस्माद्ज्ञानमवस्तुनाशकं भवति- ज्ञानत्वाद्रज्जुज्ञानवदित्यनवद्यप्रत्यनुमानबाधितं द्वितीयानुमानम्। भावरूपमज्ञानं ज्ञाननिवर्त्यं- भावरूपत्वाद्रज्जुसर्पवदिति प्रत्यनुमानप्रतिक्षिप्तं तृतीयानुमानम्। नच दृष्टान्तासम्प्रतिपत्तिः- त्वदनुमानेपि साम्येवेति। ब्रह्मज्ञानात्सर्वस्यापि जगतो निवृत्तिरिति वदतो मम मते कथं तस्माद्घटाद्यनिवृत्तिः मृण्मात्रमेवेदमिति ज्ञानाद्वा कथं घटस्यानिवृत्तिः। वस्तुतस्तु न भावरूपमज्ञानं नाप्यभावरूपं, किं तु मिथ्यारूपमेव- भावत्वे ब्रह्मण इव निवृत्त्ययोगात्, अभावत्वे शशशृङ्गस्येव प्रतीत्ययोगात्, प्रतीयते निवर्त्यते चेति रज्जुसर्पवन्मिथ्याभूतमेवाज्ञानम्। वस्तुतो मिथ्यात्वेपि यावद्व्यवहारं सत्त्वाद्भावरूपमज्ञानमिति मयोच्यते। नहि घटाभाव इव घटोप्यभावरूप इति वक्तुं शक्यते। एवमज्ञानस्य ज्ञानाभावरूपत्वाभावाद्भावरूपत्वव्यपदेशः। तस्मात् अज्ञानं ज्ञाननिवर्त्यं, मिथ्याभूतत्वाद्रज्जुसर्पवदिति प्रत्यनुमानपराहतं तृतीयानुमानम्। नचाज्ञानं ज्ञानाभाव-

रूपमेवेति वाच्यं, ज्ञानाभावस्याभावत्वेनैव निवर्त्यत्वायोगात् । नह्यभावश्शशशृङ्गादिर्निवर्त्यमानो दृष्टः श्रुतो वा । **ननु** अज्ञानस्य ज्ञानाभावरूपत्वाभावेपि ज्ञानाभावो नास्तीति त्वया वक्तुं न शक्यते- ज्ञानं नास्तीति प्रतीतेर्निर्विषयत्वायोगादिति **तार्किकः, अत्रोच्यते**—ज्ञानं नास्तीति प्रतीतेरज्ञानविषयत्वेन निर्विषयत्वाभावात् । **ननु** किं त्वया ज्ञानाभाव एव नास्तीत्युच्यते ? यद्वा अभावमात्रमेव नास्तीति ? नाद्यः घटाभावादिसत्त्वे ज्ञानाभावस्यापि सत्त्वमेवेति । न द्वितीयः- घटो नास्तीति प्रतीतेर्निर्विषयत्वापत्तेः । नहि ज्ञानं नास्तीति प्रतीतावज्ञानमिव घटोनास्तीति प्रतीतावघटो विषयो भवतीति वक्तुं शक्यते- अघटाख्यभावरूपपदार्थाभावात्- अन्यथा अपटादिभावरूपबहुपदार्थकल्पनप्रसङ्गादिति, **मैवम्**— नास्तीतिप्रतीतिपरिकल्पितस्याभावस्यास्तीति प्रत्ययविषयत्वायोगादभावोस्तीति तावद्वक्तुं न शक्यं- घटो नास्तीतिप्रतीतौ च भूतलमेव विषयः- अभावस्याधिकरणात्मकत्वात्- नह्यधिकरणस्वरूपातिरिक्तमभावस्य किमपि स्वरूपमस्ति, अतिरिक्तस्वरूपसत्त्वे तेनैव स्वरूपेण न स्वरूपस्य तस्य भावत्वमेव भवेत्- स्वरूपरहितो ह्यभावः- यथा शशशृङ्गादिः ।

**ननु** भूतलमस्तीति प्रतीतावेव भूतलं विषयः- भूतलग्रथितत्वात्तत्प्रतीत्याकारस्य । घटो नास्तीति प्रतीतौ तु न भूतलं विषयः- भूतलग्रथितत्वाभावात्तत्प्रतीतेः । किंच त्वमभावाख्यं कंचित्पदार्थमभ्युपेत्य तस्याधिकरणात्मत्वं ब्रवीषि वा ? यद्वाऽनभ्युपेत्य ? आद्ये- अभावपदार्थसिद्ध एव । द्वितीये-- अभावपदार्थस्यैवाभावे कस्य त्वमधिकरणात्मत्वं ब्रवीषीति, **मैवम्**—किं घटवद्घटाभाव इति कश्चित्पदार्थः केनचित्क्वचिद्दृश्यते- निस्स्वरूपत्वादभावस्य । नह्यभावस्येदं स्वरूपं नियतमिति त्वं वक्तुं शक्नोषि, परं तु अभाव इति नाममात्रं कल्पितं- यथा शशशृङ्गादिनाममात्रं तच्च कल्पनं नेतिव्यवहारानुपपत्तिकृतम् । तथाच भूतलस्यैव घटाभाव इति नाम कल्पितमिति कृत्वा अभावस्याधिकरणात्मत्वमिति मयोक्तं, एवं भूतलस्य कल्पितमेव घटाभाव इति नाम गृहीत्वा घटो नास्तीति प्रत्येति लोकः । तथाच घटो नास्तीति प्रतीतौ घटाभावनाम्ना भूतलमेव विषयः, भूतलमस्तीति प्रतीतौ तु स्वनाम्नेति विवेकः । एवं ज्ञानं नास्तीति प्रतीतौ ज्ञानाभावनाम्ना अज्ञानं विषयः- अज्ञानमस्तीति प्रतीतौ तु स्वनाम्नैव । तस्मादज्ञानस्यैव ज्ञानाभाव इति नाममात्रं परिकल्पितं, **नतु ज्ञानाभावाख्यः** कश्चिदज्ञानातिरिक्तः **पदार्थोस्ति** । नच घटाभाव इव ज्ञानाभावोप्यधिकरणस्वरूप एवास्तु कथमज्ञानस्वरूपो भवेदिति वाच्यं, अन्तःकरणनिष्ठमपि ज्ञानमन्तःकरणस्याज्ञानावस्थाविशेषत्वेनाज्ञाननिष्ठमेवेति । घटाधिकरणं भूतलं हि घटाभावस्य स्वरूपम् । एवं ज्ञानाधिकरणमज्ञानं ज्ञानाभावस्य स्वरूपमिति । अभावस्य हि स्वप्रतियोग्यधिकरणं स्वरूपं स्वाधिकरणमिति पक्षेपि यदेव घटस्याधिकरणं तदेव घटाभावस्यापीति कृत्वा स्वप्रतियोग्यधिकरणमेव स्वाधिकरणं भवेत् ।

**ननु** यदि भूतलस्यैव घटाभाव इति नाममात्रं तर्हि भूतलं घटाभावाधिकरणं, घटाभावप्रतियोगि घटाधिकरणं वा कथं भवेत् ? स्वस्यैव स्वाधिकरणत्वायोगादिति, **मैवम्**—अभाव इति नाम्न इव अभावाधिकरणत्वरूपधर्मस्यापि भूतले कल्पितत्वादिति । अभावनामाश्रयत्वेनाभावाधिकरणत्वं भूतलस्येति

वा । नचाभावस्य नाममात्रत्वे कथं प्रतियोगित्वमिति वाच्यं, किं घटाभावाभावो घटस्यैव नाममात्रम्? यद्वा घटातिरेकेण घटाभावातिरेकेण च कश्चित्पदार्थोस्ति? आद्ये- यथा नाममात्रस्य घटाभावाभावस्य घटाभावप्रतियोगित्वं तथैव घटाभावस्यापि घटप्रतियोगित्वमिति । न द्वितीयः- घटाभावाभावो घटस्वरूप इति स्वसिद्धान्तविरोधात् । तस्मात्सर्वत्राप्यभावो नाममात्रमेव । नचात्र विस्मयः कार्यः- भावत्वेन भवदभिमतस्य घटादेरपि नाममात्रत्वात्- नहि मृदतिरेकेण कश्चिद्घट इति पदार्थोस्ति- एवं विकारस्य नाममात्रत्वादेव मिथ्यात्वमाह वाचारम्भणश्रुतिरित्यलं **तर्कप्रतिक्षेपेण** ।

**अथ** भयादीनां भावरूपाणां ज्ञाननिवर्त्यत्वदर्शनाच्च तृतीयानुमानमवद्यम् । नच भयादीनां स्वत एव विनाशः, तथासति भयनिवृत्त्यर्थं प्रवृत्त्यनुपपत्तेः । नच भयस्य क्षणिकत्वेन स्वतएव निवृत्तावपि, भयहेतोर्व्याघ्रादेः स्थिरत्वेन पुनर्भयोदयशङ्कया भयहेतुनिवृत्त्यर्थं लोकः प्रवर्तते नतु भयनिवृत्त्यर्थमिति वाच्यं, रज्जुसर्पनाशानन्तरक्षणेपि भयकम्पाद्यनुवृत्तिदर्शनेन भयादीनां यावत्स्वहेतुनाशं स्थिरत्वाद्ज्ञानेन भयादिहेतो रज्जुसर्पादेर्नाशेसति पश्चाद्भयादिनाशसम्भवाच्च । नहि वयं ज्ञानं क्षणिकमिति वदामः, किंतु वृत्त्यन्तरोदयपर्यन्तं स्थायीति वदामः- तथा भयाद्याकारान्तःकरणपरिणामोपि तद्विरोध्याकारान्तःकरणपरिणामपर्यन्तं स्थाय्येव । तस्माद्भयादीनां स्वविरोधिज्ञानोदये सत्येव नाशो नतु स्वतः, तेच भयकम्पादयोऽज्ञानादेव सम्भवन्ति- तच्चाज्ञानं भावरूपमेव- **एवं प्रत्यक्षानुमानाभ्यां भावरूपमज्ञानं सिद्धम्** ।

## उपादानोपादेययोस्सालक्षण्येपि भावरूपाज्ञानसिद्धिः ।

किंच मिथ्यार्थस्य मिथ्यैवोपादानं भवितुमर्हतीति युक्त्यापि भावरूपमज्ञानं सिध्यति । नच न विलक्षणाधिकरणन्यायविरोध इति वाच्यं, चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेति हि तन्न्यायः- तेन चाचेतनं प्रधानं जगत्कारणमिति साङ्ख्यमतस्य प्रतिक्षिप्तत्वेपि नास्मन्मतप्रतिक्षेपः- तथाहि किं जगत्कारणत्वेनाभिमतं चेतनं ब्रह्म निर्विशेषम्? यद्वाऽज्ञानावच्छिन्नम्? नाद्यः- तस्य जगत्कारणत्वायोगात्-- 'न तस्य कार्यं करणं च विद्यत' इति श्रुतेः । द्वितीये सिद्धमेव मिथ्याभूतं ब्रह्माश्रितमज्ञानं मिथ्याभूतस्य जगतः कारणमिति । नच सच्चिदानन्दं ब्रह्मैव जगत्कारणं तद्धर्माणां सत्ताज्ञानानन्दानां जगत्यन्वयदर्शनात् , जगदस्ति भाति प्रियं चेति प्रत्यक्षादिति वाच्यं, अज्ञानावच्छिन्नं ब्रह्मैव सच्चिदानन्दं, न तु निर्विशेषं ब्रह्म- तस्मिन् सत्ताज्ञानादिविशेषायोगादिति पूर्वमुक्तत्वात् ।

**ननु** तथापि ब्रह्मण एव धर्मास्ते, नाज्ञानस्येति चेत्सत्यं, अतएव अनृतं जडं दुःखं च जगदिति प्रत्यक्षा अनृतत्वादयोऽज्ञानधर्मा इत्युच्यन्ते- तेहि न ब्रह्मधर्माः एवमज्ञानावच्छिन्नस्य ब्रह्मणो जगत्कारणत्वादेव जगति तदुभयधर्मान्वयः । नह्यस्माभिः केवलाद्ब्रह्मणः केवलादज्ञानाद्वा जगज्जातमित्युच्यते, किं त्वज्ञानावच्छिन्नाद्ब्रह्मणः ब्रह्माश्रितादज्ञानाद्वेति । अतएव जगत्कारणस्य जगतश्च नास्ति वैलक्षण्यम् । **अत्रायं प्रयोगः**—सच्चिदानन्दात्मकमनृतजडदुःखात्मकं चेदं जगत्तथाविधकारणजन्यमेव भवितुमर्हति-- कार्यकारणयोस्सालक्षण्येन भवितव्यत्वात्- मृद्घटवत् । तथाविधं च कारणं ब्रह्माश्रितमज्ञानमज्ञानावच्छिन्नं ब्रह्म वेति । यदि तु कार्यकारणयोर्वैलक्षण्यमभ्युपेत्यैव स न्यायः प्रवृत्त इति मतं, तर्हि सच्चिदानन्दं ब्रह्म

अनृतजडदुःखात्मकस्य जगतः कारणमज्ञानादेव भवति, नतु स्वत इति कृत्वा तथाप्यज्ञानं सिध्यत्येव। नच स्वतएव भवतीति वाच्यं, किं ब्रह्मणो जगज्जननादिसामर्थ्यमस्ति ? उत न ? यद्यस्ति तर्हि तदेवाज्ञानमित्युच्यते- ब्रह्मशक्तिरेवाज्ञानमित्युक्तत्वात् । यदि नास्ति तर्ह्यसमर्थं तदकारणमेव भवेत्। नच यदि ब्रह्मशक्तिरज्ञानं तर्हि मिथ्या न भवेदेवेति वाच्यं, शक्तेश्शक्तात्पृथक्सत्त्वेनासत्त्वेन वा दुर्निरूपत्वादेव मिथ्यात्वं- दुर्निरूपमनिर्वाच्यं हि मिथ्या- रज्जूत्पन्नसर्पवत् ।

**नन्वेवमपि** जगतो ब्रह्मैवोपादानमिति कृत्वा मिथ्यार्थस्य मिथ्यैवोपादानमिति न्यायस्य न सिद्धिरिति, **मैवम्**—अज्ञानावच्छिन्नं ब्रह्मोपादानमिति पक्षे, ब्रह्माश्रितमज्ञानमुपादानमिति मते वा, अज्ञानाद्ब्रह्मोपादानमिति पक्षे वा अज्ञानांशस्यैव जगदुपादानत्वं न ब्रह्मांशस्येति । विवर्तवादे परिणामवादे वा अज्ञानस्यैव जगत्परिणाम्युपादानत्वं, नतु ब्रह्मणो निर्विकारस्येति । तस्मात्प्रतीतिबाधाभ्यामसदिति सदिति वा निर्वक्तुमशक्यत्वेन मिथ्याभूतस्य जगतस्तादृशमनिर्वाच्यमज्ञानमेवोपादानं, ब्रह्म तु विवर्ताधिष्ठानमेव । एवं ब्रह्मणोऽज्ञानाज्जगद्विवर्तोपादानत्वमज्ञानावच्छिन्नत्वादेव जगत्परिणाम्युपादानत्वं वा युज्यत इत्यभिप्रेत्य न विलक्षणत्वाधिकरणं प्रवृत्तमिति नास्माकं तन्न्यायविरोधः ।

**अथ यदुक्तम्**—अनिर्वचनीयाज्ञानविषया न काचिदपि प्रतीतिरस्ति- प्रतीतिभ्रान्तिबाधैरपि न तथाभ्युपगमनीयं- प्रतीयमानमेव हि प्रतीतिभ्रान्तिबाधविषयः- आभिः प्रतीभिः प्रतीत्यन्तरेण चानुपलब्धमासां विषय इति न युज्यते कल्पयितुं- शुक्त्यादिषु रजतादिप्रतीतेः प्रतीतिकालेपि तत्रास्तीति बाधेन चान्यस्यान्यथाभानायोगाच्च । सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोषवशात्प्रतीयत इति कल्पनीयमिति चेत्, **न**—तत्कल्पनायामप्यन्यस्यान्यथाभानस्यावर्जनीयत्वात् । अन्यथाभानाभ्युपगमादेव ख्यातिप्रवृत्तिबाधभ्रमत्वानामुपपत्तेरत्यन्तापरिदृष्टाऽकारणकवस्तुकल्पनायोगाच्च । कल्प्यमानं हीदमनिर्वचनीयं न तावदनिर्वचनीयमि प्रतीयते, अपितु परमार्थरजतमित्येव। अनिर्वचनीयमित्येव प्रतीतं चेद्भ्रान्तिबाधयोः प्रवृत्तेरप्यसम्भवः । अतोन्यस्यान्यथाभानविरहे प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेस्तस्यापरिहार्यत्वाच्च शुक्त्यादिरेव रजताद्याकारेणावभासत इति भवताभ्युपगन्तव्यम् । ख्यात्यन्तरवादिनां च सुदूरमपि गत्वाऽन्यथावभासोऽवश्याश्रयणीयः- असत्ख्यातिपक्षे सदात्मना, आत्मख्यातिपक्षेऽर्थात्मना, अख्यातिपक्षेप्यन्यविशेषणमन्यविशेषणत्वेन ज्ञानद्वयमेकत्वेन च, विषयासद्भावपक्षेपि विद्यमानत्वेन इति, **अत्रोच्यते**—यद्यन्यथाख्यात्यैव शुक्तिरजतप्रतीतिनिर्वाहः, तर्हि तयैव मृद्घटादिप्रतीतिनिर्वाहोपीति घटादिकार्योत्पत्त्यभ्युपगमोपि व्यर्थः- यथा शुक्तिका रजतात्मना भासते, तथा मृदेव घटाकारेण भासत इति तुल्यत्वात्। नहि शुक्तिव्यतिरेकेण रजतमिव मृद्व्यतिरेकेण घटोस्ति । यद्यप्ययं वादः कार्यमिथ्यात्ववादिनो ममेष्टस्तथापि कार्यसत्यत्ववादिनस्तव वज्रप्रहारायते । नच मृदेव घटरूपेण न भाति, किंतु मृदि घटो जात इति न साम्यमिति वाच्यं, तथासति शुक्तिरेव रजतरूपेण न भासते, किंतु शुक्तौ रजतं जातमिति तुल्यम् । नच मृदि घटोत्पत्तौ दण्डचक्रसलिलकुलालादिकारणसामग्री वर्तते- शुक्तौ रजतोत्पत्तौ तु नेति वाच्यं, अत्रापि रजतसंस्कारचाकचक्याविद्यादिकारणसामग्रीसत्त्वात् । नच घटस्सन्नित्येव प्रतीयत इति

वाच्यं, शुक्तिरजतमपि प्रतीतिसमये सदित्येव प्रतीयते- नहि प्रतीतिसमयेप्यसतः प्रतीतिः। नचानिर्वचनीयं शुक्तिरजतमनिर्वचनीयमित्येव प्रत्येतव्यं, नतु सदिति वाच्यं, प्रतीतिसमये तस्यानिर्वचनीयत्वाभावात्- नहि स्वोत्पत्तेः प्राक्स्वनाशात्पश्चाच्चासन्नपि घटः स्वकालेप्यसन्निति प्रतिभाति। नचैवं प्रतीतिकाले सत्त्वादन्यकालेऽसत्त्वाच्च सदिति असदिति च निर्वक्तुं शक्यत एव- शुक्तिरजतं घटवदिति कथं तस्यानिर्वचनीयत्वमिति वाच्यं, सतो बाधायोगादसतः प्रतीत्ययोगाच्च प्रतीयमानस्य बाध्यमानस्य चानिर्वचनीयत्वमित्युक्तत्वात्। किंच प्रतीतिकालेपि शुक्तिव्यतिरेकेण रजतं नास्त्यैव- यथा मृद्व्यतिरेकेण घटः, ततः सदिति वक्तुं न शक्यते नाप्यसदिति प्रतीयमानत्वात्तस्मादनिर्वचनीयं शुक्तिरजतं घटादिकं च। नच घटादिर्निर्वचनीय एवेति वाच्यं, मन्मते तस्याप्यनिर्वचनीयत्वमेव मिथ्यात्वादिति। शुक्तिरजताद्रजतस्य वैलक्षण्याय व्यावहारिकसत्यत्वं हि रजते कल्पितं, पारमार्थिकसत्यत्वं तूभयत्रापि नास्तीत्युभयं मिथ्यैव। नच शुक्तौ रजतमुत्पद्यत इति मतेप्यनन्यस्यान्यथाभानमवर्जनीयमिति वाच्यं, तन्मते उत्पन्नरजतस्यैव रजताकारेण भानं, नतु शुक्तेरित्यन्यस्यान्यथाभानाभावात्। नच शुक्तावुत्पन्नमपरमार्थरजतं तत्तु परमार्थरजतरूपेण प्रतिभातीति कृत्वा अन्यस्यान्यथाभानमस्त्येवेति वाच्यं, परमार्थापरमार्थरजतयोराकारभेदाभावात्। आकरभेदे सति भ्रमस्यैवोत्पत्त्यसम्भवात्। नचापरमार्थरजतं परमार्थरजतमिव भातीति कृत्वा अपरमार्थरजतस्य परमार्थरजतत्वेन भानादन्यस्यान्यथाभानमस्तीति वाच्यं, शुक्तिकायां परमार्थरजतसदृशं रजतमुत्पन्नं सत्परमार्थरजतसदृशाकारेणैव भातीति नान्यथाख्यातिसिद्धिः। एवं परमार्थरजतसदृशाकारेण प्रतीतत्वादेव तस्मिन्नपरमार्थरजते परमार्थरजतबुद्ध्या प्रवृत्त्युपपत्तिः। तस्याश्च बुद्धेरतस्मिंस्तद्बुद्धित्वेन भ्रान्तित्वोपपत्तिः। **नन्वेवं** शुक्तिशकलस्यैव परमार्थरजतसदृशत्वात्तदेव परमार्थरजतसदृशाकारेण भातीत्यभ्युपगम्यतां- किं तत्रापरमार्थरजतोत्पत्तिकल्पनेन, **मैवम्**—शुक्तिकायां नीलपृष्ठत्रिकोणत्वादिरूपरजतविसदृशाकारस्यापि सत्त्वात्। नच शुक्तिकागतस्य रजतविसदृशाकारस्याभानात्तत्सदृशाकारस्यैव भानाद्रजतसदृश एव शुक्त्यंशो रजतसदृशाकारेण भातीति वाच्यं, शुक्तिरजतयोस्सादृश्यस्य सत्त्वादत्रैवमुच्यतां नाम गगननीलान्धकारपिशाचभ्रमादिषु तु तदभावान्नैवं वक्तुं शक्यम्। तथाच तत्र गगनान्धकारादावपरमार्थनीलपिशाचादयः परमार्थनीलपिशाचादिसदृशा उत्पन्ना इत्यभ्युपेयम्। अभ्युपेते च तत्र यथा, अन्यत्रापि तथैवाभ्युपेयमिति। तस्मात्परमार्थरजतसदृशमपरमार्थरजतं शुक्तिकायामुत्पन्नमेवेति नान्यस्यान्यथाभानमित्यनिर्वचनीयख्यातेरेव सिद्धिर्न त्वन्यथाख्यातेः। यद्वा शुक्तिकायां दोषवशाद्रजतमुत्पन्नं सद्रजतमित्येव प्रतिभाति, नतु परमार्थरजतमिति नाप्यपरमार्थरजतमिति- भ्रमसमये पुरुषस्य परमार्थापरमार्थविचाराभावात्। ततो रजतस्य रजतत्वेनैव ख्यातत्वान्नान्यथाख्यातिः। एतद्रजतबुद्धेर्भ्रान्तित्वं तु शुक्तिज्ञानबाध्यत्वादेव, न त्वतस्मिंस्तद्बुद्धित्वात्। रजत एव हीयं रजतबुद्धिः। नचापरमार्थरजतविषयेयं परमार्थरजतबुद्धिरतस्मिंस्तद्बुद्धिरेवेति वाच्यं, रजतविषयैवेयं रजतबुद्धिरित्युक्तत्वात्--इति। **ननु** इदं रजतमिति यत्र भ्रमस्तत्रैवं निर्वाहो भवतुनाम- इदं परमार्थरजतमिति भ्रमस्थले कथं निर्वाह इति चेत्, **उच्यते**—कूटरजतव्यावर्तकमेव तत्र परमार्थविशेषणं, नतु शुक्तिरजतव्यावर्तकं- नहि

शुक्तिं दृष्ट्वा नेदं शुक्तिरजतं किं तु परमार्थरजतमिति प्रत्येति भ्रान्तः । यद्वा शुक्त्युदितं रजतं दृष्ट्वा नापि कूटरजतवच्छुक्तिरजतमिति किञ्चिद्वस्तु व्यवहारक्षमं वर्तते, येन तद्व्यावर्तकं परमार्थविशेषणं भवेत्-- इति ।

**वस्तुतस्तु**—अन्यस्यान्यथाभानं नाम अन्यरूपेण स्थितस्यान्यरूपेण भानं, तच्च रूपभेदप्रयुक्तमेव, नतु धर्मभेदप्रयुक्तं- रूपं नाम स्वरूपं, धर्मस्तु स्वभाव इति विवेकः । तथा च कूटरजतस्य सत्यरजतरूपेण भानमिव शुक्तिरजतस्यापि सत्यरजतरूपेण भानं नान्यथाख्यातिः-- नहि शतवारं नेदं सत्यरजतमित्याप्तोपदिष्टमपि कूटरजतं सत्यरजतरूपं परित्यजति- यदेव सत्यरजतरूपं तदेव कूटरजतस्यापीति । यदि तु रूपभेदाभावेपि धर्मभेदे सत्यन्यस्यान्यथाख्यातिरवर्जनीयेति मन्यसे-- तर्हि विशेषणगतमेव तदन्यथाभानं नतु विशेष्यगतमिति कृत्वा विशेष्यस्वरूपभाने नान्यथाख्यातिः- नहि दुष्टपुरुषे शिष्टपुरुष इति ज्ञानं भ्रम इत्युक्ते पुरुषे पुरुषज्ञानं भ्रमो भवति, किंतु दुष्टे शिष्टाज्ञानमेव । तस्मादपरमार्थरजतस्य परमार्थरजतात्मना ख्यातत्वेपि रजतमेव रजतात्मना ख्यातमिति कृत्वा नान्यथाख्यातिसिद्धिः । **एतेनापरमार्थरजतबुद्धिविषयस्य शुक्त्युत्पन्नरजतस्य परमार्थरजतबुद्धिविषयत्वेन भानमन्यथाभानमित्यप्यपास्तम्** । तत्रापि स्वभावभेद एव नतु स्वरूपभेद इति । किंच अपरमार्थरजतं परमार्थरजतरूपेण भातीति वदता वक्तव्यं- किं पुरोगतपरमार्थरजतरूपेण भाति ? यद्वा विपणिगतपरमार्थरजतरूपेण ? नाद्यः- परमार्थरजतस्य पुरोगतत्वाभावात् । नान्त्यः- तस्य चक्षुस्सन्निकर्षाभावात् । नच दोषवशाच्चक्षुस्सन्निकर्षस्तस्येति वाच्यं, दोषशतवशादपि चक्षुषः परोक्षविषयसन्निकर्षालाभात् । यदि त्वपरमार्थरजतं परमार्थरजतमिव भातीत्युच्यते, तर्हि परमार्थरजतसादृश्यमपरमार्थरजतस्यास्त्येवेति नान्यथाभानसिद्धिः । नचैवं शुक्तिरेव रजतमिव भातीत्युच्यतां, किमपूर्वरजतोत्पत्तिकल्पनयेति वाच्यं, नास्माभिः परमार्थरजतमिवापरमार्थरजतं भातीत्युच्यते येनैवं शङ्क्येत, किंतु भ्रमसमये शुक्तावुदितं रजतमेव इदं रजतमिति प्रतिभातीत्युच्यते । ततो नास्मान्प्रति तदाशङ्कनीयम् । **एतेन** इदं रजतमिति भ्रमस्थले शुक्ती रजतमिव भातीति वादः **परास्तः**—तथासति इदं रजतसदृशमित्येव प्रतीतेर्भवितव्यत्वात् । **अतएव** अपरमार्थरजतं परमार्थरजतमिव भातीति वादोपि **परास्तः**-- इदं परमार्थरजतसदृशमिति प्रतीत्यभावात् । **ननु** शुक्तौ रजतसादृश्यमस्त्येव दोषवशात्तदप्रतीतिः, तत इदं रजतमिति प्रतीतिः दोषाभावे तु इदं रजतसदृशमित्येव प्रतीयेतेति, **मैवम्**—शुक्तिगतरजतसादृश्यस्य दोषवशादप्रतीतावपि किं शुक्तेः प्रतीतिरस्ति ? उत न ? आद्ये- भ्रमानुदयप्रसङ्गः- नहि बाधके शुक्तिज्ञानेसति तद्बाध्यरजतज्ञानसम्भवः- नहि लोकश्शुक्तिं शुक्तिरिति ज्ञात्वा रजतमिति भ्राम्यति । द्वितीये इदंपदस्य निर्विषयत्वापत्तिः । तस्मादिदंपदप्रयोगविषयतया शुक्तावपूर्वं रजतमुत्पन्नमित्यभ्युपेयम् । **ननु** घटेनसह चक्षुस्सन्निकर्षाभावे यथा घटोयमिति प्रतीतिर्न भवति, तथा अनिर्वचनीयरजतेनसह चक्षुस्सन्निकर्षाभावे इदं रजतमिति प्रतीतिर्नैव भवेत् । तेनसह चक्षुषस्सन्निकर्षस्तु नास्त्येव- प्रतीतेः प्राग्विषयस्यैवाभावात्- विषयप्रत्ययौ हि समसमयसंजातौ, **मैवम्**-- संस्कारादिसहकृतादविद्यैव रजताद्यर्थाध्यासाकारेण, ज्ञानाध्यासाकारेण च परिणमत इति भ्रमस्थले विष-

येन्द्रियसन्निकर्षानपेक्षणात् । न चक्षुषो वैयर्थ्यं- पुरोवर्तिवस्तुसामान्यज्ञानार्थं चक्षुष आवश्यकत्वात् । चक्षुषा पुरोवर्तिवस्तुनि सामान्याकारेण गृहीतेसत्येव भ्रमस्सम्भवति नान्यथेति । अतएवान्धस्य शुक्तौ नेदं रजतमिति भ्रमसम्भवः । तस्मादनिर्वचनीयख्यातिवादिमते रजतस्यैव रजतात्मना भानान्नान्यथाभानसम्भवः । **ननु** अतस्मिंस्तद्बुद्धिरध्यास इति वदद्भिश्शङ्कराचार्यैरेवान्यथाख्यातिरभ्युपेतेति, **मैवम्**—अर्थवद्ज्ञानस्याप्यनिर्वचनीयस्यैवाविद्यया जातत्वात् । शुक्त्यध्यस्तरजतविषयप्रत्ययत्वादिदंरजतमिति प्रत्ययस्याध्यासत्वं, नतु शुक्तिविषयप्रत्ययत्वादिति । नहीदं रजतमिति ज्ञाने शुक्तिर्विषयो भवति, किं तु शुक्त्यध्यस्तं रजतमेव । नचैवमनिर्वचनीयज्ञानोत्पत्त्यैवालं, किमनिर्वचनीयरजतोत्पत्त्येति वाच्यं, अनिर्वचनीयरजतोत्पत्तिं विना तद्ज्ञानोत्पत्त्ययोगात्- नचैवमर्थोत्पत्त्यैवालं, ज्ञानं तु पश्चाद्विषयेन्द्रियसन्निकर्षाद्भविष्यतीति वाच्यं, ज्ञानात्प्रागपूर्वार्थस्य सत्त्वे मानाभावात्- इति । केचित्तु अनिर्वचनीयख्यातिवादिनोपि स्वमते अन्यथाख्यातिरप्यस्तीति वदन्ति- तानहमनुज्झिततर्कपिशाचान्मन्ये । तस्मान्नास्मन्मतेऽन्यथाख्यातिः । एवं सत्ख्यातिमतेपि नान्यथाभानं- शुक्तौ सत एव रजतस्य रजताकारेण भानमिति तद्वादात् । सच रामानुजाभिमत एव । तमेव स इहैवोपपादयिष्यति । नाप्यात्मख्यातिमते- सत्यप्यान्तरत्वबाह्यत्वप्रयुक्ते स्वभावभेदे रजतस्यैव रजतात्मना भानमिति । नाप्यसत्ख्यातिपक्षे- सत्यप्यसत्त्वसत्त्वप्रयुक्तस्वभावभेदे रजतस्यैव रजतात्मना भानमिति । नाप्यख्यातिमते- स्मर्यमाणं रजतमेव रजतभ्रमे विषयो भवतीति । **ननु** ज्ञानमेवार्थस्वरूपेण भातीति वदतो विज्ञानवादिन आत्मख्यातिमते ज्ञानमेवार्थस्वरूपेण भ्रान्त्या पश्यन्तीति पराशरो वदतीति वादिनस्तव मते च कथमन्यस्यान्यथाभानाभाव इति, **मैवम्**—आन्तरस्य ज्ञानस्य रजताद्याकारः स्वाभाविक एव- तस्य बाह्यत्वमेव भ्रान्तिसिद्धमित्यात्मख्यातिवादिमते नान्यथाभानसम्भवः । पराशरमते तु वस्तुतो ब्रह्मैव भ्रान्त्या जगद्रूपेण भातीत्यस्य ब्रह्मण्यज्ञानादुत्पन्नं जगदेव इदं जगदिति प्रतीतिविषयो भवतीत्येवार्थः । नचायमप्रमाणः- यतोवेत्यादि श्रुतिप्रामाण्यात् । नच वस्तुत एव ब्रह्मणो जगदुदितमिति वाच्यं, ज्ञानस्वरूपाद्ब्रह्मणोऽर्थस्वरूपस्य जगत उदयायोगात् । नच न विलक्षणत्वाधिकरणन्यायेन तद्योग इति वाच्यं, तन्न्यायस्याप्यज्ञानादेव ब्रह्म जगत्कारणमित्यत्रैव तात्पर्यात् । अन्यथा 'एकमेवाद्वितीयं ब्रह्मे'त्यादिश्रुतिविरोधात् । नचाज्ञानादपि ब्रह्मणस्सकाशाज्जगन्नैवोदितमिति वाच्यं, अविद्यादशायां प्रतीयमानस्य जगतोऽत्यन्तापलापायोगात् । नच 'शशशृङ्गेण नागेन्द्रो मृतश्चेज्जगदस्ति त'दिति श्रुतेर्जगच्छशशृङ्गतुल्यमेवेति वाच्यं, विद्यादशामधिकृत्य तथोक्तत्वात्- नहि विद्यादशायां ब्रह्मणि जगदस्ति । किंच अविद्यादशायां प्रतीयमानस्यापि जगतो ज्ञानमेव स्वरूपं- ज्ञाने ब्रह्मण्येवार्थस्य जगतोऽध्यस्तत्वादध्यस्तस्य चाधिष्ठानमेव स्वरूपमिति । एतदेवाभिप्रेत्य पराशरेण तथोक्तं । तस्माद्ब्रह्मण्यज्ञानान्मिथ्याभूतं जगदुत्पन्नमेव- शुक्तिकायामनिर्वचनीयमिव रजतम् ।

**ननु** ब्रह्मणि जगदुत्पद्यतांनाम यथाकथंचित्- शुक्तिकायां रजतं तु नैवोत्पन्नं- तथाहि अनिर्वचनीयमपूर्वरजतमत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यं- न तावत्तत्प्रतीतिः- तस्यास्तद्विषयत्वेन तदुत्पत्तेः प्रागात्मलाभायोगात्- निर्विषया जाता प्रतीतिः तदुत्पाद्य तदेव विषयीकरोतीति महतामिद-

मुपपादनम् । अथेन्द्रियादिगतो दोषः- तस्य पुरुषाश्रयत्वेनार्थगतकार्योत्पादकत्वायोगात् । नापीन्द्रियाणि- तेषां ज्ञानकारणत्वात् । नापि दुष्टानीन्द्रियाणि- तेषामपि स्वकार्यभूते ज्ञान एव हि विशेषकरत्वं- अनादिमिथ्याज्ञानोपादानत्वं तु पूर्वमेव निरस्तं- इति, **अत्रोच्यते**—इदं रजतमिति प्रतीत्या प्रतीतिसमयनियतस्य रजतस्य सिद्धिरेव, नतूत्पत्तिः- प्रतीतिविषयौ हि समसमयोत्पन्नौ प्रतीतिविषयनाशयोरपि समसमयत्वदर्शनात् । नह्यप्रतीतं शुक्तिरजतमस्ति । यद्यपि सत्यरजतमपि तथैव- तथापि तस्य लोकानुभवसिद्धं स्थिरत्वमभ्युपेत्य अप्रतीतं शुक्तिरजतं नास्तीत्युच्यते । एतच्छुक्तिरजतस्य जन्मकारणं तु अविद्यैव- तथाहि- काचकामलादिदोषदूषितलोचनस्य पुरोवर्तिद्रव्यसंयोगादिदमाकारा चाकचक्याद्याकारा च काचिदन्तःकरणवृत्तिरुदेति, तस्यां च वृत्तौ इदमवच्छिन्नं चैतन्यं प्रतिबिम्बते- वृत्तेश्च बहिर्निर्गमनेन इदमवच्छिन्नचैतन्यं वृत्त्यवच्छिन्नचैतन्यं प्रमातृचैतन्यं चाभिन्नं भवति- ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठा शुक्त्याकारिकाऽविद्या चाकचक्यादिसादृश्यसन्दर्शनसमुद्बोधितरजतसंस्कारसध्रीचीना काचकामलादिदोषसमवहिता रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमत इति । **एतेन** अनादिभावरूपाज्ञानस्य स्वरूपानादित्वात्तत्कार्यमपि प्रागेव स्यादिति **निरस्तम्** । दर्शिततूलाज्ञानस्यैव शुक्तिरजतकारणत्वं न मूलाज्ञानस्येत्युक्तत्वात् ।

**अथ यदुक्तम्**—अपूर्वमनिर्वचनीयमिदं जातं वस्तु रजतादिबुद्धिशब्दाभ्यां कथमिव विषयीक्रियते- न घटादिबुद्धिशब्दाभ्यां- रजतादिसादृश्यादिति चेत्, तर्हि तत्सदृशमित्येव प्रतीतिशब्दौ स्याताम् । रजतादिजातियोगादिति चेत्- सा किं परमार्थभूता ? उतापरमार्थभूता ? आद्ये- तस्या अपरमार्थान्वयायोगः । द्वितीये- परमार्थान्वयायोगः- अपरमार्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वायोगश्चेति, **नैतत्साधु**—शुक्तावनिर्वचनीयं रजतमेव जातं, न घटादीति कृत्वा तस्य जातस्य रजतबुद्धिशब्दाभ्यामेव विषयीकृतत्वम् । नच रजतस्यैव जातत्वे कथमनिर्वचनीयं जातमित्युच्यत इति वाच्यं, जातस्य रजतस्यैवानिर्वचनीयत्वात् । नच रजतशब्दवाच्यस्य कथमनिर्वाच्यत्वमिति वाच्यं, अनिर्वाच्यशब्दवाच्यस्य वा कथमनिर्वाच्यत्वं, सदसद्विलक्षणत्वे सदसच्छब्दावाच्यत्वं ह्यनिर्वाच्यत्वं तच्छुक्त्युत्पन्नरजतस्यास्त्येवेति तदनिर्वाच्यमेव । नच रजतमेव तत्र जातमिति कथं त्वयोच्यत इति वाच्यं, इदं रजतमिति रजतस्यैवानुभूयमानत्वात् । नच तत्र रजतबुद्धिः कथं तव जातेति वाच्यं, यथा तव घटे घटबुद्धिः । नच घटे जातिपदवाच्यः अनुगतो घटाकारः कम्बुग्रीवादिलक्षणोऽस्तीति वाच्यं, रजतेपि चाकचक्याद्यनुगताकारोस्त्येवेति । नच शुक्तिरजते या जातिरस्तीति त्वयोच्यते, सा किं परमार्थभूता ? उतापरमार्थभूता ? उभयथापि दोष उक्त एवेति वाच्यं, अपररमार्थभूतैव सा तस्याः परमार्थान्वयायोगश्चेष्ट एव ।

**वस्तुतस्तु** अस्मिन्घटे यो आकारोस्ति स एव घटान्तरे न भवति, किंतु ततोऽन्य एव, तद्घटनिष्ठाकारस्य तद्भिन्नघटनिष्ठत्वायोगात् । तथाच सर्वत्रानुगतः कश्चिदाकारो जातिपदवाच्यो नास्त्येव । एवं सति शुक्तिरजतनिष्ठ आकारश्शुक्तिरजतवन्मिथ्यैवेति न तस्य परमार्थान्वययोगः- परमार्थरजतनिष्ठाकारस्य वा न शुक्तिरजतान्वययोगः- शुक्तिरजतनिष्ठाकारस्य वा न शुक्तिरजतांतरान्वययोग इति न

काप्यनुपपत्तिः । जात्यभ्युपगमेपि शुक्तिरजतजातिरपरमार्था शुक्तिरजतान्वययोगिन्येव परमार्थरजतान्वयवती तु परमार्थजातिरेवेति न दोष इति बोध्यम् । नचापरमार्थे शुक्तिरजते कथं परमार्थरजतबुद्धिशब्दयोर्निर्वाह इति वाच्यं, भ्रान्त्या तन्निर्वाहात् । अपरमार्थरजते परमार्थरजतमिति प्रत्ययो हि भ्रमः । यद्वा शुक्त्युत्पन्नेपि रजते शुक्तिगतः पारमार्थ्यांशः प्रतिभासते-- ततश्शुक्तिरजते परमार्थरजतमिति शब्दप्रत्ययौ भवतः । तस्माच्छुक्तावनिर्वचनीयं रजतं परमार्थरजतसदृशं दोषवशादुत्पन्नमेव- इदं रजतमिति प्रतीत्यन्यथानुपपत्तेरित्यलं दुर्वादिविवादेन । **यदुक्तं सुदर्शनेन**— अपरमार्थभूतजातेः परमार्थभूतबुद्धिशब्दनिर्वाहकत्वायोग इति, **तदपेशलम्**—जातेरपारमार्थ्ये सति तद्विषयबुद्धिशब्दयोरप्यपारमार्थ्यमेवेति कृत्वा अपरमार्थभूतजातेरपरमार्थभूतबुद्धिशब्दनिर्वाहकत्वं युज्यत एव । नच बुद्धिशब्दयोर्बाधकादर्शनात्पारमार्थ्यं सिद्धमिति वाच्यं, नेदं रजतमिति ज्ञानेन शुक्तिरजतस्येव तद्विषयकबुद्धिशब्दयोरपि बाधितत्वात् । नहि विषयस्य रजतस्यापारमार्थ्ये रजतमिति बुद्धिशब्दयोः पारमार्थ्यं सम्भवति- नहि बुद्धिमात्रं परमार्थं, किं तु सत्यवस्तुविषयैव बुद्धिः परमार्था, असत्यवस्तुविषया तु बुद्धिरपरमार्थैव । अन्यथा भ्रमप्रमयोस्साङ्कर्यमेव भवेत्- प्रमाह्यबाधितार्थविषया बुद्धिः भ्रमस्तु बाधितार्थविषयः प्रमया च भ्रमो बाध्यते- अबाधितत्वे भ्रमानुवृत्तिप्रसङ्गात् । नच विषयबाधादेव भ्रमाननुवृत्तिरिति वाच्यं, निर्विषयत्वादेव भ्रमस्य बाधोपीति । तस्माद्रजतवत्तद्विषयबुद्धिशब्दावप्यपरमार्थावेव, रजतं च दोषवशादुत्पन्नमेव । एवं ब्रह्मणि जगदप्यज्ञानादुत्पन्नमिति जगदपरमार्थमेव । तद्विषयबुद्धिशब्दावप्यपरमार्थावेवेति सिद्धम् । ब्रह्मण एकस्यैव परमार्थत्वं तद्धि- श्रुतिस्मृतिपुराणादिभिरभिप्रेतं- तथा च दर्शितमिति **संक्षेपः** ॥

## रामानुजाभिमतयथार्थख्यातिसिद्धान्तखण्डनम् ।

**अथ यदुक्तं रामानुजेन**—यथार्थख्यातिमेव सिद्धान्तत्वेनावलम्ब्य- 'यथार्थं सर्वविज्ञानमिति वेदविदां मतम् । श्रुतिस्मृतिभ्यस्सर्वस्य सर्वात्मत्वप्रतीतितः ॥ बहुस्यामिति सङ्कल्पपूर्वसृष्ट्यादूपक्रमे । तासां त्रिवृतमेकैकामिति श्रुत्यैव दर्शितम् ॥ त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते । यदग्नौ रोहितं रूपं तेजसस्तदपामपि ॥ शुक्लं कृष्णं पृथिव्याश्च त्यग्नावेव त्रिरूपता । श्रुत्यैव दर्शिता तस्मात्सर्वे सर्वप्रसङ्गताः ॥ पुराणे चैवमेवोक्तं वैष्णवे सृष्ट्युपक्रमे । नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ॥ नाशक्नुवन्प्रजास्स्रष्टुमसमागम्य कृत्स्नशः । समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ॥ महदाद्या विशेषान्ताह्यण्डमित्यादिना ततः । सूत्रकारोपि भूतानां त्रिरूपत्वं तथाऽवदत् ॥ त्र्यात्मकत्वात्तु भूयस्त्वादिति तेनाभिदाभिदा । सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम् ॥ सोमावयवसद्भावादिति न्यायविदो विदुः । व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः ॥ तदेव सदृशं तस्य यद्यद्द्रव्यैकदेशभाक् । शुक्त्यादौ रजतादेश्च भावश्श्रुत्यैव बोधितः ॥ रूप्यशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः । रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते ॥ अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः । कदाचिच्चक्षुरादेस्तु दोषाच्छुक्त्यंशवर्जितः ॥ रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते । दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते ॥ अतो यथार्थं रूप्यादि-

विज्ञानं शुक्तिकादिषु । बाध्यबाधकभावस्तु भूयस्त्वेनोपपद्यते ॥ शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः । नातो मिथ्यार्थसत्यार्थविषयत्वनिबन्धनः ॥ एवं सर्वस्य सर्वत्र व्यवहारव्यवस्थितिः ।' इति, **तदयुक्तम्**—

"ब्रह्मैकमेव सकलात्मकमित्यखण्डमुद्घोषयत्सु भुवने श्रुतिमस्तकेषु । सर्वं च सर्वमयमित्यवदत्कथन्नु रामानुजः फणिपतेरवतारभूतः ॥ सर्वं मुकुन्दमयमित्यभिभाषमाणे श्रीमत्पराशरकृतेपि पुराणरत्ने । सर्वं च सर्वमयमित्यवदत्कथन्नु रामानुजः परमवैष्णवसार्वभौमः ॥ लोकस्त्रिवृत्कृतधराजलपावकाश्च भूतत्रयात्मकमिति प्रतिपन्नमेव । नैतावता च सकलं सकलात्मकं स्यात्स्वर्णात्मकः किमु घटो भुवि मार्तिकस्स्यात् ॥ सर्पः पशुश्च मकरः पुरुषो महीजो ग्रावा घटश्च कनकं रजतं किमु स्यात् । तस्मादतद्विषयतद्धिषणा यथार्था नैवेति सर्वधिषणा नु कथं यथार्था ॥ नैवान्यगाऽवयवसन्ततिरन्यगा स्यात्तत्सन्निभावयवसन्ततिरन्यदीया । सोमो यथा परिपुनाति जनं तथैव पूतीक इत्यभिमतं मतमागमस्य ॥ शुक्त्यां वसन्त्यवयवा यदि राजतास्तर्ह्यग्निस्थशुक्त्यवयवः प्रलयेपि तेषाम् । नाशं विना द्रवपदं समुपागतानां दृश्येत दाहविरमे ननु पिण्डभावः ॥ रूप्ये च शुक्त्यवयवा यदि तर्हि वह्नौ तेषां क्षयाद्रजनमल्पतरं भवेच्च । नैवाद्रुतादुद्रुतमिदं भजतेऽल्पभावं तस्मान्मृषैव रजते ननु शुक्तिसत्त्वम् ॥ किं नीलगा अवयवा गगनेऽपरूपे तिष्ठन्ति येन गगनं मलिनं विभायात् । शुक्त्यम्बरादिरजतासितमुख्यभासा मिथ्यैव सत्यमतिभिः परिबाधितत्वात् ॥' अयमर्थः- शुक्तेस्त्रिवृत्कृतभूतकार्यत्वात्तत्र भूतत्रयावयवास्सन्तीति भूतत्रयशब्दवाच्यत्वं भूतत्रयात्मत्वं च तस्या अस्तुनाम- नैतावता तस्या घटपटकनकशुनकरजनरजकाङ्गारभृङ्गभृङ्गराजादिसर्वात्मत्वप्रयुक्ततत्तच्छब्दवाच्यत्वं सम्भवति- विरोधात् । तथाहि- किं शुक्तौ शुक्त्यवयवा रजतावयवाश्चैव सन्ति ? यद्वा घटावयवाः ? पटावयवाः ? कनकावयवाश्शुनकावयवा रजनावयवा अङ्गारावयवा भृङ्गावयवा भृङ्गराजनामकौषध्यवयवाश्चेत्यनन्तपदार्थावयवास्सन्ति ? आद्ये- शुक्तेश्शुक्तिरजतोभयात्मत्वे सत्यपि तदतिरिक्तघटपटाद्यात्मत्वासत्त्वान्न सर्वात्मत्वसिद्धिः । द्वितीये- शुक्तौ रजतप्रतीतिवद्घटपटादिप्रतीतिरपि भवेत् । नच रजतावयवानां बाहुल्याद्रजतप्रतीतिः, घटपटाद्यवयवानां तु स्वल्पत्वाद्घटपटाद्यप्रतीतिरिति वाच्यं, इदं रजतमिति प्रतीतिबलेन शुक्तौ रजतावयवान् कल्पयितुस्तव घटपटादिप्रतीत्यभावे कथं शुक्तौ घटपटाद्यवयवकल्पना स्यात् । किंच रजताद्यवयवैरेव शुक्तेरवयवित्वे शुक्त्यवयवा नैव स्युः । नच शुक्त्यवयवैर्बहुभी रजताद्यवयवैरल्पैरल्पतरैरल्पतमैश्च शुक्तिरूपावयविसिद्धिरिति वाच्यं, अवयवसमुदायसंयोगात्प्रागवयविन एवासत्त्वेन कथं शुक्त्यवयवसिद्धिः । शुक्तेरवयवा हि शुक्त्यवयवाः । नच शुक्तिरूपावयवाश्शुक्त्यवयवा इति अवयवानामेव शुक्तिपदवाच्यत्वं- तादृशावयवबाहुल्याच्चैकस्यावयविनश्शुक्तिरिति व्यपदेश इति वाच्यं, तर्हि शुक्तिरूपावयवानां शुक्तिशब्दवाच्यत्वमेव भवेन्न रजतादिशब्दवाच्यत्वमिति कृत्वा कथं सर्वस्य सर्वशब्दवाच्यत्वं स्यात् । कथं वा शुक्तिरूपावयवविषयकं रजतरूपावयवज्ञानं यथार्थं स्यात् । अपि च शुक्तौ चूर्णितायां यथा शुक्त्यणव उपलभ्यन्ते तथा रजताणवोप्युपलभ्येरन् । नचाल्पत्वादनुपलब्धिस्तेषामिति वाच्यं, अल्पत्वेनैवोपलब्धिर्भवेदेवेति । नच शुक्तिचूर्णगतानां शुक्त्यणूनां रजताणूनां चातिसादृश्याद्विवेकेनानुपलम्भः, अविवेकेन तु तदुपलम्भोस्त्यैवेति वाच्यं, तर्हि

शुक्तिचूर्णपुञ्जे कनकावयवास्ताम्रावयवाश्च सन्तीति तेषां वा सादृश्यादुपलम्भः किमिति नासीत् । नच सर्वस्य सर्वात्मत्वप्रतिज्ञां यथार्थं सर्वविज्ञानमिति प्रतिज्ञां च विहाय शुक्तौ रूप्यविज्ञानमेव यथार्थ- शुक्तौ रूप्यावयवसत्त्वेन शुक्तेरूप्यात्मत्वादित्युच्यत इति वाच्यं, तथासति दाहाद्युपायेन शुक्तिसमुदाया-त्सकाशाद्रजतार्थी रजतं प्राप्नुयादेवेति कृत्वा शुक्तिज्ञानात्तत्प्रवृत्तिबाधो माभूत् । किं कनकाणुप्रचुरं मधुपिष्टं परित्यजन्ति कनकार्थिनः । अपि च शुक्ताविदं रजतमिति ज्ञानस्य यथार्थत्वे नेदं रजतमिति ज्ञानमयथार्थं स्यादिति कथं सर्वविज्ञानं यथार्थं स्यात् ।

**ननु** शुक्तिगतं रजतभागं गृहीत्वा इदं रजतमिति ज्ञानं यथार्थं शुक्तिभागं गृहीत्वा नेदं रजत-मिति ज्ञानं च यथार्थमिति **चेन्मैवम्**--शुक्तिसाक्षात्कारानन्तरमपि पुरुषश्शुक्तिगतं रजतांशं गृहीत्वा रजत-मिदमित्येव किमिति न प्रतीयात्, नेदं रजतमित्येव नियमेन किमिति प्रतीयात् । नच रजतांशस्याग्रह-णादिति वाच्यं, अनिपुणं चक्षुषि शुक्तौ न्यस्तेपि यस्य ग्रहणमासीत्तस्य कथं सुनिपुणं चक्षुषः प्रणिधानेपि ग्रहणं न भवेदिति । हठाद्दर्शनाविषयोपि हि मण्यादिगतस्सूक्ष्मोर्थः चक्षुःप्रणिधानात्प्रतिभाति । तस्मा-त्कालात्ययापदिष्टमिदं वचनम् । शुक्त्यादौ रजतादिसद्भावश्श्रुतिबोधित इति वचनं तु श्रुतितदर्थानभिज्ञ-प्रतारकमेव- श्रुतौ क्वाप्यस्यार्थस्यादर्शनात्, त्रिवृत्करणादिप्रतिपादनमात्रेणास्यासिद्धेश्च ।

**यदुक्तं** यद्यत्सदृशं तत्तदेकदेशभागिति, **तदसत्**—अन्यद्रव्यस्यान्यद्रव्यैकदेशभाक्त्वायोगात्--नह्यन्यद्रव्यैकदेशस्ततो विच्छिन्नो भूत्वाऽपरद्रव्यं भजत इति कल्पयितुं शक्यम् । नच रजतैकदेशसमवेतैव शुक्तिर्जातेति वाच्यं, एवं शुक्त्येकदेशसमवेतमेव रजतं जातमिति वक्तव्यत्वात् । तथैव वदाम इति चेत्- तर्हि शुक्त्युदयात्प्राग्रजतं शुक्त्येकदेशभाक् न भवति, तथा रजतोदयात्प्राक् शुक्तिश्च रजतैकदेशभाक् न भवति । नचेष्टापत्तिः, किमादौ शुक्त्येकदेशरहितं रजतमस्ति? यद्वा रजतैकदेशरहिता शुक्तिरस्ति? नतु पक्षद्वयमपि सङ्गतं- अन्यतरस्य निर्धारणायोगात् । नच द्वयमप्यनादि- जन्यत्वात् । नच द्वयमपि युगपदेव जातमिति वाच्यं, शुक्तिसमवेतं सद्रजतं रजतसमवेता च सती शुक्तिर्युगपदेव जज्ञे इत्युक्तौ समवेतयोश्शुक्तिरजतयोरुदयात्प्रागसमवेतयोस्तयोस्सत्त्वमभ्युपेयम् । नचेष्टापत्तिः, तदानीं शुक्तिरजत-भ्रमस्य निर्विषयत्वापत्तेः, असमवेतयोश्शुक्तिरजतयोस्समवायकर्तुरदर्शनाच्च- नहि पृथिव्यादिभूतत्रयस्य त्रिवृत्करणमिव शुक्तिरजतयोर्द्विवृत्करणं क्वापि श्रुतं स्मृतं दृष्टं वा- येन द्विवृत्कृतशुक्तिरजतकार्यत्वाच्छुक्तौ शुक्त्यंशाधिक्योपलम्भः, रजते रजतांशाधिक्योपलम्भः, शुक्तौ रजतांशाल्पत्वोपलम्भः, रजते शुक्त्यंशाल्प-त्वोपलम्भश्चेति वक्तुं शक्यते । तस्माद्यत्सदृशं तत्तदेकदेशभागित्ययुक्तम् । किं तु यद्यत्सदृशं तत्तदव-यवसदृशावयवविशिष्टमिति वक्तव्यं- अन्यथा रजतावयवशुक्तिकावयवयोर्मिथस्सादृश्यं च न स्यात् । अवयवेऽनवस्थादोषेणावयवान्तरानङ्गीकाराद्रजतावयवे शुक्त्यवयवैकदेशस्थितिः, शुक्त्यवयवे रजता[illegible]य-वैकदेशस्थितिश्च नास्तीति ।

**यदुक्तं** शुक्तिगतास्तैजसाणव एव रूप्यावयवा इति, **तदप्यसत्**—रूप्यस्यापि त्रिवृत्कृतभूत-कार्यत्वेन तैजसाणव एव रूप्यावयवा इति वक्तुमशक्यत्वात्- नहि रूप्यं केवलतैजसम् । नच शुक्तिगतं

चाकचक्यं शुक्तौ रूप्यांशसद्भावप्रयुक्तमिति वाच्यं, रूप्यगतं चाकचक्यं किमंशसद्भावप्रयुक्तमिति । नच स्वाभाविकमिति वाच्यं, तथा शुक्तिचाकचक्यस्यापि स्वाभाविकत्वात् । यदि तु तैजसांशप्रयुक्तमित्युच्यते, तर्हि तथैव शुक्तिचाकचक्यमपि तैजसांशप्रयुक्तमित्येवोच्यतां किमिति तत्र रूप्यांशसद्भावपरिकल्पनेन ।

**यदुक्तं** शुक्तौ शुक्त्यंशभूयस्त्वप्रयुक्तः शुक्तिव्यपदेश इति, **तदप्ययुक्तम्**—शुक्त्यंशस्य कथं शुक्त्यंश इति नाम । नच शुक्त्यंशत्वादेवेति वाच्यं, अंशिद्रव्यस्य शुक्तिरिति नाम्नि सिद्धे हि तदंशस्य शुक्त्यंशत्वं सिध्यति, तदेव न सिद्धमिति । अंशिद्रव्यस्य शुक्त्यंशभूयस्त्वे सिद्धे शुक्तिव्यपदेशसिद्धिः । अंशिद्रव्यस्य शुक्तिव्यपदेशे सिद्धे तदंशस्य शुक्त्यंशत्वसिद्धिरित्यन्योन्याश्रयात् । **यच्चोक्तम्**—शुक्तिरजतज्ञानयोर्बाध्यबाधकभावः शुक्तिभूयस्त्वसाकल्यवैकल्यग्रहप्रयुक्तो, नतु मिथ्यार्थसत्यार्थविषयत्वनिबन्धन इति, **तदप्यसाधु**— शुक्तौ शुक्त्यंशभूयस्त्वाच्छुक्तिरिति ज्ञानं बाधकं, रजतांशस्वल्पत्वाद्रजतमिति ज्ञानं बाध्यमिति वक्तुं न शक्यते- बहुषु ताम्रखण्डेष्वेकस्यां रूपिकयां सत्यामपीयं रूपिकेति ज्ञानस्य ताम्रखण्डज्ञानेन बाधादर्शनात् , ज्ञानमात्रे सत्यमिति वदता त्वया ज्ञानयोर्बाध्यबाधकभावस्य दुर्वचत्वाच्च । तस्मात्सत्यार्थविषयज्ञानेन मिथ्यार्थविषयज्ञानं सहैव विषयेण बाध्यत इति न सत्ख्यातिवादसिद्धिः । **सुदर्शनस्तु**—साधारणाकारग्रहणभेदाग्रहदोषादृष्टानि सर्ववादिभिरभ्युपेयानि शुक्त्यादिषु प्रतीयमानानामवयवानां रजताद्यवयवत्वं सम्प्रतिपन्नरजताद्यवयवसुसदृशाकारत्वमेव, नतु रजतादिभ्य आनीय निवेशितत्वम् । एवमेव पूतीकादिषु प्रतीयमानानां सोमलताद्यवयवानामपि सोमाद्यवयवत्वं नाम सम्प्रतिपन्नसोमलताद्यवयवसौसादृश्यमेव । तच्च स्फुटतरप्रतीतिसिद्धमबाधितं च- नहि शुक्तिशकलपूतीकादिषु रजतसोमलतादिसादृश्यं नास्तीति बाधकप्रत्यय उदेति- शुक्त्यवयवेषु शुक्तित्वव्यवहारावुपपन्नौ तत्र विरुद्धजात्यन्वयाभावात्- **इति**, मदुक्तार्थमेवोक्त्वापि शुक्तौ रजतमल्पमस्तीति शुक्तौ रजतबुद्धिर्यथार्थेति चोपसञ्जहारेत्यहो ! भण्डत्वमस्य ।

**यदुक्तमेतेन**—नेदं रजतमित्यत्र नञर्थः शुक्तित्वमेव- यदाकारग्रहणेन पूर्वप्रतिपन्नायाः प्रवृत्तेर्निवृत्तेर्वा निवारणं स एवाकारो नञर्थः- सचाकारः प्रतियोगिसापेक्षः नेदं रजतमित्यादिशब्दैः तदनपेक्षैश्शुक्त्यादिशब्दैश्च व्यवह्रियत इति, **तत्रोच्यते**—किं नञश्शुक्तित्वमर्थ इत्युच्यते ? यद्वा नेदं रजतमिति वाक्यस्थनञः ? अथवा नेदं रजतमिति पदत्रयात्मकवाक्यस्य ? नाद्यः- न घट इत्यादावपि शुक्तिर्घट इत्याद्यर्थापत्तेः । न द्वितीयः- नेदं रजतमिति वाक्यस्य इदं रजतं शुक्तिरित्यर्थापत्तेः । नचेष्टापत्तिः— इयं शुक्तिरिति पुरोवर्तिद्रव्यमेव शुक्तित्वेन प्रतिपद्यते- पुरुषो न तु रजतं शुक्तित्वेन- तथासति शुक्तौ रजतज्ञानस्येव रजते शुक्तिज्ञानस्याप्ययथार्थत्वापत्तेः । नच रजतत्वेन प्रतिभातमिदं वस्तु शुक्तिरेवेति तदर्थ इति वाच्यं, किं तद्रजतत्वेन प्रतिभातं वस्तु- किं रजतं यद्वा शुक्तिः ? आद्ये नेदं रजतमित्यस्यैव भ्रमत्वं स्यात् । द्वितीये- त्वमप्यन्यथाख्यातिमतप्रविष्ट एवासि- शुक्तिरेव रजतत्वेन ख्यातेत्यभ्युपगमात् । तृतीये- वाक्यार्थज्ञानस्य पदार्थज्ञानसव्यपेक्षत्वाद्ब्रूहि तावत्पदत्रयस्य प्रत्येकमर्थं- किं नञ्पदस्य सादृश्यमर्थः ? किं वा अन्यत्वम् ? यद्वा अल्पत्वम् ? अथवा विरोधित्वम् ? उत अप्राशस्त्यम् ? अहोस्विद्-

भावः ? एते षडेव हि नञ्पदार्थाः- 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाःषट्प्रकीर्तिता' इति स्मरणात् । नाद्याश्चत्वारः- रजतसदृशं रजतादन्यत्- रजतादल्पं रजतविरोधि वा वस्तु शुक्तिरेवेति नियमाभावेन शुक्तित्वरूपवाक्यार्थासिद्धेः । नान्त्यौ द्वौ- तव मते अभावानभ्युपगमादप्राशस्त्यस्यापि प्राशस्त्याभावरूपत्वेनाभावत्वाच्च ।

ननु इदंशब्दस्य शुक्तित्वमर्थः- नञस्सादृश्यमर्थः- तथा च इदं न रजतमिति वाक्यस्य रजतसदृशी शुक्तिरित्यर्थः । तथाच रजताभेदेनेतः प्राग्य आसीच्छुक्तिग्रहः तस्य बाधोऽनेनेति, **मैवम्**—नञश्शुक्तित्वमर्थ इति स्वोक्तिव्याघातात् । इदम्पदस्य च पुरोवर्तिवस्तुसामान्यवाचिनश्शुक्तिरूपवस्तुविशेषवाचकत्वायोगाच्च । नहि शुक्तिर्न रजतमिति वाक्यप्रयोगः, येनोक्तार्थलाभस्स्यात् । तस्माच्छुक्तिं दृष्ट्वा रजतमिति भ्रान्तस्य पुरुषस्य नेदं रजतं, किंतु शुक्तिरेवेति शुक्तिपदघटितासप्रयुक्तवाक्यश्रवणादेव पुरोवर्तिवस्तुनि रजतभ्रान्तिनिवृत्तिपूर्वकशुक्तिप्रमोदयः । यदा तु चक्षुःप्रणिधानादिना स्वयमेव शुक्तिरिति प्रतिपद्यते भ्रान्तः, तदापि नेदं रजतमिति न प्रतिपद्यते, किं तर्हि नेदं रजतं, किंतु शुक्तिरित्येव प्रतिपद्यते । तस्मात्प्रतियोगिसापेक्षैर्नेदंरजतमित्यादिशब्दैश्शुक्त्यादयो व्यवह्रियन्त इत्ययुक्तम् । नञर्थप्रतियोगिनो रजतस्य सत्त्वेन नेदंरजतमितिवाक्यस्य प्रतियोगिसापेक्षत्वाभावाच्च । तस्मान्नञश्शुक्तित्वं नार्थः ।

अथ **यदुक्तं रामानुजेन**—तत्तत्पुरुषानुभाव्याः स्वाप्नाः पदार्थाश्चेश्वरेणैव सृष्टा इति, **तदर्थाङ्गीकारविषयमेव**—तथाहि 'पुरत्रये क्रीडति यस्तु जीवस्ततस्तु जातं सकलं विचित्रम् । आधारमानन्दमखण्डबोधं तस्मिन् लयं याति पुरत्रयं' चेति श्रुतेर्जीवस्यैव सृष्टिकर्तृत्वश्रवणात् । 'जीवस्येश्वरकर्तृत्वं ज्ञानकर्मतपोबला'दिति स्मरणात् । यावत्पर्यन्तं जीवस्याज्ञानं वर्तते तावत्पर्यन्तमविद्यादशायामेव जीवेश्वरजगद्रूपद्वैतप्रतीतिरिति कृत्वा जीवाज्ञानसृष्टमेव सर्वमीश्वरेण सह । नच जीवानां नानात्वात्केनेदं सृष्टमिति वाच्यं, एक एव जीवस्तदन्ये जीवाभासा एवेति । नच अनेकेषु जीवेषु मध्ये को मुख्यो जीवः, केचाभासजीवा इति वाच्यं, यथा स्वप्नप्रपञ्चदृगेक एव मुख्यो जीवः अन्ये त्वाभासाः तथा जाग्रत्प्रपञ्चदृगपीति । नच स्वप्ने स्वप्नदृगेक एव स्वप्नप्रपञ्चं स्वैकानुभाव्यं पश्यतीति युक्तम् । जाग्रत्प्रपञ्चस्तु अनेकानुभाव्यत्वात्कथमेक एव पश्यतीति वक्तुं शक्यत इति वाच्यं, स्वप्नेपि स्वदृष्टप्रपञ्चमन्येपि पश्यन्तीत्येव स्वप्नदृङ्मन्यते, नतु न पश्यन्तीति । एवं जाग्रत्यपि जाग्रद्द्रष्टा स्वदृष्टप्रपञ्चमन्ये पश्यन्तीति मन्यते, नतु वस्तुतस्ते पश्यन्तीति । तस्माज्जीव एव स्वप्नजागरयोः स्वाज्ञानवशाज्जीवाभासानीश्वरं जगच्च सृजति । यदा तु ज्ञानेनाज्ञाननाशस्तदा सच्चिदानन्दाद्वयब्रह्मरूपेणावशिष्यत इति कृत्वा जीवाज्ञानमयः स्वप्नप्रपञ्चो मिथ्यैव- प्रतीतिसमनियतत्वाद्रज्जुसर्पवदिति । प्रतीतिसमनियतत्वं च जगतः प्रतीतिमात्रशरीरत्वमेव- नहि प्रतीतिव्यतिरेकेण कश्चित्पदार्थोस्ति । अत एवोक्तं बादरायणेन- 'यथाऽर्थेन विना पुंसो मृषैवात्मविपर्ययः ॥ प्रतीयत उपद्रष्टुः स्वशिरच्छेदनादि'नेति । नच स्वप्न एव जगदभावः प्रतीतिं विना जाग्रति तु ज्ञानव्यतिरेकेण ज्ञेयमस्त्यैवेति याच्यं, 'तस्मान्न विज्ञानमृतेस्ति किंचि'दिति विष्णु-

पुराणात् । नच शुक्तिरजतस्येव सत्यरजतस्यापि प्रतीतिव्यतिरेकेणासत्त्ववचनमनुभवविरुद्धमिति वाच्यं, जाग्रत्प्रपञ्चस्येव स्वप्नप्रपञ्चस्यापि सत्यत्ववचनमनुभवविरुद्धं न भवति किं- नहि लोकः स्वप्नदृष्टं वस्तु यथार्थमिति मन्यते- स्वप्नप्रपञ्च ईश्वरसृष्ट इति मतेपि जीवसृष्टेश्वरसृष्ट एवेति न जीवसृष्टत्वहानिः- यथा विष्णुपुत्रब्रह्मसृष्टस्यापि जगतो विष्णुसृष्टत्वव्यवहारः तद्वदिति- अतो न श्रुतिसूत्रादिविरोधः । नचेश्वर-परतन्त्रजीवसृष्टत्वमीश्वरस्य कथमिति वाच्यं, यथा प्रजा एव स्वान्यतमं कश्चित्प्रभूकृत्य तेन नियम्यन्ते, तथा जीव एव स्वसृष्टेश्वरपरतन्त्रो भवति- मातुः स्वपुत्रपारतन्त्र्यं न दृश्यते किम् ? नच किञ्चिद्‌ज्ञ-जीवस्य कथं सर्वज्ञेश्वरस्रष्टृत्वमिति वाच्यं, मूर्खस्य पितुः पण्डितपुत्रस्रष्टृत्वदर्शनात् । नचासर्वशक्ति-र्जीवः कथं सर्वशक्तिमीश्वरं स्रष्टुं शक्नुयादिति वाच्यं, अल्पबलस्यापि पितुः प्रबलबलपुत्रस्रष्टृत्वदर्शनात् । किं बहुना- सर्वमपि दुर्घटं जीवाज्ञानं घटयत्येव तद्ध्यघटितघटनापटीयः । नचेश्वरमायैव तादृशीति वाच्यं, ईश्वरमायाया एव तादृशत्वे ईश्वरस्रष्टृ जीवाज्ञानं कीदृशं भवेदिति । नचाकाशादिभूतस्रष्टृत्वं जीवस्य न श्रूयत इति वाच्यं, 'आत्मन आकाशस्सम्भूत' इति श्रुतेः ।

**वस्तुतस्तु** जीव ईश्वरश्च नित्य आत्मैक एवेति कृत्वा न जीवस्येश्वरस्रष्टृत्वं नापीश्वरस्य जीव-सृष्टत्वं, किं तु जीवदेहा ईश्वरदेहाश्च सर्वे जीवाज्ञानसृष्टाः- एतदभिप्रायेणैव जीवेनेश्वरः सृष्ट इत्युक्तम्। नच देवमनुष्यादयो जीवदेहा एव- तत्तत्कर्मानुगुण्येनेश्वरेण सृष्टा इति वाच्यं, रामकृष्णादय ईश्वरदेहा एव स्वपुण्यकर्मादिसहकृताज्ञानेन जीवेन सृष्टा इति । किं जीवः स्वशिल्पनैपुण्येनेदानीमीश्वरविग्रहान्न निर्माति, मृच्छिलादारुभिः ? किं वा तानभ्यर्च्य भवादृशाः स्वस्वकामान्न लभन्ते ? तस्माद्धोक्त्रा जीवे-नाज्ञानात्स्वकर्मानुगुणं सर्वं भोग्यजातं निर्मितं, न त्वीश्वरेण- तस्याभोक्तुः सृष्ट्या प्रयोजनाभावात्- 'प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तत' इति हि न्यायः । किं पुनस्सर्वज्ञ ईश्वरः । किं च यथा जीवस्य शेषिणः पुत्रभार्यादिदेहजातं शेषभूतं भोग्यत्वात्तथा ईश्वरदेहोपीति कृत्वा सर्वशेषिणा जीवेनैव स्वशेषभूतं सर्वं सृष्टमीश्वरेण सह । नचेश्वरदेहो जीवभोग्यो न भवतीति वाच्यं, गोपिकाभिः कृष्णदेहस्य भुक्त-त्वात् । अन्ये च नन्दादयस्तद्देहं दृष्ट्वा स्पृष्ट्वा च प्रमुदिता इति दर्शनात् । इदानीमपि ईश्वरीयार्चा-विग्रहस्य वैष्णवैरन्यैश्च मूढैर्दर्शनस्पर्शनादिना भुज्यमानत्वात् । नच ते न मूढा इति वाच्यं, 'यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् । हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति सः' इति भागवता-दर्चार्चका मूढा एव । अलं शाखाचंक्रमणेन- सर्वमपि जगदीश्वरेण सह जीवाज्ञानकार्यत्वान्मिथ्यैवेति स्थिते किंपुनः स्वाप्नार्थस्य मिथ्यात्वं वक्तव्यं, शुक्तिरजतरज्जुसर्पादीनां चेति संक्षेपः ॥

## पीतश्शङ्खः तिक्तो गुडः इत्यादीनामपि अयथार्थज्ञानत्वोपपादनम् ।

**अथ** पीतश्शङ्ख इति ज्ञानमपि यथार्थमेव- नयनवर्तिपित्तद्रव्यसम्भिन्ना नायनरश्मयश्शङ्खेन संयु-ज्यन्ते- तत्र पित्तगतपीतिमाभिभूतश्शङ्खगतशुक्लिमा न गृह्यते- अतस्सुवर्णानुलिप्तशङ्खवत्पीतश्शङ्ख इति प्रतीयते- पित्तद्रव्यं उद्भूतपीतिमा चातिसौक्ष्म्यात्पार्श्वस्थैर्न गृह्यते । पित्तोपहितेन तु स्वनयननिष्क्रान्त-तयातिसामीप्यात्सूक्ष्ममपि गृह्यते- तद्ग्रहणजनितसंस्कारसचिवनायनरश्मिभिर्दूरस्थमपि गृह्यत इति

**तदपि मन्दम्**—यदि पित्तोपहतदेवदत्तनयनरश्मिभिः व्याप्तत्वात्सुवर्णानुलिप्त इव शङ्खः पीतस्स्यात्तर्हि शङ्खसमीपवर्तिनो देवदत्तसमीपन्यस्तदृशो वा यज्ञदत्तस्यापि चक्षुर्दोषरहितस्य शङ्खः पीत इति प्रतीतिर्भवेत् । नचातिसौक्ष्म्यात्तच्छङ्खमावृत्य स्थितोपि पीतिमा सन्निहितेनापि यज्ञदत्तेन न गृह्यत इति वाच्यं, तथाविधस्यातिसूक्ष्मस्य पीतिम्नः कथं शङ्खगतशुक्लिमाभिभावकत्वमिति ।

अथ कथं पित्तोपहतनयनस्य शङ्खः पीत इति भ्रमोदय इति, **उच्यते**—शङ्खप्रतिस्फालितानां नायनरश्मीनां नयनगतपित्तद्रव्यपीतिमग्रहणेन तदुपपत्तेः । **यच्चोक्तं** रक्तः स्फटिकमणिरिति ज्ञानमपि यथार्थमेव- जपाकुसुमप्रभाभिभूततया तस्य रक्तत्वादिति, तदपि न- जपाकुसुमसन्निधानरूपदोषप्रयुक्त एव स्फटिके रक्तताविभासो यथा जिह्वादोषप्रयुक्तो गुडे तिक्तताविभास इति- नहि दोषजन्यं ज्ञानं यथार्थं भवति । नचानुभवसिद्धं स्फटिकरक्तत्वं, गुडतिक्तत्वं वा कथमयथार्थं स्यादिति वाच्यं, प्रमाणजन्यानुभवसिद्धमेव यथार्थं, नतु दोषजन्यानुभवसिद्धमिति सिद्धान्तात् । नचानुभवमात्रसिद्धं सर्वमपि यथार्थमेवेति वाच्यं, पुत्रस्ते मृत इति विप्रलम्भकवाक्यश्रवणजन्यज्ञानसिद्धजीवत्पुत्रमरणस्यापि यथार्थत्वप्रसङ्गात् । नचाप्तवाक्यश्रवणजन्यज्ञानसिद्धं यथार्थमिति वाच्यं, तर्हि दोषसम्प्रयुक्तचक्षुरादिकारणजन्यज्ञानसिद्धमप्ययथार्थमेवेति स्थितम् । तस्मात्स्फटिके रक्तताविभासो दोषकृत इत्ययथार्थ एव । तथा मरीचिकाजलज्ञानमप्ययथार्थमेव । न च तेजःपृथिव्योरप्यम्बुनो विद्यमानत्वादिन्द्रियदोषेण तेजःपृथिव्योरग्रहणाददृष्टवशाच्चाम्बुनो ग्रहणाद्यथार्थं तदिति वाच्यं, भूतत्रिवृत्करणसिद्धं तेजसि वह्न्यादौ जलपृथिव्यंशद्वयं पृथिव्यां तेजोजलांशद्वयं जले तेजःपृथिव्यंशद्वयं च नैव ग्रहीतुं शक्यते पामरैः पशुभिश्च । तथासति तेजःपृथिव्योस्तेजःपृथिव्यंशावगृहीत्वा जलांशं गृह्णन्ति दोषवशात्पामराः पशवश्चेति महतामुपपादनमिदं- नहि तेजः पृथिवीगतं सूक्ष्मांशभूतमम्बु वीचीतरङ्गादियुक्तकासारजलम् । मध्याह्नसमये मरीचिकाभिर्व्याप्तायां मरुभूमौ जलवीचीतरङ्गादियुक्तं कासारतटाकादिजलं प्रतीयते- भ्रान्तश्च मरुभूमिं गत्वा तत्र सूक्ष्ममप्यम्बु न पश्यति- तस्मान्मरीचिकासंपृक्तमरुभूमौ जलज्ञानं मिथ्यैव ।

**यदुक्तं** अलातचक्रेप्यलातस्य द्रुततरगमनेन सर्वदेशसंयोगादन्तरालाग्रहणात्तथा प्रतीतिरुपपद्यते-- चक्रप्रतीतावप्यन्तरालाग्रहणपूर्वकतत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव- क्वचिदन्तरालाभावादन्तरालाग्रहणं-- क्वचिच्छैघ्र्यादग्रहणमिति विशेषः- अतस्तदपि यथार्थमिति, **नैतत्**—अलातस्य द्रुततरगमनेपि तत्तद्देशं विहायैवान्यान्यदेशं गतमलातमिति कृत्वा नैकदा सर्वदेशसंयोगः- नहि चक्रस्येवालातस्य सर्वदेशसंयोगित्वं, येन चक्राकारः प्रतीयमानस्तस्य सत्यो भवेत् । अलातस्य दण्डाकारोहि सत्यः, अन्तरालस्य सत्वेपि शैघ्र्यादग्रहणमिति यदुक्तं तत्र सतोप्यग्रहणमयथार्थज्ञानमेव- तत्र शैघ्र्यदोषस्तु हेतुरस्तु । अत्राहुर्व्यासपुत्रशुकशिष्यगौडपापादाचार्याः—'ऋजुवक्रादिकाभासमलातस्पन्दितं यथा । ग्रहणग्राहकाभासं विज्ञानस्पन्दितं तथा ॥ अस्पन्दमानमलातमनाभासमजं यथा । अस्पन्दमानं विज्ञानमनाभासमजं तथा ॥ अलाते स्पन्दमाने वै नाभासा अन्यतो भुवः । न ततोन्यत्र निष्पन्दान्नालातं प्रविशन्ति ते ॥ न निर्गता अलातात्ते द्रव्यत्वाभावयोगतः । विज्ञानेपि तथैव स्युराभासस्याविशेषतः ॥' इति- अयमर्थः- यथा लोके अलात-

स्पन्दितमुल्काचलनं- ऋजुवक्रादिकाभासं- ऋजुवक्रादिप्रकाराभासं- आदिशब्दाच्चक्राद्याकारग्रहणं- तथा-विज्ञानस्पन्दितं- विज्ञानस्य निरवयवस्य विभुनोऽचलस्याप्यविद्यया कृतं स्पन्दनं ग्रहणग्राहकाभासं विषयि-विषयाभासं भवति- यथा अस्पन्दमानं स्पन्दनवर्जितं तदेवालातमनाभासमजमृज्वाद्याकारेणाजायमानं भवति, तथा अविद्यया स्पन्दमानमविद्योपरमेऽस्पन्दमानं विज्ञानं जात्याद्याकारेणानाभासमजमचलं भविष्यति । किं च यदा खल्वलातं स्पन्दमानमवतिष्ठते तदा तस्मिन्नन्यतो देशान्तरादागत्य आभासा भवन्तीति न शक्यं वक्तुं- ऋजुवक्राद्याभासानां देशान्तरादागमनस्यानवगमात् । यदा तदेवालातं निष्प-न्दनं स्पन्दनवर्जितं वर्तते तदा ततोन्यत्राभासा भवन्तीत्यपि वक्तुं न शक्यं- अनुपलम्भाविशेषात् । नचा-भासास्तस्मिन्नेवालाते लीयन्ते- तदनुपादानत्वात् । यदि हि स्पन्दननिमित्तमलातमुपादानं तदा निमित्ता-भावमात्रान्नैमित्तिकाभावादर्शनादृजुवक्राद्याकाराः स्पन्दनाभावेप्यलाते भवेयुरित्यर्थः । किं च ते आभासा द्रव्यत्वाभावयोगतः द्रव्यत्वाभावयुक्तेः वस्तुत्वाभावादित्यर्थः । अलातान्न निर्गताः वस्तुनो हि प्रवेशादि सम्भवति नावस्तुनः । विज्ञानेपि जात्याद्याभासास्तथैव स्युः- आभासस्याविशेषतः तुल्यत्वात् । यथा असत्सु ऋज्वाद्याभासेषु ऋज्वादिबुद्धिर्दृष्टा अलातमात्रे तथा असत्स्वेव जात्यादिषु विज्ञानमात्रे जात्यादि-बुद्धिर्मृषैवेति समुदायार्थः ।

**अथ यदुक्तम्**—दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था- दर्पणादिप्रतिहतगतयो हि नायन-रश्मयः दर्पणादिदेशग्रहणपूर्वकं निजमुखादि गृह्णन्ति- तत्राप्यतिशैघ्र्यादन्तरालाग्रहणात्तथा प्रतीतिरिति, **नैतदपि युक्तम्**—ग्रीवास्थनिजमुखस्य दर्पणगतत्वेन सव्यदक्षिणभागयोर्दक्षिणसव्यभागत्वेन चान्यथा-ग्रहणात् । अन्यस्यान्यथाग्रहणं ह्ययथार्थज्ञानम् । अन्तरालाग्रहणस्य भ्रान्तित्वं प्रागेवोक्तम् । **यच्च** दिङ्मोहेपि दिगन्तरस्यास्यां दिशि विद्यमानत्वाददृष्टवशेनैतद्दिगंशवियुक्तो दिगन्तरांशो गृह्यते- अतो दिगन्तरप्रतीतिर्यथार्थैवेति, **तन्न**—प्राच्यां दिशि पश्चिमा दिग्वर्तत इति वाक्यं श्रुत्वा बाला अपि परिह-सेयुः । नच सर्वत्र सर्वदिक्सद्भावेपि प्राच्यादिव्यवहारः प्रतियोग्यपेक्षयेति वाच्यं, प्राचादिव्यवहारात्प्रा-ग्दिग्भेदस्यैवाभावेन सर्वत्र सर्वदिक्सद्भावेपीति वक्तुमशक्यत्वात्- आकाशो हि सर्वत्रास्ति तस्य सूर्योदया-स्तमयाद्युपाधिवशात्प्राक्पश्चिमादिदिग्व्यवहारः । तथा च प्रागादिदिक्षु सर्वत्राकारसत्त्वेपि न पश्चिमादि-दिगन्तरसत्त्वमिति कृत्वा प्राच्यां दिशि पश्चिमादिदिक्प्रतीतिरयथार्थैव । अत एव तस्या दिङ्मोह इति व्यवहारः । दिङ्मोहो हि दिग्भ्रमः- भ्रमस्यापि प्रमात्वं साधयतस्तवाहो ! साहसिकता । **यच्च** द्विचन्द्र-ज्ञानादावपि अंगुल्यवष्टम्भतिमिरादिभिर्नायनतेजोगतिभेदेन सामग्रीभेदात्सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्र-ग्रहणद्वयहेतुर्भवति, तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति- द्वितीया तु किंचिद्वक्रगतिश्चन्द्रसमीप-देशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति- अतस्सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च द्वौ चन्द्राविति भवति प्रतीतिविशेषः- देशान्तरस्य तद्विशेषणत्वं देशान्तरस्यागृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति- तत्र सामग्रीद्वित्वं पारमार्थिकं- ग्रहणद्वित्वेन चन्द्रस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकं- तत्र विशेषणद्वयविशिष्टचन्द्रग्रहणद्वयस्यैक एव चन्द्रो ग्राह्य इति

ग्रहणे प्रत्यभिज्ञानवत्- केवलचक्षुषस्सामर्थ्याभावाच्चाक्षुषज्ञानं तथैवावतिष्ठते, द्वयोश्चक्षुषोरेकसामग्र्यन्तर्भावेपि तिमिरादिदोषभिन्नं चाक्षुषं तेजस्सामग्रीद्वयं भवतीति कार्यकल्पं- अपगते तु दोषे स्वदेशविशिष्टचन्द्रस्यैकग्रहणवेद्यत्वादेकश्चन्द्र इति भवति प्रत्ययः- दोषकृतं तु सामग्रीद्वित्वं, तत्कृतं ग्रहणद्वित्वं तत्कृतं ग्राह्याकारद्वित्वं चेति निरवद्यम् । अतस्सर्वं विज्ञानजातं यथार्थमिति सिद्धं- इति, **तन्न**— नास्माभिर्भ्रमः प्रमा वा कारणं विना न जायत इत्युक्तं, येन त्वयैवमुपन्यासः क्रियेत । एवमेवमयमयं भ्रमो जायत इति । किंतु ज्ञानकारणतयाऽभिमततत्तत्कारणसामग्र्यतिरिक्तदोषरूपकारणजन्यं ज्ञानं भ्रम इत्युच्यते। त्वया च द्विचन्द्रज्ञानादेर्दोषसहकृतकारणसामग्रीजन्यत्वमभ्युपेतमिति भ्रमत्वं सिद्धम् । तथा यावद्व्यवहारं योर्थस्सत्यः तद्विषयज्ञानं यथार्थमित्युच्यते । चन्द्रद्वित्वादिकं तु प्रतीतिकाले एव सत्यमिव भवति, नतु यावद्व्यवहारं- नहि द्वौ चन्द्रौ सत्यौ रज्जुसर्पस्सत्यः, शुक्तिरजतं सत्यं, स्वप्नरथादयस्सत्या इति कोप्यनुन्मत्तः प्रत्येति । भ्रमेऽपगते सति मया दृष्टं द्विचन्द्रादिकं मिथ्यैवेति लोकः प्रत्यभिजानाति । तस्माच्चन्द्रद्वयादेरयथार्थत्वात्तद्विषयं ज्ञानमप्ययथार्थमेव । दोषकृतं तु सामग्रीद्वित्वमिति वदन्नेव सामग्रीद्वित्वं पारमार्थिकमिति यदवोचत्तेन तस्य स्ववचोव्याघातानभिज्ञताऽप्राकाशि- नहि दोषकृतः पारमार्थिको भवति, किंतु स्वाभाविक एव पारमार्थिकः । **एतेन** ग्रहणद्वित्वं ग्राह्याकारद्वित्वं च पारमार्थिकमिति **प्रत्युक्तम्**-- दोषकृतत्वेन सामग्रीद्वित्वस्यैवापारमार्थ्ये कथं सामग्रीकृतग्रहणद्वित्वस्य तत्कृतचन्द्रद्वित्वस्य च पारमार्थिकत्वं भवेदिति । नच दोषस्य तिमिररोगादिरूपस्य सत्यत्वात्तत्कृतं सर्वं सत्यमेव स्यादिति वाच्यं, न वयमविवादशायां तिमिरादिदोषो नास्तीति तत्प्रयुक्तद्विचन्द्रादिभ्रमो नास्तीति वा ब्रूमः- किं तु द्विचन्द्रादि नास्तीति ब्रूमः- तथा हि- किं तिमिरादेः दोषत्वं पारिभाषिकः? यद्वा यथार्थज्ञानजनकत्वप्रयुक्तम्? अथवाऽयथार्थज्ञानजनकत्वप्रयुक्तम्? आद्ये- तिमिरादेस्स्वतो दोषत्वाभावात्तन्निवृत्त्यर्थमौषधसेवादिकं कोपि न कुर्यादेव । वितिमिरनेत्र एकमेव चन्द्रं पश्यति अहंपुनश्चन्द्रद्वयमिति कृत्वा सुकृतवशान्मम सम्प्राप्तोयं तिमिरदोषस्सदाप्येवमेव तिष्ठत्विति स्वाभीष्टां विष्ण्वादिदेवतां प्रार्थयेतैव तिमिरदूषितनेत्रः । अन्योपि तस्येव ममापि तिमिरदोषो जायतामिति कामयेतैव । न द्वितीयः- यथार्थज्ञानजनकस्य दोषत्वं कालात्ययापदिष्टमिति । अतः परिशिष्टस्तृतीयः । एवं तिमिरादेरयथार्थज्ञानजनकत्वेन दोषत्वादेव तज्जन्यं द्विचन्द्रादिज्ञानमयथार्थज्ञानमिति सिद्धम् । नच चन्द्रद्वित्वाद्विद्विचन्द्रज्ञानं सत्यमिति वाच्यं, चन्द्रद्वित्वस्य प्रत्यक्षादिविरुद्धत्वात् । नच देशद्वयविशिष्टत्वेनैकोपि चन्द्रो द्वेधा भवतीति वाच्यं, तथासति सञ्चारवशाच्चन्द्रोऽनन्तदेशविशिष्टो भवतीत्यनन्ता एव चन्द्राः स्युः । नच युगपद्देशद्वयविशिष्टत्वेन चन्द्रद्वित्वमिति वाच्यं, एकस्य चन्द्रस्य युगपद्देशद्वयवैशिष्ट्यासम्भवात्- यस्मिन् प्रदेशे यदा चन्द्रस्स्थितस्तदैव स कथं प्रदेशान्तरे भवेत् । नच सामग्रीभेदाच्चन्द्रदेशभेद इति वाच्यं, चक्षुर्गतसामग्रीद्वित्वस्य गगनगतचन्द्रदेशभेदाप्रयोजकत्वात् । **एतेन**- एका सामग्री चन्द्रं स्वदेशविशिष्टं गृह्णाति, द्वितीया तु स्वदेशवियुक्तमिति **प्रत्युक्तम्**--एकस्यैव चन्द्रस्य एकस्मिन्नेव क्षणे स्वदेशविशिष्टत्ववियुक्तत्वयोरयोगात् । **किंच** या स्वदेशवियुक्तं चन्द्रं गृह्णाति सा किं देशान्तरविशिष्टं गृह्णाति? उत निर्देशमेव?

आद्ये- कथमन्यदेशविशिष्टस्यान्यदेशविशिष्टत्वेन ग्रहणम् । द्वितीये- कथं निराधाराधेयग्रहणम् । कथं वा देशं विना चन्द्रस्य सत्त्वम् । तस्मादेकस्य चन्द्रस्य चन्द्रद्वयत्वेन स्वदेशविशिष्टचन्द्रस्य स्वदेशवियुक्तत्वेन अन्यदेशविशिष्टत्वेन च ग्रहणमयथार्थज्ञानमेव । अतएव तस्यैकश्चन्द्र इति ज्ञानबाध्यत्वम् । तस्मादबाधितार्थविषयं ज्ञानमेव यथार्थं- तस्यैव ज्ञानबाध्यत्वाभावात् । नचैवं ब्रह्मण एकस्यैव अबाधितार्थत्वात्तद्विषयं ज्ञानमेकमेव यथार्थमिति वाच्यं, इष्टापत्तेः । नच घटादिज्ञानस्य कथं यथार्थज्ञानत्वव्यवहार इति वाच्यं, यावद्व्यवहारं घटादेरबाधितार्थत्वादिति । नचैवं यावत्प्रतिभासमबाधितार्थत्वाद्रज्जुसर्पादेस्तद्विषयं ज्ञानमपि यथार्थमेव भवेदिति वाच्यं, इष्टापत्तेः । अत एव खलु वस्तु त्रिविधमित्युक्तं- पारमार्थिकं, व्यावहारिकं, प्रातिभासिकं चेति । तत्र पारमार्थिकं ब्रह्म, व्यावहारिकं जीव ईशो जगच्च, प्रातिभासिकं रज्जुसर्पादि स्वप्नरथादि चेति विशेकः । तत्र पारमार्थिकं परमार्थसत्यं, व्यावहारिकं परमार्थतोऽसत्यं- व्यवहारतस्सत्यं, प्रातिभासिकं तु परमार्थव्यवहाराभ्यामसत्यं- प्रतिभासतः केवलं सत्यम् । एवं व्यावहारिकप्रातिभासिकपदार्थयोरौपाधिकसत्यत्वेसत्यपि निरुपाधिकसत्यत्वाभावान्मिथ्यात्वं, ब्रह्मण एकस्यैव सत्यत्वं- तच्च श्रुत्यैवोक्तं- 'तत्सत्यं अतोन्यदार्त'मिति । एवं ब्रह्मान्यस्य सर्वस्य मिथ्यात्वादेव ब्रह्मान्यसर्वविषयकं सर्वं ज्ञानजातमयथार्थमेव । तत्र व्यावहारिकवस्तुज्ञानस्य सत्यत्वमापेक्षिकं- प्रातिभासिकवस्तुज्ञानदृष्ट्या तस्य सत्यत्वात् । तथा मिथ्यात्वमप्यापेक्षिकमेव- ब्रह्मज्ञानदृष्ट्या मिथ्यात्वात् । प्रातिभासिकवस्तुज्ञानस्य तु यत्किञ्चिदप्यपेक्ष्यसत्यत्वाभावान्मिथ्यात्वमेव । ब्रह्मज्ञानस्य तु यत्किञ्चिदपेक्ष्यमिथ्यात्वाभावात्सत्यत्वमेवेति विवेकः । तस्मादयथार्थवस्तुविषयकं सर्वं ज्ञानमयथार्थमेवेति **स्थितम्** ।

## निर्दुष्टप्रमाणभूतागमगम्येन ब्रह्मणा सृष्टाः भोग्यपदार्थास्सर्वेपि सत्याः इति रामानुजसिद्धान्तः- तत्खण्डनम् ।

**अथ यदुक्तम्**—प्रत्यक्षानुमानागमाख्यं प्रमाणजातं- आगमगम्यं च निर्दोषं सगुणं सत्यसङ्कल्पं च परं ब्रह्माभ्युपगच्छतां नः किं न सेत्स्यति, किं वा नोपपद्यते- भगवता हि परात्परेण क्षेत्रज्ञपुण्यपपानुगुणं तद्भोग्यत्वायाखिलं जगत्सृजता सुखदुःखोपेक्षाफलानुभवानुभाव्याः पदार्थाः सर्वसाधारणानुभवविषयाः केचन तत्तत्पुरुषमात्रानुभवविषयास्तत्तत्कालावसानास्तथातथाऽनुभाव्याः सृज्यन्ते- तत्र बाध्यबाधकभावस्सर्वानुभवविषयतया तद्रहिततया चोपपद्यत इति सर्वं समञ्जसमिति, **तदयुक्तम्**—एकस्याज्ञानस्यानभ्युपगमे अभ्युपगतस्य सर्वस्याप्यसिद्धेः । तथाहि- अज्ञानानुपहितस्य निरुपाख्यस्य अरूपस्य, यद्वा, चिद्रूपस्य ब्रह्मणः न तावदागमगम्यत्वं सिध्यति- 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह', 'अन्यदेव तद्विदितादथो अविदितादधि', 'यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म', 'अवचनेनैव प्रोवाच स हि तूष्णीं मभूव', 'नेतिनेतीत्यादेशः' इत्यादिश्रुतिप्रामाण्यात् ।

**किंच** येन यद्गम्यते तेन तद्भास्यते- ब्रह्म च सर्वावभासकत्वान्न केनापि गम्यते- तथाच श्रुतम्-- 'तस्य भासा सर्वमिदं विभा'तीति । स्मृतंच- 'शिवेन गम्यते सर्वं शिवो नान्येन गम्यते । जडं हि गम्यतेऽन्येन नाजडं मुनिपुङ्गवाः ॥ शिवो नैव जडस्साक्षात्स्वप्रकाशैकलक्षणः ।' इति शिवस्य ब्रह्मणः

स्वप्रकाशचिद्रूपत्वं च सम्प्रतिपन्नम् । तस्मादज्ञानं ब्रह्म न जडागमगम्यम् । एवंविधं ब्रह्मेति ज्ञानाय त्वागम आवश्यकः- एतदभिप्रायेणैव वेदवेद्यत्वं ब्रह्मणः श्रूयते, स्मर्यतेच । इदं चागमगम्यत्वमज्ञानेन ब्रह्मणि कल्पितमेव, आगमस्यैवाज्ञानपरिकल्पितत्वे किं पुनस्तद्गम्यत्वस्य । नहि विद्यादशायामागमोस्ति-- 'नेह नानास्ती'ति श्रुतेः । आगमस्यैवाभावे कथमागमगम्यत्वं ब्रह्मणः । तस्मादज्ञानानभ्युपगमे ब्रह्मण आगमगम्यत्वं नैव सिध्यति- निर्दोषत्वं तु यद्यपि सिध्यति, तथापि निर्दोषं ब्रह्मेति प्रतीतिस्त्वज्ञाना-भ्युपगमं विना न सिध्यति । सगुणत्वं नैव सिध्यति- निर्गुणत्वाद्ब्रह्मणः 'साक्षी चेता केवलो निर्गुणश्चे'ति श्रुतेः । अज्ञानाभ्युपगमे तु सगुणं ब्रह्म सिध्यति- अज्ञानाद्ब्रह्मणस्सत्त्वादिगुणलाभात् । नित्यसङ्कल्पत्वं च न सिध्यति- सङ्कल्पस्याज्ञानकार्यत्वात् । ईश्वरस्य स्रष्टव्यवस्त्वाकारपरिणताज्ञानवृत्तिर्हि सङ्कल्पः- यथा जीवस्य अन्तःकरणपरिणामस्सङ्कल्पः- तथा च श्रुतिः 'कामस्सङ्कल्प' इत्यारभ्य 'सर्वं मन ए'वेति । एवं सङ्कल्पासम्भवादेव तत्प्रयुक्तसृष्ट्यनुपपत्तिः- 'तदैक्षत बहुस्यां प्रजायेय', 'सच्च त्यच्चाभव'दिति हि श्रूयते । एवमज्ञानानभ्युपगमे जाग्रत्प्रपञ्चस्रष्टृत्वमेव ब्रह्मणो न सम्भवतीति सिद्धे किं पुनस्स्वाप्नप्रपञ्चादिस्रष्टृत्व-सिद्धिः । एवं ब्रह्मणः स्रष्टृत्वेऽसिद्धे तत्सृष्टस्य जगत एवासिद्धिरिति कृत्वा कथं तदेकदेशभूतप्रत्य-क्षादिप्रमाणत्रयसिद्धिः । तस्माद्यदि तव स्वाभ्युपेतदर्शितसर्वार्थसिद्धाविच्छा, तर्हि तत्साधकं ब्रह्माश्रितं मिथ्याभूतमनिर्वचनीयमज्ञानमभ्युपगच्छ ।

**ननु** नाहमज्ञानमभ्युपगच्छामि- तत्सत्त्वे श्रुतिप्रमाणाभावात् । नच अनृतेन हि प्रत्यूढा इति श्रुतिसिद्धं तदिति वाच्यं, तत्र ऋतेतरविषयोऽनृतशब्दः- ऋतमिति कर्मवाचि- 'ऋतं पिबन्ता'विति वचनात् । फलाभिसन्धिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलकं कर्म ऋतम् । तद्व्यतिरिक्तं सांसारिक-फलकं ब्रह्मप्राप्तिविरोधि कर्म अनृतम् । 'एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढा' इति वचनात् । नापि- 'नासदासीन्नो सदासी'दिति श्रुतिसिद्धम्-- तत्र सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ- उत्पत्तिवेलायां सत्त्यच्छब्दाभिहितयोश्चिदचिद्व्यष्टिभूतयोर्वस्तुनोरप्ययकाले अचित्समष्टिभूते तमश्शब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य । नात्र कस्य चित्सदसदनिर्वचनीयतोच्यते- सदसतोः कालविशेषे असद्भावमात्रवचनात् । तम 'आसीत्तमसा गूढमि'ति तदनन्तरवाक्ये तमश्शब्दाभिहितस्य श्रुत्यन्तरादचि-त्समष्टित्वमवगम्यते- 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते' इति । नच तमश्शब्देनाचित्समष्टि-रूपायाः प्रकृतेस्सूक्ष्मावस्थोच्यते । तस्यास्तु- 'मायां तु प्रकृतिं विद्या'दिति मायाशब्देनाभिधानादनि-र्वचनीयत्वमिति वाच्यं, मायाशब्दस्यानिर्वचनीयवाचित्वं न दृष्टमिति । मायाशब्दस्य मिथ्यापर्यायत्वेनानि-र्वचनीयत्वमिति चेत् तदपि नास्ति- नहि सर्वत्र मायाशब्दो मिथ्याविषयः- असुरराक्षसास्त्रादिषु सत्ये-ष्वेव मायाशब्दप्रयोगात् । यथोक्तम्- 'तेन मायासहस्रं तच्छम्बरस्याशुगामिना । बालस्य रक्षता देह-मेकैकश्येनसूदित'मिति । अतो मयाशब्दो विचित्रार्थसर्गकराभिधायी । प्रकृतेश्च मायाशब्दाभिधानं विचि-त्रार्थसर्गकरत्वादेव । 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्ध' इति मयाशब्द-वाच्यायाः प्रकृतेर्विचित्रार्थसर्गकरत्वं दर्शयति । परमपुरुषस्य च तद्वत्तामात्रेण मायित्वमुच्यते- नाज्ञत्वेन ।

जीवस्यैव हि मायया निरोधः श्रूयते- 'तस्मिंश्चान्यो मायया सन्निरुद्ध' इति, 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यत' इति च, 'इन्द्रो मायाभिः पुरुरूप ईयत' इत्यत्रापि विचित्राश्शक्तयोऽभिधीयन्ते । अत एव हि 'भूरित्वष्टेव राज'तीत्युच्यते । नहि मिथ्याभिभूतः कश्चिद्विराजते- 'मम माया दुरत्यये'त्यत्रापि गुणमयीति वचनात्सैव त्रिगुणात्मिका प्रकृतिरुच्यते- ततो न श्रुतिभिस्सदसदनिर्वचनीयाज्ञानप्रतिपादनमिति रामानुजः, **तदेतत्तुषपुञ्जप्रायम्**— तथाहि- 'वितथं त्वनृतं वचः । सत्यं तथ्यमृतं सम्य'गित्यमरकोशात्- ऋतं सत्यं तद्भिन्नमनृतमसत्यमेव । तथैवासत्ये अनृतशब्दस्य- 'सत्यमेव जयति नानृत'मिति वेदे प्रयोगः श्रूयते- तथा लोकेपि प्रयोगो दृश्यते ऋतशब्दस्य च सत्ये । नच सत्यानृतशब्दौ लोके यथार्थायथार्थवचसोरेव प्रयुज्येते- दर्शितकोशवशादिति वाच्यं, सत्यानृतवचोविषयत्वादेवार्थयोरपि सत्यानृतत्वव्यवहार इति । यद्वा अर्थगतयथार्थत्वायथार्थत्वप्रयुक्त एव वचसोस्सत्यानृतत्वव्यवहार इति । सर्वथापि सत्यः शब्दोऽसत्यः शब्दः, सत्योर्थोऽसत्योर्थ इति शब्दार्थयोर्द्वयोरपि सत्यानृतशब्दप्रयोगस्सम्भवति । तस्मादनृतेनेति श्रौतशब्देनासत्यमेव वस्त्वभिधीयते, नतु सत्यं काम्यकर्मादिकम् । तथा 'ऋतं पिबन्तौ सुकृतस्य लोके' इति वाक्ये ऋतशब्दः फलवाची- सुकृतस्य कर्मणः ऋतं फलमित्यन्वयात् । यद्यपि ऋतशब्दस्सत्यवाची, तथापि न तस्येहग्रहणमनन्वयात , किं तु ऋगताविति धातोर्निष्पन्नोयमृतशब्दः फलवाची, फलं हि प्राप्तं भवति । ऋतं प्राप्तं फलमित्यर्थः । तस्मात् ऋतशब्दस्य निष्कामपरमपुरुषाराधनकर्मपरत्वं स्वकपोलकल्पितत्वादप्रमाणमेव । तस्मात्- ऋतात्सत्याद्ब्रह्मणोन्यदनृतमसत्यमज्ञानमेव- 'तत्सत्य'मिति श्रुतेः, 'सत्यं ज्ञान'मिति श्रुतेश्च । निरपेक्षं सत्यं हि ब्रह्म, तद्भिन्नं सर्वमसत्यत्वादनृतमेव- 'अतोन्यदार्त'मिति श्रुतेः । अनेनानृतसर्वोपादानेनानृतेनाज्ञानेन प्रत्यूढत्वादेव ब्रह्म न विन्दन्तीति श्रुत्यर्थान्न तद्वाक्येनापि रामानुजोक्तार्थसिद्धिः । प्रत्युतास्मदभीष्टसिद्धिरेव । **एनेन अनृतेन** हि प्रत्यूढा इति वाक्यद्वयमपि श्रुतिगतमनिर्वचनीयाज्ञानसाधकमिति **स्थितम्** ।

**ननु** अनृतशब्देन सत्यब्रह्मभिन्नं वस्तूच्यतां नाम, तदज्ञानमेवेति कथं निर्णेतुं शक्यमिति **मैवम्**-- ब्रह्माज्ञाननामकदृग्दृश्यद्वयातिरिक्तपदार्थाभावात् । नच जगदस्तीति वाच्यं, तस्याज्ञानकार्यत्वेनाज्ञानत्वात्-- मृत्कार्यं घटः खलु मृत् । नच जीवोस्तीति वाच्यं, तस्य चिद्रूपस्य ब्रह्माभिन्नत्वात् । नच प्रकृतिरस्तीति वाच्यं, तस्या एवाज्ञानपदार्थत्वात् । **एतेन**- श्रुतिषु प्रकृतिशब्दश्रवणादप्यज्ञानं सिद्धमिति **सिद्धम्** । नच प्रकृतिस्तम एव नाज्ञानमिति वाच्यं, तमस एवाज्ञानत्वात्- यथा बाह्यं तमो घटादिकमावृणोति, तथाऽज्ञानमपीति कृत्वा अज्ञानस्य आन्तरतमस्त्वेन व्यवहार इति । नच प्रकृतिर्मायैव 'मायां तु प्रकृतिं विद्या'दिति श्रुतेरिति वाच्यं, मायाप्यज्ञानमेवेति । नचानिर्वाच्याज्ञानपरा न मायेति वाच्यं, मायाशब्देनानिर्वचनीयस्यैवार्थस्य प्रतिपाद्यमानत्वात्- योऽर्थो निरूपयितुं न शक्यते विस्पष्टं च भासते, सोर्थो मायामय इति सर्वसम्प्रतिपत्तेः । विचित्रार्थसर्गकरं वस्तु मायेति वदता त्वयापि भङ्ग्यन्तरेण मायाऽज्ञानमिति प्रतिपन्नमेव- विचित्रार्थसर्गकरं वस्तु खल्वज्ञानम् । नचाज्ञानमवस्त्वेवेति वाच्यं, वस्तुतोऽवस्तुत्वेपि यावद्व्यवहारं सत्यत्वेन वस्त्वेवेति । नच मिथ्याभूताज्ञानस्य कथं विचित्रार्थ-

सर्गकरत्वमिति वाच्यं, विचित्रार्थानामपि मिथ्याभूतत्वात् । नचासुरराक्षसास्त्रादिषु सत्येष्वेव मायाशब्दः प्रयुक्त इति वाच्यं, तेषामप्यसत्यत्वात् । नच व्यवहारतस्सत्यान्येव तानीति वाच्यं, मायापि तथैवेति । नच व्यवहारसत्याया मायायाः कथं मिथ्यात्वमिति वाच्यं, परमार्थसत्यत्वाभावादेव माया मिथ्या- रज्जुसर्पवदिति । नच मायाशब्दस्य मिथ्याविषये नास्ति प्रयोग इति वाच्यं, नहि सर्वत्र मायाशब्दो मिथ्याविषय इति त्वद्वचनादेव तत्सिद्धेः- क्वचिन्मायाशब्दस्य मिथ्याविषयत्वं हि तेन गमितम् । नच मायाशब्दस्य प्रतारणाद्यर्थपरत्वमेव- 'न येषु जिह्ममनृतं न माये'ति श्रुतेरिति वाच्यं, मायापि प्रतारयत्येव जीवमिति । नच मिथ्याभूतमिन्द्रजालादिकं न मायाशब्दवाच्यमिति वाच्यं, माया तु शाम्बरीति कोशात्तत्र मायाशब्दप्रयोगस्य सार्वत्रिकत्वाच्च । नच मायानाम विचित्रार्थकरी काचिच्छक्तिरिति वाच्यं, शक्तिरेवाज्ञानमिति । नच शक्तिस्सत्यैवेति वाच्यं, कार्यगम्यायास्तस्यास्सत्यत्वायोगात्- यद्गम्यते तदसत्यं, यथा शुक्तिरजतमिति प्रयोगात् । नच विचित्रार्थकरी सा कथमसत्येति वाच्यं, विचित्रार्थस्याप्यसत्यत्वात् । नचेश्वरसामर्थ्यस्य मायापदवाच्यस्य कथमसत्यत्वमिति वाच्यम्, मायिन ईश्वरस्याप्यसत्यत्वात् । नहि विद्यादशायामीश्वरो माया जगद्वा विद्यते- 'नेह नानास्ती'त्यादिश्रुतेः । नचेश्वरस्यैव ब्रह्मत्वात्कथमसत्यत्वमिति वाच्यम्, जीवत्वेश्वरत्वजगत्त्वविनिर्मुक्तं शुद्धं चैतन्यमेव ब्रह्म न त्वीश्वर इति । नच मायाया एवाज्ञानत्वे मायायुक्त ईश्वरोपि जीववदज्ञ एव भवेदिति वाच्यम्, मायाया अज्ञानातिरिक्तत्वेपि मायायुक्तो जीवः कथमीश्वरवत्सर्वज्ञो न भवति । नच वश्यमायत्वादीश्वरस्सर्वज्ञो मायावशत्वाज्जीवोऽज्ञ इति वाच्यम्, तथैव वश्याज्ञानत्वादीश्वरो नाज्ञः, अज्ञानवशत्वज्जीवोऽज्ञ इति सुवचत्वात् । **एतेन** 'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्ध' इति श्रुतिरप्यज्ञाने प्रमाणमिति **सिद्धम्** । नच मायाशब्दवाच्यं वस्तु कथमनिर्वाच्यमिति वाच्यं, या मा सा मायेति निरुक्त्या वस्तुतोऽविद्यमानस्य व्यवहारत एव विद्यमानस्य वस्तुनस्सदसदनिर्वाच्यस्य मायाशब्दवाच्यत्वात् । नच एकस्यां दशायां सतोऽन्यस्यां दशायामसतश्च कथंसदसच्छब्दवाच्यत्वमिति वाच्यं, सतां च कस्यां चिदप्यवस्थायामसत्त्वायोगादसतश्च कस्यां चिद्दशायामपि सत्त्वायोगाच्च- 'नासतो विद्यते भावो नाऽभावो विद्यतेऽसत' इति हि गीतं भगवता । **एतेन** कालविशेषे सतः कालविशेषेऽसतश्च कथं मिथत्वमिति **प्रत्युक्तं**- सतः कालविशेषेऽभावायोगादसतः कालविशेषे भावायोगाच्च कालत्रयाव्यापकं सदसदनिर्वाच्यं वस्तु मिथ्यैवेति । आकाशादिप्रपञ्चो मिथ्या- मध्यकाले सत्त्वेसति प्रागूर्ध्वकालयोरसत्त्वाद्रज्जुसर्पवदिति । शशशृङ्गादिवारणाय विशेषणम् । नचाज्ञानस्य स्वजन्यकालपरिच्छेदाभावात्कथं मिथ्यात्वमिति वाच्यम् । अज्ञानं मिथ्या प्रबोधकालात्प्रागेव सत्त्वात्स्वप्नवदिति प्रयोगात् । यद्वा अज्ञानं मिथ्या व्यवहारदशायामेव सत्त्वादाकाशादिप्रपञ्चवत् । दृष्टान्तस्य मिथ्यात्वन्तु पूर्वानुमानेन साधितम् । अनादिमायया सुप्त इति तु जीवस्याज्ञानाभिभूतत्वमेवोच्यते । इदमेवोक्तं गीतायाम्- 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव' इति 'इन्द्रो मायाभि'रिति श्रुतिरप्यज्ञानसाधिकैव- अज्ञानशक्तयएवात्र माया इत्युच्यन्त इति । भूरित्वष्टेव राजतीत्यपि नास्माकं प्रतिकूलं वचनम्- ईश्वरस्य मायानभिभूतत्वेन राजत्वसम्भवात्- नहि मायावत्त्वमात्रं विराजनविरोधि मायया लोकं मोहयन्नैन्द्रजालिको हि विराजति मायावी ।

मायाभिभूतत्वं तु विराजनविरोधि- तत्तु मायाविनीश्वरे न सम्भवति- ऐन्द्रजालिकवत् । जीवे तु सम्भवति तस्य मायादित्वाल्लोकवदिति । 'मम माया दुरत्यये'त्यत्रापि गुणमयी प्रकृतिशब्दवाच्या च माया' अज्ञानमेव त्रिगुणात्मकत्वादज्ञानस्य । तस्माद्रामानुजोदाहृतश्रुतिभिरप्यज्ञानमनिर्वचनीयं सिद्धमेव ।

अथ'दूरमेते विपरीते विषूची अविद्या या च विद्येति विज्ञा' इति श्रुतिरज्ञाने मानम्- विद्या ज्ञानमविद्या ह्यज्ञानम् । 'महतोऽव्यक्तमुत्तम'मिति श्रुतिश्च- अव्यक्तं हि कारणावस्थं मूलाज्ञानम् । 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसी'ति श्रुतिश्च- अविद्याशब्दवाच्यमज्ञानं भावरूपमेवेति प्रतिपादयति । अभावस्य तर्तव्यत्वाभावाद्भावो हि तर्तव्यः समुद्रवदिति । 'सोऽविद्याग्रन्थिं विकिरतीह सोम्य'- इति श्रुतिश्च- अविद्यापदवाच्यस्याज्ञानस्य ग्रन्थिवद्भावरूपत्वमुक्तवती । 'मायामात्रमिदं द्वैतमद्वैतं परमार्थत' इति श्रुतिश्च- द्वैतस्य मायाकार्यत्वेन मिथ्यात्वं बोधयन्ती तद्धेतोर्मायाया मिथ्यात्वं सूचयति । 'तमसस्तु पारे' 'तमसः परस्ता'दिति च श्रुतिरज्ञाने हि मानं- तमःखल्वज्ञानं- बाह्यतमोवदावरकत्वगुणयोगादित्युक्तम् ।

## महावाक्योपदिष्टजीवब्रह्माऽभेदान्यथानुपपत्त्यापि मिथ्याभूताज्ञानसिद्धिः- इत्युपपादनम् ।

अथ तत्त्वमसीत्यादिमहावाक्यानि जीवपरयोरैक्यं बोधयन्ति सन्ति तद्भेदस्य पारमार्थिकत्वे ऐक्योपदेशानुपपत्त्या तस्याज्ञानप्रभवत्वेन मिथ्यात्वं सूचयन्तीत्यतोपि मिथ्याभूताज्ञानसिद्धिः । ननु तत्त्वमसीति जीवपरयोरैक्योपदेशे सति सर्वज्ञे सत्यसङ्कल्पे सकलजगत्सर्गस्थितिविनाशहेतुभूते तच्छब्दावगते प्रकृते ब्रह्मणि विरुद्धाज्ञानपरिकल्पनहेतुभूता काचिदप्यनुपपत्तिर्नास्त्येव- ऐक्योपदेशस्तु त्वंशब्देनापि जीवशरीरकस्य ब्रह्मण एवाभिधानादुपपन्नतरः- 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव हि नामरूपभाक्त्वमुक्तं- अतो न ब्रह्माज्ञानपरिकल्पनं इति, मैवम्— चिद्रूपस्य ब्रह्मणस्सर्वज्ञत्वसत्यसङ्कल्पत्वसकलजगत्सर्गस्थितिनाशहेतुत्वानि नाज्ञानोपाधिं विना सम्भन्तीति ब्रह्माज्ञानयोर्विरोधो नास्तीति च पूर्वमेवोक्तम् । तस्माद्ब्रह्मणस्सर्वज्ञत्वाद्युपपत्तये ब्रह्मण्यज्ञानं परिकल्पनीयमेव । तस्य चाज्ञानस्य निवृत्तिं विना न जीवपरयोरैक्यं सम्भवति- 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यती'ति पुराणात् । सा चाज्ञाननिवृत्तिरैक्यज्ञानादेव सम्भवति- अभेदज्ञानस्यैव भेदजनकाज्ञानविरोधित्वात् । अत एवोक्तम्- 'विभेदजनकेऽज्ञाने ज्ञानान्नाशमुपागते' इति । तच्च ज्ञानं तत्त्वमसीत्यैक्योपदेशादेव भवति- 'तत्त्वमसीति गुरूपदेशं प्राप्य हि अहं ब्रह्मास्मीति प्रत्येति शिष्यः । तस्मात् जीवब्रह्मैक्यज्ञाननिवर्त्यजीवब्रह्मभेदकाज्ञानानभ्युपगमे जीवब्रह्मैक्योपदेशो व्यर्थ एवेति कृत्वा तद्वैयर्थ्याऽन्यथानुपपत्त्याऽवश्यमभ्युपेयमज्ञानम् । एतेन तत्त्वमसीतिवाक्यगतस्य त्वम्पदस्य जीवशरीरकं ब्रह्मेत्यर्थ इति प्रत्युक्तम्- तथासति जीवशरीरकं ब्रह्मेति ज्ञानात्फलाभावेनोपदेशवैयर्थ्यप्रसङ्गात् । नच तद्ज्ञानाज्जीवो ब्रह्मणश्शरीरं न भवतीति विपरीतज्ञाननिवृत्तिः फलमिति वाच्यम्, तन्निवृत्त्यापि फलाभावात् । नाहं ब्रह्मणश्शरीरमिति ज्ञानसद्भावदशायां वर्तमानस्य संसारस्य ब्रह्मणश्शरीरमहमिति ज्ञानसद्भावदशायामप्यनिवृत्तेः । प्रत्युत स्वशरीर इव ब्रह्मशरीरे स्वस्मिन्नप्यनित्य-

त्वादिबुद्धिरेव भवेदिति संसाराधिक्यमेव । नच ब्रह्मणश्शरीरमहमिति ज्ञानाज्जीवस्य स्वस्मिन् स्वातन्त्र्यभ्रमनिवृत्तिः फलमिति वाच्यं, अज्ञस्य जीवस्य पारतन्त्र्यमेवानुभवसिद्धमिति- नहि सुखदुःखरोगाद्यभिभूतः कोपि संसारी जीवः स्वतन्त्रोहमिति मन्यते । तस्मादविद्यमानस्वातन्त्र्यभ्रमनिवृत्तिर्न फलम्-- असत्त्वादेव तस्य निवृत्त्ययोगात् । नच स्वतन्त्रोहमिति भ्रमोस्त्यद्वैतिन इति वाच्यं, सम्यग्ज्ञानजनितस्तस्य सोनुभवः प्रमैव नतु भ्रम इति । नचास्वतन्त्रस्य जीवस्य कथं स्वातन्त्र्यं यथार्थं स्यादिति वाच्यं, स्वतन्त्र एव जीव इति । नच ब्रह्मशरीरं जीवः कथं स्वतन्त्र इति वाच्यं, जीवस्य ब्रह्मशरीरत्वमेवाद्यापि न सिद्धमिति । नच ब्रह्मान्तर्यामिको जीवः कथं स्वतन्त्र इति वाच्यं, जीवस्य ब्रह्मान्तर्यामिकत्वमप्यद्याप्यसिद्धमेवेति । नचान्तर्यामिब्रह्मणा तदुभयसिद्धिरिति वाच्यं, प्रत्यगात्मपरमेव तद्ब्राह्मणमित्युक्तत्वात् । नच प्रत्यगात्मन एव जीवत्वात्कथं स्वस्यैव स्वान्तर्यामिकत्वमिति वाच्यं, एकमेव चैतन्यमन्तःकरणावच्छिन्नं सज्जीव इति तदुपहितं सत्प्रत्यगात्मेति च व्यपदिश्यत इत्युक्तत्वात् । **एतेन** स्वातन्त्र्यं जीवस्य प्रत्यक्षविरुद्धमिति **प्रत्युक्तम्**--देहादितादात्म्याध्यासप्रयुक्त एवास्वातन्त्र्यानुभव इति । तस्माद्यश्शोधितत्वम्पदार्थः प्रत्यगात्मा सच्चिदानन्दलक्षणः स परस्य न शरीरम् । नच नियाम्यः, नापि भोग्यः, नापि शेषः, किं तर्हि सर्वस्यात्मा नियामकः, साक्षी, शेषी च । तत एव पराभिन्नः- स्वरूपतः स्वभावतश्च परोप्येवंविध एव हि- **किंच** तत्त्वमसीतिवाक्यस्य त्वदुक्तोऽर्थोप्ययुक्त एव- तथाहि- हे श्वेतकेतो तत्त्वमसि-- तत्सर्वशरीरकं परं ब्रह्म त्वं त्वच्छरीरकं परं ब्रह्म असि भवसि- अस्मिन् पक्षे असिपदान्वयस्तावत्स्फुट एव- अस्ति भवतीति वक्तव्यत्वात् । त्वमित्यस्य त्वच्छरीरकं ब्रह्मेत्यर्थवर्णनमप्ययुक्तं श्वेतकेतोर्जीवत्वेन तम्प्रत्युक्तत्वच्छब्दस्य श्वेतकेतुनामकजीववाचित्वमेव सम्भवति न ब्रह्मवाचित्वमिति । नच 'अनेन जीवे'-नेति श्रुतेस्सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव नामरूपभाक्त्वमिति वाच्यं, तच्छ्रुतेस्तदर्थाप्रतिपादकत्वात् । परमात्मा जीवरूपेण देवादिदेहजातमनुप्रविश्य नामरूपे व्याकरवाणीति सङ्कल्पितवानिति हि तदर्थः-- तथाच देवमनुष्यादिनाम्नां नीलपीतादिरूपाणां च देहगतत्वमेव न जीवगतत्वं, तत्तादात्म्याध्यासात्तु जीवस्य देवोहं मनुष्योहं नीलोहमिति व्यवहारः- तादृशव्यवहाराश्रयणेपि नामरूपयोर्जीवपर्यन्तत्वमेव, न परमात्मपर्यन्तत्वं- नहि परमात्मनोस्ति जीवेनसाकं तदधिष्ठितदेहेनसाकं वा तादात्म्याध्यासः, येन नामरूपयोः परमात्मपर्यन्तत्वं स्यात् । जीवेनेत्यस्य जीवशरीरपरमात्मनेत्यर्थवर्णने श्रुतिस्थपदानामनन्वय एव भवेत् । अनेन जीवेन जीवशरीरपरमात्मना आत्मनाऽनुप्रविश्येति ह्यनन्वितं वाक्यम् । तस्माज्जीवेनात्मनेत्यस्य जीवस्वरूपेणेत्येवार्थः । परमात्मा हि जीवो भूत्वा देहं प्रविष्टः । अथ हेश्वेतकेतो त्वं परमात्मशरीरभूतो जीवः, तत्परं ब्रह्मासीत्यर्थवर्णने तु परमात्मशरीरस्य जीवस्य परमात्मना शरीरिणा सममभेदोपदेशो नैव युज्यते- देहस्य जीवाभेदोपदेशवत् । नच देहदेहिनोश्शरीरात्मभावनिबन्धनोस्त्यभेद इति तदुपदेशो युज्यत इति वाच्यं, देहात्मनोरभेदस्तादात्म्याध्यासनिबन्धन एव, नतु शरीरात्मभावनिबन्धनः- अभेदस्य शरीरात्मभावनिबन्धनत्वायोगात् । शरीरात्मभावप्रयुक्तो हि भेदः इदं शरीरमहमात्मेति- सचाध्यासो न सर्वज्ञस्य कल्पयितुं शक्यः- नहि सर्वज्ञस्ससंसार्यहमिति जीवोहमिति वा प्रत्येति--

नहि प्रत्ययो भ्रमः- सर्वज्ञो भ्रान्त इति तु विप्रतिषिद्धम् । नापि जीवस्य ईश्वरोहमित्यध्यासः- प्रत्यक्षविरोधात् । नचाद्वैतिनोस्ति तादृशं प्रत्यक्षमिति वाच्यं, सहीश्वराभेदनिबन्धन एव, नत्वीश्वरशरीरत्वनिबन्धनः । नचास्माकं वैष्णवानामस्तीति वाच्यं, दासोहमिति वोऽनुभवः- स्वस्मिन् स्वामिबुद्धिरनिष्टेति हि भवतां राद्धान्तः । नच प्रह्लादवामदेवादय ईश्वरोहमिति प्रतिपेदिरे इति वाच्यं, तेषामद्वैतित्वात् । नच द्वैतिन एव ते इति वाच्यं, ईश्वरोहमिति वदतो द्वैतित्वायोगात् । नच जीवस्येश्वरशरीरत्वाभिप्रायेण ते तथाऽवोचन्निति वाच्यं, तस्यैवाद्याप्यसिद्धेः । नच सर्वगत्वादनन्तस्य स एवाहमवस्थित इति सहेतुकमुक्तत्वात्सर्वगत ईश्वरो मद्गतश्चापि भवतीति स एवाहमित्युक्तवान् प्रह्लाद इति वाच्यं, सर्वेष्वपि शरीरेषु क्षेत्रज्ञात्मना भगवत एकस्यैव स्थितत्वादहमेवेश्वर इति तदभिप्रयात् । 'भगवानेक एवैष सर्वक्षेत्रेष्ववस्थितः । क्षेत्रज्ञञ्चापि मां विद्धी'ति स्मृत्यनुसारात् । नच तत्रापि मां मच्छरीरकं विद्धीत्येवार्थ इति वाच्यं, तर्हि जीव ईश्वरशरीरमित्यत्रापि जीवशब्दस्य परमात्मपर्यन्तत्वनियमात् । जीवशरीरक ईश्वर ईश्वरशरीरमित्येवार्थस्स्यात् । नचेष्टापत्तिः- ईश्वरस्येश्वरश्शरीरमित्युक्तौ किमीश्वरान्तरस्येश्वरश्शरीरम् ? यद्वा तस्यैव ? आद्ये- अनवस्था । द्वितीये व्याघातः- एकस्यैव शरीरत्वं शरीरित्वं चेति । **एतेन** स एवाहमिति प्रह्लादवाक्यस्यापि ईश्वरो मच्छरीरक इत्यर्थ इति **प्रत्युक्तम्** । किंच जीव ईश्वरस्य शरीरं न त्वीश्वर एव किञ्चिदज्ञसर्वज्ञयोर्जीवेश्वरयोरैक्यायोगादिति ब्रुवाणस्य तव वाक्ये योस्ति जीवशब्दः स किं परमात्मपर्यन्तः ? उत न ? आद्ये- जीवशरीरक ईश्वरः कथमीश्वरस्य शरीरं स्यात् । जीवशरीरकेश्वरस्य कथं वा ईश्वरैक्यायोगः । द्वितीये- कथं सर्वेषां शब्दानां परमात्मपर्यन्तत्वमिति स्वप्रतिज्ञानिर्वाहः ।

**ननु** त्वमहं स घटः पट इत्यादीनां व्यवहारे प्रयुज्यमानानां शब्दानां न परमात्मपर्यन्तत्वं, किं तु शास्त्रगतानामेवेति, **नैतदपि**---'भागो जीवस्स विज्ञेयः', 'यदा जीवः प्रबुध्यते', 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक्' 'आनन्दभुक्तथा प्राज्ञः', 'विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्'- 'बीजनिद्रायुतः प्राज्ञः' इत्यादिषु जीवपुरुषविश्वविद्वदादिशब्दानां परमात्मपर्यन्तत्वाभावात् । नहि जीवशरीरक ईश्वरो वालाग्रशतभागशतभाग इति जीवशरीरक ईश्वरोऽनादिमायया सुप्तः प्रबुध्यत इति, पुरुषशरीरक ईश्वरो निमग्न इति विश्वशरीरक ईश्वरः स्थूलभुगिति, तैजसशरीरक ईश्वरस्सूक्ष्मभुगिति, प्राज्ञशरीरक ईश्वर आनन्दभुगिति विद्वच्छरीरक ईश्वर ईश्वरमुपैतीति, प्राज्ञशरीरक ईश्वरो बीजनिद्रायुत इति च वक्तुं शक्यते । नच तत्र तत्र लक्षणया मुख्यार्थैकदेशपरित्याग इति कृत्वा जीवपुरुषादिशब्दा जीवमात्रवाचिन इति वाच्यं, अप्रसिद्धमर्थं मुख्यत्वेन स्वीकृत्य प्रसिद्धेऽर्थे लक्षणां कल्पयितुरहो ! तव पाण्डिती- सर्वेषां शब्दानां व्याकरणकोशादिसिद्धा ये ये प्रातिस्विका अर्थास्तेते सर्वेपि लाक्षणिका एव, ये तु येतु प्रातिस्विकार्थविशिष्टान्यार्थास्ते सर्वेपि शक्या एवेति वदतां भवतां कश्शास्ता । नच तर्हि श्रुतिस्मृतिसिद्धं सर्वशब्दवाच्यत्वं परमात्मनः कथं सिध्येदिति वाच्यं, सर्वस्य परमात्मत्वादेव सर्ववाचिशब्दाः परमात्मवाचिनस्स्युरिति । सर्वस्य परमात्मत्वं च 'सर्वं खल्विदं ब्रह्मे'ति श्रुतिसिद्धं, 'सर्वं विष्णुमयं जग'दिति पुराण

सिद्धं च । नच सर्वस्य परमात्मशरीरत्वात्परमात्मशरीरभूतसर्वपदार्थवाचिसर्वशब्दानां परमात्मवाचकत्वमिति वाच्यं, तथासति शब्दशक्त्या तत्तत्प्रातिस्विकार्थपरा एव तत्तच्छब्दाः, लक्षणया तु तत्तच्छरीरकपरमात्मपरा इति प्रतिपद्यस्व । तथासति न व्याकरणकोशादिविरोधस्तव । सा च लक्षणा मुख्यार्थबाधे सत्येव सम्भवति, नान्यथा । अत एव दर्शितश्रुतिवाक्येषु मुख्यार्थबाधाभावात्प्रत्युत लाक्षणिकार्थस्यैव बाधितत्वान्न लक्षणास्वीकारः । तस्मान्न जीवपुरुषविश्वादिशब्दानां परमात्मपर्यन्तत्वमभिधया लक्षणया वा सम्भवति ।

**ननु** अन्यत्र यथा कथं वा भवतु महावाक्येषु तदनुसारिस्मृतिपुराणवाक्येषु च त्वमहमादिशब्दानां परमात्मपर्यन्तत्वमेवेति नियमः- लक्षणाबीजस्य मुख्यार्थानुपपत्तेस्सत्त्वादिति, **चेत्तर्हि** तव मम च लक्षणैव गतिरिति कृत्वा लक्षणाश्रयणं दोषस्तव मते इति कथं त्वयोक्तं प्राक् । किंच लक्षणाश्रयणेपि मम मतमेवोपपद्यते नतु तव मतं- मायावच्छिन्नचैतन्यं तत्पदवाच्यार्थः, अन्तःकरणावच्छिन्नचैतन्यं त्वम्पदवाच्यार्थः, तयोरसिपदवाच्यैक्यानुपपत्त्या वाच्यार्थैकदेशे चैतन्ये लक्षणेति मन्मते न काप्यनुपपत्तिः- तत्पदस्येश्वरस्सर्वज्ञोर्थः, त्वम्पदस्य जीवः किंचिज्ज्ञोर्थः, तयोरैक्यानुपपत्त्या त्वम्पदस्य जीवशरीरक ईश्वरोर्थ इति तव मते अनुपपत्तिर्दर्शितैवेति । किंच किं त्वं श्वेतकेतुशरीरकेश्वरस्य सर्वशरीरकेश्वरेणैक्यं वदसि ? किं वा श्वेतकेतुशरीरकेश्वरेण, यद्वा जीवान्तरशरीरकेश्वरेण ? अहोस्विच्छुद्धेनेश्वरेण ? नाद्यः- विशेषणभेदाद्विशिष्टस्यापि भेद इति- नहि श्वेतकेतुशरीरकस्सर्वशरीरको भवति । न द्वितीयः-- तस्य तत्पदवाच्यत्वलक्ष्यत्वायोगात् । न तृतीयः- प्रथमकल्पोक्तदोषात् । न चतुर्थः- तव मते शुद्धस्येश्वरस्यैवाभावात् । भावे वा अस्मन्मतप्रवेशापत्तेः । श्वेतकेतुशरीरकेश्वरस्याशुद्धस्य शुद्धेश्वरैक्यायोगाच्च । तत्रापि लाक्षणिकेर्थे श्वेतकेतुशरीरकत्वरूपविशेषणपरित्यागे तु अभेदस्सिद्ध्यत्येव । परं तु लक्षणायामपि लक्षणेति विदुषामपहासपदम् । तस्मादयुक्त एवायं रामानुजपरिकल्पितो महावाक्यार्थः । **यदुक्तं** मन्त्रिणंप्रति त्वं राजासीति वाक्यवज्जीवंप्रति तत्त्वमसीति वाक्यं स्तुतिपरमिति **तदप्ययुक्तम्**— प्रधानतात्पर्यवतो महाफलस्य महावाक्यस्य अर्थवादत्वकल्पनायोगात्- ऐक्यज्ञानाद्धि महत्फलं श्रूयते- 'तत्र को मोहः कश्शोक एकत्वमनुपश्यत' इति भेदज्ञानस्य महाभयहेतुत्वं च श्रूयते- 'य उदरमन्तरं कुरुते, अथ तस्य भयं भव'तीति । तस्मान्महाफलिकाभेदविधायकमिदं महावाक्यं महाभयप्रदभेदज्ञाननिन्दकवाक्योपबृंहितं च सन्नर्थवादवाक्यवद्व्यर्थं भवितुमर्हति । **एतेन**- तत्त्वमसीत्यस्य श्वेतकेतो त्वं तत्सदृशोसीत्यर्थ इति द्वैतमतं **प्रतिक्षिप्तम्** । सदृशवाचिपदाभावात्कण्ठोक्तैक्यपरित्यागायोगाच्चेति ।

**ननु** तवापि मतमयुक्तमेव- पदद्वयेपि लक्षणाऽभ्युपगमात्- अखण्डं ब्रह्मवाक्यार्थो महावाक्येन लक्ष्यत इति भवदीयवचनादिति, **नैवम्**—प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवत्सर्वपदलक्षणास्वीकारस्य युक्तत्वात् । **वस्तुतस्तु न** मम लक्षणास्वीकारावसरः- तथाहि- नाल तच्छब्दस्सर्वज्ञमीश्वरमभिधत्ते किंतु निर्गुणं ब्रह्मैव- तेनैव खलु सच्छब्दवाच्येन सुषुप्तौ जीवस्सम्पद्यते- 'सता सोम्य तदा सम्पन्नो भव'तीति तत्रैवोक्तत्वात् । ततो निर्गुणब्रह्मप्रकरणपठितस्तच्छब्दोयं न सगुणब्रह्मवाची तत्सत्यमिति पूर्ववाक्यानु-

रोधाच्च । नहि मायामय ईश्वरस्सत्यो भवति । तथा च हेश्वेतकेतो जीवस्त्वं तद्ब्रह्मैवासि । कथंनु नाम जीवस्य ब्रह्मत्वमत आह- स आत्मेति । जीव आत्मेति सम्प्रतिपन्नम् । अहम्प्रत्ययालम्बनत्वादात्मनः ब्रह्म चात्मैवेति जीवब्रह्मणोरैकात्मप्रत्ययविषयत्वात् । तथा च जीवस्यैवात्मत्वादात्मन एव ब्रह्मत्वाच्च जीवस्य ब्रह्मत्वमुपपन्नमिति । नच सत्यप्यात्मत्वे जीवस्य संसारित्वात्कथमसंसारिब्रह्माभेद इति वाच्यं, जीवेऽध्यस्तस्य संसारस्य बुद्ध्यादिगतत्वेन जीवगतत्वाभावात् । तस्माद्बुद्ध्यादिवियुक्तो जीवो ब्रह्माभिन्न एवेति कृत्वा श्वेतकेतोऽतत्त्वमसीति ब्रह्माभेदोपदेशो युज्यत एव । तदनुपपत्तौ हि लक्षणाऽऽश्रयणीया ।

ननु अन्तःकरणोपहितचैतन्यस्य प्रत्यगात्मनस्त्वम्पदवाच्यत्वाभ्युपगमे मायोपहितचैतन्यस्य परमात्मनस्तत्पदवाच्यत्वाभ्युपगमे च कृतेपि अन्तःकरणोपहितत्वमायोपहितत्वयोर्भेदाल्लक्षणाश्रयणीयैव, मैवम्—मायोपहितं महाकाशस्थानीयं पूर्णमेव चैतन्यं, घटस्थानीयेन्तःकरणे उपलभ्यत इति कृत्वा घटाकाशशब्देन महाकाशवत्प्रत्यगात्मशब्देन परमात्मैवोच्यत इति लक्षणास्वीकारावसराभावात् । तस्मादन्तःकरणे उपलभ्यते यज्जीवचैतन्यं तदेव ब्रह्मेति महावाक्यस्यार्थोऽभिधयैव सिद्ध इति नास्माकं लक्षणाश्रयणरूपदोषोपीत्यलम् ॥

## अनिर्वचनीयभावरूपाज्ञानसिद्धौ विष्णुपुराणान्तरसंवादस्योपपत्तिः ।

ननु श्रुतिसिद्धमस्तुनामाज्ञानं- श्रुत्यर्थोपबृंहणकरपुराणेतिहाससिद्धं तु न भवति- तथाहि- न तावद्विष्णुपुराणे ब्रह्माज्ञानवादो दृश्यते । ननु 'ज्योतींषि विष्णुरिति, ब्रह्मैकमेव तत्त्व'मिति प्रतिज्ञाय- 'ज्ञानस्वरूपो भगवान्यतो सा'विति शैलाब्धिधरादिभेदभिन्नस्य जगतः ज्ञानैकस्वरूपब्रह्माज्ञानविजृम्भितत्वमभिधाय, 'यदा तु शुद्धं निजरूपी'ति ज्ञानस्वरूपस्यैव ब्रह्मणः स्वस्वरूपावस्थितिवेलायां वस्तुभेदाभावदर्शनेनाज्ञानविजृम्भितत्वमेव स्थिरीकृत्य 'वस्त्वस्ति किं महीघटत्व'मिति श्लोकद्वयेन जगदुपलब्धिप्रकारेणापि वस्तुभेदानामसत्यत्वमुपपाद्य 'तस्माच्च विज्ञानमृत' इति प्रतिज्ञातं ब्रह्मव्यतिरिक्तस्यासत्यत्वमुपसंहृत्य विज्ञानमेकमिति ज्ञानस्वरूपे ब्रह्मणि भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवेति स्फुटीकृत्य 'ज्ञानं विशुद्ध'मिति ज्ञानस्वरूपस्य ब्रह्मणः स्वरूपं विशोध्य, 'सद्भाव एवं भवतो मयोक्त' इति ज्ञानस्वरूपस्य ब्रह्मण एव सत्यत्वं नान्यस्य, अन्यस्य चासत्यत्वमेव- तस्य भुवनादेस्सत्यत्वं व्यावहारिकमिति तत्त्वं तदोपदिष्टमिति ह्युपदेशो दृश्यते, नैतदेवम्—अत्र भुवनकोशस्य विस्तीर्णं स्वरूपमुक्त्वा पूर्वमनुक्तं रूपान्तरं संक्षेपतः श्रूयतामित्यारभ्याभिधीयते- चिदचिन्मिश्रे जगति चिदंशो वाङ्मनसागोचरस्वसंवेद्यस्वरूपभेदो ज्ञानैकाकारतया अस्पृष्टप्राकृतभेदोऽविनाशित्वेन सत्यशब्दवाच्यः । अचिदंशस्तु चिदंशकर्मनिमित्तपरिणामभेदो विनाशीति नास्तिशब्दाभिधेयः, उभयं तु परब्रह्मभूतवासुदेवशरीरतया तदात्मकमित्येतद्रूपं संक्षेपेणात्राभिहितं- तथाहि- 'यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा । पद्माकारा समुद्भूता सर्वत्राब्ध्यादिसंयुते ॥' यम्बुनो विष्णोश्शरीरत्वेनाम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोः कायः, तस्य च विष्णुरात्मेति सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य सामानाधिकरण्यस्य ज्योतींषि विष्णुरित्यारभ्य वक्ष्य-

माणस्य शरीरात्मभाव एव निबन्धनमित्याह- अस्मिन् शास्त्रे पूर्वमप्येतदसकृदुक्तम्- 'तानि सर्वाणि तद्वपुः', 'तत्सर्वं वै हरेस्तनुः', 'स एव सर्वभूतात्मा', 'विश्वरूपो यतोऽव्यय' इति। तदिदं शारीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिश्यते- ज्योतींषि विष्णुरिति। अत्रास्त्यात्मकं नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकमित्युक्तम्। इदमस्त्यात्मकं- इदं नास्त्यात्मकं- अस्य च नास्त्यात्मकत्वहेतुरयमित्याह- 'ज्ञानस्वरूपो भगवान्यतोसा'विति। अशेषक्षेत्रज्ञात्मनावस्थितस्य भगवतो ज्ञानमेव स्वाभाविकं रूपम्। न देवमनुष्यादिवस्तुरूपम्। यत एवं तत एव- 'अचिद्रूपदेवमनुष्यशैलाब्धिधरादयश्च' तद्विज्ञानविजृम्भिताः तस्य ज्ञानैकाकारस्य सतो देवाद्याकारेण स्वात्मवैविध्यानुसन्धानमूलाः- देवाद्याकारानुसन्धानमूलकर्ममूला इत्यर्थः। यतश्चाचिद्वस्तु क्षेत्रज्ञकर्मानुगुणपरिणामास्पदं अतस्तत्रास्तिशब्दाभिधेयमिति वदन्ति- शब्दाभिधेयमित्यर्थादुक्तं भवति। तदेव विवृणोति- 'यदा तु शुद्धं निजरूपी'ति। यदैतद्ज्ञानाकारमात्मवस्तु देवाद्याकारेण स्वात्मनि वैविध्यानुसन्धानमूलसर्वकर्मक्षयान्निर्दोषं परिशुद्धं निजरूपि भवति, तदा देवाद्याकारेणैकीकृत्यात्मकल्पनामूलकर्मफलभूतास्तद्भोगार्था वस्तुषु वस्तुभेदा न भवन्ति- ये देवादिषु वस्तुष्वात्मतयाभिमतेषु भोग्यभूता देवमनुष्यशैलाब्धिधरादिवस्तुभेदाः ते तन्मूलभूतकर्मसु विनष्टेषु न भवन्तीत्यचिद्वस्तुनः कादाचित्कावस्थाविशेषयोगितया नास्तिशब्दाभिधेयत्वं- इतरस्य च सर्वदा निजसिद्धज्ञानैकाकारतयाऽस्तिशब्दाभिधेयत्वमित्यर्थः। प्रतिक्षणमन्यथाभूततया कादाचित्कावस्थायोगिनो चिद्वस्तुनो नास्तिशब्दाभिधेयत्वमेवेत्याह- वस्त्वस्ति किमिति। अस्तिशब्दाभिधेयोह्यादिमध्यपर्यन्तहीनः स तथैकरूपः पदार्थः- तस्य कदाचिदपि नास्तिबुध्यनर्हत्वात्। अचिद्वस्तु किञ्चित्क्वचिदपि तथाभूतं न दृष्टचरम्। ततः किमित्यत्राह- यच्चान्यथात्वमिति। यद्वस्तु प्रतिक्षणमन्यथात्वं याति तदुत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्थां जहातीति तस्य पूर्वावस्थस्योत्तरावस्थायां न प्रतिसन्धानमस्ति- अतस्सर्वदा तस्य नास्तिशब्दाभिधेयत्वमेव। तथाह्युपलभ्यत इत्याह- 'मही घटत्व'मिति। स्वकर्मणा देवमनुष्यादिभावेन स्तिमितात्मनिश्चयैः स्वभोग्यभूतमचिद्वस्तु प्रतिक्षणमप्यन्यथाभूतमालक्ष्यते अनुभूयत इत्यर्थः। एवं सति किमप्यचिद्वस्त्वस्ति-शब्दार्हमादिमध्यान्तहीनं सततैकरूपमालक्षितमस्ति किं; न ह्यस्तीत्यभिप्रायः। तस्माद्ज्ञानस्वरूपात्मव्यतिरिक्तमचिद्वस्तु कदाचित्क्वचित्केवलास्तिशब्दवाच्यं न भवतीत्याह- तस्मान्न विज्ञानमृत इति। आत्मातु सर्वत्र ज्ञानैकाकारतया देवादिभेदप्रत्यनीकस्वरूपोऽपि देवादिशरीरप्रवेशहेतुभूतस्वकृतविविधकर्ममूलदेवादिभेदभिन्नात्मबुद्धिभिस्तेन तेन रूपेण बहुधानुसंहित इति। तद्भेदानुसन्धानं नात्मस्वरूपप्रयुक्तमित्याह- विज्ञानमेकमिति। आत्मस्वरूपं तु कर्मरहितं, तत एव मलरूपप्रकृतिसंस्पर्शरहितं ततश्च तत्प्रयुक्तशोकमोहाद्यशेषहेयगुणासङ्गं उपचयापचयानर्हतयैकं, तत एव सदैकरूपं, तच्च वासुदेवशरीरमिति तदात्मकम्। अतदात्मकस्य कस्यचिदप्यभावादित्याह- ज्ञानं विरुद्धमिति। चिदंशस्सदैकरूपतया सर्वदास्तिशब्दवाच्यः, अचिदंशस्तु क्षणपरिणामित्वेन सर्वदा नाशगर्भ इति सर्वदा नास्तिशब्दाभिधेयः। एवंरूपचिदचिदात्मकं जगद्वासुदेवशरीरं तदात्मकमिति जगद्याथात्म्यं सम्यगुक्तमित्याह- 'सद्भाव एव'मिति। अत्र सत्यमसत्यमिति, यदस्ति यन्नास्तीति प्रक्रान्तस्योपसंहारः--

एतद्ज्ञानैकाकारतया समशब्दगोचरस्वरूपभेदमेवाचिन्मिश्रं भुवनाश्रितं देवमनुष्यादिरूपेण सम्यग्व्यवहारार्हभेदं यद्वर्तते तत्र हेतुः कर्मैवेत्युक्तमित्याह- एतत्तु यदिति । तदेव विवृणोति- 'यज्ञः पशु'रिति । जगद्याथात्म्यज्ञानप्रयोजनं मोक्षोपाययतनमित्याह- 'यच्चैत'दिति । अत्र निर्विशेषे परे ब्रह्मणि तदाश्रये सदसदनिर्वचनीये चाज्ञाने जगतस्तत्कल्पितत्वे वाऽनुगुणं किञ्चिदपि पदं न दृश्यते- अस्ति नास्ति शब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत्, परमस्य परेशस्य परस्य ब्रह्मणो विष्णोः कायत्वेन तदात्मकं-ज्ञानैकाकारस्यात्मनो देवादिविविधाकारानुभवेऽचित्परिणामे च हेतुर्वस्तुयाथात्म्यज्ञानविरोधिक्षेत्रज्ञानां कर्मैवेति प्रतिपादनात् । अस्तिनास्तिसत्यासत्यशब्दानां च सदसदनिर्वचनीयवस्त्वभिधानासामर्थ्याच्च । नास्त्यसत्यशब्दौ अस्तिसत्यशब्दविरोधिनौ- अतश्च ताभ्यामसत्त्व हि प्रतीयते नानिर्वचनीयत्वम् । अत्र चाचिद्वस्तुनि नास्त्यसत्यशब्दौ न तुच्छत्वमिथ्यात्वपरौ प्रयुक्तौ । अपि तु विनाशित्वपरौ । वस्त्वस्ति किं महीघटत्वमीत्यत्रापि विनाशित्वमेव ह्युपपादितम् । न निष्प्रमाणकत्वं ज्ञानबाध्यत्वं वा एकेनाकारेणैकस्मिन्कालेऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनात । तुच्छत्वं हि प्रमाणसम्बन्धानर्हत्वं- बाधोपि यद्देशकालादिसम्बन्धितया यदस्तीत्युपलब्धं तद्देशकालादिसम्बन्धितया नास्तीत्युपलब्धिः- नतु कालान्तरेऽनुभूतस्य कालान्तरे परिणामादिना नास्तीत्युपलब्धिः- कालभेदेन विरोधाभावात्, अतो न मिथ्यात्वम् । एतदुक्तं भवति- ज्ञानस्वरूपमात्मवस्त्वादिमध्यपर्यन्तहीनं स तथैकस्वरूपमिति स्वत एवास्तिशब्दवाच्यम् । अचेतनं तु क्षेत्रज्ञभोग्यभूतं तत्कर्मानुगुणपरिणामविनाशीति सर्वदा नास्त्यर्थगर्भमिति नास्त्यसत्यशब्दाभिधेयमिति । यथोक्तम्-'यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसम्भूतां तद्वस्तु नृप तच्च किम् ॥ अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते । तत्तु नास्ति न सन्देहो नाशिद्रव्योपपादितम् ॥' इति देशकालकर्मविशेषापेक्षया अस्तित्वनास्तित्वयोगिनि वस्तुनि केवलास्तिबुद्धिबोध्यत्वमपरमार्थ इत्युक्तम् । आत्मन एव केवलास्तिबुद्धिबोध्यत्वमिति स परमार्थ इत्युक्तम् । श्रोतुश्च मैत्रेयस्य- 'विष्ण्वाधारं यथाचैतत्त्रैलोक्यं समवस्थितम् । परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः ॥' इत्यनुभाषणाच्च । 'ज्योतींषि विष्णु'रित्यादिसामानाधिकरण्यस्यात्मशरीरभाव एव निबन्धनम् । चिदचिद्वस्तुनोश्चास्तिनास्तिशब्दप्रयोगनिबन्धनं ज्ञानस्याकर्मनिमित्तस्वाभाविकरूपत्वेन प्राधान्यमचिद्वस्तुनश्च तत्कर्मनिमित्तपरिणामित्वेनाप्राधान्यमिति प्रतीयते इति- **रामानुजः** ।

**तदिदं सर्वं तूलादपि तृणादपि लघुतरमिति नैतत्प्रतिक्षेपणे मयाऽधुना यत्नः कार्यो यद्यपि तथापि लोकाराधनाय क्रियते- तथाहि—**

'अनित्यमस्त्वसत्यं चास्त्ववस्त्वपि भवेदिदम् । जगन्मिथ्या तु नैवेति वादिनं कोनु जेष्यति ।
अतुच्छत्वादिदं मिथ्या नेतिचेत्किन्नु तुच्छकम् । प्रमाणसम्बन्धानर्हं तच्चेत्किं प्रमितं नवा ॥
आद्ये व्याहतिरेव स्याद्द्वितीये तन्न सिध्यति । शशशृङ्गाद्यसत्तुच्छमितिचेत्तद्विलक्षणम् ॥
किं जगत्परमार्थं सद्ब्रह्मवन्नु तथा यदि । पुराणव्याहता वाक्ये मिथ्यैव न तथा यदि ॥
जगद्वस्त्वितिचेद्ब्रूयाः पुराणानि हतं वचः । यत्रान्यसंज्ञं तद्वस्त्वित्युदितं हि पुराणके ॥

परमार्थस्त्वमेवासीत्यन्यस्यापरमार्थता । प्रोक्तातो परमार्थस्य जगतस्स्यान्न वस्तुता ॥
यत्सदाप्यस्ति तद्वस्तु यत्सदा नास्ति नैव तत् । जगन्नास्ति सदा यस्मात्ततो वस्तु कथं भवेत् ॥
कदाचित्सदपि स्याच्चेद्वस्त्वसत्यमृषेर्वचः । पुराणसंहिताकर्तुर्भवेदेव महाधियः ॥
अवस्तुत्वादिदं नोसदतुच्छत्वाच्च नाप्यसत् । सत्त्वासत्त्वानिरूप्यत्वादिदं मिथ्या गुणाहिवत् ॥
अचिद्वस्त्विति न ब्रूया अचितो ऽदवस्तुता । चिदेकमेव तद्वस्तु परमार्थमितीष्यताम् ॥
विष्णुश्चिद्रूपवस्त्वेव चिद्भिन्नश्चेदचिद्भवेत् । ततोऽवस्त्वेव स भवेत्तन्नेष्टं हि महामुनेः ॥
हरेरचिच्छरीरं स्याच्चिच्छरीरमचिद्यतः । चितस्तु चिच्छरीरं स्यात्कथं वा त्वं विचारय ॥
चिदन्तरं तु नास्त्येव चिदेकमिति हि स्मृतम् । विज्ञानमेकमित्यत्र श्रुत्याप्यर्थोयमुच्यते ॥
आत्मस्वरूपभेदस्तु वाक्चित्तागोचरोपि ते । स्वानुभूत्यैव सिद्धश्चेच्छशशृङ्गञ्च सिध्यतु ॥
देहाद्युपाध्यवस्थानादात्मभेदो भवेद्यदि । घटाद्युपाध्यवस्थानाद्व्योमभेदो भवेदपि ॥
कर्मभेदादात्मभेदो भवेच्चेत्तन्न युज्यते । कर्मणो नात्मगामित्वात्त्वयैवोक्तं ह्यकर्म चित् ॥
कर्मणाऽनात्मगेनापि यदि स्यादात्मनो भिदा । देहस्थयापि जरया जीर्ण आत्मा भवेदपि ॥
विभेदजनकेऽज्ञान इति वाक्येन बोधितात् । आज्ञानादेवात्मभेदस्ते ज्ञानात्तस्मिन् क्षयं गते ॥
नैवात्मभेदो भासेत ज्ञाते द्वैतं न विद्यते । इति श्रुते. स्मृतेश्चापि तस्मादज्ञानमिष्यताम् ॥
स्वानुभूतिप्रसिद्धात्मभेदलिङ्गबलेन हि । भेदकारणमज्ञानं तन्मिथ्या यच्चितः परम् ॥
अचित्त्वं यत्र तत्सर्वं मिथ्यैवावस्तु भावतः । इति प्रयोगः कुत्रापि व्यभिचारं न गच्छति ॥
सामानाधिकरण्यं तु देहदेहितया भवेत् । नैव प्रपञ्चपरयोः परस्याध्यासहानितः ॥
जीवोहं मर्त्य इतिवदहं सर्वमितीश्वरः । तादात्म्याध्यासमागच्छेन्नैवाज्ञानविमोहितः ॥
विष्णुयाथात्म्यवेत्ता वा तादात्म्याध्यासमाश्रितः । सर्वं विष्णुरिति ब्रूयादज्ञानस्य परिक्षयात् ॥
ज्ञानस्वरूपं जगदित्येतद्वाक्येन विष्णुताम् । जगतो मुनिरेवौचत्सर्पस्य गुणतामिव ॥
जगतो विष्णुकायत्वं जगत्यनुगमाद्धरेः । सर्पे रज्जोरिव भवेद्घटे मृद इवाथ वा ॥
आदिमध्यावसानेषु जगतो विष्णुसंस्थितेः । जगद्विष्णुरिति प्रोक्तं कार्यकारणभावतः ॥
आदिमध्यावसानेषु हेतुः कार्यस्य तिष्ठति । नैवास्ति कारणात्कार्यं व्यतिरेकेण कुत्रचित् ॥
व्यतिरिक्तं हरेः किंचिन्नास्तीत्यत्रैव बोधितम् । इदमेवाभिसन्धाय स्पष्टं भागवतेप्यदः ॥
अहमेवासमेकोग्रे नान्यद्यत्सदसत्परम् । पश्चादहं यदेतच्च योवशिष्येत सोस्म्यहम् ॥
हरेर्जातमिदं सर्वमिति सम्प्रतिपत्तिभाक् । यज्जातं तत्तु मिथ्येति श्रुत्यैव परिचोदितम् ॥
असत्यत्वं हि मिथ्यात्वमनित्यत्वं च तद्भवेत् । सत्यं नित्यं न मिथ्येति श्रुतिस्मृतिविदां मतम् ॥
विष्णुमायाकृतमिदं न मिथ्येति वदेद्यदि । दृष्टान्तस्तत्र ते नास्ति पक्षत्वात्सकलस्य च ॥
विष्णुमायाकृतत्वेन सर्वं मिथ्येति वच्म्यहम् । व्यतिरेकमुखेनात्र दृष्टान्तो विष्णुरेव मे ॥
विष्णुमायापि मिथ्यैव विष्णुभिन्नत्वहेतुतः । दृष्टान्तस्तत्र सकलं शुक्तिरौप्यादिकं च मे ॥

परमार्थस्त्वमेवैको नान्योस्तीति वदन्मुनिः । पराशरः प्रमाणं मे मिथ्यात्वपरमार्थकम् ॥
परमार्थोपि न भवन्प्रपञ्चो यदि नो मृषा । परमार्थस्तदा विष्णुर्मिथ्या भवतु नश्शिवम् ॥
चिदचिद्देह ईशश्चेत्परमार्थस्ततो परम् । नास्त्येवापरमार्थाख्यं परमार्थपदं वृथा ।
एवंविधेश्वरज्ञानं परमार्थमितः परम् । ज्ञानस्त्वपरमार्थं चेन्नैतद्प्युपपद्यते ॥
ईश्वरस्यैव देहत्वात्तस्यापि परमार्थकम् । सर्वस्येश्वरदेहत्वे तद्ज्ञानस्येशदेहता ॥
तस्माच्छरीरादखिलाच्चिद्रूपात्परः पुमान् । ईश्वरः परमार्थोन्यस्तस्मादपरमार्थक. ॥
यदीश्वरस्य देहस्याज्जीवो न परमार्थताम् । प्राप्तमीष्टे त्वनिष्टं तन्मोक्षप्राप्तुरभावतः ॥
मोक्षस्य परमार्थत्वात्तत्समाप्तिः कथं भवेत् । जीवस्यापरमार्थस्य तस्माज्जीवः पराभिद. ॥
जीवस्य परमार्थत्वं मुनिनापि समीरितम् । सति जीवेशयोर्भेदे तत्र मिथ्येत्कथञ्चन ॥
अचितो परमार्थत्वं चितोर्जीवेशयोः पुनः । परमार्थत्वमित्युक्तिरपि सङ्गच्छते नहि ॥
परमार्थस्त्वमेवैक इति निर्धारणाबलात् । एकस्य परमार्थत्वं न द्वयोरिति विस्फुटम् ॥
अचितोऽपरमार्थस्य प्रतीतिः कुत इत्यसौ ॥ शङ्का परिहृता ज्ञानविजृम्भितमितीरिणा ॥
अलातवत्स्पन्दमाने विज्ञाने सत्यविद्यया । आभासा इव भूम्याद्या जायन्त इति हीरितम् ॥
विज्ञानस्याचलस्यापि स्पन्दस्समुपपद्यते । अज्ञानाद्गगनस्येव नीलिमेत्यवगम्यताम् ॥
विज्ञाने स्तिमिते तस्मिन् विलयं यान्ति ते समे । अतो मिथ्यैव ते भावा विज्ञानेन विजृम्भिताः ॥
ईश्वरस्यैव सङ्कल्पो यदि विज्ञानमुच्यते । स ईश्वरोपि मायी तत्सङ्कल्पो माययोदितः ॥
मायासाङ्कल्पिकं ज्ञानमिति नैघण्टकोक्तितः । माया सङ्कल्प इति न व्यपदेशवचो हि तत् ॥
ज्ञानस्य तु विरोध्येतदज्ञानं तत्कृतो यतः । अनात्मन्यात्मतादात्म्याध्यासोऽज्ञानं रुणद्धि नः ॥
कर्मजो देहभेदो न ज्ञानरोधक्षमो भवेत् । मर्त्यदेवादिदेहा यद्ज्ञानप्राप्त्युपयोगिनः ॥
मर्त्यादिदेहदं कर्म ज्ञानस्य न विरोधि तत् । अध्यासः कर्मणः स्याच्चेत्कर्मैवाज्ञानमिष्यताम् ।
अनात्मन्यात्मधीहेतुर्यत्तदज्ञानमित्ययम् । सिद्धान्त औपनिषदः कर्मा नात्मनिमित्तकम् ॥
अनात्मनामुपादानं त्वज्ञानं त्रिगुणात्मकम् । त्रिगुणात्मकता यस्मादनात्मस्ववगम्यते ॥
मुक्तदृष्ट्या त्विदं तुच्छप्राज्ञदृष्ट्या तु दुर्वचम् । वास्तवं मूढदृष्ट्या तु सविशेषं विभासते ॥

(सविशेषं सकार्यमिदमज्ञानम्)

जगन्मिथ्येति वादो नः प्रबोधयितुमेव वः । विजयाय तु नो यस्मात्किमज्ञविजयात्फलम् ॥
अनुकम्प्या हि मूढाश्च प्राज्ञस्य समदर्शिनः । शक्तस्योपेक्षणे दोषो यस्माच्छास्त्रेषु घुष्यते ॥
तस्मात्सर्वमिदं सत्यमिति मूढधियं त्यज । सत्य आत्मैक एवेति स ब्रह्मेत्यवधारय ॥
'परमार्थस्त्वसंलाप्यो गोचरो वचसां न यः ॥ परमार्थस्त्वमेवैको नान्योस्ति जगतः पते ॥
तस्माच्च सूक्ष्मादिविशेषणानामगोचरे यत्परमार्थरूपम् ।
किमप्यचिन्त्यं तव रूपमस्ति तस्मै नमस्ते पुरुषोत्तमाय ॥

ज्ञानस्वरूपो भगवान्यतोसावशेषमूर्तिर्न तु वस्तुभूतः ।
तस्मान्न विज्ञानमृतेस्ति किञ्चित्क्वचित्कदाचिद्द्विज वस्तुजातम् ॥
परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः । एवं न परमार्थोस्ति जगत्यत्र नराधिप ॥
परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम । एको व्यापी समश्शुद्धो निर्गुणः प्रकृतेः परः ॥
जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः । विज्ञानं परमार्थोसौ द्वैतिनो तत्त्वदर्शिनः ॥
तदेतदुपदिष्टं ते संक्षेपेण महामते । परार्थसारभूतं यत्तदद्वैतमशेषतः ॥
इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ।
अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।' एतेषु मुनिवाक्येषु स्फुटोर्थोयं मयोदितः ॥
एकस्य परमार्थत्वं मुनिना समुदीरितम् । जीवेशभेदेऽन्यतरोऽपरमार्थस्तयोर्भवेत् ॥
तदनिष्टं तु जगतो परमार्थत्वमीरितम् । विष्णुदेहमयस्यापि परार्थानेकनेष्टितः ॥
(नेष्टितः इष्टयभावात् अनिष्टत्वादित्यर्थः ।)
वस्तुभेदा न वस्तुष्वित्यनेकपरमार्थता । प्रोक्तेति नैव मन्तव्यं वस्तुत्वं व्यावहारिकम् ॥
भूम्यादीनामभिप्रेतं तत्रेत्यध्यवसीयते । पूर्वापरविरोधस्स्यादन्यथा मुनिवाक्ययोः ॥
देहिनः परमार्थत्वे देहो सत्यः कथं भवेत् । इति नैव यतो देहोऽनित्यो नित्येपि देहिनि ॥
विष्णुरेव जगत्स्याच्चेत्परमार्थः कथं नु सः । नैवं रज्जुस्सर्पभूता परमार्थैव लोकतः ॥
न विष्णुर्जगदित्युक्तं मुनिनेति यदीर्यते । ज्ञानात्मकं जगत्सर्वं सर्वमेतज्जनार्दनः ॥
यस्य सर्वमभेदेन जगदेतच्चराचरम् । स सर्वमेव जगत्सर्वं विष्णुरिदं जगत् ॥
इत्यादिमुनिवाक्यानां निर्गतित्वं प्रसज्यते । विष्णोश्शरीरं जगदित्यप्युक्तं त्वर्थवर्णनम् ॥
एकमेवमिदं विद्धि न भेदि सकलं जगत् । वासुदेवाभिधेयस्य स्वरूपं परमात्मनः ॥
अजस्य विविधं यस्य रूपमित्यादिभाषितैः । चिद्रूपस्य हरेरेतद्रूपं स्यान्नु कथं जडम् ॥
इतिचेद्वदसे विद्धि मायावशत इत्यये । वस्तुतोऽरूपमप्यभ्रं भाति नीलं हि मायया ॥
विष्णोर्मायामयं रूपं जगदित्यङ्ग भावयन् । जगद्विष्णोर्वपुरिति क्वचित्प्राह मुनीश्वरः ॥
स्वरूपवाची भवति वपुश्शब्दोपि कुत्रचित् । विज्ञानवपुरित्यादिप्रयोगपरिदर्शनात् ॥
विष्णोः स्वाभाविकं रूपं ज्ञानं मायामयं त्विदम् । जगदित्येतदत्रैव पुराणे स्फुटमीरितम् ॥
यदेतद्दृश्यते मूर्तमेतद्ज्ञानात्मनस्तव । भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसम्प्लवे ॥
ये तु ज्ञानविदश्शुद्धचेतसस्तेऽखिलं जगत् । ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥
एवं ज्ञानस्वरूपत्वाज्जीवो विष्णुवपुर्भवेत् । जीवोऽज्ञानान्मनुष्यादिस्वरूपो वस्तुतो हरिः ॥
मुनिराहामुमेवार्थं सोहं स त्वमहं हरिः । ज्ञानं सत्यं यथाऽसत्यमन्यदित्यपि कण्ठतः ॥
जीवेश्वरस्वरूपस्य ज्ञानस्याहापि सत्यताम् । मायामयस्य जगतो सत्यतां चाह धीनिधिः ॥

जगतोपि स्वरूपं तद्ज्ञानमेव विचारिते । ज्ञाने हि कल्पितं ज्ञेयमज्ञानेनेति दर्शनात् ॥
एवं जीवेशजगतां सत्यं ज्ञानमयं वपु. । अर्थात्मकमसत्यं हि यत्तद्भ्रान्तिप्रकल्पितम् ॥
अत एवोक्तमृषिणा ज्ञानमेकं सदित्यत. । अन्यन्नास्तीति विविधो भेदोऽज्ञानकृतस्त्विति ॥
असत्यमिदमज्ञानमित्यप्यत्रैव वर्णितम् । विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ॥
विनाशप्रतियोगित्वभेदहेतुत्वधर्मयोः । ज्ञानाभावेऽनुपाप्त्ये तु भवतो नेति निश्चयः ॥
भेदहेतुस्तु कर्मेति वादोप्येतेन नाशितः । भेदहेतुत्वमज्ञानस्यात्र यत्स्फुटमीरितम् ॥
तद्भावभावमापन्नस्ततोसौ परमात्मना । भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥
इत्यादिवाक्यसंवादादविद्याज्ञानमेव हि । अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः ॥
इति वाक्ये च नो कर्म तदज्ञानं प्रमाणवत् । असत्यत्वेन मिथ्यात्वमप्यस्य स्फुटमीयते ॥
(प्रमाणवत् प्रमाणासिद्धमित्यर्थः, ईयते गम्यते)

अस्मिन्काले सतोन्यस्मिन्कालेऽसत्त्वेपि वस्तुनः । मिथ्यात्वं नेतिचेद्ब्रूपे तत्र दृष्टान्तमीरय ॥
तादृशस्य च मिथ्यात्वे दृष्टान्तोस्माभिरुच्यते । अन्वयेन गुणाद्यादिर्व्यतिरेकेण केशवः ॥
शास्त्रमस्ति प्रमाणं चेत्तदुदाहर धीर भो । नासतो विद्यते भावो नाभावो विद्यतेऽसतः ॥
इत्यसत्ताऽनर्हभावं सतो नः प्राह माधवः । कालान्तरपरं वाक्यं तदित्युक्तिर्न युज्यते ॥
सतस्तथैव सत्ताया असत्तायास्तथाऽसतः । अभावं कोऽनुमन्येत येन तत्सफलं वचः ॥
ज्ञानबाध्यस्य मिथ्यात्वं नेतिचेत्तत्र का प्रमा । ज्ञानबाध्यो गुणाद्यादिर्मिथ्या हि परिदृश्यते ॥
(प्रमा प्रमाणम् । )

सत्यबन्धस्य विज्ञानबाध्यत्वं कथमित्यसौ । शङ्का परिहृतानेन बन्धासत्यत्वनिर्णयात् ॥
बन्धः प्रतीयमानोयं कथं मिथ्येतिचेद्वदेः । प्रतीयमानत्वादेवेत्यवेहि गुणसर्पवत् ॥
ज्ञेयत्वादेव मिथ्येदं सर्वमित्यवगत्य सः । असत्यं मुनिराहास्मान्विज्ञानात्सकलं परम् ॥
ज्ञानं ज्ञेयं च भवतीत्येवं मा ब्रूहि दुर्मते । व्याघातादनवस्थानोऽन्योन्याश्रयवशादपि ॥
ज्ञानादन्योस्त्यपि ज्ञाता सत्य इत्यपि मावदेः । परमार्थो हि विज्ञानमेकमित्युक्तवान्मुनिः ॥
ज्ञातुः स्वरूपं ज्ञानं हि जीवस्येशस्य सम्मतम् । जीवेश्वरस्वरूपान्यन्न किञ्चित्सत्यमस्ति तत् ॥
जगदेवमसत्यं च सत्यमेवात्मरूपतः । रज्जुसर्पस्स्वतोऽसत्यस्सत्यो हि गुणरूपतः ॥
व्यवहारदशायां च सत्यमेतज्जगत्स्मृतम् । एतत्तु यत्संव्यवहारात्मकञ्चेति दर्शनात् ।
विष्ण्वाधारत्वकथनाज्जगतस्सत्यतेति न । रज्ज्वाधारस्य सर्पस्यासत्यत्वपरिदर्शनात् ।
अन्याधारस्य सत्यत्वे दृष्टान्तस्तव नास्ति हि । दृष्टान्तस्तस्य चासत्त्वेऽनन्याधारं बृहन्मम ॥
असत्याधारता विष्णोर्न स्यादिति न मन्यताम् । असत्याधारता विष्णोरज्ञानादेव सम्भवेत् ॥
अज्ञानं चापि तत्कार्यं विष्णौ नैवास्ति वस्तुतः । एकमेवाद्वितीयं हि सद्ब्रह्मेति श्रुतीरितम् ॥
परमार्थस्त्वमेवैक इत्यत्रापीदमीरितम् । तद्ब्रह्माज्ञानवादोयं पुराणे वैष्णवे स्थितः ॥

अत्रायं संग्रह.श्लोकः—

'अस्तीत्येवोपलब्धव्यः परमार्थः परात्परः । अस्ति नास्तीति विज्ञेयो परमार्थस्ततः परः ॥

आत्मन एकस्यैव केवलास्तिबुद्धिविषयत्वमचितस्तु बुद्धिद्वयविषयत्वमिति तवापि मतं- बुद्धिद्वय-विषयत्वादेव तस्याचितो मिथ्यात्वमस्माभिरुच्यते । शुक्तिरजतादिकं हि बुदिद्वयविषयत्वेन मिथ्या भवति- प्रतीतिकाले तस्यास्तिबुद्धिविषयत्वं बाधकाले तु नास्तिबुद्धिविषयत्वमिति ।

**यदुक्तम**स्तित्वनास्तित्वयोगिनि वस्तुन्यचिति केवलास्तिबुद्धिबोध्यत्वमपरमार्थ इति, **तदप्य-स्माकमिष्टमेव**—भ्रान्तिज्ञानस्यापरमार्थत्वात् । पराशरस्य तु न त्वदुक्तोभिप्रायः- प्रदर्शितेभ्यस्तद्वाक्ये-भ्यस्त्वदुक्तार्थानागमनात् ॥

## अनिर्वचनीयभावरूपाऽज्ञानसिद्धौ स्कान्दादिपुराणान्तरसंवादप्रदर्शनम् ।

**अथ** प्रकृतार्थसंवादाय पुराणान्तरवाक्यान्यप्युदाह्रियन्ते, तथाहि- स्कान्दपुराणे सूतसंहितायाम्--

मन्माया शक्तिसंकॢप्तं जगत्सर्वं चराचरम् । सापि मत्तः पृथङ्माया नास्त्येव परमार्थतः ॥
विभेदजनकेऽज्ञाने नष्टे ज्ञानबलान्मुने । अज्ञानेनावृता मर्त्या न विजानन्ति शङ्करम् ॥
एकस्मिन् भिद्यते भ्रान्त्या मायया न स्वभावतः । तस्मान्मत्तः पृथङ्नास्ति जगन्माया च सर्वदा ॥
अस्ति नास्ति मृषा भाति न भातीत्यादिमायया । कल्पितं चित्सुखानन्ते परमार्थे शिवात्मनि ॥
मायातत्कार्यमप्यस्माच्छिवात्सत्यादिलक्षणात् । प्रत्यक्षसिद्धान्नास्त्येव परमार्थनिरूपणे ॥
शिवस्वरूपमेवाहुर्जगदेतद्विचक्षणाः । सर्वस्वरूपमज्ञानाद्दृश्यते न च वस्तुतः ॥
मायामात्रमिदं द्वैतमिति चाहापरा श्रुतिः । स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः ॥
न सन्ति नास्ति माया च तद्धि शुद्धात्मवेदनम् । अचेतनानामन्येषामसत्यत्वे निदर्शनम् ॥
शुक्तिका रजतं विप्रास्सत्य एव ततश्शिवः । अध्यस्तं हि सदा द्वैतं दृश्यत्वाच्छुक्तिरूप्यवत् ॥
स्वाज्ञानं तत्प्रसूतं च संसारं स्वात्मना ग्रसन् । कर्मभिर्व्यवहारे तु बद्धोपि स्वीयमायया ॥
वस्तुतः परमात्मायं खलु तैर्न हि बध्यते । व्यावहारिकदृष्ट्येयं विद्याऽविद्या न चान्यथा ॥
तत्त्वदृष्ट्या तु नास्त्येव तत्त्वमेवास्ति केवलम् । तस्मादज्ञानमज्ञानकार्यं च मुनिपुङ्गवाः ॥
एतद्ब्रह्मैव नैवान्यदिति मे निश्चिता मतिः । अज्ञानाज्जीवरूपेण भासते न स्वभावतः ॥
तस्माद्ध्वस्तमज्ञानं तत्कार्यं चात्मरूपतः ॥' इति 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥'
इत्यादिगीता चाज्ञाने मानम् ।

## श्रुतीनामविद्यानिवर्तकनिर्विशेषब्रह्मज्ञानपरत्वेपपत्तिः ।

**अथ यदुक्तं रामानुजेन**- यदुक्तं निर्विशेषब्रह्मविज्ञानादेवाविद्यानिवृत्तिं वदन्ति श्रुतय इति तदसत्- 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्'- 'तमेवं विद्वानमृत इह भवति, नान्यः पन्था विद्यतेऽयनाय', 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि', 'न तस्येशे कश्चन तस्य नाम महद्यशः', 'य एनं विदुरमृतास्ते भवन्ती'त्याद्यनेकवाक्यविरोधात् । ब्रह्मणस्सविशेषत्वादेव सर्वाण्यपि वाक्यानि सविशेष-

ज्ञानादेव मोक्षं वदन्ति, शोधकवाक्यान्यपि सविशेषमेव ब्रह्म प्रतिपादयन्तीत्युक्तमिति, **तदयुक्तम्**—आदित्यवत्प्रकाशकत्वेन चैतन्यस्यादित्यवर्णत्वोक्तिर्न तु भास्वररूपवत्त्वात्, भास्वररूपं हि तेजोभूतगुणः, स आकाशादेरेव नास्तीति कथं परमात्मनस्स्यात्- 'अशब्दमस्पर्शमरूपमव्ययमिति', 'न संदृशे तिष्ठति रूपमस्य', 'न चक्षुषा पश्यति कश्चनैन'मिति च श्रूयते हि । नचाप्राकृतं रूपमस्ति तत्तु दिव्येन चक्षुषा दृश्यत इति वाच्यं, तदप्राकृतं रूपं चैतन्यमेव- चैतन्यातिरिक्तस्य सर्वस्य प्राकृतत्वात् । तच्च दिव्यं चक्षुर्ज्ञानमेव येन ज्ञानेन ब्रह्म ज्ञायते तद्ज्ञानं हि दिव्यं चक्षुः । इदं तु न चैतन्यं, किंतु तत्प्रतिफलनसहिता ब्रह्माकारान्तःकरणवृत्तिः । एवं विद्युतः पुरुषादधीत्यत्रापि पुरुषस्य चैतन्यरूपस्य विद्युद्वत्प्रकाशकत्वादेव विद्युच्छब्दव्यपदेशः । यद्वा विशेषेण द्योतत इति विद्युदिति स्वप्रकाशचैतन्यमित्येवार्थः। नचेदं चैतन्यस्य भानमादित्यस्येव, विद्युत इव वा प्रकाशपदवाच्यं, तमोविरोधिद्रव्यरूपं- तमसोपि चैतन्येन भास्यमानत्वात् । न हि तेजसा तमो भास्यते, किंतु नाश्यते । नन्वेवं तमसः परस्तादिति कथमुक्तमिति वाच्यं, तत्र तमश्शब्दस्याज्ञानपरत्वात् । नचाज्ञानमिति कश्चिद्भावरूपः पदार्थो नास्तीति वाच्यं, तस्य स्थापितत्वात् । न तस्येति श्रुतिरपि निर्विशेषचैतन्यपरैव- चैतन्यं हि स्वतन्त्रमिति न तस्येशः कश्च नास्ति- मायया तु तस्य नामरूपे कल्पिते इति कृत्वा तस्य नामेति श्रुतिरपि न निर्विशेषविरोधिनी । ब्रह्मणस्सविशेषादेवेत्ययुक्तं- मायया सविशेषत्वेपि वस्तुनो निर्विशेषत्वाद्ब्रह्मणः। **एतेन**- सविशेषब्रह्मज्ञानात्सालोक्याद्यपरममुक्तिसम्भवेपि न सायुज्यलक्षणमुक्तिसिद्धिः- तस्या निर्विशेषब्रह्मज्ञानाधीनत्वादिति **सिद्धम्** । सायुज्यं नाम निर्विशेषं ब्रह्मैव- ब्रह्मणस्सविशेषत्वे सायुज्यलक्षणाभेदायोगात् । निर्भेदं हि निर्विशेषम् । नच सायुज्यं श्रुत्यनभिप्रेतमिति वाच्यं, 'ब्रह्मविद्ब्रह्मैव भवति- तत्र को मोहः कश्शोक एकत्वमनुपश्यत' इत्यादिश्रुतेः । नच जीवेशयोरैक्यं श्रुतिषु क्वापि नोपदिष्टमिति वाच्यं, तत्त्वमसीत्यादिभिर्महावाक्यैरुपदिष्टत्वात । तत्त्वमसीत्यादीनि हि शोधिततत्त्वम्पदार्थयोरैक्यमुपदिशन्तीति निर्विशेषब्रह्मपराणि । तत्त्वंपदार्थशोधनं च- 'सत्यं ज्ञानमनन्तं ब्रह्म, योयं विज्ञानमय' इत्यादिश्रुतिवाक्यैरेव कृतम् । **एतेन**- शोधकवाक्यान्यपि सविशेषब्रह्मपराणीति **प्रत्युक्तम्**—चैतन्यमात्रपरत्वात्तेषां- शुद्धं चैतन्यं हि निर्विशेषं ब्रह्म ।

**ननु** तत्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरं, तत्त्वम्पदयोस्सविशेषब्रह्माभिधायित्वात्- तत्पदं हि सर्वज्ञं, सत्यसङ्कल्पं, जगत्कारणं, ब्रह्म परामृशति- तदैक्षत बहुस्यामित्यादिषु तस्यैव प्रकृतत्वात्- तत्समानाधिकरणं त्वम्पदं चाचिद्विशिष्टजीवशरीरकं ब्रह्म प्रतिपादयति- प्रकारद्वयावस्थितैकवस्तुपरत्वात्सामानाधिकरण्यस्य । प्रकारद्वयपरित्यागे प्रवृत्तिनिमित्तभेदासम्भवेन सामानाधिकरण्यमेव परित्यक्तं स्यात्- द्वयोः पदयोर्लक्षणा च- सोयं देवदत्त इत्यत्रापि न लक्षणा भूतवर्तमानकालसम्बन्धितयैक्यप्रतीत्यविरोधात् । देशभेदविरोधश्च कालभेदेन परिहृतः । 'तदैक्षत बहुस्या'मित्युपक्रमविरोधश्च-एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च न घटते- ज्ञानस्वरूपस्य निरस्तनिखिलदोषस्य सर्वज्ञस्य समस्तकल्याणगुणात्मकस्याज्ञानं तत्कार्यानन्तापुरुषार्थाश्रयत्वं च भवति- बाधार्थत्वे च सामानाधिकरण्यस्य त्वं

तत्पदयोरधिष्ठानलक्षणा, निवृत्तिलक्षणा चेति लक्षणादयस्त एव दोषाः । इयांस्तु विशेषः- नेदं रजतमितिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनम् । तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्च । अधिष्ठानं तु भ्रान्तितिरोहितमतिरोहितस्वरूपं तत्पदेनोपस्थाप्यत इति, **चेन्न**—प्रागधिष्ठानप्रकाशे तदाश्रयभ्रमबाधयोरसम्भवात् । भ्रमाश्रयमधिष्ठानमतिरोहितमिति, चेत्- तदेवाधिष्ठानस्वरूपं भ्रमविरोधीति तत्प्रकाशे सुतरां न तदाश्रयभ्रमबाधौ- ततोधिष्ठानातिरेकिपारमार्थिकधर्मतत्तिरोधानानभ्युपगमे भ्रान्तिबाधौ दुरुपपादौ- अधिष्ठाने हि पुरुषमात्राकारे प्रतीयमाने तदतिरेकिणि पारमार्थिके राजत्वे तिरोहिते सत्येव व्याधत्वभ्रमः राजत्वोपदेशेन च तन्निवृत्तिर्भवति- नाधिष्ठानमात्रोपदेशेन- तस्य प्रकाशमानत्वेनानुपदेश्यत्वात्- भ्रमानुपमर्दित्वाच्च । जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयम् । प्रकारद्वयविशिष्टैकवस्तुप्रतिपादनेन सामानाधिकरण्यं च सिद्धम् । निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य ब्रह्मणो जीवान्तर्यामित्वमप्यैश्वर्यमपरं प्रतिपादितं भवति । उपक्रमानुकूलता च- एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च- सूक्ष्मचिदचिद्वस्तुशरीरस्यैव ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरत्वेन कार्यत्वात् । 'तमीश्वराणां परमं महेश्वरम्', 'परास्य शक्तिर्विविधैव श्रूयते', 'अपहतपाप्मा', 'सत्यकामस्सत्यसङ्कल्प' इत्यादिश्रुत्यन्तराविरोधश्च- इति, **अत्रोच्यते**—तत्पदमभिधया सर्वज्ञं ब्रह्म प्रतिपादयितु नाम- त्वम्पदं तु अचिद्विशिष्टजीवशरीरकं ब्रह्म नाभिधया प्रतिपादयति- त्वम्पदस्य तत्राशक्तत्वादित्यवोचाम । सति विशेषणभेदे विशिष्टैक्यं च दुरुपपादं- नहि रक्तदेवदत्ताभिन्नश्श्यामदेवदत्तो भवति, नापि काशीस्थदेवदत्ताभिन्नो रामेश्वरस्थदेवदत्तो भवति, नापि तरुणदेवदत्ताभिन्नो वृद्धदेवदत्तो भवति । नच कालभेदाद्भवतीति वाच्यं, कालस्यापि भेदकत्वात् । न हि तत्कालावच्छिन्नदेवदत्ताभिन्न एतत्कालावच्छिन्नदेवदत्तो भवति । नच य एव पूर्वं रक्तः काशीस्थस्तरुणश्च स एवेदानीं श्यामो रामेश्वरस्थो वृद्धश्च भवतीत्यैक्यसिद्धिरिति वाच्यं, किं यत्तत्पदार्थयोरैक्यसिद्धिः ? किं वा पूर्वेदानीम्पदार्थयोः रक्तश्यामपदार्थयोः काशीस्थरामेश्वरस्थपदार्थयोस्तरुणवृद्धपदार्थयोश्चैक्यसिद्धिः ? आद्य इष्ट एव । द्वितीयस्तु विरुद्धः- सचाद्यः पदार्थो विशेष्यमात्रं शुद्धदेवदत्त एव- तस्य चोपस्थितिस्सोयंपदयोर्लक्षणाधीनैवेति सोयं देवदत्त इत्यत्र लक्षणाऽवश्यमाश्रयणीया । एवं प्रकृतेपि सर्वज्ञत्वकिञ्चिद्ज्ञत्वादिविशेषणभेदाद्विशिष्टजीवेश्वरयोरैक्यासिद्धेश्चैतन्यमात्रे पदद्वयस्य लक्षणाश्रयणीयैव । नचैकस्मिन्नेव पदे लक्षणाश्रयतां तावतैव विरोधपरिहारादिति वाच्यं, अत्र लक्षणा, अत्र तु नेति निर्णेतुमशक्यत्वादुभयत्रापि लक्षणैव । किं च शुद्धवस्तुविशिष्टवस्तुनोरपि सामानाधिकरण्यं न सम्भवति- शुद्धत्वाशुद्धत्वयोर्विरुद्धधर्मयोरेकत्रायोगात् । एतेन शुद्धब्रह्मणः अचिद्विशिष्टजीवशरीरकब्रह्मसामानाधिकरण्यं न युज्यत इति सिद्धम् । अपिच त्वन्मते शुद्धं ब्रह्मैव नास्तीति कृत्वा तत्पदस्यापि विशिष्टं ब्रह्मैवार्थो वाच्यः- तच्च विशिष्टं ब्रह्म यदि त्वम्पदवाच्यमचिद्विशिष्टजीवशरीरकं ब्रह्मैव तर्हि पदद्वयस्याप्येक एवार्थ इति मत्पक्षोक्तदोषस्त्वत्पक्षेपि पतितः । यदि तु त्वत्पदवाच्याद्भिन्नं तर्हि विशिष्टयोर्विरोधात्सामानाधिकरण्यायोग एव- नहि मुक्तचिच्छरीरकं ब्रह्म बद्धचिच्छरीरकब्रह्माभिन्नं भवति- नाप्येतदुपदेशेन किञ्चित्फलम्— 'य आत्मनि तिष्ठ'न्निति

श्रुत्यन्तरादेव ब्रह्मणो जीवशरीरकत्वसिद्धेः । **एतेन** जीवान्तर्यामित्वरूपैश्वर्यमुक्तं भवतीत्यपास्तम्— तस्यान्यत एव सिद्धत्वेनापूर्वत्वाभावात् । किं च किं त्वं तत्पदवाच्यं सर्वज्ञत्वादिगुणकं ब्रह्म अशरीरमिति ब्रूषे ? यद्वा सशरीरम् ? आद्ये- अशरीरसशरीरयोरैक्यानुपपत्तिः- नह्यशरीरं सशरीरं भवति- सशरीरं वा अशरीरम् । द्वितीये- किं तच्छरीरम् ? किं शुद्धप्रकृतिः ? किमुताशुद्धप्रकृतिः ? किं वा शुद्धप्रकृतिविशिष्टचित् ? किं स्विदशुद्धप्रकृतिविशिष्टचित् ? किन्नु शुद्धचित् ? आद्ये- शुद्धप्रकृतिशरीरकं ब्रह्म कथमशुद्धप्रकृतिविशिष्टजीवशरीरकब्रह्माभिन्नं भवेत् । द्वितीये- केवलाशुद्धप्रकृतिशरीरकं ब्रह्म कथमशुद्धप्रकृतिविशिष्टजीवशरीरकब्रह्माभिन्नं स्यात् । तृतीये- शुद्धप्रकृतिविशिष्टचिच्छरीरकं ब्रह्म कथमशुद्धप्रकृतिविशिष्टचिच्छरीरकब्रह्माभिन्नं स्यात् । चतुर्थे- अशुद्धप्रकृतिविशिष्टस्स चित् किं त्वम्पदवाच्य एव ? यद्वा तदन्यः ? आद्ये- पदार्थद्वयाभावात्कथं सामानाधिकरण्यं तवापि मते । द्वितीये- अशुद्धप्रकृतिविशिष्टतज्जीवशरीरं ब्रह्म अशुद्धप्रकृतिविशिष्टतदन्यजीवशरीरकं कथं स्यात् । पञ्चमे- असम्भव एव-- त्वन्मते प्रकृतिवियुक्तस्य शुद्धस्य चित एवाभावात् । तद्भावे वा शुद्धचिच्छरीरकं ब्रह्म कथमशुद्धप्रकृतिविशिष्टजीवशरीरकब्रह्माभिन्नं स्यात् । तस्मात्तत्त्वम्पदयोः सामानाधिकरण्यं त्वन्मते नैव सम्भवति- तत्त्वम्पदार्थयोरैक्यासिद्धेरिति ।

**ननु** तद्विशेषणविशिष्टत्वेन तदन्यविशेषणविशिष्टत्वेन च एकमेव वस्तु स्थितमिति कृत्वा प्रकारद्वयावस्थितैकवस्तुपरं सामानाधिकरण्यं सिध्यत्येवास्माकं तत्त्वम्पदयोरिति, **मैवम्**—एवंसति विशेषणानां विशेषणत्वमेव हीयेत- विशेषणत्वं हि व्यावर्तकत्वं- तद्धि विशेष्यं व्यावर्तयति- यथा नीलमुत्पलमित्युक्ते प्रकृतमुत्पलं रक्तोत्पलाद्व्यावर्तयति नीलमिति विशेषणम् । यथा च घटाकाश इत्युक्ते प्रकृतमाकाशं मठाकाशाद्व्यावर्तयति घट इति विशेषणम् । एवं तद्विशेषणविशिष्टं ब्रह्म तदन्यविशेषणविशिष्टाद्ब्रह्मणो व्यावर्तयत्येव तद्विशेषणविशिष्टत्वरूपविशेषणम् । अथापि यदि कपिमुष्टिवद्दृढाभिनिवेशं न त्यजसि, तर्हि मायावच्छिन्नेश्वरस्वरूपावस्थितं तच्छब्दवाच्यं ब्रह्मैवाविद्यावच्छिन्नजीवस्वरूपेणावस्थितमिति मन्मतेपि लक्षणां विना मुख्यं सामानाधिकरण्यं तत्त्वम्पदयोस्सुसम्पादमेव । नच निर्विशेषब्रह्मासिद्धिः- आकाशस्य मठावच्छिन्नत्वघटावच्छिन्नत्ववच्चैतन्यस्य ब्रह्मणो मायावच्छिन्नत्वाविद्यावच्छिन्नत्वेऽज्ञानकृते व्यावहारिके एव, नतु पारमार्थिके इति कृत्वा वस्तुतस्तत्सिद्धेः । नच परमार्थभूतनिर्विशेषब्रह्मप्रतिपादनान्महावाक्यत्वं न स्यात्तत्त्वमस्यादिवाक्यस्येति वाच्यं, जीवेश्वराद्वैतरूपमुख्यतात्पर्यप्रतिपादनसम्भवेन सर्वसंसारविनाशरूपमहाफलजननाच्च महावाक्यत्वसम्भवात् । त्वन्मते तु तत्त्वमस्यादिवाक्यस्य जीवशरीरकं ब्रह्मेत्यर्थलाभेन जीवब्रह्माभेदरूपमुख्यतात्पर्यासिद्ध्या न संसारनिवृत्तिरूपमहाफलसिद्धिरिति न महावाक्यत्वसिद्धिः । नहि घटवदहमपि ब्रह्मणश्शरीरमिति ज्ञानाज्जीवस्य किमपि फलं-- प्रत्युत महदेव भयं च 'द्वितीयाद्वै भयं भवतीति' श्रुतेः । जडत्वानित्यत्वादिप्रसङ्गभयं च । किंच त्वम्पदार्थस्य जीवशरीरकं ब्रह्मेत्यस्य ज्ञानादेवाभीष्टसिद्धौ तदसिपदवैयर्थ्यमेव चिदचिद्विशिष्टं चिदचिच्छरीरकं ब्रह्मेति हि तव मतं- तत्तु त्वम्पदेनैव सिद्धं- त्वम्पदस्य अचि-

द्विशिष्टजीवशरीरकब्रह्मवाचित्वात् । अचिद्विशिष्टेत्यनेन हि ब्रह्मणो जीवशरीरकत्ववदचिच्छरीरकत्वमपि सिद्धम् । नच 'तत्त्वमसि श्वेतकेतो' इत्यनेन त्वम्पदस्य श्वेतकेतुतद्देहयोरेव ब्रह्मशरीरत्वं सिद्धम् । नत्वन्येषां जीवानां तद्देहानां चेति तदर्थस्तत्पदनिर्देश इति वाच्यम्, अन्येषां जीवानां तद्देहानां च ब्रह्म-शरीरत्वज्ञानान्न किमपि फलं श्वेतकेतोरिति । नच मदेकशरीरकमेव न ब्रह्म, किं तु सर्वशरीरकमपीति ब्रह्मणः परमैश्वर्यज्ञानं श्वेतकेतोः फलमिति वाच्यम्, 'ऐतदात्म्यमिदं सर्वं' मित्यनेनैव तत्सिद्धेः । नच तव मतेपि कथं न पुनरुक्तिरिति वाच्यं, 'ऐतदात्म्यमिदं सर्व'मित्यनेन दृश्यं सर्वं जगद्ब्रह्मैवेति प्रतिपा-दितं, तत्त्वमसीत्यनेन तु द्रष्टा जीवो ब्रह्मेति प्रतिपादितमित्यपुनरुक्तेः । **एतेन** तत्त्वंपदयोरुभयोरपि चैतन्यपरत्वे एकेनैवालमिति **प्रत्युक्तम्**- उद्देश्यविधेयसमर्पकत्वेन पदद्वयस्यावश्यकत्वात् । अत्र च तन्त्रेण जीवब्रह्मणोर्द्वयोरप्युद्देश्यत्वं विधेयत्वं च- तत्त्वमसि त्वन्तदसीत्यन्यत्र व्यतिहारदर्शनात् ।

**ननु** प्रकारद्वयं परित्यज्य पदद्वयस्यापि चैतन्यपरत्वेऽभ्युपगते सति सामानाधिकरण्यमेव त्यक्तं स्यादिति **यदुक्तं** तत्र कस्समाधिरिति, **उच्यते** -तत्परित्याग **इष्टएवेति**- घटाकाशो मठाकाशो भवतीत्युक्ते विरुद्धयोर्घटाकाशमठाकाशयोस्सामानाधिकरण्यायोगाद्घटमठरूपविशेषणांशद्वयं परित्यक्तम् । तत्त्यागे तु आकाश एक एव सिद्धः, नतु द्वावाकाशौ- आकाशभेदकोपाध्यभावात् । तदा आकाशद्वयाभावादाकाश आकाशो भवतीति न सामानाधिकरण्यं तयोरिष्यते, किं तु तत्परित्याग एव आकाश इत्येवोच्यते-- तथा जीवचैतन्यमीश्वरचैतन्यं भवतीत्युक्ते विरुद्धयोर्जीवेश्वरचैतन्ययोस्सामानाधिकरण्यायोगाज्जीवेश्वर-रूपविशेषणांशद्वयं परित्यक्तम् । तत्त्यागे तु चैतन्यमेकमेव सिद्धं, नतु द्वे चैतन्ये- चैतन्यभेदकोपाध्यभा-वात् । तदा चैतन्यद्वयाभावाच्चैतन्यं चैतन्यं भवतीति न सामानाधिकरण्यं तयोरिष्यते, किं तु तत्परित्याग एव चैतन्यमित्येवोच्यते इति । अयमेव महावाक्यस्याखण्डार्थो नाम- तस्मात्तत्त्वम्पदयोरसिपदबोधितस्य सामानाधिकरण्यस्यानुपपत्तिर्विशेषणांशं त्याजयित्वा सामानाधिकरण्यमपि त्याजयति- अयं सामानाधि-करण्यपरित्यागः पदद्वये लक्षणा च तवाप्यस्त्येव- तत्तच्छरीरविशिष्टयोर्ब्रह्मणोस्सामानाधिकरण्यायोगा-त्पदयोः केवलब्रह्मणि लक्षणा, केवलस्य ब्रह्मण एकत्वेन सामानाधिकरण्यपरित्यागश्चेति । यदि तव लक्षणां विनापि विशिष्टब्रह्मैक्यं सिध्यति, तर्हि ममापि तां विना विशिष्टचैतन्यैक्यं सिध्यत्येवेत्युक्तमेव । **यदुक्तमुपक्रमविरोध** इति, **तन्न**— जगत्कारणं ब्रह्मैव- तत्पदवाच्यार्थ इति मयोच्यमानत्वात् । लक्ष्यार्थ-पक्षेपि यन्मायया जगत्कारणं ब्रह्म तदेव वस्तुतश्शुद्धं ब्रह्मेत्यभिधीयमानत्वात् । मायोपहितं हि शुद्धं ब्रह्म तत्पदस्य लक्ष्यार्थः तदेव जगत्कारणत्वेनोपलक्षितं चेति- ब्रह्मणस्तटस्थलक्षणं हि जगत्कारणत्वम् । तवैव 'सता सोम्य तदा सम्पन्नो भव'तीति पूर्ववाक्यविरोधः । नहि देहो देहिना सम्पद्यते- येनेश्वर-शरीरं जीव ईश्वरेण सम्पद्येत । **यदुक्तमेकविज्ञानेन** सर्वविज्ञानं च न घटत इति, **तन्न**—एकस्मिं-श्चैतन्ये ज्ञातेसति तस्मिन्नध्यस्तमज्ञानं तदवस्थाविशेषौ मायाऽविद्ये तदवच्छिन्ने ईशजीवचैतन्ये- माया-परिणामसत्त्वादिगुणत्रयावच्छिन्नं ब्रह्मविष्णुरुद्राख्यमूर्तित्रयं- तमोमयाज्ञानशब्दवाच्यप्रकृतिपरिणामभूतं सर्वं भूतभौतिकात्मकं जगच्च ज्ञायत इति जीवेश्वरयोः ब्रह्माभिन्नत्वादज्ञानस्य ब्रह्मशक्तित्वाज्जगतो

ब्रह्माज्ञानकार्यत्वाच्च । ब्रह्मणि विदिते सर्वं विदितं भवतीत्यर्थः । तव मते तु नैतदुपपद्यते- चिदचिदीश्वराणां त्रयाणामन्योन्यविलक्षणत्वेन ईश्वरस्य ब्रह्मण एकस्य ज्ञानेन चिदचितोस्तद्भिन्नयोर्ज्ञानासिद्धेः । नच चिदचिच्छरीरकब्रह्मज्ञानात्सर्वविज्ञानसिद्धिरिति वाच्यं, चिदचिच्छरीरकब्रह्मविज्ञानस्य सविशेषणत्वेनैकज्ञानत्वाभावात्सर्वशब्दवाच्यं च चिदचिच्छरीरकं ब्रह्मैवेति कृत्वाऽनेकविज्ञानात्तदनेकविज्ञानस्यैव सिद्धिरिति । नाप्यस्मात्किमपि फलं- यद्येकस्मिन्नेव ज्ञाते सति सर्वमपि ज्ञायेत तदा महत्फलं भवति सर्वज्ञानप्रयासाभावरूपम् । अनेकज्ञानादनेकज्ञानसिद्धिस्तु नैव फलाय । किं च यद्धेतुभूतमनेकज्ञानं तदेव फलभूतं चेति । नच सूक्ष्मचिदचिच्छरीरकब्रह्मविज्ञानात्स्थूलचिदचिच्छरीरकब्रह्मविज्ञानसिद्धिः फलमिति वाच्यं, तदापि सूक्ष्मत्वस्थूलत्वांशकृत एवैपद्भेद इत्यकिञ्चित्कर एव सः- प्रलयकालिकयोः सूक्ष्मावस्थयोश्चिदचितोरिदानीं ज्ञातुमशक्तत्वाच्च । अपिच सूक्ष्मावस्थचिदचिच्छरीरकब्रह्मविज्ञानात् स्थूलावस्थचिदचिच्छरीरकब्रह्मविज्ञानमपि न सम्भवति- सूक्ष्मस्थूलयोर्भेदात्, अभेदस्य च विरुद्धत्वात् । किं च ब्रह्माण्डगताशुद्धचिदचिच्छरीरकब्रह्मज्ञानादप्राकृतवैकुण्ठलोकगतशुद्धचिदचिच्छरीरकब्रह्मज्ञानं नैव सम्भवति- विलक्षणत्वात् । तस्मात्तव मते एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं नैव घटते ।

**यदुक्तं** तव मते ज्ञानस्वरूपस्याज्ञानाश्रयत्वं, निर्दोषस्य सगुणस्य चानन्तापुरुषार्थाश्रयत्वं च दोष इति, **तन्न-** ज्ञानाज्ञानयोरविरोधस्योपपादितत्वात्- निर्दोषं निर्गुणं च ब्रह्मेति स्थापितत्वात् । यदि सदोषं तर्हि अनन्तापुरुषार्थाश्रयं स्यात् । यदि तु सगुणं तर्ह्यनन्तपुरुषार्थाश्रयं स्यान्न तु सदोषं, नापि सगुणमिति कथं तत्प्रसक्तिः । नचाज्ञानदोषाश्रयमिति वाच्यम्, अस्मान्प्रत्येवाज्ञानं दोषायते नतु ब्रह्मप्रति- 'मायामेघो जगन्नीरं वर्षत्येव यथा तथा । चिदाकाशस्य नोहानिर्न वा लाभ इति स्थितिः' इत्युक्तं ह्यभियुक्तैः । कौशिकदृष्ट्या मेघाद्यावरणरहितेपि दिने तम इव अज्ञदृष्ट्या ब्रह्मण्यज्ञानमस्तीत्युच्यते, न तु वस्तुतोऽस्तीति सिद्धान्तात् । एवमज्ञानाभावादेव तत्कृतं जगदपि वस्तुतो नास्त्येव ब्रह्मणीति न ब्रह्मणो दुष्टादुष्टाश्रयत्वम् । अत एव खलु 'एकमेवाद्वितीयं ब्रह्मे'ति निर्विशेषं ब्रह्म श्रूयते । तस्मान्निर्विशेषं ब्रह्मेति वादिष्वस्मासु भवता नायं दोषः पातयितुं शक्यते, प्रत्युत त्वय्येव पतति- अशुद्धचिदचिच्छरीरकत्वेनानन्तापुरुषार्थाश्रयत्वं हि ब्रह्मणस्सम्भवति । नचाकाशस्येव न सम्भवतीति वाच्यं, तस्य जडत्वादस्तु दुःखाद्यसम्भवः । ईश्वरस्य तु ज्ञातृत्वादस्ति तत्सम्भवः । अहो ! एकस्मिन्नेव देहे वसन्नयं जीवोऽनन्तदुःखशोकतापादिसंसारमनुभवति- किं पुनस्सर्वदेहेषु सर्वजीवेषु च दुःखितेषु सन्तप्तेषु स्थितस्येश्वरस्य दुरवस्था वाच्या । नच ईश्वरः केवलं पश्यत्येवेति वाच्यम्, तदपि दुःखादिहेतुरेव- दुःखितदर्शनमपि दुःखकरं हि । नहीश्वरो निर्घृणः येन दुःखितदुःखं पश्यन् स्वयं नन्देत् । एवं दुःखितान् पश्यन्नपि तद्दुःखं न निवारयतीत्ययमनीश्वर एव भवतीति मन्यामहे- किं कृपावान् शक्त उपेक्षते परदुःखम्- यदि कृपाशून्यस्तर्हि सदोष एव भवेत्, यदि कर्मसापेक्षस्तर्ह्यस्वतन्त्रएव, यदि प्रपदनसापेक्षस्तर्हि सकामएव । तस्मात्तवैव मते ईश्वरोऽनन्तपुरुषार्थाश्रयभूत इति कृत्वा पुरुषार्थसिद्धये तदाराधनं माकुरुष्व । **यदुक्तं** तत्त्वम्पदयोस्सामानाधिकरण्यस्य बाधार्थत्वेपि लक्षणादयो दोषास्त एवेति,

**तदयुक्तम्**-- यदिदं रजतं सा शुक्तिरिति रजतभावबाधेन शुक्तिपरिशेषणं हि बाधसामानाधिकरण्यम् । एवं प्रकृते योयं जीवस्तद्ब्रह्मेति जीवभावबाधेन ब्रह्मपरिशेषणं तत् । अज्ञानाद्ब्रह्मणो जीवभावः प्राप्त इति कृत्वा योयं जीवस्स जीवो नैव, किंतु ब्रह्मैव । यथा व्याधकुलवर्धितो राजकुमारोऽज्ञानादात्मानं व्याधं मत्वा पश्चात्केनापि स्वजन्मविदुषा बोधितस्सन् राजकुमारस्त्वमिति नाहं व्याधः किंतु राजकुमार एवेति प्रतिपद्यते तद्वत्- इति तदभिप्रायः । नात्र लक्षणावसरः- तत्त्वमसीत्यस्य जीवो ब्रह्मेत्यर्थात्, ब्रह्मणश्च प्रकृतत्वेन प्रसिद्धत्वेन सर्वनामत्वेन वा तत्पदार्थत्वात्, श्वेतकेतोर्जीवस्य त्वम्पदार्थत्वाज्जीवस्य ब्रह्मत्वं स्वाभाविकमेवेति मुख्यार्थानुपपत्त्यभावात् । नच जीवस्य ब्रह्मत्वमनुपपन्नमिति मुख्यार्थानुपपत्तिरस्तीति वाच्यं, ब्रह्मण एव सतो जीवत्वमज्ञानात्प्राप्तस्य पुरुषस्य ब्रह्मत्वमुपपन्नमेवेति । नच राजपुत्रस्य स्वजन्माज्ञानाद्व्याधत्वमस्तुनाम- कथं पुनर्ब्रह्मण एव स्वस्वरूपाज्ञानाज्जीवत्वमिति वाच्यं, 'ब्रह्मैव सन् ब्रह्माप्नो'तीति श्रुतिसिद्धेऽर्थे तर्कस्यानवकाशात् । 'नैषा तर्केण मतिरापनेये'ति श्रुतेश्च । अथापि यदि तर्कापेक्षा तर्हि शृणु- ब्रह्मणो न स्वस्वरूपपरिज्ञानं नापि तदभावः, किं तु ब्रह्मण्यज्ञानमध्यस्तमस्ति- तत्र च ब्रह्म प्रतिबिम्बितं, स एव चिदाभास इत्युच्यते, सच स्वोपाध्यज्ञानतादात्म्याध्यासवशात्संसारी जात इति । नच प्रतिबिम्बानुपपत्तिरिति वाच्यं, 'रूपं रूपं प्रतिरूपो बभूव', 'तदस्य रूपं प्रतिचक्षणाय' इत्यादि श्रुतिभिरुक्तेर्थेऽतीन्द्रिये अनुपपत्तिकल्पनायोगात् । नच ब्रह्मप्रतिबिम्ब एव जीवो न ब्रह्मेति वाच्यं, बिम्बस्यैव प्रतिबिम्बत्वमिति । यद्वा न ब्रह्मणः प्रतिबिम्बो जीवः, किं तु ब्रह्मैवानाद्यविद्ययाऽऽवृतनिजरूपं सत् जीवोऽभूदिति कृत्वा तस्य ज्ञानादज्ञाननिवृत्त्या जीवत्वापगमपूर्वब्रह्मत्वप्राप्तिर्भवति । नच सर्वज्ञस्य ब्रह्मण एव कथमविद्यावृतत्वप्रयुक्तजीवत्वमिति वाच्यं, नेदं सर्वज्ञं ब्रह्म तद्धीश्वरः, सच जीवकल्पित एव स्वप्नवत् । इदं ब्रह्म तु सर्वावभासकमेव, एवमज्ञानावभासकत्वादेवाज्ञानाविरोधि । अतो ब्रह्मणोऽज्ञानावृतत्वं सम्भवति । अत्र च नाहं ब्रह्म जानामीति ब्रह्मावारकाज्ञानानुभवस्सार्वजनीनः प्रमाणम् । तस्माद्ब्रह्मैवानाद्यविद्ययाऽऽवृतत्वेनानादिजीवत्वं प्राप्य स्वस्वरूपाज्ञानवत्सत्यं सरतीति जीवस्य ब्रह्मत्वं नानुपपन्नम् । एवं जीवभूतस्य ब्रह्मणो विद्यावशात्स्वस्वरूपज्ञानलाभ इति कृत्वा विद्याऽविद्याप्रयुक्ते एव ब्रह्मणः स्वस्वरूपज्ञानाज्ञाने, नतु स्वाभाविके स्वतस्तु तदुभयविशेषशून्यमेव । नतु धर्मभेदप्रयुक्तं— रूपंनाम स्वरूपं, धर्मस्तु स्वभाव इति विवेकः । तथा च कूटरजतस्य सत्यरजतरूपेण भानमिव शुक्तिरजतस्यापि सत्यरजतरूपेण भानं- नान्यथाज्योतिः, नहि शतवारं नेदं सत्यरजतमित्याप्तोपदिष्टमपि कूटरजतं सत्यरजतरूपं परित्यजति, यदेव सत्यरजतस्य रूपं तदेव कूटरजतस्यापीति । यदि तु रूपभेदाभावेपि धर्मभेदे सत्यन्यस्यान्यथाख्यातिरवर्जनीयेति मन्यसे, तर्हि विशेषणगतमेव तदन्यथाभानं न तु विशेष्यगतमिति कृत्वा विशेष्यस्वरूपभानेनान्यथाख्यातिः । नहि दुष्टपुरुषे शिष्टपुरुष इति ज्ञानं भ्रम इत्युक्ते पुरुषे पुरुषज्ञानं भ्रमो भवति, किंतु दुष्टे शिष्टज्ञानमेव । तस्मादपरमार्थरजतस्य परमार्थरजतात्मना ख्यातत्वेपि रजतमेव रजतात्मना ख्यातमिति कृत्वा नान्यथाख्यातिसिद्धिः । **एतेन** अपरमार्थरजतबुद्धिविषयस्य शुक्त्युत्पन्नरजतस्य परमार्थरजतबुद्धिविषयत्वेन भानमन्यथाभानमित्यपास्तम् । तत्रापि स्वभावभेद

एव, नतु स्वरूपभेद इति । किंच अपरमार्थरजतं परमार्थरजतरूपेण भातीति वदता वक्तव्यं- किं पुरोगतपरमार्थरजतरूपेण भाति ? यद्वा विपणिगतपरमार्थरजतरूपेण ? नाद्यः- परमार्थरजतस्य पुरोगतत्वाभावात् । नान्त्यः- तस्य चक्षुस्सन्निकर्षाभावात् । नच दोषवशाच्चक्षुस्सन्निकर्षस्तस्येति वाच्यं, दोषशतवशादपि चक्षुषः परोक्षविषयसन्निकर्षालाभात् । यदि त्वपरमार्थरजतं परमार्थरजतमिव भातीत्युच्यते, तर्हि परमार्थरजतसादृश्यमपरमार्थरजतस्यास्त्येवेति नान्यथाभानसिद्धिः । नचैवं शुक्तिरेव रजतमिव भातीत्युच्यतां, किमपूर्वरजतोत्पत्तिकल्पनयेति वाच्यं, नास्माभिः परमार्थरजतमिवापरमार्थरजतं भातीत्युच्यते, येनैवं शङ्क्येत- किंतु भ्रमसमये शुक्तावुदितं रजतमेव इदं रजतमिति प्रतिभातीत्युच्यते-- ततो नास्मान्प्रति तदाशङ्कनीयम् । **एतेन** इदं रजतमिति भ्रमस्थले शुक्ती रजतमिव भातीति वादः **परास्तः**- तथासति इदं रजतसदृशमित्येव प्रतीतेर्भवितव्यत्वात् । अत एवापरमार्थरजतं परमार्थरजतमिव भातीति वादोपि परास्तः- इदं परमार्थरजतसदृशमिति प्रतीत्यभावात् । **ननु** शुक्तौ रजतसादृश्यमस्त्येव दोषवशात्तदप्रतीतिः । तत इदं रजतमिति प्रतीतिः दोषाभावे तु इदं रजतसदृशमित्येव प्रतीयेतेति, **मैवम्**—शुक्तिगतरजतसादृश्यस्य दोषवशादप्रतीतावपि किं शुक्तेः प्रतीतिरस्ति ? उत न ? आद्ये भ्रमानुदयप्रसङ्गः- नहि शुक्तिज्ञाने बाधके सति तद्बाध्यस्य रजतज्ञानस्य सम्भवः । नहि लोकश्शुक्तिं शुक्तिरिति ज्ञात्वा रजतमिति भ्राम्यति । द्वितीये इदंपदस्य निर्विषयत्वापत्तिः । तस्मादिदंपदप्रयोगविषयतया शुक्तावपूर्वं रजतमुत्पन्नमित्यभ्युपेयम् ।

**ननु** घटेन सह चक्षुस्सन्निकर्षाभावे अयं घट इति प्रतीतिर्भवति, एवमनिर्वचनीयरजतेन सह चक्षुस्सन्निकर्षेसत्येवेदं रजतमिति प्रतीतिर्भवति, नतु तस्य चक्षुस्सन्निकर्षः- प्रतीतेः प्राग्विषयस्यैवाभावात् । विषयप्रत्ययौ हि समसमयसञ्जातौ, **मैवम्**---संस्कारादिसहकृताविद्यैवार्थाध्यासाकारेण ज्ञानाध्यासाकारेण च परिणमत **इति** भ्रमस्थले विषयेन्द्रियसन्निकर्षानपेक्षणात् । **ननु** अतस्मिंस्तद्बुद्धिरध्यास इति शङ्कराचार्यैरेवान्यथाख्यातिरभ्युपगता, **मैवम्**---अर्थवद्ज्ञानस्याप्यनिर्वचनीयस्यैवाविद्यया जातत्वात्- शुक्त्यध्यस्तरजतविषयप्रत्ययत्वाद्रजतप्रत्ययस्याध्यासत्वं, न तु शुक्तिविषयप्रत्ययत्वादिति । तस्मादनिर्वचनीयख्यातिवादिमते रजतस्यैव रजतात्मना भानान्नान्यथाभानसम्भवः । एवं सत्ख्यातिमतेपि नान्यथाभानं- शुक्तौ सत एव रजतस्य रजताकारेण भानमिति तद्वादात् । नाप्यात्मख्यातिमते- सत्यप्यान्तरत्वबाह्यत्वप्रयुक्ते स्वभावभेदे रजतस्यैव रजतात्मना भानमिति । नाप्यसत्ख्यातिपक्षे- सत्यप्यसत्त्वसत्त्वप्रयुक्तस्वभावभेदे रजतस्यैव रजतात्मना भानमिति । नाप्यख्यातिमते- स्मर्यमाणं रजतमेव रजतभ्रमे विषय इति । नचैवं ब्रह्मणो घटादितौल्यप्रसङ्गः- स्वप्रकाशत्वात् । तस्मात् जीवः विद्योदयात्प्रागज्ञानावृतं ब्रह्मैव सन् पश्चादज्ञानानावृतं ब्रह्मैव भवतीति ब्रह्मैव सन्ब्रह्माप्नोतीति श्रुत्यर्थः । ब्रह्मविद्ब्रह्मैव भवतीति श्रुत्यन्तरसंवादात् । **एतेन** जीवस्य बन्धावस्थातो मुक्त्यवस्थाया न वैलक्षण्यमिति **परास्तम्**- अज्ञानावृतब्रह्मरूपेण स्थितिर्जीवस्य बन्धावस्था, शुद्धब्रह्मरूपेण स्थितिर्मुक्त्यवस्थेति ।

**नन्वेवमपि** त्वम्पदार्थस्य अज्ञानावृतब्रह्मणो जीवस्य तत्पदार्थेन शुद्धेन ब्रह्मणा सममैक्यमनुपपन्नमेव,

**मैवम्**—यद्व्यवहारतोऽज्ञानावृतं ब्रह्म तद्वस्तुतश्शुद्धमेवेति दशाभेदेनैवयोपपत्तेः । त्वयापि सोयं देवदत्त-इत्यत्र लक्षणां विना कालभेदेनैक्योपपत्तिरभ्युपेताहि । तस्मात् वस्तुतश्शुद्धं ब्रह्मैव व्यवहारादज्ञानावृतं ब्रह्म भवति- व्यवहारादज्ञानावृतं ब्रह्मैव वस्तुतश्शुद्धं ब्रह्म भवतीति द्वेधार्थस्तत्त्वमसीत्यस्य तन्त्रेण सिद्ध्यति- अन्यत्र तत्त्वमसि त्वं तदसीति व्यवहारदर्शनात् । अतोऽज्ञानात्प्राप्तस्य ब्रह्मणो जीवभावस्य बाधेसति स्वाभाविको ब्रह्मभाव एवावशिष्यत इति वाक्यार्थसम्भवाय तत्त्वमसीति वाक्ये लक्षणा नैवाश्रयणीया । एवं लक्षणाया अनावश्यकत्वादेव नाधिष्ठानलक्षणाया निवृत्तिलक्षणाया वा सम्भवः । नच तत्पदस्य जीवाध्यासाधिष्ठानं ब्रह्म लाक्षणिकार्थः- त्वम्पदस्य च ब्रह्मण्यध्यस्थो जीवो लाक्षणिकार्थः— अध्यासनिवृत्त्या तु द्वयोस्सामानाधिकरण्यमिति निवृत्तिलक्षणया सिद्धोर्थ इति द्वयोरपि लक्षणयोरिह सम्भव एवेति वाच्यं, तत्पदस्य ब्रह्म वाच्यार्थः तदध्यासाधिष्ठानमेवेति नाधिष्ठानलक्षणा । त्वम्पदस्य जीवोर्थः, सच ब्रह्मण्यध्यस्त एवेति नाप्यारोप्यलक्षणा- अधिष्ठानातिरेकेणारोप्यस्याभावादारोप्यस्याधिष्ठानात्मत्वं स्वत एवास्तीति नापि निवृत्तिलक्षणा । तथा च तत्त्वमसीति वाक्येन आरोप्यजीवस्याधिष्ठान-ब्रह्मात्मत्वमभिधयैवोपदिष्टमिति न लक्षणाश्रयणीया । नह्यारोप्यस्याधिष्ठानाभेदोऽनुपपन्नः, येन तदुपपत्तये लक्षणा । नचारोप्यं निवृत्तं सदेवाधिष्ठानात्मकं भवतीति वाच्यं, प्रतीयमानस्यैवाधिष्ठानात्मत्वं, नतु निवृत्तस्य- निवृत्तं ह्यभावरूपं तस्य च भावरूपत्वमयुक्तमेव । नचारोप्यं निवृत्तं सदधिष्ठानमवशेष-यतीति वाच्यं, आरोप्यस्याधिष्ठानावशेष एव निवृत्तिरिति- 'अधिष्ठानावशेषो हि नाशः कल्पितवस्तुन' इति वचनात् । नचैवं तत्त्वमसीति महावाक्यं लक्षणयैव ब्रह्मणो जीवभावनिवृत्तिं बोधयतीति वाच्यं, अभिधयैव जीवस्य ब्रह्मभावं बोधयतीत्यपि वक्तुं शक्यत्वात् । नच जीवस्य जीवभावनिवृत्तिं विना ब्रह्म-भावो न स्यादिति वाच्यं, जीवस्य ब्रह्मभावबोधनादेव जीवभावनिवृत्तिसिद्धेः । शुक्तिरियमिति बोधेसति हि रजतस्य रजतभावनिवृत्तिः । तस्माद्रजतं शुक्तिरिति वाक्यवज्जीवो ब्रह्मेति वाक्येपि न लक्षणावकाशः-- तत्त्वमसीति वाक्यं हि जीवो ब्रह्मेति वाक्यस्य पर्यायभूतं वाक्यम् । नच रजतं शुक्तिरिति वाक्ये मुख्यार्थानुपपत्तिरस्ति- रजतत्वशुक्तित्वयोस्सामानाधिकरण्यायोगादिति वाच्यं, व्यावहारिकरजतत्वशुक्ति-त्वयोस्सामानाधिकरण्याभावेपि प्रातिभासिकरजतत्वशुक्तित्वयोस्तत्सत्त्वादिति । नच प्रातिभासिकरजते शुक्तित्वं शुक्तौ च प्रातिभासिकरजतत्वं नास्ति, किंतु प्रातिभासिकरजते प्रातिभासिकरजतत्वं शुक्तौ च शुक्तित्वमस्तीति वाच्यं, शुक्त्यध्यस्तरजते प्रातिभासिकरजतत्वमस्तीति कृत्वा शुक्तावपि तदस्त्येव परम्परया प्रातिभासिकरजते तु शुक्तित्वमस्त्येव- अनुवर्तमानत्वाच्छुक्तेरिति । एवं जीवत्वब्रह्मत्वयोरपि सामानाधि-करण्यसम्भवाज्जीवो ब्रह्मेत्यत्र न लक्षणा । अथवा रजतं शुक्तिरित्यत्र रजतपदस्य रजताधिष्ठानशुक्तौ लक्षणा । तथा तत्त्वमसीत्यत्र त्वम्पदस्य जीवाधिष्ठानब्रह्मणि लक्षणा चेत्यस्तु । नच लक्षणाश्रयणं दोषः, यथा तव त्वम्पदस्य अचिद्विशिष्टजीवशरीरकब्रह्मणि लक्षणाश्रयणं न दोषः । नच सर्वेषां शब्दानां पर-मात्मपर्यन्तत्वं मुख्यमिति वाच्यं, तथा सर्वेषामध्यस्तवाचिशब्दानामधिष्ठानपर्यन्तत्वमपि मुख्यमेवेति तुल्यत्वात् । नचाधिष्ठानलक्षणाऽयुक्तेति वाच्यं, शरीरिलक्षणाप्ययुक्तैवेति । नच मनुष्वशब्दस्य मनुष्य-

शरीरिणि जीवे इव जीवशब्दस्य जीवशरीरिणि ब्रह्मण्यप्यभिधयैव प्रवृत्तिरिति वाच्यं, अहं मनुष्य इति भ्रान्तप्रतीत्या तत्र तत्कल्पनेपि अन्यत्र तथा कल्पनायोगात् । नच अहं ब्रह्मेति प्राज्ञप्रतीत्या तथा कल्प्यतामिति वाच्यं, तथासति अहम्पदार्थो जीव एव ब्रह्मशरीरकस्स्यात्- यथा अहं मनुष्य इत्यत्र अहम्पदार्थो जीव एव मनुष्यशरीरकः- अहमर्थो ह्यात्मनि जीवे रूढः- किंच मनुष्यशब्दोपि मनुष्यशरीरविशिष्टजीवशरीरकब्रह्माभिधाय्येव तव मत इति कृत्वा मनुष्यशब्दस्य मनुष्यशरीरिणि जीवेऽभिधयाप्रवृत्तिरित्यपि त्वया वक्तुं न शक्यते । यदि परमतरीत्या स दृष्टान्त उक्त इत्युच्यते, तर्हि स्वमतरीत्या दृष्टान्तो नास्त्येवेति सिद्धम् । नचेष्टापत्तिः- निर्दृष्टान्तस्य वाक्यस्याप्रमाणत्वेन ग्रहणायोगात् । **एतेनाहं**-ब्रह्मेत्यत्राहमित्यस्य मच्छरीरकं ब्रह्मेत्यर्थ इति **परास्तम्**—अहं मनुष्य इत्यत्र मच्छरीरकं ब्रह्मेत्यहंशब्दस्यार्थाभावात्, तथा कल्पनस्य च कालात्ययापदिष्टत्वादिति । तस्माद्बाधसाधारण्ये न काप्यनुपपत्तिः ।

**ननु** शुक्तिरेव रजतमित्यत्र प्रमाणान्तरेण नेदं रजतमिति बाधस्य प्रतिपन्नत्वाद्बाधकल्पनं युज्यतांनाम अत्र बाधस्याप्रतिपन्नत्वेप्यगत्या बाधकल्पनं न युज्यत इति, **मैवम्**—अहं जीव इत्यत्रापि प्रमाणान्तरेण नाहं जीव इति बाधस्य प्रतिपन्नत्वात् । नच नेदं रजतमिति वन्नाहं जीव इति कस्यापि जीवस्य प्रमाणज्ञानं नोदीयादिति वाच्यं, नाहं मनुष्य इति प्रमाणज्ञानं कस्यापि मनुष्यस्य नोदीयादिति वदन्बौद्ध एव तव श्रृङ्गभञ्जको भवेत् । नच सर्वेषामप्यास्तिकानां नाहं मनुष्य इत्यनुभवोस्तीति वाच्यं, विदुषां सर्वेषामपि नाहं जीव इत्यनुभवोस्तीति । नच संसारिणः कथं नाहं संसारीति प्रत्यय इति वाच्यं, असंसारिणो नाहं संसारीति प्रत्ययो भवेदेवेति । नच जीवस्संसार्येवेति वाच्यं, असंसार्येव जीव इति । नच जीवस्य संसारोऽनुभवसिद्ध इति वाच्यं, जीवेन संसारस्यानुभूयमानत्वादेव न जीवस्संसारीत्युच्यमानत्वात् । नच जीवस्य संसारस्स्वाभाविक इति वाच्यं, तर्हि अग्नेरौष्ण्यवज्जीवस्य संसारो नैवापगच्छेत् । नचेष्टापत्तिः- मोक्षशास्त्रवैयर्थ्यात्- 'तरति शोकमात्मवि'दित्यादिश्रुतिविरोधाच्च । अथ यदि जीवस्य संसार आगन्तुकस्तर्हि संसारस्सोऽन्यनिष्ठ एव जीवंप्रत्यागत इति कृत्वा न जीवः स्वतस्संसारी । नचागतोपि सत्य एवेति वाच्यं, यदागतं तदसत्यं, यत्सत्यं तदनपाय्येवेति । एवं संसारस्यागन्तुकत्वादेव सुषुप्तौ जीवस्य संसाराननुभवः- समाधौ च विदुषाम् । तस्माज्जीवज्ञेयस्य संसारस्य जीवगतत्वाभावेन जीवस्य निस्संसारत्वाद्ब्रह्मणश्च तथात्वान्नाहं जीव इति विद्वदनुभवबलाच्च तत्त्वमसीत्यस्य जीवाभिन्नं ब्रह्मेत्येवार्थः ।

**ननु** नेदं रजतमितिवन्न त्वं जीव इति कयापि श्रुत्यानुपदिष्टत्वान्नाहं जीव इत्यनुभवो भ्रम एवेति, **मैवम्**—इदं रजतमिति भ्रान्तंप्रति इयं शुक्तिरित्याप्तोपदेशवदहं जीव इति भ्रान्तंप्रति तत्त्वमसीत्युपदेश एव श्रौतः । नेदं रजतमिति प्रत्ययमिव नाहं जीव इति प्रत्ययं बाधरूपं जनयतीति पृथक्तदुपदेशानवसरात् । त्वं ब्रह्मासीत्युक्ते त्वं जीवोसीति ह्यर्थात्सिद्धम् । यथा इयं शुक्तिरित्युक्ते नेदं रजतमित्यर्थात्सिध्यति । किंच न त्वं जीव इत्युक्ते जीवो ब्रह्मेत्यर्थो नियमेन न सिध्यति, देहादीनां सत्त्वात्- तथासति न त्वं जीवः, नापि देहः, नापीन्द्रियाणि, नापि प्राणः, नापि मनः, नापि बुद्धिः, नाप्यव्यक्तमित्येवं

बहु वक्तव्यं स्यात्। ब्रह्मातिरिक्तस्य सर्वस्यापि निषेधे कृते हि जीवो ब्रह्मेति सिध्यति। तत्त्वमसीत्युक्तौ न वक्तव्यं बह्वस्ति। तस्मात्तत्त्वमसीत्यनेनैव न त्वं जीव इत्युपदेशस्सिद्धः।

**ननु** शुक्तिरेव रजतमित्यत्र शुक्तित्वरूपं विरुद्धधर्मं शब्द एवोपस्थापयतीति तत्र बाधकल्पनं युक्तं- तत्त्वमसीत्यत्र तु अधिष्ठानमात्रं लक्षयता तत्पदेन शुक्तित्ववद्विरुद्धधर्मानुपस्थानाद्बाधकल्पनमयुक्तमिति, **मैवम्**— तत्पदस्य नाधिष्ठानमात्रमर्थस्त्वम्पदस्यापि नाभासमात्रं, किंतु तत्पदस्याधिष्ठानं ब्रह्मार्थः, त्वम्पदस्याध्यासो जीवोर्थः। तथा च ब्रह्मत्वरूपविरुद्धधर्मोपस्थापकत्वाद्बाधकल्पनमिति। इदं चाभ्युपगम्योक्तम्। वस्तुतस्तु- तत्पदस्य ब्रह्मेत्येवार्थः 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति गीतावचनात्। ब्रह्मशब्दवत्तच्छब्दोप्यभिधयैव ब्रह्म बोधयति। तथा च शुक्तिशब्दवत्तच्छब्दोऽपि विरुद्धधर्ममुपस्थापयतीति बाधकल्पनं युक्तम्। अत एवोक्तं तत्पदस्य नाधिष्ठाने लक्षणेति। त्वम्पदस्य तु जीव एवार्थ इति न तत्रापि लक्षणा।

**ननु** मास्तु तत्पदस्याधिष्ठानलक्षणा- तत्पदस्य जीवाध्यासाधिष्ठानं ब्रह्म वाच्यार्थ एवास्तु- तथापि **न** ब्रह्मणो जीवाध्यासाधिष्ठानत्वसिद्धिः- किमधिष्ठानं ब्रह्म प्रकाशते? उत न? अद्ये जीवत्वविरोधि ब्रह्मत्वे स्फुरति सति कथं जीवाध्यासोदयः। यद्यविरोधादुदयः, तर्हि कथं ब्रह्मत्वज्ञानाज्जीवाध्यासनिवृत्तिः। द्वितीये अधिष्ठानस्यैवास्फुरणे कथमध्याससिद्धिः। नच सामान्याकारेण स्फुरदपि ब्रह्म विशेषाकारेण न स्फुरतीति तत्सिद्धिरिति वाच्यं, निर्विशेषे ब्रह्मणि सामान्यविशेषभावायोगादिति, **मैवम्**— अज्ञानावच्छिन्ने सविशेषे ब्रह्मण्येव जीवाध्यासोदयः। तथा च जीवत्वाविरोधिभिरेवास्तित्वादिभिरंशैरुपलक्षितं ब्रह्म जीवाध्यासाधिष्ठानम्। तद्विरुद्धैरसंसारित्वादिभिरंशैरुपलक्षितस्याधिष्ठानस्य ब्रह्मणो ज्ञानात्तु जीवाध्यासनिवृत्तिः। एवं सति सामान्याकारेण प्रकाशमानं विशेषाकारेणाप्रकाशमानं च ब्रह्मजीवाध्यासाधिष्ठानमिति न काचिदनुपपत्तिः। तत्त्वमसीत्यत्र तत्पदस्य तु विशेषाकारविशिष्टं ब्रह्मार्थः। तच्च ब्रह्मत्वं जीवत्वविरोध्येवेति बाधकल्पनं युज्यते। ते च ब्रह्मणस्सामान्यविशेषधर्मा अज्ञानपरिकल्पिता एवेति न ब्रह्मणो निर्विशेषत्वव्यघात इति। एतेन अधिष्ठानस्याप्रकाशे प्रकाशे वा भ्रमबाधयोरसम्भव इति **प्रत्युक्तम्**—अधिष्ठानातिरेकिपारमार्थिकधर्मतत्तिरोधानानभ्युपगमे भ्रान्तिबाधौ दुरुपपादाविति च **प्रत्युक्तम्**। नच भ्रमविरोध्याकारस्यापारमार्थिकत्वे अध्यस्तरूपमेव सत्यं स्यात्। यथा शुक्तित्वापारमार्थ्ये रजतत्वं सत्यं भवतीति वाच्यं, भ्रमाकारः प्रातिभासिकः तद्विरोध्याकारस्तु व्यावहारिकः- सच यावद्व्यवहारं पारमार्थिक इति कृत्वा भ्रमविरोध्याकारस्य लौकिकपारमार्थिकत्वान्नाध्यस्तस्य सत्यत्वं स्यात्। यथा शुक्तित्वस्य वस्तुतोऽपारमार्थ्येऽपि व्यवहारतः पारमार्थ्यान्न रजतत्वसत्यत्वं तद्वदिति। **अयमर्थः**— ब्रह्मणो निर्विशेषत्वं पारमार्थिकं, सत्यज्ञानानन्दादिलक्षणत्वं व्यावहारिकं, जीवत्वं तु प्रातिभासिकं-- तत्र व्यावहारिकप्रत्यगभिन्नज्ञानाज्जीवाध्यासनिवृत्तिर्भवतीति पक्षे तत्त्वमसीतिवाक्ये लक्षणानवकाशः। पारमार्थिकब्रह्मज्ञानादेवेति पक्षे लक्षणाऽऽवश्यकी- इदं च पारमार्थिकं ब्रह्मज्ञानं नैकपदलक्षणया सिध्यतीति द्वयोः पदयोर्लक्षणा। जीवेश्वरारूप्यप्रातिभासिकव्यावहारिकरूपद्वयरहितं हि निर्विशेषब्रह्म- प्रातिभासिक-

स्यापि जीवस्य प्रातिभासिकत्वव्यावहारिकत्वपारमार्थिकत्वभेदः पुनः कल्पितः- तत्र तैजसः प्रथमः, विश्वो द्वितीयः- प्राज्ञस्तृतीयः । नैतावता प्राज्ञः पारमार्थिकं ब्रह्मेति भ्रमितव्यमज्ञानादिमतः प्राज्ञस्य निर्विशेषब्रह्मत्वायोगात् । नचेश्वरोपि प्रातिभासिक एवेति वाच्यं, प्रतिबिम्बरूपेश्वरस्य प्रातिभासिकत्वेपि मायोपहितचैतन्यरूपेश्वरस्य व्यावहारिकत्वात् । एवं प्रतिबिम्बरूपजीवस्य प्रातिभासिकत्वेपि अन्तःकरणोपहितचैतन्यलक्षणजीवस्य प्रत्यक्पदवाच्यस्य व्यावहारिकत्वमेव । तथाच जीवेश्वराख्यः प्रतिबिम्बः प्रातिभासिकः, प्रत्यग्ब्रह्माख्यस्तत्साक्षी व्यावहारिकः, निर्विशेषं ब्रह्म तु पारमार्थिकमिति सिद्धम् । पक्षान्तरे तु जीवेश्वराख्यमवच्छिन्नचैतन्यं प्रातिभासिकं, प्रत्यग्ब्रह्माख्यमुपहितचैतन्यं व्यावहारिकं, अनुपहितं तु शुद्धं पारमार्थिकम् । तृतीयपक्षे तु संसारिचैतन्यं प्रातिभासिकं, असंसारिचैतन्यं व्यावहारिकं, निर्विशेषं तु पारमार्थिकमिति । ब्रह्मैव स्वाविद्यया संसरति व्याधकुलवर्धितराजकुमारदृष्टान्तेनेति तृतीयः पक्षः सर्वथापि निर्विशेषब्रह्मबोधस्तत्त्वमसीति वाक्याल्लक्षणयैवेति ।

**ननु** जीवत्वविरोध्याकारविशिष्टब्रह्मज्ञानात्कल्पितजीवाध्यासनिवृत्तिरिति पक्षे- तद्ब्रह्मगताकारविशेषनिवर्तकाभावान्न निर्विशेषब्रह्मसिद्धिरिति, **मैवम्**—प्रमाणज्ञानादध्यासस्य समूलं निवृत्तिर्भवति, अध्यासमूलं चाज्ञानं, तन्निवृत्तौ ब्रह्मणस्सविशेषत्वमपि निवृत्तमेव- अज्ञानकृतत्वात्सविशेषत्वस्य । ततो निर्विशेषब्रह्मपरिशेषसिद्धिरिति । नचान्तःप्रविष्ट इत्यादिसविशेषश्रुतिविरोधः- यावद्व्यवहारं सविशेषब्रह्माभ्युपगमादिति अतोऽस्मत्पक्षो निरवद्यः । रामानुजपक्षे सर्वविज्ञानप्रतिज्ञानासिद्ध्यादिदोषा दर्शिता एव । नच सूक्ष्मचिदचिद्वस्तुशरीरकब्रह्मकार्यत्वं स्थूलचिदचिद्वस्तुशरीरकब्रह्मण इति प्रतिज्ञानसिद्धिरिति वाच्यं, एकस्यैव ब्रह्मणः कार्यकारणभावाभावात्, मृद्वदवस्थाभेदात्तदुपपत्तौ तद्वदेव परिणामित्वेनानित्यत्वप्रसङ्गात्, चिदचितोरेव परिणाम इत्युक्तौ तदनित्यत्वस्यास्मदिष्टत्वेपि तवानिष्टत्वात्, अचिद्वस्तु नित्यमिति हि तव मतं- नहि नित्यं परिणमते, एवमादयो दोषाः पूर्वमेव दर्शिता इतीहोपरम्यते । किंच यदि त्वम्पदस्य अचिद्विशिष्टजीवशरीरकं ब्रह्मार्थः, तर्हि तत्पदस्यापि ब्रह्मैवार्थ इति कृत्वा उद्देश्यविधेयविभागासिद्धिस्तव ।

**ननु** नात्र किञ्चिदुद्दिश्य किमपि विधीयते- 'ऐतदात्म्यमिदं सर्व'मित्यनेनैव प्राप्तत्वात् । अप्राप्ते हि शास्त्रमर्थवत्- इदं सर्वमिति सजीवं जगन्निर्दिश्य- 'ऐतदात्म्यमिति, तस्यैष आत्मे'ति तत्र प्रतिपादितं- तत्र च हेतुरुक्तः- 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा' इति, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त' इतिवत् । तथा श्रुत्यन्तराणि च ब्रह्मणस्तद्व्यतिरिक्तस्य चिदचिद्वस्तुनश्च शरीरात्मभावमेव तादात्म्यं वदन्ति- 'अन्तः प्रविष्टश्शास्ता जनानाम्', 'यः पृथिव्यां तिष्ठ'न्नित्यादीनि, **मैवम्**—इदमित्यनेन दृश्यमेव निर्दिष्टं, नतु दृग्जीवः- तस्य स्वत्वेनाहंत्वेन त्वन्त्वेनात्मत्वेन च निर्देशार्हस्य घटवदिदन्त्वेन निर्देशायोगात् । तथा च सर्वस्य दृश्यस्य ब्रह्मत्वे- 'ऐतदात्म्यमिदं सर्व'मित्यनेन प्राप्तेपि जीवस्य ब्रह्मत्वं तेनाप्राप्तमिति कृत्वा तत्त्वमसीत्यनेन तद्विधानमर्थवदेव । जगतो ब्रह्मत्वे हेतुस्तु सन्मूला इत्यादिनोक्तः । जगत्खलु ब्रह्मणस्सकाशाज्जातं ब्रह्मण्येव स्थितं ब्रह्मण्येव लीयत इति ब्रह्मैव- कार्यस्य

कारणात्मत्वात् । जीवस्य ब्रह्मत्वे तु न स हेतुः- जीवस्य नित्यस्याविनाशिनोऽजस्य ब्रह्मणि जन्मस्थितिलयायोगात्- नहि ब्रह्मकार्यं जीवः । नच जीवदेहस्य ब्रह्मकार्यत्वात्तद्विशिष्टो जीवोपि ब्रह्मकार्यमिति वाच्यं, देहधर्माणां देहिनि भ्रान्तिं विना सम्बन्धायोगात् । किं देहे जाते वृद्धे क्षीणे मृते रुग्णे वा देही जातो वृद्धः क्षीणो मृतो रुग्णश्च भवति । 'अजो नित्यश्शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे' इति श्रुतेः । एवं जीवस्य ब्रह्माकार्यत्वादेव जीवब्रह्मभेदवादिमते ब्रह्मविज्ञानात्सर्वविज्ञानासिद्धिः । 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासी'तेत्यत्रापि सर्वपदं जीवभिन्नजगत्परमेव- जायते लीयते अनिति चेति जलान्- जगत्तु ब्रह्मतो जायते लीयते अनिति चेति तज्जलान्भवति- तत्पदस्य ब्रह्मवाचित्वात् । एवं तज्जलान्त्वादेवेदं सर्वं जगद्ब्रह्म- जीवस्तु न ब्रह्मतो जायते, नापि लीयते, नाप्यनितीति न तज्जलान्भवति । तस्मान्न जीवस्य ब्रह्मत्वं प्राक्प्राप्तमिति कृत्वा तत्त्वमसीत्यनेन विधेयमेव । तथा च त्वत्पक्षे उद्देश्यविधेयविभागासिद्धेर्विधिरेव परित्यक्तः स्यादिति महानयं दोषः ।

**यदुक्तं** ब्रह्मणो व्यतिरिक्तं चिदचिद्वस्त्विति **तदसत्**—एकमेवाद्वितीयं ब्रह्मेति ब्रह्मव्यतिरिक्ताभावस्य श्रुत्या कण्ठत एवोक्तत्वात् 'हरेर्न किञ्चिद्व्यतिरिक्तमस्ती'ति विष्णुपुराणाच्च । नच चिदचिच्छरीरकब्रह्मव्यतिरिक्तं नास्तीति तदर्थ इति वाच्यं, तादृशस्य वस्तुनश्शशविषाणायमानस्य निषेधायोगात्-- प्रसक्तस्य हि निषेधः । किंच किञ्चिदचिद्वस्तुनी ब्रह्मव्यतिरिक्ते? उताव्यतिरिक्ते? आद्ये- ब्रह्मव्यतिरिक्तयोस्तयोर्निषेध एव श्रुतिपुराणादिभिरुदितः । द्वितीये- ब्रह्माव्यतिरिक्तयोश्चिदचितोः कथं ब्रह्मव्यतिरिक्तत्वं त्वयोक्तमुपपद्येत ।

**यच्चोक्तं** चिदचितोर्ब्रह्मणश्च शरीरात्मभावमेव तादात्म्यं वदन्ति श्रुतय इति, **तदप्ययुक्तम्**— शरीरात्मभावस्याधाराधेयरूपत्वेन तादात्म्यरूपत्वाभावात्, अहं मनुष्य इति शरीरात्मनोस्तादात्म्यस्य अध्यासनिबन्धनत्वेनासत्यत्वात्, उपनिषद्भ्यो भ्रान्तिकल्पनायोगाच्च, अहं जीवस्सुखी दुःखी चेति ब्रह्मणो भ्रान्तिकल्पनायोगाच्च, तत्प्रत्ययस्याभ्रान्तित्वे ब्रह्मणः संसारित्वप्रसङ्गाच्च, प्रत्यक्त्वेन सर्वान्तरस्य जीवस्य बाह्यत्वकल्पनायोगाच्च, अन्तर्यामिब्राह्मणस्य प्रत्यगात्मपरत्वमेवेति स्थापितत्वाच्च । नच एष सर्वभूतान्तरात्मेति श्रुतिर्जीवान्तरत्वं ब्रह्मणो वक्तीति वाच्यं, तत्र भूतशब्दस्य जीवातिरिक्तकार्यवस्तुपरत्वात्-- भवन्तीति भूतानीति भूतशब्दो हि कार्यवाची- तेषां च भूतानामन्तरात्मा प्रत्यगात्मैवेति । नचेश्वरपरा सा श्रुतिरिति वाच्यं, प्रत्यगात्मन एव स्वतन्त्रस्येश्वरत्वात् । नच 'तत्सृष्ट्वा तदेवानुप्राविश'दिति श्रुतिरीश्वरस्य चिदचिदनुप्रवेशं ब्रूत इति वाच्यं, जीवसृष्ट्ययोगेन जगत्सृष्ट्वा जगदनुप्राविशदिति तदर्थात् । नच 'अनेन जीवे'नेति श्रुतेर्जीवेपीश्वरस्य प्रवेश इति वाच्यं, जीवस्वरूपेण जगतीश्वरः प्रविष्ट इति तदर्थात् । नच 'तदनुप्रविश्य सच्च त्यच्चाभव'दिति श्रुतेर्जीवे ईश्वरस्य प्रवेशोऽवगम्यत इति वाच्यं, यत्सृष्टं जगत्तदेवेह तदनुप्रविश्येत्यत्र तच्छब्दार्थो न तु जीव इति । नच जीवे प्रविष्टस्सन्नीश्वरस्सदभवत्; जगति प्रविष्टस्सन् त्यदभवदिति वाच्यं, सच्छब्दस्यात्र वाय्वाकाशवाचित्वात्, तच्छब्दस्य च तेजोजलभूमिवाचित्वादिति- ईश्वरो हि जीवो भूत्वा भूतपञ्चके प्रविश्य तत्तादात्म्याध्यासं प्रपद्य

तदेवाभवदिति तदर्थात् । तस्मान्न जीवस्य ब्रह्मानुप्रवेशाद्ब्रह्मत्वं जगत इव, किंतु ज्ञानात्मकस्वरूपैक्यादेव--ज्ञानं हि जीवब्रह्मणोः स्वरूपं तच्चैकं परिपूर्णं चेति । **यदुक्तं** नामरूपे व्याकरवाणीत्यत्रापि ब्रह्मपर्यन्तं नामरूपव्याकरणमेव विवक्षितमिति कृत्वा सा श्रुतिश्चिदचिद्विशिष्टस्यैव ब्रह्मणस्तत्तन्नामवाच्यत्वं प्रतिपादयतीति, **तदयुक्तम्**—चिदचिद्विशिष्टस्येति समासगताभ्यां चिदचिच्छब्दाभ्यां किं चिदचिद्वस्तुनी केवले उच्यते ? यद्वा चिदचिद्विशिष्टं ब्रह्म ? आद्ये- ब्रह्मणस्सर्वपदवाच्यत्वासिद्धिः । द्वितिये- चिदचिद्विशिष्टमिति तत्समासान्तरगतचिदचिच्छब्दाभ्यां किं केवले चिदचिद्वस्तुनी अभिधीयेते ? यद्वा चिदचिद्विशिष्टं ब्रह्म ? आद्ये- दोष उक्त एव । द्वितीये- त्वनवस्थादयः । **ननु** चिदचिद्वस्तुविशेषनामानि ब्रह्मेन्द्रप्रजापतिवरुणाकाशवाय्वग्न्यादीनि तत्तच्छरीरकब्रह्माभिधायीनीति विवक्षितमिति, **मैवमपि**—ब्रह्मेन्द्रप्रजापत्यादिनामानि ब्रह्मेन्द्रप्रजापत्यादिशरीरकब्रह्माभिधायीनि भवन्तीति वाक्ये द्वितीयसमासगतब्रह्मादिशब्दाः किं केवलं ब्रह्मादिवाचीनि ? यद्वा ब्रह्मादिशरीरकब्रह्मवाचीनि ? उभयत्रापि पूर्वोक्ता दोषा इहापि मिथ्याः ।

**ननु** ब्रह्मेन्द्रादिनामानि ब्रह्मेन्द्रादिजीवशरीरकब्रह्माभिधायीनीति कृत्वा द्वितीयसमासगता ब्रह्मादयोर्था एव न नामानीति, **नैतत्** --ये ब्रह्मणश्शरीरतया भवदभिमता अर्थाः ते किं ब्रह्मादिशब्दैर्जीवादिशब्दैर्वा उच्यन्ते ? उत न ? आद्ये सर्वेषां शब्दानां विशिष्टब्रह्माभिधायित्वमिति प्रतिज्ञाऽसिद्धिः । द्वितीये के ते अर्थाः ? ब्रह्मादय इतिचेद्भन्त ! तर्हि सिद्धं ब्रह्मादिपदवाच्यत्वं तेषाम् । तस्माद्भूम्यादीनि नामानि प्रातिस्विकमेवार्थं बोधयन्ति- परमात्मा हि भूरादीनि नामानि तावन्निर्माय ततो भूरादिपदार्थान् ससर्ज रूपवाच्यान् 'भूरिति व्याहरत् ततो भूस्समभव'दिति श्रुतेः । 'नामानि रूपाणि विचिच्य धीर' इति श्रुतेश्च- 'नामरूपे व्याकरवाणी'ति सङ्कल्पो हि नामरूपसृष्टिसङ्कल्पः- नतु नामरूपविशिष्टोहं स्यामिति सङ्कल्पः- बहुस्यामिति सङ्कल्पोपि नामरूपात्मकोहं स्यामिति सङ्कल्प एव, नतु नामरूपविशिष्टोहं स्यामिति । तथा च नामरूपसृष्टिसङ्कल्प एव सः- नामरूपात्मना भवन हि बहुभवनम् । यदि तु नाम वाच्यतया रूपशरीरकतया च नामरूपविशिष्टं परमात्मेत्युच्यते, तर्हि नामरूपयोः परमात्मानात्मकत्वमेव भवेत् । नचेष्टापत्तिः- बहुभवनश्रुतिविरोधात्- नहि नामानि रूपाणि च परमात्मा न भवन्तीति वक्तुं शक्यते- 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं, ऐतदात्म्यमिदं सर्वं, सर्वं खल्विदं ब्रह्म, सर्वं विष्णुमयं जगत्, जगच्च सः, वासुदेवस्सर्वमिति, स महात्मा सुदुर्लभः' इत्यादिश्रुतिस्मृत्यादिविरोधात् । 'हरेर्न किञ्चिद्व्यतिरिक्तमस्ति, मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय' इति परमात्मव्यतिरिक्तनामादिसत्त्वनिषेधाच्च । तस्मात्परमात्मैव मायया नामात्मा रूपात्मा च भवति- नामरूपातिरिक्तजगत्पदार्थाभावात् । इदमेवोक्तं श्रुत्या 'तन्नामरूपाभ्यां व्याक्रियते'ति । **एतेन** नामविशिष्टत्वमेव ब्रह्मणो नतु नामकर्तृत्वमिति **परास्तम्** । रूपस्यैव नामवाच्यत्वेन नामविशिष्टत्वं ब्रह्मणस्तु नामरूपव्याकर्तृत्वमेवेति । नच ब्रह्मापि नामविशिष्टमेवेति वाच्यं, मायया रूपात्मना जातस्य ब्रह्मणो नामविशिष्टत्वं नास्तीति न वयं ब्रूमः, किं तर्हि नामात्मनापि ब्रह्म जातमिति ब्रूमः । नच नामरूपयोर्व्याकर्त्रेव ब्रह्मेति प्रागुक्तमिति वाच्यं,

आत्मानमेव नामरूपात्मना व्याचकार ब्रह्म माययेति तदर्थात् । 'तदात्मानँ स्वयमकुरुत', 'आत्मन्येवात्मनात्मानं सृजत्यवति हन्ति'चेत्यादिश्रुतिस्मृतिवशात् । नहि ब्रह्मव्यतिरिक्तं किमपि वस्त्वस्ति, यन्नामरूपाभ्यां ब्रह्मणा व्याक्रियेत । अत एव तन्नामरूपाभ्यां व्याक्रियतेति ब्रह्मण एव व्याकृतत्वं श्रूयते । नच निर्विशेषं ब्रह्म कथं स्वेन नामरूपात्मना व्याक्रियतेति वाच्यं, अज्ञानावच्छिन्नं सविशेषमेव ब्रह्म व्याकृतमिति । यद्यप्यज्ञानावच्छिन्नं ब्रह्म नामरूपात्मना व्याक्रियतेत्युक्तौ ब्रह्मोपाधिभूतस्याज्ञानस्यैव व्याकृतत्वं, नतु ब्रह्मण इति सिद्धम् , तथापि ब्रह्मशक्तितया अज्ञानस्य ब्रह्मणः पृथक्सत्ताऽभावाद्ब्रह्मणा अज्ञानं व्याक्रियतेति नोक्तमिति बोध्यम् । एवं ब्रह्मणि मायया नामरूपयोः कल्पितत्वादेव नामरूपरहितं ब्रह्मेत्युच्यते- 'न नामरूपे गुणदोष एव वे'ति भागवतात् । अत एव वाङ्मनसयोरगोचरं ब्रह्म- 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'ति श्रुतेः । एवंविधस्यापि ब्रह्मणो नामविशिष्टत्वं वदतस्तवाहो ! साहसम् । नच ब्रह्म नामरूपविशिष्टमिति त्वयाप्युच्यत इति वाच्यं, मया मायया ब्रह्म नामरूपात्मकमित्युच्यते- वस्तुतस्तु नामरूपरहितमेवेति । तस्मान्नामरूपस्रष्टृत्वमेव ब्रह्मणो नामरूपव्याकर्तृत्वं, नतु नामरूपविशिष्टत्वम् । ब्रह्मणो नामरूपव्याकृतत्वं च नामरूपात्मना जातत्वमेव मायया, नतु ब्रह्मपर्यन्तनामरूपव्याकरणमिति । **एतेन** ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात्तस्य प्रतिपादकोपि शब्दस्तत्पर्यन्तमेव स्वार्थमभिदधातीति श्रीभाष्यं **प्रत्याख्यातम्**—ब्रह्मव्यतिरिक्तस्य ब्रह्मशरीरभूतस्य वस्तुन एवाभावात् , भूम्यादिमिथ्यापदार्थवाचिशब्दस्य ब्रह्मपर्यन्तत्वाभावाच्च- नहि लोके भूम्यादिशब्दानां भूम्यादिशरीरके ब्रह्मणि व्युत्पत्तिरस्ति ।

**ननु** सर्वेपि भूम्यादयश्शब्दाः लोकव्युत्पत्त्यवगतभूम्यादिपदार्थविशिष्टब्रह्माभिधायिन एव । नात्र व्युत्पत्तिविरोधः- व्युत्पन्नार्थापरित्यागत् । ब्रह्मणो लौकिकप्रमाणागोचरतया तत्पर्यन्तव्युत्पत्त्यभावः, न त्ववाचकतया । यथा लिङादेरपूर्ववाचित्वं वेदव्युत्पत्त्याऽवगम्य लोकतो व्युत्पत्त्यभावः परिह्रियते- कार्यवाक्यार्थवादिभिः तद्वत्- इति, **मैवम्**—वेदव्युत्पत्त्यापि भूम्यादिशब्दानां भूम्यादिविशिष्टब्रह्माभिधायित्वाभावात् । तथाहि- 'आत्मन आकाशस्सम्भूतः', 'यतो वा इमानि भूतानि जायन्ते', 'पृथिव्यप्सु प्रलीयते' इत्यादिषु आकाशादिशब्दानां कोर्थः । नचाकाशादिशरीरकं ब्रह्मार्थ इति वाच्यं, आत्मनस्सकाशादाकाशशरीरकः परमात्मा सम्भूतः- आत्मनस्सकाशादेतत्सर्वभूतशरीरकं ब्रह्म जायते- अप्सु पृथिवीशरीरकं ब्रह्म लीयते इत्यर्थवर्णने मुख्यार्थानुपपत्तेः स्फुटत्वात् । नहि ब्रह्मणो जन्मलयौ स्तः- यदि तु 'सति विशेष्यबाधे विधिनिषेधौ विशेषणमुपसंक्रामत' इति न्यायाद्विशिष्टब्रह्मणः प्रोक्तौ जन्मलयौ विशेषणमाकाशादिकमेवोपसंक्रमत इत्युच्यते, तर्हि आकाशस्सम्भूत इत्यत्र आकाशशब्दस्य आकाशविशिष्टं ब्रह्मेत्यर्थमुपवर्ण्य तस्य सम्भवायोगाद्विशेष्यांशं परित्यज्य आकाश एव सम्भूतो नतु ब्रह्मेति वदतस्तव घट्टकुटीप्रभातवृत्तान्तस्समजनि । तत्तेज ऐक्षतेत्यादौ तु कैवलस्य तेजस ईक्षणासम्भवाल्लक्षणया तेजोविशिष्टं ब्रह्मेत्यर्थं उपवर्ण्यतां- तत्रापि न तेजःपदस्य तेजोवच्छिन्नं ब्रह्म मुख्यार्थः- तेजश्शब्दस्य तत्र शक्त्यभावात् । अस्य शब्दस्यास्मिन्नर्थे शक्तिरिति व्याकर-

णोपमानकोशासवाक्यव्यवहारादिभिः खलु व्यवस्था सिध्यति- तेजश्शब्दस्य चाग्नावेव शक्तिरिति तैस्सिद्धम्। तस्मात्तेजश्शब्दस्य तेजोविशिष्टे ब्रह्मणि लक्षणैव- यथा छत्राणि गच्छन्तीत्यत्र छत्रशब्दस्य छत्रविशिष्टपुरुषे। किं बहुना- तच्छब्दस्य तदर्थेऽभिधा, तद्विशिष्टार्थे तु लक्षणैव। तस्माद्यद्यदर्थप्रतिपादको यो यश्शब्दस्तत्तदर्थ एव तस्य तस्य स्वार्थः, तद्विशिष्टान्यार्थस्तु नैव स्वार्थः। इदं च तस्य प्रतिपादकोपीति स्वार्थमिति च श्रीभाष्यवाक्यवशादेवावगम्यते। अतो भूम्यादिशब्दानां भूम्यादिविशिष्टब्रह्मवाचकत्वमयुक्तमेव।

**ननु** तर्हि 'वचसां वाच्यमुत्तमम्' 'हरिरखिलाभिरुदीर्यते तथैक' इत्यादिवचसां का गतिरिति, **उच्यते**—ब्रह्मैव मायया सर्वात्मनावस्थितमिति कृत्वा सर्वेपि शब्दा ब्रह्मवाचिन एवेति। **एतेन** 'ऐतदात्म्यमिदं सर्वं'मिति प्रतिज्ञानार्थस्य तत्त्वमसीति सामानाधिकरण्येन विशेष उपसंहार इति **प्रत्युक्तम्**—ब्रह्मणि कल्पितस्य सर्वस्य जगतो ब्रह्मात्मत्वमैतदात्म्यमिदमिति प्रतिपादितम्। तत्त्वमसीत्यनेन तु जीवस्य ब्रह्मस्वरूपाभेद उक्त इति कृत्वा नात्र सामान्यविशेषभावावकाश इति। नच जीवोपि ब्रह्मणि कल्पित इत्येव भवदीयप्रलाप इति वाच्यं, जीवोपाधिरेव ब्रह्मणि कल्पितो नतु जीवः- तस्य चैतन्यरूपत्वादिति। उपाधितादात्म्याध्यासवशात्संसरच्चैतन्यं हि जीव इति व्यपदिश्यते- तस्मात्तत्त्वमसीति महावाक्यं जीवब्रह्मणोश्शुद्धमैक्यमेव बोधयति, नतु शरीरशरीरिभावविशिष्टमिति कृत्वा न विशिष्टाद्वैतशिद्धिः- तच्च शुद्धमद्वैतं निर्विशेषं ब्रह्मैव।

**ननु** निर्विशेषवस्त्वैक्यवादिनस्तव वैयधिकरण्येन सामानाधिकरण्येन च ब्रह्मात्मभावोपदेशास्सर्वे परित्यक्ता भवेयुः- एकस्मिन्वस्तुनि कस्य तादात्म्यमुपदिश्यते, तस्यैवेति चेत्- तत्स्ववाक्येनैवावगतमिति न तादात्म्योपदेशावसेयमस्ति किञ्चित्। कल्पितभेदनिरसनमिति चेत्, तत्तु न सामानाधिकरण्यतादात्म्यावसेयमित्युक्तं- सामानाधिकरण्यं तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेवावहेदिति, **मैवम्**—निर्विशेषवस्तुतादात्म्यं तत्त्वम्पदार्थयोर्जीवेश्वरयोरुपदिश्यते महावाक्येन- नहि निर्विशेषवस्तुनि उपदेशादिविशेषसद्भावः, इदं च जीवेश्वरयोर्निर्विशेषवस्तुतादात्म्यं न वाक्यान्तरात्सिद्धमिति कृत्वा महावाक्योपदेशावसेयमेव। नच जीवेश्वरयोरन्योन्यतादात्म्यमेव महावाक्यादवसीयत इति वाच्यं, जीवेश्वरतादात्म्यरूपस्य तस्य मुख्यार्थस्यानुपपन्नत्वात्। नच जीवेश्वरयोश्शरीरशरीरिभावनिबन्धनं तादात्म्यमुपपन्नमेवेति वाच्यं, कार्यकारणयोरेव तादात्म्यमुपपद्यते नतु शरीरशरीरिणोरिति तादात्म्यस्य शरीरशरीरिभावमूलत्वायोगात्। नच ब्रह्मणि कल्पितजीवेश्वरभेदनिरसनं न जीवेश्वरसामानाधिकरण्यतादात्म्यावसेयमिति वाच्यं, ब्रह्मणि कल्पितस्य जीवेश्वरभेदस्य जीवेश्वरयोरधिष्ठानब्रह्मात्मनैक्यमेवेति ज्ञानेनैव निरसनीयत्वात्।

**ननु** जीवेश्वराधिष्ठानब्रह्मज्ञानादेव जीवेश्वरभेदनिवृत्तिर्भवतीति कृत्वा ब्रह्मणि कल्पितयोर्जीवेश्वरयोस्तादात्म्यज्ञानं व्यर्थमेवेति तदुपदेशो महावाक्यकृतो व्यर्थ एव, **मैवम्**—ब्रह्मणि कल्पितयोर्जीवेश्वरयोर्ब्रह्मतादात्म्यमेवोपदिश्यते, महावाक्येनेत्युक्तत्वात्। नच जीवस्येश्वरतादात्म्यमेवोपदिश्यत इति वाच्यं, तस्यानुपपन्नत्वात्। नच जीवशरीरकचैतन्यस्येश्वरतादात्म्यमुपदिश्यत इति वाच्यं, जीववदीश्वरस्यापि चैतन्यं प्रति शरीरत्वेन शरीरिणश्चैतन्यस्य शरीरभूतेश्वरतादात्म्यायोगात्। नचेश्वरश्चैतन्य-

मेवेति वाच्यं, जीववत्कल्पितस्येश्वरस्याकल्पितचैतन्यरूपत्वायोगात् । तस्मात् यज्जीवशरीरकं ब्रह्म त्वम्पदार्थभूतमिति भवदभिमतं, तदन्तःकरणावच्छिन्नं चैतन्यमेव- उपहितस्य खलूपाधिश्शरीरभूतः-- सुखदुःखादिधर्मविशिष्टान्तःकरण एव खलु भवतो जीवबुद्धिः- मायावच्छिन्नं चैतन्यमीश्वरस्तु तत्पदार्थः, इदं च ब्रह्मणि प्रकारद्वयं प्रतिपादितमैक्यविरोध्येवेति लक्षणया तत्परित्यागः कृत इति निर्विशेषब्रह्मण्येव महावाक्यस्य तात्पर्यम् ।

**यदुक्तं** निर्विशेषवस्त्वैक्यवादिनस्तव वैयधिकरण्येन सामानाधिकरण्येन च ब्रह्मात्मभावोपदेशास्सर्वे परित्यक्तास्स्युरिति, **तदविवेकप्रजल्पितमेव**—कल्पितस्याधिष्ठानमेव स्वरूपमिति कृत्वा 'एष त आत्मेति' वैयधिकरण्येन ब्रह्मात्मभावोपदेशस्य नास्माकं मते कापि क्षतिः । निर्विशेषं ब्रह्म हि जीवेश्वरजगतामधिष्ठानत्वेन स्वरूपत्वादात्मा भवति- आत्मा हि स्वरूपं- अतएव स आत्मेति श्रूयते, सामानाधिकरण्येनोपदेशस्तु समर्थित एव । तस्माद्रजतं शुक्तिः रजतस्य शुक्तिरात्मेतिवदस्मन्मते सर्वमप्युपपद्यते, त्वन्मते तु न किमपि- शरीरशरीरिणोर्जीवपरयोस्सामानाधिकरण्यायोगात्सामानाधिकरण्येन ब्रह्मात्मभावोपदेशानुपपत्तिः । शरीरस्य शरीरी स्वरूपं न भवतीति कृत्वा न वैयधिकरण्येनेति । नच एष त आत्मेत्यत्रात्मशब्दस्य शरीरीत्यर्थ इति वाच्यं, अनन्वयादनभिधानाच्च- इति ।

**ननु** सत्यं ज्ञानमित्यादिस्वरूपपरवाक्यप्रतिपादितार्थापेक्षयाधिकस्यार्थस्य प्रतिपादकत्वं महावाक्यस्यास्ति ? नवा ? आद्ये- सविशेषपरत्वं महावाक्यस्य । द्वितीये- वैयर्थ्यं, **मैवम्**—अधिष्ठानस्वरूपमात्रप्रतिपादकं सत्यादिवाक्यम् । अध्यस्तस्याधिष्ठानतादात्म्योपदेशस्तु महावाक्येन क्रियत इति । नच सविशेषपरत्वं अध्यस्तस्य, बाधितत्वेनाधिष्ठानमात्रस्यैवावशेषणादिति । नचाधिष्ठानं सविशेषमेवेति वाच्यं, व्यवहारतस्तथात्वेपि वस्तुतो निर्विशेषत्वात्- नहि वस्तुतोऽध्यस्तस्यैवाभावे ब्रह्मणोधिष्ठानत्वं सम्भवेत् । तस्मात् सत्यं ज्ञानमित्यादि वाक्यं ब्रह्मस्वरूपप्रतिपादनद्वारा **निर्विशेषपरम्** । तत्त्वमसीत्यादिमहावाक्यं तु जीवब्रह्मैक्यबोधनद्वारा **निर्विशेषपरमिति न महावाक्यस्य वैयर्थ्यं** निर्विशेषपरत्वे ।

**यदुक्तं** केवलभेदवादिनां च केनापि प्रकारेण जीवेशयोरत्यन्तं भिन्नयोरैक्यासम्भवादेव ब्रह्मात्मभावोपदेशा न सम्भवन्तीति सर्ववेदान्तपरित्यागस्स्यादिति रामानुजेन, **तदिदं स्वकण्ठस्य स्वयमेव पाशबन्धनम्**—तथाहि किं सर्वैर्वेदान्तैरैक्यं प्रतिपाद्यते ? उत न ? आद्ये- तव मतमप्रमाणमेव । द्वितीये- द्वैतिनां कथं सर्ववेदान्तपरित्यागः । नच द्वैतिभिरद्वैतवादिन्यश्श्रुतयः परित्यक्ता अद्वैतिभिस्तु द्वैतवादिन्यः- अस्माभिस्तु द्विविधा अपि न त्यक्ता इति सर्ववेदान्तापरित्यागिनो वयमेव, द्वैतिनस्तु कतिपयवेदान्तपरित्यागेपि सर्ववेदान्तपरित्यागिन एव सर्ववेदान्तास्वीकारादिति वाच्यं, द्वैतिभिरद्वैतश्रुतयस्त्यक्ता अद्वैतिभिर्द्वैतश्रुतयस्त्यक्ता युष्माभिस्तु द्विविधा अपि श्रुतयस्त्यक्ता इति सर्ववेदान्तपरित्यागिनो यूयमेवेति सुवचत्वात् । तथा किं युष्माभिर्जीवेशयोर्भेद उच्यते? यद्वाऽभेदः? उतभेदाभेदः? आहोस्विद्भेदाभेदाभावः ? आद्ये- यूयं भेदवादिन एवेति कृत्वा तेषु युष्माभिः पातितो दोषः पतत्येव युष्मासु । द्वितीये- जितमद्वैतिभिः । तृतीये- त्वया कृता भेदाभेदवादिनिन्दा त्वामेव स्पृशति । चतुर्थे-

स्त्वसम्भवी । नचास्माभिर्विशिष्टाभेद उच्यत इति वाच्यं, केनापि प्रमाणेन तस्यानुपस्थाप्यमानत्वात् । अपि च जीवपरयोश्शरीरशरीरिभावं, नियाम्यनियामकभावं, शेषशेषिभावं चाभ्युपगच्छन्त्येव द्वैतिनः- परं तु शरीरशरीरिभावनिबन्धनं तादात्म्यं तु नाभ्युपगच्छन्ति- तदनभ्युपगमस्तेषां गुण एव- तादात्म्यस्यातन्निबन्धनत्वात् । यदि शरीरशरीरिणोश्शरीरशरीरिभावनिबन्धनं तादात्म्यं भवेत्तर्हि गेहगेहिनोरपि गेहगेहिभावनिबन्धनं, पटपटिनोः पटपटिभावनिबन्धनं, वादिप्रतिवादिनोः वादिप्रतिवादिभावनिबन्धनं, वध्यघातुकयोर्वध्यघातुकभावनिबन्धनं, स्वामिभृत्ययोस्स्वस्वामिभावनिबन्धनं, दम्पत्योर्दम्पतिभावनिबन्धनं च तादात्म्यं भवेत् । अनिष्टं हि तदिदं यद्द्वयोस्सनोरैक्यम् । किंच अत्यन्तं भिन्नौ जीवेशाविति युष्माभिरप्युच्यते- जीवेश्वरयोर्भिन्नद्रव्यत्वं हि भवदभिमतम्- तथा च कथं तयोः केनापि प्रकारेणैक्यं भवेत्-- सति हि द्रव्यैक्ये घटशरावादीनां सत्यपि प्रकारभेदे मृत्त्वेनैक्यं भवति । नच कम्बुग्रीवाद्याकारलक्षणप्रकारैक्ये सति द्रव्यैक्याभावेपि मार्तिकसौवर्णघटयोर्घटत्वेनैक्यं भवत्येवेति वाच्यं, पाषाणादिवज्जाम्बूनदस्यापि मृद्विकारत्वाविशेषात् । काठिन्यं हि पृथ्वीगुणः, सुवर्णं च कठिनं- अतः कार्ष्णायसादिलोहवत्सुवर्णलोहमपि मृदेव । तेजोधातुस्तु तत्र प्राचुर्येण वर्तते । **एतेन** सुवर्णं तैजसमिति **परास्तम्** । भवतु वा सुवर्णस्य तैजसत्वं- मार्तिकसौवर्णघटयोरचिद्द्रव्यत्वेन द्रव्यैक्यं वर्तत एवेति न द्रव्यैक्याभावः । अपि च प्रकाराभेदो नामाकाराभेदः सच निराकारयोर्जीवेशयोः कथं भवेत् । नचोभयोरपि ज्ञानस्वरूपत्वेनैक्यमिति वाच्यं, तव मते जीवस्वरूपाद्ज्ञानाचिद्द्रव्याद्विलक्षणमेवेश्वरस्वरूपं ज्ञानमिति । तस्मात्प्रच्छन्नद्वैतिन एव यूयमिति कृत्वा न युष्माभिर्द्वैतिनो निन्दनीयाः । **एतेनाद्वैतिना** द्वैतिभिस्सह विवादे प्राप्ते विशिष्टाद्वैतिनो मध्यस्थतया नाङ्गीकर्तव्या इति **सिद्धम्** ।

**यदुक्तं रामानुजेन**—निखिलोपनिषत्प्रसिद्धं कृत्स्नस्य ब्रह्मशरीरभावमातिष्ठमानैः कृत्स्नस्य ब्रह्मात्मभावोपदेशास्सर्वे सम्यगुपपादिता भवन्तीति, **तदेतच्छ्रवणानन्दम्**—ब्रह्मशरीरस्य कृत्स्नस्य ब्रह्मशरीरत्वेनैव ब्रह्मात्मत्वायोगात् । नहि जीवशरीरभूतानां मनुष्यपश्वादीनां जीवात्मत्वं भवति । नच जातिगुणयोरिव द्रव्याणामपि शरीरभावेन विशेषणत्वेन गौरश्वो मनुष्यो देवो जातः पुरुषः कर्मभिरिति सामानाधिकरण्यं लोकवेदयोर्मुख्यमेव दृष्टचरमिति वाच्यं, यथा गवाश्वमनुष्यदेवादिशरीरविशिष्टत्वेन जीवो गवाश्वमनुष्यदेवादिशब्दवाच्यो भवति, तथा कृत्स्नशरीरकं ब्रह्म कृत्स्नपदवाच्यं भवतुनाम नैतावता कृत्स्नस्य ब्रह्मात्मत्वसिद्धिः- नहि गोशरीरको जीव इत्युक्ते गोर्जीवात्मत्वं सिध्यति-- किं च गवाश्वादिशरीरविशिष्टत्वात्पुरुषो गौरश्व इति नोच्यते-- किं तर्हि गवाश्वादिशरीरतादात्म्याध्यासविशिष्टत्वादेव । अत एव 'पुमान्न देवो न नरो न पशुर्न च पादप' इति विष्णुपुराणे प्रोक्तम् । नहि देवादिशरीरविशिष्टः पुरुषो देवादिर्नेति वक्तुं शक्यते । अपि च गौरश्वो मनुष्यो देहो जातः पुरुषः अकर्मभिरित्यत्र तथास्तुनाम कथं चित्- गोशरीरकोऽश्वशरीरको मनुष्यशरीरको देवशरीरकश्च जातः पुरुषः कर्मवशादित्यत्र कथं गवादिशब्दानां विशिष्टजीवपर्यन्तत्वं सङ्गच्छेत । किंच गवाश्वादिशब्दाः किं गवाश्वादिशरीरमात्रवाचिनः मुख्यया वृत्त्या ? यद्वा विशिष्ट-

जीववाचिनः ? आद्ये- जात एव वः शृङ्गभङ्गः । अन्त्ये- 'गामानय अश्वमानय' इत्यादौ तत्तेरेयोव-निषद्याकोपः-- तत्र हि किं शरीरं तवेष्टमिति जीवं प्रष्टुं गवाश्वादिशरीरानयनमेवोक्तम् । तस्मात् मनुष्यो जीवो ज्योतिष्टोमेन देवो भवतीत्यादौ शरीरवाचिनोर्मनुष्यदेवपदयोर्जीवसामानाधिकरण्यानुपपत्त्यैव लक्षणया मनुष्यदेवपदयोर्मनुष्यदेवदेहविशिष्टपरत्वमिति वक्तव्यम् । तथापि मनुष्योऽहं देवोऽहमिति सार्वजनीनानुभवविरुद्धमिदं कल्पनं-- अनात्मनि मनुष्यदेवादिदेह एव हि अहमिति प्रत्ययो मूढस्य । तस्माद्देहदेहिनोस्सामानाधिकरण्यमध्यासप्रयुक्तत्वादमुख्यमेव । नैवं महावाक्येष्यमुख्यमेव सामानाधिकरण्यमिति वक्तुं युज्यते- सकारणस्य सकार्यस्य चाध्यासस्य निवृत्त्यर्थं महावाक्योपदेशस्य क्रियमाणत्वादुपनिषद्भ्यो भ्रान्तिकल्पनाऽयोगाच्च । **यदप्युक्तम्**—अपृथक्सिद्धप्रकारवाचित्वमेव मत्वर्थीयप्रत्ययनिरपेक्षसामाधिकरण्यप्रयोजकमिति, **तदप्यसत्**—दण्डी कुण्डलीत्यत्र दण्डकुण्डले यथा पृथक्प्रतिपत्तिस्थित्यर्हे द्रव्ये भवत इति कृत्वा तत्र दण्डः कुण्डलः पुरुष इति न सामानाधिकरण्यप्रत्ययः । तथा ईश्वरात्पृथग्जीवस्य जीवात्पृथग्देहस्य च प्रतिपत्तिस्थिती भवत एवेति नापृथक्सिद्धप्रकारवाचित्वं जीवदेहयोः-- जीवापेतं हि शरीरं जीवात्पृथक्तिष्ठतीति सर्वेषां नः प्रत्यक्षं, मम देह इति जीवात्पृथक्प्रतिपद्यते च । एवमहमीश्वरस्य भृत्य इतीश्वरात्पृथग्जीवः प्रतिपद्यत एवेति दण्डकुण्डलयोर्मत्वर्थीयप्रत्ययनिरपेक्षत्वाभावे तु तत्रात्मभ्रमाभाव एव हेतुः- नहि दण्डकुण्डलयोर्देह इवाहमिति ममेति च प्रत्ययद्वयमस्ति, किंतु ममेत्येव । तस्मादहमध्यासविषयत्वमेव मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोजकमिति ।

**ननु** तदेकाश्रयत्वं तदेकप्रयोजनत्वं विशेष्यप्रतीतिसम्भवे पृथक्स्थितत्वेनाप्रतीतत्वं चापृथक्सिद्धविशेषणमेव देहः, जीवविश्लेषे देहविनाशाद्देहस्तावज्जीवैकाश्रयः, जीवकर्मफलभोगार्थत्वाज्जीवैकप्रयोजनः, देवो मनुष्य इत्यात्मविशेषणतयैव प्रतीतेः पृथक्स्थितत्वेनाप्रतीतश्चेति, **मैवम्**—देहस्तावन्न जीवैकाश्रयः- 'द्वा सुपर्णा सयुजा सखाया समानवृक्षं परिषस्वजाते' इति श्रुत्या देहतरोर्जीवेश्वराख्यपक्षिद्वयाश्रयत्वेन जीवैकाश्रयत्वाभावात् । नापि जीवविश्लेषमात्राद्देहस्य विनाशः- तैलादिक्षिप्तस्य मृतस्यापि देहस्य बहुकालस्थितिसम्भवात् । किं तर्हि अग्निसंयोगादिनैव देहनाशः- तथा देहो न जीवैकप्रयोजनः- ईश्वरलीलाया अपि देहनिवर्त्यत्वेन देहस्येश्वरप्रयोजनत्वस्यापि सद्भावात् । देवो मृतो मनुष्यो मृत इति जीवाविशेषणतयैव देहस्य प्रतीतेर्न पृथक्स्थितत्वेनाप्रतीतत्वं च- नहि जीवस्य मरणं भवति । यद्वा मम देहः स्थूल इति जीवात्पृथग्देहः प्रतिपद्यत एव । तस्मान्न जीवस्यापृथक्सिद्धविशेषणं देहः । अथ ईश्वरस्य जीवो पृथक्सिद्धविशेषणमिति तु वक्तुमनुन्मत्तः कोपि नोत्सहते- उक्तप्रयोजकत्रयस्य तत्र सुतरामसम्भवात् । नच जीव ईश्वरैकाश्रय इति वाच्यं, देहवज्जीवस्य विनाशायोगात् । नापि जीव ईश्वरैकप्रयोजनः- ईश्वरकर्मफलभोगार्थं जीवस्य देहवदसृष्टत्वात् । नापि जीव ईश्वरप्रतीतिसम्भवे पृथक्स्थितत्वेनाप्रतीतः- अहमीश्वरं ध्यायामीत्याद्यनुभवविरोधात् । एवं देह ईश्वरस्यापि नापृथक्सिद्धविशेषणं- देहस्येश्वरविश्लेषप्रयुक्तविनाशाभावेन ईश्वरैकाश्रयत्वाभावात्- ईश्वरो हि सर्वव्यापकः कथं तेन देहस्य विश्लेषो भवेत्- ईश्वरकर्मफलभोगार्थं देहस्यासृष्टत्वेन ईश्वरैकप्रयोजनत्वाभावात्- ज्ञानानन्दस्वरूपेश्वर-

प्रतीतिसम्भवेपि देहस्य पृथक्स्थितत्वेन प्रतीतत्वाच्च । एवं जगतोपि बोध्यम् । तस्माद्देहो देहिनो नापृथक्सिद्धविशेषणम् ।

**अत्रेदं तत्त्वम्**—यद्यस्मात्पृथक् न प्रतीयते नापि तिष्ठति तत्तदेव भवति, नतु तद्विशेषणं, तद्विशेष्यं वा-- नीलपीतादिरूपं द्रव्यात्पृथगस्थितमपि पृथक्प्रतीयत एवेति द्रव्यविशेषणं भवति- रूपी घट इति । एवं फलात्पृथगस्थितमपि पृथक्प्रतीयत एव माधुर्यमिति फलविशेषणं भवति- मधुरं फलमिति । नच रूपरसादिकमपि द्रव्यात्पृथक् न प्रतीयत इति वाच्यं, चक्षुषा फलं गृह्यते, जिह्वया तु तद्रस इति प्रतीतिभेदसत्त्वात् । तथा च यदीश्वरात्पृथक्प्रतिपत्तिस्थित्यनर्हौ जीवः प्रपञ्चश्चेति मतं, तर्हि जीवः प्रपञ्चश्च ब्रह्मैव भवति, नतु ब्रह्मविशेषणम् । तच्चास्माकमिष्टमेव- इति । **यदुक्तं**—गवाश्वादिशब्दा यथा गोत्वाश्वत्वादिविशिष्टव्यक्तिवाचिनस्तथा देवमनुष्यादिशब्दा देवमनुष्यादिशरीरविशिष्टजीववाचिनः, जीववाचिनश्च शब्दा जीवशरीरकपरमात्मवाचिन इति, **तदसत्**- गवादिशब्दा व्यक्तिवाचिनस्सन्त एव जातिं लक्षयन्ति- जातिरहितव्यक्त्यभावात्, नैनत्तौल्यं देवादिशब्दानां जीववाचिशब्दानां च जातिव्यक्त्योरिव देहजीवयोर्जीवपरयोर्वाऽविनाभावाभावात् । किंच यथा जातिमात्रवाचिनश्शब्दा गोत्वादयस्सन्ति, तथा शरिरमात्रवाचिनो जीवमात्रवाचिनश्च शब्दाः किं सन्ति ? उत न ? आद्ये- तान् पठ! नच शरीरं देहो वपुरित्यादिशब्दान् पठामीति वाच्यं, ते हि शरीरसामान्यवाचिशब्दाः, शरीरविशेषणवाचिशब्दान्पुनः पठ! यदि देवो नरः पशुरिति पठसि तर्हि जित एव- देवादिशब्दाश्शरीरविशिष्टजीववाचिन इति स्वमतभ्रंशात् । नच देवत्वं नरत्वं पशुत्वमिति पठामीति वाच्यं, तेषां देहधर्मवाचित्वाच्छब्दानाम् । तथा जीवमात्रवाचिशब्दान् पठ! नच जीवः पुमान् पुरुष इति पठामीति वाच्यं, तेषां जीवसामान्यवाचित्वात् । जीवविशेषवाचिनश्शब्दान् पुनः पठ! यदि त्वमहं स इति पठसि तर्हि जित एव- त्वमादिशब्दाजीवविशिष्टब्रह्मवाचिन इति स्वमतभ्रंशात् । द्वितीये- सर्वव्यवहारलोपः । तस्माद्देवमनुष्यादिशब्दाश्शरीरविशेषवाचका एव- शरीरधर्मत्वाद्देवत्वमनुष्यत्वादीनाम् । तत्तादात्म्याध्यासवशात्तु जीवस्यापि तच्छब्दवाच्यत्वमिति स्थितम् । तस्मान्महावाक्ये त्वम्पदस्य जीवशरीरकं ब्रह्मेत्यर्थवर्णनमयुक्तमेव । ब्रह्म- जीवशरीरकब्रह्माभिन्नमित्युपदेशस्य व्यर्थत्वाच्चेति । किंच एवं दुष्टा महावाक्यस्य स्वेच्छया विपरीतार्थान् कल्पयिष्यन्तीति योगदृष्ट्या विदित्वैव भगवान्बादरायणः स्वयमेव महावाक्यार्थमुपवर्णयामास स्कान्दे काशीमाहात्म्ये- तथाहि- 'प्रत्यग्बोधो य आभाति सोद्वयानन्दलक्षणः । अद्वयानन्दरूपो यस्स प्रत्यग्बोधलक्षणः ।। इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् । ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनोः ।। तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा । सोयमित्यादिवाक्यस्य पदयोरिव नापरे'त्यादिस्सप्तदशाध्याय इहानुसन्धेयः । सूतसंहितायां च- ब्रह्मगीतायां पञ्चमाध्याये- 'त्वं शब्दार्थो य आभाति सोहं शब्दार्थ एव हि । योहं शब्दार्थ आभाति सर्वशब्दार्थ एव हि ।। त्वमहंशब्दलक्ष्यार्थः साक्षात्प्रत्यक्चितिः परा । तच्छब्दस्य च लक्ष्यार्थः सैव नात्र विचारणा ।। त्वमहं शब्दवाच्यार्थस्यैव देहादिवस्तुनः । न तच्छब्दार्थतां वक्ति श्रुतिस्तत्त्वमसीति सा ।। तदर्थैक्यविरुद्धांशं त्यक्त्वा

वाच्यगतं श्रुतिः । अविरुद्धचिदाकारं लक्षयित्वा ब्रवीति हि ॥ तदर्थे च त्वमर्थैक्यविरुद्धांशं विनैव तु । कारणत्वादिवाक्यस्थं लक्षयित्वातु केवलम् ॥ चिदाकारः पुनस्तस्य त्वमर्थैक्यं ब्रवीति च । तत्त्वं-शब्दार्थलक्ष्यस्य चिन्मात्रस्य परात्मनः ॥ एकत्वं यत्स्वतस्सिद्धं स हि वाक्यार्थ आस्तिकाः । इतोन्यथा यो वाक्यार्थस्स वाक्यार्थो न संशयः ॥' इति । अष्टमाध्याये च- 'यत्त्वंशब्दस्य लक्ष्यार्थः स तच्छ-ब्दार्थ एव हि । तत्त्वंशब्दौ स्वतस्सिद्धे चिन्मात्रे पर्यवस्यतः ॥ यः पदद्वयलक्ष्यार्थस्तस्मिन् भेदः प्रकल्पितः । मायाऽविद्यात्मकोपाधिभेदेनैव न वस्तुतः ॥ स्वतस्सिद्धैकताऽज्ञानं व्युदस्य श्रुतिरादरात् । स्वभावसिद्धमेकत्वं बोधयत्यधिकारिणः ॥' इति । विश्वामित्रश्चाध्यात्मरामायणे प्रोवाच- महावाक्यार्थ-मियमेव । नचाध्यात्मरामायणं न पुराणमिति वाच्यं, 'पुराणोत्तममध्यात्मरामायणमिति स्मृतम् ।' इति ब्रह्माण्डपुराणे व्यासेनैवोक्तत्वात् । मनुपराशरबादरायणादिवद्विश्वामित्रस्यापि ग्राह्यवाक्यत्वं श्रुत्यैव खल्वर्क-- तत्र श्रीरामहृदजे- 'अवच्छिन्नस्य पूर्णेन एकत्वं प्रतिपाद्यते । तत्त्वमस्यादिवाक्यैश्च साभासस्याहमस्तथा॥ ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनोः । तदाऽविद्यास्वकार्यैश्च नश्यत्येव न संशयः ॥' इति । 'आदौ पदार्थावगतिर्हि कारणं वाक्यार्थविज्ञानविधौ विधानतः । तत्त्वंपदार्थौ परमात्मजीवकावसीति चैकात्म्य-मथानयोर्भवेत् । प्रत्यक्परोक्षादिविरोधमात्मनोर्विहाय संगृह्य तयोश्चिदात्मताम् ॥ संशोधितां लक्षणया च लक्षितां ज्ञात्वा स्वमात्मानमथाद्वयो भवेत् । एकात्मकत्वाज्जहती न सम्भवेत्तथाऽजहल्लक्षणता विरो-धतः ॥ सोयं पदार्थाविव भागलक्षणौ युज्येत तत्त्वम्पदयोरदोषतः ।' इति, उत्तरकाण्डे पञ्चमसर्गे । **एतेन**—महावाक्यस्याद्वैतवर्णनं शङ्कराचार्योपज्ञमिति—**प्रत्युक्तम्** ।

समाप्तश्चायमुपलब्धो ग्रन्थः ।

इति

श्रीकृष्णाकावेरीमध्यवर्ति गुण्टूरुमण्डलान्तर्गत नरसरायपुरसन्निहित पमिडिपाडुनामकाग्र-
हारनिवासिना श्रीनन्दनन्दनचरणारविन्दामन्दनिष्यन्दमरन्दबिन्दुबृन्दविन्दन-
तुन्दिलमिन्दायमानमानससरोजातेन, भारद्वाजसगोत्रजातेन, निर्मित
श्रीकृष्णलीलातरङ्गिणी समुद्रमथन वेदान्तकौस्तुभादि शता-
धिकग्रन्थजातेन **श्रीबेल्लङ्कोण्डोपनामक रामराय-
कवींद्रेण** विरचितः **श्रीशङ्करशङ्कर-
भाष्यविमर्शः** समाप्तः ।

## श्री वेङ्कटकोण्ड रामरायकविकुलतिलककृत

## ग्रन्थानां पङ्क्तिका ।

श्रीभगवद्गीताभाष्यार्कप्रकाशिका ।
रुक्मिणीपरिणयचम्पूः सव्याख्या ।
कृष्णलीलातरङ्गिणी काव्यं सव्याख्यं ।
भागवतचम्पूव्याख्या ।
समुद्रमथनचम्पूः सव्याख्या १८ मञ्जर्यः ।
वेदान्तमुक्तावली सव्याख्या ।
कन्दर्पदर्पविलासभाणः ।
शारीरकचतुस्सूत्रीविचारः वाक्यग्रन्थः ।
शङ्कराशङ्करभाष्यविमर्शः ।
वेदान्तकौस्तुभम् ।
अद्वैतविजयः ।
मुरारिनाटकव्याख्या ।
शरद्रात्रिः - सिद्धान्तकौमुदीव्याख्या ।
विवर्णादि विष्णुसहस्रनामावली सव्याख्या-नामावलीसहिता ।
हकारादि हयग्रीवसहस्रनामावली ”
परमात्मसहस्रनामावली ”
हयग्रीवाष्टोत्तरम् ।
हयवदनशतकम् ।
दशावताराष्टोत्तराणि १०
धर्मप्रशंसा ।
धनवर्णनम् ।
काममीमांसा ।
त्रिमतसम्मतम् ।
विद्यार्थविद्योतनम् ।
कविभूषणम् ।
शूद्रधर्मदर्पणम् ।
देहदेहिभावविनिर्मूलनम् ।
वेदान्तसंग्रहः ।
वेदान्तनिश्चयः ।
अद्वैतविजयः ।
मोक्षप्रासादः ।
लोकायतादियोगान्तमतखण्डनम् ।
अद्वैतान्यमतखण्डनम् ।
सिद्धान्तसिन्धुः, दशश्लोकी सिद्धान्तबिंदु-व्याख्या ।
अद्वैतामृतम् ।
वेदान्तदीपिका ।
वेदान्तदिनकरः ।
वेदान्ततत्त्वामृतम् ।
विष्णुविजयः ।
समस्यारत्नाकरः ।
भागवतचतुश्लोकीव्याख्या ।
कृष्णोद्धवसंवादव्याख्या ।
नियोगिवैदिकजनहितोपदेशः ।
ब्राह्मणशब्दविचारः ।
वैजयन्ती ।
मुक्ताहरिलता ।
विश्वरूपगद्या ।
हयग्रीवनवरत्नमाला ।
हयग्रीवपञ्चविंशतिः ।
स्वीकारनिर्णयः ।
सुमनोमनोरञ्जनम् ।
वीरराघवस्तुतिः ।
रमावल्लभराजशतकम् ।
रामायणान्तरार्थः ।
त्रिपुरासुरसंहारान्तरार्थः ।
भारतान्तरार्थः ।
रमावल्लभराजस्तुतिः ।
गङ्गाष्टकाद्यष्टकाः विशिष्य १४३ ग्रन्थाः ।
एषु ग्रन्थेषु केचन ग्रन्थाः अनुपलब्धाः ।

# शुद्धाऽशुद्धपत्रिका ।

| पुट | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | २९ | विचार्यश्च | विचारश्च |
| ६ | १६ | धर्मजिज्ञासेति | ब्रह्मजिज्ञासेति |
| ८ | २४ | जिज्ञासति | जिज्ञासते |
| १० | २० | सन्दर्शादि | सन्दंशादि |
| ११ | ३ | जिज्ञासतीति | जिज्ञासत इति |
| | १४ | इच्छाहि | दृढेच्छाहि |
| | २८ | इत्युक्तमीमांसा । | इत्युक्तम् । मीमांसा |
| १२ | ५ | शास्त्रस्य । मीमांसा | शास्त्रस्य मीमांसा |
| | २० | जिज्ञासति | जिज्ञासते |
| १७ | १ | कर्मस्वरूपे | कर्मस्वरूपस्य |
| | २५ | अन्यपेक्षित | अनपेक्षित |
| १८ | २१ | अविच्छिद्धमात्माकाथ | अविच्छिन्नमात्माकार |
| | २९ | ब्रह्मात्माहरक | ब्रह्मात्मावरक |
| २२ | १२ | रामानुजेनोक्तप्रायणात् | रामानुजेनोक्तमाप्रायणात् |
| | १८ | जन्मान्तर एवं | जन्मान्तर एव |
| २५ | २ | प्रतीतेरात्म | प्रतीतेरनात्म |
| २७ | ५ | शाखाच्छादने | शाखाच्छेदने |
| २९ | १२ | चाभावरूपम् | च भावरूपम् |
| | २२ | निह्वेतुम् | निह्नोतुम् |
| ३२ | १४ | ब्रह्मनित्यम् | ब्रह्मानित्यम् |
| ३४ | ७ | प्रत्यक्षप्रमाणानाम् | प्रत्यक्षप्रमाणाम् |
| | | अनुमित्यादिप्रमाणाणाम् | अनुमित्यादिप्रमाणाम् |
| ३५ | २९ | प्रकृतिप्रत्ययोः | प्रकृतिप्रत्यययोः |
| ३३ | ३ | किन्तु | तत्तु |
| ३८ | १० | पदार्थाभिधायीतीति | पदार्थाभिधायीति |
| | २५ | हीयतेत्यस्य | हीयेतेत्यस्य |
| | २६ | हीयतेत्यपि | हीयेतेत्यपि |
| ४० | १५ | विशेषौ सतः | विशेषौ नस्तः |
| | २६ | नन्वेवमच्छिन्न | नन्वेवमवच्छिन्न |

| पुट | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४२ | १ | जन्यस्य | जनस्य |
| | १२ | प्रतियोगिकाभावः | सप्रतियोगिकाभावः |
| ४५ | ११ | ब्रह्मैव | ब्रह्मेव |
| ४६ | ५ | ननु अभाव इति । तन्निरपेक्षत्वेन | ननु अभाव इति तन्निरपेक्षत्वेन |
| ४७ | १८ | सर्वस्यापि | सर्पस्यापि |
| | २६ | अन्तःकरणवृत्तिरूपाध्यास | अन्तःकरणवृत्ती रूपाध्यास |
| ४८ | १७ | एकत्व | एकत्र |
| | २० | ब्रह्मणा भवत्यभेदी | ब्रह्मणो भवत्यभेदः |
| | २२ | सुसिरूपः | सुनिरूपः |
| ५१ | २२ | ननु वयम् | ननु न वयम् |
| ५३ | २५ | न दृष्ट इति | न दुष्ट इति |
| ५५ | ३० | स्वयमेव जानाति | स्वमेव न जानाति |
| ६० | २ | जगदन्तःपातित्वात् | जगदनन्तःपातित्वात् |
| | ११ | भवत्येवं सर्वस्य ब्रह्मभिन्नत्वम् | भवत्येव सर्वस्य ब्रह्माऽभिन्नत्वम् |
| ६२ | २५ | घटशब्दस्य | घटशब्दश्च |
| ६४ | ८ | क्रियारित्वम् | क्रियाकारित्वम् |
| | १५ | सच्छब्दवाच्यम् | न सच्छब्दवाच्यम् |
| ६५ | १८ | भण्यये | भण्यते |
| ७३ | ९ | नाघट | वाघट |
| ७५ | ६ | तस्मात्करणभूतम् | तस्मान्न करणभूतम् |
| | १४ | परामर्शस्यैव सिद्धिः | परामर्शस्यैवाऽसिद्धिः |
| ७७ | ६ | परमार्थतस्सतस्तस्य | परमार्थतस्तस्य |
| ८१ | २ | नाप्यनेनानुभवेन | नाप्यन्येनानुभवेन |
| | १४ | दृशोर्निर्धर्मकता | न दृशोर्निर्धर्मकता |
| ८२ | १६ | यदभावरूपस्य | तदभावरूपस्य |
| ८८ | ३ | ज्ञातार्थम् | ज्ञातारम् |
| | २९ | इत्यत्रैव | इत्यत्रेव |
| ८९ | ५ | चैतन्यस्वभावस्य आत्मा | चैतन्यस्वभावस्स आत्मा |
| ९२ | १७ | तदव्यभिचरितसत्ताकम् | तदव्यभिचरितप्रकाशसत्ताकम् |

| पुट | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९४ | ७ | बोधो नास्त्येन | बोधो नास्त्येव |
| ९६ | १३ | देहेन्द्रियविवचनेतु | देहेन्द्रियविवेचनेतु |
| | १५ | मनस्सन्याक्रान्ते | मनस्यन्याक्रान्ते |
| ९७ | २९ | शङ्कराचार्यैरेवोमिति | शङ्कराचार्यैरेवोक्तमिति |
| १०० | २ | प्रमातुरेवोपलब्धत्वात् | प्रमातुरेवोपलब्धृत्वात् |
| | २४ | ज्ञात एवेति सूत्र | ज्ञोऽत एवेति सूत्र |
| १०२ | ६ | कृत्वानात्मनोपि | कृत्वाऽऽत्मनोऽपि |
| १०३ | ८ | तत्कर्तृत्वमन्यस्य | तत्कर्तृत्वमप्यस्य |
| | ३० | अचाक्षुषश्चापि | अचाक्षुषस्यापि |
| १०४ | १७ | द्रव्यत्वात्स चित्प्रतिफलनंसत् | द्रव्यत्वात् सचित्प्रतिफलनंसत् |
| १०६ | ९ | सकार्याहङ्कार | स्वकार्याहङ्कार |
| १०९ | २० | दर्पणादिवस्तु | दर्पणादिस्तु |
| | ” | दर्पणादेरजडत्वात् | दर्पणादेर्जडत्वात् |
| ११० | ५ | अहङ्कारस्थत्वस्यायुक्तत्वात् | अहङ्कारस्थत्वस्यापि युक्तत्वात् |
| १११ | ६ | अप्रबोधात् | आप्रबोधात् |
| | २४ | अवतिष्ठ इत्येवम् | अवातिष्ठ इत्येवम् |
| ११९ | २ | मैवं—सर्वस्य | मैवम्—न सर्वस्य |
| | १२ | जीवोनात्मानम् | जीवोऽनात्मानम् |
| | २५ | इत्यन्यस्मिन्नर्थे | इत्यस्मिन्नर्थे |
| १३४ | ७ | वन्ध्यापुरुषस्य | वन्ध्यापुत्रस्य |
| १४८ | ४ | ब्रह्मणो भवत्येव | ब्रह्मणो न भवत्येव |
| १४९ | २२ | परमात्मनो युक्तम् | परमात्मनोऽयुक्तम् |
| | ३० | न चाचेतनेन | नच तेजसा |
| १५१ | २९ | यदि वाभ्युपेतम् | यदि नाभ्युपेतम् |
| १५९ | २१ | घटस्यापि | घटव्यापि |
| | २८ | ब्रह्मापाप्त्या | ब्रह्मप्राप्त्या |
| १६३ | ११ | ब्रह्मप्राप्तो ब्रह्मविद: | ब्रह्मप्राप्तो ब्रह्मविद् |
| १६४ | २३ | ब्रह्मसाक्षात्कारसिद्धिः | ब्रह्मसाक्षात्काराऽसिद्धिः |
| १८१ | ८ | मृदभिन्नाभवति | मृन्न भवति |

| पृष्ट | पंक्ति | अशुद्धम् |
|---|---|---|
| १८३ | १७ | अजत्वेन ब्रह्मकार्यत्वात् |
| | १८ | प्राकृतत्वेन ब्रह्म |
| | ३० | ब्रह्मकार्यत्वेनाजयोः |
| १८७ | २ | नच |
| २०० | २३ | प्राकृतः |
| २०२ | १६ | ईश्वरेणाविधृयम् |
| २०३ | ९ | इत्यप्युक्तम् |
| २०५ | ११ | भेदर्शिनोऽभय |
| २०९ | ५ | नच 'मत्स्थानि |
| | १८ | तन्तुर्वोतः |
| २११ | २६ | अन्यत्वज्ञानम् |
| २३१ | ३ | 'सह वै सशरीरस्य |
| २४० | २७ | विषण्णैः |
| २४६ | ११ | यदुपाधेः |
| २५८ | २३ | तस्मिन् लोके नेवकस्यापि |
| २६८ | ८ | अपो मार्गान्तराज्ञाता |
| २८३ | १६ | जायतैव |
| २९६ | २६ | माया तु |
| ३०७ | १० | ज्ञानेन न दोषो |
| ३१० | २३ | तिरस्कारः प्रकाशस्य |
| ३१२ | ३० | नचानुभूतोर्थो |
| ३३६ | ९ | विशोकः |
| ३४३ | २४ | सन्नर्थवाद |
| ३४६ | ३० | पुराणानिहर्तं |